Andhra University Series No. 26

# Guruprasada & Guruprasadasesha

# LAGHU SABDENDU SEKHARA

(of Nagesa Bhatta)

Vol. II

## Ajantha Pumlinga to Karaka

With the Commentary

Guruprasadasesha

BY

Vyakarana Sthapaka

PERI VENKATESWARA SASTRI

*Vyakarana Siromani*

Lecturer in Vyakarna and Sahitya

Maharajah's Sanskrit College, Vizianagaram






PRINTED AT THE

SRI VIDYA PRESS, KUMBAKONAM

 1941 [Price Rs. 10 nett.

D. 16

॥ श्रीः ॥

# ॥ लघुशब्देन्दुशेखरः ॥

महामहोपाध्याय नागेशभट्ट विरचितः ।

अजन्तपुंलिङ्गप्रभृति कारकप्रकरणान्तः ।

॥ द्वितीयो भागः ॥



श्रीमद्विजयनगर महाराजसंस्कृतकलाशालाव्याकरणप्रधानोपाध्यायेन
व्याकरणशिरोमण्युपाधिधारिणा व्याकरणस्थापकेत्यादिबिरुदालंकृतेन
पेर्युपनामक—वेङ्कटेश्वरशास्त्रिणा

विरचितया गुरुप्रसादशेषाभिख्यया व्याख्यया समलंकृतः ।



आन्ध्रविश्वकलापरिषदा
कुम्भघोणे
श्रीविद्यामुद्रणालये मुद्रापयित्वा
प्रकाशितो विजयतेतराम् ।

१९४१.

# INTRODUCTION

BY

**Vidyasagara Vidyavacaspati**

**P. P. Subrahmanya Sastri,** B.A. (OXON)., M.A., (MADRAS)

**Professor of Sanskrit & Comparative Philology, Presidency College, and Curator, Govt. Oriental Manuscripts Library, Triplicane, Madras.**

In the history of Grammatical Literature in Sanskrit, the sixteenth century marks a new epoch. Till then, grammatical studies were pursued in the prescribed traditional manner of Sūtras, Vārttikas, Bhāṣya and commentaries thereon, as a proper approach to a study of Pāṇini. The great Bhaṭṭoji Dīkṣita, the illustrious pupil of that erudite polihistor Śrīmān Appaya Dīkṣita cut a new path and approached the study of Vyākaraṇa in a systematic and scientific manner by redistributing the more important of Paṇini's sūtras subject-war and commenting on them in his magnum opus the Siddhanta-Kaumudī.

The treatment of the Subject in the Siddhantakaumudī was at once so inspiring and instructive that since then the grammatical world has taken to Bhaṭṭoji Dīkṣita so kindly that his method is the one that has been followed all along as the necessary introduction to a study of Vyakaraṇa in oūr Paṭhaśalas and Colleges.

Royal patronage, which provided at once the necessary fillip to impecunious authors by suitable and deserving benefices, had always been fruitful of increasing the bounds of knowledge in India as elsewhere. And in the sixteenth and seventeenth centuries Indian authors did not lack this specific means to enable them to work for knowledge for the sake of knowledge.

Nageśa Bhaṭṭa or Nageśopadhyaya as he was also called, enjoyed the patronage of King Rama of Śruṇgiberapura and gave the Sanskrit world a rich harvest of knowledge. In the field of Rhetoric, his

Marmaprakaśa, a commentary on Jagannatha's Rasagaṅgadhara is a work of outstanding merit. In the field of grammar, he wrote commentaries directly on the Mahabhaṣyapradīpa as well as on the Siddhantakaumudī.

On the Siddhantakaumudī, he has written two standard commentaries, the Śabdenduśekhara—called also the Bruhacchabdenduśekhara and the Laghuśabdenduśekhara—two independent treatises each supplementing the other. In the field of grammar, we have also his other works Paribhaṣenduśekhara, Manjūṣa (Vaiyyakaraṇa Siddhanta-manjūṣa, the Laghu-manjūṣa and the Parama-laghu manjūṣa.)

The Laghuśabdenduśekhara of Nagoji has come in for a good deal of criticism, good and bad, from students of Sanskrit. And the answering of these criticisms had long been handed down only by word of mouth. Mahamahopadhyaya Tata Subbaraya Śastri, the Court Pandit of the Vizianagaram Samasthanam has laid the scholar-world under a debt of gratitude by his compilation, the Guruprasada, a commentary on the Laghuśabdenduśekhara, wherein his particular aim is to marshall all the criticisms laid against Nagoji and offer constructive and clear expositions of Nagoji's views. (See pages 66-113, 281, 434, etc. of the Guruprasada). But the Guruprasada of the learned Śastri stopped at the end of the Vowel-Sandhi.

In his pupil, Perī Venkaṭeśvara Śastri, the master has found a fit pupil to carry on his unfinished work in a fitting manner. Pandit Venkaṭeśvara Śaśtri has given us in the work before us, Guruprasadaśeśa, the continuation of the commentary on the Laghuśabdendu śekhara from the beginning of Consonant-Sandhi to the end of the Karaka-prakarana. The learned commentator continues to deal with Nageśa in a critical and scholarly manner and answers successfully several of the criticisms urged against Nagoji. (See pages 468, 488, 512, 565, 601 etc. of the Guruprasadaśeṣa). The Guruprasadaśeṣa is written in a fluent and readable style, suited to the needs of the students of

Sanskrit, trained in modern oriental colleges. Pandit Venkateśvara Śastri was born in 1894 in the Vizagapatam District and had his training in full from his revered Guru Mahamahopadhyaya Tata Subbaraya Śastri, under the patronage of the Vizianagaram Samasthanam, who were good enough to employ him in their College, when he came out as a full-fledged scholar.

We owe it to the munificence of the Bobbili Endowment of the Andhra University that the Guruprasadaśeṣa is made available in print for the use of the public.

Works like the Guruprasada and Guruprasadaśeṣa, when fostered by Samasthanams like the Vizianagaram and Bobbili Samasthanam are indeed a happy augury that Universities like the Andhra University may well hope to contribute to the widening of the domains of knowledge when they succeed in bringing together Royal patronage and scholar-authors.

Presidency College,
Madras.
3—8—1941.

(Sd.) P. P. Subrahmaṇya Śastri.

---

**A. Sankaran,** M. A., PH. D.,
**Superintendent of Sanskrit Schools,**
**Madras.**

I read some portions of the present work—The Guruprasadasesha- by Sri Peri Venkateswara Sastri, Vyakarana Pandit in the Maharajah's Sanskrit College, Vizianagaram. This work is a continuation of the Guruprasada, an incomplete commentary on Nagesa Bhatta's Sabdendusekhara, written many years ago by the reputed Grammarian Mahamahopadhyaya Tata Subbaraya Sastri Garu of Vizianagram; and it fulfils the hope expressed in that work that his work left incomplete would be continued on the lines pursued by him by some one of his numerous pupils.

This production of Sri Venkateswara Sastri is quite worthy of his great Guru. The study of Vyakarana is incomplete without a knowledge of the works of Nagesabhatta, the leader of the later school and the best exponent of Patanjali. Unlike the many commentaries on the Sabdendusekhara which attempt a refutation of the views of Nagesa, this work presents a clear exposition of the original and establishes the soundness of the views held by Nagesabhatta. This commentary has made the great work of Nagesa easy of access to students of Sanskrit Grammar and it is a distinct contribution to the spread of higher Sanskrit learning.

The Andhra University has done well to publish this work under its auspices. In these days, when students in oriental colleges especially in the Andhra University area fight shy of pursuing the advanced courses of Vyakarana, Nyaya, and Vedanta, this publication will serve as a warning to them that appreciation and recognition will be bestowed on those who strenuously pursue higher Sanskrit studies and not on those who choose the line of least resistance; and it is hoped that the present centres of oriental learning will maintain the high reputation of the Andhradesa as the land of Grammarians and logicians.

May the votaries of the Vyakarana of Panini and Patanjali prosper by Guruprasadasesha!

9-8-41

(Sd.) A. Sankaran.



॥ श्रीः ॥

# ॥ प्रस्तावना ॥

गुरुप्रसादशेषनामकस्यास्य ग्रन्थस्य कर्तारः पेर्युपनामकवेङ्कटेश्वरशास्त्रिणः चतुर्नवत्युत्तराष्टादशशततमे क्रिस्त्वब्दे विशाखपत्तनमण्डलान्तर्गते पेदनन्दिपल्ली-ग्रामे जनिमलभन्त। तत्पिता वेदपारगः श्रीजगन्नाथावधानी। माता च श्रीनर-साम्बा। श्रीविजयनगरमहाराजपोषितायां संस्कृतकलाशालायां स्वदेहसम्बन्धिनां श्रीमन्महामहोपाध्याय ताता सुब्बारायशास्त्रिणां सन्निधौ सर्वानपि व्याकरण-ग्रन्थान् प्राचीनाध्ययनरीत्याप्यधीत्य तत्र समीचीनां व्युत्पत्तिं सम्पाद्य तदुप-कारकतया तदुपयोगिन्यायादिशास्त्रान्तरग्रन्थानप्यभ्यस्य तत्रैव कलाशालायां व्याकरणशास्त्राध्यापकपदवीमधिष्ठायैतावत्पर्यन्तमात्मनः कृत्यं तथा निर्वर्तयन्ति यथा कलाशालाप्रभूणां गुरुजनानां च सन्तुष्टिर्भवति। तत्रैव कलाशालायां कंचित्कालमुपाध्यक्षभूतोऽहमेतेषां पण्डितवर्याणामध्यापनरीतिमसकृदाकलय्य सर्वथा गुरुतौल्यमिमे प्राप्स्यन्तीत्यचिन्तयम्। तथैवेदानीं संवृत्तमिति महदिदं मे प्रमोदस्थानम् ॥

गुरुप्रसादशेष इति ग्रन्थस्यास्य नामैव सूचयति भूतपूर्वो गुरुप्रसाद-नामको ग्रन्थ इति, यः खलु श्रीमद्भिः महामहोपाध्याय ताता सुब्बाराय-शास्त्रिभिः बहोः कालात्पूर्वमेव प्रकाशितो विद्वदादरमलभत। स हि स्वरसन्ध्य-न्तस्य शब्देन्दुशेखरग्रन्थस्य व्याख्यारूपः। अयन्तु हल्सन्धिमारभ्य कारक-प्रकरणान्तभागस्य। तदीयां सरणिमनुसृत्य व्याख्यान्तरकृतखण्डननिरसन-पूर्वकमुद्योतानुसारेण नागेशमतमण्डनमत्राप्यकारि। अतो युज्यतेऽस्य ग्रन्थस्य गुरुप्रसादशेष इति नाम। गुरुचरणानामेतन्नामकरणाङ्गीकरणेन ग्रन्थस्थ विषयेऽपि तदनुमोदस्य प्रतीयमानत्वात् सुस्थिरा भवति ग्रन्थस्यास्य निर्दुष्टता। अद्य

खलु निखिले भारतवर्षे परीक्षार्थं पाठ्यत्वेन विद्वदङ्गीकृतानां नागेशग्रन्थाना-मध्यापनावसरे तदाशयनिरूपणे सुमहान् क्लेशोऽनुभूयतेऽध्यापकैः, यः खल्व-पनीतः प्रथमतः कियदवधिकं गुरुप्रसादेन । अद्य तु निश्शेषं तच्छेषभूतेना-नेन ग्रन्थेनेति महदुपकृतं ग्रन्थकृद्भिरध्यापकलोकस्य। साकल्येन वाक्य-समन्वयस्य निरूपणेन छात्रजनस्यापि बहूपकृतमेभिरिति विश्वसिमि ॥

श्लो ॥ धन्योऽसौ ग्रन्थकर्ता यः श्लाघां गुणकृतां कृतेः ।
सम्प्राप्नोति विमुक्ता, या दोषे र्गुरुसमर्पणात् ॥

श्लो ॥ गुरोः कृतेः पूरयिता स शिष्यो
जीवं स्तदाप्त्या च गुरु स्सहृष्टः ।
मिथोऽनुरूपावभिनन्दनीयौ
विद्वज्जनानां भवतस्समेषाम् ॥

इति विद्वज्जनविधेयः,

श्री. ति. गु. वरदाचार्यः,

श्री नारसिंहसंस्कृतकलाशालाध्यक्षः.

चिट्टिगूडूरुग्रामः
मचिलीपत्तनम्,
7—7—'41

---

## ॥ शुभाशासनम् ॥

---

विदितचरमेवैतन्मया स्वरसन्ध्यन्तलघुशब्देन्दुशेखरव्याख्यानगुरुप्रसाद-प्रकटनावसरे का चन विज्ञप्तिः प्रकटितेति गुरुप्रसादग्रन्थदर्शिनाम् । तस्यां च विज्ञप्तौ का चन निवेदनापि प्रदर्शिता। 'एवमुत्साहितेनापि गतवयस्केन कुण्ठित-बुद्धिना न पारितमवशिष्टभागपूरणे। अतो निवेदयामि ये केपि मदीयच्छात्रवर्या, अन्येऽपि वा पण्डितप्रवरा मदुपदर्शितदिशमनुसृत्य पूरयेयुरवशिष्टं भागं तदा कृतज्ञो भवामी'ति । अथ मम मातृष्वसेयीपुत्रः गौतमगोत्रोद्भवः पेर्युपनामक

वेङ्कटेश्वरशास्त्री मत्तोऽधीतव्याकरणशास्त्रः तदुपयोगिष्वन्येष्वपि शास्त्रेषु कृतपरिचयः श्रीविजयनगरमहाराजसंस्कृतकलाशालायां मत्सहायपण्डितत्वेन नियुक्तः विंशति हायनानि मदीयामध्यापनसरणिमनुसृत्याध्यापयन् लब्धबोधनवैभवः मदीयविज्ञप्तिसूचितां निवेदनामाकलय्य गुरुभक्तिभरितान्तरङ्गः अवशिष्टं हल्सन्धिप्रकरणमारभ्य कारकप्रकरणान्तशब्देन्दुशेखरस्य भागं नेमिवृत्तिमनुसृत्य मदीयां गुरुप्रसादसरणिं रेखामात्रमप्यनतिक्रममाणः भाष्यप्रदीपोद्योतादिनागेशग्रन्थानामन्येषां चाकरग्रन्थानां परिशीलनपूर्वकं व्याख्यातुं प्रायतिष्टावांक्पञ्चषेभ्यो वर्षेभ्यः । व्याख्यारचनावसरे च 'आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञान'मिति कालिदाससूक्तिमनुसरन् तत्र तत्र प्रौढस्थलेषु स्वोहितां रीतिं मन्निकटे निवेद्य मदाशयसंवादमवलम्ब्य प्राक्तनैश्शेखरव्याख्यातृभिस्स्वस्वग्रन्थेषु प्रदर्शितान् खण्डनाभासान्निरस्य नागेशसिद्धान्तं साकल्येन मण्डयमानः परमेश्वरानुग्रहेण कारकान्तभागव्याख्यारचने स्वकीयं यत्नं सफलयामास । मन्ये चानेन कार्येण गुरुभक्तेस्सर्वथा तदाशंसितकृत्यनिर्वर्तनमेव परावधिरिति सुदृढं निश्चित्य मदाशयानुरोधेन कृतमिमं ग्रन्थं गुरुप्रसादशेष इति नाम्नाऽलंकृत्य स्वात्मानं कृतकृत्यीचकारेति । एवं विरचितमिमं ग्रन्थमामूलचूडमक्षरशो मन्निकटे श्रावयित्वा तत्र तत्र केषु चिदंशेषु मदीयसूचनानुसारेण सत्यवसरे विपरिणमय्य कांश्चन विषयान् संयोज्य च सर्वमपि ग्रन्थं मदाशयानुगृहीतं निष्पाद्य ग्रन्थनाम चान्वर्थयामासावयवार्थकशेषपदसंघटनेन । तेनैक एव ग्रन्थो ग्रन्थकर्तृभेदेन गुरुप्रसाद इति, गुरुप्रसादशेष इति च भागद्वयालंकृतो न तु ग्रन्थभेद इति स्फुरति सचेतसामिति विश्वसिमि । ईदृशस्यास्य ग्रन्थस्याद्यत्वे मुद्रणमन्तरा प्रचारो दुष्कर इति चिन्तयमाने मयि आन्ध्रविश्वकलापरिषदुपाध्यक्षाः प्राच्यविद्यासमुद्धरणदीक्षाः कट्टमञ्च्युपनामक राममलिङ्गारेड्डिमहोदयाः अनितरसाधारणगौरवसौहार्दाभ्यामान्ध्रविश्वकलापरिषन्मुखेन भागद्वयात्मकमिमं ग्रन्थं मूलेन

सह संयोज्य प्रकटयांचक्रुः। मन्ये चाहमान्ध्रविश्वकलापरिषदे, तदध्यक्षमहोदयेभ्यश्च मदीयकृतज्ञतानिवेदनमात्रेणात्मानमनृणीकृत्य सन्तुष्टान्तरङ्गोभूवमिति। एवं मय्यपूर्वां भक्तिं प्रकटयमानो मदीयं गुरुप्रसादं शेषपूरणेन पूर्णतां प्रापय्यापाकृतगुरुऋणः गुरुप्रसादशेषरचयितैवंविधान् बहून् ग्रन्थान् विरचयन् शिष्याणामुपदेशेनाधीतशास्त्रसाफल्यं सम्पादयन् सुचिरं जीयादित्याशासे। इति शिवम् ॥

विश्रान्तमहाराज
संस्कृतकलाशाला प्रधानोपाध्यायः
विजयनगरम्।

एवं निवेदयिता गुरुप्रसादकर्ता
**ताता सुब्बाराय शास्त्री।**
महामहोपाध्यायः, कलाप्रपूर्णः।

---

## ॥ विद्वदभिप्रायः ॥

ब्रह्मश्रीयुत पेर्युपनामक वेङ्कटेश्वरशास्त्रिभिरस्मत्प्रियमित्रवर्यमहामहोपाध्याय ताता सुब्बाराय शास्त्रिमहाशयानां प्रियच्छात्रैः स्वगुरुप्रदर्शितया गमनिकया प्रणीतो 'गुरुप्रसादशेष' इति ग्रन्थविशेषो लघुशब्देन्दुशेखरव्याख्यानरूपः पर्यालोचनायास्मभ्यं प्रेषितः। सादरमस्माभिस्समग्राहि च सः। इतः पूर्वं तत्र भवद्भिः ताता सुब्बारायशास्त्रिमहाशयैः संग्रथितस्य गुरुप्रसादाख्यस्य ग्रन्थरत्नस्य स्वरसन्ध्यन्तभागमात्रस्य संदर्शनेन या अस्माकं महती समुत्कण्ठा समजनि 'अपि नाम वयं परिशिष्टभागमप्यस्य ग्रन्थस्य विलोकयेम' इति सेदानीमिमं गुरुप्रसादशेषग्रन्थमवलोकयतां नस्संजनयत्यमन्दमानन्दम्। प्रायशः इदमीयशैली गुरुप्रसादमनुसरतीत्यन्वर्थमेव गुरुप्रसादशेष इत्यस्य नाम। सत्संप्रदायसंप्रतिपन्नां सरणिमनुसृत्य भावपुष्ट्या अन्यूनानतिरिक्ततया सम्यग्विषयविवेचनेन च प्रकामं प्रकाशमानोऽयं ग्रन्थो विदुषां मुदमावहन् नागेशाशयविशेषं बुभुत्सतां छात्रवर्याणां समीचीनाय संस्कारायानल्पायोपकाराय च प्रभवेदित्य-

कथितमपि ज्ञायत एव प्रेक्षावताम् । एतद्ग्रन्थस्य मुद्रणमद्यत्वे व्याकरणशास्त्राध्येतॄणां तदध्यापकानां चात्यन्तमुपकाराय प्रकल्पेतेति विश्वसन्तो वयमाशंसामहे अचिरादस्य ग्रन्थस्य श्रीनटराजकृपया समुचितं संमुद्रणप्रकाशनादिकं भूयादिति ॥

इत्थम्,

विश्रान्ताध्यक्षः,
श्री मीनाक्षीसंस्कृतकलाशाला
चिदम्बरम् ।
27—1—1938.

(Sd.) **शिवदण्डपाणिस्वामि दीक्षितः ।**
महामहोपाध्यायः,
शास्त्राचार्यः ।

---

॥ श्रीः ॥

## ॥ ग्रन्थकर्तृविज्ञप्तिः ॥

---

**महाशयाः—**

अपरोक्षमेवैतत्पण्डितप्रकाण्डानां यदस्मद्गुरुचरणैर्मातृबन्धुभिश्च श्रीमन्महामहोपाध्याय कलाप्रपूर्णेत्यादिबिरुदाङ्कितैः तातोपनामक सुब्बारायशास्त्रिभिर्बहोः कालात्पूर्वमेव स्वरसन्ध्यन्तशब्देन्दुशेखरग्रन्थस्य व्याख्यानरूपो गुरुप्रसादनामकः कश्चन ग्रन्थराजो विरच्य प्रकाशित इति । तत्र चादौ पण्डितलोकं प्रति यत्किञ्चिदपि विज्ञापयन्तो न्यवेदयंश्च केनाप्यन्तरायेणासमापितमात्मनो गुरुप्रसादमात्मनश्छात्रवर्या अन्येऽपि वा पण्डितप्रवरा यदि तदुपदर्शितदिशमनुसृत्य पूरयेयुस्तदा कृतज्ञा भवेयुरिति । शब्देन्दुशेखराध्ययनकाले तैरुपदिष्टान्नागेशसिद्धान्तान् समाकलयतो ममान्यैर्व्याख्यातृभिर्नागेशग्रन्थेषु समुपदर्शिता दोषाः केवलमाकरग्रन्थापरिशीलनमूलका एवेति मनीषा समजनि । अध्यापनकाले च गुरुचरणैरव्याकृते शब्देन्दुशेखरस्य भागे व्याख्यान्तरदर्शनेन व्याकुलीभूतस्तत्रभवतां विज्ञप्तिसूचितां निवेदनामनुस्मरन्नाकरग्रन्थपरिशीलनपूर्वकमवशिष्टं शब्देन्दुशेखरस्य भागं व्याख्यातुमारभे । सर्वतन्त्रस्व-

तन्त्रैरकुण्ठितबुद्धिभिरनुपमप्रतिभाशालिभिरस्मद्गुरुचरणैर्विरचितस्य ग्रन्थराजस्यायमल्पज्ञस्य कुण्ठितबुद्धेर्मम पूरणप्रयत्नः लोभातिशयात् प्रांशुलभ्यफलाभिलाषिणो वामनस्येव केवलमुपहासायैव कल्पेतेति सन्दिहानोऽपि तमपरिगणयन् गुरुपादाम्बुजध्यानपूर्वकं कंचिद्भागं व्याख्याय श्रीगुरुचरणसन्निधौ न्यवेदयम्। शिष्यजनवलास्ससहृदयास्ते सावधानं तद्व्याख्यानरीतिमाकलय्य सन्तुष्टान्तरङ्गाः मामवशिष्टभागपूरणेऽतीव प्रोत्साहयामासुः। तेन च द्विगुणीकृतोत्साहो नागेशाशयोन्मीलनायासकृद्भाष्यप्रदीपोद्योतान् पदमञ्जरीं शब्दकौस्तुभं लघुमञ्जूषां भावप्रकाशमन्यानपि कांश्चन ग्रन्थान् परिशील्य तदपरिशीलनेन नागेशग्रन्थखण्डनाग्रहेण वा ऽन्यैर्व्याख्यातृभिरापादितान् खण्डनाभासान्निराकृत्य यथामति नागेशाशयमाविरकरवम्॥

गुरुप्रसादशेषोऽप्ययं ग्रन्थस्सर्वथा गुरुप्रसादादेव पूर्णतां प्रकाशतां च नीत इति, तच्छेषभूतस्यापि तदनतिरिक्तत्वदर्शनात्तदभिख्यामप्यर्हतीति च मत्वा, उत्तरकादम्बर्या इवास्यापि गुरुप्रसाद इत्येव शीर्षिकायामभिख्या प्रदर्शिता॥

'गुणदोषौ बुधो गृह्ण'न्नितिसूक्तिमनुस्मरन्तस्सहृदयाः यद्यत्र गुणलेशस्स्यात्तदा तं परिगृह्य पुरुषबुद्धिसहजाः भ्रमप्रमादिदोषा यदि स्युस्तान् परित्यज्य मामनुगृह्णन्त्विति सप्रश्रयमभ्यर्थये॥

अपि चेयपरा विज्ञप्तिः, दैवदुर्विपाकादपूर्णे पञ्चमे वर्षे पित्रा सह वियुक्तं भर्तृवियोगदुःखितया जनन्या, भ्रातृभक्तिपरायणाभ्यां वेङ्कटकामेश्वराभ्यां पितृव्याभ्यां चादशमाद्वर्षादनुपमेन वात्सल्येन समुपलालितं मामग्रजौ च मद्भ्रातरौ बन्धुजनसमुद्धरणतत्परा अस्मद्गुरुचरणास्स्वानिकाय्यमानीयापत्यनिर्विशेषं परिपाल्य मां साकल्येन व्याकरणशास्त्रमध्यजीगपन्। मदग्रजौ च साङ्गकृष्णयजुश्शाखाध्यायिनावकार्षुः। अतस्सर्वथा तत्प्रसादलब्धामिमां

कृतिं साञ्जलिबन्धं तेभ्यस्समर्प्य निरस्तगुरुऋणः कृतकृत्योऽभूवमिति परं-
सन्तुष्यामि ॥

आबाल्यान्मम ज्ञानप्रदातॄणामविच्छिन्नजीविकाप्रदातॄणां च श्रीमद्विजय-
नगरराज्यसिंहासनमधितिष्ठतां श्री श्री श्री पूषवाड्वंशपयः पारावारराकासुधा-
कराणां श्रीमन्महाराजपुङ्गवानां कृतज्ञतानिवेदनेनानृणीभूयविद्वज्जनपक्षपातिनां
तेषामाचन्द्रतारमायुरारोग्यादिकमखण्डसाम्राज्यमविच्छन्नां सन्ततिं च परम-
कारुणिकः परमेश्वरः प्रदेयादित्याशासे ॥

आन्ध्रविश्वकलापरिषन्मुखेनेमं ग्रन्थमचिरकालमेव मुद्राप्य मदीयं परिश्रमं
सफलयतां परिषत्सभ्यानां तदुपाध्यक्षपदवीमलङ्कुर्वतां श्रीकट्टमञ्च्युपनामक
रामलिङ्गारेड्डिमहाशयानां च सविनयं मदीयां कृतज्ञतां निवेद्य कृतकृत्योऽस्मि
संवृत्तः ॥

पञ्चषेभ्यो वर्षेभ्यः प्रभृत्येतद्ग्रन्थविरचने प्रकाशने च विशेषतस्साहाय्य-
मारचयतो व्याकरणशिरोमणि साहित्यविद्याप्रवीणरूपोपाधिधारिणः श्रीकर्युप-
नामक श्रीराममूर्तिशास्त्रिणो भूयांसि श्रेयांस्यनुगृह्णातु परमकारुणिकः परमेश्वर
इति भगवन्तमभ्यर्थये । इति शिवम् ॥

एवं विज्ञापयिता, विद्वज्जनविधेयः,

**गुरुप्रसादशोषकर्ता ।**



# गुरुप्रसादशेषसहितो लघुशब्देन्दुशेखरः।

## ॥ अजन्तपुंलिङ्गप्रकरणम् ॥

स्वादिविधौ प्रातिपदिकाधिकारात्तां सञ्ज्ञामाह—अर्थवदिति। अधातुरित्यादिः पर्युदासो लाघवात्। प्रत्ययान्तमिति। आवर्तिते प्रत्ययपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम्। 'सञ्ज्ञाविधौ' इति निषेधस्तु प्रत्ययस्य यत्र सञ्ज्ञा तद्विषय इति भावः।

---

स्वादिसन्धिनिरूपणानन्तरमेतत्प्रकरणनिरूपणे सङ्गतिं दर्शयति। स्वादिविधाविति। तां संज्ञामिति। तत्संज्ञाविधायकं सूत्रमित्यर्थः। यथाश्रुतं तु न युक्तम्, अर्थवदित्यनेनानन्वयात्। न च तद्विधौ ङ्यापोरप्यधिकृतत्वेनाधिकारसूत्रे तयोः प्रथममुपादानात्सूचीकटाहन्यायेन च स्त्रीप्रत्ययप्रकरणस्यैव प्रथमं निरूपणमुचितमिति वाच्यम्। तद्ग्रहणस्यान्यार्थताया वक्ष्यमाणत्वात्तयोरपि प्रातिपदिकादेव विधानाच्च। लाघवादिति। असमर्थसमासवाक्यभेदानाश्रयणरूपाल्लाघवादित्यर्थः। यद्यप्यप्रत्यय इदमेकमेव सूत्रे, तथापि तदावृत्त्या मूले व्याख्यातं, तदनुसारेणाह। आवर्तित इति। ननु संज्ञाविधाविति निषेधात्कथं तत्परिभाषाप्रवृत्तिरत आह। संज्ञाविधाविति। प्रत्ययस्येति। धर्मिग्राहकसाजात्यात्प्रत्ययोद्देश्यकसंज्ञाविधावेवैतत्परिभाषाप्रवृत्तिरिति प्रकृते तद्भिन्नस्यार्थवत उद्देश्यत्वेन न तन्निषेधप्रवृत्तिरिति भावः। न चैवं कृदतिङित्यत्राप्येतन्निषेधाप्रवृत्तौ पर्युदस्यमानतिङ्पदेन तदन्तविधिस्स्यादिति वाच्यम्। तथा सत्यत्र धातोरित्यधिकाराद्धातुविहितत्वाभावादेव तिङन्तस्य कृत्संज्ञावारणसम्भवेनातिङ्ग्रहणस्य वैयर्थ्यापत्तेः। षः प्रत्ययस्येत्यादावप्युपदेशपदानुवृत्त्योपदिश्यमानस्यादेरेवेत्संज्ञाविधानेन प्रत्ययान्ते तत्त्वासम्भवादेव न तदन्तविधिः। तद्धितश्चासर्वविभक्तिरित्यत्र त्वसर्वविभक्तिरिति विशेषणेन विभक्त्युत्पत्तियोग्यतावत एव संज्ञाविधानलाभेन प्रत्ययमात्रस्य तादृशयोग्यताया अभावेन तद्विशेषणबलात्संज्ञाविधावपि तदन्तलाभः। असर्वविभक्तिरित्येतद्घटकविभक्तिपदेन तु न तदन्तविधिः। तथा सत्यवयवकार्त्स्न्यबोधकसर्वपदविशेषणवैयर्थ्यापत्तेः। एतेन

अत्र सूत्रे उत्तरसूत्रे चार्थवत्त्वम्—एतत्सञ्ज्ञाफलभूतविभक्तीतर-सम-

कृदतिङ्, षः प्रत्ययस्य, तद्धितश्चासर्वविभक्तिरित्यादावपि निषेधप्रवृत्तेरिष्टत्वे-नायुक्तमेतदिति वदन्त आचार्याः परास्ताः ॥

प्रातिपदिकसंज्ञाविधायकसूत्रद्वयसाधारण्येनार्थवत्त्वं परिष्करोति । **एतत्संज्ञेति** । नन्वेवं खट्वेत्यादौ टाप्प्रत्ययप्रकृतेः प्रातिपदिकत्वानापत्तिः, तस्याः चिकीर्षितप्रातिपदिकसंज्ञाफलभूतविभक्तीतरटाबपेक्षयैवार्थबोधकत्वात् । किञ्चैधाञ्चक्रे इत्यादावामन्तस्यानुप्रयुज्यमानधात्वपेक्षयैवार्थबोधकत्वेन, मूलकेनोपदंशमित्यादौ णमुलन्तस्योपपदसमभिव्याहारापेक्षयैव बोधजनकत्वेन, निभसङ्काशादीनामुत्तरपद एव प्रयुज्यमानानां पूर्वपदापेक्षत्वेन, उपसर्गाणां धात्वपेक्षयैव बोधकत्वेन च तेषां प्रातिपदिकत्वानापत्तिः । किञ्च सांकूटिनं पङ्क्तिमित्यादौ संकूटिन् पङ्क्तीत्यनयोः प्रातिपदिकसंज्ञाफलभूतविभक्तीतराणमबपेक्षत्वेनाव्याप्तिरिति चेन्न । एतत्संज्ञाप्रयोज्यप्रत्ययेतरप्रत्ययप्रकृत्येतदन्यतरसमभिव्याहारानपेक्षया लोके अर्थबोधजनकत्वरूपार्थवत्त्वस्य स्वीकारेणादोषात् । प्रकृतिश्चात्र यस्य प्रातिपदिकसंज्ञा चिकीर्षिता तत्प्रकृतिरेव ग्राह्या । खट्वेत्यत्र टापः प्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययत्वेन तादृशप्रत्ययेतरप्रत्ययत्वाभावात्तदपेक्षायामपि नाव्याप्तिः । एधाञ्चक्रे मूलकेनोपदंशं तन्निभः प्रभवतीत्यादावनुप्रयुज्यमानकृञाद्यपेक्षासत्त्वेऽपि तेषामेतत्संज्ञाप्रयोज्यप्रत्ययेतरप्रत्ययत्वाभावान्न प्रातिपदिकत्वानापत्तिः । सांकूटिनं पङ्क्तिमित्यादाविनुणन्तादेरणमबादिसापेक्षत्वेऽपि तेषामिनुणन्तानिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वेन तादृशप्रत्ययेतरप्रत्ययत्वाभावान्नार्थवत्त्वहानिः । तन्निभ इत्यादौ समासोत्तरसुपः प्रत्ययत्वेऽपि तस्य परम्परया निभशब्दनिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वेन तादृशप्रत्ययेतरप्रत्ययत्वाभावान्नार्थवत्त्वाविघटकता । पञ्चनावप्रिय इत्यादौ समासोत्तरसुपष्टजन्तनिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वाभावेन तादृशप्रत्ययेतरप्रत्ययत्वेन तदपेक्षयैवार्थबोधकस्य पञ्चनावेत्यस्य न प्रातिपदिकत्वम् । प्रकृतिसमभिव्याहारापेक्षयाऽर्थबोधकस्य केवलप्रत्ययस्यार्थवत्त्ववारणाय प्रकृतिपदनिवेशः । देवदत्तः पचति, देवदत्तो गार्ग्य इत्यादौ चिकीर्षितप्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययेतरतिबपेक्षया गार्ग्यशब्दोत्तरसुबपेक्षया चार्थबोधकत्वेन न शब्यञन्तयोः प्रातिपदिकत्वम् । न चैवमपि व्यतिस इत्यत्रोपसर्गयोस्से इत्येतत्समभिव्याहारापेक्षयैवार्थबोधकत्वात्तस्य च निरुक्तप्रत्ययेतरप्रत्ययत्वाच्च तयो-

भिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वम् । अन्यथाऽधातुरिति पर्युदासेन व्याख्यानादर्थवत्त्वेनैव सादृश्यग्रहणेन सिद्धेरुत्तरसूत्रे कृदादीनामनर्थकानामप्रसिद्धेस्तद्वैयर्थ्यं स्यात् । न च नञिवयुक्तन्यायानित्यत्वज्ञापनार्थं तत् । तदनित्यत्वज्ञापने भाष्यसंमतदृढतरफलाभावात् । अहन्, काण्डे इत्यादावेतत्साध्यविभक्त्यनपेक्षत्वेऽपि तदितरानपेक्षत्वमस्त्येवेति तत्पर्युदासः सार्थकः । न च तत् केवलप्रत्ययस्य । तदुक्तं—'संख्याया अतिशदन्ताया' इति

---

रर्थवत्त्वानापत्तिरिति वाच्यम् । तत्र प्रत्ययपदेन पर्युदासन्यायेन पदत्वानवरुद्धस्यैव प्रत्ययस्य ग्रहणेनादोषादिति सर्वमवदातमिति दिक् ॥

अन्यथेति । पारिष्कृतार्थवत्त्वानङ्गीकार इत्यर्थः । ननु नञिवयुक्तन्यायस्यानित्यत्वे द्वित्वविधावेतदप्रवृत्तावनचीत्यस्य सादृश्यवैकल्येन भेदमात्रप्रत्यायकत्वसम्भवादवसानस्यापि ततो बोधे पर्युदासेनैवावसानेऽपि द्वित्वसिद्धौ गुरूभूत ᳲ प्रसज्यप्रतिषेधो नाश्रयणीय इति फलमस्त्येवेत्यत आह । भाष्यसम्मतेति । अवसाने द्वित्वसिद्धये भाष्ये प्रसज्यप्रतिषेध एवाश्रितो न त्वेतदनित्यत्वमिति भावः । नन्वेतत्संज्ञाफलभूतविभक्त्यपेक्षया लोकेऽर्थबोधजनकत्वमर्थवत्त्वमित्येतावदेवाऽस्तु, कृतं नञ्द्वयप्रवेशेनेत्यत आह । अहन्निति । तथा चाधातुरित्यादिपर्युदाससार्थक्याय नञ्द्वयप्रवेश इति भावः । न च नञ्द्वयप्रवेशोऽधातुपर्युदासश्च मास्त्विति वाच्यम् । लिट् धुक् इत्यादौ विभक्तेर्लुप्तत्वेन तदनपेक्षणात्प्रातिपदिकत्वानापत्तेः । एवमर्थवत्त्वं परिष्कृत्य तादृशार्थवत्त्वाभावादेव प्रत्ययस्य प्रातिपदिकत्वं न भवतीति तत्पर्युदासस्यानर्थक्यं सूचयति । न च तत्केवलप्रत्ययस्येति । अलुप्तप्रकृतिकस्येत्यादिः । अतः केवलप्रत्ययस्यार्थवत इयानित्यादेस्सत्त्वेऽपि न क्षतिः । न च व्यातिस इत्यादौ स इत्यादेः प्रत्ययस्य निरुक्तार्थवत्त्वसत्त्वात्तस्य प्रातिपदिकत्ववारणार्थं प्रत्ययपर्युदास आवश्यक इति वाच्यम् । तस्य व्यपदेशिवद्भावेन प्रत्ययान्ततया प्रत्ययान्तपर्युदासेनैव वारणसम्भवात् । स्वोक्तमर्थं प्रमाणयति । तदुक्तमित्यादिना ।

सूत्रे भाष्ये 'न हि लोके केवलेन प्रत्ययेनार्थो गम्यते, केन तर्हि? सप्रकृतिकेन' इति। हरिरप्याह—

"धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते।
कृत्तद्धितानामर्थश्च केवलानामलौकिकः॥
प्राग्विभक्तेस्तदन्तस्य तथैवार्थो न विद्यते" इति।

अत एव पदसञ्ज्ञासूत्रेऽन्तग्रहणस्य सञ्ज्ञाविधौ तदन्तविध्यभावज्ञापकत्वे 'कृत्तद्धितेति सूत्रेऽन्तग्रहणं कर्त्तव्यं न कर्त्तव्यमर्थवदिति वर्त्तते कृत्तद्धितान्तश्चैवार्थवत्, न केवलाः कृतस्तद्धिता वा' इति भाष्यमुपादाय 'शास्त्रीयार्थग्रहणेऽर्थवद्ग्रहणानुवृत्तिवैयर्थ्येन तदनुवृत्तिसामर्थ्याल्लौकिकार्थप्रत्यासन्नोऽभिव्यक्ततरो योऽर्थः प्रत्य-

---

विशुद्धानां=प्रत्ययरहितानाम्। लौकिकः=लोके प्रतीयमानः कारकादिविशिष्ट इत्यर्थः। एतेन केवलधातोर्धातुसंज्ञाप्रयोजकार्थसत्त्वेऽपि न क्षतिः। केवलानाम्, प्रकृत्यसमभिव्याहृतानां कृत्तद्धितानामर्थोपि लौकिको नेत्यर्थः। अलौकिक इत्यत्र प्रसज्यप्रतिषेधार्थकनञा समासः। प्राग्विभक्तेः, विभक्त्युत्पत्तेः प्राक्, तदन्तस्य, कृत्तद्धितान्तस्य, तथैवार्थो न विद्यते। अत्रैवकारो नञुत्तरं योज्यः। एवञ्च कृत्तद्धितान्तस्य तथा अर्थः लौकिकोऽर्थो नैव विद्यत इत्यर्थस्सम्पद्यते। तेनानुत्पन्नविभक्तिकानां कृत्तद्धितान्तानां कल्पितोऽर्थोऽस्त्येवेत्याशयः। एवञ्च कृत्तद्धितान्तस्य विभक्त्यपेक्षया लोके बोधजनकत्वेऽपि तदितरानपेक्षया बोधजनकत्वरूपमर्थवत्त्वं सुस्थमिति ध्वन्यते। अत एवेति। सूत्रद्वयेऽपि निरुक्तार्थवत्त्वस्य विवक्षितत्वादेवेत्यर्थः। अत एव भाष्यकैयटयोरुभयोरप्युपन्यासः। भाष्यमात्रोपन्यासे तूत्तरसूत्र एव तादृशमर्थवत्त्वं लभ्येत। कैयटाच्च यथा पूर्वत्र तादृशार्थलाभस्तथा मूल एव स्फुटीभविष्यति। कृत्तद्धितान्तश्चैवार्थवदिति। अर्थवत्पदगृहीतार्थवदित्यर्थः। प्रत्यासन्न

यान्तेषु लक्ष्यते स आश्रीयते' इति कैयटेनोक्तम् । लौकिकं यत्पदं तदर्थस्य प्रत्यासन्नः शास्त्रकृत्कल्पितस्त्रादिप्रकृतेरर्थः प्रत्ययान्तेषु सुबन्तेषु योऽभिव्यक्ततरो लक्ष्यते बोद्धृभिः, स इत्यन्वयः । यत्तु प्रत्ययान्तेष्वित्यस्य कृदाद्यन्तेष्वित्यर्थ इति, तन्न । तावन्मात्रेण कस्याप्यर्थस्याभिव्यक्तेरप्यभावेनाभिव्यक्ततरत्वस्य सुतरामभावात् । अर्थवत्सूत्रेऽप्येवमेवेत्यनुवृत्तिसामर्थ्यादित्यनेन सूचितम् । अन्यथा तत्सामर्थ्यादित्येव वदेत् । पूर्वसूत्रे यादृशार्थवत्त्वग्रहोऽत्राप्यनुवृत्तिसामर्थ्यात्तादृशार्थवत्त्वस्यैव ग्रहः । शास्त्रीयार्थग्रहणे तु तदनुवृत्तिर्व्यर्था स्यादिति तद्भावः । किं च पूर्वसूत्रे सामान्यतोऽर्थवत्त्वग्रहणे न किं चित्फलं, प्रत्ययेष्वतिव्याप्तिदानातिरिक्तम् । अत एव

इति । लौकिकार्थविषयकप्रतीत्यव्यवहितप्राक्कालिकप्रतीतिविषयत्वेन कृत्तद्धितान्तार्थः तत्प्रत्यासन्न इति भावः । लक्ष्यत इति । सुपां द्योतकतया तत्समभिव्याहारे स प्रतीयत इत्याशयः । विवरणकारोक्तिं खण्डयति । यत्त्विति । अन्यथा, पूर्वसूत्र ईदृशार्थानङ्गीकारे । तत्सामर्थ्यादिति । पर्युदासेनैव निरर्थकव्यावृत्तौ व्यावर्त्यान्तरालाभेन तत्र तद्ग्रहणमिति भावः । पूर्वसूत्रे परिष्कृतार्थवत्त्वाङ्गीकारे तु प्रत्ययस्य देवदत्तो गार्ग्य इत्यादीनाञ्च प्रातिपदिकत्ववारणाय तत्सार्थकमित्यनुवृत्तिपर्यन्तानुधावनं स्वरसतस्सङ्गच्छते । ननु पूर्वत्र तादृशार्थवत्त्वग्रहो न कैयटाभिमतः, तथा सत्यर्थाधिकारादित्येव वदेत् । किञ्च तत्सामर्थ्यस्यानुवृत्तिप्रयोजकत्वेऽपि तदन्तविध्यप्रयोजकत्वेन च तथा नोक्तमित्यपि वक्तुं शक्यत इत्यरुचेराह । किञ्चेति । सामान्यत इति । उत्तरसूत्रे पारिष्कृतार्थवत्त्वस्यैव भाष्यकैयटाभ्यां लाभेनार्थाधिकारानुरोधात्पूर्वसूत्रेऽपि तादृशार्थवत्त्वग्रहणस्य न्यायप्राप्तस्य परित्यागेन सामान्यतोऽर्थवत्त्वग्रहण इत्यर्थः । सूत्रद्वयेऽपि पारिष्कृतार्थवत्त्वाङ्गीकारे फलं दर्शयति । अत एवेति । सूत्रद्वयेऽपि निरुक्तार्थवत्त्वाङ्गीकारादेवेत्यर्थः ॥

अयं भावः। भाष्यकृता त्वतत्यमप्रत्ययग्रहणं द्विधा प्रत्याख्यातम्। उत्तरसूत्रस्थतद्धितग्रहणस्य नियमार्थत्वमाश्रित्य तद्भिन्नप्रत्ययान्तानां प्रातिपदिकत्ववारणेन, प्रत्ययान्तानाम्प्रातिपदिकसंज्ञासत्त्वेऽपि ह्रस्वो नपुंसके यत्तस्येत्येव सिद्धे प्रातिपदिकग्रहणेन सत्त्वप्रधानप्रातिपदिकानामेव ह्रस्व इत्यादिरीत्यार्थाङ्गीकारेण फलाभावेन चेति। तत्राद्यपक्षे नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति नागेशसम्मतसिद्धान्तपक्षे उत्तरसूत्रस्यार्थवत्तद्धितान्तस्य प्रातिपदिकसंज्ञा भवति, अर्थवत्समासस्य चेत्यर्थस्सम्पद्यते। तत्र शास्त्रीयार्थवत्त्वस्य ग्रहणे पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्य तादृशतद्धितान्तत्वात्तेन प्रातिपदिकत्वं स्यादतस्तद्वारणाय तत्र पारिष्कृतमर्थवत्त्वमाश्रयणीयम्। तथा च तत्साजात्येनैव पूर्वसूत्रे सङ्कोचस्य करणीयतया पारिष्कृतार्थवत्प्रत्ययान्तातिरिक्तस्य तादृशार्थवत्समाससजातीयसमुदायभिन्नस्य चार्थवत् प्रातिपदिकसंज्ञेत्यस्यार्थो लभ्यते। एवञ्च पञ्चनावेत्यस्य तादृशप्रत्ययान्तातिरिक्तत्वादनेन प्रातिपदिकत्वं स्यादतोऽत्रापि तादृशमर्थवत्त्वं ग्राह्यम्। तथा सत्यस्यार्थवत्प्रत्ययान्तातिरिक्तत्वेऽपि पारिष्कृतार्थवत्त्वाभावान्न दोष इति भावः। अन्त्यपक्षेऽत्र सूत्रे पारिष्कृतार्थवत्त्वानङ्गीकारे पञ्चनावेत्यस्यानेन प्रातिपदिकत्वं स्यात्, आरम्भे तु प्रत्ययान्तत्वात्तन्नेत्यारम्भप्रत्याख्यानयोः फलाभेदायात्र सूत्रे तादृशमर्थवत्त्वमाश्रयणीयम्। तथोत्तरसूत्रे निरुक्तार्थवत्त्वानङ्गीकारे पञ्चनावेत्यस्य तद्धितान्ततया तेन प्रातिपदिकत्वं स्यादतस्सूत्रद्वयेऽपि तत्र प्रातिपदिकत्ववारणाय पारिष्कृतमर्थवत्त्वमाश्रयणीयमिति। एवञ्चाद्यप्रत्याख्यानपक्षे एवं ग्रन्थो योजनीयः। अत एव, सूत्रद्वयेऽपि पारिष्कृतार्थवत्त्वाङ्गीकारादेव। तद्धितग्रहणस्य नियमार्थत्वाश्रयणेन भाष्योक्ते तत्प्रत्याख्याने पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेणेति। द्वितीये तु भाष्योक्ते तत्प्रत्याख्याने इत्येतन्मानेन प्रातिपदिकत्वमित्यनेनैवान्वेति, न तु नाप्युत्तरसूत्रेणेत्यनेन, तत्सत्त्वेऽपि

**तद्धितग्रहणस्य नियमार्थत्वाश्रयणेन "ह्रस्वो नपुंसके यत्तस्य" इति न्यासेन 'काण्डे' इत्यादौ ह्रस्ववारणात्फलाभावेन वा भाष्योक्ते तत्प्रत्याख्याने पञ्चनावप्रिय इत्यादौ पञ्चनावेत्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेण । प्रातिपदिकत्वे तु टाबापत्तिः ।**

---

पञ्चनावेत्यस्य प्रातिपदिकत्ववारणायोत्तरत्र पारिष्कृतार्थवत्त्वस्वीकारस्यावश्यकत्वात् ॥

टाबापत्तिरिति । 'अकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट' इति टजन्तस्य स्त्रियां वर्तनात्प्रातिपदिकत्वे टाप् स्यादिति भावः । पुंवद्भावस्तु न, तस्य प्रियादिषु निषिद्धत्वात्, गोस्त्रियोरिति ह्रस्वोऽपि न, विशिष्टस्यैव टाबन्तत्वेनोपसर्जनीभूतस्त्रीप्रत्ययान्तोत्तरपदकसमासरूपप्रातिपदिकत्वाभावात् । स्त्रीप्रत्ययान्तस्य ह्रस्वप्रवृत्तिविषयसमासनिरूपितोपसर्जनत्वाभावाच्च ॥

केचित्तु यस्मात्स्त्रीप्रत्ययो विधित्सितस्तन्निरूपितोपसर्जनत्वाभाव एवानुपसर्जनाधिकारस्य विषयः । अन्यथा पदावधिकेऽन्वाख्याने पञ्चपूलीप्रिय इत्यादावपि स्त्रीप्रत्ययानुपपत्तिप्रसङ्गः, अतोऽत्र ङीप एवापत्तिर्न्याय्येति वदन्ति ॥

गुरुचरणास्तु प्रातिपदिकत्वास्यार्थवत्त्वनिबन्धनतया यस्मात्प्रातिपदिकान्ङीप्प्रत्ययो विधित्सितस्तन्निष्ठप्रातिपादिकसंज्ञाप्रयोजकार्थोपस्थित्यनुकूलवृत्त्युपस्थापितयत्किञ्चिदर्थनिष्ठविशेष्यतानिरूपितप्रकारताराहित्यमनुपसर्जनत्वमित्यर्थस्य विवक्षणेन पञ्चपूलशब्दस्य समाहारद्विगुप्रयोजकैकार्थीभावप्रयोज्यार्थवत्त्वेनैव प्रातिपदिकत्वेन तन्निरूपितोपसर्जनत्वाभावान्ङीप् सुलभः । प्रकृते तु टजन्ते प्रातिपदिकत्वनिबन्धनस्यार्थवत्त्वस्य समुदायवृत्त्येकार्थीभावप्रयोज्यतया तन्निरूपितोपसर्जनत्वस्य टजन्ते सत्त्वान्न ङीप् प्रसक्तिरिति ङीबापादनमयुक्तमेवेति वदन्ति ॥

**एवञ्च प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो विफलः। 'दश दाडिमानि षडपूपाः' इत्यादिनिरर्थकपदसमुदायव्यावृत्तिरर्थवद्ग्रहणस्य फलम्। तत्र हि 'सुपो धातु' इति लुगापत्तिरिति भाष्ये स्पष्टमिति दिक् ॥**

---

ननूत्तरपदत्वमुपजीव्य जायमानतत्पुरुषसंज्ञा टच्प्रवृत्त्या तद्धितान्तत्वेन प्रातिपदिकसंज्ञाद्वारा टाबादेरानन्तर्यविघातकस्यानिमित्तं स्यादिति चेन्न। अलौकिक एव प्रक्रियावाक्ये समासान्ताः प्रवर्तन्त इति सिद्धान्तात् पञ्चन् जस्, नौ जस् प्रिय जस् इत्यवस्थायामेव बहुव्रीहिसंज्ञासमकालमेव टच्प्रवृत्त्या ततस्तद्धितान्तत्वेन प्रातिपदिकत्वोत्तरपदहेतुकद्विगुत्वयोः प्राप्तावपरनिमित्तकत्वेनान्तरङ्गत्वाद्द्विगुसंज्ञायाः प्राक् प्रातिपदिकत्वे तथैवान्तरङ्गत्वाट्टाप् स्यात्। सन्निपातलक्षणाया द्विगुसंज्ञायाः पूर्वमप्रवृत्तत्वात्परिभाषाया अप्राप्तेः। कृन्मेजन्त इति सूत्रस्थभाष्यप्रामाण्येन परम्परयाऽपि तद्विघातकत्वस्य ग्रहणेऽपि सन्निपातलक्षणस्य तथा ग्रहणे मानाभावाच्च। **एवञ्चेति**। पञ्चनावेत्यत्र प्रातिपदिकत्ववारणायात्र सूत्रे पारिष्कृतार्थवत्त्वाङ्गीकारे चेत्यर्थः। **विफल इति**। प्रत्यय इति सूत्रभाष्यविरुद्धश्चेत्यपि बोध्यम्। तत्र हि प्रकृत्युपपदोपाधीनामपि प्रत्ययत्वे किन्दूषणमिति प्रश्ने परत्वमाद्युदात्तत्वमङ्गत्वमित्येते विधयः प्रसज्येरन्नित्युक्तम्, न तु प्रातिपदिकत्वं न स्यादित्यपि। पर्युदाससत्त्वे त्वेतदपि वक्तव्यं स्यात्। अत्रत्यार्थवत्पदस्य व्यावर्त्यन्दर्शयति। **दश दाडिमानीति**। **निरर्थकेति**। निरर्थको यः पदसमुदाय इत्यर्थः। पदार्थानामन्वयस्यैव वाक्यशक्यत्वेनात्र तदभावात्समुदायस्य निरर्थकत्वम्। समासग्रहणकृतनियमेन तु न व्यावृत्तिः। तस्य अर्थवत्समुदायानां समासग्रहणं नियमार्थमित्यर्थवत्सूत्रस्थभाष्येणार्थवत्समुदायविषयकत्वस्य वक्ष्यमाणत्वात्। न च तत्र षष्ठीसमासस्यैवाश्रयणादर्थवतां समुदायस्यैव नियम्यकोटिप्रविष्टतया-

ऽत्र नियमेन व्यावृत्तिस्सुकरैवेति वाच्यम् । नियमस्य सजातीयविषयकत्वौचित्येनाङ्गसंज्ञासूत्रस्थभाष्यप्रामाण्येन च निरुक्तस्थले समानाधिकरणसमासमप्याश्रित्य अर्थवदवयवकार्थवत्समुदायस्यैव नियम्यकोटिप्रविष्टत्वस्यावश्यमभ्युपेयतयात्रावयवानामर्थवत्त्वेऽपि समुदायस्य तत्त्वाभावात्तदप्रवृत्तेः । तत्र ह्यङ्गसंज्ञासूत्रे भाष्ये प्रत्ययग्रहणपरिभाषायाः फलनिरूपणावसरे देवदत्तो गार्ग्येतिसमुदायस्य यञन्तत्वनिबन्धनप्रातिपदिकत्वाभावः फलत्वेनोक्तः । अर्थवत्समुदायानामित्यत्र षष्ठीसमासस्यैव स्वीकारे नियमस्यार्थवदवयवकसमुदायविषयकत्वस्यैव लाभेन देवदत्तो गार्ग्येत्यस्य तादृशसमुदायत्वेन नियमेनैव प्रातिपदिकत्ववारणे प्रत्ययग्रहणपरिभाषाप्रयोजनत्वोक्तिरसङ्गता स्यात् । समानाधिकरणसमासस्याप्याश्रयणे तु नियमस्यार्थवद्घटितार्थवत्समुदायविषयकत्वलाभेनात्रावयवानामर्थवत्त्वेऽपि निरुक्तसमुदायस्य पारिष्कृतार्थवत्त्वाभावादस्य नियम्यकोटावप्रवेशेन नियमेन वारयितुमशक्यतया तत्प्रयोजनत्वोक्तिस्सङ्गता स्यात् । तदानीमपि समासग्रहणस्य नियामकत्वं सङ्घटत एवेत्युत्तरसूत्रे निरूपयिष्यामः । ध्वनितश्चेदं दशदाडिमानीत्यादिवाक्यस्य प्रातिपदिकत्वमाशङ्क्यानर्थकत्वेन समाधाय देवदत्त गामभ्याज शुक्लां दण्डेनेत्यर्थवत्सङ्घातस्य नियमेन प्रातिपदिकत्ववारणपरार्थवत्सूत्रस्थभाष्येण। धनं वनमित्यादौ वर्णानां प्रातिपदिकत्ववारणमाचार्योयुक्तन्तु नार्थवद्ग्रहणफलम् । तेषां प्रातिपदिकसंज्ञासत्त्वेपि संख्याकर्मादेरभावात्स्वादीनामनुत्पत्तेर्दोषाभावात् । औत्सर्गिकैकवचनमपि न, गमकाभावात्, निपातस्यानर्थकस्य प्रातिपदिकसंज्ञाविधानमप्यव्ययादाप्सुप इति वदनर्थकनिपातेभ्य एवौत्सर्गिकैकवचनाभ्युपगमे गमकं भवति, न सर्वानर्थकप्रातिपदिकेभ्यः । यदि तु तद्वार्तिकमनर्थकप्रातिपदिकमात्रादौत्सर्गिकैकवचनस्योत्पत्तौ गमकं स्यात्तदा अव्ययादाप्सुप इत्यपि सामान्यतो लिङ्गसंख्यानन्वय्यर्थबोधकप्रातिपदिकेभ्यस्तदुत्पत्तौ गमकं स्यादिति फलाभावेन प्रत्ययस्य प्राति-

पूर्वसूत्रेणेति। प्रत्ययग्रहणे यस्मादिति प्रत्ययान्तत्वाभावादिति भावः। नियमस्य सजातीयविषयत्वात्साजात्यं दर्शयितुमाह। पूर्वो भाग इति। एतेन यत्तच्छब्दार्थयोरननुगतत्वेन शब्दानुगमस्याप्रयोजकत्वेन व्यवच्छेद्याननुगमेऽपि क्षत्यभावेन च 'यत्र

पदिकत्वाप्रवृत्तिमाश्रित्य प्रत्ययपर्युदासप्रत्याख्यानं तत्कृतमसङ्गतं स्यात्, तस्य प्रातिपदिकत्वे निरुक्तज्ञापकेनौत्सर्गिकैकवचनोत्पत्तौ तच्छ्रवणरूपफलसत्त्वात्। किञ्चानर्थकनिपातस्य प्रातिपदिकसंज्ञायामव्ययादाप्सुप इति ज्ञापकात्सुबुत्पत्तौ पदत्वं सिद्ध्यतीति तस्य वैयर्थ्याभावान्न ज्ञापकत्वसम्भव इत्यपि बोध्यम्॥

एतेन, अर्थवदिति तु धनं वनमित्यादौ वर्णानां प्रातिपदिकत्ववारणाय, औत्सर्गिकैकवचनोत्पत्तेरुक्तदिशा आपादयितुं युक्तत्वात्। दशदाडिमानीति निरर्थकसमुदायस्तु न व्यावर्त्यः। समासग्रहणकृतनियमेनैव व्यावर्तनात्। व्यावर्त्यसमुदायस्यार्थवत्त्वविशेषणवैयर्थ्यादित्याचार्योक्तमपास्तम्॥

**साजात्यमिति।** समाससाजात्यमित्यर्थः। चक्रपाण्युक्तं दूषणमुद्धर्तुमाह। **एतेनेति।** साजात्यप्रदर्शनमात्राभिप्रायकत्वेनेत्यर्थः। **यत्तच्छब्दार्थयोः**, यत्तत्पदजन्यधीविशेष्ययोः। **अननुगतत्वेनेति।** त्यदादीनां बुद्धिविषयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तत्वेन तेषामानन्त्यादननुगतत्वमिति भावः। परोक्षत्वादिविशिष्टे त्यदादीनां शक्तिः। वक्तृश्रोतृबुद्धिस्थत्वरूपप्रकरणादिवशाच्च तत्तद्विशेषबोध इति नागेशसिद्धान्तेऽपि तदर्थयोरननुगतत्वं स्पष्टमेव। नन्वर्थाननुगमेपि यत्र तस्येत्येवंरूपशब्दानुगमोऽस्त्येवेत्याशङ्क्याह। **शब्दानुगमस्येति।** **अप्रयोजकत्वेन**=अकिञ्चित्करत्वेन। अर्थस्यैव नियमशरीरे प्रवेशादिति भावः। ननु त्यदादीनां बुद्धिविषयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्तिस्वीकारेण शक्यानां शक्यतावच्छेदकानाञ्चानन्त्यादननुगमेप्युपलक्षणीभूतधर्मस्य बुद्धिविषयतावच्छेदकत्वस्यैक्यात्तदर्थयोरनुग-

**सङ्घाते' इत्यादि व्यर्थमेवेत्यपास्तम् । पदशब्देनात्र स्वातन्त्र्येणापि प्रयोगार्हमर्थवद् गृह्यते । अत एव 'अर्थवत्समुदायानां समासग्रहणं नियमार्थम्' इत्युक्तमत्र भाष्ये । भाष्ये सुबन्तानामित्यनेन भेदसंसर्ग-**

---

मस्सम्भवत्येवेत्यत आह । **व्यवच्छेद्यानननुगमेपीति** । संग्राह्यस्यैवानुगमः । यथा सास्नालाङ्गूलादिमत्त्वं गोर्लक्षणमित्यत्र सङ्ग्राह्याणां सकलगोव्यक्तीनामनुगमः । व्यवच्छेद्यं महिष्यादिकन्तु न कोप्यनुगमयति । भगवान्पाणिनिरपि सङ्ग्राह्यान्साधुशब्दानेवानुगमयति, न तु व्यवच्छेद्यानसाधुशब्दानिति भावः । **अपास्तमिति** । यत्र सङ्घात इत्यादिमूलग्रन्थस्य समाससाजात्यप्रदर्शनमात्रतात्पर्यकत्वेनानुगमासम्भवेऽप्यनुपयोगेऽपि क्षतिविरहादिति भावः । नन्वेवंरीत्या नियमाङ्गीकारे गवित्ययमाहेत्यादौ दोषः । अनुकार्यानुकरणयोरभेदविवक्षायां गो इत्यादीनां वृत्त्यर्थबोधकत्वाभावेनाप्रातिपदिकत्वात्सुबनुत्पत्तौ पदत्वाभावात् । किञ्च वृषण्वसुरित्यादिसमासे वृषण्वस्वश्वयोरित्यनेन पूर्वभागस्य भत्वात्तत्साजात्येन पूर्वो भागः पदमित्यर्थालाभश्चेत्यत आह । **पदशब्देनेति** । **स्वातन्त्र्येणापीति** । अपिना पारतन्त्र्यसमुच्चयः । अन्यथा असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायेन स्वातन्त्र्येणैवेत्यर्थापत्त्या अनुकरणस्येतिशब्दापेक्षस्यापि प्रयोगेण स्वातन्त्र्येणैव प्रयोगार्हत्वाभावान्नियमेन व्यावृत्तिर्न स्यात् । स्वोक्तनियमे भाष्यसम्मतिं दर्शयति । **अत एवेति** । नन्वर्थवत्सूत्रभाष्ये वाक्यस्य प्रातिपदिकसंज्ञावारणायार्थवत्समुदायानां समासग्रहणं नियमार्थमित्युक्त्वा तत्पक्षे बहुपटव इत्यादौ दोषमाशङ्क्य सुबन्तानां समुदायस्य समासग्रहणं नियमार्थमित्यन्यादृशं नियमशरीरमाश्रित्य स परिहृतः, न तु पूर्वोक्तनियमशरीरे स्वातन्त्र्येण प्रयोगार्हेति विशेषणदानेनेति, तदत्र पक्षे विरुद्धमेवेत्याशङ्क्याह । **भाष्ये सुबन्तानामित्यनेनेति** । पूर्वोक्तभाष्यानन्तरं प्रकृतसूत्रभाष्ये इत्यर्थः । **भेदसंसर्गद्वारकेति** । विभिन्नार्थ-

द्वारकार्थवन्त उपलक्ष्यन्ते इति कैयटेन स्पष्टमेवोक्तम्। तेन गवित्यय-माहेत्यादौ गो इत्यादीनां सुबन्तत्वाभावेऽपि न समुदायस्य प्रातिपदि-कत्वम्। अनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तावन्मात्रस्यापि पृथक्प्रयोगार्हत्वात्। बहुपटव इत्यादौ प्रातिपदिकत्वसिद्ध्ये स्वा-तन्त्र्येणेति। तत्र पूर्व इत्याक्षिप्तपरेषामपि स्वातन्त्र्येण प्रयोगार्हार्थ-

---

बोधकयोः पदयोर्वाक्ये विभागेनापि प्रयोगे सतीतरसंसर्गाकाङ्क्षा भेदसंसर्गः। स द्वारभूतो यस्य विशिष्टार्थवत्त्वस्य तद्युक्ता इत्यर्थः। समासेऽपि वाक्यीयेनैव तेन विशिष्टार्थवत्त्वम्। प्रकृतिप्रत्यययोस्तु न विभागेन प्रयोगः। परश्चेति वचनात्। अतो बहुपटव इत्यादौ न दोष इति भावः। तेनेति। पदशब्दस्य निरुक्तार्थकरणेनेत्यर्थः। सुबन्तत्वाभावेऽपीति। अनुकार्यानुकरणयोरभेद विवक्षायामनुकरणस्य सादृश्यवशादनुकार्योपस्थापकत्वेऽपि वृत्त्या तदनुपस्थाप कत्वादर्थवत्त्वाभावेनाप्रातिपदिकत्वादिति भावः। अनुकरणस्य स्वातन्त्र्येण प्रयोगार्हत्वमुपपादयति। अनुकरणस्येति। अनितिपरस्यापीति। अनु-करणञ्चानितिपरमिति लिङ्गादिति भावः। तावन्मात्रस्यापीति। इति शब्दरहितस्यापीत्यर्थः। प्रयोगार्हार्थवतामिति। स्वातन्त्र्येण प्रयोगार्हाणा-मर्थवतामित्यर्थः। एवञ्च समुदायघटका भागाः स्वातन्त्र्येणापि प्रयोर्हा अर्थवन्तो गृह्यन्त इति तात्पर्यम्। स्पष्टञ्चेदमुद्योते॥

अत्र च साजात्यप्रयोजकं स्वातन्त्र्येणापि प्रयोगार्हत्वं स्वप्रकृतिकप्रत्यय-प्रकृत्यन्यतरसमभिव्याहारानपेक्षया लोके प्रयोगार्हत्वरूपं विवक्षितम्। एतच्च समासघटकानां सर्वेषामपि भागानामावश्यकम्। अत्र प्रकृतिपदेन यस्य स्वातन्त्र्यं विवक्षितं तत्प्रकृतिरेव ग्राह्या, बहुपटव इत्यत्र बहुचः स्वप्रकृतिसमभि-व्याहारेणैव प्रयोगार्हत्वमिति तत्समुदायस्य नियम्यकोटावनन्तर्भावेण न नियम-व्यावर्त्यता। तथा पुत्रकाम्येत्यादौ काम्यचः अप्रत्ययस्य च काल्पनिकार्थ-

वत्त्वसत्त्वेऽपि स्वस्वप्रकृतिसमभिव्याहारापेक्षयैव तयोर्लोके प्रयोगार्हत्वमिति तत्समुदायस्यापि नियम्यकोटावप्रवेशेन न नियमव्यावर्त्यता । कुम्भकारः, तन्निभः, शुक्लीकृत्य, पञ्चगवधनः; एकैकमित्यादिषु कारादीनां कुम्भ, तत्, कृञ् धन, एकादीनामपेक्षासत्त्वेऽपि तेषां स्वप्रकृतिकप्रत्ययप्रकृत्यन्यतरत्वाभावेन निरुक्तं स्वातन्त्र्येणापि प्रयोगार्हत्वमक्षतमेवेति न समाससाजात्यभङ्गः । एवमेधाश्वके मूलकेनोपदंशमित्यादावामन्तणमुलन्तयोर्धातूपपदापेक्षासत्त्वेऽपि तयोः स्वप्रकृतिकप्रत्ययप्रकृत्यन्यतरत्वाभावान्निरुक्तं स्वातन्त्र्येणापि प्रयोगार्हत्वमक्षतमेवेति तयोर्नियमव्यावर्त्यता सूपपादैव । देवदत्तेन कृतमित्यादौ क्तान्तसमुदायस्य कृद्ग्रहणपरिभाषया कृदन्तत्वसत्त्वेऽपि तस्यास्मद्रीत्या पारिष्कृतार्थवत्त्वाभावादेव न प्रातिपदिकत्वम् । सूत्रद्वयेप्येकरूपमेवार्थवत्त्वं स्वीकार्यमित्यर्थवत्सूत्रे नागेशेन विविच्य निरूपितम् । एतेनात्र प्रातिपदिकत्ववारणाय "यस्समुदायस्समासग्रहणकृतनिमशरीराक्रान्तत्वेन विवक्षितस्तत्पर्याप्ता या औपस्थापकशक्तिरानुभविकशक्तिरित्येतदन्यतरा, तन्निरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकप्रातिपदिकसंज्ञाफलभूतप्रत्यय, पद, एतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वं स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वमि"ति परिष्कृत्य क्लिश्यन्त औत्तराहाः परास्ताः । न च समुदायस्य पारिष्कृतार्थवत्त्वाभावेऽपि कृतेत्यस्य तत्सत्त्वात्समुदायस्यार्थवदन्तत्वेन च प्रातिपदिकसंज्ञा दुर्वारैव । नियमेन तु न व्यावृत्तिः । उत्तरखण्डस्य स्वप्रकृतिकप्रत्ययसमभिव्याहारापेक्षयैव प्रयोगार्हत्वेन नियम्यकोटावनन्तर्भावादिति वाच्यम् । अर्थवदन्तं यत्कृत्तद्धितान्तमित्यर्थस्य भाष्यलापनमात्रफलकतया स्वीकृतत्वेपि सिद्धान्ते तादृशार्थस्यानुपयोगेन शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेस्तत्रास्वीकारात् । एवं गवित्ययमाहेत्यादौ गो इत्यादेरितिशब्दसमभिव्याहारापेक्षासत्त्वेपि तस्य स्वप्रकृतिकप्रत्ययप्रकृत्यन्यतरत्वाभावेन स्वा-

74

वतामेव ग्रहणात्पुत्रकाम्येत्यादौ न दोषः । अत एवाङ्गसञ्ज्ञासूत्रे भाष्ये 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषायाः फलनिरूपणावसरे देवदत्तो गार्ग्यैति समुदायस्य यञन्तत्वेन प्राप्तप्रातिपदिकसञ्ज्ञाऽभावः फलत्वेनोक्तः । यथाश्रुत-

---

तन्त्र्येणापि प्रयोगार्हत्वं निर्बाधमेवेति नियम्यकोटावन्तर्भावेण न प्रातिपदिकत्वम् । कुम्भकार इत्यादावुत्तरभागस्य समुदायप्रकृतिकसुप्रत्ययसमभिव्याहारापेक्षायाः, सांकूटिनमित्यादौ कूटिन्नित्यस्योत्तरस्य समुदायप्रकृतिकाणप्रत्ययसमभिव्याहारापेक्षायाश्च सत्त्वेपि तयोस्स्वप्रकृतिकप्रत्ययत्वाभावान्निरुक्तं स्वातन्त्र्येणापि प्रयोगार्हत्वमव्याहतमेवेति न साजात्यभङ्गः । देवदत्तो गार्ग्य इत्यत्र यञन्तसमुदायस्य तु न समासग्रहणकृतनियमेन व्यावृत्तिः। उत्तरखण्डस्य स्वप्रकृतिकसुप्रत्ययसमभिव्याहारापेक्षासत्त्वेन निरुक्तस्वातन्त्र्येणापि प्रयोगार्हत्वाभावाद्विशिष्टस्यार्थवत्सूत्रोक्तपारिष्कृतार्थवत्त्वाभावाच्चेति नाङ्गसंज्ञासूत्रस्थभाष्यविरोधः । एतेन "कुम्भकारेत्यादिसमासे उत्तरभागस्य स्वातन्त्र्येण प्रयोगार्हत्वाभावेने"त्यादिनाऽस्य ग्रन्थस्यायुक्तत्वं प्रतिपाद्यानेकनियमाश्रयणेन क्लिश्यन्त आचार्याः परास्ताः ॥

यद्वा समुदायघटकभागानां साजात्यप्रयोजकमर्थवत्त्वं स्वप्रकृतिकप्रत्ययप्रकृत्येतदन्यतरसमभिव्याहारानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपं विवक्षणीयम् । व्यावर्त्यसमुदायघटकभागानामीदृशमर्थवत्त्वं विवक्षणीयमिति बोधनायैव मूले स्वातन्त्र्येणापि प्रयोगार्हेति विशेषणम् । समुदायस्य तु पूर्वसूत्रोक्तपारिष्कृतार्थवत्त्वमेव ग्राह्यमिति बोध्यम् ॥

पुत्रकाम्येत्यादाविति । अप्रत्ययादित्यनेन काम्यजन्तादकारप्रत्यये टाप् । न दोष इति । समुदायघटकयोः काम्यजप्रत्यययोर्निरुक्तस्वातन्त्र्याभावान्नियमाप्राप्त्या न प्रातिपदिकत्वभङ्ग इति भावः । अत एव । उक्तस्यैव

मूलोक्तनियमे तु नियमेनैव तत्र तदप्राप्त्या भाष्यासङ्गतिः स्पष्टैव ।

---

नियमस्याभिप्रेतत्वादेव । असङ्गतिः स्पष्टैवेति । न चास्यामवस्थायां प्रत्ययग्रहणपरिभाषाया असिद्धतया अर्थवत्सूत्रे तदादिनियमाभावेन सर्वेषामेव समासानां प्रत्ययान्ततया अप्राप्तायाः प्रातिपदिकसञ्ज्ञाया विधानेन कृतार्थस्य समासग्रहणस्य नियामकता न सङ्कटत एवेति न तन्मतेऽपि भाष्यासङ्गतिरिति वाच्यम् । मूलकेनोपदंशमित्यादौ समासग्रहणकृतनियमेन कृदन्तत्वप्राप्तप्रातिपदिकसञ्ज्ञावारणाय पूर्वसूत्रे प्रत्ययसामान्यग्रहणे तत्परिभाषाप्रवृत्तिमभ्युपेत्यैव प्रत्ययविशेषग्रहणे प्रवृत्तौ फलप्रदर्शनार्थैतद्भाष्यस्य प्रवृत्तत्त्वेनेदानीमपि नियमस्य सुवचत्वेन प्राचोक्तनियमे तदसङ्गतेर्दुर्वारत्वात् । अत एव पूर्वसूत्रं विहायोत्तरसूत्रे प्रत्ययविशेषग्रहण एव प्रयोजनप्रदर्शनं प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वरा इत्यादिना तद्विशेषग्रहणेष्वेवोदाहरणदानञ्च भगवतो भाष्यकृतस्स्वरसतस्सङ्गच्छते । नागेशोक्तनियमे तु समुदायस्य पारिष्कृतार्थवत्त्वाभावान्नियम्यकोटावप्रवेशेन तदप्रवृत्तौ न तद्भाष्यासङ्गतिः । स्पष्टश्चेदमुद्योते । न चैवं सति देवदत्तो गार्ग्येति यञन्तस्यार्थवत्त्वाभावादेव प्रातिपदिकत्ववारणेन तत्र तद्वारणस्य प्रत्ययग्रहणपरिभाषाप्रयोजनत्वकथनं भगवतोऽसङ्गतं स्यादिति वाच्यम् । तद्भाष्यस्यात्र सूत्रेऽर्थवदन्तं यत्कृत्तद्धितान्तमित्यर्थाश्रयणेन प्रवृत्ततयाऽदोषात् । अर्थवदित्यस्य पूर्वत्र क्लृप्तार्थकस्य कृत्तद्धितयोर्विशेषणसामर्थ्याच्छब्दरूपं विशेष्यमध्याहृत्य तदन्तविधौ कृत्तद्धितान्तेत्यर्थेऽर्थवदित्यस्य तद्विशेषणात्तदंशेपि तदन्तविधावर्थवदन्तं यत्कृत्तद्धितान्तमित्यर्थान्निरुक्तसमुदायस्य अर्थवद्गार्ग्यशब्दान्तत्वेन, परिभाषार्थतः प्राक्तद्धितान्तत्वेन च तत्प्राप्तिरिति, तत्परिभाषोत्तरन्तु विशिष्टस्यार्थवदन्तत्वेऽपि तद्धितान्तत्वाभावान्न दोष इति च तदाशयः ॥

एतेन "इदमयुक्तं, तद्धितान्तत्वप्रयुक्तप्रातिपदिकसञ्ज्ञायास्तदादिनियमाश्रयणेन वारणेऽप्यर्थवत्सूत्रेण तस्या दुर्वारत्वात् । किञ्च तदादिनियमाभावे

एतेन वृषण्वसुरित्यादौ पूर्वभागस्य भत्वात्पूर्वो भागः पदमित्ययुक्तमित्यपास्तम्। वाक्यस्य नेति। प्रातिपदिकत्वे हि सुपः श्रवणानापत्तिः। पिण्डीमित्यादौ वाक्यैकदेशप्रयोगेऽलुक्समासे चाङ्गाधिकारविहितसुप्प्रत्ययनिमित्तककार्याणां सुबादेशानाञ्च चारितार्थ्यं, विकल्पेन समासविधानञ्च स्वराद्यर्थमिति भावः। शशशृङ्गादिपदानाञ्च बौद्धे शशशृङ्गादौ शक्तिरिति पूर्वेणैव प्रातिपदिकत्वं सिद्धम्।

---

देवदत्तो गार्ग्येति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वमापादितं भाष्ये। तदानीञ्च न समासग्रहणस्य नियमार्थत्वं, समासस्य प्रत्ययान्तत्वात्। तदादिनियमस्य चाभावात्, किन्तु विध्यर्थमेव। तथा च देवदत्तो गार्ग्येति समुदायस्य सूपपन्नं प्रातिपदिकत्वापादन"मित्याचार्योक्तमपास्तम्॥

एतेनेति। पदशब्दस्योक्तार्थकत्वेनेत्यर्थः। सुपः श्रवणानापत्तिरिति। न च धातुसाहचर्येण प्रातिपदिकावयवस्यापि वृत्त्यवयवस्यैव ग्रहणान्न लुगिति वाच्यम्। तथापि मूलकेनोपदंशमित्यादौ दोषात्। ननु सर्वत्र वाक्यस्यैव प्रयोगाद्यदि वाक्यावयवसुपां लोपेनापहारस्स्यात्तदाऽङ्गाधिकारविहितानां सुन्निमित्तककार्याणां सुबादेशानां च वैयर्थ्यापत्तिरत आह। पिण्डीमित्यादाविति। ननु समास इव वाक्येऽपि चेल्लोपस्तदा वाक्यस्यापि समाससमानानुपूर्वीकत्वापत्तौ तत्तत्सूत्रैः समासविकल्पविधानमनुपपन्नं स्यादत आह। विकल्पेन समासविधानं चेति। स्वराद्यर्थमिति। आदिना एकार्थीभावनिमित्तकसर्वकार्याणां विशेषणाद्ययोगानां परिग्रहः। ननु शशशृङ्गादिसमासे शशशृङ्गादेरलीकत्वेनानर्थकत्वात्प्रातिपदिकत्वाप्राप्तौ समासग्रहणं तत्र विध्यर्थमेव स्यान्न नियमार्थमित्याशङ्क्याह। शशशृङ्गादिपदानामिति। बौद्धे बुद्धिसत्तासमाविष्टे, एतेन तेष्वपि पूर्वसूत्रेणैव प्रातिपदिकसञ्ज्ञेति न तेषु प्रातिपदिकसञ्ज्ञासिद्ध्यर्थं समासग्रहणं विध्यर्थमिति शङ्कनीयमिति भावः। ननु बौद्धपदार्थानङ्गीकारेऽपि प्रसिद्ध-

**स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्याऽऽवश्यकत्वम् । अक्षौहिणीरथन्तरादिपदेषु अवयवानामत्यन्तनिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथाकथञ्चित्साधुत्वान्वाख्यानं बोध्यम् ॥**

---

शशशृङ्गपदार्थद्वयसम्बन्धमात्रारोप एव सुवचोऽत आह । **स्वप्नानुरोधेनेति** । अत्रानुभूतानां पदार्थानां न व्यावहारिकत्वं, प्रबोधोत्तरमनुपलम्भात् । यस्य हि व्यावहारिकी सत्ता स पदार्थो घटादिः प्रबोधोत्तरमप्यनुभूयत एव । तथाच स्मृतिः ॥

"विप्र पृथ्व्यादि चित्तस्थं न बहिस्स्थं कदाचन ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥" इति

योगवासिष्ठे उपशमप्रकरणे गाधिम्प्रति विष्णूक्तिरियम् । हे विप्र पृथ्व्यादिजाग्रद्रूपं, चित्तस्थं=बौद्धं, चित्तस्यैव जगन्निदानत्वात् । बहिस्तु नासीदित्यर्थः । अयञ्चार्थः स्वप्नावस्थायां भ्रमावस्थायाम्मदावस्थायाञ्च सर्वैरनुभूयत एव । स्वप्नादिषु बाह्यस्याभावेन चित्तगतस्यैव प्रपञ्चस्य परिस्फुरणादिति तदर्थः । एतेन बौद्धार्थस्यावश्यकता स्पष्टमभिहिता । बौद्धपदार्थाङ्गीकारादेव घटोऽस्ति घटो नास्तीत्यादिप्रयोगा उपपद्यन्ते । अन्यथा घट इत्यत एव सत्तावगमेन घटोऽस्तीति प्रयोगे गतार्थत्वादस्तीति प्रयोगानापत्तिः । तथा सत्तया विरोधात् घटो नास्तीत्यस्यानापत्तिश्च । तदङ्गीकारे तु बुद्धिसतो बाह्यसत्तातदभावबोधनायास्तीति नास्तीति च प्रयोग इति नानुपपत्तिरित्यलम् । नन्वक्षौहिणीरथन्तरादिष्ववयवानां सर्वथा निरर्थकत्वात्प्रातिपदिकत्वानापत्तौ सुबुत्पत्त्यभावेन समासानापत्तौ समुदायस्य साधुत्वन्न स्यात् । किञ्च समाससाजात्येन नियमस्यार्थवत्तत्समुदायविषयकत्वमपि न सिद्ध्येदत आह । **अक्षौहिणीत्यादि** । **अन्यत्र दृष्टार्थारोपेणेति** । अक्षान्दीव्यतीत्यादौ ऊहो मनुष्याणामित्यादौ च तत्त-

**अधिकारोऽयमिति । सञ्ज्ञाऽधिकार इत्यर्थः । सञ्ज्ञात्वावगमस्तु व्याख्यानात् । विकारागमानान्तु न तत्सञ्ज्ञा । 'प्रत्यय' इति महासञ्ज्ञया स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्यैव तत्सञ्ज्ञ-**

---

त्पदानाम्प्रसिद्धा येऽर्थास्तद्बोधकत्वस्याक्षौहिणीत्यादिसमासावयवानां साधुत्वार्थं कल्पनेन प्रातिपदिकत्वादिकं समुदायस्य साधुत्वं साजात्यञ्चोपपादनीयमिति भावः। जहत्स्वार्थावृत्तिरिति पक्षे मण्डपकुशलादिपदेऽप्ययमेव प्रकार ऊहनीयः ॥

ननु प्रत्ययशब्दस्य शुद्धाधिकारत्वे स्वं रूपमिति शास्त्रबलेनोत्तरसूत्रैः प्रत्ययशब्दस्यापि विधानापत्तिरत आह । **संज्ञाधिकार इति** । प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः । यदि स्वातन्त्र्येणेयं संज्ञा विधीयेत, तदा सन्प्रत्ययः क्यच्प्रत्यय इत्यादिरीत्या विधातव्यत्वेनात्यन्तगौरवं स्यात् । अथ सनस्सशब्दादारभ्य कपः पकारेण प्रत्याहारमाश्रित्य सप्प्रत्यय इति यदि संज्ञा विधीयेत, तदाऽनेकस्य पकारस्य सम्भवात्सन्देहः स्यादतोऽस्य न स्वातन्त्र्येण संज्ञाविधायकत्वमपि त्वधिकारेणेयं संज्ञा विधेयेति भावः । ननु पूर्वोच्चारितशब्देन संज्ञ्यनिर्देशात्कथं संज्ञात्वावगतिरित्यत आह । **संज्ञात्वावगम इति । व्याख्यानादिति** । उत्तरसूत्रेषु प्रथमान्तप्रत्ययपदोपस्थितौ विधेयसामानाधिकरण्येनान्वयमूलकादित्यर्थः । ननु यद्यधिकारेणेयं संज्ञा विधीयेत, तदा विकारागमानामप्येतदन्तःपातित्वेन तेषामपि संज्ञा स्यादत आह । **विकारागमानामिति** । हनस्तच, त्रपुजतुनोष्षुगित्यादीनामित्यर्थः । बहुवचनन्त्ववयवबहुत्वाभिप्रायकम् । **न तत्संज्ञेति** । तत्सत्त्वे सीयुडादेस्स्वरान्तरम्बाधित्वाऽद्युदात्तत्वापत्तिरिति नभादेश्च तत्त्वापत्तिरिति च प्रकृतसूत्रभाष्यतोऽवसेयम् ॥

**महासंज्ञयेति** । अयं भावः । महासंज्ञाकरणेनान्वर्थत्वं विज्ञायते । कर्तृकर्मसाधनप्रत्ययशब्दयोरन्तर्भावितण्यर्थयोस्तन्त्रेण निर्देशः। एवञ्च स्वीयमर्थं प्रत्याययतीति प्रत्यय इति, प्रत्याय्यते प्रकृत्या बोध्यत इति प्रत्यय इति

**कत्वात् । स्वप्रकृत्यर्थत्वञ्च धातुपाठकोशादौ तमुच्चार्य बोधितत्वम् । अत एव नभवधाद्यादेशानां न सञ्ज्ञा । तेषां स्थान्यर्थेनैवार्थवत्त्वं,**

---

चार्थद्वयं लभ्यते । तत्र कर्तृव्युत्पत्त्या स्वार्थप्रत्यायकानां धातुविहितसनादीनां, कर्मव्युत्पत्त्या स्वार्थिकानाञ्च सङ्ग्रहः । यद्यपि स्वार्थिकानां कयापि प्रकृत्या प्रत्याय्यमानत्वाभावात्कर्मव्युत्पत्तावपि तेषाम्प्रत्ययत्वं न लभ्यते, तथाप्यभिधेयधर्मस्याभिधाने आरोपाच्छब्दार्थयोस्तादात्म्याङ्गीकाराद्वैवमुक्तमित्यदोषः। प्रकृत्या प्रत्याय्यमानार्थकोऽपि प्रत्यय इति फलितम् । अयमेक एव शब्दोऽनेकशक्तियोगादङ्गीकृतप्रवृत्तिनिमित्तद्वयोऽधिक्रियते । तत्र यथासम्भवं प्रवृत्तिनिमित्ताश्रयणेन स्वार्थप्रत्यायकानां सनादीनां, प्रकृत्या प्रत्याय्यमानार्थकानां कादीनाञ्च प्रत्ययसंज्ञा प्रवर्तत इति । स्पष्टश्चेदमाकरे ॥

तदेतन्मनसि निधायाह । **स्वप्रकृतीति** । प्रकृत्या प्रत्याय्यमानार्थकानां स्वार्थिकानां स्वप्रकृत्यर्थप्रत्यायकत्वमपि सिद्धमेवेत्येवमुक्तम् । अत्र प्रकृतिशब्देन प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तत्वरूपं वक्ष्यमाणं न ग्राह्यम् । अन्योन्याश्रयापत्तेः । किन्तु अवच्यंशे नित्यसाकाङ्क्षो यो धर्मः पूर्वत्वपरत्वान्यतररूपस्तदवच्छिन्नस्वानिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वरूपं ग्राह्यम्, यस्य प्रत्ययत्वमानेयं सोऽत्र स्वपदग्राह्यः । विकरणानान्तु कर्तृकर्मादिद्योतकतया स्वार्थप्रत्यायकत्वात्प्रत्ययत्वमित्यवधेयम् । ननु यदर्थे द्योत्ये वाच्ये वा यस्य विधानं तस्य तदर्थकत्वकल्पनं, न चैतत्प्रकृतेस्सम्भवति, अर्थविशेषे प्रकृतिविधानाभावादत आह । **स्वप्रकृत्यर्थत्वञ्चेति** । कोशादावित्यादिना निरुक्तनिघण्टुसङ्ग्रहः । **तमुच्चार्येति** । अर्थबोधकशब्दमुच्चार्येत्यर्थः । ननु प्रत्यायकत्वं प्रत्ययत्वमित्येवास्तु, मास्तु तन्त्रादिः स्वशब्दोपादानञ्चेत्यत आह । **अतएवेति** । स्वशब्दार्थान्तर्भावेण प्रत्ययशब्दे वृत्तिस्वीकारादेवेत्यर्थः । **अत एवेति** । स्वार्थाभावादेवेत्यर्थः । नभादीनां स्वार्थाभावादेव च नभ्यशब्दादपि

न तु स्वार्थोऽस्ति। अत एव कोशादौ तदर्थाकथनम्। एतदर्थमेव भाष्ये स्वीयमर्थं प्रत्याययन्तीति विग्रहे स्वीयपदोपादानम्। भाष्यप्रामाण्याच्च तदर्थान्तर्भावेण प्रत्ययशब्दस्य वृत्तिः। यत्तु विकारागमादेशानां देशांशे निराकाङ्क्षत्वात् 'परश्च' इत्यस्यानुपस्थितौ तत्सन्नियोगशिष्टप्रत्ययसञ्ज्ञाया अप्रवृत्तिरिति, तन्न। श्नमकज्बहुच्स्वप्रवृत्त्यापत्तेः। किं च लविषीयेत्यत्र विशेषविहितत्वात्परत्वाच्च

---

नाभिशब्दप्रकारक एव बोधो नाभिहित इति, न तु कदाचिदपि नभहित इति। येऽपि शास्त्रानभिज्ञास्तेषामपि वृद्धव्यवहारात्तथैव प्रतिपत्तिरिति स्पष्टमुद्योते। **एतदर्थमेवेति**। स्थान्यर्थप्रत्यायकनभाद्यादेशानां प्रत्ययत्वव्यावृत्त्यर्थमेवेत्यर्थः। **इति विग्रह इति**। इत्यर्थकस्त्रमर्थं प्रत्याययतीति विग्रह इत्यर्थः। **स्वीयपदेति**। तदर्थकस्वपदेत्यर्थः। यथाश्रुतन्तु न युक्तं, भाष्ये स्वपदघटितविग्रहस्यैव दर्शनात्। मूले स्वीयपदोपादानन्तु भाष्यस्थस्वशब्दस्यात्मीयार्थकत्वध्वननायैवेति बोध्यम्। ननु विग्रहवाक्यादेतादृशार्थप्रतीतावपि प्रत्ययपदात्कथन्तदर्थप्रतीतिरत आह। **भाष्यप्रामाण्यादिति**। **तदर्थान्तर्भावेणेति**। स्वशब्दार्थान्तर्भावेणेत्यर्थः। विकारागमादेशानां प्रत्ययत्ववाणाय प्राचीनादृतां सरणिमनूद्य खण्डयति। **यत्त्विति**। विकार एकदेशस्थानिकः, आदेशस्तु सर्वस्थानिक इति तयोर्भेदः। यथा हनस्तच, नाभिनभञ्चेति च। **अप्रवृत्त्यापत्तेरिति**। श्नमि मित्त्वेनाकचि प्राक्टेर्ग्रहणेन बहुचि पुरस्ताद्ग्रहणेन च देशविशेषाकाङ्क्षाया निवृत्ततया परश्चेत्यस्याप्रवृत्तौ तत्सन्नियोगशिष्टप्रत्ययसंज्ञाया अप्यप्रवृत्त्यापत्तिरित्याशयः। ननु तृणह इति निर्देशात् श्नमः, न यासयोरिति ज्ञापकात् प्रत्ययकबाधकतया विधानाच्चाकचः प्रत्ययत्वं सिध्यति। बहुचः प्रत्ययत्वाभावेऽपि न क्षतिः। चितस्सप्रकृतेर्बह्वकजर्थमिति भाष्याद्वा तस्य प्रत्ययत्वं भविष्यतीत्यत आह। **किञ्चेति**। **विशेषविहितत्वादिति**। विशेषविहितत्वस्य कृते चारितार्थ्येऽपि बाधकत्वप्रयोजकत्वमस्तीत्याशयेनेदम्। यदि तु कृतेप्यचारितार्थ्यं यत्र तादृशे

पूर्वं सीयुटि ततो लादेशो प्रत्ययसञ्ज्ञासन्नियोगेनेटो विधीयमानमाद्युदात्तत्वं सीयुट एव स्यादत आगमानुदात्तत्वं वक्तव्यमिति 'आद्युदात्तश्च' इतिसूत्रस्थभाष्यकैयटासङ्गतिः । लस्थानिकत्वेन देशांशे निराकाङ्क्षत्वेन 'परश्च' इत्यस्याप्रवृत्तौ 'प्रत्यय' इत्यस्याप्यप्रवृत्तौ तत्सन्नियोगकथनासङ्गतेरिति दिक् ॥

---

माठरकौण्डिन्यन्यायविषय एव विशेषविहितत्वस्य बाधकताप्रयोजकत्वमिति विभाव्यते, तत्राह । परत्वादिति । न च कृते चारितार्थ्यस्थले तक्रन्यायप्रवृत्त्या परत्वोक्तिरसङ्गतेति वाच्यम् । यासुड्विषये सीयुटः प्रतिषेधो वक्तव्य इति वचनेन लिङ्सम्बन्धिकार्येषु तक्रन्यायाप्रवृत्तेर्बोधनेनादोषात् । अत एव सीयुडुत्तरं लादेशोपपत्तिः । न चैवमपि सीयुट्लादेशयोर्विप्रतिषेधाभावेनेदमसङ्गतमिति वाच्यम् । परत्वादित्यस्योत्कृष्टत्वादित्यर्थकरणेनादोषात् । उत्कृष्टत्वञ्च तक्रन्यायमाठरकौण्डिन्यन्याययोरत्राप्रवृत्तावपि तत्र दृष्टस्य तदप्राप्तियोग्येऽचारितार्थ्यस्यात्र सत्त्वरूपमेव । यद्वा विप्रतिषेधाभावेप्याकडारसूत्रस्थशेखरोक्तदिशा परत्वस्य पूर्वप्रवृत्तिनियामकत्वमस्त्येवेत्यपि वक्तुं शक्यम् । नन्वक्रियमाणे ह्यागमानुदात्तत्वे, क्रियमाणेऽपि प्रत्ययसंज्ञासन्नियोगेनाद्युदात्तत्वे सीयुडादेर्लिङ आद्युदात्तत्वं प्रसज्येत"ति भाष्यं लिङ्गिधावुपस्थिताद्युदात्तश्चेत्यस्य विधानकाले लिङोऽनच्कत्वेनाप्रवृत्तावपि सीयुटि कृते तद्विशिष्टस्य यदागमन्यायेन लिङ्त्वात्सीयुटः प्राप्नोतीत्याशयकमित्यादेशविधौ प्रत्ययपदासम्बन्धेऽपि न तद्भाष्यासङ्गतिरतः कैयटासङ्गतिमाह । कैयटेति । इत्थं हि तत्र कैयटः । अत्र विशेषविहितत्वात्परत्वाद्वा पूर्वं सीयुट् क्रियते पश्चाल्लादेशः, तत्र प्रत्ययाद्युदात्तत्वं क्रियमाणं सीयुट एव स्यात् । आगमा अनुदात्ता इति वचनात्सीयुटोऽनुदात्तत्वे सतीटोऽदित्यकारस्योदात्तत्वं सिद्ध्यतीत्यर्थ इति ॥

परश्च ॥ 'गुप्तिज्किद्भ्य' इत्यादावपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी । तत्र परः पूर्वो वेत्यत्रानियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम् । 'गापोष्टक्' इत्यादावपि षष्ठ्यर्थ आनन्तर्यं पूर्वपरसाधारणमित्यनियमोऽस्त्येव । अत्र तस्मादिति परिभा-

---

अपादानत्वासम्भवादिति । गुपादिभ्यस्सनादेर्विश्लेषाभावादिति भावः । दिग्योगलक्षणेति । अन्यारादितिसूत्रेण पञ्चमीत्यर्थः । तत्रेति । तस्यां सत्यामित्यर्थः । तत्रेत्यस्यानन्तरमेतदुपपत्तय इति शेषः । नियमार्थमिदमिति । गुप्तिज्किद्भ्य इत्यादावपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी वाच्या । ततश्च तदुपपत्तये दिग्वाचकं पदमध्याहार्यम् । तत्र विनिगमनाविरहात्परशब्दस्येव पूर्वशब्दस्याप्यध्याहारे प्रसक्ते परशब्दस्यैव दिग्वाचकस्याध्याहारः कार्य इत्यनेन नियम्यत इति भावः । ननु गापोष्टगित्यत्र पञ्चम्यभावात्तत्र तस्य पराविध्यर्थमेवेदं सूत्रं स्यादत आह । गापोरिति । षष्ठ्यर्थ आनन्तर्यमिति । षष्ठ्यर्थसम्बन्धनिरूपकाध्याहृतानन्तरादिपदबोध्यमानन्तर्यमित्यर्थः । यथाश्रुतन्तु न युक्तम् । अनन्तर्यस्य षष्ठ्यर्थत्वाभावस्यान्यत्र ग्रन्थकृता निरूपितत्वात् । षष्ठ्यर्थसम्बन्धश्चात्र बौद्धैकदेशाधारकस्थित्याश्रयत्वरूपः, स्थानशब्दस्य तु नात्राध्याहारः । अस्य प्रत्ययाधिकारे पाठात्प्रत्ययत्वज्ञानेन षष्ठी स्थान इति परिभाषाया अत्राप्रवृत्तिकल्पनात् । अस्त्येवेति । तथा च नात्रापि विध्यर्थत्वमस्येति भावः । परत्वस्य व्यवहिताव्यवहितसाधारणत्वेन सनादीनां व्यवधानेनापि प्रवृत्तिं वारयति । अत्रेति । तत्तत्प्रत्ययविधायक इत्यर्थः । न च गापोष्टगित्यत्र पञ्चम्यभावेन तस्मादित्युत्तरस्येति परिभाषाया अप्रवृत्त्याव्यवधानलाभो न स्यादिति वाच्यम् । अत्रापि धातोरित्यस्याभिव्याहाराद्धातोरव्यवहितपरः टग्भवति, गापोस्त्वनन्तर इति व्याख्यानेन तल्लाभस्य कैयटेन स्फुटीकृतत्वात् । अध्याहृतानन्तरपदेनैवाव्यवधानलाभाच्च ।

चोत्तराङ्गविकला प्रवर्तते इत्यव्यवहिता एव प्रत्ययाः। न चैवं षष्ठ्यंशाविकलं संपूर्णं सूत्रमुपतिष्ठतां, किं परश्चेत्यनेनेति वाच्यम्। प्रकृत्यर्थमात्रविवक्षायां केवलप्रकृतेः पच् पत् इत्यादेः प्रयोगो मा भूदिति प्रत्ययः परो भवत्येवेतिनियमार्थत्वात्। तेन 'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति सिद्धम्। अनुकरणे त्वभेदविवक्षयाऽर्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन प्रकृतित्वाभावात् 'गवित्ययमाह' इत्यादौ नानुपपत्तिः। प्रकृतित्वं प्रत्ययविधावुद्देश्यताव-

---

उत्तराङ्गेति। उत्तरस्येत्यंशेत्यर्थः। गुप्तिज्किद्भ्य इत्यादौ प्रत्ययविधायके परश्चेत्यस्याधिकारात्तदंशस्याप्रवृत्तावप्यव्यवहितत्वोत्तरत्वांशयोस्तन्नियोगशिष्टत्वाभावेनाव्यवहितत्वांशप्रवृत्तौ बाधकाभावात्। एवमिति। परश्चेत्यस्यारम्भेपि ते प्राग्धातोरित्यादाविवात्राप्यव्यवहितत्वांशलाभाय तस्मादितिपरिभाषाप्रवृत्त्यङ्गीकार इत्यर्थः। षष्ठ्यंशेति। एवञ्च प्रथमां स्वीकृत्य प्रत्ययैस्सामानाधिकरण्यमिति भावः। गापोष्टगित्यादावपि धातोरिति पञ्चम्यन्तस्य सत्त्वेन परिभाषाप्रवृत्तिरव्याहतैवेति भावः। प्रकृत्यर्थमात्रविवक्षायामिति। यत्र पुनः प्रकृत्यर्थप्रत्ययार्थयोरुभयोरपि विवक्षा, तत्र न केवला प्रकृतिः प्रत्ययार्थमप्यभिधातुं समर्थेति न तत्र केवलायाः प्रकृतेः प्रयोगप्रसङ्ग इत्यतो मात्रपदनिवेशः। परो भवत्येवेति। न तु कदाचिन्न भवतीत्यर्थः। तेन =उक्तनियमाङ्गीकारेण। न केवलेति। अस्यैवांशस्य निरुक्तनियमेन सिद्धिः। नापि केवलः प्रत्यय इति तु न्यायमूलकमित्यग्रे स्फुटीभविष्यति। नन्वेवं गवित्ययमाहेत्यस्य प्रयोगो न स्यादत आह। अनुकरणे त्विति। अस्य गवित्ययमाहेत्यादाविति सप्तम्यन्तेऽन्वयः। प्रातिपदिकत्वाभावेनेति। अस्य स्वाद्यनुत्पत्तेरिति शेषः। गवित्ययमाहेत्यादावनुकरणस्य प्रकृतित्वं वारयितुं तत्परिष्करोति। प्रकृतित्वमिति। प्रत्ययविधाविति। प्रत्ययविधायक-

परश्च ॥ 'गुप्तिज्किद्भ्य' इत्यादावपादानत्वासम्भवाद्दिग्योग-लक्षणा पञ्चमी। तत्र परः पूर्वो वेत्यत्रानियमेनाध्याहारे प्रसक्ते पर एवेति नियमार्थमिदम्। 'गापोष्टक्' इत्यादावपि षष्ठ्यर्थ आनन्तर्यं पूर्वपरसाधारणमित्यनियमोऽस्त्येव। अत्र तस्मादिति परिभा-

---

अपादानत्वासम्भवादिति। गुपादिभ्यस्सनादेर्विश्लेषाभावादिति भावः। दिग्योगलक्षणेति। अन्यारादितिसूत्रेण पञ्चमीत्यर्थः। तत्रेति। तस्यां सत्यामित्यर्थः। तत्रेत्यस्यानन्तरमेतदुपपत्तय इति शेषः। नियमार्थ-मिदमिति। गुप्तिज्किद्भ्य इत्यादावपादानत्वासम्भवाद्दिग्योगलक्षणा पञ्चमी वाच्या। ततश्च तदुपपत्तये दिग्वाचकं पदमध्याहार्यम्। तत्र विनिगमनाविरहा-त्परशब्दस्येव पूर्वशब्दस्याप्यध्याहारे प्रसक्ते परशब्दस्यैव दिग्वाचकस्याध्या-हारः कार्य इत्यनेन नियम्यत इति भावः। ननु गापोष्टगित्यत्र पञ्चम्यर्थाभावा-त्तत्र तस्य परविध्यर्थमेवेदं सूत्रं स्यादत आह। गापोरिति। षष्ठ्यर्थ आनन्तर्यमिति। षष्ठ्यर्थसम्बन्धनिरूपकाध्याहृतानन्तरादिपदबोध्यानन्तर्य-मित्यर्थः। यथाश्रुतन्तु न युक्तम्। अनन्तर्यस्य षष्ठ्यर्थत्वाभावस्यान्यत्र ग्रन्थ-कृता निरूपितत्वात्। षष्ठ्यर्थसम्बन्धश्चात्र बौद्धैकदेशाधारकस्थित्याश्रयत्वरूपः, स्थानशब्दस्य तु नात्राध्याहारः। अस्य प्रत्ययाधिकारे पाठात्प्रत्ययस्वज्ञानेन षष्ठी स्थान इति परिभाषाया अत्राप्रवृत्तिकल्पनात्। अस्त्येवेति। तथा च नात्रापि विध्यर्थत्वमस्येति भावः। परत्वस्य व्यवहिताव्यवहितसाधारणत्वेन सनादीनां व्यवधानेनापि प्रवृत्तिं वारयति। अत्रेति। तत्तत्प्रत्ययविधायक इत्यर्थः। न च गापोष्टगित्यत्र पञ्चम्यभावेन तस्मादित्युत्तरस्येति परिभाषाया अप्रवृत्त्याव्यवधानलाभो न स्यादिति वाच्यम्। अत्रापि धातोरित्यस्याधि-कारप्राप्तात्तोरव्यवहितपरः टग्भवति, गापोस्त्वनन्तर इति व्याख्यानेन तल्ला भस्य कैयटेन स्फुटीकृतत्वात्। अध्याहृतानन्तरपदेनैवाव्यवधानलाभाच्च।

वोत्तराङ्गविकला प्रवर्तते इत्यव्यवहिता एव प्रत्ययाः । न चैवं षष्ठ्यंश-विकलं संपूर्णं सूत्रमुपतिष्ठतां, किं परश्चेत्यनेनेति वाच्यम् । प्रकृत्यर्थ-मात्रविवक्षायां केवलप्रकृतेः पच् पत् इत्यादेः प्रयोगो मा भूदिति प्रत्ययः परो भवत्येवेतिनियमार्थत्वात् । तेन 'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति सिद्धम् । अनुकरणे त्वभेदावि-वक्षयाऽर्थवत्त्वाभावात्प्रातिपदिकत्वाभावेन प्रकृतित्वाभावात् 'गवि-त्ययमाह' इत्यादौ नानुपपत्तिः । प्रकृतित्वं प्रत्ययविधावुद्देश्यताव-

---

उत्तराङ्गेति । उत्तरस्येत्यंशेत्यर्थः । गुप्तिज्किद्भ्य इत्यादौ प्रत्ययविधा-यके परश्चेत्यस्याधिकारात्तदंशस्याप्रवृत्तावप्यव्यवहितत्वोत्तरत्वांशयोस्सन्नियोग-शिष्टत्वाभावेनाव्यवहितत्वांशप्रवृत्तौ बाधकाभावात् । एवमिति । परश्चेत्य-स्यारम्भेपि ते प्राग्धातोरित्यादाविवात्राप्यव्यवहितत्वांशलाभाय तस्मादिति-परिभाषाप्रवृत्त्यङ्गीकार इत्यर्थः । षष्ठ्यंशेति । एवञ्च प्रथमां स्वीकृत्य प्रत्ययै-स्सामानाधिकरण्यमिति भावः । गापोष्टगित्यादावपि धातोरिति पञ्चम्यन्तस्य सत्त्वेन परिभाषाप्रवृत्तिरव्याहतैवेति भावः । प्रकृत्यर्थमात्रविवक्षायामिति । यत्र पुनः प्रकृत्यर्थप्रत्ययार्थयोरुभयोरपि विवक्षा, तत्र न केवला प्रकृतिः प्रत्य-यार्थमप्यभिधातुं समर्थेति न तत्र केवलायाः प्रकृतेः प्रयोगप्रसङ्ग इत्यतो मात्रपदनिवेशः । परो भवत्येवेति । न तु कदाचिन्न भवतीत्यर्थः । तेन =उक्तनियमाङ्गीकारेण । न केवलेति । अस्यैवांशस्य निरुक्तनियमेन सिद्धिः । नापि केवलः प्रत्यय इति तु न्यायमूलकमित्यग्रे स्फुटीभविष्यति । नन्वेवं गवित्ययमाहेत्यस्य प्रयोगो न स्यादत आह । अनुकरणे त्विति । अस्य गवित्ययमाहेत्यादाविति सप्तम्यन्तेऽन्वयः । प्रातिपदिकत्वाभावेनेति । अस्य स्वाद्यनुत्पत्तेरिति शेषः । गवित्ययमाहेत्यादावनुकरणस्य प्रकृतित्वं वारयितुं तत्परिष्करोति । प्रकृतित्वमिति । प्रत्ययविधाविति । प्रत्ययविधायक-

च्छेदकाक्रान्तत्वम् । अयं न्यायः शास्त्राबोधितान्यतरप्रयोगविषये, अत एव लिट्, इयानित्यादौ न दोषः । अत्र प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानान्नापि केवल इति न्यायमूलकम् । एतन्मूलकमेव पठ्यते 'अपदं न प्रयुञ्जीत' इति । अपरिनिष्ठितमिति तदर्थः । परिनिष्ठितत्वञ्चाप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वम् । निहते तिङन्तादावव्याप्तिवारणायाप्रवृत्तेति । वैकल्पिकेऽडागमोद्दे-

---

शास्त्रजन्यबोध इत्यर्थः । ननु लुकानुत्पत्तेरेवान्वाख्यानमिति निष्कर्षे यत्र प्रत्ययस्य लुक् तत्र प्रत्ययः परो भवत्येवेति नियमभङ्ग इत्यतस्तत्परिहारमाह । अयं न्याय इति । अन्यतरेति । प्रकृतिप्रत्ययान्यतरेत्यर्थः । अत्र शास्त्रे । न्यायमूलकमिति । यद्यपि प्रकृतसूत्रभाष्येऽस्य सामर्थ्यात् प्रत्ययः पर एव भवति न केवलः, प्रत्ययः परो भवत्येव न तु कदाचिदपि न भवतीत्येवमुभयथा प्रयोगनियामकत्वमाश्रित्य निरुक्तांशद्वयसिद्धिरुपपादिता, तथाप्यस्यांशस्य न्यायसिद्धतया नेदमेतत्सूत्रारम्भस्यासाधारणं फलमिति ध्वनयितुमेवमुक्तमिति ध्येयम् । नन्वपदं न प्रयुञ्जीतेति यथा वाचनिकं, तथा न केवलेत्यपि वाचनिकमेवास्त्वित्यत आह । एतदिति । न केवलेत्यादिन्यायेत्यर्थः । अनुकरणेऽतिव्याप्तिवारणायापदत्वं व्याचष्टे । अपरीति । ननु परिनिष्ठितपदार्थाप्रसिद्ध्याऽपदपदार्थाप्रसिद्धिरित्यत आह । अप्रवृत्तेति । अप्रवृत्तो यो नित्यविधिः तस्य यदुद्देश्यतावच्छेदकं तदनाक्रान्तत्वमिति यावत् । अप्रवृत्तत्वञ्च प्रतिबन्धकाप्रतिहतप्रवृत्तिकत्वं, तेन लिडित्यादौ ण्वुलाद्युद्देश्यतावच्छेदकधातुत्वाक्रान्तत्वेऽपि नाव्याप्तिः । हरी एतावित्यादावपि न सा, प्रतिबन्धकञ्च निहते तिङन्ते लक्ष्ये लक्षणस्येति न्यायः, लिडित्यादावुक्तार्थानामिति न्यायः, अपवादविषयता वा । हरी एतावित्यादौ तु प्रकृतिभाव इत्यादिरीत्या तत्र तत्र यथासम्भवमुन्नेयम् ॥

इयत्तावच्छेदकाक्रान्ते सेद्धेत्यादावव्याप्तिवारणाय नित्येतीति दिक् ॥

ङ्याप्प्रातिपदिकात्। समाहारद्वन्द्वः। ननु 'परश्च' इत्यनेन प्रकृतेराक्षेपात्प्रातिपदिकाधिकारो व्यर्थः। तिङन्तात्तु न द्वितीयादिः। संख्या-

---

एकवचनोपपत्तय आह। समाहारद्वन्द्व इति। आक्षेपादिति। परत्वस्य सावधिकत्वात्। न चाक्षिप्तस्य शाब्दान्वयित्वाभावेन कथमेतदिति वाच्यम्। अवंध्याकाङ्क्षायाः प्रकृते नित्यत्वात्। प्रकृतेरिति शब्दस्याध्याहारेण विवक्षितवाक्यार्थपर्यवसानसम्भवात्। न द्वितीयादिरिति। पश्य मृगो धावतीत्यादावाख्यतार्थे प्रति विशेष्यभूतस्य धावनरूपधात्वर्थस्य दर्शनक्रियायां कर्मतया अन्वयाद्धावतीति तिङन्तात्तत्प्राप्तिरिति भावः। न च पचति भवतीत्यादौ पचिक्रियाया कर्तृतया सत्तायामन्वयदर्शनात्प्राथम्यात्प्रथमैवापादयितुं युक्तेति वाच्यम्। तिङन्तार्थस्य प्रातिपदिकार्थत्वाभावेन मात्रपदेन संख्यातिरिक्तकालादेर्व्यावृत्त्या च प्रथमायास्तत्राप्राप्तेः। अनभिहिताधिकारे कर्मणि द्वितीयेति सूत्रस्यैव प्रथममुपादानेनास्या अपि प्राथम्याच्च। संख्याभावादिति। आख्यातार्थसंख्यायाः तिङन्तपदोपस्थाप्यप्रधानभूतधात्वर्थ एवान्वय इति ग्रन्थकृता सिद्धान्तितत्वात्तदर्थसंख्यावच्छिन्ने संख्यान्तराभावान्न तिङन्तेभ्यो द्वितीयाद्यापत्तिरिति भावः। न च तत्र सङ्ख्याया अभावादन्वयोऽनुपपन्न इति वाच्यम्। "एका क्रिया" इत्यादिरूपसूत्रस्थभाष्यप्रामाण्येन तत्रैकत्वस्याङ्गीकारात्। न च तत्प्रामाण्येन तत्र तदङ्गीकारेपि द्वित्वबहुत्वयोस्तत्रान्वयानुपपत्तिरिति वाच्यम्। स्वप्रकृतिकप्रत्ययवाच्यसाधनगतसंख्यायास्तत्रारोपेण तयोरपि धात्वर्थान्वये बाधकाभावात्। न च तिङन्तोपस्थाप्यक्रियाया असत्त्वभूतत्वेन कथं तत्र संख्यान्वय इति वाच्यम्। इदं तादिति सर्वनाम्ना परामर्शयोग्यस्यैव सत्त्वभूतत्वेनास्या अपि सत्त्वभूतत्वात्संख्यान्वये बाधकाभावात्। आख्यातवाच्यसाधने तु न सङ्ख्यान्वयः, गुणानाञ्च परार्थत्वादिति न्यायविरोधात्।

भावात् संख्यायास्तिङोक्तत्वाच्च । धातुभ्यस्तु न । तिङामपवाद-त्वात् । तस्येत्यादिसमर्थविभक्तिनिर्देशात्, तमब्विधौ 'तिङश्च' इति ज्ञापकाच्च न तेभ्यस्ताद्धितव्यावृत्त्यर्थं इति चेन्न । तदभावे 'स्वार्थ-द्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यैः संस्कृतस्य बहिर्भूतापत्यादियोग' इति 'कुत्सिते' इतिसूत्रभाष्योक्तन्यायेन, 'तस्यापत्यम्' इत्यादौ

---

स्पष्टञ्चेदं तिङर्थविचारे मञ्जूषायाम् । नन्वन्यसङ्ख्याभावेऽपि तत्सङ्ख्यामादायैव स्यादत आह । तिङोक्तत्वादिति । उक्तार्थानामप्रयोग इति न्यायेन न पुनस्तत्सङ्ख्यामादाय विभक्तिरित्याशयः । न च तन्न्यायस्य वाचकविषय एव प्रवृत्त्या न प्रकृते तत्प्रवृत्तिरिति वाच्यम् । द्योतकविषयेऽपि तन्न्यायप्रवृत्तेः कारकप्रकरणे ग्रन्थकृता निरूपितत्वात् । यद्वा तिङन्तोपस्थाप्यक्रियाया असत्त्व-भूतत्वेन न तत्र संख्यान्वय इति प्राचीनरीत्याऽद्यं समाधानं, स्वसिद्धान्तरीत्या द्वितीयमित्यपि वक्तुं शक्यमिति बोध्यम् । धातुभ्यस्तर्हि स्यादत आह । अपवादत्वादिति । विशेषविहितत्वेनेति भावः । धातुमात्रे फलवाचकत्वस्य सर्वसम्मतत्वात्फलस्यापि व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वेन स्वमते सङ्ख्या-सत्त्वाच्च सर्वत्र धातुभ्यो द्वितीयाप्राप्तिरिति बोध्यम् । ननु धातुतिङन्तेभ्यस्त-द्धितव्यावृत्त्यर्थं प्रातिपदिकाधिकार आवश्यक इत्यत आह । तस्येत्यादि । तेन षष्ठ्यन्तादित्याद्यर्थलाभेन धातुतिङन्तयोष्षष्ठ्याद्यन्तत्वासम्भवान्न तेभ्यः तद्धितप्रसक्तिः । तिङन्ताद्धेत्वन्तरेणापि तद्धितं वारयति । तमब्विधाविति । अतिशायने तमबिष्ठनावित्यनेनैव सिद्धे तिङश्चेति सूत्रं तिङन्तात्ताद्धितश्चेत्तर-बादिरेवेति नियमार्थं भविष्यतीति ततस्तद्धितान्तरव्यावृत्तेस्सिद्धतया न तदर्थ-मपि प्रातिपदिकाधिकार इति भावः । तदभावे=प्रातिपदिकादित्यस्याभावे । स्वार्थकतद्धितविधायकेषु सुबन्तस्योपस्थितत्वसिद्धये हेतुमाह । न्यायेनेति । स्वार्थे परिपूर्णम्पदमर्थान्तरेणोपसङ्क्रामतीति न्यायेनेत्यर्थः । स्वार्थे परिपूर्णता

तत्सम्बन्ध्यपत्यमित्याद्यर्थे प्रथमोच्चारितबोध्यात्प्रत्यय इत्यर्थस्य सत्त्वेन च सार्थकतद्धितानां सुबन्तादुत्पत्त्या अनुदात्तादेरित्यस्य प्राधान्यादुपस्थितसुबन्तविशेषणत्वापत्तौ सर्वस्य विकारः सार्व इत्यत्राञनापत्तेः। 'सर्वस्य सुपि' इत्याद्युदात्तत्वात्। तदधिकारसामर्थ्यात्तु प्रातिपदिकस्यैव तद्विशेषणमिति न दोषः। सर्वशब्दस्योञ्छादिपाठेनान्तोदात्तत्वात्। स्पष्टश्चेदमत्र भाष्ये। न चान्तरङ्गानपीति न्यायेन लुङ्निमित्तप्रत्ययात्पूर्वमाद्युदात्ताप्राप्त्या तस्य सुबन्तविशेषणत्वेऽपि न दोष इति वाच्यम्। तेन न्यायेन धर्मि-

च स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमेणोपस्थितिः उपस्थितक्रमानुरोधेन च तत्तदर्थबोधकशब्दप्रादुर्भावः, तत्तत्प्रयुक्तकार्यप्रवृत्तिश्चेति ध्येयम्। तत्रैव साधकान्तरमाह। तस्येति। प्रथमोच्चारितबोध्यादिति। अत्र च विद्वन्मानस हंसेतिवद्विभक्त्यन्ततन्त्रं बोध्यम्। प्रथमोच्चारितबोध्यं बोध्यं यस्येति च तदर्थः। अर्थबोधकसूत्रेषु तस्यापत्यमित्यादिषु यत्प्रथमोच्चारितं तस्येत्यादि, तद्बोध्योपग्वादिबोधकादुपगुशब्दादेः षष्ठ्यन्तादिति यावत्। तस्यापत्यमित्यादिषु सामान्यवाचकस्य तच्छब्दस्यापत्यार्थसम्बन्ध्युपलक्षणतया तस्येत्यादिप्रथमोच्चारितपदबोध्यबोधकत्वं षष्ठ्यन्तोपगुशब्दादेस्सम्भवतीति सुबन्तस्योपस्थितत्वमिति भावः। घटकतयोपस्थितप्रातिपदिकविशेषणत्वशङ्कावारणायाह। प्राधान्यादिति। एतेनान्यानुपस्थितत्वेन प्राधान्यादिति हेतूपन्यासोऽयुक्त इत्याचार्योक्तमेवायुक्तमिति बोध्यम्। सर्वस्य सुपीति। सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात्सुबन्तस्य सर्वशब्दस्यादिरुदात्त इत्यर्थकेनेत्यर्थः। ननु प्रातिपदिकाधिकारसत्त्वेऽपि प्राधान्यादुपस्थितसुबन्तविशेषणत्वे दोषो दुर्वार एवेत्यत आह। सामर्थ्यादिति। ननु सर्वशब्दस्य स्वाङ्गशिटामदन्तानामिति सूत्रेणाद्युदात्तत्वात्प्रातिपदिकविशेषणत्वेऽप्युक्तदोषस्तदवस्थ एवेत्यत आह। सर्वशब्दस्येति। उञ्छादिपाठं प्रमाणयति। स्पष्टश्चेदमिति। न दोष इति। अन्तरङ्गानपीति

ग्राहकमानादन्तरङ्गनिमित्तविनाशकलुक एव प्राबल्यबोधनेनादोषात्। 'सर्वस्य सुपि' इत्यत्र सौवरीणां सप्तमीनां तदन्तसप्तमीत्वात् प्रत्यये परतः पूर्वस्य कार्यत्वाभावेन "न लुमता" इत्यस्याप्राप्तौ प्रत्ययलक्षणेन सुबन्ततया तस्यान्तरङ्गनिमित्तविनाशकत्वाभावात्। अत एव सर्वस्तोमादिबहुव्रीहेराद्युदात्तत्वासिद्धिः।

---

न्यायेन लुकस्तत्प्रयोजकसमासादीनाञ्च प्राबल्यबोधनेन प्रकृते लुङ्निमित्तभूततद्धितात्प्राक् सर्वस्य सुपीत्याद्युदात्ताप्राप्त्या सुबन्तविशेषणत्वेऽपि न दोष इति भावः। अत्र लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावन्दर्शयति। सर्वस्य सुपीत्यत्रेति। सौवरीणां=स्वरविधायकशास्त्रभवानां, स्वरशब्दात्तत्र भव इत्यणि द्वारादीनाञ्चेत्यैजागमः। अप्राप्ताविति। तत्र लुप्तप्रत्यये परतो यः पूर्वः तत्प्रकृतिभूतः लब्धाङ्गसंज्ञकस्तदुद्देश्यकं कार्यमाङ्गमनाङ्गं वा नेत्यर्थेन प्रकृते स्वरस्य लुप्तप्रत्ययविशिष्टोद्देश्यकत्वेपि लुप्तप्रत्यये परतः पूर्वकार्यत्वाभावान्न तन्निषेधप्राप्तिः। अत एव=तत्र तादृशसङ्कोचकरणादेव। आद्युदात्तत्वसिद्धिरिति। अन्यथा सर्वस्तोमादिबहुव्रीहौ सर्वस्य सुपीत्याद्युदात्तं बाधित्वाऽनेन न्यायेन समासे लुकि च कृते परत्वादाद्युदात्तम्बाधित्वा बहुव्रीहिप्रयुक्ते पूर्वपदप्रकृतिस्वरे स्वतस्सर्वशब्दस्योञ्छादित्वेनान्तोदात्तत्वादन्तोदात्तपूर्वपदकत्वापत्तिः, न त्वभीष्टाद्युदात्तपूर्वपदकत्वसिद्धिरिति भावः। यद्यत्र तादृशसङ्कोचानङ्गीकारेऽपि न दोषः। अनेन न्यायेन समासे लुकि च सति परमपि बहुव्रीहिस्वरम्बाधित्वा प्रतिपदविधित्वेनान्तरङ्गत्वादाद्युदात्तत्वसिद्धेरित्युच्यते, तदा इदमर्णुहीत्यादेरुपलक्षणमिति बोध्यम्। तत्र ह्यनेन न्यायेन लघूपधगुणात्पूर्वमुतश्चेति हेर्लुकि तन्न सिद्ध्येत्। निरुक्तरीत्या सङ्कोचकरणे तु लुकोऽन्तरङ्गगुणनिमित्तविनाशकत्वाभावात्तन्न्यायाप्रवृत्तावन्तरङ्गे गुणे ततस्संयोगपूर्वत्वान्न हेर्लुगिति तत्सिद्धिः॥

न चानुदात्तादिप्रकृतिकषष्ठ्यन्तादित्यर्थेन न दोष इति वाच्यम् । 'गर्गादिभ्य' इत्यादौ सुबन्तं प्रति गर्गादीनां विशेषणत्वासम्भवाद-गत्या लक्षणास्वीकारेऽपि प्रकृते लक्षणायां मानाभावात् । वस्तुतस्त-त्रापि न लक्षणा । गर्गादिरूपात्प्रातिपदिकात्तत्संबन्ध्यपत्यमित्यर्थे प्रत्यय इत्यर्थे प्रातिपदिकात्परत्वं तद्व्यवधानेन भविष्यति, तद्व्य-तिरिक्तव्यवधाने तु न, मानाभावात् । एतच्च मतुप्सूत्रे कैयटे स्पष्टमित्यन्यत्र विस्तरः ॥

---

यद्वा अत एवेत्यस्य तत्र तदन्तसप्तमीत्वाङ्गीकारादेवेत्यर्थः । आद्युदा-त्तत्वसिद्धिरिति । अन्यथानेन न्यायेनाद्युदात्तात्पूर्वं समासे लुकि च कृते प्रत्ययलक्षणाभावेन सर्वस्वराप्राप्तौ सर्वशब्दस्य स्वतोऽन्तोदात्ततया तस्यैव पूर्व-पदप्रकृतिस्वरेणातिदेशः स्यात् । तदन्तसप्तमीत्वे तु न लुमतेति निषेधाप्रवृत्तौ प्रत्ययलक्षणेन सुबन्ततया परमपि प्रकृतिस्वरम्बाधित्वान्तरङ्गत्वात्सर्वस्वरे आद्यु-दात्तपूर्वपदकत्वसिद्धिरिति भावः ॥

ननु प्रातिपदिकाधिकारेऽपि यत्प्रातिपदिकं सर्वेत्येतदनुदात्तादि तन्न समर्थं, यच्च समर्थं सर्व+ङसिति तन्न प्रातिपदिकमित्यत्र न प्राप्नोति । प्रातिपदिकपदस्य तत्प्रकृतिके लक्षणाङ्गीकारे त्वनुदात्तादिपदस्यैव तत्प्रकृतिके लक्षणास्तु, किं प्रातिपदिकाधिकारेणेत्याशङ्कते । न चेति । मानाभावा-दिति । अनुदात्तादेरित्यस्य षष्ठ्यन्तविशेषणत्वसम्भवेनानुपपत्त्यभावादिति भावः । न लक्षणेति । प्रकारान्तरेण निर्वाहे जघन्यवृत्त्याश्रयणस्यान्याय्य-त्वादिति भावः ॥

यत्तु इदमयुक्तं, तथासति सार्वे इत्यत्राजनापत्तेः । सुपि परे सर्वस्य सुपीत्यस्य प्रवृत्त्या सर्वेति प्रातिपदिकस्यानुदात्तादित्वाभावात् । मम तु सुपः

लिङ्गविशिष्टस्येति। इयञ्च प्रातिपदिकसामान्यग्रहणे तद्विशेषग्रहणे च। अनया परिभाषया ङ्याब्ग्रहणवैयर्थ्यस्य भाष्ये शङ्कितत्वात्। विशेषविषये बहुतरोदाहरणदाभाव। स्त्रीप्रत्ययसम-

---

पूर्वमनुदात्तादित्वेनानुदात्तादिप्रकृतिकषष्ठ्यन्तत्वस्य तत्र सत्त्वेनाश्राम् सुलभः। किञ्च पदोद्देश्यकविधित्वाभावेन समर्थपरिभाषा गौणमुख्यन्यायश्च तद्धितविधौ नोपतिष्ठेयातामित्याचार्याः, तन्न। सार्व इत्यत्र शब्दतस्सुबन्तत्वनिमित्तकस्वरापेक्षया प्रातिपदिकमात्रसापेक्षस्याञो घटकनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं प्रवृत्तौ बाधकाभावेन लक्षणाया अनावश्यकत्वात्। तद्धितविधायकेषु सुबन्तस्य शब्दतो निमित्तत्वानाश्रयणेपि वस्तुतस्तेषां सुबन्तादेवोत्पत्त्या पदविधित्वात्तत्र समर्थपरिभाषोपस्थितिरपि निर्बाधैव। न चात्यन्तस्वार्थिकानां सुपः प्रागेवोत्पत्त्या तेषां पदविधित्वाभावात्कथमस्या उपस्थितिरिति वाच्यम्। तत्रैतस्यानुपस्थितावपि दोषाभावात्। यद्वा पदविधिशब्देन पदसम्बन्धित्वाविशेषात्पदोद्देश्यकः पदत्वसम्पादकश्च सर्वोपि गृह्यत इति तद्धितानाम्परम्परया पदत्वसम्पादकत्वेन पदविधित्वात्परिभाषाप्रवृत्तिस्तत्र सुलभैव। यद्वा पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वं पदविधित्वमिति वाराणसेयोक्तदिशापि तत्र परिभाषाप्रवृत्तिस्सिद्ध्यतीति ध्येयम्। तद्धितविधौ गौणमुख्यन्यायोपस्थितेरपि न बाधकम्। सार्थकतद्धितानां धकालतनेष्विति ज्ञापकाद्वस्तुतस्सुबन्तादेवोत्पत्त्या पदकार्यत्वसत्त्वात्पदकार्य एवास्याः प्रवृत्तिरित्येतादृशसङ्कोचकरणे बीजभूतायाः परिभाषाप्रवृत्तिप्रयोजकगौणार्थप्रतीतेस्तदानीमभ्युपगमाव्याघातात्। पदत्वतव्याप्यान्यतरधर्मावच्छिन्नोद्देश्यताककार्यस्यैव तत्त्वेन विवक्षणे तु न मानमिति बोध्यम्॥

प्रातिपदिकसामान्यग्रहणे परिभाषाप्रवृत्तौ मानमाह। अनयेति। विशेषग्रहणे प्रवृत्तौ मानन्दर्शयति। विशेषेति। बहुतरोदाहरणेति। अथ-

भिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्मौ विशिष्टेऽनेनातिदिश्यन्ते । अत एव 'बहुव्रीहेरूधस' इति सूत्रे भाष्ये 'नद्यृतश्च' इत्यत्र नद्यन्तबहुव्रीहेरित्यर्थे कुण्डोध्नीत्यत्र कबापादितः । अन्यथा तु ङ्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः । नद्यन्तानां यो बहुव्रीहिरित्यर्थेन च परिहृत इत्यन्यत् । समासान्तेषु तत्परिभाषाऽभावस्तु ङ्याप्सूत्रभाष्योक्तोऽवयवविषयक एव । समुदायविषये तत्प्रवृत्तावपि दोषाभावेन तदंशे तत्प्रवृत्तौ न मानमित्याशयः । ङ्यावन्तादिति । ङ्याब्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम् । तेन ब्रह्मबन्धूतरा युवतितरे-

---

त्युन्मीत्यादिः । नन्वेतादृशोदाहरणपरभाष्यप्रामाण्यात्प्रातिपदिकत्वव्याप्यकुमारत्वादिरूपेण ग्रहणे प्रवृत्तिलाभेऽपि तद्व्याप्यबहुव्रीहित्वादिना ग्रहणे प्रवृत्तिर्न स्यादत आह । स्त्रीप्रत्ययेति । तद्रहिते तत्प्रकृतौ दृष्टा इति शेषः । तद्व्याप्यधर्मा इति । आनुपूर्वीविशेषभिन्ना अपीत्यर्थः । विशिष्ट इति । तन्मात्रविशिष्ट इत्यर्थः । एतेन दृष्टामालेतिसमुदाये न टाप्प्रत्ययप्रकृतिनिष्ठप्रातिपदिकत्वातिदेश इति बोध्यम् । अत एव = उक्तार्थस्वीकारादेव । अन्यथेति । प्रातिपदिकत्वव्याप्यबहुव्रीहित्वादेरनतिदेश इत्यर्थः । ननु समासान्तविधायकाः परिभाषाया अप्रवृत्तिप्रतिपादनपरङ्याप्सूत्रस्थभाष्यविरोध इत्यत आह । समासान्तेष्विति । अवयवविषयक एवेति । मद्रराज्ञीत्यादिसमासावयवराजन्शब्दविषयक एवेत्यर्थः । तथा च समासघटकराजन् शब्दत्वादिकमेव समासान्तविधायकया परिभाषया नातिदिश्यते । समुदायवृत्तिबहुव्रीहित्वादिकमतिदिश्यत एवेत्यर्थः । स्त्रीप्रत्ययमात्रोपलक्षणमिति । अत्र मानन्तु ङ्याब्ग्रहणप्रत्याख्यानपरं प्रकृतसूत्रस्थं भाष्यमेव ; तत्र हि ङ्याब्ग्रहणस्य कारितरेत्यादौ ङ्यावन्तात्तरबादिसिद्धिं फलत्वेन प्रदर्श्य स्वार्थे परिपूर्णं पदमिति न्यायेन तस्यान्यथासिद्धिं कृत्वा तत्प्रत्याख्यातम् । तत्पक्षे युवतितरा ब्रह्मबन्धूतरेत्यादौ

त्यादेः सिद्धिः । 'जातेश्च' इति निषेधान्न पुंवत्त्वम् । वयोवाचिनां वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात् ॥

तद्धित इति। एतच्च समासान्तातिप्रत्ययाद्यतिरिक्तपरं व्याख्या-

---

त्यूङन्तादेव तरबादयो भवन्ति। आरम्भे तु नेति तयोः फलाभेदाय सूत्रमतेऽपि ङ्याब्ग्रहणस्य स्त्रीप्रत्ययमात्रोपलक्षणत्वमाश्रयणीयमिति भावः । इत्यादेरिति । आदिना युवतिकायाः। ननु युवतितरेत्यादौ तसिलादिष्विति पुंवत्त्वेन विशेषाभावोऽत आह । जातेश्चेति । ननु वयसोऽनित्यत्वेन नास्य जातित्वमत आह । वयोवाचिनामिति । वैकल्पिकजातिकार्यस्येति । आकृतिग्रहणा जातिः, यावद्द्रव्यभाविनी जातिरिति च भिन्नर्षिकर्तृकलक्षणद्वयप्रामाण्येन वयोवाचिनां जातिकार्यं पाक्षिकम् । आद्यलक्षणे वयसो जातित्वस्य द्वितीये तदभावस्य च सत्त्वादिति बोध्यम् । एतच्च=तद्धितपदश्च । तिप्प्रत्ययादीति । आदिनाऽत्यन्तस्वार्थिकसंग्रहः । व्याख्यानादिति । तच्चात्र प्रकृतसूत्रस्थं भाष्यमेव। तत्र हि ङ्याब्ग्रहणसत्त्वे बहुगोमत्केत्याद्यसिद्धिरूपं दोषमाशङ्क्य स्वार्थे परिपूर्णं पदमितिन्यायेनैव ङ्याबन्तात्तद्धितोत्पत्तिसिद्धौ तदनावश्यकमिति तात्पर्येण परत्वात्समासान्ता भविष्यन्तीति परिहृतम् । एवञ्च तन्मतेऽत्यन्तस्वार्थिकानामन्तरङ्गत्वात्समासान्तानाम्परत्वाच्च स्त्रीप्रत्ययात् प्रागेवोत्पत्त्या तदेकवाक्यत्वायारम्भेपि तदतिरिक्ततद्धितानामेव स्त्रीप्रत्ययान्तादुत्पत्तिराश्रयणीया। एवं ङ्याब्ग्रहणस्य स्त्रीप्रत्ययमात्रोपलक्षकतया तदतिरिक्ततद्धितस्यैव तदन्तादुत्पत्तिराश्रयणीयेति मूलोक्तसङ्कोचसिद्धिरिति बोध्यम् । न चैवं सति सार्थकतद्धितानां कुत्सित इति सूत्रस्थभाष्योक्तरीत्या स्त्रीप्रत्ययान्तादेवोत्पत्तिसिद्धौ ङ्याब्ग्रहणं व्यर्थमेव स्यादिति वाच्यम् । तस्य तादृशन्यायसिद्धार्थानुवादकताया उद्योते स्पष्टमुक्तत्वात् । न चात्यन्तस्वार्थिकानां स्त्रीप्रत्ययात्प्रागुत्पत्तावार्थिका आर्थिकेतीत्वविकल्पो न स्यादिति वाच्यम् । आर्थिकेत्य-

नात् । एतेन यूनीतिर्बहुगोमतीकेति स्यादित्यपास्तम् । एवञ्च स्त्रीप्रत्ययेषु, अत्यन्तस्वार्थिकानारभ्य तद्धितेषु च ङ्याब्ग्रहणासम्बन्धो व्याख्यानात् । अत एव लोहिनिकेत्येतत्सिद्धये 'लोहिताल्लिङ्गबाधनं वा' इति चरितार्थम् । अत्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमुत्पत्तिरिति "सर्वस्य द्वे" इति सूत्रे भाष्ये स्पष्टं कैयटे च । तत्र हि पदस्येत्यस्य प्रयोजनं–द्विपदिकेत्यादौ द्वित्वसंख्यायुक्त-

---

स्यैव तत्रेष्टत्वात् । लोहिनिकेति तु लोहिताल्लिङ्गबाधनं वेति वचनेनैव सिद्ध्यतीत्याशयः । हरिणिकेति तु हरिणशब्दस्य प्रकृत्यन्तरस्य सत्त्वात्ततः कनि टापि प्रत्ययस्थादितीत्त्वेन सिद्ध्यति । एनिकेति त्वसाधुरेव । एनेति प्रकृत्यन्तरस्याभावात् । एतशब्दात्तु अन्तरङ्गत्वात्पूर्वमेव ङीपः कनि टापि एतिकेत्येवेत्यवधेयम् । एतेन=ताद्धितपदस्य समासान्ततिप्रत्ययाद्यतिरिक्तपरत्वेन । तद्धितपदस्य तद्धितसामान्यपरत्वे समासान्ततिप्रत्यययोरपि तत्त्वेन तयोरपि स्त्रीप्रत्ययान्तादेवोत्पत्तिः स्यादेवञ्च यूनीतिरित्यादि स्यात्तच्चाधुना नेति भावः । तद्धितपदस्य समासान्ताद्यतिरिक्तपरत्वे सति यत्फलितं तदाह । एवञ्चेति । तस्य तदन्यपरत्वे चेत्यर्थः । आरभ्येति । पठितेष्विति शेषः । तेन समासान्तसङ्ग्रहः । व्याख्यानादिति । कुत्सित इति सूत्रङ्याप्सूत्रस्थभाष्यरूपादित्यर्थः । अत एव=अत्यन्तस्वार्थिकेषु ङ्याब्ग्रहणासम्बन्धादेव । चरितार्थमिति । अन्यथा लोहितान्मणावित्यनेन विहितकनोपि ङ्यन्तादेवोत्पत्त्या लोहितशब्दाद्वर्णादनुदात्तादित्यनेन ङीपि नकारादेशे च सति कनि लोहिनिकेत्यस्य, ङीपो वैकल्पिकत्वेन तदभावे लोहितिकेत्यस्य च सिद्धौ तद्व्यर्थमेव स्यादिति भावः । न्यायसिद्ध एवार्थे मानन्दर्शयति । अत्यन्तस्वार्थिकानामिति । भाष्ये तादृशार्थस्यास्पष्टत्वादाह । कैयट इति । प्रयोजनमिति । अस्य द्विर्वचनाभाव इत्यनेनान्वयः । द्वित्वसंख्यायुक्तेति । स्त्रीत्वयुक्तेत्यपि

**पदार्थस्य वीप्सितत्वात् वीप्सायामेकत्वलक्षणसंख्याया अनन्तर्भावा-त्समासाद्विभक्त्यभावेन पदत्वाभावात्प्राक् तद्धितोत्पत्तेर्द्विर्वचनाभाव**

बोध्यम् । **पदार्थस्येति** । पादपदार्थस्येत्यर्थः । **एकत्वेति** । यद्यपि कैयटे स्त्रीत्वस्यापि वीप्सायामनन्तर्भाव उक्तः, तथापि तन्न युक्तम् । द्विपदिकाभ्या-मित्यत्र प्राप्नोतीति वक्ष्यमाणभाष्यासङ्गतेः । न हि लिङ्गस्यावीप्सितत्वे टाबन्ते स्वादिष्विति पदत्वेपि द्विर्वचनप्रसक्तिरस्तीत्याशयेनैवमुक्तमिति बोध्यम् । **अन-न्तर्भावादिति** । एतदुत्तरं सुबुत्पत्तेः प्राक्टाबन्तस्येति शेषः । तस्य च पदत्वाभावाद्विर्वचनाभावः पदस्येत्यस्य प्रयोजनमित्यन्वयः । यद्यपि पदस्ये-त्यस्याभावेपि न टाबन्तस्य द्विर्वचनं, तद्धितेन वीप्साया उक्तत्वादिति वक्तुं शक्यम्, तथाप्येतद्भाष्यमुक्तार्थानामिति न्यायानाश्रयणेन प्रवृत्तमिति बोध्यम् । अत एवैतन्न्यायमाश्रित्यैतत्फलं प्रत्याख्यातमग्रे भाष्यकृता । ननु तद्धितोत्प-त्त्यनन्तरमपवादत्वात्तेनोक्तत्वाद्वा द्विर्वचनाभावेपि तदुत्पत्तेः प्राक्समासस्य कुतो न द्विर्वचनमत आह । **समासेति** । **अभावेनेति** । विभक्तेस्सङ्ख्यापेक्ष-त्वेन बहिरङ्गत्वात्तद्धितस्य च स्वार्थिकत्वेनान्तरङ्गत्वात्तेन बाधान्न ततः पूर्वं विभक्त्युत्पत्तिरिति भावः । **पदत्वाभावादिति** । टाबन्तस्य प्राक्तद्धितोत्पत्तेः समासस्य च द्विर्वचनाभावे हेतुरयम् । समासाद्विभक्त्यभावश्च तद्धितोत्पत्तेः प्राक् द्विपादित्यस्य पदत्वाभावे हेतुः । अनेन चात्यन्तस्वार्थिकानां सुबुत्पत्तेः प्रागेवोत्पत्तिरिति स्फुटं प्रतीयते ॥

**यत्तु वुनो वीप्सावाचकत्वेनात्यन्तस्वार्थिकत्वाभावान्नेदं भाष्यम्प्रकृतार्थे साधकमित्याहुस्तदसत् । वुनो व्याप्यव्यापकभावसम्बन्धेन प्रकृत्यर्थस्य पदार्था-न्तरेऽन्वयद्योतकत्वेपि तद्वाचकत्वाभावेन संख्याकारकाद्यनपेक्षत्वात् । अज्ञाता-द्यर्थेषु विधीयमानकादयस्तु प्रकृत्यर्थ एव अज्ञानादिरूपं कुत्सादिरूपञ्च विशेषं द्योतयन्तीति स्वार्थे परिपूर्णस्यैव तद्द्योत्यार्थेन कुत्सादिना सम्बन्ध**

इत्युक्तम् । पुंयोगादिति सूत्रे भाष्येऽप्येतत्स्फुटम् । तत्र हि गतिकारकोपपदानामित्यस्याः साङ्कूटिनमिति प्रयोजनमुक्तम् । तत्र हि अभिविधौ भाव इनुणि कूटिन्शब्दादण्प्रत्ययविभक्त्योः प्राप्तयोः स्वार्थिकत्वेनान्तरङ्गत्वादणि कूटिनित्यस्यैव वृद्धिः स्यादित्युक्तम् ।

---

इति तेषां सुबन्तादेवोत्पत्तिः । अयन्तु प्रकृत्यर्थस्यैव सम्बन्धविशेषेणान्यत्रान्वयं द्योतयतीति संख्यापेक्षसुबपेक्षया प्रागेवोत्पद्यत इत्यवधेयम् ॥

ननु प्राक्तद्धितोत्पत्तेः समासे कृते पदत्वाभावाद्विर्वचनाभाव इति कैयटे स्थितम् । तच्च तद्धितोत्पत्तेः पूर्वं सुबुत्पत्तावपि सुयोज्यम् । उपसञ्जनिष्यमाणन्यायेन तद्धितोत्पत्त्यनन्तरं जायमानभत्वेन सुप्तिङन्तमिति पदत्वस्य बाधादिति नेदमुक्तार्थे मानमत आह । पुंयोगेति । भाष्येति । एतेनात्रार्थे भाष्यसम्मतिरप्यस्तीति सूचितम् । स्वार्थिकत्वेनान्तरङ्गत्वादिति । संख्याकारकाद्युपस्थित्यपेक्षविभक्त्यपेक्षया स्वार्थमात्रोपस्थित्यपेक्षस्याणः पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वमिति भावः । कूटिनित्यस्यैव वृद्धिः स्यादिति । गतिकारकोपपदानामित्यस्यानङ्गीकारे सुबुत्पत्तेः प्राक्समासाप्राप्त्या सुपः प्रागेवान्तरङ्गत्वादणि कूटिनित्यस्यैव वृद्धिः स्यादिति भावः । न च तदापि कृद्ग्रहणपरिभाषया गतिविशिष्टस्यैवेनुणन्तत्वेन विशिष्टादेवाणि रूपसिद्धिरिति वाच्यम् । विशिष्टस्येनुणन्तत्वेपि प्रातिपदिकत्वाभावेन तदप्राप्तेः । न च प्रातिपदिकसंज्ञायामपि कृद्ग्रहणपरिभाषाप्रवृत्तौ विशिष्टस्यैव कृदन्तत्वेन प्रातिपदिकत्वमप्यस्तीति वाच्यम् । विशिष्टस्य कृदन्तत्वेपि समासग्रहणकृतनियमेन प्रातिपदिकत्वस्याप्रवृत्तेः । न च गतिकारकसमभिव्याहारे केवलस्य कृदन्तत्वेनाग्रहणात्कथं कूटिनित्यस्यापि प्रातिपदिकत्वमिति वाच्यम् । समासाभावे तत्समभिव्याहारस्य अविवक्षितत्वेन मूलकेनोपदंशमित्यादाविव केवलस्य कृदन्तत्वेन प्रातिपदिकत्वे बाधकाभावात् । स्पष्टञ्चेदमाकरे । अत्यन्त-

**तस्यापि सुबन्तादुत्पत्तौ तु पूर्वं सुपि इनुणन्तत्वरूपाधिकसापेक्ष-त्वेन बहिरङ्गतयाऽणः पूर्वं समासे विशिष्टादणि रूपसिद्धौ भाष्या-**

स्वार्थिकानामपि सुबन्तादेवोत्पत्तावेतद्भाष्यासङ्गतिप्रकारमुपदर्शयति । तस्यापीति । अत्यन्तस्वार्थिकाणोऽपीत्यर्थः । अपिना समाससंग्रहः । पूर्वं सुपीति । एतदुत्तरमणप्रत्ययसमासयोः प्राप्त्योरिति शेषः । अधिकसापेक्षतयेति । समासविधौ हि गतित्वज्ञानं समर्थत्वज्ञानश्चेति द्वयमेव । अण्विधौ तु प्रातिपदिकत्वमिनुणन्तत्वं समर्थत्वश्चेति त्रयमित्यणोऽधिकसापेक्षत्वामिति भावः । इदं प्राचामनुरोधेन । बह्वपेक्षं बहिरङ्गमल्पापेक्षमन्तरङ्गमित्यस्य ग्रन्थकृता दूषितत्वात् । न च तन्मतेऽपि समासस्य पदद्वयापेक्षत्वेन बहिरङ्गतया परत्वादणेव स्यादिति वाच्यम् । साङ्कूटिनमित्युदाहरणपरभाष्यप्रामाण्येनेदृशबहिरङ्गत्वस्यानाश्रयणमित्याशयात् । वस्तुतस्तु सम्प्रस्कारेत्यादौ सुट इवान्तरङ्गतरार्थकगतिनिमित्तकत्वेन समासस्याणपेक्षयान्तरङ्गत्वं बोध्यम् । अत्र कूटधातोर्गतिद्योत्याभिविध्यर्थेन पूर्वं सम्बन्धः, तत इनुण्, ततोऽण्प्रत्ययसमासयोः प्राप्तिरिति गतिद्योत्यार्थस्यान्तरङ्गतरत्वेन तदर्थकगतिनिमित्तकसमासस्याप्यन्तरङ्गत्वमित्याशयः। न च विशिष्टरूपोपादानाभावेनार्थवद्ग्रहणपरिभाषया अप्रवृत्तौ नेदृशं समासस्यान्तरङ्गत्वमिति वाच्यम् । ओत्सूत्रस्थशेखरोक्तदिशा तत्प्रवृत्तेस्सुलभत्वात् ॥

एतेन "वस्तुतस्तु संकूटिन्निति शब्दस्वरूपसमुदायस्य अण्समासयोस्समानत्वेन बहिरङ्गत्वाभावेन परत्वादणि साङ्कौटिनमिति स्यादिति भाष्योक्तदूषणं सङ्गच्छत एवेति नैतद्भाष्यं सुबुत्पत्तेः प्राक् स्वार्थिकप्रत्ययोत्पत्तौ नवीनमते मानमिति वाराणसेयोक्तमपास्तम् ॥

विशिष्टादणीति । तस्य समासत्वात्प्रातिपदिकत्वं कृद्ग्रहणपरिभाषया इनुणन्तत्वश्चास्तीति तत्प्राप्तिः । भाष्यासङ्गतिरिति । अत्यन्तस्वार्थिकानामपि सुबुत्पत्त्यनन्तरमेव प्रवृत्त्यङ्गीकारे सुबुत्पत्त्यनन्तरं समासाङ्गीकारेपि निरुक्त-

सङ्गतिः । प्राक्सुबुत्पत्तेः समासं तु उक्तरीत्यैवान्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणिति साङ्कूटिनसिद्धिरित्यन्यत्र विस्तरः ॥

स्वौजस ॥ सूत्रे समाहारद्वन्द्वः । टङ्पाश्चेत इति । न च फलाभावः । लोपस्यैव फलत्वात् । तत्र तत्रेतरव्यावृत्त्या चरितार्थानां लोपफलकत्वस्वीकारे बाधकाभावात् । काम्यजादौ तु लोपे सति वर्णोच्चारणवैयर्थ्यात्र तन्मात्रफलिकेत्सञ्ज्ञेति बोध्यम् । न विभक्ता-

---

रीत्या अणः पूर्वं समासे विशिष्टादणि साङ्कूटिनमिति रूपसिद्धौ कृदन्तेन समासस्यैतत्फलत्वकथनपरं भाष्यमसङ्गतं स्यादिति भावः । सिद्धान्ते तदङ्गीकारे तद्रूपसिद्धिप्रकारन्दर्शयति । प्राक् सुबुत्पत्तेरिति । उक्तरीत्यैवेति । इनुणन्तत्वरूपाधिकसापेक्षत्वेनेत्यादिना प्रतिपादितरीत्येत्यर्थः । स्वरीत्या तु प्रागुक्तमन्तरङ्गत्वमाश्रयणीयम् ॥

अत्रेतरेतरयोगद्वन्द्वे बहुवचनापत्तिः । पृथक्पदत्वे च प्रत्येकं विभक्तिश्रवणापत्तिरत आह । समाहारद्वन्द्व इति । जसादौ रुत्वं भ्यामादीनामेकशेषश्च सौत्रत्वान्नेति बोध्यम् । एवञ्च भ्यामोर्भ्यसोरौसोश्चैकशेषवारणाय समाहारद्वन्द्वपक्षकगर्भः समाहारद्वन्द्व इति वाराणसेयोक्तं नादरणीयम् । तावतापि जसादिषु रुत्ववारणाय सौत्रत्वाश्रयणस्यावश्यकत्वात् । स्वौजसित्यादिसूत्रस्य क्रमविशिष्टस्वरूपबोधनेपि तात्पर्यासङ्गभिया चैकशेषस्य वारयितुं शक्यत्वाच्च । अत एव च यत्तदेतेभ्य इत्यादौ कोशेषु च नैकशेषः । स्पष्टा चेयं रीतिरुद्योते । ननु लोपमात्रफलकतया इत्संज्ञाप्रवृत्तावुच्चारणवैयर्थ्यं स्यात् । अत एव काम्यचः ककारस्य नेत्त्वमितीदमसङ्गतमत आह । इतरव्यावृत्त्या चरितार्थानामिति । टाङसिङसां, जसि चेत्यादिषु विशेषणार्थतया चरितार्थानामिति भावः । एतेन लोपेऽपि तदुच्चारणवैयर्थ्याभावस्सूचितः । काम्यजत्ययककारस्येत्त्वं वारयति । काम्यजादाविति । वैयर्थ्यादिति । तस्य जसादिषु जकारादीनामिव क्वापि

विति निषेधोपयोगिनीं विभक्तिसञ्ज्ञामाह—विभक्तिश्च। चकार एकसञ्ज्ञाधिकारेऽपि पुरुषवचनसञ्ज्ञाभ्यां समावेशार्थः। अन्यथा पर्यायः स्यात्। 'सुप' इति सूत्रं, 'तिङस्त्रीणि' इति सूत्रात्तिङ इति चानुवर्तते। प्रथमयोरित्यादौ व्याख्यानात्प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणं बोध्यम्। अन्यथा 'औजसोः पूर्वं' इत्येव वदेत्। विभक्तिप्रदेशेषु सुप्तिङिति न वक्तुं शक्यम्। यत्र तत्रेत्यादौ त्यदाद्यत्वानापत्तेः। तेषां सुप्सञ्ज्ञा त्वशक्या। एतर्हीत्यादौ 'सुपि च' इति दीर्घापत्तेः। सप्तम्यन्ता इति। स्त्रीलिङ्गा इति शेषः।

---

विशेषणार्थताया अभावादिति भावः। समावेशार्थ इति। तेन युष्मद्युपपद इत्यादिप्रवृत्तिः, न त्वन्यतरबाधः, वचनद्वयप्रामाण्यादिदाह। पर्याय इति। ननु विभक्तिश्चेति सूत्रे त्रीणित्रीणीत्यस्यानुवृत्तौ विभक्तिपदेनैकैकप्रत्ययग्रहणादद्वन इत्यादावदोषेपि प्रथमयोरित्यादौ षण्णां ग्रहणं न सिद्ध्येत्, किन्तु द्वयोरेव। तत्र सोरजादित्वाभावाच्छिवोऽर्च्य इत्यादौ तत्सत्त्वेपि नादिचीति निषेधादौजसोरेव ग्रहणं स्यादित्याशङ्क्याह। प्रथमयोरिति। वाच्ययोरिति। त्रिकयोरित्यर्थः। व्याख्यानादित्यस्यार्थमाह। अन्यथेति। त्यदाद्यत्वानापत्तेरिति। एतत्सूत्राभावे अष्टन आ विभक्तावित्यादौ विभक्तिपदं विहाय सुप्तिङोरित्येव पाठ्यम्। तथा च तस्यैव त्यदादीनाम इत्यत्राप्यनुवृत्तिरिति यत्रेत्यादौ सुपो लुका लुप्तत्वेन प्रत्ययलक्षणाभावादत्वं न स्यात्। यथाश्रुते तु त्रलादीनामपि प्राग्दिशीयत्वेन विभक्तित्वात्सिद्धिरिति भावः। सुप्संज्ञेति। प्राग्दिशस्सुबिति पठित्वेत्यर्थः। दीर्घापत्तेरिति। सन्निपातपरिभाषयात्र दीर्घवारणे तु सर्वदेत्यादौ सर्वस्य सुपीत्याद्युदात्तापत्तिर्दोषः। एवं तत्रस्य इत्यादौ सुपो धात्विति त्रलो लुगापत्तिरपि दोषो बोध्यः। न च तिङ्संज्ञैव तेषामस्त्विति वाच्यम्। एतेषां तिङतिङ इति सूत्रविषयत्वापत्तेः। इहेत्यत्रा-

न्यासां–वैयाकरणान्तराणाम् । इहापि—अस्मिन् व्याकरणेऽपि । सुपः ॥ सुबिति प्रत्याहारात्षष्ठ्यन्तः ॥

द्व्येकयोः ॥ नियमार्थे इमे । इह सूत्रे द्व्येकशब्दौ संख्यापरौ, न संख्येयपरौ बहुवचनापत्तेस्तदाह–द्वित्वैकत्वयोरिति । लौकिकप्रयोगे तु 'आदशतः संख्याः संख्येये' इति कोशभाष्याद्युक्तेः संख्येयपरत्वे एव प्रायः साधुत्वम् । क्वचित्संख्यापरत्वेऽपि संख्येयगतसंख्यारोपेण साधुत्वम् । अत एव कस्य द्वित्वे इत्याद्यर्थे कयोर्द्वयोः केषां बहुष्विति भाष्ये प्रयुक्तमिति बोध्यम् । एकशब्दो

---

स्मिन् प्रकरण इत्यर्थभ्रमवारणायाह । अस्मिन् व्याकरण इति । प्रत्याहाराविति । न तु सप्तमीबहुवचनम् । तथा सति पूर्वसूत्रादनुवृत्तस्य त्रीणि त्रीणीत्यस्यानन्वयः स्यात् । किञ्च वृद्धिसंज्ञासूत्रस्थभाष्यातिरक्तस्यैकस्य समानफलकानेकसंज्ञाकरणस्य च प्रसङ्गः स्यादिति भावः ॥

नियमार्थे इति । पञ्चकं प्रातिपदिकार्थ इति पक्षे प्रातिपदिकात्स्वादयो विधीयमाना अनिर्दिष्टार्था इति न्यायेनैकत्वादौ स्वार्थे सिद्ध्यन्तीतीमे सूत्रे नियमार्थे, बहुषु बहुवचनमेव द्वित्वैकत्वयोर्द्विवचनैकवचन एवेत्यादिरीत्येति भावः । नन्वादशतस्संख्याशब्दस्य सङ्ख्येयपरतया द्वित्वैकत्वयोरिति वृत्तिरनुपपन्नेत्यत आह । सङ्ख्यापराविति । सङ्ख्येयपरत्वे दोषमाह । बहुवचनापत्तेरिति । द्व्येकेष्विति स्यादिति भावः । तथा चादशत इति नियमो लौकिकप्रयोगविषयक इति बोध्यम् । तदाह । लौकिक इति । प्राय इत्यस्य फलमाह । क्वचिदिति अत एवेति । सङ्ख्येयगतसङ्ख्यासमारोपेण तत्र साधुत्वाङ्गीकारादेवेत्यर्थः । भाष्ये प्रयुक्तमिति । अन्यथा तत्र द्वयोरिति बहुष्विति च द्विवचनबहुवचने असङ्गते स्यातां, तयोस्संख्यापरत्वादिति भावः । नन्वत्रैकशब्दस्यान्यार्थकस्यापि ग्रहणं स्यादत आह । एकशब्द इत्यादिना । नन्वे-

द्विशब्दसाहचर्यात्संख्यावाच्येव । एकग्रहणन्त्यक्त्वैकवचनमुत्सर्गः कर्तव्यस्तेनाव्ययेभ्यः पचतिकल्पमित्यादौ च व्यर्थैकवचनप्रयोगसिद्धिरिति 'तद्धितश्च' इति सूत्रे भाष्ये स्पष्टम् । बहुषु ॥ बहुशब्दोऽत्र त्रित्वादिपरार्द्धान्तसंख्यानां व्यापको यो धर्मविशेषो बहुत्वं, तत्परः । बहुवचनन्त्वाश्रयगतबहुत्वं धर्मे आरोप्य कृतम् । तेन

---

कत्वे वाच्ये एव चेदेकवचनं, तदाऽव्ययेभ्यस्तदुत्पत्तिर्न स्यात् । तेषां लिङ्गसङ्ख्यानन्वय्यर्थबोधकत्वादत आह । एकग्रहणमिति । अत्र सूत्रे एकग्रहणमपनीयैकवचनमिति पृथक्सूत्रं कार्यम् । ततो द्विबह्वोर्द्विवचनबहुवचने इति च सूत्रं कार्यम् । तथा च द्वित्वबहुत्वयोर्द्विवचनबहुवचने बाधके भविष्यतः । एकवचनन्त्वेकस्मिन्नपि भविष्यति । अलिङ्गासङ्ख्येभ्योऽव्ययेभ्यश्चेति भावः । न चैकवचनमिति महासंज्ञाकरणेन कथन्तेभ्यस्तदुत्पत्तिरिति वाच्यम् । द्विवचनबहुवचनविधायकयोः द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकत्वाभावेपि तत्प्रवृत्तेः॥

धर्मविशेष इति । अखण्डोपाधिरूप इत्यर्थः । तत्पर इति । न सङ्ख्यारूप इति भावः । नियतविषयपरिच्छेदहेतोरेव सङ्ख्यात्वेन बहुत्वस्यातथात्वान्न सङ्ख्यात्वम् । अत एव सङ्ख्यासंज्ञासूत्रस्थं यदयमसंख्यां सङ्ख्येत्याह, सङ्ख्यावदिति गम्यत इति भाष्यं सङ्गच्छते । अत एव च घटा इत्युक्ते कतीति तत्राप्यसङ्ख्याविषयकजिज्ञासाप्युपपन्ना भवति । बहुत्वस्य नियतविषयपरिच्छेदकत्वे तु तदसङ्गतिस्स्पष्टैव । न च बहुत्वस्यासङ्ख्यात्वे "सुपां कर्मादयोप्यर्थास्सङ्ख्या चैव तथा तिङा" मित्यनेन विरोध इति वाच्यम् । तत्रत्यसङ्ख्यापदेन बहुत्वस्याप्युपलक्षणादिति बोध्यम् । नन्वत्र बहुशब्दस्य बहुत्वार्थकत्वे बहुष्विति बहुवचनमसङ्गतमित्यत आह । बहुवचनन्त्विति । तेनेति । बहुवचनोपादानेनेत्यर्थः । वैपुल्यवाचिनो ग्रहणे तु वैपुल्यस्यैकाश्रयवृत्तित्वेन बहुवचनमनुपपन्नं स्यादिति भावः । नन्वेकस्यामपि व्यक्तौ बहुवचनान्तदारशब्दस्य

वैपुल्यवाचिनो न ग्रहणम् । दारा इत्यादौ त्ववयवादिगतबहुत्वस्यावयविन्यारोपो बोध्यः । स च कोशवृद्धव्यवहारानुसारेणैवेति नातिप्रसङ्गः । 'भर्तृदारयोरप्तेजसोः' इत्यादौ वृत्तौ तु द्विवचनमेव । आरोपे मानाभावात् । अत एव द्व्येकयोरिति सङ्गच्छते । एतेनैकस्मिन्नपि गुरवः समागता इत्यादि समर्थितम् । अन्वर्थसञ्ज्ञयैव सिद्धे इदं सूत्रद्वयं स्पष्टार्थम् । राम इति । रुत्वे एकदेशविकृतन्यायेन सुबन्ततया पदत्वाद्विसर्गः ॥

---

प्रयोगो दृश्यते । स च वाच्यार्थे बहुत्वाभावादसङ्गत इत्यत आह । दारा इत्यादाविति । सचेति । आरोप इत्यर्थः । दाराः पुंसीत्यादिकोशात्तत्रारोपः । गुरवस्समागता इत्यादौ तु वृद्धव्यवहाराद्गुणगतस्य तस्यारोपो बोध्यः । कोशादपि वृद्धव्यवहारस्य प्राबल्यमिति ध्वनयितुमाह । भर्तृदारेति । अयं स्मार्तप्रयोगः । अन्त्यः शाबरभाष्यीयः । मानाभावादिति । आरोपप्रयोजकवृद्धव्यवहाराभावादिति भावः । अत एव = आरोपस्य तादृशप्रमाणापेक्षत्वादेव । सङ्गच्छत इति । अन्यथा तत्रापि सङ्ख्येयगतसङ्ख्याया आरोपे बहुवचनं स्यादिति भावः । स्पष्टार्थमिति । कर्मणि द्वितीयेत्यादिभिस्सामान्यतः प्रातिपदिकाद्द्वितीयादिविधानेपि द्विवचनमित्याद्यन्वर्थसंज्ञाबलेन कर्मादिगतद्वित्वादिविवक्षायामेव द्विवचनबहुवचनयोः प्रवृत्त्या द्विवचनबहुवचनविधायकं सूत्रद्वयं स्पष्टार्थमिति भावः । एकवचनमित्यौत्सर्गिकन्त्वव्ययेभ्य एकवचनसिद्धये आवश्यकमेव । तच्च सामर्थ्यान्महासंज्ञाबोध्यैकत्वाभावेऽपि भवतीति बोध्यम् । एकदेशविकृतन्यायेनेति । अस्य कार्यकालपक्षे आनुमानिकस्थानिवद्भावेनेत्यर्थः । यथाश्रुतन्तु न युक्तम् । तेन न्यायेन विकृतावयवनिबन्धनकार्यस्यानतिदेशात् । सुबन्तत्वहेतुकपदत्वस्य कृतरुत्वेऽनेन न्यायेनातिदेश इति भट्टोक्तमपि न समञ्जसम् । कार्यकालपक्षे कार्यप्रवृत्तिकाल एव संज्ञाशास्त्र-

सरूपाणामेव ॥ 'वृद्धो यूना' इति सूत्रादेवकारोऽपकृष्यत इत्याह—सरूपाण्येवेति । तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयो-र्भ्यामि नैकशेषः । न चैकविभक्ताविति व्यर्थम् । यानि सरूपाण्ये-वेत्युक्त्यैवोक्तदोषवारणादिति वाच्यम् । हरिणस्त्रीवाचकहरिणी-शब्दस्य हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य चैकशेषानापत्तेः। पुंवद्भावेन तद्धितादौ वैरूप्यात् । दृष्टानीति । लौकिके प्रयोगे इति

---

प्रवृत्तेरावश्यकत्वात् । एवञ्च वतिघटितातिदेशानां त्रिपाद्यां प्रवृत्तावस्योदा-हरणत्वप्रतिपादनपरनपदान्तसूत्रस्थस्वग्रन्थेन सहास्य ग्रन्थस्यैककण्ठ्यं सिद्ध्यति। यथोद्देशे तु भट्टोक्तदिशा यथाश्रुततयाप्ययं ग्रन्थो योजयितुं शक्यः । किञ्च यथोद्देशे पदसंज्ञादृष्ट्या रुत्वस्यासिद्धतया सुबन्तत्वबुद्ध्या रेफान्ते पुनः पदत्व-प्रवृत्त्यापि न दोष इति बोध्यम् । अस्य ग्रन्थस्य कार्यकालपक्षाभिप्रायकत्व-मुक्त्वा यथाश्रुततया व्याचक्षाणा मिश्रास्तु मान्या एवेति भाति ॥

तेनेति । एवकारापकर्षेणेत्यर्थः । भ्यामीति । भ्यामादावपीत्यर्थः । औजसादौ तु एवकारापकर्षाभावेऽप्यनुप्रयोगविरोधादेवैकशेषो वारयितुं शक्यः। भ्यामादौ तु ताभ्यामित्यनुप्रयोगस्य समत्वान्न तद्विरोधेनैकशेषो वारयितुं शक्य इतीदमसाधारणं फलमेवकारापकर्ष इति भावः । एवकारापकर्षे तु तद्बलेनान्व-यितावच्छेदकावच्छेदेन विधेयान्वयलाभाद्विभक्तित्वावच्छेदेन सारूप्य एवैकशेष इत्यर्थो लभ्यते । तथा चानयोरौजसादौ वैरूप्यान्नैकशेष इति बोध्यम् । उक्तदोषवारणादिति । एकविभक्ताविति पदाभावेऽप्येवकारापकर्षेण प्रयोग-मात्रावच्छेदेन सारूप्यवतामेकशेष इत्यर्थलाभाज्जननीपरिच्छेत्तृवाचिनोरौजसादिषु वैरूप्यादेकशेषो वारयितुं सुकर इति भावः । एकशेषानापत्तेरिति । तयोः प्रयोगमात्रावच्छेदेन सारूप्याभावात् । तदेव दर्शयति । तद्धितादाविति । आदिना क्यङ्, तयोरपि भस्याढ इति पुंवद्भावेन हारिणं हारितमिति, क्यङि

शेषः । एकशेषश्चायमनैमित्तिकत्वेनान्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमेवेति एतद्विषये द्वन्द्वप्राप्तिरेव नेति बोध्यम् । ननु तन्त्रेणैव सिद्धेरिदं व्यर्थम् । यथा अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यत्राक्षा इति कारकस्य सकृदुपादानेऽपि सर्वत्रान्वयः । तन्त्रकारणं तु शब्दानां

---

हरिणायते, हरितायत इति च रूपे भवत इति प्रयोगमात्रावच्छेदेन सारूप्यं नेति भावः । एकविभक्ताविति पदकरणे तु विभक्तिमात्रावच्छेदेन सरूपाणामित्यर्थलाभादनयोरेकशेषस्सिद्ध्यति । तद्धितादिषु वैरूप्येपि विभक्तिमात्रावच्छेदेन सारूप्यस्य सत्त्वादिति बोध्यम् । ननु सत्यप्येवकारापकर्षे मातृमात्रोरेकशेषो दुर्वारोऽलौकिके औजसादावपि सारूप्यादत आह । लौकिके इति । परिनिष्ठिते रूपे इत्यर्थः । तत्र च वैरूप्यं दृश्यत एवेति भावः । ननु पूर्वोक्तदोषवारणाय विभक्तेः सारूप्ये उपलक्षणत्वस्याश्रयणीयतया एकशेषस्यानैमित्तिकत्वेनान्तरङ्गत्वाद्विभक्त्युत्पत्तेः प्रागेव प्राप्त्याऽस्य द्वन्द्वापवादत्वकथनं भाष्यकृतोऽसङ्गतं स्यादित्यत आह । एकशेषश्चेति । द्वन्द्वप्राप्तिरेव नेति । यद्येतन्नारभ्येत प्रत्येकं सुबुत्पत्तिः स्यात्, द्वन्द्वश्च प्रवर्तेत । आरब्धे त्वेकशेषेऽनेकसुबन्तविरहात् द्वन्द्वस्याप्राप्तिरेव फलिता भवतीत्येतावतैव द्वन्द्वापवाद एकशेष इति व्यवहार इति भावः । नन्वेतत्सूत्रारम्भेऽपि विभक्त्यन्तानामेकशेष इति पक्षेऽस्य सूत्रस्यानवकाशत्वात् द्वन्द्वापवादत्वकथनपरभाष्यप्रामाण्येन इदित इति गुरुनिर्देशेन च एतत्सूत्रस्य सहविवक्षाविषयत्वस्याश्रयणीयतया अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामित्यादावसहविवक्षाविषये तन्त्रेणैव निर्वाहस्यावश्यं वक्तव्यतया तेनैव घटाम् पटावित्यादौ सहविवक्षाविषयेपि सिद्धावेतत्सूत्रारम्भो निरर्थक इत्यत आह । तन्त्रेणैवेत्यादि । सकृदुच्चरितस्यैकस्य शब्दस्याऽनेकार्थप्रतिपादनसामर्थ्यकत्वं तन्त्रम् । तन्त्रस्योदाहरणमाह । अक्षा भज्यन्तामित्यादि । कारकस्येति । एतेन विभक्त्यन्ततन्त्रमत्रेति सूचितम् । एकशेषेण तु नात्र निर्वाहः । अक्षपद-

तुल्यरूपता, एवमक्षो भज्यतां भुज्यतां दीव्यतामित्यपि। तन्त्रं द्वेधा—शब्दतन्त्रमर्थतन्त्रञ्च। शब्दस्य पर्यायपरिवृत्त्यसहत्वे आद्यम्। यथा—अक्षा इत्यादौ। तत्सहत्वे त्वन्त्यम्। यथा—घटा इत्यादौ। तत्राक्षा भज्यन्तां भुज्यन्तामित्यादावन्वयिपदार्थभेदाद्बोद्धुरावृत्त्यैव बोधः। उच्चारणन्तु तन्त्रेण। अन्वयिपदार्थस्यैकत्वे तु एकोपस्थित्यैवान्वयः। यथा—अक्षान्पश्य, घटान् पश्येत्यादौ; इति

---

वाच्यानां शकटाक्षविभीतकाक्षदेवनाक्षाणामेकत्रानन्वयेन सहविवक्षाया अभावात्। तुल्यरूपतेति। सवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेणेत्यर्थः। एतेन बहुवचनसद्भाव एव तन्त्रेण निर्देशो नान्यथेति वक्तुमशक्यमिति भावः। एकशेषानिर्वाह्यं स्थलान्तरमाह। अक्षो भज्यतामिति। अत्र बहुवचनाभावे-नैकशेषः शङ्कितुमप्यशक्य इति भावः। न चात्रैकस्य बह्वर्थकत्वे बहुवचना-पत्तिरिति वाच्यम्। अत्र विभक्त्यन्तस्य तन्त्रेणानेकार्थकत्वं विवक्षितं, तच्च न प्राति-पदिकमिति तदप्राप्तेः। प्रसङ्गात्तन्त्रस्वरूपन्दर्शयति। तन्त्रमिति। पर्यायपरि-वृत्तीति। पर्यायस्य=स्वप्रतिपाद्ययावदर्थाभिधायकस्य असमस्तशब्दान्तरस्य, या परिवृत्तिः पाक्षिकप्रयोगः, तस्यासहस्तथोक्तः, पचाद्यच्, तस्य भावस्तत्त्वं, तस्मिन्सतीत्यक्षरार्थः। स्वप्रतिपाद्ययावदर्थाभिधायकासमस्तपर्यायशब्दाभावे शब्द-तन्त्रम्। यथा अक्षा इत्यादौ, तत्र रथाङ्गविभीतकदेवनसाधनादिरूपानेकवि-जातीयपदार्थवाचकस्य पर्यायान्तरस्याप्रसिद्धेः। तत्सत्त्वे त्वर्थतन्त्रम्। यथा घटा इत्यादौ, तत्र घटादिपदवाच्ययावदर्थाभिधायककलशादिरूपपर्यायप्रसिद्धे-रिति यावत्। ननु तन्त्रस्थले बोद्धुरावृत्त्यैव बोधः, एकशेषस्थले तु नैवमिति वैलक्षण्यसत्त्वात्कथं तन्त्रेण निर्वाह इत्यत आह। तत्राक्षा इति। अन्वयि-पदार्थभेदादिति। अन्वयानुयोगिधात्वर्थस्य भेदादित्यर्थः। आवृत्त्यैवेति। पुनः पुनरनुसन्धानेनेत्यर्थः। एकोपस्थित्यैवेति। सकृदनुसंहितैकशब्देन सुप-

चेत्सत्यम् । सरूपाणामेकशेष एवेतिनियमार्थत्वात् । तत्फलन्तु प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचित्तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः । स चायं नियमो विभक्तौ यानि सरूपाण्येव तद्विषयः, सहविवक्षाविषयश्च । अत एव विभक्त्यन्तानामेकशेष इति पक्षे 'द्वन्द्वप्रतिषेधो वक्तव्य' इत्याशङ्क्य 'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्ये उक्तम् । किं चासहविवक्षायामपि तत्प्रवृत्तौ सहविवक्षायां द्वन्द्वस्यैवान्यत्र कर्मधारयस्यापि बाधापत्तौ 'सारव-

---

पदनेकार्थोपस्थित्या उपस्थितेषु तेषु समभिव्याहृतपदार्थान्वय इति भावः । एवञ्चैकशेषाविषये अक्षा भज्यन्तामित्यादावावृत्त्या बोधेपि तद्विषयेऽक्षान्पश्य पटान्पश्येत्यादौ तन्त्राङ्गीकारेप्यावृत्तिं विनैव बोध इति न तन्त्रैकशेषयोर्बोधे वैलक्षण्यमिति भावः । तत्फलन्त्विति । नियमफलन्त्वित्यर्थः । प्रत्यर्थमिति । अर्थमर्थं प्रतीत्यर्थः । दर्शनेनेति । घटोयं घटोयमित्यादौ । अनेकार्थबोधनायैकशब्दप्रयोगवदेकैकस्यार्थस्य बोधनायैकैकस्यापि शब्दस्य प्रयोगदर्शनेन तथाप्रयोगे प्राप्तद्वन्द्वनिवृत्तिरेव नियमफलमिति भावः । अस्य शास्त्रस्य सहविवक्षाविषयत्वानङ्गीकारे द्वन्द्वनिवृत्त्यर्थत्वं न संघटत इत्याशयेनास्यापि तद्विषयत्वं व्यवस्थापयति । स चायमित्यादिना । अस्य सहविवक्षाविषयत्वे मानं दर्शयति । अत एवेति । सहविवक्षाविषयत्वं चास्य तिष्यपुनर्वस्वोरिति सूत्राद्द्वन्द्व इत्यनुकृष्य द्वन्द्वे प्रसक्ते सतीति व्याख्यानाल्लभ्यत इति बोध्यम् । तस्यानुकर्षणमकृत्वा तादृशनियमास्वीकारे दूषणमाह । किञ्चेति । बाधापत्ताविति । बाध्यसामान्यचिन्तयेति भावः । सारवसारवेति । आरवैस्सहिताः सारवाः, सरय्वां भवास्सारवाः । सारवाश्च तास्सारवाश्चोर्मयस्तासु जात इत्यर्थः । ननु तन्त्रस्यासहविवक्षायामपि प्रवृत्त्यङ्गीकारे ब्राह्मणाभ्याञ्च कृतं ब्राह्मणाभ्याञ्च देहि, पयः पयो जरयतीत्याद्यर्थे तृतीयान्तचतुर्थ्यन्तयोः प्रथमाद्वितीयान्तयोश्च

**सारवोर्मिज' इत्यादिप्रयोगविरोधापत्तिः । असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण ब्राह्मणाभ्यां कृतं देहि, पयो जरयतीत्यादि, नीलोत्पलस्पर्धिनी नेत्रे तनुर्वा हरेरितिवत् विद्वन्मानसहंसेतिवच्चेष्टमेवेति बोद्धव्यम् । न चासहविवक्षायां तन्त्रसत्त्वे 'इदित' इति गुरुनिर्देशो व्यर्थः । अन्यपदार्थावगतये तत्सत्त्वात् । इद्यस्य धातोरिति करणे तु गौरवम् । एतच्च सूत्रं भाष्ये प्रत्याख्यातम्,**

---

तन्त्रेण ब्राह्मणाभ्यां कृतं देहि पयो जरयतीत्याद्यपि स्यादित्याशङ्कामिष्टापत्त्या परिहरति । **असहविवक्षाविषयेणेति** । **पय इति** । एकं प्रथमान्तमपरं द्वितीयान्तमेकस्य व्यापारेऽपरस्य फले चान्वय इति सहविवक्षाया अभावः । **इत्यादीति** । इत्याद्यपीत्यर्थः । प्रत्यर्थं शब्दनिवेशस्यापि दर्शनेन कदाचिद्भाष्यसम्मतताद्दशप्रयोगा अपि साधव इति ध्येयम् । नन्वसहविवक्षायां विभक्त्यन्ततन्त्रं क्व दृष्टमत आह । **नीलोत्पलस्पर्धिनी इति** । काव्यप्रकाशे लिङ्गवचनश्लेषस्येदमुदाहृतं नवमे । **विद्वन्मानस इति** । विदुषां मानसाभिन्नं यन्मानसं सरस्तत्रत्यहंसेत्याद्यर्थः । अत्र तन्त्रकारणस्य शब्दानां तुल्यरूपत्वस्य सत्त्वात्तन्त्रं बोध्यम् । **व्यर्थ इति** । तन्त्रकारणस्य तुल्यरूपत्वस्य सत्त्वात्तन्त्रेणेत इत्युक्तावप्यभीष्टार्थलाभादिति भावः । **अन्यपदार्थावगतय इति** । इदमिदितो नुमित्यत्र बहुव्रीहिरित्याशयेनेर इत्संज्ञा वाच्येति वचनमारब्धवतो वार्तिककारस्य मतेन । तन्मते चक्षिङि नुम्वारणन्तु अकारोच्चारणेनापि सुकरम् । तत्पुरुषसमासमाश्रित्य तत्प्रत्याख्यानं कुर्वतो भाष्यकृतो नये तु सर्वत्र तन्त्रेणैव निर्देशः कार्य इति नियमो नेत्यर्थं स्पष्टं बोधयितुमेव गुरुनिर्देश इति बोध्यम् ॥

एतेन चिन्त्यमिदम् । चक्षिङ्धातौ नुम्वारणाय कर्मधारयं स्वीकृत्येदन्तधातोर्नुम् भवतीतीदितो नुमिति सूत्रार्थस्यावश्यकत्वादित्यौत्तराहाः परास्ताः ॥

भाष्यकृत्सम्मतमेकशेषप्रत्याख्यानप्रकारमाह । **एतच्चेत्यादिना** । नन्वर्थ-

**अर्थावर्थौ प्रति यदर्थानर्थान्प्रति च यत्तदपि प्रत्यर्थमेवेत्याश्रयणेन । अनेकघटादिपदानां साहित्ये वृत्तिरेव नानभिधानात् । एकस्यैव त्वनेकार्थस्य तत्र वृत्तिरभिधानस्वाभाव्यादिति तदाशयः । 'द्विर्वचनेऽचि' इत्यादावेकशेषशब्दस्तु भाष्ये तन्त्रपरः । स चोचारयितुः, बोद्धुस्त्वावृत्तिरेवेति बोद्धव्यम् । एकविभक्तावित्यत्रैकपदं तु स्पष्टार्थम् । एकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थं स्पष्टं**

---

मर्थं प्रति च यत्तदपि प्रत्यर्थमेवेति कदाचित्तथा प्रयोगे प्राप्तद्वन्द्वनिवृत्त्यर्थमेतत्सूत्रमावश्यकमित्यत आह । **अनेकघटादिपदानामिति । तत्रेति ।** साहित्य इत्यर्थः । **तदाशय इति ।** एकशेषशास्त्रप्रत्याख्यातृभाष्यकृदाशय इत्यर्थः । नन्वेतत्सूत्राभावेऽस्य सहविवक्षाविषयत्वे वा द्विर्वचनेऽचीत्यत्रैकशेषाश्रयणं भाष्यकृतामसङ्गतं स्यादित्यत आह । **द्विर्वचने इति । तन्त्रपर इति ।** विभक्त्यन्ततन्त्रपर इत्यर्थः । **आवृत्तिरेवेति ।** सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायेनावृत्तिं विना बोद्धुरेकेनानेकार्थबोधनस्याशक्यत्वादिति भावः । पूर्वमेकविभक्तावितिपदस्य प्रयोजनं प्रतिपाद्य मध्ये प्रसक्तानुप्रसक्त्या सूत्रारम्भफलं सिद्धान्तभूततत्प्रत्याख्यानप्रकारश्च प्रदर्श्येदानीं तद्घटकैकग्रहणस्यानावश्यकतां दर्शयति । **एकपदन्त्विति ।** विभक्ताविति पदन्तु हरिणस्त्रीवाचकहरिणीशब्दहरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दयोरेकशेषसम्पादनायावश्यकमेवेति भावः । **स्पष्टं बोधयितुमिति ।** यद्यपि जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयोरेकशेषवारणायैवकारापकर्षस्यावश्यकतया तेन विभक्त्यवच्छेदेन सरूपाणामेकशेष इत्यर्थलाभादेकस्यामपि विभक्तौ यानि विरूपाणि नेत्यर्थः फलति ; तथापि तमेवार्थं स्पष्टं बोधयितुमेकग्रहणमिति भावः । न चैकग्रहणाभावे ब्राह्मणाभ्यां कृतं ब्राह्मणाभ्यां देहि, पयः पयो जरयतीत्यादावेकशेषः स्यात्, तत्सत्त्वे तु तत्सामर्थ्यादेकविभक्तावित्यस्यावृत्त्या उभयविशेषणत्वेनैकविभक्तौ

**बोधयितुम्। ध्वनितश्चेदं विभक्तिः सारूप्ये उपलक्षणमिति भाष्ये एकपदानुच्चारणेन। समाहारद्वन्द्वविषये तु नैकशेषः। 'एकवच्चास्यान्यतरस्याम्' इत्यनेनैकशेषविषयपदानां समाहारे वृत्त्य-**

सरूपाणामेकविभक्तौ परत एकशेष इत्यर्थलाभात्तद्वारयितुं शक्यत इति कथमेकग्रहणस्य स्पष्टार्थतेति वाच्यम्। सहविवक्षाविषय एवास्य प्रवृत्त्या कर्तृसम्प्रदानयोः कर्तृकर्मणोश्चार्थयोर्विरोधेन युगपदेकरूपेणैकत्रान्वयाभावेन सहविवक्षाया अभावादेवैकशेषस्य तत्र वारयितुं शक्यतया तदर्थमेकग्रहणस्यानावश्यकत्वात्। ध्वनितश्चेदमिति। प्रातिपदिकैकशेषपक्षे एकग्रहणस्य स्पष्टार्थत्वमित्यर्थः। अत एव च पृथक्सर्वेषां विभक्त्यन्तानामेकशेष इति पक्षे एकग्रहणं पृथग्विभक्तिप्रतिषेधार्थमित्युक्तम्। तेन हि तदतिरिक्तपक्षेषु तद्वैयर्थ्यं ध्वनितम्। तत्पक्षेपि न वार्थविप्रतिषेधादिति तत्प्रत्याख्यातमेवेत्यपि बोध्यम्॥

यत्तु समाहारद्वन्द्वविषयेऽप्येकशेषेण भवितव्यम्। सूत्रारम्भेऽनभिधाने प्रमाणाभावात्। अन्यथा घटघटावित्यस्याप्यनभिधानेनैव वारणेन सूत्रस्यैव वैयर्थ्यात्। नचैवं शिष्यमाणादेकस्मात्समूहस्येतरेतरयोगस्य वा प्रतीतिरित्यत्र विनिगमकाभाव इति वाच्यम्। तत्र प्रकरणादेरेव निर्णायकत्वात्। अन्यथा घटा इत्यादौ कदाचित् व्यक्तित्रयस्य कदाचिच्चतुर्णां पञ्चानां वेत्यत्रापि नियमो न स्यात्। समाहारविवक्षायामप्येकशेषाङ्गीकारादेवानेकं ब्राह्मणं भोजय, न ब्राह्मणं हन्यादित्यादीनामप्युपपत्तिः। समूहस्यावयवानतिरेकादवयवेषु हननकर्मत्वप्रतीतिः। विभक्तिबोध्यैकत्वान्वयस्तु प्रधानभूतसमूह एवेति केचिदाहुस्तन्मतं दूषयति॥

**समाहारद्वन्द्वविषय इति।** अत्र मानन्दर्शयति। **अन्यतरस्यामिति।** यद्येकशेषविषयपदानां समाहारे वृत्तिः स्यात्तदा समाहारविवक्षायामेकवद्भावस्य, इतरेतरयोगविवक्षायां द्विवचनबहुवचनयोश्च सिद्धावन्यतरस्यामिति व्यर्थ एव स्यादिति भावः। **समाहारे वृत्त्यभावबोधनादिति।** तेन

**भावबोधनात्। 'न ब्राह्मणं हन्यात्' इत्यादौ तु जातिपक्षेणैव निर्वाहः। अत एव तत्र व्यक्तिपक्षे 'यं कश्चिद्ब्राह्मणमहत्वा कृती स्यात्' इति दूषणं भाष्ये उक्तम्। शेषशब्दार्थश्चेतरनिवृत्तिपूर्वकमवस्थानं, तदाह—एक एवेति। एकेति लुप्तविभक्त्यन्तं पृथक्पदम्। अत एव तत्र सरूपाणामित्यस्यान्वयः। तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया। तत्र 'शिष्यमाणं लुप्यमानार्थाभिधायि' इति न्यायेन श्रूयमाणपदवृत्त्या बोधः। धातुषु तु नास्य प्रवृत्तिः। एक-**

---

घटघटमिति समाहारद्वन्द्वोऽपि नेति बोध्यम्। न चान्यतरस्यां ग्रहणसामर्थ्येनेतरेतरयोग एव वृत्तिर्नेति कस्मान्न कल्प्यते। तावताप्यन्यतरस्यामित्यस्य सार्थक्यसम्भवादिति वाच्यम्। सरूपाणामिति निर्देशान्यथानुपपत्त्या समाहारे वृत्तिर्नेति कल्पनाया एवोचितत्वात्। नन्वेवं सति न ब्राह्मणमित्येकवचनमनुपपन्नं स्यादत आह। **जातिपक्षेणेति**। एवञ्चात्रैकशेषाभावान्न द्विवचनबहुवचनयोः प्रसङ्ग इति भावः। **अत एवेति**। समाहारद्वन्द्वविषये एकशेषाभावादेवेत्यर्थः। **दूषणं भाष्ये उक्तमिति**। अन्यथा व्यक्तिपक्षेऽपि ब्राह्मणपदस्यैकशेषेणानेकब्राह्मणबोधकतया तद्दूषणासङ्गतिः स्पष्टैवेति भावः। एकशेषस्थले श्रूयमाणातिरिक्तनिवृत्तेरशाब्दत्वं वारयति। **शेषशब्दार्थश्चेति**। **लुप्तविभक्त्यन्तमिति**। शेषशब्दस्य कर्मसाधनत्वे लुप्तप्रथमान्तं; भावसाधनत्वे तु लुप्तषष्ठ्यन्तम्। **अत एव**=एकेत्यस्य पृथक्पदत्वादेव। **तत्र**=एकशब्दार्थे। समस्तत्वे तु पदार्थैकदेशतया तत्र तदन्वयो न स्यादिति भावः। शेषशब्दस्येतरनिवृत्तिपूर्वकावस्थानवाचकत्वेऽपि प्राप्ताऽप्राप्तविवेकन्यायेनेतरनिवृत्तावेव विधेयताविश्रान्तिरित्याह। **निवृत्तिरेवेति**। **तत्रेति**। एकशेषस्थल इत्यर्थः। **श्रूयमाणपदवृत्त्येति**। लुप्यमानपदार्थेऽपि श्रूयमाणपदस्य शक्तिग्राहकं त्वेकशेषविधायकं शास्त्रमेवेति भावः। ब्राह्मणावित्यत्रेव भवतो भवन्तीत्यादावपि भिन्नकर्तृकानेकव्यापारप्रतीतिरेकशेषादेवेति भ्रमवारणायाह। **धातुष्विति**। **एकनिष्ठेति**। यथा देवदत्तः पचती-

**निष्ठानेकव्यापाराणामिवानेकनिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्याऽनेकधातुप्रयोगाप्रसक्तेः । सरूपाणां किम् । घटपटौ । शेष इत्येतन्मात्रोक्तौ द्विबह्वोरपि शेषः प्रसज्येत । एक इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात् । तथा चाश्वश्चाश्वश्चेत्यादौ कदाचित् द्व्युदात्तवत्त्वद्व्यनुदात्तवत्त्वरूपसाम्यमादायोभयस्वरितै-**

---

त्यादौ देवदत्तनिष्ठफूत्काराधस्सन्तापनादिरूपानेकव्यापाराणां तत्तद्रूपेणैकस्मादेव धातोः प्रतिपत्तिः तद्वदिति भावः । **निवृत्तभेदानामिति** । भेदेनाप्रतीयमानानामित्यर्थः । स्वतो द्वित्वादिसंख्यारहितानामिति यावत् । तथा च नानेकशब्दप्रयोगप्रसङ्ग इति नैकशेषप्रवृत्त्यावश्यकतेति भावः । नन्वत्र सूत्रे एकग्रहणं विहाय शेष इत्येतन्मात्रोक्तावपि भावसाधनत्वे इतरनिवृत्तिपूर्वकावस्थानस्यैव शेषपदार्थतया तच्चावस्थानमेकस्य द्वयोर्वेत्याकाङ्क्षायां प्राथम्यादेकस्यैवावस्थानं भविष्यति । तथा कर्मसाधनतायामपि सरूपाणां सम्बन्धी शिष्यते इत्यर्थादाक्षिप्तसम्बन्धिपदे आक्षेपकसामानाधिकरण्यायैकत्वविवक्षया एक एव शिष्यत इत्येकग्रहणं व्यर्थमत आह । **शेष इत्येतन्मात्रोक्ताविति** । **द्विबह्वोरिति** । अनयोस्सङ्ख्यार्थकत्वान्न द्विवचनानुपपत्तिः । विषयसप्तमी चेयम् । द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः । एकग्रहणाभावेऽत्र शास्त्रे आद्युदात्तश्चेत्यत्रादिग्रहणेन प्राग्रीश्वरादिति रेफोच्चारणेन च प्राथम्यन्यायापेक्षया व्याप्तिन्यायस्य प्राबल्यबोधनात्तेन न्यायेन द्विबहूनामेवावस्थानं स्यादेकस्य निवृत्तिरिति भावः । यद्यपि तत्र स्थितेस्सिद्धत्वान्निवृत्तावेवार्थतो विधेयता, तथापि शब्दतस्तत्रैव विधेयत्वाद्व्याप्तिन्यायेन द्विबहूनामेवावस्थानं स्यादेकस्य च निवृत्तिरित्यवधेयम् । शेषग्रहणफलन्दर्शयति । **एक इत्येतावदिति** । अंशाविशिष्टोदात्तकत्वे सत्यंशाविशिष्टानुदात्तकत्वं गृहीत्वोदात्तानुदात्तयुक्तोपि स्यादेवेत्यत आह । **कदाचिदिति** । तादृशस्यैवान्तर्यस्य ग्रहणे मानाभावादिद-

कादेशः प्रसज्येत । न च 'अक्षस्यादेवनस्य' इति फिट्सूत्रेण शकटाक्षे आद्युदात्तस्य देवनाक्षे 'फिष' इत्यन्तोदात्तस्य चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः स्यादिति वाच्यम् । "स्वरभिन्नानां यस्योत्तरस्वरविधिः" इति वचनेनैव निर्वाहात् । एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वावनभिधानान्न भवतः ।

---

मान्तर्यं गृहीत्वा स्यादेव दोष इति भावः । द्व्युदात्तवत्त्वेति । द्वावुदात्तवन्तावश्वशब्दौ यस्य समुदायस्य स द्व्युदात्तवान्, तस्य भावस्तत्त्वम् । अत्रोदात्तशब्दस्य धर्मिपरत्वेनोदात्तगुणयुक्ताकार इत्यर्थः । द्व्युदात्तशब्दस्य बहुव्रीहित्वे तत उक्तार्थत्वान्मतुब्न स्यात् । कर्मधारयत्वे तु न कर्मधारयान्मत्वर्थीय इति स न स्यादत उदात्तवच्छब्देन बहुव्रीहिराश्रयणीयः । उभयस्वरितैकादेश इति । उभयस्वरितोऽश्वशब्द आदेशः स्यादित्यर्थः । स्वरितस्योदात्तानुदात्तसमाहाररूपत्वेन तादृशादेशस्य द्व्युदात्तवत्त्वं द्व्युनुदात्तवत्त्वं चास्तीति भावः । शेषग्रहणसत्त्वेऽपि क्वचिदतिप्रसङ्गमाशङ्कते । न चेति । अन्तोदात्तस्यापीति । इष्टत्वाद्युदात्तस्य । स्वरभिन्नानामिति । स्वरेण भिन्नानां यस्य शब्दस्य उत्तरसूत्रेण स्वरो विहितस्स शिष्यत इति भावः । एवञ्च फिषोन्त उदात्त इत्यपेक्षया अक्षस्यादेवनस्येत्यस्य परत्वेनाद्युदात्त एव शिष्यते । ननु स्वरभेदे सारूप्याभावात्कथमेकशेष इति चेन्न । रूपशब्देन वर्णानुपूर्व्या एव ग्रहणात् । तथा च तृज्वत्क्रोष्टुरिति सूत्रे भाष्यं, 'न हि स्वरो रूपवानिति' । ननु घटादिपदानामिव विभक्त्यवच्छेदेन सरूपाणामेकद्वयादिशब्दानामेकश्चैकश्च द्वौ च द्वौ चेत्यादावेकशेषः कस्मान्न भवतीत्याशङ्क्याह । एकादीति । नन्वपवादाप्रवृत्तावप्युत्सर्गो द्वन्द्वः कुतो नेत्यत आह । द्वन्द्वेति । अनभिधानादिति । स्पष्टश्चेदं सरूपसूत्रे भाष्ये । तत्रहि 'एकश्चैकश्च द्वौ च द्वौ चेत्यादावेकशेषः कस्मान्न भवतीत्याशङ्क्य 'सङ्ख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चानेकशेषः' इति समा-

हितम् । तस्यायमाशयः । यत्रैकश्शब्दोऽनेकमर्थमभिधातुं शक्नोति तत्रैकशेषो नान्यत्र, प्रयुक्तानामेवान्वाख्यानात् । एकाविति चोक्तेऽसहायादिरर्थो गम्यते। न तु द्वाविति । किञ्चैकश्चैकश्चेत्यस्य द्वौ च द्वौ चेत्यस्य च यादृशोऽर्थोऽभिप्रेतस्सोऽसन्दिग्धेन द्वाविति पदान्तरेण, चत्वार इति पदान्तरेण च भवतीति न तत्रैकशेष इति । वाचकशब्दान्तरसत्ताविशिष्टार्थासम्प्रत्यय एकाद्यादशतामेकशेषाभावे हेतुरिति नातिप्रसङ्ग इति बोध्यम् । अनेनैव हेतुनैषां द्वन्द्वानभिधानमपि ध्वनितमिति भावः । अत्र द्वन्द्वानभिधानं सरूपविषये । विरूपविषये त्वेकादश द्वादशेत्यादावस्त्येव द्वन्द्वः । एकोनविंशतीत्यर्थे नवदशेति प्रयोगोपीष्ट एव । दृश्यते च तैत्तिरीयसंहितायाश्चमकैकादशानुवाके तदर्थे स प्रयोगः । विना विरोधन्तत्प्रयोगस्य छान्दसत्वाश्रयणमनुचितम् । एकशेषप्रकरणे त्यदादितश्शेष इत्यत्र शेखरोक्तं चार्थे द्वन्द्व इति भाष्यसूचितमेकादिनवान्तानां सङ्ख्यावाचिनां द्वन्द्वानभिधानन्तु विरूपसङ्ख्याविषयकमिति नानयोर्ग्रन्थयोः परस्परविरोध इत्यवधेयम् ॥

एतेनास्यानभिधानस्य विरूपसङ्ख्यावाचिविषयकत्वमेवेत्यभिप्रेत्य दशान्तानामिति पाठे द्वादशादीनामसिद्ध्यापत्त्या दशान्तानामित्यस्यापपाठत्वमतद्गुणसंविज्ञानबहुव्रीहिणा नवान्तानामित्यर्थकत्वञ्च कल्पयन् हयग्रीवो भाष्यग्रन्थसन्दर्भापर्यालोचनेन मान्य एवेति ध्येयम् ॥

नन्वेकादिनवान्तानां विरूपसङ्ख्यावाचिनां द्वन्द्वाभावे एकद्वित्रिमात्राणामित्यूकालोजितिसूत्रस्थशेखरप्रयोगोऽनुपपन्नः स्यादिति चेन्न । तत्रैका च द्वे च तिस्रश्च मात्रा येषामिति बहुपदबहुव्रीह्याश्रयणेनादोषात् । एकद्विकरणे हेतुरिति नैषधप्रयोगस्यासाधुत्वन्त्वेकशेषप्रकरणे ग्रन्थकृतैवोक्तमिति बोध्यम् ॥

केचित्त्वेकादशादित्यागे बीजाभावाद्दशान्तेत्यस्याष्टादशान्तेति, अग्रे विंशत्यादावित्यस्यैकोनविंशत्यादाविति चार्थं वदन्ति ॥

**विंशत्यादौ त्विष्ट एवैकशेष इत्यलम् ॥**

**चुटू ॥ 'आदिर्ञिटुडवः' इत्यत आदिरिति 'षः प्रत्ययस्य' इत्यतः प्रत्ययस्येति चानुवर्त्तते, तदाह—प्रत्ययाद्याविति । तेन वाचाटे नेत्त्वम् । प्रत्ययेति किम् । चामरादाविन्त्वं मा भूदिति । चुञ्चुप्चणपोर्यादित्वात् परनिमित्तयलोपस्य बहिरङ्गासिद्धत्वात्प्रत्ययादित्वाभावान्नेत्त्वम् । न विभक्तौ ॥ "हलन्त्यम्" इत्यस्य निषेधोऽयम् । अनित्यमिदं थमोर्मकारपरित्राणार्थादुदित्करणात् ।**

---

विंशत्यादौ त्विति । एकशेषशास्त्राप्रवृत्तौ वाचकशब्दान्तरसत्ताविशिष्टार्थासम्प्रत्ययो हि हेतुः । विंशत्यादावेकशेषे तत्प्रतिपाद्यार्थप्रतिपादकस्य चत्वारिंशदिति पदस्य सत्त्वेप्यर्थासम्प्रत्ययरूपविशेष्यस्याभावाद्विशिष्टहेतोरभावेन नैकशेषाप्रवृत्तिरिति भावः ॥

आदिग्रहणानुवृत्तेः फलमाह । तेनेति । नेत्त्वमिति । आटचि टकारस्येति शेषः । टित्त्वफलन्तु स्त्रियां ङीबिति बोध्यम् । चामरादाविति । तथा सति चित इत्यन्तोदात्तापत्तिः । स तु लघावन्त इति फिट्सूत्रेणाद्युदात्तः । चुञ्चुप्चणपोश्चकारस्य प्रत्ययादित्वात्प्राप्तमित्त्वं वारयति । चुञ्चुप्चणपोरिति । चुटुषः प्रत्ययस्येति वाच्ये योगविभागादस्यानित्यत्वेन चुञ्चुबादेर्नेत्त्वमिति प्रकारस्तु भाष्यानुक्तत्वेनायुक्त इति भावः । नेत्त्वमिति । यद्यत्रेत्संज्ञा स्यात्तदा चितिपत्स्वरयोः पर्यायता स्यात् ॥

निषेध्यशास्त्रस्यासन्निहितत्वात्तत् स्मारयति । हलन्त्यमित्यस्येति । ननु प्राग्दिशीयत्वेन विभक्तित्वात्किमोदित्यनेन विहितात्प्रत्ययस्थतकारस्याप्यनेन निषेधः स्यात्तथा च क्वेति न सिद्धयेदत आह । अनित्यमिति । अनित्यत्वे मानन्दर्शयति । उदित्करणादिति । तद्धि मकारस्येत्त्वं वारयितुं

तेन 'किमोऽत्' क्व इति सिद्धम् । प्राग्दिशीयत्वादयं विभक्तिः । अत एव दानीमो मस्य नेत्त्वमिति नव्याः । भाष्ये तु प्राग्दिशीयेष्वस्याप्रवृत्तावुदित्त्वं ज्ञापकमित्युक्त्वा 'दानीञ्च' इति सूत्रे लोपो व्योरिति लोपेन यकारं प्रश्लिष्येत्सञ्ज्ञा वारिता। अन्यत्रानित्यत्वस्य फलाभावाच्चैवमेवोक्तम् । लोपस्यासिद्धत्वाच्च नान्त्यत्वमिति बोद्धव्यम् । विभक्तौ किम् । 'अचो यत्' ॥

---

कृतम् । यद्यनेन तत्रेत्त्वनिषेधः स्यात्तदा तद्वैयर्थ्यं स्पष्टमेव । अनित्यत्वज्ञापनफलन्दर्शयति । तेनेति । अत्प्रत्यये प्रकृतनिषेधप्रसक्तिप्रदर्शनायाह । प्राग्दिशीयत्वादिति । नन्वत्रास्याप्रवृत्तये प्राग्दिशीयविभक्तौ नायं निषेधः प्रवर्तत इत्येवोदित्करणेन ज्ञाप्यताम्, किं सामान्यतोऽनित्यत्वज्ञापनेनेत्यत आह । अत एवेति । उक्तज्ञाप्यांशं विहाय सामान्यतोऽनित्यत्वज्ञापनादेवेत्यर्थः । नव्या इत्यनेन सूचितामरुचिं प्रदर्शयति । भाष्ये त्विति । इत्संज्ञा वारितेति । इत्संज्ञां प्रति लोपो व्योरित्यस्य बहिरङ्गतयासिद्धत्वेन मकारस्य व्यवसितान्त्यत्वाभावादित्त्वं नेति भावः । न च यकारे कृतेपि मान्तस्य प्रत्ययतया व्यवसितान्त्यत्वेन दुर्वारैवेत्संज्ञेति वाच्यम् । व्यवसितान्त्यशब्देन प्रत्यासत्त्या शास्त्रकृद्व्यवसितान्त्यस्यैव ग्रहणेनादोषात् । तद्व्यवसितश्च यान्त एव । यकारादी चुञ्चुप्चणपाविति भाष्यस्य योजनार्थमीदृशप्रकार आवश्यक इति बोध्यम् । अन्यत्रेति । प्राग्दिशीयादन्यत्रेत्यर्थः । न चेटोऽदित्यादिष्वस्याप्रवृत्तिः सामान्यतोऽनित्यत्वज्ञापने फलमिति वाच्यम् । तत्रत्यतकारस्य मुखसुखार्थत्वप्रतिज्ञया श्रवणाभावस्य बोधितत्वात्तत्प्रतिज्ञयैव तेष्वस्याप्रवृत्तेः । वस्तुतस्त्वत्र स्थानिवद्भावेन विभक्तित्वस्यानेयतयाऽऽदेशप्रवृत्तिवेलायां तस्याभावेन निषेधाप्रसक्त्या इत्त्वप्रवृत्तिस्सुलभेति नैतदर्थमपि सामान्यापेक्षज्ञापकत्वमिति बोध्यम् ॥

अतो गुणे ॥ 'उस्यपदान्तात्' इत्यतोऽपदान्तादिति 'एङि पररूपम्' इत्यतः पररूपमिति चानुवर्त्तते । पुरस्तादिति । अत एव 'नादिचि' इतीज्ग्रहणं चरितार्थम् । तद्धि रामाः रामानित्यादौ निषेधाभावाय । पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव । नोत्तरानिति । अनन्तरापेक्षयोत्तरान् व्यवहितानित्यर्थः ॥

एकवचनं सं ॥ 'सुः सम्बुद्धिः' इत्युचितम् । 'सम्बोधने च' इत्यतः सम्बोधन इत्यनुवृत्तेः सप्तमीबहुवचने न दोषः । सम्बुद्धौ अङ्गस्य गुण इति व्यवहाराच्च तदन्तस्य सञ्ज्ञा । तस्मात्पारायणादावदृष्टार्थमेवं न्यास इति बोद्धव्यम् । सम्बुद्ध्याक्षिप्तस्येति ।

---

अत एवेति । पुरस्तादपवादन्यायाश्रयणादेवेत्यर्थः । तद्वैयर्थ्यमिति । इज्ग्रहणाभावेऽप्यज्ग्रहणानुवृत्त्यैव सिद्धेस्तद्व्यर्थमेव स्यादिति भावः । नन्वनन्तरानित्यस्य प्रतिपक्षिणि व्यवहिते वाच्ये नोत्तरानित्ययुक्तमत आह । अनन्तरापेक्षयेति । तथा चोत्तरानितिपदेनापि प्रतिपक्षकथनमेवेति नायुक्ततेति भावः ॥

उचितमिति । लाघवानुरोधेन तथा सूत्रयितुमुचितमिति भावः । नन्वेवं सप्तमीबहुवचनस्यापि संज्ञा स्यादत आह । सम्बोधन इति । सप्तमीबहुवचन इति । इदमुपलक्षणम् । प्रातिपदिकार्थसूत्रविहितप्रथमैकवचनस्यापि । एतेनानुनासिकोच्चारणेनैव तद्व्यावृत्तावनुवृत्तिर्व्यर्थेति परास्तम् । नन्वेकवचनग्रहणे सति तस्य त्वमावेकवचन इत्यादावर्थान्तरबोधकत्वस्याप्यङ्गीकारात्प्रत्ययमात्रबोधकत्वाभावात्प्रत्ययग्रहणपरिभाषा नोपतिष्ठते । सुस्सम्बुद्धिरित्युक्तौ तूपतिष्ठेत । न च संज्ञाविधाविति निषेधादेवंन्यासेऽपि सा नोपतिष्ठत एवेति वाच्यम् । सामन्त्रितमितिवन्महासंज्ञाकरणेन तन्निषेधाप्रवृत्तेः । आमन्त्रणसाधनत्वस्येव सम्बोधनसाधनत्वस्यापि तदन्त एव सम्भवादित्याशङ्क्याह । सम्बुद्धाविति । सम्बुद्धौ परतोऽङ्गस्य गुणो भवतीत्युक्तौ प्रत्यासत्त्या सम्बुद्धि-

**सम्बुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादीत्यंशोपस्थितिः । स चात्र योग्यतया पञ्चम्यन्त इति भावः । प्रत्यये गृह्यमाणे यस्मात्स विहित इत्याद्युपतिष्ठत इति 'प्रत्ययग्रहणे यस्मात्स विहित' इत्यादिपरिभाषार्थ इति 'अङ्गस्य' इति सूत्रे भाष्ये स्पष्टम् । अनुमानरूपाऽऽक्षेपस्तु नात्र, फलाभावात् । यथा पीनत्वानुपपत्त्या-**

---

निमित्तकाङ्गसंज्ञावत इत्यर्थलाभेन स्वन्तस्य सम्बुद्धिसंज्ञायां तद्व्यवहारानुपपत्तिरिति भावः ॥

अनुमानरूपाक्षेपस्यासम्भवेनाक्षिप्तस्य शब्दादनुपस्थितत्वाच्छाब्दान्वयित्वाभावेन च सम्बुद्ध्याक्षिप्तस्याङ्गस्येति दीक्षितोक्तमन्यथा व्याचष्टे । **सम्बुद्धेरिति** । **उपस्थितिरिति** । प्रत्ययग्रहणपरिभाषयेति भावः । सम्बुद्ध्याक्षिप्तस्याङ्गस्येति मूलग्रन्थस्य सम्बुद्ध्युपस्थापितस्य तदादेरित्यर्थ इति भावः । अयमेवात्राङ्गपदार्थः । अत एवात्राऽङ्गसंज्ञासूत्रानुपन्यासः । **योग्यतयेति** । एङ्ह्रस्वादिति पञ्चम्यन्तेन सामानाधिकरण्यान्वयानुरोधादिति भावः । नन्वेवमपि हे कतरदित्यादावतिव्याप्तिर्दुर्वारैव । उपस्थिततदादिपदस्य बहुव्रीहित्वेनाड्डादेशसम्बन्ध्यकारविशिष्टस्य तदादित्वाद्ध्रस्वान्तत्वाच्चेति चेन्न । परिभाषायां तदादिपदे बहुव्रीहिसत्त्वेऽप्यङ्गमित्युत्तरसूत्रे प्रत्ययप्राग्वर्तिन एव तदादिशब्देन ग्रहणादर्थाधिकारानुरोधादत्रापि तादृशस्यैव ग्रहणेनादोषात् । प्रत्यये परतस्तदादेरङ्गसंज्ञाविधानादुत्तरसूत्रे तदादिपदेन प्रत्ययप्राग्वर्तिन एव ग्रहणं सम्भवतीति ध्येयम् । अत एव प्रत्ययग्रहणे शब्दस्वरूपं विशेष्यमादाय तदन्तविधिरित्युच्यते । उक्तार्थकतदादिपदस्य प्रत्ययान्तेन सामानाधिकरण्यासम्भवेन तस्य विशेष्यत्वासम्भव इति तदाशयः । विवृतश्चेदं परिभाषेन्दुटिप्पण्याम् । ननु प्रत्ययग्रहणपरिभाषायाः पदोपस्थापकत्वे मानाभाव इत्याशङ्क्याह । **भाष्ये स्पष्टमिति** । आक्षेपासम्भवमेव दर्शयति । **अनुमानरूपेति** । **फलाभावादिति** । आक्षेप-

ऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलं, न तथा एतत्सूत्रे तदनुमानेन सम्बुद्ध्युपपत्तिर्भवति । किं च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः । अत एवाङ्गस्येति सूत्रे तत्स्थाने प्रत्यय इत्यधिकारः कार्य इति पक्षे प्राकरोदित्यादावुपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरिति परिभाषोपस्थित्या समाहितं भाष्ये, न त्वङ्गाक्षेपेणेति दिक् । अङ्गस्य—उक्तार्थस्य । हल्ङ्याबिति सूत्रा-

कोपपत्तिरूपाक्षेपफलाभावादित्यर्थः । तमेव दर्शयति । यथेत्यादिना । एतत्सूत्र इति । किन्तु प्रकृतिं विना प्रत्ययानुत्पत्तेः प्रयोगे तदुपपत्तिरूपं फलमाक्षेपस्य सम्भवति । तथा च प्रयोग एवाक्षेपः स्यान्न तु सूत्र इति भावः । एवमाक्षिप्तस्य आक्षेपकोपपत्तिरूपफलाभावेनाक्षेपासम्भवमुक्त्वाऽक्षेपमूलभूतानुपपत्तेरप्यभावेन तदसम्भवमाह । किञ्चेति । ज्ञान इति । प्रत्ययत्वेन ज्ञाने प्रत्ययाधिकारे पाठो विधेयसमर्पकविभक्तिनिर्देशश्च साधकः । न तु प्रकृतिज्ञानम् । तस्य तज्जनकतावच्छेदकधर्मशून्यत्वादिति भावः । शास्त्र इति । लोके तु दिवाऽभुञ्जानस्य रात्रिभोजनं विना पीनत्वमनुपपन्नमिति तेन तदनुमातुं शक्यम् । अत्र शास्त्रे तु सम्बुद्धित्वज्ञानमेवापेक्षितमिति प्रकृतिं विनापि निरुक्तरीत्या तदनुपपत्तेरभावेन न प्रकृतिराक्षेप्तुं शक्या । यत्र तु प्रत्ययविधायके शास्त्रे प्रकृतिं विना प्रत्ययविधानमनुपपन्नं तत्र तदाक्षेपोऽस्तु । अत्र शास्त्रे तदाक्षेपे मानाभाव इति भावः । अत एवेति । ईदृशविषये प्रत्ययग्रहणपरिभाषाया एवोपस्थितेरेवेत्यर्थः । न त्वङ्गाक्षेपेणेति । नन्वङ्गस्येत्यस्याभावेऽङ्गसंज्ञाया अप्यभावात्कथं तदाक्षेपेण समाधातुं शक्यत इति चेन्न । तदभावेपि 'ह्रस्वादङ्गात्' 'इणः षीध्वं लुङ्लिटां धोऽङ्गात्' इत्याद्यर्थमङ्गसंज्ञाया आवश्यकत्वात् । दिगिति । तदर्थस्त्वाक्षिप्तस्य शाब्दान्वयित्वाभावाद्विशेषणविशेष्यभावनिबन्धनतदन्तविधेरलाभ इति । उक्तार्थस्येति । यस्माद्विहितस्तदादेरित्यर्थः ।

ह्रस्वादिति ह्रस्वादित्यनुवर्त्तने । हे कतरदिति । प्रकृत्यकारस्य टिलोपेनापहारादिति भावः । नन्वङ्गात्परस्याः संबुद्धेरवयवस्य हलो लोप इत्युचितम्, संबुद्ध्याक्षिप्तस्य संबुद्ध्यैवान्वयस्योचितत्वादत आह—कुलेतीति । अत्र परत्वात्पूर्वरूपे उभयत आश्रयणेऽन्तादिवद्भावाभावात्तत्स्वीकारेऽपि ह्रस्वसंबुद्ध्योः पौर्वापर्यव्यवहारासम्भवात्, ताद्रूप्यान-

---

टिलोपेनापहारादिति । तेन रेफान्त एवाङ्गत्वमिति लोपो नेति भावः । उचितमिति । मूले एवमेव वृत्तिरुचिता, न त्वङ्गाद्धल् लुप्यते सम्बुद्धेश्चेदित्यङ्गादिस्यस्य हल्विशेषणतया वृत्तिरिति भावः । औचित्यमेव दर्शयति । सम्बुद्ध्याक्षिप्तस्येति । अन्ये त्वङ्गाक्षेपाभावेप्येङ्ह्रस्वात्परा या सम्बुद्धिस्तस्या हलो लोप इत्यर्थेन हे कतरदित्यादौ लोपवारणादङ्गाक्षेपो व्यर्थ इत्याशङ्क्याह कुलेतीति मूलमवतारयन्ति । तथाचात्र लोपसम्पादनार्थमेङ्ह्रस्वादित्यस्य हल्विशेषणत्वमावश्यकम् । तथा सति हे कतरदित्यत्र दकारस्यापि लोपः प्रसज्येत अतस्तद्वारणायाङ्गाक्षेप आवश्यक इति भावः । परत्वादिति । सम्बुद्धिलोपापेक्षयेत्यादिः । न च लोपस्यापरनिमित्तकत्वेनान्तरङ्गत्वमिति वाच्यम् । पूर्वरूपस्यापि प्रतिपदोक्तत्वेन तत्त्वस्य तुल्यत्वात् । अन्तादिवद्भावाभावादिति । अन्तादिशब्दाभ्यां पूर्वपरशब्दाभ्याञ्च विरोधस्य पुरस्स्फूर्तिकत्वात्तदभाव इत्याशयः । ननु तवापि हलि सम्बुद्ध्यवयवत्वाय अमि सम्बुद्धित्वं ह्रस्वान्तेऽङ्गत्वमित्युभयत आश्रयणमावश्यकमेवेत्यत आह । तत्स्वीकारेऽपीति । अन्तादिवत्त्वस्वीकारेऽपीत्यर्थः । व्यवहारासम्भवादिति । अन्तादिवच्चेति शास्त्रबलादेकस्मिन्नपि विरुद्धव्यवहारद्वयमस्तु, तथापि ह्रस्वसम्बुद्ध्योः पौर्वापर्यातिदेशबोधकशास्त्राभावेन तादृशव्यवहारासम्भव इति भावः । ननु पौर्वापर्यघटितह्रस्वान्ताङ्गात्परसम्बुद्धित्वरूपविशिष्टधर्मस्य स्थानिवत्सूत्रेणातिदेशोऽस्त्वित्यत आह । ताद्रूप्येति । ताद्रूप्यस्य ह्रस्वान्ताङ्गा-

तिदेशाच्च ह्रस्वान्ताङ्गात्परसम्बुद्धेरभावान्मलोपो न स्यात् । एवञ्च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति भावः । एतदर्थमेव 'हल्लुप्यते सम्बुद्धेश्चेत्' इति व्याख्यातम् । मस्य सम्बुद्धित्वाभावाद् । अर्द्धविकारेणैकदेशविकृतन्यायेनापि न संबुद्धित्वम् । एकवचनसञ्ज्ञासंबुद्धिसंज्ञयोरक्तपरिमाणनिष्ठतया तयोस्तेन न्यायेनालाभाच्च । मकारस्यादेशत्वाभावाच्च नात्र स्थानिवद्भावः । अत एव राममित्यादौ 'सुपि च' इति दीर्घो न । न च संबुद्धित्वस्य

---

त्परसम्बुद्धित्वस्यानतिदेशादशास्त्रीयत्वेन वर्णमात्रवृत्तिधर्मघटितधर्मत्वेन च तेनाप्यतिदेष्टुमशक्यत्वादित्यर्थः । मलोपो न स्यादिति । अङ्गादित्यस्य सम्बुद्धिविशेषणत्व इत्यादिः । हल्विशेषणत्वे तु ह्रस्वसम्बुद्ध्योः पौर्वापर्यानपेक्षणादुभयत आश्रयणेनादोष इति भावः । अन्याक्षिप्तस्येति । अन्योपस्थापितस्येत्यर्थः । एतदर्थमेवेति । अन्याक्षिप्तस्यान्यत्रान्वयसूचनार्थमेवेत्यर्थः । तथान्वये हेतुमाह । मस्येति । ननु पूर्वान्तवद्भावेन ह्रस्वान्ताङ्गत्वमेकदेशविकृतन्यायेन मस्य सम्बुद्धित्वं, तस्यैव च व्यपदेशिवद्भावेन तदवयवत्वमिति सम्बुद्धिविशेषणतायामपि लोपो भवत्येवेत्यत आह । अर्धविकार इति । अत्रार्धशब्दो भागाभिप्रायेण, न तु मात्रया । ननु क्लृप्त इत्यादौ ऋकारान्तर्गतरेफस्य लत्वे द्वित्वाद्यर्थमेकदेशविकृतन्यायेनाच्त्वमिति वदता भाष्यकृताऽर्धविकारेपि स न्यायस्स्वीकृत एव ऋलक्सूत्र इत्यत आह । एकवचनसंज्ञेति । तत्रैतन्न्यायाप्रवृत्तिस्तु सजुषमाचष्टे सगित्यादौ रुत्वाभावार्थमवश्यमङ्गीकार्येति भावः । ननु स्थानिवद्भावेन सम्बुद्धित्वाल्लोपो भविष्यतीत्यत आह । मकारस्येति । अत एव=मस्यादेशत्वाभावादेव । अन्यथा सम्बुद्धित्ववत्सुप्त्वमपि मकारे स्यात् । तथा च सुपि चेति दीर्घः स्यादिति भावः । सिद्धान्तार्थेपि स्थानिवद्भावप्रयोज्यात्मात्रवृत्तिधर्मनिमित्तके विधौ न स्थानिवदिति मूलकृन्मतेन शङ्कते । न चेति ।

**सकारमात्रनिष्ठत्वेन स्थानिभूताल्धर्मत्वेनामः संबुद्धित्वाभावे कथं मस्य संबुद्ध्यवयवत्वमिति वाच्यम् । सुप्सञ्ज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्ये जायमानैकवचनसञ्ज्ञाया विशिष्टे सत्त्वेन संबुद्धिसञ्ज्ञायामित्सञ्ज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात् ।**

---

**सकारमात्रनिष्ठेति** । सुप्प्रत्याहारवेलायां लोपश्च बलवत्तर इत्युक्तेरुकारनिवृत्त्या सकारमात्रस्यैव सुप्संज्ञायां तस्यैवैकवचनसम्बुद्धिसंज्ञे इति तस्य तन्निष्ठत्वमिति भावः । **स्थानिभूताल्धर्मत्वेनेति** । स्थान्यलसाधारणधर्मत्वेनेत्यर्थः । स्थानिवद्भावप्रयोज्याल्मात्रवृत्तिधर्मत्वेनेति यावत् । आदिरन्त्येनेत्यत्रत्यान्त्यपदस्य सादृश्ये लक्षणानङ्गीकर्तृमूलकृन्मतेनैव समाधत्ते । **उकारविशिष्टे सत्त्वेनेति** । तन्मते ह्युक्तरीत्या मध्यगानुबन्धनिवृत्तावपीकस्सुप इत्यादिनिर्देशान्यथानुपपत्त्याऽद्यन्तपदपरामर्शयोग्ययोः प्रागनिवृत्तिरित्यस्यावश्यं वक्तव्यतया स्वपदेन विशिष्टस्यैव परामर्शात्तस्योकारविशिष्टे सत्त्वमिति भावः । **विशिष्टस्यैवोद्देश्यत्वेनेति** । एवञ्च प्रकृते सम्बुद्धित्वस्याल्वृत्तित्वेपि न तन्मात्रवृत्तित्वमिति रुत्वस्येवातिदेशो भवत्येवेति भावः । **तस्येति** । सम्बुद्धिलोपस्येति भावः । **अनल्विधित्वादिति** । स्थानिवद्भावप्रयोज्याल्मात्रवृत्तिधर्मनिमित्तकविधित्वाभावादित्यर्थः । स्वमते तु सोरमित्युक्तत्वात्सूत्रोपात्तस्थानिताया अल्त्वव्याप्यधर्मावच्छिन्नत्वाभावान्नानल्विधाविति निषेध इति बोध्यम् । इमे शङ्कासमाधाने यथाश्रुतसूत्ररीत्या, सिद्धान्तभूते सुः सम्बुद्धिरिति न्यासे तु शब्दतस्समुदायस्य संज्ञित्वेनाश्रयणान्न दोषशङ्काकलङ्कोपीत्यवधेयम् ॥

यत्त्वत्राचार्याः, स्थानिभूताल्धर्मत्वेनेति । अल्स्थानिभूतो यस्सुरिति समुदायः तद्धर्मत्वाभावेनेत्यर्थः । तथा च स्थानिवदादेश इत्यत्र स्थानिपदस्यास्यादेशविधायकशास्त्रघटकस्थानषष्ठ्यन्तपदजन्यप्राथमिकोपस्थितिविषयपरत्वेऽपि सम्बुद्धित्वस्य तद्धर्मत्वाभावादतिदेशो न स्यादिति शङ्काभिप्रायः । तस्यानल्वि-

**एतेनाव्डादेशेनैव नपुंसकत्वाभिव्यक्तौ कुलेतीति व्यर्थमित्यपास्तम् । एङ्ग्रहणं किमिति । हरे विष्णो इत्यादावङ्गाधिकारस्थात् परनिमित्तापेक्षाच्च गुणात्पूर्वं ह्रस्वान्तत्वादेव सिद्धिः ।**

---

धित्वादिति । तस्य सम्बुद्धित्वस्यानल्धर्मत्वादित्यर्थः । यथाश्रुतौ पूर्वोत्तरपक्षावसङ्गतावेव । सम्बुद्धित्वस्य स्थानिभूताल्धर्मत्वशङ्कायाः समुदायस्याम्स्थानित्वोपपादनेनैव निवारणीयतया सम्बुद्धिसंज्ञायाः समुदायोद्देश्यकत्वोपपादनस्यासङ्गतत्वात् । इदमयुक्तम् । पूर्वोत्तरपक्षाभ्यां सम्बुद्ध्यवयवत्वस्य विशेषणताया एवावगमात् । तत्र चोक्तरीत्याऽदोषादित्याहुः । तत्तु ग्रन्थाक्षराननुगुणत्वादुपेक्ष्यम् ॥

यदप्यत्र वाराणसेयाः । 'सम्बुद्धित्वाभाव इति प्रतीकमुपादाय अतोमित्यत्र स्थानितायास्सुत्वावच्छिन्नत्वेनाल्त्वव्याप्यधर्मावच्छिन्नत्वस्याभावात्सम्बुद्धित्वस्य हे कतरदित्यादावदिति समुदाये सत्त्वेनाल्त्वव्याप्यत्वाभावाच्चाद्यार्थकानल्विधावित्यस्य च प्राप्त्यभावेन सम्बुद्धित्वैकवचनत्वे स्थानिवद्भावेनायास्यत एवेति चिन्त्यमि'ति वदन्ति । तदप्यसत् । अस्य ग्रन्थस्य मूलकृन्मतानुसारेण प्रवृत्ततया तन्मतेऽनल्विधाविति निषेधप्रवृत्तेस्सुवचत्वात् । सम्बुद्धित्वस्यादितिसमुदाये सत्त्वेनाल्त्वव्याप्यत्वं नेति तु वक्तुमशक्यम् । आदेशेपि सम्बुद्धित्वस्य स्थानिवत्त्वेनैवानेयतया अमदादेशयोर्विशेषाभावादस्यामवस्थायां तत्र सम्बुद्धित्वस्य दुर्वचत्वात् । **एतेनेति** । उक्तरीत्या कुलेत्यस्य शङ्कासमाधानपरतया योजनेनेत्यर्थः ॥

**एङ्ग्रहणं** किमिति शङ्कित्राशयं वर्णयति । **हर** इत्यादिना । **अङ्गाधिकारस्थादिति** । एतेन संज्ञासापेक्षत्वेन गुणस्य बहिरङ्गत्वमिति सूचितम् । संज्ञाकृतबहिरङ्गत्वस्यान्यत्र निराकृतत्वादाह । **परनिमित्तापेक्षत्वाच्चेति** । ननु हे हरे इत्यादौ तथा लोपसिद्धावपि हे स इत्यादौ सम्बुद्धिलोपार्थमेङ्ग्रहण-

**सेप्रभृतीनां सम्बोधने प्रयोगसत्त्वे एग्रहणेनैव सिद्धे प्रत्याहारग्रहणं व्यर्थमिति प्रश्नः। ह्रे इति। सामर्थ्यादेवात्र सन्निपातपरिभाषा न। गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च। अत एव 'हे लक्ष्मि' इत्यादौ लोपसिद्धिः। परत्वादिति। अभ्युच्चयः।**

---

मावश्यकमेवेत्यत आह। **सेप्रभृतीनामिति। प्रयोगसत्त्व इति।** अनेन नान्तःपादमिति सूत्रस्थेन 'न चैङः पदान्तात्परो ह्रास्ति' इति भाष्येण च विरोधात्सावीदृशानामनभिधानेनैकारग्रहणस्यापि न प्रयोजनमिति सूचितम्। सौ पदत्वञ्च स्वादिष्विति योगविभागेन साधितमेव। **एग्रहणेनैवेति।** स्मृतवादिषु तु णित्त्वाद्वृद्धावेङ्ग्रहणसत्त्वेपि न लोपप्राप्तिरिति न तदर्थं प्रत्याहार-ग्रहणमिति भावः। ननु सम्बुद्धिनिमित्तके गुणे कृते सन्निपातपरिभाषया सम्बुद्धिलोपो न स्यादत आह। **सामर्थ्यादेवेति।** प्रत्याहारग्रहणसामर्थ्या देवेत्यर्थः। तद्धि हे विष्णो इत्यादौ सम्बुद्धिलोपार्थं कृतम्। तत्र यद्यनया परिभाषया लोपो न स्यात्तदा तदनर्थकमेव स्यादिति भावः। **अत्रेति।** सम्बुद्धि-लोपविषय इत्यर्थः। ननु धर्मिग्राहकसाजात्यादेङन्तात्परसम्बुद्धिलोपविषय एव तस्या अप्रवृत्तिर्लभ्येत, न तु ह्रस्वान्तात्परसम्बुद्धिलोपविषयेपि, तथा च हे लक्ष्मीत्यादौ सम्बुद्धिनिमित्तकह्रस्वोत्तरं लोपो न स्यादित्यत आह। **गुणात्स-म्बुद्धेरिति। सामर्थ्याच्चेति।** हे लक्ष्मीत्यादौ यद्यनया परिभाषया लोपो न स्यात्तदा ह्रस्वान्ताङ्गात्परसम्बुद्धिलोपविधानस्य हे रामेत्यादावकारांश एव प्रयोजनं स्यात्। अन्यत्र लोपात्प्राग्गुणप्रवृत्तेः। तथा सति गुणात्सम्बुद्धेरित्यु-क्तावपि तत्र लोपसिद्धौ सामान्यतः क्रियमाणमेङ्ह्रस्वग्रहणं सम्बुद्धिलोपमात्र-विषये तस्या अप्रवृत्तिं कल्पयतीति भावः। **अत एवेति।** ह्रस्वांशेपि तत्परि-भाषाया अप्रवृत्तेरेवेत्यर्थः। असमबलत्वेन परत्वासम्भवादाह। **अभ्युच्चय इति।** नित्यानित्ययोर्विप्रतिषेधायोगादिति भावः। ननु नित्यादप्यन्तरङ्गत्वस्य

नित्यत्वाच्चेति । चेनानवकाशत्वसङ्ग्रहः । नपुंसके अपो इत्यादाव-स्यापि लुका बाध इत्यन्यत् ॥

अमि पूर्वः ॥ पूर्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणं तु राम-मित्यादौ द्विमात्रवारणाय । लशकु ॥ समाहारद्वन्द्वः । अतद्धिते किम् । 'कर्णललाटात्कनलङ्कारे' कर्णिका । कित्त्वफलन्त्वादिवृद्धिः

---

बलवत्त्वेन लोपस्य निरुक्तरीत्याऽन्तरङ्गत्वेन चेदमसङ्गतमित्यत आह । चेनेति । अनवकाशत्वेति । येन नाप्राप्तिन्यायेनोत्सर्गप्रवृत्त्युत्तरं चारितार्थ्येऽपि बाध इति बोध्यम् । नन्वेवं गुणे कृते लोपाप्रसङ्ग इति चेन्न । एङन्तत्वनिमित्तकलोप-प्रवृत्तेस्सुलभत्वात् । आशङ्काग्रन्थस्त्वसम्भव एव बाधकत्वमिति वार्त्तिकमतरीत्या प्रवृत्त इति नासङ्गतिरित्यवधेयम् । ननु सम्बुद्धिगुणस्य नानवकाशत्वम् । अपो इत्यादौ लुका बाधेनैङ्ह्रस्वादित्यस्याप्रवृत्तौ गुणस्य चारितार्थ्यादित्यत आह । नपुंसक इति । अस्यापि=एङ्ह्रस्वादित्यस्यापि । अन्यदिति । अहान्निति सूत्रस्थशेखरोक्तदिशा लुका बाधेऽपि लोपशास्त्रीयोद्देश्यतावच्छेदकसत्त्वेन तस्य प्राप्तियोग्यताया अक्षतत्वेन गुणस्य लोपशास्त्राप्राप्तियोग्ये विषयेऽचारितार्थ्य-रूपमपवादत्वमक्षतमेवेति भावः ॥

द्विमात्रवारणायेति । अन्यथाऽन्तरतम्यात्पूर्वसवर्णो द्विमात्रः स्यात् । कृते तु पूर्वग्रहणे यः पूर्वः श्रुतः स एव भवतीत्यर्थान्न दोष इति भावः । यद्यप्यत्र पूर्वग्रहणाभावेऽपि प्रथमयोरिति पूर्वसवर्णदीर्घेणैव सिद्धावेतद्वचनारम्भ-सामर्थ्यादेव द्विमात्रो वारयितुं शक्यस्तथापि कुमारीमित्यादौ त्रिमात्रव्यावृत्त्यर्थं तदावश्यकमिति बोध्यम् । मूले आदिपदेन कुमारीमित्यस्य ग्रहणम् । द्विमात्रेति तु त्रिमात्रस्याप्युपलक्षणम् ॥

समाहारद्वन्द्व इति । अन्यथा बहुवचनापत्तेः । कित्त्वफलन्त्विति

**स्यात्। आदिग्रहणाद् बृङः षाकनो न। तस्य कित्त्वे गुणो न स्यात्। तस्माच्छ॥ पुंसीति पञ्चम्यर्थे सप्तमी। पुंसो विहितस्येत्यर्थः, तत्र विद्यमानाद्विहितस्येत्यर्थो वा। तस्मादिति किम्। एतान् गाः पश्य। पुंसि किम्। मतीः॥**

---

एतेन फलाभावान्नेत्त्वमिति वक्तुमशक्यमिति सूचितम्। नन्वादिवृद्धेः फलत्वे तस्य स्वरस्य चाञ्प्रत्ययविधानेनैव सिद्धौ ककारोच्चारणं व्यर्थं स्यादिति चेन्न। कित्स्वरनित्स्वरयोः पर्यायापादनरूपफलस्यापि वक्तुं शक्यत्वात्। **गुणो न स्यादिति**। वराक इत्यादौ। विभक्तिव्यत्ययकल्पनापेक्षया लाघवादाह। **तत्र विद्यमानादिति**॥

**तस्मादिति किमिति**। अयमत्र शङ्काशयः। अत्र सूत्रे तस्मादिति पदाभावेप्यकस्सवर्ण इति सूत्रादक इत्यनुवर्त्य अकः परस्य शसो नत्वविधानेन लिह इत्यादावदोषः। न चैवमादेः परस्येत्यादिभूताकारस्य नकारादेशे सुपि चेति दीर्घेण रामानिति सिद्धावपि हरीनिति न सिद्ध्येदिति वाच्यम्। शसः सो नः पुंसीति न्यासेनादोषात्। अकः परस्य शसः सस्य न इत्यर्थः। एकश इत्यादौ तद्धितशसि तु न दोषः। सुप्सञ्ज्ञके शसि शकारं परित्यज्य ककाराद्यनुबन्धकरणेन कसः सो नः पुंसीति न्यासेनात्र तदग्रहणात्। न च नत्वस्य तक्रन्यायेन पूर्वसवर्णदीर्घबाधकतया तत्प्रवृत्त्युत्तरं दीर्घो न स्यादिति वाच्यम्। दीर्घोत्तरमकः परशसोऽभावेन नत्वाप्राप्त्या तेन न्यायेन बाधकत्वस्य वक्तुमशक्यत्वात्। न च तितऊनित्यत्र गौरी आनित्यत्र रामशब्दस्य ऋशब्देन समासे ऋत्यक इति प्रकृतिभावे राम ऋनित्यत्र च दीर्घोत्तरं नत्वस्य चारितार्थ्येन तेन न्यायेन बाधो दुर्वार एवेति वाच्यम्। अक इत्यस्य सकारविशेषणत्वेनादोषात्। अकच सामर्थ्यात्प्रत्ययानवयव एव गृह्यते। तथा च पूर्वसवर्णदीर्घोत्तरमेव नत्वप्रवृत्तिरिति न कश्चिद्दोष इति। **एतान् गा इति**। **अकः**

अट्कु ॥ बाधितुमिति। तेन पर्याणद्धमित्यत्र 'उपसर्गादसमासेऽपि' इति णत्वसिद्धिरिति भावः। अयोगवाहानामिति। न विद्यते योगो वर्णसामाम्नाये येषां तेऽयोगाः। अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः। तेच ते वाहयन्ति प्रयोगं निर्वाहयन्ति ते वाहाः। ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः। अत एवोरःकेणे-

---

परस्य शसवयवसकारस्य न इत्यर्थे गा इत्यत्रात्वोत्तरं नत्वं स्यात्। तत्र नत्ववारणायाक इत्यस्य शस्विशेषणत्वे निरुक्तरीत्या नत्वस्य दीर्घबाधकतया तत्प्रवृत्त्युत्तरं दीर्घप्रवृत्त्या एतानित्यस्यासिद्धिः। अतस्तस्मादिति पदमावश्यकमिति समाधानग्रन्थाशयः। व्याख्याद्वयेऽप्येकस्मिन्नेव वाक्ये दोषप्रदर्शनार्थमेतान् गाः पश्येति वाक्योपन्यास इत्यवधेयम् ॥

केचित्तु एतानित्यस्योपादानं गो इत्यस्य पुंलिङ्गत्वद्योतनायेति वदन्ति ॥

एतेन तस्माच्छसो नः पुंसीति सूत्रे तस्मात्पदं वृथा। अकश्शसोऽनङादेशे हरीनित्यपि सिध्यति। घेर्ङितीति गुणः कर्मधारयान्न प्रसज्यते। अन्यानुबन्धकरणादेकदेशोपि न दुष्यति। एतावता प्रयासेन लक्ष्यं साधयितुं क्षमः। बालो नेति चकाराऽसौ तस्मादिति पदं मुनिः ॥ इति बालोपाध्यायोक्तमपास्तम्। नाडि, नुमि, नुकि वा तक्रन्यायेन दीर्घबाधात्तदुत्तरं दीर्घप्रवृत्तौ रामानित्याद्यसिद्धेः ॥

णत्वसिद्धिरिति। पदव्यवायेपीत्यत्र पदशब्दः आङ्भिन्नपदपर इत्यत्र तात्पर्यग्राहकमत्रत्याङ्ग्रहणमिति भावः। ननु पदव्यवायेपीत्यत्रातद्धित इति वार्तिकाद्व्यवधायकस्य पदस्य णत्वाश्रयातिरिक्त तद्धितभिन्ने परतो णत्वं नेत्यर्थलाभात्प्रकृते व्यवधायकस्य पदस्याङो णत्वाश्रयातिरिक्ततद्धितभिन्नपरत्वाभावान्निषेधस्य प्राप्तिरेव नेति किमर्थमाङ्ग्रहणमिति चेन्न। पदव्यवाय

त्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः । तदुक्तं भाष्ये–'नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्' इति । आदर्शोनेत्यादौ तु नातिप्रसङ्गः । अडतिरिक्तव्यवायात् । 'तस्मात्' इत्युप-

---

इत्यत्र सप्तमीसमासमाश्रित्यातद्धित इति वार्तिकप्रत्याख्यानपरभाष्येण फलाभेदाय वार्तिकारम्भेपि व्यवधायकपदस्य णत्वाश्रयप्रत्ययातिरिक्ततद्धितभिन्नपरत्वे निषेध इत्यर्थस्यावश्यमङ्गीकार्यतया प्रकृते व्यवधायकस्याङः णत्वाश्रयप्रत्ययातिरिक्ततद्धितभिन्ननद्धशब्दपरत्वस्य सत्त्वेन निषेधप्राप्तेस्सुवचत्वात् । अयोगवाहानामट्सूपदेशे फलमाह । अत एवेति । नुम्ग्रहणप्रत्याख्याने भाष्यसम्मतिं दर्शयति । तदुक्तमिति । नन्वेतत्सूत्रारम्भाद्रषाभ्यामिति पञ्चम्याऽत्र निर्दिष्टांशविकलायास्तस्मादितिपरिभाषाया उपस्थितावादर्शोनेत्यादावटा अन्येन च व्यवाये णत्वापत्तिरत आह । आदर्शोनेत्यादाविति । अडतिरिक्तव्यवायादिति ॥

अयं भावः । तत्तत्प्रदेशेषु तत्तल्लिङ्गैरुपतिष्ठमाने तस्मिन्निति तस्मादिति परिभाषे यावानर्थस्सिद्धो बाधितो वा तमंशं परित्यज्यान्यांशविशिष्टे उपतिष्ठेते । यथा प्रत्ययविधौ परश्चेत्यधिकारेणोत्तरत्वांशस्य सिद्धत्वात्, प्रत्ययस्थादित्यत्र पूर्वस्येत्युक्त्या उत्तरत्वांशस्य बाधितत्वाच्च तदंशविकलायास्तस्मादिति परिभाषाया उपस्थितिः । तत्तत्प्रदेशेष्वेते अव्यवहितत्वांशमुपस्थापयन्त्यौ प्रायेण निमित्तकार्यिणोः तत्तद्वर्णव्यवधानराहित्यं बोधयतः । एवञ्च रषाभ्यामुत्तरस्य नकारस्यानेनाडादिव्यवाये णत्वविधानात्तद्व्यवधानराहित्यस्य बाधितत्वेन तस्मादिति परिभाषा तदतिरिक्तवर्णव्यवधानराहित्यं बोधयतीति वक्तुमुचितम् । न त्वट्कुप्वाङित्युक्त्या सर्वथा निर्दिष्टांशस्यानुपस्थितिः । तथा सति पुगन्तलघूपधस्येत्यादावपि पुगन्तलघूपधाङ्गावयवस्येकस्सार्वधातुकार्धधातुकाव्यवहितपूर्वत्वस्य बाधितत्वादव्यवहितत्वांशस्य सुतरामनुपस्थितौ भिनत्तीत्यादौ गुणा-

स्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारे अडादिव्यतिरिक्ताव्यवहित-परम् । तदुक्तं—'णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो, न वाऽन्येन व्यवेतत्वात्' इति ग्रन्थेन । एतदुत्तरम् 'अटा व्यवायसत्त्वात्प्राप्नोत्येव, अटैव व्यवाये इत्यर्थात्' इत्यादिभाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरम् । 'चुटुतुलशर्व्यवाये न' इति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धे 'अट्कुप्वाङ्' इत्युक्तथा 'एतैरेव

---

पत्तिः । एवं प्रत्ययस्थादित्यत्रापीत्त्वस्य साक्षादुद्देश्यविशेषणत्वमिति पक्षे कात्पूर्वाकारे आवव्यवधानस्य बाधितत्वात्सुतरां तदंशस्याप्रवृत्तौ रथकट्येत्यादौ थकारोत्तराकारस्यापीत्त्वं स्यात् । आपीत्यस्य ककारविशेषणत्वमिति पक्षेऽप्यदन्तादेवापो विधानेनाव्यवहितत्वस्य ककारे बाधितत्वात्सुतरां तदंशस्याप्रवृत्तौ पाचकपुत्रिकेत्यादौ चकारोत्तराकारस्यापीत्त्वापत्तिः। येन नाव्यवधानमिति न्यायोपि तत्र तत्राव्यवहितत्वांशोपस्थितिमूलक एव नापूर्व इति न तेनाप्यत्र निर्वाहः । एवञ्च प्रकृतसूत्रे तस्मादितिपरिभाषयाऽव्यवहितत्वांशोपस्थितौ रषाभ्यामुत्तरस्याडाद्यतिरिक्तवर्णव्यवधानरहितस्य नस्य णत्वं भवतीत्यर्थेन प्रकृतेऽडतिरिक्तव्यवायाण्णत्वं न भवतीति । एतेनास्य ग्रन्थस्य चिन्त्यतां वदन्त औत्तराहाः परास्ताः ॥

उक्तार्थे मानन्दर्शयति । तदुक्तमिति । अन्येन व्यवेतत्वादिति । पूर्वोक्तयुक्त्यनङ्गीकारे इदमसङ्गतं स्यादिति भावः । नन्वेवं सत्यटा व्यवायसत्त्वात्प्राप्नोत्येवेति तदुत्तरभाष्यासङ्गतिरत आह। एकदेशिनोरिति । तस्मादिति परिभाषोपस्थित्या अडाद्यतिरिक्तव्यवाये सिद्धान्तिना णत्वे वारितेऽपि तदज्ञानेन प्रवृत्तस्य अडादिग्रहणसामर्थ्यमूलकावधारणगर्भव्याख्यानेन णत्ववारणपरस्यैतद्भाष्यस्यैकदेश्युक्तित्वमिति भावः । अस्यैकदेश्युक्तित्वे बीजन्दर्शयति । चुटुतुलेति । इत्थं हि तत्र भाष्यम् । न वान्येन व्यवेतत्वादिति वार्तिकोत्तरं "यद्यप्य-

न्येनात्र व्यवायः अटापि त्वस्ति व्यवायः, तत्राङ्व्यवाय इति प्राप्नोति । अटैव व्यवाये भवति । किं वक्तव्यमेतत् । न हि कथमनुच्यमानं गंस्यते । अङ्ग्रहण-सामर्थ्यात् । यदि ह्यटान्येन च व्यवाये स्यादङ्ग्रहणमनर्थकं स्यात् । व्यवाये नो णो भवतीत्येव ब्रूयात्, अस्त्यन्यदङ्ग्रहणस्य प्रयोजनम्, किम्? योऽनिर्दिष्टैरेव व्यवायस्तत्र माभूत् । कृत्स्नम्, मृत्स्नेति । यद्येतावत्प्रयोजनं स्यात्, शर्व्यवाये नेत्येव ब्रूयादिति । अयमाशयः । यद्यटाऽन्येन च व्यवाये णत्वं स्यात्तदा व्यवाय इत्येतन्मात्रोक्तावप्यङ्व्यवायमन्तरेणान्येन केवलेन व्यवायासम्भवादङ्व्यवायस्याक्षिप्तत्वादङ्ग्रहणमटैव व्यवाय इत्यवधारणार्थं विज्ञायते। न च व्यवाय इत्येतावन्मात्रोक्तौ कृत्स्नं मृत्स्नेत्यादावपि णत्वं स्यादतस्तत्र णत्ववारणार्थमेवाडादिग्रहणमिति वाच्यम् । तावन्मात्रफलकत्वे विधिप्रकरणे व्यवायेपीत्येतावत्सूत्रं कृत्वा निषेधप्रकरणे पदव्यावायेपीत्यस्यानन्तरं "चुटुतुलशर्भिः, इति न्यासेनैव सिद्धावडादिग्रहणादटैव व्यवाय इत्यर्थस्सम्पद्यत इति"। न चैवं न्यासे आदर्शेनेत्यादावपि णत्वं निषिध्येत । अतस्तत्र णत्वसिद्ध्यर्थमेव तथा नोक्तमिति वाच्यम् । विधिप्रकरणे व्यवायेपीति सूत्रमकृत्वा निषेधप्रकरणे एवं न्यासकरणेन तत्सिद्धेः। तथा सति रषाभ्यामिति पञ्चमीनिर्देशाद्व्यवधानमात्रे णत्वस्याप्राप्तावस्य सूत्रस्यैतैरेव व्यवाये णत्वञ्च भवति । अडादिसहितव्यवधाने तु भवत्येवेति नियमपरतया व्याख्यातुं शक्यत्वेन तत्फलस्य सिद्धत्वात् । अत्र कल्पे पर्याणद्धमित्यत्र णत्वसिद्ध्यर्थं विधिप्रकरणे रषाभ्यमित्यस्यानन्तरं "आङः" इत्यधिकारोपि कार्य इति बोध्यम् । यद्वा निषेधप्रकरणे पदव्यवायेपीति सूत्रानन्तरं "चुटुतुलशर्मात्रेण"तिन्यासः कार्यः । विधिप्रकरणे च रषाभ्यामित्यस्यानन्तरमाङ इत्यधिकारः कार्यः। रामेणेत्यादौ णत्वसिद्ध्यर्थं विधिप्रकरणे व्यवायेपीति च सूत्रं कार्यम् । शर्चात्र तुसाहचर्यादयोगवाहभिन्न एव ग्राह्यः । तेन कृमिशब्दादाचक्षाणणिजन्ता

व्यवाये' इत्यर्थं वदता तस्यास्तदुक्तित्वध्वननात्। एतद्वार्तिकमतम्। भाष्ये तु 'रषाभ्याम्' इति सूत्रे 'ऋवर्णान्नस्य' इत्यस्य प्रत्याख्यानाय 'व्यवाये' इति योगं विभज्य 'अट्कुप्वाङ्नुम्भिः' इत्येतत् 'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैः' इत्यर्थकं व्याख्यातम्। तदा त्वादर्शेनेत्यादौ प्राप्तिरेव नेति बोद्ध्यम्। णत्वे इति।

---

त्विकपि शब्दपराङ्शब्देन षष्ठीसमासे शसि अल्लोपे मकारस्यानुस्वारे कृंणः पश्येत्यत्रानुस्वारेण व्यवायेऽनेन निषेधो न भवतीति न यथाश्रुतन्यासेनास्य फलभेदः। एवञ्चात्र कल्पे यथाश्रुतन्यासापेक्षया गौरवं स्फुटमेव। आद्यकल्पे तु मात्रालाघवस्य सत्त्वेपि प्रतिपत्तिगौरवमस्तीति न यथाश्रुतन्यासापेक्षया लाघवम्। एवञ्चात्र कल्पे गुर्वित्यस्य लघुभिन्नेत्यर्थः। न च भाष्ये "शर्व्यवाये न" इत्येतावन्मात्रस्यैव सूत्रस्य करणेनात्यन्तं लाघवमस्त्येवेति वाच्यम्। तथापि आर्श्नोत्, रचनारटनम्, रलनमित्यादौ निषेधार्थं तस्योपलक्षणतया उद्योते व्याख्यातत्वात्। एतेनात्र न्यासे यथाश्रुतन्यासापेक्षया लाघवस्य विद्यमानत्वेनास्यैकदेशयुक्तित्वकथनं चिन्त्यमेवेति वदन्त औत्तराहा, अन्ये च परास्ताः। वार्तिकमतमिति। मातॄणामित्यादौ णत्वार्थं "ऋवर्णान्नस्य णत्वं वाच्यम्" इति वचनमारब्धवतो वार्तिककारस्य मतमित्यर्थः। तन्मते योगविभागाभावेनादर्शेनेत्यादौ णत्वस्यैवमेव वारणीयत्वादिति भावः। प्राप्तिरेव नेति। ननु नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरितिपक्षे व्यवाये णत्वम्भवत्यडादिभिन्नैराक्षरसमाम्नायिकैर्व्यवाये नेत्यर्थात्प्राप्तिरेव नेति वक्तुं युक्तम्। स्वसिद्धान्तभूतविधिमुखेन प्रवृत्तिरिति पक्षे त्वाक्षरसमाम्नायिकातिरिक्तैर्व्यवाये णत्वं भवत्यडादिभिर्व्यवाये णत्वम्भवतीत्येवार्थात्तस्य चात्र सत्त्वात्प्राप्तिरस्त्येवेति चेन्न। अट्कुप्वाङ्नुमिति पूर्वसूत्रे व्यवायेऽपीत्यपकृष्य रषाभ्यामव्यवहितपरस्याडादिभिर्व्यवाये णत्वम्भवतीत्यर्थेन निरुक्तरीत्याऽडतिरिक्तव्यवाये णत्वा-

णकारे इत्यर्थः । पदान्तस्य ॥ 'न भाभू-' इति सूत्रान्नेति वर्त्तते । अत्र सूत्रे 'अनन्तरस्य' इत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या । 'अपदान्तस्य' इत्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात् ॥

यस्मात्प्र ॥ 'यस्माद्' इति 'तदादि' इतितच्छब्दाकाङ्क्षापूरणाय । तदादीति । तत्-प्रकृतिरूपमादिर्यस्येत्यर्थः । प्रत्यासत्तिन्या-

---

प्राप्तेस्सुवचत्वात् । एवं व्यवायेपीत्युत्तरसूत्रेपि रषाभ्यामव्यवहितपरस्यानाक्षरसमाम्नायिकैर्व्यवाये णत्वम्भवतीत्यर्थेन कुशेनेत्यादावाक्षरसमाम्नायिकेन व्यवाये न णत्वप्रसङ्गः । न चैवं सति मृगेणेत्यादावडतिरिक्ताज्भक्त्या व्यवायसत्त्वात्पूर्वसूत्रेण, आक्षरसमाम्नायिकेन व्यवायसत्त्वादुत्तरसूत्रेण च णत्वं न स्यादिति वाच्यम् । व्यवायेपीति सूत्रेऽट्कुप्वाङित्यनुवर्त्य रषाभ्यामव्यवहितपरस्याडादिभिर्व्यवाये णत्वम्भवत्यनाक्षरसमाम्नायिकैर्व्यवाये णत्वम्भवतीत्यर्थेनाडाद्यतिरिक्ताक्षरसमाम्नायिकव्यवधान एव णत्वाप्रवृत्तेर्लाभेनात्र णत्वस्य सुलभत्वात् । एतेन 'प्राप्तिरेव ने'तिप्रतीकमुपादायास्य ग्रन्थस्य चिन्त्यतां वदन्त औत्तराहाः परास्ताः । णकार इत्यर्थ इति । ऋलक्सूत्रस्थोद्योतोक्तदिशा णपदशक्यार्थ एव भावप्रत्ययस्य विधानेन कुकुत्वपदयोरिव णणत्वपदयोः पर्यायत्वादयमर्थो लभ्यत इति भावः ॥

न्यायानामिति । एकस्यैव विषयभेदाद्बहुत्वारोपेण बहुवचनम् । तत्र मानन्दर्शयति । अपदान्तस्येति । णत्वविधायकेष्वपदान्तस्य मूर्धन्य इति सूत्रमनुवर्त्य पदान्तस्येति सूत्रं णग्रहणञ्च भाष्ये प्रत्याख्यातम् । तन्मते णत्वमात्रं पदान्तनकारे न प्रवर्तत इति तदेकवाक्यत्वायारम्भेप्येतन्न्यायस्याप्रवृत्तिराश्रयणीयेति भावः ॥

तच्छब्दाकाङ्क्षापूरणायेति । सति हि यस्मादित्यस्मिन् तदादीत्यनेन

यलब्धार्थमाह। तस्मिन्प्रत्यये इति। 'गुणः कृतात्मसंस्कारः' इति न्यायेनात्रापि 'तस्मिन्' इति परिभाषाप्रवृत्तिः। प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम्। स्त्री इयतीति। इदंशब्दाद्वतुपि वस्य 'किमिदंभ्यां वो घः' इति घादेशे तस्येयादेशे 'इदं किमोः' इतीशि 'यस्य' इति लोपे ङीपि इयतीति रूपम्। न च तत्र परतः स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न, यस्येतिलोपस्याभीयत्वादसिद्धत्वेनात्र तदप्राप्तेरिति वाच्यम्। व्याश्रयत्वेनाभीयासिद्धत्वाप्राप्तेः। तत्र हि समानाश्रयत्वमसिद्धत्वाश्रयशास्त्रसम्ब-

---

संज्ञी निर्देष्टुं शक्यते। अन्यथा पराम्रष्टव्यसंज्ञ्यनिर्देशे तदिति परामर्शासम्भवात्तदादीत्यसम्बद्धमेव स्यादिति भावः। न च प्रकृत्यादि प्रत्ययेऽङ्गमित्येव सूत्रमस्तु, किं गुरुन्यासेनेति वाच्यम्। प्रकृत्यादीत्यस्य यस्मात्प्रत्ययविधिस्तदादीत्यस्य च पर्यायत्वेन पर्यायेषु लाघवगौरवानादरात्। योगविभागेन प्रत्ययग्रहणपरिभाषालाभाय यथान्यासस्यावश्यकत्वाच्च। ननु यस्मात्प्रत्ययविधिरित्यस्य गुणशास्त्रत्वेन गुणानां च परार्थत्वादिति न्यायेनात्र तस्मिन्निति परिभाषाया अप्रवृत्तौ तस्मिन्प्रत्यये परत इति वृत्तिरसङ्गतेत्यत आह। गुणः कृतेति। गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। प्रधानस्योपकारे हि तथा भूयसि वर्तते, इति न्यायशरीरम्। एलादिसंस्कृतं पानीयं यथा पुरुषस्योपकारकं, तथा तस्मिन्निति परिभाषासहकारेण बोधजनकं सदिदं सूत्रं विधिशास्त्रोपकारकं भवतीति भावः। स्त्री इयतीति। विधिग्रहणाभावे यस्मात्प्रत्ययो दृष्टः तदादिशब्दस्वरूपस्य तस्मिन्प्रत्यये परत अङ्गसंज्ञेत्यर्थादत्र स्त्रीशब्दस्याङ्गसंज्ञायां स्त्रिया इतीयङ् स्यादिति भावः। तदप्राप्तेरिति। अजादिप्रत्ययपरत्वाभावादिति भावः। अत्र यस्येति लोपस्य स्थानिवत्त्वन्तु न भवति, पदसंस्कारपक्षेऽनादिष्टादचः पूर्वत्वाभावात्। वाक्यसंस्कारपक्षेपीयङि न पदान्तेति निषेधप्रवृत्तेः। असिद्धत्वाश्रयेति। अस्य तत्प्रयोगप्राप्तेत्यादिः। आश्रयण-

न्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम्। अस्ति च यस्येतिलोपापेक्षया 'स्त्रियाः' इति सूत्रेऽधिकस्य स्त्रीशब्दस्यापेक्षा। प्रत्यासत्त्याऽजादिप्रत्ययनिरूपिताङ्ग एवेयङ्प्रवृत्त्या स्त्रीशब्दस्य सुनिरूपिताङ्गत्वेऽपि न दोषः। विधिग्रहणादेव भनक्तीत्यादौ 'अतो

---

श्चेह स्थानित्वेनैव, निमित्तत्वेनैवेति नाग्रहः। किन्तु यथाकथञ्चित्। विकारकृतमतिरिक्तत्वन्तु नाश्रीयते। असिद्धवत्सूत्रस्य जहीत्युदाहरणपरभाष्यासङ्गत्यापत्तेः। तत्र पपुष इत्यत्रातो लोपस्यासिद्धत्वाश्रयसम्प्रसारणसम्बन्धिनिमित्तसमुदायापेक्षया न्यूननिमित्तकत्वेन समानाश्रयत्वाभावान्न तत्र सम्प्रसारणासिद्धत्वम्। एवं खन्धातोर्यङन्ताल्लुटि चाखायितेत्यादावसिद्धत्वाश्रयात्वशास्त्रीयनिमित्तसमुदायापेक्षया यस्य हल इति लोपस्यार्धधातुकरूपाधिकनिमित्तकत्वेन समानाश्रयत्वाभावान्न तत्रात्वासिद्धत्वम्। अतिरिक्तमपि पूर्वविध्युपात्ततावच्छेदकरूपेणाश्रितश्चेत्तदपि समानाश्रयमेव। अत एवापाचितरामित्यादौ प्राथमिकचिणो लुगपेक्षया द्वितीयेऽधिकस्य तरेत्यस्याश्रयणेपि चिणः परत्वेनैवाश्रयणाच्चिणो लुकि चिणोलुगसिद्ध इति सङ्गच्छते। स्पष्टश्चेदमुद्योते। एवञ्च स्त्री इयतीत्यत्रेदंसम्बन्धीश्स्थानिकयस्येतिलोपीयनिमित्तसमुदायापेक्षया स्त्रिया इतीयङि अधिकस्य स्त्रीशब्दस्यापेक्षणेन समानाश्रयत्वाभावान्न तत्र यस्येति लोपस्यासिद्धत्वमिति बोध्यम्। ननु विधिग्रहणसत्त्वेपि स्त्रीशब्दस्य सुनिरूपिताङ्गत्वमादायेयङ् दुर्वार इत्यत आह। प्रत्यासत्त्येति। ननु समानाश्रयत्वमसिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तान्यूनानतिरिक्तकार्यिनिमित्तान्यतरकत्वमेवास्तु, मास्तु विधिग्रहणमित्यत आह। विधिग्रहणादेवेति। केचित्तु प्रत्ययेऽङ्गमित्येव सिद्धे यस्मात्प्रत्ययस्तदादि प्रत्ययेऽङ्गमिति करणाद्यदवधिकपरत्वावच्छिन्नविधेयताश्रयो यः प्रत्ययः तस्मिन् परतस्तदादि अङ्गसंज्ञं स्यादिति स्त्री इयतीत्यादौ स्त्रीशब्दावधिकाव्यवहितपरत्वावच्छिन्नविधेयताश्रयत्वस्य वतुप्यभावात्स्त्रीशब्द-

**दीर्घो यञि' इति न। तदादिग्रहणं करोमीत्यादौ विकरणस्य गुणार्थम्। प्रत्ययविशिष्टस्येति। तथा सत्यङ्गेन प्रत्ययपरत्वलाभानापत्तौ वव्रश्चेत्यस्यासिद्धिः। किं च राजपुरुष इत्यादौ 'न लुमता' इति निषेधात्पूर्वपदे पदत्वाभावेन नलोपानापत्तिरिति भावः। ततोऽप्यधिकस्य वेति। देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्व-**

---

स्याङ्गसंज्ञा न प्राप्नोतीति विधिग्रहणं किमर्थमत आह। विधिग्रहणादितीत्यवतारयन्ति। यदि त्वतो दीर्घो यञीत्यत्र भूसुवोरित्यतस्तिङ्ग्रहणानुवृत्तेरानेमुगितिसूत्रे भाष्ये स्पष्टतयाऽत्राङ्गत्वेऽपि न दोष इत्युच्यते, तदा स्त्री ई पश्यतीत्यत्र स्त्रीशब्दस्याङ्गत्वापत्तिर्दोष इति बोध्यम्। अत्रेकारवाचकादिशब्दादमि पूर्वरूपे परादिवद्भावेन प्रत्ययत्वमित्यवधेयम्। **विकरणस्य गुणार्थमिति।** भवामि भविष्यामीत्यादौ विकरणान्तस्याङ्गसंज्ञासम्पादनन्तु नैतत्फलम्। तत्राङ्गत्वाभावेप्यारम्भसामर्थ्यादेव दीर्घसिद्धेः। न च पुत्रीयामि, चिकीर्षामीत्यदौ शबेकादेशस्य पूर्वान्तत्वेनाङ्गत्वे तच्चरितार्थमिति वाच्यम्। कृदतिङिति सूत्रस्थभाष्योक्तरीत्या शबेकादेशस्य स्थानिवत्त्वेन तत्रापि दीर्घस्याप्राप्तेः। **वव्रश्चेत्यस्यासिद्धिरिति।** अत्र सूत्रे प्रत्यय इति पदाभावेऽङ्गसंज्ञाया अनैमित्तिकत्वेनोरदत्त्वस्य प्रत्ययपरत्वलाभानापत्तौ परनिमित्तकत्वाभावेनाचः परस्मिन्नित्यस्याप्राप्त्या सम्प्रसारणत्वाभावेन न सम्प्रसारण इति सूत्रस्याप्राप्तेर्वकारस्य सम्प्रसारणापत्तौ वव्रश्चेत्यस्यासिद्धिरिति भावः। ननु न सम्प्रसारणे सम्प्रसारणमिति सूत्रेण सम्प्रसारणाश्रयपूर्वरूपस्य निषेध इति पक्षे वव्रश्चेत्यत्रोभयोरपि यणोस्सम्प्रसारणे पूर्वस्य पूर्वरूपे निषिद्धे यणि लक्ष्ये लक्षणस्येति न्यायेन पुनस्सम्प्रसारणाप्राप्त्या नेदं फलमत आह। **किञ्चेति।** प्रत्ययविशिष्टस्याप्यङ्गसंज्ञायां सुप्तिङन्तमिति पदत्वस्याप्यङ्गकार्यत्वेन तत्र कर्तव्ये न लुमतेति निषेधा-

मप्यङापत्तिः । अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति भावः ॥

टाङसि ॥ अङ्गस्येति षष्ठया 'अतो भिसः' इत्यतोऽनुवृत्तेनात इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह। अकारान्तादिति । अकारात्परेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ इति पक्षान्तरं भाष्ये । किं चादन्तादङ्गादित्यर्थेऽपि ब्राह्मण-

---

त्प्रत्ययलक्षणाभावे पदत्वाभावेन नलोपानापत्तिरिति भावः। यदि तु न लुमता तस्मिन्निति न्यासे लुमता लुप्ते प्रत्यये परतो यत्पूर्वस्य कार्यं तदेव निषिध्यत इति नात्र दोष इत्युच्यते, तदा श्रियावित्यादावियङनापत्तिर्दोषः । ससहाये व्यपदेशिवद्भावाप्रवृत्त्या श्री इत्यस्यानङ्गत्वात् । प्रत्यय इत्युक्तौ तु तत्परकस्य मुख्यतदादिव्यपदेशभाजोऽत्रासत्त्वेनासहायत्वाद्व्यपदेशिवद्भावस्सुलभ इति बोध्यम् । एवं स्त्र्यर्थमित्यादावन्तर्वर्तिसुपमादाय स्त्रीशब्दस्याङ्गसंज्ञायां स्त्रिया इतीयङाद्यापत्तिरपि दोषः । अत्र द्वितीयप्रत्यय इत्यस्याभावेऽङ्गशब्दस्य सम्बन्धिशब्दत्वाभावेन तेन प्रत्ययाक्षेपस्य कर्तुमशक्यतया स्त्रिया इति सूत्रेऽजादिप्रत्यय इत्यर्थालाभात् । इदानीं प्रत्यासत्त्या दोषवारणमशक्यमित्याह । अङ्गसंज्ञाया इति ॥

नन्वधिकृतस्याङ्गस्येत्यस्य षष्ठ्यन्ततयाऽदन्तादङ्गादितिवृत्तिरसङ्गतेत्याशङ्कयाह । अङ्गस्येति षष्ठ्या इति । अङ्गस्येति षष्ठया विपरिणामे गौरवात्पक्षान्तरमाह । अकारात्परेषामिति । अङ्गसंज्ञानिमित्तेति । अङ्गस्येति सम्बन्धसामान्ये षष्ठी । सम्बन्धश्च निमित्तनिमित्तिभाव इति भावः । न केवलमाद्यव्याख्याने गौरवमेव, किन्त्वतिप्रसङ्गोपीत्याह । किञ्चेति । अत्र वाक्येऽपिशब्दो भिन्नक्रमः । अतिप्रसङ्ग इत्यनन्तरं योज्यः । ननु ब्राह्मणेत्यस्य

भिस्सेत्यादावतिप्रसङ्गः । ब्राह्मणेत्यस्यापि 'युवोरनाकौ' इतिसूत्रभाष्योक्तरीत्याऽन्तर्वर्तिविभक्त्याऽङ्गत्वात् । अर्थवत्परिभाषया प्रत्ययग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे पाठो व्यर्थः । भिसः प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्रहणमिति युज्यते वक्तुं, नान्यथा । इदमेव हि 'अतो भिसः' इत्यत्राङ्गाधिकारस्य प्रयोजनं भाष्ये दत्तमित्यलम् । सुपि च ॥ 'अतो दीर्घो यञि' इत्यनुवर्त्तते । यञीत्यनेनाल्त्वात्तदादिविधिरित्याह—यञादाविति ॥

ङेर्यः ॥ चतुर्थ्येकवचनस्यैव ग्रहणं व्याख्यानादित्याह—ङे इत्ये-

---

न लुमतेतिनिषेधादङ्गत्वं दुर्लभमत आह । युवोरनाकाविति । तत्र ह्यङ्गसंज्ञायां न लुमतेतिनिषेधो न प्रवर्तते । तस्या अङ्गसंज्ञावदुद्देश्यककार्यत्वाभावादित्युक्तम् । नन्वर्थवद्ग्रहणपरिभाषया प्रत्ययग्रहणपरिभाषया वाऽयमतिप्रसङ्गो वारयितुं शक्यत इत्यत आह । अर्थवदिति । पाठो व्यर्थ इति । पूर्वोक्तलक्ष्यसिद्ध्यर्थमेतत्परिभाषाद्वयसञ्चारे तेनैवानङ्गादन्तव्यावृत्तौ सिद्धायामेतेषामङ्गाधिकारे पाठं कृत्वा विभक्तिविपरिणामेनात्र व्याख्यानं निष्फलं स्यात् । अङ्गाधिकारे पाठं कृत्वा निरुक्तदोषवारणायाङ्गनिमित्तस्येत्यर्थे तु न तयोस्सञ्चार आवश्यकः । सञ्चारे तु पाठो न कार्य इति भावः । स्पष्टञ्चेदमङ्गस्येतिसूत्रे भाष्ये । ननु प्रत्यासत्त्या भिन्निरूपिताङ्गसंज्ञावत एवादन्तस्य ग्रहणान्न पूर्वोक्तदोष इत्याशङ्क्याह । भिस इति ॥

व्याख्यानादिति । तच्चात्र ङसिङ्योरितिसूत्रे ङिग्रहणरूपम् । यद्यत्र द्वयोरपि ग्रहणं स्यात्तदानुवृत्तेनानेन सर्वनाम्नः स्मै इत्यत्रापि द्वयोरपि ग्रहणसम्भवेन, सर्वनाम्नस्स्मैस्मिनौ, ङसेः स्मादित्येव सिद्धौ ङिग्रहणं तत्र व्यर्थं

**तस्येति । सन्निपातेति । उपजीव्यविरोधन्यायमूलैषा । सन्निपातः संश्लेषस्तन्निमित्तको यो विधिः स तं सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तमित्यर्थः । न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम् । आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः । किं चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्र कृतेऽसिद्धत्वे मानाभावः ।**

---

स्यादिति भावः । **न्यायमूलेति** । तन्न्यायाश्रयणे लिङ्गन्तु वृद्धाविति निर्देशः । **तस्यानिमित्तमिति** । न च यादेशेनैव सन्निपातविनाशाद्दीर्घस्य कथं तद्विघातकत्वमिति वाच्यम् । तेन पूर्वापरभावसन्निपातविघातेप्यदन्ताङ्गेति विशेषणसान्निपातस्य सत्त्वेन दीर्घस्य तद्विघातकत्वात् । सान्निपातलक्षणप्रवृत्तेः प्रागव्यवहितोत्तरं वा यः सन्निपात एतदन्यतरविघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमित्यर्थस्य तिस्र इत्याद्यनुरोधेनावश्यकत्वात् । न च तिस्र इत्यत्र न षडितिनिषेधेनैव ङीप् न भवतीति वाच्यम् । क्रुन्मेजन्त इति सूत्रस्थभाष्यप्रमाण्येन तयोः स्वस्रादिपाठस्यानार्षत्वात् । तत्र हि तिस्र इत्यत्र ङीषमाशङ्क्य न तिसृचतसृतिज्ञापकेन समाहितम् । तयोः स्वस्रादिपाठस्य प्रामाणिकत्वे तदसङ्गतिस्स्पष्टैव । **यञादित्वेति** । एतेन परनिमित्तकत्वेन दीर्घस्य बहिरङ्गत्वमिति सूचितम् । तथैव वाच्ये एवमुक्तिस्त्वधिकापेक्षत्वेन बहिरङ्गत्वमितिमतसाधारण्येन तत्त्वसूचनायेति बोध्यम् । **असिद्धत्वादिति** । अत्र दीर्घस्यासिद्धत्वं यादेशदृष्ट्या, न तु परिभाषादृष्ट्या, तस्या अन्तरङ्गत्वस्य दुरुपपादत्वात् । परिभाषादृष्ट्याऽसिद्धत्वेपि यादेशदृष्ट्या सिद्धत्वेन परिभाषाप्रवृत्तेर्दुर्वारत्वाच्च। नन्वारोपबोधकशास्त्रवैयर्थ्यान्यथानुपपत्त्या शास्त्रबोधितस्यारोपस्यापि कार्यप्रवृत्तिनिवृत्त्यन्यतरनियामकत्वस्यावश्यमभ्युपेयतयेदमयुक्तमित्यत आह। **किञ्चान्तरङ्ग इति** । अत एव पट्व्येत्यादौ पूर्वयणादेशप्रवृत्त्यवस्थायामसिद्धोपि

किं चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्या अतिव्याप्तिपरभाष्याऽसङ्गतिः । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति वद ।

---

यणादेशः पश्चात्प्रवर्तत इति बोध्यम् । ननु सन्निपातलक्षणविधित्वमेव ह्यस्या लिङ्गम् । ततश्च लक्ष्यप्रवृत्तेः पूर्वं वाक्यार्थबोधकाल एवैषा परिभाषा ङेर्य इत्येतच्छास्त्रेणैकवाक्यतापन्ना यादेशस्य तदीयसन्निपातविघातकविधिं प्रति निमित्तत्वाभावं बोधयतीति तदानीमन्तरङ्गभूतयादेशदृष्ट्या तदेकवाक्यतापन्नपरिभाषादृष्ट्या च बहिरङ्गत्वेनासिद्धतया यत्र सन्निपातविघाताभावबुद्धिस्तत्र तथा बोधयितुमशक्यतया दीर्घविधावप्रवृत्तयाऽनया परिभाषया पश्चादसिद्धत्वाभाववतोपि तस्य निवृत्त्ययोगादिदमयुक्तमेवेत्यत आह। किञ्चातिदेशिकेति। आहार्यारोपस्याप्यन्यत्र शास्त्रवैयर्थ्यान्यथानुपपत्त्या भवतु कार्यकारित्वमिह तु प्रमाणान्तरविरोधात्तदभाव इति भावः। तमेव दर्शयति। भाष्यासङ्गतिरिति। कृन्मेजन्त इतिसूत्रस्थेत्यादिः। स्थानिवत्त्वेनेति। आनुमानिकस्थानिवद्भावेन सन्निपातलाभ इति भावः। श्रौतस्थानिवद्भावेन सम्बुद्धित्वन्तु न भवति। आद्यार्थकानल्विधावित्यनेन तन्निषेधात् । यदि तु स्थानिवद्भावेन सन्निपातविघाताभावबुद्धिरादेशस्य लक्ष्यप्रवृत्त्यनन्तरमेवेति प्रवृत्तिकालिकन्तद्विघातमादाय तदंशे परिभाषाप्रवृत्तिर्दुर्वारा। बहिरङ्गांशे तु लक्ष्ये प्रवृत्तिमन्तरैव बहिरङ्गत्वेन ज्ञातस्याविद्यमानताबुद्धौ कथमपि तद्विघाताभावादप्रवृत्तिरेवैतस्या इति वैजात्येनैतद्भाष्योपपत्तेरातिदेशिकसन्निपातविघाताभावेपि वास्तविकसन्निपातविघातेन परिभाषाप्रवृत्तिरित्यर्थे मानाभाव इत्युच्यते, तदा यादेशस्सुपि चेति दीर्घत्वस्येति प्रकृतविषये परिभाषाया अतिव्याप्तिप्रदर्शनपरमेव भाष्यमुक्तार्थे मानं बोध्यम्। अशास्त्रीयत्वादिति। तासौ निष्ठानिदृत्ववत्सन्निपातो न स्थानिवत्त्वेनानेतुं शक्य इत्याशयः। तत्रासिद्धत्व-

**कार्यस्य निमित्तं ययोः सन्निपातस्तयोः सूत्रे उपादानमपेक्षितमिति तु नाग्रहः। अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताऽङ्गसञ्ज्ञाऽनया परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्याऽनित्यत्वेन समाहितं भाष्ये कृन्मेजन्तसूत्रे। न ह्यङ्गसंज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति। न च कष्टायेत्यस्य 'अकृत्सार्व' इति दीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यम्। तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः। विरोधाभावात्फले विशेषाभावाच्च परत्वेऽप्यकृदिति नोपन्यस्तम्। तस्याकृदित्यादिपर्युदासेनासुप्येव प्रवृत्तिरित्यन्ये॥**

**झलि किमिति। 'उतो वृद्धिः' इत्यतो हलीत्येवानुवर्त्य सन्निपातपरिभाषया रामाणामित्यत्र न दोष इति प्रश्नः। झल्ग्रहणमेत्वे**

---

मपीति। अशास्त्रीये सन्निपातविघाताभावे इत्यर्थः। ननु ययोस्सन्निपातः कार्यस्य निमित्तं तयोस्सन्निपातलक्षणविधावुपादान एवैषा परिभाषा प्रवर्तते। यथा घेर्ङितीति सूत्रे घिङितोरुपादानादेषा परिभाषा गुणस्याव्ययसंज्ञाद्वारा लुकं प्रत्यनिमित्ततां बोधयति। प्रकृते त्वत इत्यस्य ङेर्य इति सूत्रेऽनुपादानान्नायमेतत्परिभाषाविषय इत्यनया परिभाषया रामायेत्यत्र सुपि चेति दीर्घो न स्यादिति शङ्का न युक्तेत्यत आह। **कार्यस्य निमित्तमिति।** ननु सुपि चेति दीर्घापेक्षयाऽकृदित्यस्य परत्वात्तेनैव दीर्घो वक्तुं युक्त इत्यत आह। **विरोधाभावादिति।** एककार्यसम्पादकत्वेनेति भावः। कथञ्चिद्विरोधोपपादनेऽप्याह। **फल इति।** वस्तुतः पर्युदासन्यायाश्रयणेन तस्यात्राप्राप्तिरेवेत्याह। **अन्य इति।** अत एवोरुया धृष्णुया इत्यादौ तृतीयैकवचनस्य सुपां सुलुगितिसूत्रेण यादेशेऽनेन दीर्घो न भवतीति बोध्यम्॥

ननु जसादावतिव्याप्तेर्झलि किमिति शङ्का निर्दलेत्याशङ्क्याह। **उत इति।**

**सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थम् । तेन सर्वेषामित्यादावे-त्वासिद्धिरित्युत्तरम् । एतेन 'बहुवचने किं रामस्य' इति व्याख्या-**

---

**अप्रवृत्तिज्ञापनार्थमिति** । अयं भावः । उतो वृद्धिरित्यत उत्तरार्थमनुवृत्तमपि हलीत्येतत्पदमतो दीर्घो यञीत्यत्र न सम्बध्यते, फलाभावात् । एवं सुपि चेत्यत्रापि । किञ्च सुपि चेत्यत्रानुवृत्तस्य यञीत्यस्य चकारेणानुकृष्टतया नोत्तरत्रानुवृत्तिरित्यपि वक्तुं शक्यम् । चकारस्य निमित्तेन सम्बद्धतया पूर्वसूत्रे यन्निमित्तत्वेनोपात्तं तदेव चकारेणानुकृष्यते । सार्वधातुकग्रहणन्तु सुपीत्यनेन विरोधान्नानुकृष्यते । एवञ्च यञीत्यस्य निवृत्तयेऽत्र सूत्रे झल्ग्रहणमावश्यकमिति न वक्तुं शक्यम् । किञ्च सुपां सुरित्यादिना यादेशे एत्वाभावार्थमपि न झल्ग्रहणमावश्यकम् । तस्योरुया इत्यादावनकारान्तप्रातिपदिकेभ्य एव दृष्टत्वात् । स्वप्नया इत्यादीनान्त्वाङ्याजयारामुपसंख्यानमित्यथाचा सिद्धिः । छन्दसि दृष्टानुविधित्वाच्च नातिप्रसङ्ग इति ॥

एतेन 'अन्ये तु हलीत्यस्य यञीत्येतत्सम्बद्धत्वेन तत्सम्बद्धस्य निवृत्तये झल्ग्रहणं स्यादित्यज्ञापकमेत्वे सन्निपातपरिभाषाप्रवृत्त्यभावस्य । तत्सम्बद्धस्या-नुवृत्तौ तु रामेष्वित्यादावेत्वं न स्यात् । किञ्च सुपां सुरिति यादेशे एत्वाभावार्थं झल्ग्रहणमित्येत्वे सन्निपातपरिभाषाया अप्रवृत्तौ हलि सर्वेषामिति निर्देशो गमक इत्याहुरित्याचार्योक्तमपास्तम् ॥

**एतेनेति** । एत्वे सन्निपातपरिभाषाया अप्रवृत्तिस्वीकारेणेत्यर्थः । ननु रामस्येत्यत्रैत्ववारणं न बहुवचनग्रहणस्य फलम् । टाङसीतिसूत्रेऽकारं निर्दिश्या-स्यादेशेऽतो गुण इति पररूपेण रूपसिद्धेः । न चैवममुष्येत्यत्र सकारस्येणः परत्वाभावात्षत्वानापत्तिरिति वाच्यम् । अद+अस्य इत्यवस्थायां मुत्वस्यासिद्ध-त्वात्पूर्वं पररूपे पश्चान्मुत्वे इणः परत्वेन सस्य षत्वसिद्धेः । न चास्येत्यत्र प्रत्ययस्य हलादित्वाभावेन हलि लोपानापत्तौ तदसिद्धिरिति वाच्यम् । अपि

नम् । रामाभ्यामित्यपि प्रत्युदाहरणं बोद्धयम् । 'बहुवचने झल्येत्' इति तु न सूत्रितम् । ज्ञानयोरित्यादौ नुमापत्तेः । इटि तु गङ्गे इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिवत्त्वादेङ्ह्रस्वादित्यस्याप्राप्तौ व्यवधानाद्धल्ङ्याबित्यस्याप्राप्तौ संबुद्धिलोपानापत्तेश्च । जड्त्वमिति ।

---

लोपोऽकः, अनुटौसोरितिन्यासेन तत्सिद्धेरित्यरुचेराह । रामाभ्यामिति ॥

नुमापत्तेरिति । ज्ञान + ओसित्यवस्थायामोसि चेत्यत्रापीगित्यस्यैवानुवृत्त्याऽदन्ताङ्गस्येगागमेऽन्तरङ्गमपि गुणम्बाधित्वा वार्णादाङ्गमिति परिभाषया नुमापत्तिरिति भावः । न चास्याः परिभाषाया आदेशविषय एव प्रवृत्तिरिति ह्रस्व इति सूत्रे ग्रन्थकृता वक्ष्यमाणतया नात्र तत्परिभाषाप्रवृत्तिरित्यदोष इति वाच्यम् । तद्ग्रन्थस्य तत्र सूत्रेऽभ्यासावयवस्याच इति वैयधिकरण्येनान्वयमभ्युपगच्छतो मूलकारस्याशयवर्णनपरतया प्रवृत्तत्वेऽपि ग्रन्थकृदनभिप्रेतत्वात् । ध्वनितश्चैतद्वार्णादाङ्गमिति तूभयोरादेशत्व एवेति तद्भाव इति ग्रन्थे तत्पदोपादानेन । आगमादेशसाधारण्येनास्याः परिभाषायाः प्रवृत्तिरित्येव तु नागेशाशयः । अत एवोभयसङ्ग्रहाय परिभाषेन्दुशेखरे 'सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोस्समानकार्यित्व एव'इत्युक्तम् । अन्यथा समानस्थानिकत्व एवेत्येव वदेत् । अत एव सतुग्ग्रहणस्य तदनित्यताज्ञापनमपि सङ्गच्छते । अत एव च वारिणीत्यादिसिद्धिः । अन्यथा वारि+ई इत्यवस्थायामन्तरङ्गत्वान्नुमम्बाधित्वा सवर्णदीर्घे तदसिद्धिः स्यात् । अथाप्यादेशविषय एवास्याः प्रवृत्तिरित्युच्यते, एवमपि सम्बुद्धौ चेत्यनेन आबन्ताङ्गस्येगागमे हे रमा इ इत्यवस्थायामन्तरङ्गं गुणम्बाधित्वाऽनया परिभाषया ह्रस्वस्य गुण इति गुणे हे रमे इत्यस्यासिद्धिरिति सर्वथा इगिति न्यासोऽयुक्त एवेत्यवधेयम् । संबुद्धिलोपानापत्तेरिति । इदमुपलक्षणम्, एभ्य इत्यत्र हलि लोपानापत्तेरपि । तच्चिन्त्य इत्यत्र-

बाधित्वेति शेषः । अवसाने चर्त्वस्य पदान्तजश्त्वापवादत्वात् । द्वित्वे रूपेति । 'पूर्वत्रासिद्धमद्वित्वे' इति न्यायाचर्त्वोत्तरं द्वित्व

---

त्यमनोरमाग्रन्थविरोधं परिहर्तुमाह । इति शेष इति । यत्र तु जश्त्वचर्त्वे इति द्वन्द्वनिर्देशे शेषपूरणं न सङ्घटते, तत्र जश्तु अचर्त्वे इति च्छित्वा चर्त्वाभावे जश्त्वमिति योजनीयम् । तक्रन्यायस्तु त्रिपाद्यामपि प्रवर्तत एव । अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीय इति भावः । नन्वेवं रत्नमुडित्यस्यासिद्धिः । तत्र जश्त्वम्बाधित्वा वावसान इत्यनेनान्तरतम्याच्चर्त्वेन षकारस्य षकारे षान्तस्य, चर्त्वाभावे जश्त्वेन डान्तस्य च लाभेपीष्टस्य टान्तस्यासिद्धेरिति चेन्न । ष्णान्ता षडिति निर्देशेन यत्र पूर्वं जश्त्वप्रवृत्तौ परिनिष्ठिते रूपे विशेषसम्भवस्तत्र बाध्यबाधकभावानङ्गीकारेण जश्त्वस्यैव प्रथमं प्रवृत्तेरङ्गीकारेणादोषात् । सर्वमिदं मनोरमाकाराशयवर्णनपरम् । तेन अवसाने चर्त्वस्य पदान्तजश्त्वापवादतायाः शश्छोटीति सूत्रे प्रतिपादितत्वात् । वस्तुतस्तु षडितिनिर्देशेनानयोर्बाध्यबाधकभावाभावकल्पनमेव लभ्यत इति न कोपि दोष इति बोध्यम् ॥

यत्तु रत्नमुडादिसिद्धये शसिदद्योः प्रतिषेधारम्भसामर्थ्येन जश्विधौ जशतिरिक्तानां चर्विधौ चरतिरिक्तानामेव झलामुद्देश्यतया ग्रहणमित्याचार्यास्तदनुसारिण औत्तराहाश्च वदन्ति । तत्तु "तत्रापि प्रकृतिजशां प्रकृतिजशः, प्रकृतिचरां प्रकृतिचर"इति कौमुदीग्रन्थपर्यालोचनया मूलकारानभिप्रेतत्वेनोपेक्षणीयमेवेति प्रतिभाति ॥

न्यायादिति । न चास्य न्यायस्य वर्णद्वित्वेऽप्रवृत्तिरिति वाच्यम् । वाक् वाक् इति भाष्योदाहरणासिद्धये वर्णद्वित्वेपि तत्प्रवृत्तेर्वक्ष्यमाणत्वात् । मूले प्रयत्नभेदादिति । ननु प्रयत्नभेदेऽपि स्थानमात्रसाम्येन तकार एव स्यान्न तु सकारः, सादृश्यस्य भेदघटितत्वेन सकारस्य सदृशतमत्वाभावादत आह ।

बोद्धयम् । तादेश इति । अन्यथा 'खरि च' इति चर्त्वेन सिद्धाविदं व्यर्थं स्यादिति भावः ॥

ह्रस्वन ॥ ह्रस्वनद्याप इति पञ्चमी । 'आमि सर्वनाम्न' इत्यत आमीति वर्त्तते । तच्च षष्ठ्या विपरिणम्यते, नामीति लिङ्गादित्याह—

---

मूले अत एवेति । आन्तरतम्यपरीक्षायां भेदाघटितस्यापि सादृश्यस्य ग्रहणादेवेत्यर्थः । अन्यथेति । भेदघटितसादृश्यग्रहण इत्यर्थः । व्यर्थं स्यादिति । न च घत्स्यतीत्यादावनेन तादेशे चयो द्वितीया इति द्वितीयादेशो भवति । चर्त्वे तु तस्यासिद्धत्वात्स न स्यादिति कथमस्य वैयर्थ्यमिति वाच्यम् । अस्य सूत्रस्य द्वितीयादेशसम्पादनमात्रप्रयोजनकत्वेऽच उपसर्गात्त इत्यतस्तकारमननुवर्त्यादेशमात्रविधानेऽप्यान्तरतम्यात्सकारस्य तकारे ततो द्वितीयादेशे चेष्टसिद्धौ तकारानुवृत्त्यादेशविधानस्य व्यर्थत्वमित्याशयात् । एतत्सूचनायैव च "सस्सीति तादेश आरभ्यते' इति मूले तादेशपदोपादानमिति बोध्यम् । यद्वा चर्त्वपक्ष इव सिद्धान्तेऽप्यत्र द्वितीयादेशो न भवत्येव । सकारमात्रनिमित्तत्वेनान्तरङ्गभूतद्वितीयादेशदृष्ट्याऽर्धधातुकसंज्ञासापेक्षतया बहिरङ्गस्य तादेशस्यासिद्धत्वात् । एवञ्च चर्त्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । न च संज्ञाकृतबहिरङ्गत्वस्य त्रैपादिकान्तरङ्गेष्वन्तरङ्गपरिभाषाप्रवृत्तेश्चान्यत्र निराकृतत्वेनेदमयुक्तमिति वाच्यम् । अस्य ग्रन्थस्य प्राचीनमताभिप्रायकत्वेन तन्मते संज्ञाकृतबहिरङ्गत्वस्य कार्यकालपक्षेऽन्तरङ्गपरिभाषायाः त्रिपाद्यां प्रवृत्तेश्च स्वीकारेणादोषात् । विपरिणम्यत इति । ह्रस्वनद्याप इति पञ्चम्यन्तेन परत्वात्तस्मादिति परिभाषायाः षष्ठ्यंशविशिष्टाया उपस्थितावामीत्यस्य षष्ठ्यन्तता लभ्यत इति भावः । ननु ह्रस्वनद्याप इत्यस्य पञ्चम्यन्तत्वे निश्चिते सतीदमुपपन्नं स्यात् । तत्रैव सन्देह इत्याशङ्क्य तत्र मानमाह । नामीति । अन्यथा ह्रस्वान्तस्य नुटीदमसंगतं स्यादिति भावः ॥

**ह्रस्वान्तादित्यादि । आमत्र षष्ठीबहुवचनमेव, न तु ङेरामादीति स्पष्टं भाष्ये । यत्तु नुडिति विभज्य सामान्येन नुड् विधेयः । नद्याप इति दीर्घान्ताच्चेन्नद्याप एवेति नियमार्थमिति दीर्घेषु न दोषः । हलन्ताच्चेत् षट्चतुर्भ्य एवेति नियम इति हलन्तेषु न दोषः। एवञ्च ह्रस्वग्रहणं न कार्यमिति; तन्न । नद्याप इत्यस्य स्त्रीलिङ्गानाञ्च-**

---

यत्तु 'वस्तुतस्तु विपरिणामाभावेऽप्युभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति परिभाषया षष्ठ्यंशसहितायास्तस्मादितिपरिभाषाया उपस्थित्या षष्ठ्यंशविकलायास्तस्मिन्नितिपरिभाषाया उपस्थित्या चामव्यवहितपूर्वत्वविशिष्टं यद्ध्रस्वान्तमाबन्तं नद्यन्तश्चाङ्गं तदव्यवहितोत्तरत्वविशिष्टस्य नुड्भवतीत्यर्थेन सामञ्जस्यमिति वाराणसेया'स्तन्न । परत्वेन तस्मादिति परिभाषाया एव प्रवृत्त्याऽस्यार्थस्यायुक्तत्वात् । उभयनिर्देशेषु पञ्चमीनिर्देशस्य बलवत्त्वं प्रतिपाद्य पुनस्तेषु परिभाषाद्वयसञ्चारस्य सुतरामयुक्तत्वात् । षष्ठीबहुवचनमेवेति । अयं भावः । किमेत्तिङव्ययेत्यनेन विहितस्य तद्धितस्यामो न ग्रहणम् । तस्य सानुबन्धकत्वात् । कास्प्रत्ययादित्यनेन विहितस्यापि नात्र ग्रहणम् । फलाभावात् । तथा ह्यदन्ते नित्यत्वान्नुटम्बाधित्वा अतो लोपः । इगन्ते परत्वान्नित्यत्वाच्च तं बाधित्वा गुणः । ण्यन्ते तु नित्यत्वादयामन्तालित्यादिना अयादेश इति ह्रस्वांशे न फलम् । नद्यन्तेपि परत्वाद्गुणे वर्णसंज्ञापक्षेऽनल्विधाविति निषेधेन स्थानिवत्त्वाप्राप्त्या न नुटः प्राप्तिः । तदन्तसंज्ञापक्षेपि सकृद्गतिन्यायेन न तत्प्राप्तिः । आबन्तादाचारक्विपोऽनभिधानेनास्यामः प्राप्तिरेव नेति न तदंशेपि फलम् । ङेरामोपि नात्र ग्रहणम् । तद्ग्रहणेपि नुटम्बाधित्वा परत्वादाडादिषु कृतेषु सकृद्गतिन्यायेन नुटोऽप्राप्त्या फलाभावादेवञ्च पारिशेष्यात् षष्ठीबहुवचनस्यैव ग्रहणमिति । ह्रस्वपदाकरणलाघवादरेण केनचिदुक्तमर्थमनूद्य खण्डयति । **यत्त्विति । दीर्घेष्विति ।** दीर्घान्तेषु हाहाशब्दादिष्वित्यर्थः । विपरीतनियमापत्त्या तद्दूषयति । **नद्याप इत्यस्येति ।** ननु बहुश्रेयसीत्यत्र पुंस्यपि

अथाप एवेति नियमपरतयाऽपि व्याख्यातुं शक्यत्वेन, नदीत्वा-प्त्वयोर्ह्रस्वेऽपि दृष्टत्वेन त्वदुक्तनियमे दृढतरमानाभावेन च मती-नामित्यादौ नुडनापत्तेः ॥

नामि ॥ 'ढ्लोपे' इत्यतो दीर्घ इत्यनुवर्तते । अङ्गस्येति किम् । चर्मणाम् । नन्वामीत्येवास्तु—नित्यत्वात्पूर्वं दीर्घेऽपि ह्रस्वान्तान्नुडि-त्येतत्सामर्थ्यात् भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः । न च 'नृ च'

---

नदीत्वस्य सत्त्वात् खट्वाया अः खट्वा इत्यादौ पुंस्यप्याबन्तस्य सत्त्वात्कथं स्त्रीत्वलाभ इति चेत्त्वन्मतेपि मत्यतिमालादौ नदीत्वाप्त्वयोः ह्रस्वेपि सत्त्वेन व्यभिचाराच्च दीर्घान्तत्वलाभ इत्यत आह । नदीत्वाप्त्वयोरिति ॥

चर्मणामिति । अङ्गाधिकारेऽतो भिस इत्यादेः पाठसमर्थ्यादर्थवद्ग्रहण-परिभाषाया अनित्यत्वाश्रयणेन तस्या अत्राप्रवृत्तिरिति भावः । तत्प्रवृत्तावपि नामन्शब्दादाचक्षाणण्यन्तात्क्विपि देवदत्तनामित्यत्र दीर्घवारणमङ्गस्येत्यस्य फलम्बोध्यम् । भूतपूर्वह्रस्वान्तत्वमिति । इदानीं ह्रस्वान्तत्वाभावेपि दीर्घप्रवृत्तेः प्राक्कालिकं ह्रस्वान्तत्वमादायेदानीमपि सामर्थ्यान्नुट् सिद्ध्यतीति भावः । वाराणसेयास्त्वस्य ग्रन्थस्य पञ्चमीसमासेन स्थानिवद्भावाद्ध्रस्वान्तत्वमति-दिश्यत इत्याशयमाविश्चक्रुः । तदयुक्तम् । हे गौरित्यत्र पञ्चमीसमासेन स्थानि-वद्भावे सति प्राप्तस्य सम्बुद्धिलोपस्य वारणाय पूर्वस्मान्निमित्तत्वेनाश्रितादित्यर्थ-स्याचः परस्मिन्निति सूत्रे कैयटेन स्पष्टमुक्ततयाऽत्र तदप्राप्तेः । नागेशमतेपि नात्र स्थानिवत्त्वप्रसक्तिः । स्वरे निषेधविधानसामर्थ्येन अचः पूर्वत्वस्य व्यव-हिताव्यवहितसाधारण्येन ग्रहणेप्येतदंशेऽव्यवहितत्वांशबाधे मानाभावेन पूर्व-स्मादव्यवहितपरत्वेन दृष्टस्य विधावेव स्थानिवद्भाव इत्यचः परस्मिन्निति सूत्रे, न धातुलोप इति सूत्रे चोद्योते, अल्लोपो न इति सूत्रशेखरे च तेन सिद्धान्तितत्वात् । न चैवं बेभिदिता माथितिक इत्यादावपि स्थानिवत्त्वानापत्तिः । तत्रापि

**इति दीर्घविकल्पान्नृणामित्यत्र नुट् चरितार्थः । नृनद्याप इत्येव सिद्धेः । तदुक्तं भाष्ये 'नैकमुदाहरणं योगारम्भं प्रयोजयति' इति । तिसृणामिति षडित्यत्र त्रेरित्यनुवृत्त्या सिद्धमिति भाष्ये एव स्पष्टम् ।**

---

स्थानिवत्त्वेन व्यवधानस्य सत्त्वादिति वाच्यम् । आरम्भसामर्थ्येनाऽनुमानिकव्यवधाने प्रवृत्त्यङ्गीकारेऽपि श्रौतव्यवधाने तदनङ्गीकारात् । **नृनद्याप इत्येव सिद्धेरिति** । ननु ह्रस्वनद्याप इति न्यासे नृ आमित्यवस्थायां परत्वान्नृचेति दीर्घे ह्रस्वान्तत्वाऽभावान्नुटोऽप्राप्त्या यणि न्रामिति दीर्घाभावे नुटि नृणामिति रूपद्वयम् । नृनद्याप इति न्यासे तूभयत्रापि नुटि नॄणां नृणामिति च रूपे इति फलभेदः । एवं नृशब्दादाचारक्विबन्तात्कर्तरि क्विपि तुकि तस्मादामि नृत्+आमित्यत्र ह्रस्वनद्याप इति कल्पे नुट् न भवति । नृनद्याप इति न्यासे च भविष्यतीति फलभेदः । एवं नृशब्दस्य ऋशब्देन समासे तत आमि सूत्रपक्षे नुडभावः । न्यासपक्षे च नुडिति फलभेद इति कथमेवंन्यासेन सिद्धिरिति चेन्न । नृन्नद्याप इति न्यासेऽस्य तात्पर्यमिति वाराणसेयोक्तदिशाऽदोषात् । तथा सति तपरकरणसामर्थ्येन ह्रस्वान्तस्यैव नृशब्दस्य ग्रहणेन न पूर्वोक्तफलभेद इति तदाशयः । वस्तुतस्तु नृचेति दीर्घस्य तक्रन्यायेन नुड्बाधकतया नृनद्याप इति न्यासेपि दीर्घप्रवृत्त्युत्तरं नुटोऽप्रवृत्त्या न फलभेदः । एवं नद्याप्साहचर्यात् नृशब्दोप्यजन्तो गृह्यत इति नृतामित्यत्रापि न फलभेदः इति बोध्यम् । **योगारम्भमिति** । अनेकलक्ष्यसंग्राहकं योगारम्भमित्यर्थः । तेनाग्नेर्ढगित्यादे × करणेऽपि न दोष इति भावः । ननु नैकमित्ययुक्तं, न तिसृचतसृ इति निषेधेन दीर्घाभावे तिसृणामित्यत्राप्यस्य चारितार्थ्यादित्यत आह । **तिसृणामिति** । **अनुवृत्त्या सिद्धमिति** । न चामीति कल्पे ह्रस्वनद्याप इति सूत्रे ह्रस्वग्रहणसत्त्वे त्रिशब्दादामि त्रयादेशे नित्यत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुडभावे त्रयामिति, षडित्यत्र त्रेरित्यस्यानुवृत्तिकल्पे त्रयादेशे दीर्घे च कृते स्थानिवद्भावेन त्रिशब्दत्वस्य सत्त्वान्नुटि

**एतेन ऋन्नद्याप इति न्यासे भाष्यतात्पर्यमित्यपास्तम्। चतसृणां प्रियचतसृणामित्यत्र 'षट्चतुर्भ्य' इति सिद्धम्। गौणे तदप्रवृत्तौ तु न मानम्। बहुवचनन्तु लाघवार्थम्। द्विवचने हि चतुर्भ्यामिति गुरुनिर्देशः स्यात्। नैकमुदाहरणमिति प्रकृतसूत्रस्थभाष्यविरोधश्च। समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थ इति तु न युक्तम्। 'अस्थिदधि' 'तिसृभ्यो जसः' इत्यादौ व्यभिचारात्।**

---

त्रयाणामिति च रूपमिति फलभेद इति वाच्यम्। षट्चतुर्साहचर्येणानकारान्तत्रिशब्दस्यैव ग्रहणेन त्रयादेशे नुटोऽप्राप्त्या फलभेदाभावात्। ननु षट्चतुर्भ्य इत्यत्र षट्साहचर्येण हलन्तस्यैव चतुरो ग्रहणेन चतसृणामित्यत्र तेन नुटोऽप्राप्त्या तत्रास्य चारितार्थ्यं स्यादत आह। **चतसृणामिति। सिद्धमिति।** अनुवृत्तत्रिशब्दसाहचर्येणाऽजन्तस्याऽपि चतुर्शब्दस्य ग्रहणेन सिद्धिरिति भावः। एतदर्थमेव षडित्यत्र त्रेरित्यस्यानुवृत्तिरुक्ता। न त्वव्यवहिते नृनद्याप इत्यत्र। एतेन मण्डूकानुवृत्तेर्निष्फलत्वान्नृनद्याप इत्यत्रैवाऽस्यानुवृत्तिरुचिता, भाष्यस्योदासीनत्वादिति वदन्तः परास्ताः। भाष्येऽस्यार्थस्य कण्ठतोऽनुक्तत्वेऽपि नैतदस्ति प्रयोजनम्, इह तावच्चतसृणामिति, षट्चतुर्भ्यश्चेत्येवम् भविष्यति त्रिसृणामिति, त्रिग्रहणमपि प्रकृतमनुवर्तते, क्व प्रकृतम्, त्रेस्त्रय इति भाष्यग्रन्थसन्दर्भपर्यालोचनया निरुक्तार्थस्यैव लाभात्। ननु षट्चतुर्भ्य इति बहुवचननिर्देशेन षडर्थगतसङ्ख्याभिधायिन एवाऽऽमो नुडित्यर्थलाभेन गौणेऽस्याऽप्राप्त्या कथमनेन प्रियचतसृणामित्यादिसिद्धिरित्यत आह। **गौण इति।** ननु बहुवचनान्तेन निर्देश एव तत्र मानमित्यत आह। **लाघवार्थमिति।** न केवलमस्य नुटो गौणेऽप्रवृत्तौ मानाभावः। अपि तु भाष्यविरोधोऽपीत्यत आह। **नैकमिति। व्यभिचारादिति।** अनयोर्बहुवचननिर्देशे सत्यपि प्रियदध्नेत्यादौ गौणे प्रवृत्तेः प्रामाणिकतया व्यभिचारादित्यर्थः।

**न च–'अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इति सर्वादिसूत्रभाष्याद् गृह्यमाणाद्विहितविभक्तेरित्यर्थकादस्य नुटो गौणेऽप्रवृत्तिः । 'षड्भ्य' इत्यत्रापि विहितविशेषणमेवेत्याशयेन परमपञ्चेत्यादौ लुगभावमाशङ्क्य षट्प्रधान एष समास इत्युक्तम् । समासस्य षट्प्रधानत्वेन संख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन षट्त्वसत्त्वान्न दोष इति तदर्थः । ष्णान्तेत्यत्र**

---

सर्वादिसूत्रस्थभाष्यप्रामाण्येनाऽस्य नुटो गौणेऽप्रवृत्तिमाशङ्क्य निराकरोति । **न चेति । पञ्चम्येति ।** पञ्चम्यन्तेनेत्यर्थः । यद्यपि भाष्येऽङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति सामान्येनैवाभिहितम्, तथाऽप्यङ्गाधिकारे सप्तम्या यदुच्यते प्रकृतविभक्तेस्तद्भवतीत्युत्तरभाष्येणाऽस्यायमर्थः फलतीत्याशयेन पञ्चम्येत्युक्तमिति बोध्यम् । गृह्यमाणविभक्तेरिति भाष्यस्य स्वकल्पितेऽर्थे तदुत्तरभाष्यं साधकमित्याशयेनाह । **षड्भ्य इत्यत्रापीति । लुगभावमाशङ्क्येति ।** लोकप्रसिद्धसङ्ख्यावाचिनामेव षट्संज्ञात्वेन परमपञ्चेत्यस्याऽतथात्वात्ततो विहितस्य लुगनापत्तिरिति शङ्काशयः । **इत्युक्तमिति ।** निरुक्तभाष्यस्य गृह्यमाणाऽर्थगतसङ्ख्याभिधायीत्यादिरीत्या कैयटोक्ताशयकत्वे तु शङ्कासमाधानयोः प्रसक्तिरेव नेति भावः । स्वरीत्या समाधानभाष्याशयमाह । **समासस्येत्यादि न मानमित्यन्तेन । सङ्ख्येयविशेष्यकेति ।** सङ्ख्येयमुख्यविशेष्यकेत्यर्थः । तत्त्वञ्च स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वम् । यस्य सङ्ख्यावाचकत्वमभिमतं स स्वपदार्थः । एवञ्च प्रियपञ्चान इत्यत्र समासवाच्यान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वस्यैव सङ्ख्येये सत्त्वेन सङ्ख्येयमुख्यविशेष्यकबोधकत्वाऽभावात् षट्संज्ञाया अभावेन न लुगिति भावः । **नन्वेवं त्रयो दण्डिन इव त्रिदण्डिनः, त्रयः पूषण इव त्रिपूषणः, त्रयः पञ्चेव त्रिपञ्चान** इत्यादावुपमितसमासे निरुक्तसङ्ख्यावाचकत्वस्य सत्त्वात् षट्संज्ञायां लुगापत्तिः ।

लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानम् । प्रकृतेऽपि तथैव, षड्भ्य इत्यादौ पञ्चम्या विरुद्धविभक्तित्वादङ्गस्येत्यनेन संबन्धायोग्यत्वात् विहितेत्यध्याहारेण प्रत्ययविशेषणतैवेति भाष्योक्तेः, इति गौणे नुटोऽप्रवृत्तिरिति वाच्यम् । नामीतिसूत्रस्थोक्तभाष्यप्रामाण्यान्नुड्विधायके विहितपदानध्याहारेण षडादिभ्यः परस्याङ्गसञ्ज्ञानिमित्तस्यामो नुडित्यर्थेन गौणेऽपि प्रवृत्तेः ।

---

षडर्थगतसङ्ख्याभिधायिनोर्जश्शसोर्लुगिति कैयटोक्तव्याख्याने तु न सेति चेन्न । परमकतरेऽदुडभावस्येवाऽत्र लुकोपीष्टत्वात् । कति तक्षाण इव कतितक्षाण इत्यत्र कैयटेनापि लुक इष्टापत्तेरेव स्वीकार्यत्वात् । न च षड्भ्य इत्यस्यावृत्त्या एकत्र षष्ठ्यर्थे पञ्चमीस्वीकारेण षड्भ्यः परयोष्षडर्थगतसङ्ख्याभिधायिनोरित्यर्थाश्रयणेन न कैयटमतेऽत्र लुकः प्राप्तिः । जश्शसोष्षड्भ्यः परत्वाभावादिति वाच्यम् । एवमपि कति पञ्चेव कतिपञ्चान इत्यत्रोभयस्यापि सत्त्वेन तत्र लुक इष्टत्वस्य स्वीकार्यत्वात् । उभयत्रापि षट्संज्ञकश्शब्दः प्रत्यासत्त्यैक एव ग्राह्य इत्येवं रीत्या तत्र लुग्वारणे तु नागेशमतेऽपि लोके सङ्ख्यावाचकत्वेन प्रसिद्धो यश्शब्दः तत्प्रकारकसङ्ख्येयमुख्यविशेष्यकप्रतीतिजनकं प्रत्यासत्त्या प्रकारभूतशब्दावयवनकारान्तमित्यर्थाश्रयणेन तत्र षट्संज्ञा वारयितुं शक्यत इत्यवधेयम् । एतेनैतदर्थं बहुधा क्लिश्यन्त औत्तराहाः परास्ताः । प्रकृतेऽपीति । षट्चतुर्भ्यश्चेत्यत्रापीत्यर्थः । तथैवेति । एतदुत्तरमुचितत्वादिति शेषः । औचित्यमेव दर्शयति । भाष्योक्तेरिति । भाष्योक्तविरुद्धविभक्तित्वरूपयुक्तेरुभयत्र तुल्यत्वात्तत्रेवाऽत्रापि विहितपदाध्याहारेण प्रत्ययविशेषणत्वस्योचितत्वादिति भावः । एतदुत्तरं 'गौणे नुटोऽप्रवृत्तिरितीत्यधिकः पाठः । अन्यथा पौनरुक्त्यापत्तेः । तत्सत्त्वे तथैवेत्यस्योत्तरेणेतिना सम्बन्धो बोध्यः । उक्तभाष्येति । नैकमुदाहरणमिति भाष्येत्यर्थः । अन्यथा

'अतो भिस' इत्यादावङ्गस्येत्यस्यैवमन्वयस्यैवाङ्गसञ्ज्ञासूत्रे भाष्ये उक्तत्वात् । अत एव परमचतुर्णामित्यादौ नुट् । यद्यप्येवं षड्भ्योऽदूड् डतरादिभ्य इत्यनयोरपि वक्तुं शक्यं, तथापि लक्ष्यानुसारात्तत्र विहितविशेषणम् । विरुद्धविभक्तित्वादिति भाष्योक्तयुक्तिस्त्वेकदेशिन इति बोद्धव्यम् । 'अदूड् डतरादिभ्यः' 'षड्भ्यो लुक्' इत्यनयोरेवसर्वादिसूत्रे भाष्ये उपन्यासाच्च । 'षड्भ्य' इत्यादेः षडर्थगतसंख्याभिधायिजश्शसोरित्यादिक्रमेणार्थ इति कैयटोक्तं तु 'अदूड् डतरादिभ्य' इतिसूत्रेभाष्यविरोधादिभिर्दूषयिष्यते । न च पदां दतामित्यादावतिप्रसङ्गः । ह्रस्वत्वं नाम मात्राकालिकाच्त्वं, तत्र सामर्थ्याद्विशेषणभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणं न

---

प्रियचतसृणामित्याद्यर्थमपि ह्रस्वग्रहणस्यावश्यकत्वादिदमसङ्गतं स्यादिति भावः। अत एवेति। नुड्विधायके विहितपदानध्याहारादेवेत्यर्थः । लक्ष्यानुसारादिति । प्रियपश्वानः अतिकतरं ब्राह्मणकुलमित्यादिलक्ष्यानुरोधादित्यर्थः । विहितविशेषणमिति । नन्वेवं स्वं रूपमिति सूत्रस्थभाष्यविरोधः । तत्रहि षान्तसङ्ख्यावाचकस्य षट्संज्ञाविधानं शब्दशास्त्रीयसंज्ञायां स्वरूपाग्रहणज्ञापकमित्युक्तम् । अत्र विहितविशेषणत्वे तु परमषडित्यत्र संज्ञाविधानस्वरूपग्रहणयो र्लुक्प्रवृत्त्यप्रवृत्तिरूपफलभेदस्य सत्त्वेन ज्ञापकत्वमसंगतं स्यादिति चेन्न । तद्भाष्यबलेन परमषडित्यादीनामनभिधानस्यैवाङ्गीकारात् । एकदेशिन इति । विरुद्धविभक्तित्वेऽप्यतो भिस इत्यादावङ्गस्येत्यस्याङ्गसंज्ञासूत्रे भाष्येऽन्वयस्योपपादितत्वादिति भावः । अनयोरेवेति । एवञ्च तद्भाष्यबलेन ततोऽन्यत्र षट्चतुर्भ्य इत्यादौ विहितविशेषणत्वे मानाभाव इति भावः । भूतपूर्वह्रस्वान्तत्वमादाय नुटः प्रवृत्तावतिप्रसंगमाशङ्क्य समाधत्ते। न चेत्यादिना। मात्राकालिकत्वांश एवेति । तावन्मात्रेण ह्रस्वान्तान्नुडित्यस्य कृतार्थतया

तु विशेष्यभूताच्त्वांशेऽपीत्यदोषात्; इति चेन्न । 'नोपधाया' इत्युत्तरार्थत्वात् । तेन चर्मणामित्यादौ दीर्घाभावः सिद्ध इति दिक् । परिभाषाविरोधादिति । सर्वत्रानित्यत्वाश्रयणे मानाभाव इति भावः । कृताकृतप्रसङ्गित्वात् 'नामि' इति नित्यम् । न च विशेषाभावेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यम् । विशेषाभावेऽपि पर्जन्यन्यायेन शास्त्रप्रवृत्तेः 'इको झल्' इति सूत्रे भाष्ये उक्तत्वात् । 'आयादय' इति सूत्रे भाष्ये स्यादिभिः परत्वादायादिबाधमाशङ्क्य 'अनवकाशत्वादायादयः । न च गोपायतीत्यादिरवकाशः । अत्रापि शपः स्यादेः प्राप्तेः । न च नास्ति विशेषः । अन्यदिदानीमिदमुच्यते नास्ति विशेष इति । यदुक्तम्—आयादीनां स्यादिभिरव्याप्तोऽवकाश इति, स नास्त्यवकाशः' इति भाष्योक्ते-

---

विशेष्यभूताच्त्वांशेपि तदाश्रयणे मानाभाव इति भावः । ननु दीर्घविषये सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्त्या नेदं युक्तमित्यत आह । सर्वत्रेति । कष्टायेतिनिर्देशेन यादेशस्सुपि चेति दीर्घत्वस्योति भाष्येण च चतुर्थ्येकवचनमात्रे दीर्घविषये तत्परिभाषाया अप्रवृत्तावप्यन्यत्र तदप्रवृत्तौ न मानमिति भावः । नामीत्यारम्भसामर्थ्यात्सामान्यतो नुड्विषये सन्निपातपरिभाषा न प्रवर्तत इति ज्ञाप्यत इति वक्ष्यमाणमाधवमतेऽपि सुपि चेत्यस्याऽत्राप्रवृत्तिमुपपादयति । कृताकृतेति । यद्यपि सुपि चेतिदीर्घोत्तरं नामीति दीर्घश्शब्दान्तरस्य प्राप्तस्तथापि कृताकृतप्रसङ्गमात्रेणाऽस्य नित्यत्वमित्याशयः । आयादय इति सूत्र इति । तत्र ह्यविशेषेणायादयो वेत्युक्त्वा सार्वधातुके नित्यमिति न्यासपक्षे स्यादिबलीयस्त्वं विप्रतिषेधेन तुल्यनिमित्तत्वादिति वार्तिककृतोक्तम्, तत्खण्डनाय च न वा आयादिविधानस्यानवकाशत्वादिति वार्तिकमारब्धम् । एवञ्चाऽस्य भाष्यस्य सार्वधातुकनिमित्तकायादीनामनवकाशत्वप्रदर्शनपरतया गोपायेत्यत्र

**श्चेत्यपि बोद्धव्यम् । आरम्भेति । यत्तु—कतीनामित्यत्र 'षट्चतुर्भ्य' इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावकाशत्वमस्त्येवेति; तन्न । न ह्येकमित्युक्तन्यायेन 'कतेर्नामि' इत्येव सिद्धे सामान्यसूत्रारम्भेत्यर्थात् । एवञ्च 'न तिसृचतसृ' इत्यकरणेन लाघवमिति भावः । नुटीति तु नोक्तम् ॥**

---

तेषां सावकाशत्वमस्तीति कथनमयुक्तमेवेत्यवधेयम् । न च यथाश्रुतन्यासकल्पे गोपायिष्यति गोपिष्यति गोप्स्यतीति रूपत्रयं भवति । अस्मिन्न्यासे त्वपवादत्वात्सार्वधातुके नित्यमिति नित्याऽयप्रत्यये तदुत्तरमुत्सर्गस्याप्रवृत्त्या गोपायिष्यतीत्यस्याऽप्यसिद्धिरिति फलभेद इति वाच्यम् । शपि नित्यमिति शिति नित्यमिति वा भाष्योक्तन्यासेन फलभेदाभावात् । एतेनैतदर्थं 'आयादयो वा, आर्धधातुके' 'सार्वधातुके नित्य'मिति गुरुभूतन्यासं कल्पयन्त औत्तराहाः परास्ताः । **अप्राप्तेरिति** । लौकिकैकदेशविकृतन्यायेन कृतदीर्घेऽपि षट्त्वस्य सत्त्वात्सन्निपातविघाताभावेन तदप्राप्तिरिति भावः । **सावकाशत्वमस्त्येवेति** । न च चतुर्शब्दसाहचर्येण षट्संज्ञकस्यापि हलन्तस्यैव ग्रहणेन कथमत्र तेन नुडिति वाच्यम् । षट्संज्ञासूत्रे प्रश्लेषेण रेफान्तस्यापि षट्संज्ञां विधाय षट्चतुर्भ्य इति सूत्रे, षट्त्रिचतुर्भ्यो हलादिरितिसूत्रे च चतुर्ग्रहणं न कार्यमित्याशयेनाऽस्याऽऽशङ्कायाः प्रवृत्तत्वेन निरुक्तरीत्या साहचर्यस्याश्रयितुमशक्यत्वात् । कतेर्नामीति न्यासे लाघवमप्याह । **न तिस्रिति** । यद्यप्यस्यामवस्थायां यथान्यासेऽपि तिसृणामित्यत्र सन्निपातपरिभाषया दीर्घाऽप्राप्तेस्तिस्रित्यस्याकरणं सिद्धमेव तथापि नग्रहणचतुर्ग्रहणयोरकरणेनेत्यर्थः ॥

**नोक्तमिति** । एतदुत्तरं केषुचित्प्राचीनपुस्तकेषु 'उणादीनां व्युत्पन्नत्वपक्षे भृजः किन्नुट् चेति निष्पन्नभृङ्गशब्दे दीर्घापत्तेः । इदमेव व्युत्पत्तिपक्षे ज्ञापकमिति दिगिति'पाठो दृश्यते । इममेव च पाठमाश्रित्याऽऽचार्यैश्श्रीधरेण

अपदान्तस्य । ष इत्येव सिद्धे मूर्धन्यग्रहणम् 'इणः षीध्वम्' इत्यत्र ढविधानार्थं, 'रषाभ्याम्' इत्यत्रानुवृत्त्यर्थश्च । एवञ्च तत्र णग्रहणं, 'पदान्तस्य' इति च न कर्त्तव्यमिति भाष्ये स्पष्टम् । इण्कोः ॥ वर्गग्रहणञ्चत्वंस्यासिद्धत्वात् स्त्रक्षित्यायर्थम् । आदेश ॥ प्रत्ययशब्दस्तदवयवपरो व्याख्यानात्, सातेः षत्वनिषेधाल्लिङ्गाच्च ।

---

च व्याख्यातम् । परन्त्वाधुनिकपुस्तकेषु नोपलभ्यते । तथापि हेतुवाक्यघटितत्वेन स एव पाठो युक्त इति प्रतीयते । नुग्विधानेन भृंग इत्यत्र दोषवारणं वाराणसेयोक्तन्तु न युक्तम् । नुड्विधानस्य 'गण्शकुना' वित्युत्तरसूत्रे चारितार्थ्यात् । तेनापि नुग्विधाने तु शॄधातुप्रकृतिकगणप्रत्ययान्ते शार्ङ्ग इत्यत्राऽजन्तत्वाभावादचो ञ्णितीति वृद्धयनापत्तिरिति बोध्यम् । एतच्च मतान्तररीत्या प्रतिपादितम् । उणादीनामव्युत्पत्तिपक्ष एवेति स्वसिद्धान्ते तु नुटीतिन्यासेऽनश्च इत्यत्र दीर्घापत्तिर्दोषो बोध्यः । न च तस्य नुगचीति न्यासेन तत्राऽदोष इति वाच्यम् । तथा सति न लोपः प्रातिपदिकान्तस्येति नलोपापत्तेः । नुग्विधानसामर्थ्यात्तद्वारणे तु तत्रैव ङमुडापत्तिर्दोषः । न च ङमुटि कर्तव्ये पदद्वयाश्रयत्वेन बहिरङ्गस्य नुकोऽसिद्धत्वान्ङमुद् न भवतीति वाच्यम् । नागेशमते त्रैपादिकान्तरङ्गेषु बहिरङ्गपरिभाषायास्सर्वथाऽप्रवृत्तेः । परमदण्डिनेत्यादौ ङमुड्वारणाय उञि च पद' इत्यतः पदे इत्यस्याऽनुवृत्तेस्तत्राऽवश्यकतया तस्यापि पदद्वयाश्रितत्वेन बहिरङ्गपरिभाषाप्रवृत्तेः कर्तुमाशक्यत्वाच्चेत्यवधेयम् । भट्टास्तु 'ह्रस्वनद्याप', इत्यत्रैव नुटं विधायान्यत्र नटो निटो वा विधानेनायं न्यासो निर्दुष्ट एवेति वदन्ति ॥

नन्विणष्षीध्वमित्यत्र ढग्रहणमस्त्वित्यत आह । रषाभ्यामिति । एवञ्चेति । पदद्वयस्याऽधिकारत्वे चेत्यर्थः । इण्कोरित्यत्र समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । व्याख्यानादिति । लोपे प्रत्ययलक्षणमित्युक्तावपि पूर्वसूत्रात्प्रत्ययस्ये-

**तदाह**–प्रत्ययावयवेत्यादि । विवृताघोषस्येति । विवृतत्वरूपाभ्यन्तरप्रयत्नवतोऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाद्यम् । ऋकारवारणाय द्वितीयम् । रामस्येति । 'टाङसि' इति सूत्रे सकारोच्चारणं तु 'इण्कोः' इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः ॥

**सर्वादीनि** ॥ तद्गुणसंविज्ञानो बहुव्रीहिः । आदिशब्दोऽवय-

---

त्यस्याऽनुवृत्त्या सिद्धे प्रत्ययलोप इति सूत्रे प्रत्ययग्रहणेन प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारज्ञापनरूपाद्व्याख्यानादत्र प्रत्ययावयवबोधकः प्रत्ययशब्द इति भावः । प्रत्ययपदस्य तदवयवे लक्षणेति मिश्रोक्तन्तु न युक्तम् । अत्र लक्षणाया अनावश्यकत्वस्य प्रत्ययलोप इति सूत्रे ग्रन्थकृता निरूपयिष्यमाणत्वात् । **विवृतत्वरूपेति** । आन्तरतम्यपरीक्षायामुभयोरपि यत्नयोरुपयोगित्वम् । सवर्णसंज्ञायान्तु प्रशब्दबलेनाऽऽभ्यन्तरस्यैवेति भावः । ननु टाङसीतिसूत्रे सकारोच्चारणसामर्थ्यादेवाऽत्र षत्वं वारयितुं शक्यमित्यत आह । **टाङसीति** । **तात्पर्यग्राहकमिति** । इदमेव युक्तम् । अन्यथाऽमुष्येत्यत्रापि षत्वाऽनापत्तेः॥

**तद्गुणसंविज्ञान इति** । तस्य = अन्यपदार्थस्य, गुणाः = विशेषणानि, कार्ये संविज्ञायन्ते यत्र स तद्गुणसंविज्ञान इत्यर्थः । तेषां कार्ये संविज्ञानञ्च द्वेधा । क्वचिद्विशिष्टस्य क्रियायां सन्निधानमात्रेण, यथा शुक्लवाससं भोजय, नागयज्ञोपवीतं भोजयेत्यादौ । क्वचित्तु विशेषणस्याऽपि क्रियायोगेन, यथाशुक्लवाससं पश्य, नागयज्ञोपवीतं पश्येत्यादौ । एवञ्च यत्र कार्ये तद्भावभावि तत्र तद्गुणत्वमिति फलितार्थः । यत्र संयोगसमवायान्यतरसम्बन्धेन सम्बन्ध्यन्यपदार्थस्तत्रः तद्गुणः । अन्यत्राऽतद्गुण इति यावत् । अयं च शब्दशक्तिस्वभावगम्यः । तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः । अन्यत्र तदुपलक्षितस्येत्यपि तयोर्भेदो बोध्यः । ननु प्रकृते न संयोगो नापि समवाय इति कथमत्र तद्गुणसंविज्ञानत्वमित्यत आह । **आदिशब्द इति** । एवञ्चात्र समवायसम्ब-

ववाची। तेन सर्वशब्दघटित उद्भूतावयवभेदः समूहः समासार्थ इति बहुवचनम्। उद्भूतावयवभेद इत्यस्यारोपितावयवगतसंख्य इत्यर्थः। तत्र वैयर्थ्यादप्रवृत्तावप्यवयवेषु प्रवर्त्तमानाऽविशेषात् सर्वशब्देऽपि भवति। सर्वनामानीत्यत्र 'पूर्वपदात्' इति णत्वमत एव निपातनान्न। नाप्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वात् णत्वसहितमसाध्विति स्पष्टं भाष्ये। 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इतिवार्त्तिकात् शब्दरूपंविशेष्यमादाय ज्ञापकात्तदन्तविधिरित्याह—द्वन्द्वे चेतीति। प्रथमार्थे सप्तमी। द्वन्द्वः सर्वनामसंज्ञो नेति तदर्थः। न हि तदन्तविधिं विना समुदाये सञ्ज्ञाप्रवृत्तिरस्ति, या निषिद्ध्येतेति भावः। ननु तदन्तस्यापि सर्वनामत्वे 'सर्वनाम्नः स्मै इत्यादिषु सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थाश्रयणेनातिसर्वादौ

---

न्धेन सम्बन्धिनोऽन्यपदार्थतया युज्यत एव तत्त्वमिति भावः। तेनेति। आदिशब्दस्यावयववाचित्वाङ्गीकारेणेत्यर्थः। नन्वेवं समुदायस्यैव संज्ञा स्यादत आह। तत्रेति। समुदाय इत्यर्थः। निपातनान्नेति। ननु भूञोऽसंज्ञायामिति सूत्रे भाष्ये 'यदेतत्संज्ञायां विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः। किन्तर्हि तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थ' इति वक्ष्यमाणतया कथमत्र णत्वप्राप्तिः। नह्यत्र कृतणत्वेन संज्ञावगतिः। अत एव रघुनाथादिशब्दे न णत्वमिति चेन्न। आधुनिकसङ्केतस्थले शास्त्रानुगतस्यैव सङ्केत उचित इति कृतणत्वस्यैव संज्ञात्वेन विनियोगः पाणिनिना कुतो न कृत इत्याशयात्। अनादिसङ्केतस्थले तु यथाविनियुक्तानामेव साधुत्वमिति रघुनाथादौ न णत्वम्। कृतणत्वेन संज्ञाऽनवगमादिति भावः। प्रथमार्थे सप्तमीति। 'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' विति सर्वप्रकरणविषयस्मृत्यन्तरेण तादृशस्मृति विषय न बहुव्रीहाविति सूत्रसाहचर्येण वाऽस्यावयवनिषेधकत्वाऽभावे सिद्धे सामा-

**दोषाभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्यसूचितं विरुद्ध्येतेति चेन्न । "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इतितदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधेनास्य भाष्यस्यैकदेशियुक्तित्वात् ।**

---

नाधिकरण्येनान्वयानुरोधाच्छान्दसत्वाद्व्यत्ययेन प्रथमार्थे सप्तमीं स्वीकृत्य समुदायनिषेध आश्रयणीय इति भावः ॥

यत्त्वत्र वाराणसेयाः 'आकाशे त्रिदिवे नाक' इत्यादाविव वाचकत्वं सप्तम्यर्थः । तथा च वाचकतासम्बन्धेन सर्वनामपदं द्वन्द्वे न तिष्ठतीति यथाश्रुतमेव सङ्गतमिति प्रथमार्थे सप्तमीत्यस्य नोपयोग इति वदन्ति, तन्न, यत्राऽर्थे येषां शास्त्रेण विधानं कृतं ततोऽन्यत्राऽर्थे तेषां लक्षणयाऽपि साधुत्वाऽभावस्य 'प्रत्ययः, पुंयोगा'दिति सूत्रभाष्याल्लाभेन सप्तम्या वाचकत्वार्थकत्वस्य वक्तुमशक्यत्वात् । किञ्च आकाशे त्रिदिवे नाक इत्यत्रापि न वाचकत्वं सप्तम्यर्थः । किन्तु वृत्तित्वमेव । तच्चात्र वाचकतासम्बन्धेन ग्राह्यम् । एवञ्च वाचकतासम्बन्धेनाकाशवृत्तिर्नाकशब्द इति बोधः । न चैवमत्राऽपि तथैवोच्यताम्, किमर्थं प्रथमाऽर्थे सप्तम्याश्रयणमिति वाच्यम् । तत्र विभक्तिव्यत्ययकल्पनायाः कर्तुमशक्यतया वैयधिकरण्याङ्गीकारेऽप्यत्र तथाऽन्वयस्याऽन्याय्यत्वात् ॥

**भाष्ये सूचितमिति** । अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीत्यनेनेति भावः । **एकदेशियुक्तित्वादिति** । यत्त्वौत्तराहाः 'सर्वनाम्नस्स्मा-यित्यादौ सर्वत्र स्वाऽव्यवहितोत्तरत्वस्वार्थगतसंख्याभिधायित्वैतदुभयसम्बन्धेन स्वविशिष्टङेप्रभृतीनां स्मायाद्यादेशा भवन्तीत्यर्थ इति 'अतितत् अतिकतरं कुलमतिसर्वाये'त्यादौ न दोषः । गृह्यमाणविभक्तेरिति भाष्यस्य गृह्यमाणार्थगतसंख्याभिधायिविभक्तेरित्यर्थः । एतत्कल्पे च सर्वादीनीत्यत्र तदन्तविधिर्नास्तीत्यतिसर्वायेत्यादौ सर्वनामार्थगतसंख्याभिधायिङेप्रत्ययस्याऽभावान्न स्माया-

इत एव वाऽरुचेर्भाष्ये पक्षान्तरोपादानम्। न च ऋष्युक्तपक्षेषु नारुचि- रिति भ्रमितव्यम्। वृद्धिसञ्ज्ञासूत्रे 'अपरितुष्यन् खल्वपि भवान् 'अनाकृतिः' 'लिङ्गेन वा' इत्याह' इति वार्त्तिककारं प्रति भाष्योक्तेः। अकचेति। 'कुत्सिते' इतिसूत्रोक्तभाष्यरीत्या संख्याकारकाभ्यां

---

देशः। परमसर्वस्मायित्यादौ तु समुदायस्य सर्वनामत्वाभावेऽपि ङेप्रत्ययस्य सर्वनामार्थगतसंख्याभिधायित्वस्य सर्वनामाव्यवहितोत्तरत्वस्य च सत्त्वान्न दोष इति वस्तुतो नेदं भाष्यमेकदेश्युक्तिरि'ति वदन्ति, तन्न। पञ्चम्यन्तात्तादृशार्था- लाभस्य षष्ठ्यर्थे पञ्चमीस्वीकारे विरुद्धविभक्तित्वादिति भाष्यासङ्गतेश्चाङ्गतरादिभ्य इति सूत्रे वक्ष्यमाणतया तद्रीत्यात्रापीदृशार्थस्य वक्तुमशक्यत्वात्। एतत्कल्पेऽपि परमसर्वतः परमसर्वत्रेत्यादौ सर्वनामप्रकृतिकपञ्चम्याद्यन्तत्वेन तसिलादिसिद्धये सर्वादीनीत्यत्र तदन्तविधेरावश्यकतया एवमर्थस्वीकारेऽप्यतिसर्वायेत्यादौ दोषता दवस्थ्यात्। किञ्च विरुद्धविभक्तित्वेऽप्यतो भिस इत्यादावन्वयस्य अङ्गस्येति सूत्रे भाष्ये प्रतिपादितत्वेनाङ्गस्येत्यनेनान्वयासम्भवमूलकस्याङ्गाधिकारे यदुच्यते इत्यादिभाष्यस्यैकदेश्युक्तिताया आवश्यकत्वादिति बोध्यम्। इत एवारुचे- रिति। एवं रीत्योपसर्जनप्रतिषेधप्रत्याख्यानेऽतिकतरं कुलमतितदित्यादौ दोषवारणेऽपि तदन्तविधिसूत्रस्थभाष्यप्रामाण्येन परमसर्वत्रेत्यादिलक्ष्यानुरोधेन चात्र सूत्रे तदन्तविधेरावश्यकतयाऽतिसर्वायेत्यादौ दोषो दुर्वार एवेत्येवं रूपा- रुचेरित्यर्थः। अस्य ग्रन्थस्य 'कृतेऽप्युपसर्जनप्रतिषेधेऽतिसर्वशब्दे दोषतादवस्थ्य मतः प्रतिषेधो न युक्त इत्यरुचेरित्यर्थ इति मिश्रोक्तं व्याख्यानन्तु न युक्तम्। उपसर्जनप्रतिषेधेन सर्वादित्वस्यैव निषेधादत्र तदन्तविधावप्यत्र पक्षे तत्र दोषाभावात्। पक्षान्तरेति। अथवा महतीयं संज्ञा क्रियत इत्यादीत्यर्थः। ननु पक्षद्वयस्याप्यार्षत्वेनैकस्मिन्नरुचिकल्पना न युक्तेत्यत आह न चेति॥

ननु सर्व इत्यादौ गुणप्रवृत्त्याऽऽदेशे दीर्घोच्चारणं विफलमेवेत्यत आह।

पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः, प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थात्तदन्तसञ्ज्ञाऽभावे तदसिद्धिरिति भावः । एवमेव त्र्लाद्यसिद्धिर्बोद्धव्या । एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धिरित्यपास्तम् ॥

जसः शी ॥ दीर्घोच्चारणमुत्तरार्थं वारिणी इति । 'अदन्तात्' इति–परस्येत्यनेनान्वेति । अत इत्यस्याङ्गविशेषणतया अदन्तादङ्गादित्यर्थः। सर्वनाम्न इति तु विहितविशेषणम् । तस्य तु नाङ्गं विशेष्यमावृत्तौ मानाभावात् । तेन वर्णाश्रमेतरा मासपूर्वा इत्यत्र न । अत एव

---

दीर्घोच्चारणमिति । उत्तरार्थमिति । नपुंसकाच्चेत्यत्राऽनुवृत्त्यर्थमित्यर्थः । सर्वनाम्न इत्यस्य विहितविशेषणत्वे फलमाह । तेनेति । द्वन्द्वे चेत्यादिभिस्समुदायसंज्ञानिषेधेन ततो विहितस्य सर्वनाम्नो विहितत्वं नेति भावः । विहितपदाध्याहारे मानं दर्शयति । अत एवेति । अन्यथाऽनेन समुदायस्यैव सर्वनामसंज्ञाविकल्पविधानात्तदभावपक्षेऽप्यवयवस्य सर्वनामतया ततः परत्वेन शीभावस्य दुर्वारतया विकल्पविधानं व्यर्थं स्यादिति भावः ॥

यत्तु सर्वनामाभिन्नं यददन्तमङ्गं ततः परस्य जसश्शी भवतीत्यर्थकरणेन वर्णाश्रमेतरा इत्यादौ दोषाभावेन विहितविशेषणं व्यर्थम् । तस्मादितिपरिभाषायां जागरूकायां विहितपदाध्याहारस्य कर्तुमशक्यत्वादित्यौत्तराहास्तन्न । सर्वनाम्न इत्यस्याऽङ्गविशेषणत्वे तदन्तविधेर्दुर्वारतया निरुक्तार्थालाभात् । तस्य विशेष्यत्वन्तु न युक्तम् । अङ्गाधिकारेऽङ्गस्यैव विशेष्यतायाः पदाङ्गाधिकारे इत्यनेन बोधनात् । यदि तु लक्ष्यानुरोधादत्र विशेषणविशेष्यभावव्यत्ययेन येन विधिरिति सूत्रस्याऽत्रप्रवृत्तिरित्युच्यते, तदा विहितपदाध्याहारेण परिभाषाबाधकल्पनैव लघीयसी । त्वन्मते प्रत्यासत्त्याश्रयणस्याऽप्यावश्यकतया गौरवात् ।

तदनाश्रयणे तु वर्णाश्रमेतरा इत्यत्रेतरशब्दस्य सर्वनामत्वेन प्रत्ययलक्षणेनाङ्गत्वसत्त्वाच्च दोषतादवस्थ्यात् । किञ्च सर्वशब्दपूर्वकजस्मोक्षण इत्यस्माद्धातोः क्विपि सर्वजसावित्यादावदन्तसर्वनाम्नः परस्य धातोरपि जसस्सत्त्वात्प्रत्ययस्यैवाऽत्र ग्रहणमित्यत्र मानाभावेन प्रत्यासत्तेराश्रयितुमशक्यतया निरुक्तस्थले दोषो दुर्वार एव। न च प्रत्ययाप्रत्यययोरिति परिभाषया प्रत्ययस्यैव ग्रहणमिति वक्तुं शक्यमेवेति वाच्यम् । तत्परिभाषाया लक्ष्यसंस्कारकत्वाभावस्य तित्स्वरितमितिसूत्रे कैयटेनोक्तत्वात् । अङ्गस्येतिसूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना साऽऽश्रितेति न तद्विरोधः । अत एव तितिप्रत्ययग्रहणं कर्तव्यमिति वार्तिककृतोक्तम् । अस्या लक्ष्यसंस्कारकत्वे त्वनयैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । किञ्चाविवक्षितविभक्त्यर्थमङ्गस्येतिपदमुत्तरत्राधिकृतं सद्यथायोगं विपरिणम्यत इत्येकः पक्षः । सम्बन्धसामान्यार्थकषष्ठ्यन्तस्य तस्योत्तरत्राधिकारेण यथासम्भवं तत्र तत्र सम्बन्धविशेषपर्यवसायित्वमित्यपरः पक्षः । तत्राद्यमेव पक्षमादाय सर्वत्र व्याख्यातं दीक्षितेन। तादृशव्याख्याने प्रसक्तमतिप्रसङ्गं वारयितुमामि सर्वनाम्न इत्यादौ विहितविशेषणत्वं चाश्रितम् । नागेशस्तु तादृशव्याख्याने ब्राह्मणभिस्सेत्यादावतिप्रसङ्गसत्त्वेन द्वितीयं पक्षमाश्रित्याकारात्परस्याङ्गसंज्ञानिमित्तस्य भिस इत्येवंरूपेण व्याचख्यौ । एवञ्चाङ्गस्येत्यस्य विभक्तिविपरिणामेन व्याख्यानं कुर्वतो मूलकारस्य मतमनुसृत्यैवाऽयं ग्रन्थः प्रवृत्तः । यदि तु सम्बन्धसामान्यार्थकषष्ठ्यन्तस्याऽङ्गस्येत्यस्याधिकारेणादन्तात्सर्वनाम्नः परस्य प्रत्यासत्त्या तत्पर्याप्ताङ्गसंज्ञानिमित्तस्य जसश्शीत्यादिरूपेण व्याख्यायते, तदाऽत्र विहितविशेषणमनावश्यकमित्यन्यदेतत् । एतेनैनं पक्षमाश्रित्य विहितविशेषणत्वाश्रयणस्य निष्फलत्वं वदन्त आचार्याः परास्ताः॥

नन्वङ्गसंज्ञानिमित्तस्यादन्तसर्वनाम्नो विहितस्य जसश्शीत्येवं व्याख्यानेपि वर्णाश्रमेतरा इत्यादौ दोषाभावादङ्गस्येत्यस्य विभक्तिव्यत्ययकल्पनया

"विभाषा जसि" इति चरितार्थम् । अङ्गसञ्ज्ञानिमित्तस्याद‍न्तात्सर्वनाम्नो विहितस्येत्यर्थस्तु न । ते, तेषामित्याद्यसिद्धेः । अत्वविधौ विषयसप्तमी तु न । तस्मिन्निति परिभाषाबाधे मानाभावात् । प्रागित्सञ्ज्ञाया इति । प्रत्ययादित्वज्ञानाभावात्तज्ज्ञानाभाव इति भावः । परे तु अनुबन्धत्वयोग्यतयाऽत्रापि तन्निषेधप्रवृत्त्या शित्त्वादेव सर्वादेशः । इत्सञ्ज्ञायोग्यशकारवत्त्वमेव तत्सूत्रे शित्त्वम् । अत एव काणोर्विषये 'नानुबन्धकृतमसारूप्यम्' इति विकल्पाभावः । अन्यथा कादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्सञ्ज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकालेऽनुबन्धज्ञा-

---

व्याख्यानं व्यर्थमत आह । अङ्गसंज्ञेति । असिद्धेरिति । एवञ्चेदृशलक्ष्यानुरोधादत्र विभक्तिव्यत्ययकल्पनाऽऽवश्यकीति भावः । नन्वत्वविधौ विभक्ताविव्यस्य विषयसप्तम्यन्तत्वाङ्गीकारेण विभक्त्युत्पत्तेः प्रागेवात्वप्रवृत्त्या निरुक्तस्थलेषु विभक्तेरदन्तसर्वनाम्नो विहितत्वमस्त्येवेत्यत आह । अत्वविधाविति । मानाभावादिति । अत्र शास्त्रेऽसतिबाधके तस्मिन्निति परिभाषानुग्रहाय सप्तम्यन्तस्थलेषूपश्लिष्टपदाध्याहारेणौपश्लेषाधिकरणसप्तम्याश्रयणस्यैव न्याय्यत्वादिति भावः । अन्यथा परिभाषाया निर्विषयत्वापत्तेः । अस्य ग्रन्थस्य 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी'ति परिभाषाबाधे मानाभावादिति वाराणसेयानां व्याख्यानन्तु न युक्तम् । वैषयिकसप्तम्या अपि कारकविभक्तित्वेनास्याः परिभाषाया अत्र प्रसक्त्यभावात् । प्रत्ययादित्वज्ञानाभावादिति । सर्वादेशत्वे हि स्थानिवद्भावेन समुदायस्य प्रत्ययत्वज्ञानं, ततो लशक्वित्यस्य प्राप्तिस्ततश्शकारेऽनुबन्धत्वज्ञानमिति भावः । भाष्यसूचितं सिद्धान्तमाह । परेत्विति । अत एवेति । अनुबन्धपदस्येदृशार्थकत्वादेवेत्यर्थः । अन्यथा=अनुबन्धपदस्य सङ्केतसम्बन्धेनेत्पदविशिष्टार्थकत्वे । तत्प्रवृत्तिकाल इति । वासरूपन्यायप्रवृत्ति-

**नाभावेन विकल्पो दुर्वारः। पश्चादनुबन्धत्वज्ञानेऽपि जातनिवृत्त्ययोगात्। यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्तिस्तर्ह्यत्रापि पश्चात्तत्त्वज्ञाने**

---

काल इत्यर्थः। विकल्पो दुर्वार इति ॥

अयं भावः। इको गुणवृद्धी इत्यादिवद्वासरूपोऽस्त्रियामित्येषा परिभाषाऽपवादप्रत्ययविधायकेषु वेति पदमुपस्थाप्य पदैकवाक्यतया विध्युपकारिका। प्रत्यय इत्यस्य तु संज्ञाशास्त्रत्वेन वाक्यैकवाक्यतया विध्युपकारकत्वम्। एवञ्च वासरूपन्यायप्रवृत्तिकाले कादीनां प्रत्ययत्वज्ञानाभावावेनेत्संज्ञालोपयोरप्रवृत्तौ तन्न्यायप्रवृत्त्या विकल्पो दुर्वार इति ॥

न च तत्प्रवृत्तिकाले प्रत्ययत्वाज्ञाने कथं तस्यापि प्रवृत्तिः। यत्रासरूपप्रत्ययविधानं तत्र वेत्युपतिष्ठते इति तदर्थादिति वाच्यम्। यस्य प्रत्ययत्वं भावि तद्विधाविति तस्याऽर्थेनादोषात्। न चैवं भावि प्रत्ययत्वमादायेत्संज्ञापि तदा सुलभैवेत्यनुबन्धपदस्य न निरुक्तार्थपरत्वाङ्गीकारे फलमस्तीति वाच्यम्। इत्संज्ञाशास्त्रे तादृशाऽर्थाङ्गीकारे मानाभावात्। मूलोक्तार्थापेक्षया लाघवाभावाच्च। किञ्च वक्ष्यमाणभाष्येणेत्संज्ञायोग्यत्वमेवानुबन्धत्वमिह शास्त्रे बोध्यत इति न लक्षणाश्रयणप्रयुक्तं गौरवमत्रेत्येतन्मतखण्डनप्रयासः परेषां प्राचीनमतसंस्थापनाग्रहमूलक एवेत्यवधेयम् ॥

एतेन बोधरूपप्रवृत्तिकाल इति प्रतीकमुपादाय वस्तुतो बोधमात्रं न प्रवृत्तिः। किन्तु पदैकवाक्यतयाऽन्वयाऽर्हस्य सर्वस्योपस्थितौ वाक्यार्थबोधे वृत्ते पश्चाद्वाक्यैकवाक्यतयाऽन्वयार्हपरिभाषोपस्थितौ तदेकवाक्यतया महावाक्यार्थबोधः। तन्मूक असादयमिति भृङ्गग्राहकतयोपप्लूयमानवाक्याऽर्थबोधो वा लक्ष्येप्रवृत्तिः। अस्यां च दशायां कादेरनुबन्धत्वं ज्ञातुं सुशकमेवेत्याचार्योक्तमपास्तम् ॥

सर्वादेशत्वस्यापि निवृत्त्यापत्तिः । ध्वनितश्चेदं 'लुटः प्रथमस्य'

---

लुटः प्रथमस्येति । तत्र हि भाष्ये 'डाविकारस्य शित्करणं सर्वादेशार्थम् । डाविकारश्शित्कर्तव्यः । किंप्रयोजनम्, सर्वादेशार्थम् । शित्सर्वस्येति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोन्त्यस्य विधयो, भवन्तीत्यन्त्यस्य प्रसज्येत' इत्युक्तम् । अत्र कैयटः । डाविकार इति, डादेश इत्यर्थः । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डाश् वक्तव्य इत्याह । तदग्रे भाष्ये 'सिद्धमलोऽन्त्यविकारात् । सिद्धमेतत् । कथम्? अलोन्त्यविकारात् । अस्त्वयमलोऽन्त्यस्य । का रूपसिद्धिः । कर्ता । डिति टेर्लोपाल्लोपः । डिति टेर्लोपेन लोपो भविष्यति । अभत्वान्न प्राप्नोति । डित्करणसामर्थ्याद्भविष्यती'त्युक्तम् । आकारे डिति परतः सतकारस्य टिसंज्ञकस्य लोपो डित्करणसामर्थ्याद्भसंज्ञयोरभावेऽपि भविष्यतीति चुट्टू इत्यादौ प्रत्ययशब्द उपादिश्यमान प्रत्ययावयवपरोपीत्यन्त्यादेशेऽपि डस्येत्त्वसिद्धिरिति च तद्भाष्याशयः । अत्र पूर्वपक्षे डादेशस्सर्वादेशत्वाय शकारेत्संज्ञकः कार्य इत्युक्तम् । यदि नानुबन्धकृतमित्यत्राऽनुबन्धपदस्य निरुक्तार्थोनाश्रीयते, तदा डादेशस्यादेशतायाः प्राक् प्रत्ययत्वाभावेनेत्त्वाप्रवृत्तौ नानुबन्धकृतमिति परिभाषाया अप्रवृत्त्याऽनेकाल्त्वादेव सर्वादेशत्वसिद्धौ तदर्थं 'डाविकारश्शित्कर्तव्य' इत्युक्तिरसङ्गता स्यादिति तेन तदर्थो ध्वनित इति भावः । एवं सिद्धान्तेऽप्यस्यान्त्यादेशत्वमङ्गीकृत्य टिलोपेन समाहितम् । तेनाप्ययमर्थो ध्वनितः । अन्यथाऽनेकाल्त्वस्याऽलोन्त्यसूत्रापवादतयाऽन्त्यादेशत्वकथनमसङ्गतमेव स्यात् । एतदुत्तर 'मानित्त्वा'द्वेति भाष्यन्त्वनुबन्धपदस्यानुबन्धत्वयोग्यपरत्वाज्ञानेन चुट्टू इत्यादौ प्रत्ययपदस्योपदिश्यमानप्रत्ययावयवपरत्वाज्ञानेन च प्रवृत्तमित्येकदेश्युक्तिः । इत एवारुचेरेतदुत्तरं णलादिसाधारणं सिद्धान्तमाह । प्रश्लिष्टनिर्देशाद्वेत्यादिना । न चात्र पक्षे परस्मैपदानामिति सूत्रस्थं णलश्शित्करणं सर्वादेशार्थम् । णल् शित्कर्तव्यः ।

"अनेकाल्शित्" इत्यादिसूत्रेषु भाष्ये इति प्राहुः ॥

---

किं प्रयोजनम्? सर्वादेशार्थम्। शित्सर्वस्येति सर्वादेशो यथा स्यात्। अक्रियमाणे हि शकारेऽलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत ॥ उक्तं वा। किमुक्तम्। अनित्त्वात्सिद्धमित्यादि भाष्यं विरुध्येतेति वाच्यम्। तत्रोक्तं वेत्यनेन लुटः प्रथमस्येति सूत्रोक्तस्य सिद्धान्तभूतस्य 'प्रश्लिष्टनिर्देशाद्वासिद्ध' मित्यस्यैव प्राधान्येन ग्रहणे भाष्यतात्पर्येण तदविरोधात्। तदुत्तरं 'किमुक्तमनित्त्वाद्वे'ति भाष्यन्तु पूर्वोक्तरीत्यैकदेश्युक्तिः। प्रश्लेषनिर्देशस्योत्तरत्र मध्यमपुरुषबहुवचनविषयेऽवश्याश्रयणीयतया तयैव रीत्याऽत्रापि सर्वादेशत्वं सिद्ध्यतीति ध्वनयितुमेव तदर्थस्याऽत्र विवरणमकृत्वाऽग्रे तद्विवरणमित्यवधेयम्। न च प्रत्ययपदस्योपदिश्यमानप्रत्ययावयवपरत्वेऽनेकालिति सूत्रस्थं भाष्यं विरुध्येतेति वाच्यम्। लशक्वतद्धित इति सूत्रेऽतद्धित इति पर्युदासेनावयवत्वाऽनवरुद्धस्यैव प्रत्ययस्य ग्रहणमिति वक्तुं शक्यतया तद्विरोधाभावात् ॥

एतेन वस्तुतस्तु न्यायसिद्धत्वेन अनित्त्वादित्येव सिद्धान्त्युक्तिः। न्यायसिद्धैतद्भाष्यविरोधेन प्रश्लेषप्रयुक्तगौरवेण च तत्र तादृशतद्ग्रहणे फलाभावाच्च तद्भाष्यद्वयमेकदेश्युक्तिः। अत एव परस्मैपदानामिति सूत्रे भाष्येऽनित्त्वादेव णलस्सर्वादेशत्वं साधितम्। न तु प्रश्लेषादपि। परिभाषाज्ञापनन्तु पुम्नेग्रुभ्य इति निर्देशेनापि सिद्धम्, शिद्ग्रहणञ्च न कार्यमिति तदाशयमाहुरिति भट्टोक्तमपास्तम्। अनेकालिति। तत्रहि भाष्येऽष्टाभ्य औश् इदम इशित्यादौ शकारोच्चारणसामर्थ्येन भूतपूर्वाऽनेकाल्त्वमाश्रित्य सर्वादेशत्वसिद्ध्या जसश्शीत्यादौ सर्वादेशतायाः प्रागित्संज्ञाया अभावेनाऽनेकाल्त्वादेव सर्वादेशत्वसिद्ध्या च शित्सर्वस्येत्येतदर्थमित्युक्त्वा तस्य नानुबन्धकृतमनेकाल्त्वमिति परिभाषाज्ञापकत्वमुक्तम्। तत्परिभाषायामनुबन्धपदस्य अनेकालिति सूत्रे शित्पदस्य च मूलोक्तार्थानङ्गीकारे ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याऽभावेन तदसङ्गतमेवेति तेनापीदं ध्वनितमिति भावः ॥

यत्तु यथा मिदचोऽन्त्यात्परः, आद्यन्तौ टकितौ, ङिच्चेत्यादीनामनन्यार्थङित्त्वादिष्वेव प्रवृत्तिः, एवमनेकाल्शित्सर्वस्येत्यस्याप्यनन्यार्थशित्त्वेष्वेव प्रवृत्तिः। अत एव तातङि ङिच्चेति न प्रवर्तते। तथा चाऽनुबन्धत्वघटितधर्मनिमित्तकपरिभाषाशास्त्रमनन्यार्थेत्संज्ञकेष्वेव प्रवर्तते इति जसश्शीत्यादावनेकाल्त्वादेव सर्वादेशः। जसश्शीति शकारस्य विभाषा ङिश्योरित्यादौ विशेषणार्थतया चारितार्थ्येनानन्यार्थत्वाभावात्। यद्वा नानुबन्धकृतमनेकाल्त्वमिति परिभाषायामनुबन्धपदमनुबन्धत्वयोग्यपरमित्यत्र न मानम्। लुटः प्रथमस्येति सूत्रस्थं भाष्यन्त्वेकदेश्युक्तिः। अत्र तथास्वीकारे फलाभावात्। अत एव डाणलादावनायासेन सर्वादेशत्वं सिद्धमित्यौत्तराहास्तन्न। पूर्वोक्तपरिभाषाणां तत्तदनुबन्धवर्णोच्चारणसामर्थ्यलभ्यार्थानुवादकत्वमभ्युपेत्यानन्यार्थङित्त्वादिष्वेव प्रवृत्त्यभ्युपगमेऽपि ङिच्च, अनेकाल् शित्सर्वस्येति सूत्रद्वयस्य भाष्यपर्यालोचनया विशेषणाऽर्थत्वातिरिक्तशास्त्रीयकार्यसत्त्व एव तेषामप्रवृत्तिरित्यर्थस्य लाभेन विशेषणार्थतारूपफलसत्त्वेपि प्रकृते शित्त्वात्सर्वादेशे बाधकाभावात्। यदि विशेषणार्थतारूपफलसत्त्वेऽपि निरुक्तपरिभाषाणामप्रवृत्तिरिति मन्यते, तदा चत्वतुकोरसिद्धः, श्चुत्वं धुटि सिद्धं वाच्यम्, नुम्विसर्जनीयशर्व्यवायेपि, वुग्युटावुवङ्यणोस्सिद्धौ वक्तव्यावित्यादौ तुगादिषु वर्तमानानां ककारादीनां विशेषणार्थतया चारितार्थ्येन आद्यन्तौ टकितावित्यादिपरिभाषाणामप्रवृत्त्यापत्तौ बहूपप्लवापत्तेः। किञ्च नानुबन्धकृतमनेकाल्त्वमिति परिभाषायामनुबन्धपदमनुबन्धत्वयोग्यपरमित्यत्र न मानमिति तदुक्तिरपि न युक्ता। प्रकृतपरिभाषाज्ञापनपराऽनेकाल्शित्सर्वस्येति सूत्रस्थभाष्यस्यैव तत्र मानत्वात्। अन्यथा ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावेन तदसङ्गतिः स्पष्टैव। प्राचीनमत एव श्रद्धाजाड्येन विना विरोधं लुटः प्रथमस्येति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पनापि न युक्तेति तदप्यत्रार्थे मानं भवितुमर्हति। अस्यां परिभाषायामनुबन्धपदस्य ताद्रूप्यार्था-

**अतः सर्वनाम्न इति । अदन्तादङ्गात् परस्य सर्वनाम्नो विहितस्येत्यर्थः । तेन मासपूर्वायेत्यत्र स्मै न । ङसिङ्योः ॥ स्मात्स्मिनोः 'हलन्त्यम्' इति न । 'न विभक्तौ' इति निषेधात् । यद्यपि इत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं, तथापि विभक्तावित्यस्य विभक्तित्वयोग्ये इत्यर्थान्न दोषः । अत एव सूत्रे तुग्ग्रहणं चरितार्थम् । आमि**

---

ङ्गीकारे फलाभाव इति तदुक्तिरपि न युक्ता, अनेकाल् शिदिति सूत्रे शिद्ग्रहणेन परिभाषात्रयसंग्राहकतयाऽनुबन्धानामविद्यमानवद्भावज्ञापन एव भाष्यतात्पर्यात्तत्राऽनुबन्धपदस्य तादृशार्थानङ्गीकारे कविषये वासरूपन्यायप्रवृत्त्या विकल्पापत्तेर्दुर्वारत्वात् । तद्भाष्यस्य निरुक्ताशयकत्वादेव 'किमेतस्य ज्ञापने प्रयोजनं, तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु पृथङ्निर्देशोऽनाकारान्तत्वा' दित्युक्तम् । तन्न वक्तव्यं भवतीति तदुत्तरभाष्यं सङ्गच्छते । अन्यथा नानुबन्धकृतमनेकाल्त्वमित्येतन्मात्रज्ञापनेन तस्य सर्वस्यावक्तव्यत्वासिद्ध्या तदसङ्गतिः स्पष्टैव । यदप्यनुबन्धपदस्य लक्षणानङ्गीकारादेव डाणलादावनायासेन सर्वादेशत्वं सिद्धमिति तदप्यसत् । लिण्मध्यमपुरुषबहुवचने सर्वादेशत्वाय तेषामप्येतत्प्रयासस्यावश्यकतया डादीनां प्रश्लेषेण सर्वादेशत्वकथनपरलुटः प्रथमस्येति सूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पनाया अयुक्तत्वादित्यवधेयम् ॥

सर्वनाम्न इत्यस्य विहितविशेषणत्वाङ्गीकारे फलमाह । **तेनेति** । अन्यथा तृतीयासमास इत्यनेनापि समुदायस्य सर्वनामसंज्ञानिषेधादवयवस्य सर्वनामत्वात्ततः परत्वेनात्र स्मैभावो दुर्वार एवेति भावः ॥

**इत्यर्थादिति** । लक्षणयेति भावः । न विभक्ताविति सूत्रे विभक्तिपदस्य तादृशाऽर्थे लक्षणाङ्गीकारे साधकमाह । **अत एवेति** । **चरितार्थमिति** । तद्धि सर्वस्मिन्नित्यादौ नकारस्येत्त्ववारणार्थमेव कृतम् । तच्च लक्षणां विना न सम्भवतीति भावः । न च प्राग्दिशीयेऽस्य चारितार्थ्यम् । तेष्वस्याप्रवृत्तेः

स ॥ 'आज्जसेरसुक्' इत्यत आदिति वर्त्तते । पञ्चत्रिंशादिति । तेन सर्वार्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः । सर्वविश्वौ बुद्धिस्थानेकसंख्याकावयवारब्ध समुदाये शक्तौ । तस्य समुदायस्यानुद्भूतावयवभेदत्वे एकवचनं, यथा—'सर्वो लोक' इति । तादृक्समुदायद्वयादिविवक्षायां द्विवचनादि—सर्वौ व्यूहौ, सर्वे व्यूहा इति । यदाऽप्युद्भूतावयवभेदसमुदायविवक्षा तदाऽपि बहुवचनं—सर्वे घटा इति । पूर्वपरावर ॥ व्यवस्थाऽसंज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः । एवमुत्तरसूत्रद्वयेऽपि ॥

नित्यं द्विवचनान्त इति । द्विवचनान्त एवेत्यर्थः । अकजर्थ

---

पूर्वमुपपादितत्वात् । न चोपसंजनिष्यमाणन्यायेनैवेत्त्वनिषेधसिद्धौ लक्षणाप्रयासो विफल एवेति वाच्यम् । शास्त्रद्वयप्रामाण्याद्विकल्पवारणायोत्सर्गापवादयोरेकवाक्यताया एव स्वीकार्यत्वेन तदा हलन्त्यमितिसूत्रघटकहल्पदस्य विभक्तिस्थतवर्गादिभिन्नहल्त्वावच्छिन्नबोधकतया स्मिन्नादेशप्रवृत्तिकाले विभक्तित्वज्ञानाभावादित्त्वप्रवृत्तेर्दुर्वारतया तद्वारणाय न्यायाङ्गीकारेऽपि लक्षणाश्रयणस्यावश्यकत्वात् ॥

तेनेति । परिगणनेनेत्यर्थः । अन्यथान्वर्थसंज्ञया कृत्स्नसकलादिशब्दानामपि संज्ञा स्यादिति भावः ॥

गणसूत्रस्याऽर्थमाह । व्यवस्थासंज्ञावर्तिन एवेति ॥

ननु नित्यं द्विवचनान्त इत्यनुपपन्नम् । यत्र टाप् तत्रोभस्य द्विवचनान्तत्वासम्भवादत आह । द्विवचनान्त एवेत्यर्थ इति । एतेन नित्यं द्विवचनान्त इत्यत्र नित्यशब्दोऽवधारणाऽर्थ इति सूचितम् । तेन सजातीयवचनान्तर-

इति । ननु काकचोः को विशेषः । प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तत्वस्यैव सत्त्वात् । न च सुबन्तात्तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदात्तत्वम् 'उभकाभ्याम्' इत्यादौ सुबन्तस्य, के तु प्रकृतेरिति विशेष इति वाच्यम् । तद्धितविधौ प्रातिपदिकादित्याधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात् । स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यदेतत् । युष्मदस्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं,

---

स्यैव व्यवच्छेदः । न तु टाप इति भावः । अन्तोदात्तत्वस्यैवेति । अकज्विधौ सर्वनाम्न इत्युक्त्या तस्यैव प्रकृतित्वात् सप्रकृतिकस्य चितोऽन्त उदात्त इत्यर्थकेन चित इत्यनेनाकच्यपि ककारोत्तरवर्तिन एवोदात्तत्वेन काकचोर्न स्वरे विशेष इति भावः । ननु तत्र सर्वनाम इत्युक्तावपि कुत्सित इति सूत्रस्थभाष्यप्रामाण्येन सार्थकतद्धितानां सुबन्तादेवोत्पत्त्या सर्वनामप्रकृतिकसुबन्तस्यैव प्रकृतित्वेनास्त्येव स्वरे विशेष इति शङ्कते । न चेति । प्रातिपदिकस्यैवेति । सार्थकतद्धितानां वस्तुतस्सुबन्तादुत्पत्तावपि तद्धितविधौ सुबन्तस्य शब्दतोऽनुपात्तत्वेन न तस्य प्रकृतित्वं, किन्तु प्रातिपदिकस्यैवेति भावः । न्यायादिति । स्वार्थे परिपूर्णे पदमित्यादिकुत्सित इति सूत्रभाष्योक्तन्यायादित्यर्थः । सुबन्तात्पर इति । निरुक्तन्यायात्पूर्वं सुपि सामर्थ्यात्तस्मादिति परिभाषाया अंशतो बाधनेन सुपा व्यवधानेऽपि प्रवृत्तेरर्थात्सुबन्तात्परत्वमेवैतद्विषये परश्चेत्यनेन बोध्यत इति भावः । बहुजादिविषये तु परश्चेत्यस्य सर्वथाऽप्रवृत्त्या न तद्विषयकमिदं वाक्यमिति बोध्यम् । एतेन सुबन्तं सम्पाद्य यतः कुतश्चित्पर इत्यर्थः । यथाश्रुतन्तु न युक्तम् । तदर्थस्य न्यायासाध्यत्वात् । अरुचि वाऽसम्भवादिति भट्टोक्तमपास्तम् । एवमपि बहुच्यसम्भवस्य गले पतितत्वादिति बोध्यम् । नन्वकज्विधौ प्रातिपदिकस्यैव प्रकृतित्वे तस्यैव टेः प्राग कच्चित्त्वयका मयकेत्यादेरसिद्धिरत आह । युष्मदिति । वचनादिति । अकज्विधौ विभाषा सुप इत्यतस्सुप इत्यनुवर्त्य वाक्यभेदेन व्याख्यानादित्यर्थः ॥

**तस्यैव टेः प्रागकजिति बोद्धयम् । न चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकाववयवौ यस्येत्यर्थे उभकशब्दादयच्युभकय इति रूपं, के तु नेति विशेषः । 'कश्चेदानीं काकचोर्विशेषः' इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्कने—न चेति । द्विवचनपरत्वाभावेनेति । अकचि तन्मध्यपतितन्यायेनोभशब्दस्य**

---

अयं भावः । अकज्विधौ प्रातिपदिकादिति, विभाषा सुप इत्यतस्सुप इति चानुवर्तते । तस्य च वाक्यभेदेन सम्बन्धः । एवं च सर्वनामरूपप्रातिपदिकावयवटेः प्रागकजिति सर्वनामप्रकृतिकसुबन्तस्य टेः प्रागकजिति च वाक्यद्वयं सम्पद्यते । तत्र द्वितीयं वाक्यं युष्मदस्मच्छब्दमात्रविषयकम् । भाष्ये तथैवोदाहरणात् । अनोकारसकारभकारादाविति वक्तव्यमित्यप्यस्यैव व्यवस्थापकम् । अत्रैवाऽतिप्रसङ्गमाशङ्क्य भगवता तदुक्तेः । एवञ्च युष्मदस्मद्भिन्नसर्वनाम्नः ओकारसकारभकारादौ सुपि युष्मदस्मदोश्च प्रातिपदिकावयवटेः प्रागकज्विधायकमाद्यं वाक्यम् । तस्यापि वस्तुतस्सुबुत्पत्त्यनन्तरं प्रवृत्तावपि तत्र शब्दतस्सुप इत्यस्य निमित्तत्वेनानुपादानात्सुबुत्पत्त्यनन्तरं तन्निमित्तकादेशात्पूर्वमन्तरङ्गत्वात्प्रवृत्तिः । अत एव 'कादेशस्साकच्कार्थः । कः, कौ, के, इत्येवमर्थमि'ति भाष्यं सङ्गच्छते । द्वितीयवाक्ये तु सुप इत्यस्य शब्दतो निमित्तत्वेनोपादानादादेशापेक्षयाऽन्तरङ्गत्वस्य वक्तुमशक्यत्वेन परत्वाद्विभक्तिनिमित्तकादेशेषु कृतेषु तेन सुबन्तस्य टेः प्रागकजिति न त्वयकेत्यादेरसिद्धिः । नापि किमः कः इत्यत्र युवकामित्यत्र च वक्ष्यमाणशेखरग्रन्थयोर्विरोधश्चेति सर्वमवदातमिति ॥

ननु स्वरे विशेषाभावेऽपि रूपे विशेषोऽस्त्येवेत्याशङ्कते । न चेति । के तु नेति । कान्तस्य शब्दान्तरत्वादिति भावः । अनभिधानादिति । भाष्ये तथा शङ्काकरणेन तदुत्तरमीदृशविशेषाऽकथनेन चोभशब्दप्रकृतिकाकजन्तादय-

द्विवचनपरत्वं, के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः। 'उभादुदात्त' इतिसूत्रे भाष्यकृताऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणमयोग्यं सत् योगविभागेनोभशब्दाद्वृत्तिविषयेऽत्यन्तस्वार्थिकायज्विधानार्थम्। अयश्च तद्विषये सुबुत्पत्तेः पूर्वमेव, स्वार्थिकत्वेनान्तरङ्गत्वात्।

---

चोऽनभिधानमित्यर्थो लभ्यत इति भावः। ननु दृष्टान्तेऽवयवार्थाप्रतीत्या तयपोऽभावेन कथं तत्स्थानिकस्यायचस्सिद्धिः। कथं वा कविषयेऽपि तत्प्रसङ्ग इत्याशङ्क्य तत्प्रसक्तिं दर्शयति। **उभादुदात्त इत्यादिना। प्रत्ययान्तरत्वेन व्याख्यानादिति।** इदं महाविभाषासम्बन्धस्यावश्यकत्वे हेतुः। अन्यथादेशत्वप्रत्ययान्तरत्वपक्षयोः फलभेदस्य सत्त्वेन पक्षभेदासङ्गतिरिति भावः। **नित्यग्रहणमिति।** अस्यायज्विधानार्थमित्यनेनान्वयः। अयं भावः। न तावदत्र वाग्रहणनिवृत्त्यर्थं नित्यग्रहणम्। तस्याऽस्वरितत्वादेव निवृत्तिसिद्धेः। नापि महाविभाषाया असम्बन्धार्थं तत्। प्रत्ययविधायकेष्वेव तस्याः सम्बन्धात्। न वा प्रत्ययान्तरत्वपक्षे तदसम्बन्धार्थं तत्। तदानीं तदसम्बन्धे फलभेदेन पक्षभेदकथनासङ्गतेः। वाक्यासिद्धेश्च। एवञ्च नित्यग्रहणं योगविभागेनात्यन्तस्वार्थिकस्यायचो विधायकं भवतीति। **अयोग्यं सदिति।** अन्वय योग्यमित्यर्थः। **वृत्तिविषय इति।** योगविभागस्येष्टसिद्ध्यर्थत्वेन 'उभौ साभ्यासस्ये'तिसौत्रप्रयोगेण चायमर्थो लभ्यत इति भावः। नन्वेवमप्युभसर्वतसोरित्यत्रत्यवस्तुतस्त्वित्यादिकारकमनोरमाग्रन्थेन वृत्तिविषये वृत्तौ कृतायामेवायजित्यर्थलाभेन दृष्टान्तासङ्गतिस्तदवस्थैव। अस्यामवस्थायामुभशब्दस्य गणे पाठाऽभावेनायचं विना सर्वनामप्रकृतिकसप्तम्यन्तत्वाभावात्। सत्ययचि सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः, सत्यां च त्रलादिवृत्तावयजित्यन्योन्याश्रयेण त्रलादेरनुत्पादप्रसङ्गादत आह। **अयं चेति। पूर्वमिति।**

**अत एवायज्विशिष्टस्योभस्य सर्वनामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः। अत्र नित्यशब्दस्य वाच्यार्थविरोधान्महाविभाषाया असम्बन्धः। अयमप्याद्युदात्त एवोदात्तग्रहणानुवृत्तेः। अयश्च**

---

एवञ्च तदुत्तरं जायमानाया वृत्तेरपि प्रागेवायमिति नान्योन्याश्रय इति भावः। कारकमनोरमाग्रन्थस्तु प्राचामनुरोधेनेति ध्येयम्। **अत एवेति**। त्रलादिवृत्तिप्रयोजकसुबुत्पत्तेरपि प्रागस्योत्पत्तेरेवेत्यर्थः। **त्रलाद्युत्पत्तिरिति**। अन्यथावयवार्थाप्रतीत्या उभयत उभयत्रेत्यादावत्यन्तस्वार्थिकायच एव भवताप्यङ्गीकार्यतया तस्य सुबुत्पत्त्यनन्तरं प्रवृत्त्यङ्गीकारे भवन्मते उभशब्दस्य सर्वादिगणे पाठाभावेन सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वाभावात्त्रलाद्यसिद्धिरिति भावः। न च सुबुत्पत्त्यनन्तरमयजुत्पत्तावप्युभशब्दात्सुबन्तात्स्वार्थेऽयचि ततस्सप्तम्यां ततस्त्रल्युभयत्रेति रूपं सिद्ध्यत्येवेति वाच्यम्। नित्यमित्यस्योभशब्दाद्वृत्तिविषयेऽत्यन्तस्वार्थिकोऽयजित्यर्थस्यैव शब्दमर्यादया लाभेन सुबन्तात्तदप्रवृत्तेः। तत्रोभशब्दस्य तत्प्रकृतिकसुबन्ते लक्षणायान्तु न मानम्। थकालतनेष्विति ज्ञापकमपि न्यायसिद्धार्थानुवादकतया सार्थकतद्धितविषयकमेवेति बोध्यम्। नित्यमित्यस्यापि प्रत्ययविधायकत्वेन तत्रापि महाविभाषायाः सम्बन्धः स्यादिति भ्रमनिरासायाह। **अत्रेति**। योगविभागसूत्रे इत्यर्थः। ननूभशब्दस्य सर्वनामत्वं स्वीकृत्याकचि कृतेऽप्ययच् दुर्वार एव। तस्यापि वृत्तित्वेन वृत्तिविषयतायास्सत्त्वादित्यत आह। **अयं चेति**। **उभशब्दस्येति**। उभयोन्यत्रेतिवार्तिकस्वारस्येन योगविभागस्येष्टसिद्ध्यर्थत्वेनोभौ साभ्यासस्येतिलिङ्गेन च वृत्तिविषय इत्यनुक्त्वा एवमेव वक्तव्यम्। एवञ्चोभशब्दादकचि सति तन्मध्यपतितन्यायेन तद्विशिष्टस्योभशब्दत्वात्तस्य द्विवचनविषयत्वाभावसम्भावनाया अभावेन नायजिति भावः। नन्वेवमप्युभशब्दस्यायचि कृते तेन व्यवधानात्सर्वत्रापि तस्य द्विवचनाविषयत्वाभावसम्भावनायास्सत्त्वेनोभावित्यादावप्ययच्स्यादत आह।

**वार्तिकप्रामाण्याद्यत्रोभशब्दस्योभयशब्दस्य वा द्विवचनविषयत्वाभावसम्भावना तत्रैव । अत एवोभयोर्वास इत्यादौ 'शयवास' इत्यलुकि नायच् । तद् ध्वनयन् वार्तिकमाह— उभयोऽन्यत्रेति । द्विवचनपरत्वाभावे इति । तत्परत्वविषयत्वाभावे**

---

उभयशब्दस्येति । द्विवचनेति । तच्चोभशब्दप्रकृतिकमेवेति नाग्रहः। अत एवोभयोरुभावुभोभावित्यादौ समासप्रकृतिकेऽपि तत्र नायच् । उभशब्दादुत्पन्नं द्विवचनमिति मनोरमाग्रन्थस्तु तदन्तादित्यर्थक इति बोध्यम् । एवं व्याख्याने फलमाह। अत एवेति । वृत्तिविषय इत्यनुक्त्वा एवमर्थस्वीकारादेवेत्यर्थः । नायजिति। अन्यथास्यापि वृत्तित्वेनात्र स दुर्वारः । ईदृशार्थविवक्षायान्तु यद्ययच् स्यात्तदा विभक्तेरलुकि कृते उभयशब्दस्य द्विवचनपरत्वं स्यादिति सम्भावनाया एव सत्त्वेन तदभावसंभावनाया अभावान्नायजिति भावः ॥

नन्वन्यत्रेत्यस्य द्विवचनपरत्वाभाव इति विवरणमयुक्तम् । नित्यमिति सूत्रेण विहितस्यायचो वृत्तिविषये सुबुत्पत्तेः प्रागेव प्रवृत्त्या सर्वत्रैव द्विवचनपरत्वाभावस्य सत्त्वादित्यत आह । तत्परत्वविषयत्वाभाव इति । परिनिष्ठिते प्रयोगे द्विवचनविषयत्वाभावसम्भावनायामित्यर्थः । सम्भावनानिवेशादेवोभयत उभयत्रेति दृष्टान्तेऽयच्सिद्धिः । अन्यथा शङ्कितनये उभशब्दस्य सर्वादिषु पाठाभावेन ततस्त्रलादिविवक्षायाः कर्तुमशक्यतया द्विवचनस्य लुगभावे तद्विषयस्यैव सत्त्वेन स न स्यात् । तन्निवेशे तु यद्यत्र त्रलादिः स्यात्तदा लुगपि स्यादिति सम्भावनया द्विवचनविषयत्वाभावसम्भावनाऽस्त्येवेति न दोषः । अत एव सर्वादिषूभशब्दपाठप्रत्याख्यानात् भाष्यनयेऽपि निरुक्तस्थलेऽयच्सिद्धिरित्यवधेयम् । न चोभयत इत्यादौ द्विवचनस्य सत्यपि लुकि तद्विषयत्वमस्त्येवेति वाच्यम् । लुग्विषये लुका विषयस्यैवापहारेणादोषात् । नन्वेवमुभयो मणिरित्यादावपि यद्यवयवार्थकोऽयच् स्यात्तदा लुगपि स्यादिति सम्भावनया द्विवचनविषयत्वा-

इत्यर्थः । उभयो मणिरित्यादौ तु न । 'लिट्यभ्यासस्योभयेषाम्' इति निर्देशेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च तस्य क्वचिदप्रवृत्तेः। अतो रूपाद्यन्ते नायच् । रूपादेरस्मादनभिधानमेव वा ।

---

भावसम्भावनायास्सत्त्वेनोभयत उभयत्रेत्यादाविवात्यन्तस्वार्थिकोऽयच् स्यादित्यत आह । उभयो मणिरित्यादाविति । निर्देशेनेति । न चावयवार्थकायचोऽत्यन्तस्वार्थिकायज्बाधकतया तदुत्तरमस्याप्रवृत्तिस्सिद्धैवेति न निर्देशापेक्षेति वाच्यम् । उभशब्दप्रकृतिकसुबन्ताभावेन स्वार्थिकायजुत्तरमवयवार्थकायचश्चारिताथ्याऽभावेन तक्रन्यायेन बाधकत्वस्य वक्तुमशक्यतया सर्वथा निरवकाशत्वेनैवावयवार्थकायच् तद्बाधक इति तदुत्तरं तत्प्रवृत्तेर्दुर्वारतया निर्देशापेक्षाया आवश्यकत्वात् । इष्टसिद्ध्यर्थत्वेन चेति । यत्तु चिन्त्यमिदम् । विभक्तयोगद्वयमध्येऽन्यतरेणान्यतरस्य यत्र वैयर्थ्यं तादृशातो धातोरित्यादिविषय एव योगविभागादिष्टसिद्धिरिति परिभाषाप्रवृत्तिस्वीकारेण प्रकृते चावयवार्थाऽयचोऽत्यन्तस्वार्थिकायचश्चैकेन योगेन विधातुमशक्यतयाऽपरयोगवैयर्थ्यस्य वक्तुमशक्यत्वादित्यौत्तराहाः । तन्न । अवयवार्थविवक्षायामप्यत्यन्तस्वार्थिकायच्प्राप्तेस्सत्त्वेन तस्य सार्वत्रिकत्वे पूर्वसूत्रवैयर्थ्यस्य योगविभागादिष्टसिद्धिरिति परिभाषाबीजभूतस्यात्रापि सत्त्वात् । तस्येति । अत्यन्तस्वार्थिकायच इत्यर्थः। रूपाद्यन्त इति । उभरूपमित्यादौ । नायजिति । अन्यथा उभयत्रेत्यादाविव यदि रूपप्प्रत्ययः स्यात्तदा द्विवचनस्य लुक् स्यादिति सम्भावनयाऽयच् दुर्वार इति भावः । अनभिधानमेवेति । अत्र मानमुभशब्दपाठप्रत्याख्यानपरं भाष्यमेव । तथाहि । तन्मते कप्रत्ययस्येवाऽस्यापि द्विवचनशब्देन ग्रहणे तस्मिन्परे नायच्। आरम्भे तु द्विवचनविषयत्वाभावेनायच् भवतीत्यारम्भप्रत्याख्यानयोः फलभेदः स्यादिति तद्वारणाय तदावश्यकमिति भावः । ननु वृत्तिविषये सुबुत्पत्तेः पूर्वमेवाऽयजुत्पत्तिस्वीकारे तत्र कृतेऽयजन्तस्य गणे पाठेन सर्वनामत्वा-

**अयच्यकच् तु न वाच्यः। उपजीव्यत्वेन कस्यैव प्राप्तेः। अपवाद-स्त्वन्यत्र चरितार्थः॥**

**अत्रेदं चिन्त्यम्—अकज्विधावेवोभग्रहणेन सिद्धे सञ्ज्ञाप्रणयनं किमर्थम्। अभिव्यक्तपदार्थकत्वात्संज्ञाव्यावृत्तिः, सर्वनामसाह-**

---

दकचि, तद्विशिष्टस्य तन्मध्यपतितन्यायेनोभयशब्दत्वात्तस्य द्विवचनविषयत्व-मेव स्यादिति तदभावसम्भावनाभावेनोभयोर्वास इत्यादाविव पूर्वमयचोऽप्र-वृत्तौ कप्रत्ययेपीष्टसिद्धयोभशब्दस्य सर्वादिषु पाठो व्यर्थ एवेत्याशङ्क्याह। **अयच्यकच् तु नेति**। यद्ययजुत्तरमकच् प्रवर्तेत, तदा निरुक्तरीत्याऽयचो-ऽप्रवृत्तिस्स्यात्। किन्तु सैव नेति भावः। तत्र हेतुमाह। **उपजीव्यत्वेनेति**। अयं भावः। यद्यत्र कप्रत्ययः स्यात्तदा लुकप्रवृत्त्योभशब्दस्य द्विवचनविषयत्वं न स्यादिति सम्भावनामाश्रित्य सुबुत्पत्तेः पूर्वं प्रवृत्तोऽयच्प्रत्ययः स्वप्रवृत्त्यु-त्तरं स्वोपजीव्यकप्रत्ययबाधकस्याकचो निमित्तं न भवतीति तदुत्तरं कप्रत्यय-स्यैव प्रवृत्त्योभयशब्दस्य द्विवचनविषयत्वाभावसम्भावनाया अक्षतत्वेनोभश-ब्दस्य गणे पाठाभावेऽयच् दुर्वार एवेति। नन्वकचः कबाधकतया कथं तद्विषये कस्य प्राप्तिरित्याशङ्क्याह। **अपवादस्त्वन्यत्रेति**। उपजीव्योपजीव-कभावशून्ये सर्विकेत्यादौ कप्रत्ययबाधनेनाकचः कृतार्थतयाऽत्र तदप्रवृत्तिरिति भावः। उभकावित्यकजर्थमुभशब्दस्य गणे पाठः कार्य इति सिद्धान्तितं मूले, तत्राह। **अत्रेदं चिन्त्यमिति**। नन्वकज्विधावेवोभशब्दपाठे संज्ञाभूतादपि तस्मादकच् स्यात्। गणपाठेन सर्वनामसंज्ञायान्तु संज्ञाभूतस्य तदभावान्नाक-जिति विशेषोऽस्त्येवेत्यत आह। **अभिव्यक्तेति**। गौणमुख्यन्यायेन संज्ञा-भूतोभशब्दस्य तत्राग्रहणमिति भावः। नन्वेवमप्युपसर्जनीभूतादुभशब्दादकच् स्यात्। गौणमुख्यन्यायेन तु न सिद्धिः। गौणलाक्षणिकस्यैव तत्र ग्रहणादित्यत आह। **सर्वनामेति**। अव्ययोभसर्वनाम्नामकजित्येवं पाठे सर्वनामसाहचर्येणा-

चर्याच्च । अत एवोपसर्जनव्यावृत्तिरिति । 'उभयोऽन्यत्र' इति वार्त्तिके तयप्समानार्थकोऽप्ययज् गृह्यते । उभयो मणिः, उभये देवमनुष्या इति भाष्ये तदुदाहरणात् । स्वार्थिकस्य च ग्रहणं, तदुपक्रमेण वार्त्तिकप्रवृत्तेः । एवञ्चावयवद्वयारब्धमणिद्वयाविवक्षयोद्भूतावयवभेदविवक्षया वा द्विवचनमस्यासाध्वेव । एतन्मूलकमेवोभयस्यासर्वविभक्तित्वं 'तद्धितश्च' इतिसूत्रे कैयटेनोक्तं, तदाह—कैयट इति । हरदत्त इति । अत्रारुचिबीजं प्रागुक्तभाष्यविरोधः ॥

भाष्ये तूभशब्दपाठः प्रत्याख्यातः । कप्रत्ययस्याज्ञानाद्यर्थविशिष्टस्वार्थे विधानेन द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपाद्विवचनत्वेन वार्त्तिके द्विवचनशब्देन

---

संज्ञाभूतस्यानुपसर्जनस्यैवोभशब्दस्य ग्रहणेन न गणपाठादत्र विशेषः । प्रत्याख्यानपरभाष्येण गणेऽन्तोदात्तनिपातनानुमानान्न स्वरेऽपि विशेष इति भावः । अत एव = साहचर्याङ्गीकारादेव । उपसर्जनव्यावृत्तिरिति । मतान्तररीत्या इदम् । स्वमते तूपसर्जने कुत्सादिविवक्षायाः कर्तुमशक्यत्वस्याऽन्यत्र प्रतिपादितत्वेन तेनाप्युपसर्जनव्यावृत्तिरित्यवधेयम् । नन्वस्योभशब्दस्यार्थप्रतिपादकः कश्शब्दोऽन्यत्र तसिलादिविषये द्विवचनाभावे भवतीत्यर्थकेन 'क इदानीमस्यान्यत्र भवति' इति शङ्कापरभाष्येणोभयोऽन्यत्रेति वार्तिकेऽत्यन्तस्वार्थिकायजन्तस्यैव ग्राह्यतया तस्य द्विवचनेऽसाधुत्वलाभेप्यवयवार्थकायजन्तस्य तत्रासाधुत्वाङ्गीकारे मानाभावेनोभयशब्दस्य द्विवचनं नास्तीति कैयटोक्तिरसङ्गतैवेत्याशङ्क्याह । उभयोऽन्यत्रेति । तदुदाहरणादिति । तद्वार्तिकस्यावयवार्थकायजन्तोदाहरणदानाद्वार्तिके तस्यापि ग्रहणमिति भावः । एतन्मूलकमेवेति । उक्तवार्तिकमूलकमेवेत्यर्थः । भाष्यसम्मतं सिद्धान्तमाह । भाष्ये त्विति । प्रत्याख्यानप्रकारं दर्शयति । कप्रत्ययस्येत्यादिना । अनुवादकत्वरूपेति ।

तस्यापि ग्रहणमुभशब्दग्रहणवत्। अत एवोभयोरुभावुभोभावित्यादौ नायच्। तदुक्तं भाष्ये 'केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति। कथं ?, स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहण भवति' इति । इति—हेतोः, प्रकृतेः—कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवचनशब्देन स्वार्थिक-

---

बोधकत्वरूपेत्यर्थः। अत एवोभशब्दस्य द्विवचनशब्देन ग्रहणं सिद्ध्यति। अत एवोद्योते द्विवचनत्वं च संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वमित्येवोक्तम् । तस्यापीति। कप्रत्ययस्यापीत्यर्थः। अपिना शास्त्रीयसङ्केतितस्यापि ग्रहणम् । अत एवोभावित्यादौ नायच्। कृत्रिमाकृत्रिमन्यायस्य तु नेह प्रवृत्तिः। तस्येह शास्त्रेऽनाश्रयणस्य संख्यासंज्ञासूत्रे भाष्ये उक्तेः। अस्य वार्तिकस्य लोकसिद्धव्यवस्थाबोधकत्वेन तत्र न्यायाप्रवृत्तेश्च। प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवतीति भाष्ये करणल्युडन्तप्रकृतिग्रहणेनेतिपदेन तन्न्यायाप्रवृत्तेः सूचितत्वाच्चेति भावः। अत एवेति। अकृत्रिमस्यापि ग्रहणादेवेत्यर्थः। नायजिति। यद्यपि सर्वादिसूत्रे उद्योते 'द्विवचनं च टाप्साहचर्यात्प्रत्यय एव गृह्यते। एतदर्थमेव टाब्ग्रहणम्। तेनोभयोरुभावित्यत्र समासे भवत्येवाऽयजित्याहुः' इत्युक्तम्, तथापि तत्राहुरित्यनेनारुचिस्सूचिता । तद्बीजन्तु नायमर्थः कैयटाद्यभिमतः। साहचर्यस्यासार्वत्रिकत्वात् । तत्र टाब्ग्रहणस्यानुवादमात्रफलकतयाऽसत्प्रायत्वेन तत्साहचर्यस्याश्रयितुमशक्यत्वाच्चेति बोध्यम्। भाष्यार्थं विवृणोति। इतीत्यादिना। भाष्ये इतिशब्दो हेतुबोधकः। प्रकृतिग्रहणेनेति च प्रकृतिः गृह्यतेऽनेनेति करणल्युडन्तम्। यतः स्वार्थिकाः प्रत्ययाः प्रकृतितोविशिष्टाः, अन्यार्थविशेष्यकबोधाजनका, अतो हेतोः प्रकृतेरुभशब्दस्य ग्राहकेण द्विवचनपदेन तत्प्रकृतिकस्वार्थिकानां कादीनामपि ग्रहणमिति भावः। नन्वेवं तसिलोरपि स्वार्थिकत्वेन तयोरपि द्विवचनशब्देन ग्रहणे उभयत

स्यापि ग्रहणमिति तदर्थः । अतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति तत्तत्कारकशक्तिप्रधानावेवेति न तयोरुक्तद्विवचनत्वमिति ॥

---

उभयत्रेतिरूपासिद्धिरित्याशङ्क्याह । अतसिलाविति । तत्तत्कारकेति । अधिकरणापादानशक्तिविशेष्यकबोधजनकावेव, न तु संख्येयमुख्यविशेष्यकबोधजनकावित्यर्थः ॥

यत्तु 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ती,' त्यस्य यदागमपरिभाषावत् स्वार्थिकप्रत्ययप्रकृतिपर्याप्तधर्मास्स्वार्थिकप्रत्ययान्ते तदादावतिदिश्यन्त इत्यर्थः । तथा चोभशब्दग्रहणेनोभकशब्दस्यापि ग्रहणात्केप्युभशब्दस्य द्विवचनपरत्वमेवेत्युभशब्दपाठो व्यर्थः । अत एव प्रकृतितोऽभिन्ना इत्यर्थकप्रकृतितोऽविशिष्टा इति भाष्यं सङ्गच्छते । जराशब्दात्कप्रत्यये जरसादेशस्तु निर्दिश्यमानत्वाभावान्न । श्वशुरकशब्दाद्राजश्वशुराद्यदिति यदादेरतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति नित्यानन्दस्तन्न । तद्भाष्यस्य तादृशाशयकत्वे प्रकृत्येत्येव वक्तव्ये करणल्युडन्तग्रहणपदवैयर्थ्यापत्तेः । किंच तद्भाष्यस्य स्वार्थिकाः प्रत्ययाः प्रकृतितोऽभिन्ना भवन्तीत्यर्थो वा, उत स्वार्थिकप्रत्ययान्ताः प्रकृतितोऽभिन्ना भवन्तीत्यर्थो वा, नाद्यः, प्रत्ययमात्रस्य तत्त्वातिदेशे फलाभावात् । नान्त्यः, हेतुबोधकेतिशब्दस्वारस्यभङ्गापत्तेः । किञ्च तद्भाष्यस्येदृशाशयकत्वे उभोभावित्यादौ समासेऽयजापत्तिर्दुर्वारा । किञ्च तद्भाष्यस्य संख्यासंज्ञासूत्रभाष्योक्तोभयगतिरिहभवतीतिन्यायानुगृहीतं कैयटादिभिरुपवर्णितमर्थं परित्यज्यावयवत्वबोधकालिङ्गाद्यभावेऽप्यपूर्वतया तादृशार्थाश्रयणे कं फलविशेषमभिलषन्तीति त एव प्रष्टव्याः । प्रकृतितोऽविशिष्टा भवन्तीति भाष्यस्यान्यार्थविशेष्यकबोधाजनका इत्यर्थस्य उद्योते वर्णितत्वेन न तदपि तदुक्तार्थसाधकमिति विभाव्यताम् ॥

**तस्मात्—उभयशब्दात्। जसीति। अवयवद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः। अन्तरङ्गत्वादिति। सर्वार्थबोधकत्वरूपार्थस्योभयत्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बहिरङ्गत्वम्। अत एव सञ्ज्ञोपसर्जनप्रथमादिशब्दे न विकल्पः। अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः। इदमर्वाचामनुरोधेन। परे तु—अस्य पक्षेऽभावबोधकतया 'निषेधाश्च बलीयांस' इत्यनेनास्य प्राप्तिः।**

---

**अर्वाचामिति।** प्रक्रियाकारादीनामित्यर्थः। वस्तुतस्त्वयचः प्रत्ययान्तरत्वेन भाष्यकृता व्याख्यानादत्र विकल्पसंज्ञाया अप्रवृत्तिः। अत एवात्र विकल्पसंज्ञावारणाय प्रवृत्तं तयादेशे उभयप्रतिषेध इति वार्तिकमयचः प्रत्ययान्तरत्वाश्रयणेन स्थानिवत्सूत्रे भगवता प्रत्याख्यातम्। तयबादेशत्वे तु तत्र तद्वारणाय वचनमेव कार्यम्। मूलोक्तरीत्या विकल्पसंज्ञावारणन्तु न युक्तमित्याशयेनाह। **परे त्विति। अस्य प्राप्तिरिति॥**

अयं भावः। प्रथमचरमेतिसूत्रस्यैतन्मते तयबन्तविषय उभयत्र विभाषात्वं लभ्यते। तथाचोभयत्रविभाषासूभयमुखप्रवृत्तिस्वीकारेण नवेति विभाषेति सूत्रप्रत्याख्यानपक्षे तयबन्तविषयकस्य प्रथमचरमेतिसूत्रस्य विधिमुखप्रवृत्त्या द्वितयादिशब्दविषये भावतात्पर्यकत्वमुभयशब्दविषये निषेधमुखप्रवृत्त्याऽभावतात्पर्यकत्वं चाश्रयणीयम्। एवं च निषेधाश्च बलीयांस इति न्यायेनोभयशब्दविषये प्रथमचरमेति विकल्पस्यैव प्राप्तिः। आरम्भपक्षेपि तयबन्तविषयकवाक्ये निषेधविकल्पयोरुपस्थित्योभयशब्दविषये नित्यसर्वनामसंज्ञाया निषेधाद्विकल्पस्यैव प्राप्तिरिति॥

न च नित्यसंज्ञाया अनैमित्तिकत्वेन जसः प्राक् प्रातिपदिकसंज्ञासमकालमेव प्रवृत्त्या कथं तदुत्तरकालप्राप्तिकेन प्रथमचरमेत्यनेनास्य बाध इति वाच्यम्। उपसञ्जनिष्यमाणन्यायेनास्य नित्यसंज्ञाबाधकत्वेनादोषात्। तुष्यतु

**किं च न 'अन्तरङ्गं बलीयः' इत्यस्या अत्र विषयो युगपत्प्राप्त्यभावात् । सञ्ज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाप्रवृत्तेः । अत एवोभये इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिः ॥**

---

दुर्जन इति न्यायेनैतन्न्यायप्रवृत्त्यनाश्रयणेऽपि मूलोक्तमयुक्तमित्याशयेनाह । **किञ्चेति** । **युगपत्प्राप्त्यभावादिति** । अनया परिभाषया समकालप्राप्तबहिरङ्गस्यैवाऽसिद्धत्वं बोध्यत इति नित्यविकल्पसंज्ञयोरत्र युगपत्प्राप्त्यभावान्न तस्या अत्र विषय इति भावः । तदेतदुपदर्शयति । **संज्ञानामिति** । आकडारीयबहिर्भूतानामित्यर्थः । **सर्वनामसंज्ञाप्रवृत्तेरिति** । नित्यसर्वनामसंज्ञाप्रवृत्तेरित्यर्थः । प्रथमचरमेति सूत्रे जसीत्यस्यानुवृत्त्या जसाधारे शीभावाख्ये कार्ये कर्तव्य इत्यर्थाज्जसुत्तरमेव तस्य प्राप्तिः । तदानीमेव शीभावकर्तव्यतायास्सत्त्वात् । सर्वादीनीत्यस्य त्वनैमित्तिकत्वेन ततः प्रागेव प्राप्तिरिति नानयोर्युगपत्प्राप्तिरिति भावः ॥

यत्त्वेतत्प्रतीकमुपादाय वस्तुतस्तूपसङ्ख्यानिष्यमाणन्यायेन यदि नित्या संज्ञा न स्यादसाञ्जस्यपवादः प्रथमचरमेति विकल्पः स्यादिति सम्भावनायास्सत्त्वेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचात्पूर्वरीत्या निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सर्वादीनीत्यत्र सङ्कोचान्नित्यसंज्ञाया अप्रवृत्तेरिदमयुक्तमिति नित्यानन्दस्तन्न । अस्य ग्रन्थस्योपसङ्ख्यानिष्यमाणन्यायानाश्रयणेन प्रवृत्तत्वात् ॥

**अत एवेति** । प्रातिपदिकसंज्ञासमकालमेव सर्वनामसंज्ञाप्रवृत्तेरेवेत्यर्थः । **शीभावसिद्धिरिति** । अङ्गस्येत्यस्य विभक्तिविपरिणामेन व्याख्यानं कुर्वतो मूलकारस्य मते वर्णाश्रमेतरा इत्यादौ शीभाववारणाय जसश्शीतिसूत्रे विहितविशेषणत्वस्यावश्यमाश्रयणीयतया तन्मतेऽत्र शीभावसिद्धिरिति भावः ।

**पूर्वपरेत्यादि तु पक्षे तदभावमात्रबोधकम्। 'असिद्धं बहिरङ्गम्' इत्यपि न। अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः। अन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात्। बहुशस्तथा दृष्टत्वात्। तदुत्तरमप्येतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात्। जसीति विषयसप्तमीतिपक्षेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः**

---

यदत्रौत्तरहिवस्तुतस्त्वित्यादिना प्रतिपादितं तदस्माभिर्जसश्शीति सूत्रव्याख्यानावसरे दूषितमिति नादरणीयम्। ननु यदि प्रातिपदिकसंज्ञासमकालमेव नित्यसर्वनामसंज्ञायाः प्रवृत्तिस्तदा पूर्वपरेत्याद्यष्टाध्यायीसूत्रवैयर्थ्यमत आह। **पूर्वपरेत्यादीति। अभावमात्रबोधकमिति।** जसः प्राक् प्रातिपदिकसंज्ञाप्रवृत्तिकाले प्रवृत्ताया एव सर्वनामसंज्ञाया जसुत्तरमनेन सूत्रेण पाक्षिकोऽभावो बोध्यते। लुगादिनेव जातस्य निवृत्तिरिति न तद्वैयर्थ्यमिति भावः। ज्ञापकसिद्धाया अप्यन्तरङ्गपरिभाषाया अत्र प्रवृत्तियोग्यता नेत्याह। **असिद्धमिति। बहिरङ्गप्राप्तेरिति।** ज्ञापकसिद्धा ह्येषा परिभाषाऽन्तरङ्गे कर्तव्ये उपस्थितस्य बहिरङ्गस्यासिद्धत्वं प्रतिपादयति, न तु तदानीमनुपस्थितस्य तत्प्रवृत्त्युत्तरं जायमानस्य तस्येति न तस्या अत्र विषय इति भावः। **वारयितुमशक्यत्वादिति।** यत्तु वस्तुतस्तु नित्यसंज्ञाप्रवृत्तिकाले विकल्पस्याप्राप्तिरूपमेव बहिरङ्गत्वं प्रथमचरमेत्यस्य मूलकृतोऽभिप्रेतमिति नेदं दूषणं सम्यगिति नित्यानन्दः, तन्न। एनामेवारुचिं मनसि निधाय युक्त्यन्तरस्याग्रे वक्ष्यमाणत्वात्। कथंचित्परिभाषाप्रवृत्त्यङ्गीकारेण नित्यसंज्ञाप्रवृत्तावपि नात्रोपयोग इत्याशयेनाह। **तदुत्तरमपीति।** ननु प्रथमे इत्यत्र जसस्सर्वनाम्नो विहितत्वसिद्धये प्रथमचरमेति सूत्रे जसीत्यस्य विषयसप्तमीत्वं स्वीकृत्य जस्विषये पूर्वमेव विकल्पसंज्ञाप्रवृत्तेराश्रयणीयतया नित्यविकल्पसंज्ञयोर्युगपत्प्राप्तिसत्त्वेनाऽस्त्येवान्तरङ्गं बहिरङ्गाद्बलीय इति न्यायविषयतेत्याशङ्क्याह। **जसीति। अस्या इति।**

**प्रवृत्तिस्तदुत्तरमेव तद्विषयात् । स्थानिवदतिदेशप्रापिताया निरवकाशत्वाच्च । प्रत्यक्षस्य स्थानिवद्भावस्यानुमानिक्याऽनया बाधायोगाच्च । सर्वनामसञ्ज्ञायामुक्तयुक्त्या यथोद्देशपक्षस्यैवौचित्यात्,**

---

विकल्पसंज्ञाया इत्यर्थः । **तदुत्तरमेव तद्विषयादिति** । प्रातिपदिकसंज्ञोत्तरमेव शीभावविषयत्वेन तदुत्तरमेव विकल्पसंज्ञायाः प्राप्तिः । नित्यसंज्ञा तु प्रातिपदिकसंज्ञासमकालमेव प्रवर्तत इति न तयोर्युगपत्प्राप्तिरिति भावः । ननु मनुष्योऽयं प्रातरुत्थायेति दृष्टान्तेन पूर्वं यस्य निमित्तसम्पत्तिस्तस्य पूर्वं प्रवृत्तिरित्यर्थस्सिध्यति । तादृशान्तरङ्गत्वस्यापि परिभाषायामाश्रयणे न बाधकम् । तत्र चासिद्धत्वं निमित्ताभावादप्राप्तिरूपमेवेति युगपत्प्राप्त्यभावेऽपि परिभाषा सञ्चरत्येवेत्याशङ्कयाह । **स्थानिवदिति** । **निरवकाशेति** । प्रकृतिभेदेन प्रत्ययस्य, स्थानिभेदेनादेशस्य, आदेशभेदेनानल्विधिभेदेन च स्थानिवद्भाववाक्यस्य च भेदादुभयशब्दावयवोऽयजादेशस्सर्वनामत्वेऽनल्विधौ कर्तव्ये तयरूपस्थानिवदिति वाक्यं सम्पद्यते । तच्च निरवकाशमिति भावः । न चोभयशब्दविषयकस्य सर्वादीनीत्यस्यापि तदस्तीति वाच्यम् । विभक्त्यन्तरेषु तस्य चारितार्थ्यात् । एतेन नित्यसंज्ञाया अविषये द्वयशब्देऽतिदेशप्रापिताया अपि सावकाशत्वादिदमयुक्तमिति वदन्त आचार्याः परास्ताः । निरुक्तातिदेशवाक्यस्यात्र प्राप्त्यभावात् । अस्यानभिधानाच्च । नन्वन्तरङ्गपरिभाषाविरोधादुभयशब्दविषयकातिदेशवाक्योपप्लुत एव नेति न पूर्वोक्तं निरवकाशत्वं विकल्पसंज्ञाया इत्यत आह । **प्रत्यक्षेति** । ननु कार्यकालपक्षे कार्यप्रवृत्तिकाल एव संज्ञाप्रवृत्तेर्वक्तव्यतया जसुत्तरमेव नित्यसंज्ञाया अपि प्राप्तिः । एवं च युगपत्प्राप्त्यभावान्नान्तरङ्गं बहिरङ्गाद्बलीय इत्यस्यात्र विषय इति पूर्वोक्तमयुक्तमित्याशङ्कयाह । **सर्वनामेति** । **उक्तयुक्त्येति** । उभय इत्यत्र सर्वनाम्नो विहितत्वेन शीभावसिद्धिरूपपूर्वोक्तयुक्त्येत्यर्थः । इदमङ्गस्येत्यस्य विभक्तिवि-

**अत एव 'तयादेशे उभयप्रतिषेधः। तयपो ग्रहणेन ग्रहणाज्जसि विभाषा प्राप्नोति' इति स्थानिवत्सूत्रस्थं वार्त्तिकम् 'अयच् प्रत्ययान्तरम्' इति सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातं, न त्वन्त-**

---

परिणामेन व्याख्यानं कुर्वतो मूलकारस्य मतेन। तन्मते विहितविशेषणावश्यकतायाः पूर्वमुपपादितत्वात् ॥

एतेन 'सर्वनामसंज्ञायां कार्यकालपक्ष एव, तत्पक्षे च संज्ञायाः कार्यनिमित्तनिमित्तकत्वम्। अत एव पूर्वपरेत्यादिचरितार्थम्। अन्यथा पूर्वं नित्यसर्वनामसंज्ञायां तत एव नित्यं शीभावप्रवृत्तौ तद्वैयर्थ्यम्। न चास्मिन्पक्षे सर्वनाम्नो विहितत्वाभावेनोभय इत्यादौ शीभावानापत्तिः। विहितविशेषणताया अनाश्रयणात्। अदन्तात्सर्वनाम्नः परस्य प्रत्यासत्त्या तत्पर्याप्ताङ्गसंज्ञानिमित्तस्य जसश्शीत्यादिरूपेण वाक्यार्थबोधाङ्गीकारेण विहितविशेषणफलसिद्धेः। तथा च नित्यविकल्पसंज्ञयोरन्तरङ्गबहिरङ्गभावाभावात्परत्वाद्विकल्पे प्राप्ते तयादेशवार्तिकं प्रवृत्तमित्याचार्योक्तमपास्तम्। अत्रान्तरङ्गपरिभाषाया अप्रवृत्तावस्याप्युपायान्तरपरतया वक्तुं शक्यत्वेन तदुक्तेर्वैतण्डिकवचनानुकारित्वाच्च ॥

अत एवेति। अपवादभूतविकल्पसंज्ञाप्रवृत्तिसम्भावनासत्त्वेन नित्यविकल्पसंज्ञयोर्युगपत्प्राप्त्यभावेन चान्तरङ्गपरिभाषया प्रकृतेऽनिर्वाहादेवेत्यर्थः। तयादेश इति। तयबन्तत्वप्रयुक्ते आदेशे कर्तव्ये उभयशब्दावयवादेशस्य स्थानिवत्त्वप्रतिषेधो वक्तव्य इति वार्तिकार्थः। अत एव वार्तिकमते उभयीत्यत्र ङीपि कर्तव्ये न तन्निषेधः। शीभाव एव तन्निषेधात्। अत एव प्रत्ययान्तरत्वपक्ष एवोभयीत्यत्र ईकारो न प्राप्नोतीति शङ्कितं भाष्ये, न तु स्थानिवत्त्वप्रतिषेधपक्ष इति बोध्यम्। न त्वन्तरङ्गेति। अन्यथा न्यायसाध्यफलस्य योगविभागसाध्यप्रत्ययान्तरत्वमाश्रित्यान्यथासिद्धिकथनं भाष्यकृतो विफलमेव स्यात्।

रङ्गन्यायबलेन । उभयीत्यत्र ङीप्तु "टिड्ढा" इतिसूत्रे मात्रशब्दादारभ्यायचश्चकारात्प्रत्याहाराश्रयणेन सिद्धः । अत इत्यनुवृत्त्या च कतीत्यादौ नातिप्रसङ्गः । तयब्ग्रहणन्तु सूत्रे

किञ्च नवेति विभाषेति सूत्रस्थं भाष्यमप्यत्रान्तरङ्गन्यायाप्रवृत्तौ मानम् । तत्र हि भाष्ये प्रथमचरमेत्यत्र तयग्रहणविषये संशयत्रयमापादितम्, यदि सर्वादीनीति पदमनुवर्त्य तेन तयान्तं विशेष्यते, नेमशब्दोऽव्यभिचारात्प्रथमादयस्त्वसम्भवाच्च न विशेष्यन्ते, तदोभयशब्दस्यैव नित्या संज्ञा विकल्प्यत इति प्राप्तविभाषा स्यात् । यदि सर्वादीनीत्यस्य निवृत्तिरुभयशब्दविषये पूर्वविप्रतिषेधेन नित्यसंज्ञाप्रवृत्तिश्च, तदाऽप्राप्तविभाषा स्यात् । अथ परविप्रतिषेधस्तदा द्वितयादिष्वप्राप्ते उभयशब्दे प्राप्ते च विकल्प इत्युभयत्रविभाषा स्यादिति । यद्यत्रान्तरङ्गपरिभाषायाः प्रवृत्तिस्स्यात्तदा तद्विषये विप्रतिषेधशास्त्रप्रवृत्तेर्वक्तुमशक्यतया सर्वादीनीत्यस्यानुवृत्तौ प्राप्तविभाषात्वमननुवृत्तावुभयशब्दविषयेऽनेन न्यायेन नित्यसंज्ञाप्रवृत्तौ द्वितयादिविषय एव विकल्पशास्त्रप्रवृत्तेरप्राप्तविभाषात्वं चेति संशयद्वयमेव सम्पद्यते, न तु संशयत्रयमिति तदसङ्गतिःस्पष्टैव ॥

एतेन नवेति विभाषेति सूत्रप्रत्याख्यानपक्षेऽन्तरङ्गप्रथमादिसाहचर्याद्विधिमुखेनैव प्रवृत्तिर्भविष्यतीति नित्यसंज्ञाप्रवृत्तिर्मूलोक्तरीत्या न्याय्यैवेति भट्टोक्तमपास्तम् । एतद्भाष्यविरोधात् । तयबन्तविषयकवाक्यस्य सामान्यतो विधिमुखप्रवृत्तेर्वक्तुमशक्यत्वाच्च । एवञ्चात्र विकल्पसंज्ञावारणमयचः प्रत्ययान्तरत्वाश्रयणादेव, न त्वनेन न्यायेनेत्यवधेयम् ॥

नन्वयचः प्रत्ययान्तरत्वे उभयीत्यत्र ङीप् न स्यादत आह । उभयीत्यत्रेति । नन्वेवं डति प्रत्ययस्यापि प्रत्याहारघटकतया कतीत्यत्रापि ङीप् स्यादत आह । अत इति । ननु तयपोऽपि प्रत्याहारघटकतया मात्रज्ग्रहणेनैव सिद्धे टिड्ढेतिसूत्रे पृथक् तद्ग्रहणवैयर्थ्यमत आह । तयब्ग्रहणन्त्विति ।

ऽवयुत्यानुवादः । द्वित्रिशब्दप्रकृतिकायजन्तस्य जसःशीविषयेऽनभिधानमेव, पुंस्येव वाऽनभिधानमिति तदाशय इति वदन्ति ॥

तथापीहेति । 'प्रत्ययग्रहणे तदन्तग्रहणम्' इति 'प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्' इति च तदन्तविधिद्वयेन डतरान्तान्ते-

---

अवयुत्येति । समुदायात्पृथक्कृत्येत्यर्थः । ननु स्थानिवत्सूत्रनवेतिविभाषेतिसूत्रयोर्भाष्ये प्रकृतिविशेषानुपादानेनायचः प्रत्ययान्तरत्वोक्त्या द्वित्रिभ्यां तयस्यायज्वेतिसूत्रे तयग्रहणमकृत्वा द्वित्रिशब्दाभ्यामुभशब्दाच्च प्रत्ययसंज्ञकोऽयज्विधेय इत्यर्थस्सम्पद्यते । तथा च द्वयशब्दाज्जस्यादेशत्वप्रत्ययान्तरत्वपक्षयोः प्रथमचरमेति विकल्पसंज्ञाप्रवृत्त्यप्रवृत्तिभ्यां फलभेदः स्यादत आह । द्वित्रिशब्देति । अनभिधानमिति । न चैवं धातोश्च द्वये प्रत्ययाः, तिङः कृतश्चेति कर्तृकर्मणोरिति सूत्रस्थभाष्यप्रयोगो विरुध्येतेति वाच्यम् । द्वितय इत्येव तत्र पाठात् । अव्युत्पन्नस्य द्वयशब्दस्य प्रथमचरमेति सूत्रस्थचकारेण सङ्ग्रहात् सर्वनामसंज्ञासिद्धिरिति मिश्रोक्तदिशा तत्प्रयोगोपपत्तेश्च । 'व्यर्था द्वयेषामपि मेदिनीभृता'मिति माघप्रयोगोऽपि द्वयं द्वैधमिष्यन्ति गच्छन्तीत्येवमिषः क्विबन्तस्य सिद्ध्यतीति न कोऽपि दोषः । एतेनास्यानभिधानस्याप्रामाणिकत्वात्फलभेदाप्रसक्तेश्चायुक्तत्वं वदन्त आचार्या अन्ये च परास्ताः ॥

तदन्तविधिद्वयेनेति । यद्यप्येकेनापि तदन्तविधिना सर्वनामसंज्ञाप्रयोजनलाभात्पाठस्सार्थकः, तथापि सत्येकस्मिंस्तदन्तविधौ प्रत्ययग्रहणाभावेन संज्ञाविधाविति निषेधाप्राप्त्या प्रयोजनं सर्वनामेत्यादिना बोधिततदन्तविधिस्वीकारे बाधकाभाव इति भावः ॥

यत्त्वौत्तराहाः, 'वस्तुतस्तु अत्रत्यशेखरो मूलश्चैतदुभयमपि चिन्त्यमेव । साक्षात्सर्वनामसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य सर्वादिपदे सत्त्वे-

**त्याद्यर्थे परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य च सञ्ज्ञा सिद्धेति भावः । तत्र मानमाह—केवलयोरिति । प्रयोजनाभावात्-फलाभावादित्यर्थः । अदन्तादङ्गात्परस्य सर्वनाम्नो विहितस्येत्येव 'जसः शी' इत्यादेरर्थादिति भावः । ननु डतरग्रहणेनैव सिद्धेऽन्यतरशब्दपाठो व्यर्थोऽत आह—अन्यतरेति । किंयत्तद्भ्य एव तयोर्विधानादिति भावः । अपुरीति । पूःशब्दस्य विशेष्यत्वे नेत्यर्थः । तद् ध्वनयन् स्त्रियामुदाहरति-अन्तरायामिति ॥**

---

ऽपि प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य तत्राभावेन सर्वादिगणान्तर्गतडतर-डतमेत्यत्र प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य सत्त्वेऽपि सर्वनामसंज्ञानिष्ठवि-धेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य साक्षादभावेन साक्षात्संज्ञानिष्ठविधेयता-निरूपितप्रत्ययमात्रवृत्त्युद्देश्यताप्रयोजकं पदं तदादिविशेष्यकतदन्तविधिप्रयोजकं नेत्यर्थिकायास्संज्ञाविधाविति परिभाषायाः प्रकृते प्राप्त्यभावादि'त्याहुः' तन्न । सर्वादीनीत्यस्य सङ्ग्राहकवाक्यत्वेन डतरडतमयोर्विषये प्रत्येकं वाक्योपप्लुत्या संज्ञाविधानलाभात्तद्वाक्ये तयोस्साक्षात्सर्वनामसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यता-प्रयोजकत्वस्य सत्त्वेन तत्परिभाषाप्राप्तेर्दुर्वारतया मूलसामञ्जस्यात् । कथमन्यथा प्रत्ययग्रहणपरिभाषाया अप्यत्र प्राप्तिः । प्रत्ययमात्रग्रहणाभावात् । निषेधस्या-प्राप्तिं वदतस्तस्यापि प्रत्ययग्रहणपरिभाषाप्रवृत्तेरिष्टत्वात् । कृत्तद्धितेतिसूत्रेऽर्थ-वद्ग्रहणानुवृत्तिसामर्थ्येन तदन्तविधिसिद्धेस्साक्षात्पदनिवेशे फलाभावाच्च । शेख-रग्रन्थस्य चिन्त्यतायां हेतोरनुपन्यासाच्चेति बोध्यम् ॥

ननु कतरशब्दाज्जस्यदन्तसर्वनाम्नः परत्वेन शीभावसिद्धिरूपं फलमस्त्ये-वेत्यत आह । **अदन्तादिति । विहितस्येति ।** प्रत्ययमात्रस्य प्रातिपदिकत्वा-भावेन ततो जसो विधानाभावान्न शीभावसिद्धिरूपं फलमस्तीति भावः । **विशेष्यत्वे नेति ।** विशेष्यताप्रयोजकत्वे न भवतीत्यर्थः । तथा च पूःपद-

'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते' ॥

इति केचित्। केवलेऽसहाये। तत्र संख्याऽन्यार्थासहायवाची 'ष्णान्ता षट्' 'बहुषु बहुवचनम्' 'एकादाकिनिच्च' इत्यादिसूत्रेषु भाष्ये स्पष्टमुक्तः। 'एको गोत्रे' इतिसूत्रशेषे भाष्ये प्रथमार्थोऽपि उक्तः। साधारणसमानार्थयोः संख्यावाचिन एवार्थतः पर्यवसानम्, यथा तेनैकदिक्, चैत्रमैत्रयोरेका मातेत्यादौ। 'सर्वस्य द्वे' इतिसूत्रे एकैकश इति भाष्यमुपादाय केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्तीति वदता कैयटेन केचिदित्युक्त्या तदर्थकाभावो ध्वनित एव। एवं च प्रधानार्थे न दृढं मानम् ॥

'स्वाभिधेयापेक्षावधि' इति समस्तः पाठः। नियमेनावधिसापेक्षेऽर्थे वर्त्तमानपूर्वादीनामित्यर्थः। दक्षिणा गाथका इति।

---

प्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकेतरस्यैवान्तरशब्दस्यान्तरं बहिर्योग इति गणसूत्रे ग्रहणमिति भावः। स्त्रीत्वविशिष्टपूश्शब्दार्थस्य विशेष्यत्वेनेति केषांचिद्व्याख्याने तु न मानम्। भाष्येऽन्तरायां पुरीत्यस्यैवोदाहृतत्वात्। स्वं रूपमिति शास्त्रेण स्वरूपग्रहणस्य दुर्वारत्वाच्च। नगरीशब्दस्य विशेष्यत्वे त्वन्तरस्यां नगर्यामित्येव प्रयोग इष्टः। एतत्प्रकरणशब्दरत्नग्रन्थस्तु मूलकृन्मतानुसारेणैव प्रवृत्त इति न तद्विरोध इति बोध्यम्। स्वाभिधेयापेक्षोऽवधिनियमो व्यवस्थेति क्वचित्पाठः। स चायुक्तः। अवधिशब्दस्य सविशेषणत्वेन नियमशब्देन समासायोगादत आह। समस्तः पाठ इति। एवञ्च कर्मघञन्तापेक्षशब्दस्यावधिशब्देन समनाधिकरणसमासं कृत्वा ततो नियमशब्देन षष्ठी समासे स्वाभिधेयेनापेक्ष्यमाणस्यावधेर्नियमो व्यवस्थेति वाक्यार्थस्सम्पद्यते। अनेन वाक्यार्थेन यत्फलितं तदाह। नियमेनेति। यादृशार्थविषयकज्ञाना-

उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थाऽस्तीत्याग्रहे तु 'उत्तरे प्रत्युत्तरे च शक्त' इति प्रत्युदाहरणं बोद्धव्यम् । उत्तराः कुरव इति । सुमेर्वंवधिकपरदेशरूपोपाधिविशिष्टकुरुषु उत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्थाविषयत्वं बोद्धव्यम् । दिग्वाचकपूर्वादिशब्दानां मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसंनिहितदेशतत्कालिकसूर्यसम्मुखयावद्देशतत्कालिकतत्पृष्ठस्थयावद्देशरूपोपाधिविशिष्टादिशि तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति उपाध्यन्तर्गततया व्यवस्थाऽस्त्येव, मद्ध्याह्ने सूर्यस्यो-

---

त्तरमवधिविशेषविषयिणी जिज्ञासा नियमेनोदेति तादृशार्थबोधजनकपूर्वादीनामिति यावत् । ननु संज्ञावाचिन उत्तरशब्दस्य व्यवस्थाविषयत्वाभावादेव संज्ञाया अप्राप्तावसंज्ञायामिति व्यर्थमेवेत्यत आह । सुमेर्वंवधिकेति । मध्याह्नसूर्यसंयोगेति ॥

अयं भावः । आकाशवदेकस्या अपि दिश उपाधिभेदात्तत्तच्छब्दवाच्यता । उपाधिश्च पृथ्वीमध्यम् । तत्प्रान्तवर्तिनश्चत्वारः पर्वताश्च । तत्र मध्याह्नसूर्यसंयोगवान्देशो मध्यम् । तच्च हिमाद्रिविन्ध्यमध्यदेशवर्त्यार्यावर्त एवात्र विवक्षितः । एवञ्च तदवधिकोदयाचलपर्यन्तयावद्देशोपाधिका दिक् पूर्वा । तदवधिकास्ताचलपर्यन्तयावद्देशोपाधिका दिक् प्रतीची । तदवधिकमध्याह्नसूर्यसम्मुखयावद्देशोपाधिका दिगुत्तरा । तत्पृष्ठस्थयावद्देशोपाधिका दिक् दक्षिणेति विवेकः । निरुक्तदिशा तत्तदुपाध्यवच्छिन्नदिशि तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य पूर्वादयश्शब्दाः प्रवर्तन्त इति दिग्वाचकपूर्वादिशब्दानां शब्दप्रवृत्तिनिमित्तकत्वम् । पृथ्वीमध्यभागावधिकोदयाचलपर्यन्तदेशादिरूपोपाधेः पूर्वादिशब्दाभिधेयत्वेन तादृशोपाध्यन्तर्गतोदयाचलपर्यन्तदेशस्य नियमेनावध्याकाङ्क्षायास्सत्त्वाद्व्यवस्थाविषयत्वमेषामव्याहतमेवेति ॥

**दङ्मुखत्वात् । देशवृत्तीनां तत्तदवधिकोदयाचलसन्निहितत्वादि प्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः ।**

---

न च तत्तदवधिकोदयाचलादिसन्निहितदिशां पूर्वादित्वमित्यस्यैवान्यत्र प्रसिद्धतया निरुक्तमध्यभगस्यावधित्वेन ग्रहणे न मानमिति वाच्यम् । रामायणे किष्किन्धाकाण्डे निरुक्तमध्यभागावधिकस्यैव दिग्विभागस्य प्रतिपादितत्वेन, हरिवंशेऽपि मध्यभागावधिकस्यैव तस्योक्ततया तस्यैवात्र मानत्वात् । अत एव चतस्रो दिश इति व्यवहारोपपत्तिः । अन्यथा उपाधीनामानन्त्यादुपधेयदिशामप्यानन्त्यमेव स्यात् । अत एव च पूर्वादिदिशामिन्द्रादयः पालका इति सकलश्रुतिस्मृतिसम्मता पालकत्वव्यवस्थाप्युपपद्यते । अन्यथाऽवधीनामानन्त्येनाव्यवस्थितत्वेन च तत्तदवधिकदिशामप्यानन्त्यादव्यवस्थितत्वाच्च पालकत्वस्याप्यव्यवस्थितत्वापत्तेः'। न चैवं दाक्षिणात्यानामुदङ्मुखः प्राङ्मुखो वा त्रिवारमुपस्पृशेदित्यादिविधीनां कर्तुमशक्यत्वं स्यात्तदृष्ट्या सर्वस्यैव दक्षिण दिक्त्वात् । एवमेव पाश्चात्यानां दक्षिणामुखस्सन् श्राद्धादिविधिं कुर्यादित्यादिविधीनां कर्तुमशक्यत्वमेव स्यादिति वाच्यम् । निरुक्तपृथ्वीमध्यभागावधिकोदयाचलादिसन्निहितदेशरूपोपाध्यवच्छिन्नदिगाभिमुख्यस्य तेषामपि सम्भवेन तद्विधीनां कर्तुमशक्यत्वाभावात् । यद्वा तत्तद्विधिवाक्येषु प्रागादिशब्दानां देशपरत्वाङ्गीकारेणापि तदुपपत्तिरित्यवधेयम् । दिग्वाचकपूर्वादिशब्दानां व्यवस्थाविषयत्वमुपपाद्य देशवाचिनां तद्दर्शयति । देशवृत्तीनामिति ॥

एतेन वस्तुतो नेदं दिग्वाचकपूर्वादिपदप्रवृत्तिनिमित्तम् । एवं सति दाक्षिणात्यानामुदङ्मुखः प्राङ्मुखो वा त्रिवारमुपस्पृशेदित्यादिविधीनां कर्तुमशक्यत्वं स्यात् । तदृष्ट्या सर्वस्यैव दक्षिणदिक्त्वात् । एवमेव पाश्चात्यानां दक्षिणामुखस्सन् श्राद्धादिविधिं कुर्यादित्यादिविधीनां कर्तुमशक्यत्वमेव स्यादिति दिग्वाचकपूर्वादिशब्दानां यत्प्रवृत्तिनिमित्तमुक्तं मूले तद्देशवाचिनां बोध्यम्। देशवा-

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च' ॥

इतिकोशोक्तार्थान्तरव्युदासार्थमाह—अन्तरं बहिर्योगेति । अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसाधारे शीभाव एव, न त्वकजाद्युदात्तत्वादाविति बोद्धव्यम् ॥

न बहुव्रीहौ । 'चिकीर्षिते' इत्यध्याहारलभ्यम् । प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम् । नेदं सूत्रं बहुव्रीहेस्तत्त्वनिषेधकमुपसर्जनप्रतिषेधेन सिद्धेः । प्रक्रियावाक्य इति । अलौकिके इत्यर्थः । न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव समास इव तत्रापि निषेधः सिद्ध इति वाच्यम् । तत्रैकार्थीभावस्यारोपेऽपि स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावेनाति-

---

चकपूर्वादिशब्दानां च यदुक्तं तद्दिग्वाचिनां बोध्यमिति केषांचिदौत्तराहाणामुक्तिः परास्ता ॥

अन्तरात्मनि चेति । चेन सदृशार्थस्यापि सङ्ग्रहः । यथा स्थानेन्तरतम इत्यत्र । शीभाव एवेति । विभाषा जसीत्यतो जसीत्यस्यानुवृत्तेरिति भावः ॥

न बहुव्रीहावित्यत्र चिकीर्षित इति पदाध्याहारेण व्याख्यातुराशयं निरूपयति । नेदं सूत्रमिति । तत्त्वनिषेधकमिति । तदन्तविधिना प्राप्तसर्वनामसंज्ञानिषेधकमित्यर्थः । सिद्धेरिति । तेन बहुव्रीहिसमासावयवसर्वादीनां सर्वादित्वनिषेधेन तदन्तविधिनापि विशिष्टस्य सर्वनामसंज्ञाया अप्राप्तेरिति भावः । एवञ्चेदं सामर्थ्याच्चिकीर्षित इति पदाध्याहारेण व्याख्येयमिति तदाशयः। तत्रापीति । अलौकिकप्रक्रियावाक्येऽपीत्यर्थः । बोधकत्वरूपोपसर्जन-

भवकानित्यत्रैव प्राप्तस्याकचोऽभावार्थं सञ्ज्ञानिषेध इत्यत्र तात्पर्यात् । लौकिके तु नास्य प्रवृत्तिस्तत्र समासस्य चिकीर्षितत्वाभावात् । अतिक्रान्त इत्यादिना पूर्वोक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । भाष्यकारस्त्विति । 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्' इति भाष्योक्तेः वृत्तिकृद्रीत्येदं व्याख्यानमुक्तमिति भावः ।

---

त्वाभावेनेति । अलौकिकप्रक्रियावाक्यस्य बोधजनकत्वाभावेन न स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वं तत्रेति भावः । तत्र तदभावे दृष्टान्तं दर्शयति । अतिभवकानित्यत्रैवेति । ननु स च समासेऽपि श्रूयेतेत्यस्यातिभवकानित्येव दृष्टान्ततया दातुं युक्तः । अतिक्रान्त इत्यादिकन्तु प्रकृतानुपयोगीत्याशङ्कयाह । अतिक्रान्त इत्यादिनेति । तथा च यथा तत्र लौकिकविग्रहवाक्य इवालौकिके प्रक्रियावाक्ये प्रवर्तमानोऽकच् समासेऽपि श्रूयते, तथाऽत्रापि त्वकं पितेति लौकिकविग्रहवाक्य इवालौकिके प्रक्रियावाक्ये प्रवर्तमानोऽकच् समासेऽपि श्रूयेत । अतश्चिकीर्षित इति पदाध्याहारेणालौकिके प्रक्रियावाक्य एव सर्वनामसंज्ञानिषेधः कार्य इति मूलाशयः । नन्वकृतव्यूहपरिभाषया दृष्टान्तदार्ष्टान्तिकयोरकज्न भविष्यतीत्यत आह । अकृतव्यूहेति । अकच्स्वराविति । स्वरः स्वाङ्गशिटामित्यनेन विहितः । प्रत्यङ्गमिति । प्रत्यवयवमित्यर्थः । पूर्वत्र परत्र वेति भावः । मुक्तसंशयमिति । मुक्तसंशयाविति प्रायिकः पाठः । संशयविनिर्मुक्ताविति तदर्थः । अस्मिन् पाठे तु क्रियाविशेषणमेतत् ॥

अयमत्र भाष्याशयः । अत्र प्रकरणे सप्तमीनिर्देशानां प्रथमार्थकत्वेन बहुव्रीहिस्सर्वनामसंज्ञको नेति सामानाधिकरण्येनैवान्वयः, न तु विद्यतिक्रियाध्याहारेण बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया वा अवयवसर्वनामसंज्ञा-

**ननु स्मृतिद्वयप्रामाण्याद्विकल्पोऽस्तु, कथं प्रत्याख्यानमत आह— यथोत्तरमिति । एतच्च 'धिन्विकृण्व्योर च' इतिसूत्रे भाष्ये ध्वनितम् । एवञ्च वृत्तिकृदुक्तार्थकं नेदम् । तस्मादुपसर्जनप्रतिषेधानुवादकम् । यद्वा वार्त्तिककृता तस्य कृतत्वात् सूत्रकृतेदमारब्धम् । सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमेव, न सूत्रकृदूहितमिति**

---

निषेधकम् । येन तत्सामर्थ्यादन्तरङ्गयोरप्यकच्स्वरयोः पूर्वमप्रवृत्तिर्वक्तुं शक्येत । विद्यतिक्रियाध्याहारे लक्षणायां च गौरवात् । यद्यपि समुदाये महासंज्ञयोपसर्जनप्रतिषेधेन वा निषेधस्सिद्धः, तथापि तल्लब्धार्थानुवादकं सत्प्रपञ्चार्थमेव सूत्रम् । एवञ्च निषेधनिमित्तभूतपदान्तरसापेक्षबहुव्रीहिसंज्ञाया प्रागेव पदान्तरनिरपेक्षत्वेनान्तरङ्गावकच्स्वरौ निस्संशयं कार्याविवेति । प्रत्यङ्गपदस्याऽङ्गं प्रतीति विग्रहं प्रदर्शयता कौस्तुभकृताप्यस्यायमेवार्थस्सूचितः ॥

यदितु चौ प्रत्यङ्गस्य प्रतिषेध इत्यादाविवात्र प्रत्यङ्गपदस्यान्तरङ्गार्थकत्वमुच्यते, तदा प्रत्यङ्गमिति हेतोरकच्स्वरौ बहुव्रीहेः पूर्वं कार्याविति तदर्थ इति बोध्यम् । **स्मृतिद्वयेति** । न बहुव्रीहाविति अकच्स्वराविति च स्मृतिद्वयेत्यर्थः । **एतच्चेति** । भाष्यकृत्करिष्यमाणसूत्रप्रत्याख्यानस्य सूत्रकृदभिमतत्वमित्यर्थः । **ध्वनितमिति** । तत्र हि धिन्विकृण्व्योर्लोप इत्युक्तावपि न धातुलोप इति सूत्रेण धिनोतीत्यादौ गुणनिषेधे सिद्धेऽकारादेशविधानं व्यर्थमित्याशङ्क्य तत्प्रत्याख्यानपक्षेऽल्लोपस्य स्थानिवद्भावेन गुणवारणायाकारादेशविधानमित्युक्तम् । अनेन सूत्रमतात्प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसम्मतलक्ष्यमेव सूत्रमतेऽपि साध्यमिति च ध्वनितमिति भावः । एवं च प्रत्याख्यानविरुद्धफलकसूत्राशयवर्णनं वृत्तिकाराणामनुचितमिति सूचितम् , तदाह । **एवं चेति** । कैयटोक्तं सूत्रप्रयोजनं दर्शयति । **यद्वेति** । ननु महासंज्ञां कुर्वता सूत्रकृतैव संज्ञोपसर्जनीभूतानां सर्वादित्वाभावस्य सूचितत्वादिदमयुक्तमत आह । **संज्ञाया**

'विभाषा दिक्' इतिसूत्रे कैयटे स्पष्टम् । सूत्रे सप्तमीनिर्देशः प्रथमार्थ एव । अतएव वृत्तिकृदुक्तः प्रक्रियावाक्ये निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः । अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम् ॥

तदनुगुणानामेवेति । प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासञ्ज्ञया सर्वार्थोपस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः । नामपदस्वारस्येन प्राधान्येनेत्यस्य लाभः । उपसर्जनं हीतरविशेषणतयैवोपस्थापकमिति तेन तद्व्यावृत्तिः । पूर्वादिसङ्ग्रहाय

---

इति । कैयट इति । अत्रारुचिबीजन्तु महर्षीणां सर्वज्ञत्वभङ्गः । अतोऽस्मिन् शास्त्रे उत्तरोत्तरमुन्यभिप्रेतार्थे पूर्वपूर्वमुनीनां तात्पर्यमवधारणीयमतस्तदर्थानुवादकतया प्रपञ्चार्थत्वमेवास्य युक्तमिति बोध्यम् । नन्वेवं सूत्रे सप्तमीनिर्देशो विरुध्यत इत्यत आह सूत्र इति । प्रथमार्थ एवेति । सामानाधिकरण्येनान्वयानुरोधादिति भावः ॥

भट्टास्तु प्रथमानिर्देशसाध्यप्रयोजनसाधनतात्पर्यक एवेत्यर्थः, न तु चिकीर्षित इत्यध्याहारतात्पर्यकः । लघुनि प्रथमानिर्देशे कार्ये गुरुभूतस्सप्तमीनिर्देशस्त्वदृष्टार्थ एवेति भाव इति वदन्ति । तन्न । अत्र प्रथमान्ततया छेदं कृत्वा तादृशाशयकल्पनायाः कर्तुं शक्यत्वेऽपि सर्वादिसूत्रे तृतीयासमास इति सूत्रे च 'प्रथमार्थे सप्तमीति' सप्तम्यन्ततयैव पठस्य सत्त्वेन तत्रैवंरीत्या तात्पर्यवर्णनस्याऽशक्यत्वात् । अत एवेति । सप्तम्याः प्रथमार्थत्वादेवेत्यर्थः । तदनुगुणत्वं विशदयति । प्राधान्येनेति । ननु सर्वार्थवाचकत्वं सर्वविश्वयोरेव, न त्वन्येषामत आह । स्वीयेति । नामपदस्वारस्येनेति । नमयन्त्यन्यार्थे

**स्वीयसर्वार्थेति । सञ्ज्ञाऽव्यावृत्तयेऽभिव्यक्तेतिन्यायमूलकं प्रसिद्धे-त्यीति भावः । सर्वादिसूत्रस्य चायमर्थः । सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीति । तत्र प्राप्ताप्राप्तविवेकन्यायेन सर्वनामपदवत्त्वांशे एव विधिः । सर्वार्थवाचकत्वस्य लोकतः सिद्धेः । एतेनान्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य**

---

विशेषणीकुर्वन्तीति व्युत्पत्त्येति भावः । **स्वीयसर्वेति** । तत्तत्पदवाच्यसर्वेत्यर्थः। **अभिव्यक्तेतिन्यायमूलकमिति** । इदं च तन्न्यायस्य प्रातिपदिककार्येष्वपि प्रवृत्तिमङ्गीकुर्वतां मतेन । वस्तुतस्तु महासंज्ञाकरणेन सर्वेषां नामानि सर्वनामानीत्यन्वर्थसंज्ञाविज्ञानात्तादृशानामेवानेकार्थसाधारणशक्तिग्रहसहकारतः प्राधान्येन स्वविषयसर्वार्थोपस्थापकसर्वादीनां गणेऽनुकरणमिति न संज्ञोपसर्जनयोस्सर्वादित्वम् । संज्ञाया एकद्रव्यनिष्ठत्वात्तद्वाचिनामनेकार्थसाधारणशक्तिग्रहसहकारेण स्वीयसर्वार्थोपस्थापकत्वाभावात् । उपसर्जनस्यापि प्राधान्येन तदुपस्थापकत्वाभावात् । नामपदस्वारस्येन तथैव लाभात् । स्पष्टं चेदं सर्वादिसूत्रे उद्योते ॥

'सर्वेषामिति बहुवचनेन प्राधान्यलाभः । प्रसिद्धार्थकाव्ययभूतनामपदस्वारस्येन प्रसिद्धलाभ, इति भट्टोक्तन्तु न युक्तम् । 'संज्ञा त्वेकद्रव्यनिष्ठत्वान्न सर्वेषां नाम । उपसर्जनमपि पदान्तरार्थसंसृष्टार्थवृत्तित्वान्न प्राधान्येन सर्वेषामुपस्थापकम् । नामपदस्वारस्येन तथैव लाभा'दित्युद्योतग्रन्थेन तदुक्तार्थापेक्षया वैपरीत्यस्यैव लाभादिति बोध्यम् ॥

एतेनाभिव्यक्तेति न्यायमूलमिव मूलं यस्येत्युष्ट्रमुखवत्समासमाश्रित्य क्लिश्यन्तो मिश्रा अन्ये च परास्ताः । सर्वनामानीत्यस्याऽन्वर्थत्वविज्ञानाल्लब्धं वाक्यार्थं दर्शयति । **सर्वादिसूत्रस्येति** । **उक्तसर्वार्थेति** । प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थेत्यर्थः । **एतेनेति** । उक्तरीत्या सर्वार्थवाचकस्य पदार्थे-

**विशेष्यतया सर्वादीनीत्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम्। एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात् । रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्वं त्ववयवद्वारा बोद्धयम् । एतेन तदाक्षिप्तस्य विशेष्यतेत्यपास्तम् । तद्विनाऽनुपपत्त्यभावेनाक्षेपायोगादा-**

---

कदेशत्वेन वक्ष्यमाणयुक्त्या चेत्यर्थः। अव्युत्पन्नत्वादिति । उद्देश्यतावच्छेदकरूपेणोद्देश्यस्य सिद्धिं विना विधेयत्वेनाभिमतस्य तत्त्वेनान्वयासम्भवादिति भावः । नन्वेकपदोपस्थाप्ययोरपि कृतीष्टसाधनत्वयोः परमते परस्परमुद्देश्यविधेयभावेनान्वयस्य दृष्टत्वेन, धातोः फलव्यापारयोः पृथक् शक्तिवादिमते उद्देश्यविधेयभावेनान्वयापत्तिवारणाय फलावच्छिन्नव्यापारे शक्तिं स्वीकुर्वतस्स्वस्यापि तथान्वयस्येष्टत्वात्समासस्थले तथान्वयस्य कारकप्रकरणे मञ्जूषायां च स्वेनैव निरूपितत्वाच्चेदमयुक्तमित्यत आह । **रूढ्यर्थेति** । केवलयौगिकेन शब्देन पृथगुपस्थापितयोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयेऽपि योगरूढिस्थले तथाऽन्वयो न भवति, अन्यत्र योगरूढिस्थले तथाऽदर्शनादिति भावः। एवं च पूर्वोक्तो नियमः योगरूढविषयक इति नातिप्रसङ्ग इत्यवधेयम् । ननु सर्वाद्यन्ते शक्तिग्रह एव न, पदादेव तद्बोधसम्भवात् । किंच तदङ्गीकारेऽपि विशिष्टशक्तिग्रहो नाऽनेकार्थसाधारणः। विशेषणशून्यानुपस्थापकत्वात् । तथा च सर्वादिसूत्रस्य प्रागुपदर्शितोऽर्थो न युज्यत इत्यत आह। **तदन्त इति** । तत्प्रधानसमास इति शेषः। **अवयवद्वारेति**। अवयवनीयाऽनेकार्थसाधारणशक्तिग्रहसहकारेण प्राधान्येन स्वविषयसर्वार्थबोधकत्वद्वारेत्यर्थः। अन्वर्थसंज्ञाक्षिप्तस्संज्ञी सर्वादिभिर्विशेष्यत इति येन विधिरिति सूत्रस्थकैयटोक्तं दूषयति । **एतेनेति** । उक्तयुक्त्येत्यर्थः। आक्षेपकमपि नास्तीत्याह। **तद्विनेति** । सर्वार्थवाचकानीति पदाभावेऽपीत्यर्थः। **अनुपपत्त्यभावेनेति**। अन्वर्थत्वस्यानु-

क्षिप्तस्य शाब्देऽन्वये मानाभावाच्च । केचित्तु आवृत्त्या एकस्योद्देश्यताऽपरस्य विधेयतेति वदन्ति । परन्त्वाद्यः पक्ष इतो लघुरिति बोद्धव्यम् । सन्निवेशादिति । तदनुमानादित्यर्थः । अत्रोपसर्जनत्वमितरविशे-

---

पपत्त्यभावेनेत्यर्थः । कथंचित्तत्सम्भवेऽप्याह । आक्षिप्तस्येति । इतो लघुरिति । यद्यप्यस्मिन्पक्षे सर्वनामानीत्यस्यावृत्त्याऽर्थद्वयस्य पदद्वयेनोपस्थापितत्वादेकपदोपस्थाप्ययोरर्थयोरित्यादिना पूर्वोक्तातिप्रसङ्गो न, तथाप्याद्यकल्पे एकमेव वाक्यम् । अस्मिन्पक्षे तु सर्वादीनि तदन्तानि च प्रसिद्धस्त्रीयसर्वार्थवाचकानि, तानि च सर्वनामपदवन्तीति वाक्यद्वयमावृत्तिश्चेत्येतदपेक्षयाऽऽद्य एव लघुरिति भावः । तदनुमानादिति । सर्वार्थवाचकानुकरणानुमानादित्यर्थः । सर्वादिगणपठितानि, सर्वार्थवाचकानुकरणानि, महासंज्ञोद्देश्यबोधकत्वेन पाणिन्यभिप्रेतत्वादिति व्यतिरेक्यनुमानस्य सम्भवादिति भावः । एतेनायमर्थो न शाब्दः । किन्त्वनुमानगम्य इति सूचितम् । अत्रेति । संज्ञोपसर्जनप्रतिषेध इति वार्तिक इत्यर्थः । इतरविशेषणत्वेनार्थोपस्थापकत्वमिति । न तु शास्त्रीयमिति भावः । तेषां घन इत्यादौ वाक्ये तु इतरविशेषणतया स्वार्थबोधकत्वेऽपि न तथोपस्थापकत्वमिति न दोषः । नन्वेवं सर्वेषां पुत्रः, परस्मैपदं सर्वस्मिन्शये-त्यादावलुक्समासे निरुक्तोपसर्जनत्वस्य सत्त्वेन सुडादयो न स्युरिति चेन्न । अन्तरङ्गत्वात् स्वादिषु कृतेष्वेव समाससंज्ञाप्रवृत्तेः । समासस्य लुक्प्रयोजकत्वाभावेनान्तरङ्गानपीति न्यायाविषयत्वात् । राजकुमारीपुत्र इत्यादौ ह्रस्ववारणप्रकारेण निर्वाहसम्भवाच्च ॥

एतेनैतद्दोषवारणाय स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वसम्बन्धेन सर्वादिविशिष्टत्वमुपसर्जनत्वमिति परिष्कुर्वन्त औत्तरसहाः परास्ताः । अत्रेदृशस्यान्यत्रान्यादृशस्य च लौकिकोपसर्जन-

षणत्वेनार्थोपस्थापकत्वम् । 'तदोः स' इतिसूत्रे अदस एव दस्य नान्यस्येति नियमे 'द्रीयतेरप्रत्यये द्र इति प्राप्नोति स्व इति चेष्यते यथालक्षणमप्रयुक्ते'—इति भाष्यन्तु प्रकृतसूत्रनञ्सूत्रादिस्थानेक-भाष्यविरोधादेकदेश्युक्तिरिति न तद्विरोधः ॥

तृतीयासमासे। 'द्वन्द्वे च' इतिसूत्रस्थाकरोक्तरीत्या 'न बहुव्रीहौ' इतिसूत्रस्थाकररीत्या च प्रथमार्थे सप्तमी । अयमपि समासस्यैव निषेधो, नावयवानाम् । समुदायस्येति । 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्' इति भाष्योक्तया एतत्प्रकरण-विषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः । किं चावयवमात्रस्य निषेधे वर्णाश्रमेतराणामित्यत्र सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदाय सञ्ज्ञायां सुडापत्तिः । तस्य सञ्ज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादि-

---

त्वस्य ग्रहणे मानाभावात् । लौकिकोपसर्जनत्वस्यात्र शास्त्रे सर्वत्रैकरूप्येणैव ग्रहीतुमुचितत्वादिति बोध्यम् ॥

ननु लौकिकस्यैवात्र ग्रहणे तदोस्स इति सूत्रस्थं भाष्यं विरुध्येत । तत्रहि तदोस्सस्सौ, तत अदसः, अदसश्च दकारस्य सो भवति । इदमिदानीं किमर्थं नियमार्थम् । अदस एव दकारस्य नान्यस्य दकारस्येति नियमा-श्रयेणन, त्यदादिस्थस्यान्त्यदकारस्य सत्ववारणादनन्त्यग्रहणं न वक्तव्य-मित्युक्त्वा, यदि नियमः क्रियते द्रीयतेरप्रत्यये द्र इति प्राप्नोति, स्व इति चेष्यत इत्युक्तम् । यदि वार्तिके लौकिकोपसर्जनस्यैव ग्रहणं स्यात्तदा तस्यात्रापि सत्वादत्वसत्वयोः करणमसङ्गतं स्यादित्याशङ्क्याह । तदोस्स इत्यादिना ॥

ननु न बहुव्रीहावित्यत्रोक्ताया अस्याः स्मृत्यास्सर्वप्रकरणविषयत्वे मानाभाव इत्याशङ्क्याह । किञ्चेति । सर्वार्थवाचकसर्वादित्वाऽनपायादिति । न च

त्वानपायात् । अवयवस्य व्यपदेशिवद्भावेन समुदायस्य च द्वन्द्वे विद्यमानत्वेन निषेधे तु अवयवस्य निषेधे फलाभावः । न च त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषेण फलम् । द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावात् । समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक् तदनुत्पत्तेः । अन्यथा तव प्रत्येकं कप्रत्ययोत्पत्त्यापत्तिः । अत एवोक्तं भाष्ये 'अकच् हि न भवति'

---

सर्वादित्वस्यैवाऽनेन निषेधान्न दोष इति वाच्यम् । तस्याऽप्रकृतत्वादविधेयत्वाच्च । नापि सर्वार्थवाचकत्वमनेन निषेद्धुं शक्यम् । लोकव्युत्पत्तिसिद्धस्य तस्याऽनेन निषेद्धुमशक्यत्वात् । **फलाभाव इति** । वर्णाश्रमेतराणामित्यादाववयवस्य संज्ञासत्त्वेप्यामादीनां ततो विहितत्वाभावादेव सुडादिवारणसम्भवादिति भावः । आमि सर्वनाम्न इत्यादौ विहितविशेषणावश्यकता तु प्रागुपदर्शिता । **अभावादिति** । एकार्थीभावमहिम्नेति भावः । नन्ववयवमात्रे तद्विवक्षायाः कर्तुमशक्यत्वेऽपि समुदायगतकुत्सामादायावयवेभ्यः कुतो न प्रत्यय इत्यत आह । **समुदाय इति** । **अन्यथा तवेति** । अवयवनिषेधवादिनस्तवेत्यर्थः । **प्रत्येकमिति** । समुदायादवयवाच्चेत्यर्थः । एवं चोभयनिषेधे निरुक्तरीत्या फलाभावादवयवमात्रनिषेधे वर्णाश्रमेतराणामित्यत्र सुडापत्त्या च समुदायस्यैवायं निषेधो न त्ववयवानामिति भावः । अत्रार्थे मानं दर्शयति । **अत एवेति** । अवयवनिषेधाभावादेवोक्तरीत्या समुदायकुत्सामाश्रित्यावयवेभ्यः पृथक् प्रत्ययानुत्पत्तेरेवेति चार्थः ॥

**भाष्य इति** । अयमत्र भाष्याशयः । विभाषा जसीत्यनेन यदि जस्विषये जसः कार्यं प्रति कार्यान्तरं प्रति च विकल्पः स्यात्तदा समुदाये कुत्साविवक्षायां समुदायादकचि तन्मध्यपतितन्यायेन विशिष्टस्य सर्वनामत्वा-

**इति विभाषा जसीतिसूत्रे। समुदायकुत्साविवक्षायामिति तदर्थः। कृताकचा समासस्तु भवत्येव। तत्र सर्वार्थत्वादनेन विकल्पो भवत्येव। त्वदधरमधुरमधूनि पिबन्तम्' इति जयदेवप्रयोगबलेना-**

---

द्वर्णाश्रमेतरका इत्यत्र शीभावापत्तिः। अतो जसः कार्ये प्रत्येव विकल्पः, न तु कार्यान्तरं प्रत्यपि। तथा चाकज्विषये विकल्पाभावेन द्वन्द्वे चेत्यनेन नित्यं सर्वनामसंज्ञानिषेधादकचोऽप्राप्त्या कप्रत्यये तेन व्यवधानान्न पूर्वोक्तस्थले शीभावापत्तिरिति। यदि द्वन्द्वे चेत्यनेनावयवस्यैव निषेधः स्यात्तदा सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायस्य सर्वनामसंज्ञायामकचो दुर्वारतया शीभावं प्रत्येव विकल्पेऽकजभावस्य फलत्वेन कथनमसङ्गतं स्यात्। एवं समुदायनिषेधेऽपि समुदायकुत्सामादायावयवेभ्यः पृथक्प्रत्ययोत्पत्तावत्रयवेभ्योऽकच् दुर्वार एवेति तद्भाष्यं पुनरसङ्गतमत्र। एतश्च द्वन्द्वे चेत्यनेन समुदायस्यैव निषेध इति समुदायकुत्सामाश्रित्यावयवेभ्यः पृथक् प्रत्ययानुत्पत्तिरिति च तद्भाष्याल्लभ्यत इति भावः। अत्र भाष्ये हिशब्दो यस्मादित्यर्थको भिन्नक्रमश्च। यस्माज्जसः कार्यं प्रत्येव विभाषा, अतोऽकच् न भवति। तत्र कर्तव्ये द्वन्द्वे चेत्यनेन निषेधादिति तदर्थः। त्वर्थको वा तत्र हिशब्द इति बोध्यम्॥

वृत्त्युत्तरमवयवकुत्साविवक्षायाः कर्तुमशक्यत्वादाह। **समुदायेति**। वृत्तेः प्रागवयवकुत्साविवक्षायामन्तरङ्गत्वादकज् भवत्येव, तदानीं सर्वनामत्वानिषेधादित्याह। **कृताकचेति**। **विकल्पो भवत्येवेति**। नन्वेवं वर्णाश्रमेतरके वर्णाश्रमेतरका इति रूपद्वयस्याप्येवंरीत्या दुर्वारत्वेन विभाषा जसीत्यनेन शीभावं प्रत्येव विकल्पविधानमित्यर्थाश्रयणे न किञ्चित्फलमिति चेन्न। कुत्सिता वर्णाश्रमेतरा इत्यर्थे वर्णाश्रमेतरके, इति रूपाभावस्यैव तत्फलत्वात्। सर्वमिदमन्यार्थकतकारान्तत्वच्छब्दस्य सर्वनामत्वमङ्गीकृत्योक्तम्। वस्तुतस्तु तस्य सर्वनामत्वमेव नेति न तदवयवनिषेधे फलमित्याशयेनाह। **त्वदधरेति**।

न्यार्थकत्वच्छब्दस्य सत्त्वेऽपि तस्य सर्वनामत्वे मानाभावात्, बहुसंमतत्वाच्च । एतेन 'न बहुव्रीहाविति निवदस्यापि द्वन्द्वे चिकीर्षिते इत्यर्थः' इत्यपास्तम् । फलाभावात् । जसाधारे शीभावे एव विकल्पविधायकस्य 'विभाषा जसि' इत्यस्यासङ्गतेश्चेति भावः । उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपसर्जनसंज्ञाया अप्राप्त्या 'द्वन्द्वे च' इत्यपि 'न बहुव्रीहौ' इतिवदिति तत्त्वम् । अत एव गोस्त्रियोरिति सूत्रे 'कुक्कुटमयूर्यौ' इत्यादौ ह्रस्ववारणाय 'द्वन्द्वे

---

एतेनेति । पूर्वोक्तभाष्यविरोधेन वर्णाश्रमेतराणामित्यत्र सुडापत्त्या चेत्यर्थः । द्वन्द्वे चिकीर्षिते इति व्याख्यानेनावयवसर्वनामसंज्ञानिषेधे न केवलं पूर्वोक्तरीत्या फलाभाव एव, अपि तूत्तरसूत्रासाङ्गत्यमपीत्याह । जसाधारे शीभाव एवेति । विभाषा जसीत्यस्य निषेधविकल्पत्वेन यद्ययं द्वन्द्वचिकीर्षायामलौकिकप्रक्रियावाक्येऽवयवस्य सर्वनामसंज्ञानिषेधकं स्यात्तदाऽनेनापि तत्रैव विकल्पो विधीयत इति वक्तव्यम् । तत्तु न सङ्गच्छते । तदानीं लुग्विषयतायास्सत्त्वेन शीभावकर्तव्यताया अभावात् । एवञ्च तत्रानुवृत्तस्य द्वन्द्व इति पदस्य समुदायपरताया अवश्यमाश्रयणीयतयाऽर्थाधिकारानुरोधादत्रापि समुदायस्यैव निषेध इति वक्तुमुचितमिति भावः । नन्वेवं सति सूत्रमेव व्यर्थं स्यात् । द्वन्द्वे साहित्यस्य विशेष्यतयाऽवयवानामुपसर्जनत्वेन सर्वादित्वाभावात्तदन्तविधिनापि विशिष्टस्य सर्वनामत्वाप्राप्तेरित्याशङ्क्य न बहुव्रीहाविति वदस्याप्युपसर्जनप्रतिषेधानुवादकत्वमेव, नाऽपूर्वत्वमित्याह । उद्भूतावयवेति । द्वन्द्व इति । इतरेतरयोग इत्यर्थः । अत एव ततो द्विवचनाद्युत्पत्तिः । इतरेतरयोगेऽपि समुदायस्य विशेष्यत्वे मानं दर्शयति । अत एवेति । अन्यथाऽप्रधानमुपसर्जनमिति शास्त्रान्तरप्रसिद्धमहासंज्ञाकरणेन तादृशसमासशास्त्रीयप्रथमानिर्दिष्टस्य विग्रहे नियतविभक्तिकस्य चोपसर्जनसंज्ञालाभाद्द्वन्द्वे तादृशोपसर्जनत्वस्याऽभावेन ह्रस्वप्राप्तेरेवाऽभावान्निषेधवचनारम्भो व्यर्थ एव स्यादिति भावः ॥

न' इति वचनमारब्धमिति दिक्। नाकजिति। समुदायनिष्ठकुत्साबोधकोऽकज् नेत्यर्थः॥

प्रथमचरम। अत्र सूत्रे 'न' इति न सम्बध्यते, प्रथमादिष्वसम्भवात्। 'जसि' इत्यनुवृत्तेरर्थाधिकारादयमपि शीभावे एव विकल्पस्तदाह—जसः कार्यं प्रतीति। तयः—'संख्याया अवयवे तयप्' इति। प्रत्यय इति। तदन्ता इत्यत्र हेतुरुक्तः। द्वितीयतृतीयौ 'द्वेस्तीयः' 'त्रेः संप्रसारणं च' इति साधू। अर्थवदिति। प्रतिपदोक्तस्येत्यपि बोद्धव्यम्। तेनान्नन्ते आद्युदात्तस्य 'द्वितीयाय भागाय' इत्येव, अनभावे तु स्मै भवत्येव॥

जराया। 'अष्टन' इत्यतो विभक्ताविति, 'अचिर' इत्यतोऽचीत्यनुवर्त्तते, तदादिविधिश्चेत्याह—अजादाविति। जरसावित्यादौ तु व्यपदेशिवद्भावेन। विभक्तौ किम्। जराया इदञ्जारम्। प्रति-

हेतुरुक्त इति। केवलस्य संज्ञायाः प्रयोजनाभाव इत्येवंरूप इत्यर्थः। तीयस्य ङित्सूपसंख्यानमिति वार्तिकप्रवृत्तिसूचनायाह। द्वितीयतृतीयाविति। अर्थवद्ग्रहणपरिभाषाप्रवृत्तावपि द्वितीयाय भागायेत्यन्नन्ते दोषसम्भवादाह। प्रतिपदोक्तस्येत्यपीति। तीयप्रत्ययान्तादन्प्रत्यये यस्येति लोपे च सति तीयेत्यस्य लाक्षणिकत्वमिति भावः। अन्नन्त इति। अन्नन्तस्येति पाठ इति बालम्भट्टाः॥

जारमिति। न चात्र विभक्तिग्रहणाभावेऽजादिप्रत्ययमात्रे जरसादेशप्राप्त्या शरत्प्रभृतिषु पठितस्य जराया जरश्चेति गणसूत्रस्य वैयर्थ्यात्तेन तद्धिते चेत्समासान्त एवेति नियमेनैवात्र दोषवारणाद्विभक्ताविति व्यर्थमेवेति वाच्यम्। गणसूत्रस्य नित्यार्थतया चारितार्थ्येन नियामकत्वासम्भवात्। नन्वर्धमात्रालाघवानुरोधादसुङादेश एव कुतो न कृत इत्याशङ्क्याह। प्रतिपत्तीति। अत्र न्यासे आदेशस्वरूपज्ञानाय हलन्त्यमुपदेशेऽजनुनासिक इति सूत्रद्वयस्या-

ऽपेक्षणाद्गौरवम् । यथान्यासे तु तदभावाल्लाघवमिति भावः । यत्तु द्वितीयान्त-जराशब्दस्य पदद्वित्वे अत्यादिशब्देन समासे तत औ विभक्तौ, अतिजराजरा औ इति स्थिते स्थानिवद्भावेन जराशब्दत्वाज्जरस्यतिजरसाविति रूपं भवति । असुङ्पक्षे त्वतिजराजरसाविति फलभेदस्तथान्यासः कर्तुं न शक्यत इत्याहुः । तन्न । द्वितीयान्तजराशब्दस्यैव द्विर्वचनस्थानित्वेन तत्र जराशब्दत्वस्याभावेन तदादेशे द्विर्वचने तस्यातिदेष्टुमशक्यत्वात् । न च द्वित्वापेक्षयाऽन्तरङ्गत्वात्प्रथमतः पूर्वरूपे ततो द्वित्वे द्विर्वचनस्थानिनि पूर्वान्तवद्भावेन जराशब्दत्वस्य सत्त्वात्तस्मिंस्तदतिदेष्टुं शक्यमेवेति वाच्यम् । पूर्वान्तवद्भावेनैकादेशविशिष्टे जराशब्दत्वातिदेशेऽपि मान्ते तदभावेन तदादेशे द्विर्वचने तस्यातिदेष्टुमशक्यत्वात् । जरा इत्यस्य स्थाने जरा इत्यादेशः, अमित्यस्याऽमित्यादेशः, जरा + अमित्यस्य स्थाने जरामित्यादेश इत्येवंरीत्याऽऽनुमानिकस्थान्यादेशभावमाश्रित्यान्तादिवत्सूत्रस्य स्थानिवत्सूत्रेण गतार्थत्वं वदतां तेषामपि मते स्वाश्वशब्दे स्वशब्दत्वस्येव स्थान्येकदेशवृत्तिजराशब्दत्वस्य द्वितीयान्तेऽतिदेष्टुमशक्यतया तदादेशे द्विर्वचने तस्यातिदेष्टुमशक्यत्वात् । वस्तुतस्त्वन्तादिवत्सूत्रस्य स्थानिवत्सूत्रेणागतार्थत्वमन्तादिवत्सूत्रव्याख्यानावसरे गुरुप्रसादे निरूपितं गुरुचरणैरिति तत एवावसेयम् । यदितु द्वितीयाद्विवचनान्तजराशब्दस्य द्वित्वे तदुक्तरीत्या स्थानिवत्त्वेन पूर्वान्तवद्भावेन वा एकादेशविशिष्टे जराशब्दत्वातिदेशे तदादेशे द्विर्ववचने तदतिदेष्टुं सुलभमेवेत्युच्यते, तथापि लुक्प्रवृत्तिसम्भावनायाः समत्त्वेनाऽकृतव्यूहपरिभाषया एकादेशाप्रवृत्त्या जरा ई इत्यस्यैव द्वित्वेन तत्र जराशब्दत्वातिदेशस्य सुतरां कर्तुमशक्यत्वात् । तत्परिभाषानङ्गीकारेप्यन्तरङ्गपरिभाषाया अनित्यत्वेनाप्रवृत्त्या परत्वाद्वित्वस्यैव प्रवृत्तिराश्रयणीया । अत एवैकैकमित्यादिसिद्धिः । अन्यथा द्वित्वोत्तरं बहुव्रीहिवद्भावेन प्रातिपदिकत्वादमो लुकि तदसङ्गतिस्स्पष्टैव । अत एव चादेशे आकारश्रवणं तदभिमतं सिद्ध्यति । अन्यथा परादिवद्भावेन सुप्त्वादे इत्यस्य लुकि तस्य श्रवणं न स्यात् ।

पत्तिलाघवाय जराया असुङ् न कृतः । पदाङ्गाधिकारे इति । पदमङ्गं च विशेष्यं विशेषणेन तदन्तविधिरिति भावः । पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च गृह्यते इति 'येन विधिः' इत्यत्राकरे स्पष्टम् । निर्दिश्यमानस्येति । 'षष्ठी स्थानेयोगा' इति सूत्रमावर्त्तते, आवृत्तस्य चायमर्थः–षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न प्रतीयमानमिति, तेनेदं सिद्धमिति भावः । नन्वयं जरशब्दो, न जराशब्दोऽत आह—एकदेशेति । स्थानिवत्सूत्रेणेति भावः । जरा इत्यक्तपरिमाणस्य ग्रहात् । अनेन स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्य' इतिपरिभाषाबाधाभावो बोद्धव्यः । 'येन विधिस्तदन्तस्य' इत्यस्य तु सञ्ज्ञासूत्रत्वात् सूत्रस्थजराशब्दो जराशब्दान्तपर इति तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट

उत्तरपदाधिकारः केवलपदाधिकारश्चेति । उत्तरपदाधिकारे प्रयोजनमिष्टकेषीकामालानामित्यत्रोत्तरपदाकाङ्क्षितमध्याहारलब्धं पूर्वपदात्मकं विशेष्यमादाय तदन्तविधौ पक्केष्टकचितमित्यत्र ह्रस्वः । केवलपदाधिकारे तु वसुस्रंस्वित्यत्र तदन्तविधौ परमानडुद्भ्यामित्यत्र दत्वसिद्धिः । अङ्गाधिकारे तु सान्तमहत इत्यत्र तदन्तविधौ परममहानित्यत्र दीर्घसिद्धिः । सूत्रमावर्तेत इति । यद्यपीको यणचीत्यादावजुपश्लिष्टस्येको यणित्युक्तावुच्चारितेषु पूर्वत्र परत्र वा यण्विधानायोगाल्लक्ष्यानुसारादन्तरङ्गत्वाच्चाभीष्टस्थानसम्बन्ध एवानिर्धारितसम्बन्धविशेषायाष्षष्ठ्यास्सम्पद्यत इत्यावृत्तिं विनैव सूत्रारम्भादेव प्रकृतपरिभाषा सिद्ध्यति, तथापि मन्दबुद्धिवैशद्यार्थमावृत्तिराश्रितेति बोध्यम् । षष्ठ्यन्तमित्य तद्गुणसंविज्ञानबहुव्रीहिणा षष्ठीप्रकृतिपरम् । उच्चार्यमाणमिति । इदमध्याहारलभ्यम् । जराशब्दत्वस्य परिच्छिन्नपरिमाणवृत्तित्वेनैकदेशविकृतन्यायेनानेतुमशक्यत्वाद्यथाश्रुतं न युज्यत इत्याशयेनाह । स्थानिवदिति । अनेन=जराया इत्यनेन । परिभाषाविरोध इति । तदन्तेजराशब्दबुद्धेरभावेन

एवेति दिक् । निर्जरसेति । अत्र 'स्वादिषु' इति पदत्वेन रुत्वं न । भत्वेन पदत्वबाधात् । सूत्रेषूत्तरस्थस्य पूर्वत्रापकर्षवदग्रे लेखो वैचित्र्यायेति बोद्धव्यम् । पक्षे इति । जरसादेशाभावपक्ष इति भावः । इदमर्वाचामनुरोधेन ॥

परे तु 'विभक्त्यादेशेभ्यः परत्वाज्जरस्' इत्यसङ्गतम् । विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव 'जराया' इति सूत्रे 'अजरांसि' इत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्'

तत्रादेशप्रवृत्तौ निर्दिश्यमानस्येतिपरिभाषाबाध इति भावः । इदमिति । विभक्त्यादेशेभ्यः परत्वाज्जरसादेशप्रतिपादनमित्यर्थः । पूर्वविप्रतिषेधे मानं दर्शयति । अत एवेति ॥

यत्तु नुम्जरसाविति वार्तिके नुम्पदं लक्षणया नुम्शिभावोभयपरम् । यद्वा नित्यत्वात्पूर्वं शिभावः । जरसादेशस्तु न नित्यः । शिभावे कृते नुमि तदप्राप्तेरिति शङ्कापरिहाराय शिभावोत्तरमपि विप्रतिषेधेन जरसः प्राप्तिरिति भाष्यकृतोक्तम्, न तु शिभावोत्तरमेव जरसित्याशयेनेति नेदं भाष्यं पूर्व-विप्रतिषेधाश्रयणे मानमित्याचार्यास्तन्न । नुमोऽनङ्जरसौ भवतो विप्रतिषेधेनेति वार्तिके नुम्पदस्य नुम्शिभावोभयपरत्वे नुम्जरसोस्सावकाशत्वं प्रदर्श्याजरांसीत्यत्र परत्वाज्जरसादेशस्य पूर्वं प्रवृत्तिप्रतिपादनपराग्रिमभाष्यासाङ्गत्यापत्तेः । त्वदुक्त-रीत्या शिभावजरसोर्विप्रतिषेधविचारस्यैव भाष्याभिप्रेतत्वे शिभावजरसोरेव सावकाशत्वप्रदर्शनस्योचितत्वात् । शिभावस्य नित्यत्वेन प्रसक्तां प्रथमप्रवृत्तिं विघटयितु जरसादेशस्यापि नित्यत्वमुपपादयितुं तद्भाष्यं प्रवृत्तमिति तदुक्तिरपि न युक्ता । उक्तविचारमन्तरापि जरसादेशस्य क्वचित्कृताकृतप्रसङ्गित्वमात्रेणाऽपि नित्यत्वेत्यनेन नित्यत्वस्य सिद्धतया विप्रतिषेधेन नुम्बाधकत्वोपपादनपूर्वक-नित्यत्वोपपादनस्यानावश्यकत्वात् । नुमोऽनङ्जरसौ विप्रतिषेधेनेति वार्ति-

इति भाष्योक्तं सङ्गच्छते । अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावान्नुमा विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव । अत एव 'टाङसि' इतिसूत्रे कैयटेनोक्तं 'भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं, न त्वतिजरासिनाऽतिजरसादिति गौरवमुद्राविकस्यानङ्विषये तस्य नुमपेक्षया पूर्वप्रवृत्तिसंपादनफलकत्वस्यैव वक्तव्यतया जरसादेशविषयेऽन्यादेशफलकत्वस्यार्धजरतीयस्यानौचित्याच्च ॥

उक्तमर्थं कैयटप्रमाणादपि द्रढयति । अत एवेति । तत्रहि भाष्यकृता नादेशोऽदादेशश्चास्त्विति लाघवमभिप्रेत्योक्तम् । कैयटश्च तद्भाष्यं व्याचक्षाण आह । अन्ये तु सन्निपातपरिभाषाया अनित्यत्वं वदन्त अतिजरसिन अतिजरसादितिसिद्धये, इन, आच्च विहितावित्याहुः । भाष्यकारस्तु सन्निपातपरिभाषामाश्रित्य जरसादेशमनभ्युपयन्नतिजरेण, अतिजरादिति भाव्यमिति मत्वा गौरवमुद्भावितवानिति, अत्रेति भवितव्यमित्यस्य इत्येव भवितव्यमित्यर्थः । गौरवमित्यस्यैकारदीर्घोच्चारणरूपमित्यादिः । अनेन कैयटग्रन्थसन्दर्भेणाऽन्येतु मतापेक्षया भाष्यकारमते सन्निपातपरिभाषाश्रयणप्रयुक्तविशेषातिरिक्तो विशेषो नास्तीति स्पष्टमेवावगम्यत इति पूर्वविप्रतिषेधो भाष्यकारस्यापीष्ट इति कैयटाशयो लभ्यत इति बोध्यम् । एवञ्चोक्तभाष्यानुगृहीतैतत्कैयटविरोधेनातिजरसं पश्येत्यत्राम्भावात्पूर्वं जरसः प्रवृत्तिरित्याशयको जराया इति सूत्रस्थकैयट उपेक्ष्य एवेत्यवधेयम् ॥

यत्तु नास्मात्कैयटादयमर्थो लभ्यते। वैकल्पिकत्वेन प्रथमं जरसादेशाभावे इनादेशे कृते पश्चात्प्राप्तस्य जरसः सन्निपातपरिभाषया वारणमिति तदाशयात् । न चाभावोपक्रमे पश्चाच्च भावपक्षादरणम् । अन्यथा शिश्रियतुरित्यादौ

तवान्' इति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या, तदभावपक्षे च तस्याप्राप्त्या 'सन्निपातपरिभाषया जरसादेशमनभ्युपयन्' इत्यस्यासङ्गतिः स्पष्टैव । वृत्तिकारोऽप्याह-'अतिजरासिन अतिजरसादिति केचिदिच्छन्ति, यथा तु भाष्यं तथा नैतदिष्यते इति

---

द्वित्वोत्तरं विभाषा श्वेरिति सम्प्रसारणापत्तिरिति वाच्यम् । अकारनिमित्तकस्य जरसोऽभावोपक्रमेऽपीकारनिमित्तकस्याभावानुपक्रमात् । शिश्वियतुरित्यादौ तु श्विबुद्ध्यैव पश्चात्प्रवृत्तेर्विशेष इत्याचार्यास्तदनुयायिन औत्तराहाश्च वदन्ति, तदयुक्तम् । पदस्य विभज्यान्वाख्याने जराया इति सूत्रेण जरसभावघटितस्य तस्य साधुत्वे बोधिते पुनः जरस्घटितस्य तस्यैव साधुत्वस्य बोधयितुमशक्यत्वात् । भावाभावयोर्विरोधात् । किञ्चाप्राप्तविभाषाणां भावमात्रबोधनफलकत्वेऽपि शब्दतो भावाभावयोरुभयोरपि तद्बोध्यत्वेन तयोर्मिथो विरोधेन परस्परासामानाधिकरण्येनैव प्रवृत्तेस्स्वीकरणीयतया प्रकृते जरसभावसामानाधिकरण्येन जरसः प्रवृत्तिर्दुर्लभैव । अत एवाघृक्षदित्यादौ वैकल्पिकेटोऽप्रवृत्तिस्सिद्धा, अन्यथा भवदुक्तदिशा च्ल्यवस्थायामिडभावविधानेनानिट्त्वमादाय क्सादेशप्रवृत्तौ पश्चात्पाक्षिकेडागमो दुर्वार एव स्यात् । निर्जरेणेत्यादावाकाररूपाजादिविभक्तिघटितलक्ष्यार्थमुपप्लुतशास्त्रबोधिताभावस्योपक्रमेऽपीकाररूपाजादिविभक्तिघटितलक्ष्यविषयकोपप्लुतवाक्यबोधिताभावस्यानुपक्रमात्तेन वाक्येनादेशप्रवृत्तिस्सुलभेति कथनन्तु प्रकृतेऽपि समम् । लकारसकाररूपविभिन्नवलादिघटितलक्ष्ययोरपि भेदात् । एवं क्रमिकान्वाख्यानेऽप्युभयतः पाशा रज्जुः ॥

तदभावपक्ष इति । जरसादेशाभावपक्ष इत्यर्थः । तस्येति । जरसादेशस्येत्यर्थः । जरसादेशस्याप्रवृत्तिपक्षमुपक्रम्य पुनः प्रवृत्तिपक्षाश्रयणस्यायुक्तत्वादित्यर्थः । स्वोक्तार्थे वृत्तिकृतोऽप्यानुकूल्यं दर्शयति । वृत्तिकारोपीति । यथा त्विति । भाष्ये त्विनातोरिकारदीर्घोच्चारणं प्रत्याख्याय नादेशोऽदा-

लक्ष्यते' इति । नपुंसकद्वितीयैकवचनेऽपि लुग्बाधेन 'अतोऽम्' इत्यमि सन्निपातपरिभाषया जरसभावः। न च तत्र न अकारान्त-सन्निपातकृत एवाजादिः, किं तु तदभावेऽपि । एषा तु सन्निपात-लक्षणविधिं विना न यस्य प्रवृत्तियोग्यता, तत्रैवेति अत्र भवत्येव जरसिति वाच्यम् । मानाभावात् । 'टाङसि' इतिसूत्रस्थेनातिजरे-णेत्येतद्विषयकैयटेन विरोधाच्च । ध्वनितश्चेदं 'जराया' इति सूत्रे

---

देशश्च व्यवस्थापितः। यदि चैतद्रूपद्वयमिष्टं स्यात्तदा तत्र श्रवणाय तयोरावश्य-कतया तत्प्रत्याख्यानमनुपपन्नं स्यात् । अतः पूर्वविप्रतिषेधादन्तरङ्गत्वाद्वा पूर्व-मिनातोः कृतयोस्सन्निपातपरिभाषया जरसादेशाभावादतिजरेण, अतिजरादित्येव भाव्यमिति भाष्यकारस्याभिप्रेतमिति तदाशयः। न च जरसादेशस्य विभक्त्या-देशानाञ्च प्रकृतिप्रत्ययोभयापेक्षत्वस्य तुल्यत्वात्कथं तदपेक्षया तयोरन्तरङ्गत्व-मिति वाच्यम् । टाङसीत्यादीनापङ्क्संज्ञानिमित्तटादीनामिनादय इत्येवं रीत्या-ऽर्थस्य भाष्यकृता सिद्धान्तितत्वेनेनाद्यादेशानामुभयापेक्षत्वाभावात् । न चैवमपि विभक्तिविशेषापेक्षत्वेन तेषामपि बहिरङ्गत्वमस्त्येवेति वाच्यम् । तादृशबहि-रङ्गत्वस्य क्वापि भाष्येऽनाश्रयणात् । स्पष्टं चेदं टाङसीतिसूत्रे उद्योते । नन्वेवं सत्यथेह लुक्कस्मान्न भवति, अतिजरसं पश्यति जराया इति सूत्रस्थं भाष्यं विरुध्येत। तत्रान्तरङ्गानपीति न्यायेन जरसादेशं बाधित्वा प्राप्तलुकं बाधित्वाऽमि ततस्सन्निपातपरिभाषया जरसोऽप्रवृत्तौ तादृशप्रयोगस्यैवाऽभावेन तत्र लुक्शङ्काया अयुक्तत्वादित्याशङ्क्याह । नपुंसकद्वितीयैकवचन इति । स्पष्टं चैतज्जराया इति सूत्रशेषे भाष्ये । पूर्वभाष्यन्तु सन्निपातलक्षणविधिप्रवृत्तिं विना यत्र तद्विघात-कविधेः प्रवृत्तियोग्यता न, तत्रैव सन्निपातपरिभाषायाः प्रवृत्तिरित्यत्र तदप्रवृत्त्या भवत्येव जरसित्याशयेनैकदेशिनोक्तमिति न तद्विरोध इति वाच्यम् । विरोधाच्चे-ति। यदीदृशो नियमस्तत्र स्वीक्रियेत, तदाऽतिजरणेत्यादाविनादिरूपसन्निपात-

भाष्ये। तत्र हि पूर्वपक्षिणा—'अतिजरसं पश्येत्यत्र लुक् कस्मान्न' इति पृष्टे, परेण—'प्रथमैकवचनेऽप्यतिजरसं तिष्ठतीत्यत्रापि कुतो लुङ् न शङ्क्यते' इति पृष्टे, पूर्वपक्षिणा 'प्रथमैकवचनेऽम्भावेऽन्तरमेव जरस्। तत्र जरसि कृते सन्निपातपरिभाषया न लुक्' इति विशेष उक्तः। यद्वा 'अम्भावे कृते सन्निपातपरिभाषया न जरस्' इतिपाठभेदेन विशेष उक्तः। ततः परेण 'यद्येवम् अतिजरसम् अतिजरसैरित्यत्र न प्राप्नोति जरस्' इतिद्वितीयैकवचनादौ शङ्किते, सिद्धान्तिना—इष्टमेवैतदतिजरमतिजरैरिति भवितव्यमिति। अत्र विशेषोपपादनेऽन्त्यपाठ एव युक्तः। अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादिते द्वितीयैकवचनेऽपि तेन न्यायेन लुकोऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोध्यम्। एवं स्त्रियां जरसादेशे कृते 'याडापः' इत्यादिनामाकारप्रश्लेषेण वारणं विफलमेव, तेषां परत्वात्। अतिखट्वशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः॥

---

लक्षणविधिं विनापि जरसादेशस्य प्रवृत्तियोग्यतायास्सत्त्वेन तत्परिभाषाप्रवृत्तेर्दुर्वचतया 'सन्निपातपरिभाषया जरसादेशमनभ्युपय'न्निति कैयटग्रन्थो विरुध्येतेति भावः। उक्तार्थे भाष्यमस्मातिमप्याह। ध्वनितं चेदमिति। विभक्त्यादेशानां पूर्वविप्रतिषेधेन प्रथमं प्रवृत्तिरिति सन्निपातपरिभाषायामीदृशो नियमो नाश्रीयत इत्येतदुभयमित्यर्थः। अत्र हि भाष्ये गोनर्दीयस्त्वाहेत्यादिना नपुंसकद्वितीयैकवचने सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तिप्रतिपादनेनायमर्थस्सूचितः। पूर्वविप्रतिषेधानाश्रयणे सन्निपातपरिभाषायां तादृशनियमाश्रयणे वा तत्परिभाषाप्रवृत्तेर्वक्तुमशक्यत्वादिति भावः। इत्याहुरिति॥

यत्त्वत्राचार्यास्तदनुयायिन औत्तराहाश्च वदन्ति। वस्तुतो जरसादेशस्सर्वविधिभ्यो बलवान्। जरसोऽवकाशो जरसा जरसे इति जराया इति स्यादादिषु

भाष्यप्रामाण्यात् । अन्यथा जरस इत्यत्र जरादेशात्परत्वाद्य डाप इति याटि तदसङ्गतिः । एवं च विभक्तिसम्बन्धिकार्यमात्रात्प्रागेव जरसिति । तन्न । अनङ्विषय इव जरस्विषयेऽपि जरसेत्येकस्मिन्नेवोदाहरणेऽवकाशप्रदर्शनस्य शैलीसिद्धतया तद्विरुद्धस्य जरस इत्यधिकपाठस्य नागेशादर्वाचीनैः प्रक्षिप्तत्वेन निश्चेतुं शक्यतया तद्बलेन जरसादेशस्य सर्वत प्राबल्यकल्पनाया अयुक्तत्वात् ॥

यदपि नपुंसकद्वितीयैकवचने तु जरसादेशो भवत्येव । अथेह लुकस्मान्न भवति, अतिजरसं पश्येतिभाष्यात् । अम्लुग्भ्यां जरसः परत्वाच्च । न च लुकस्सर्वविधिभ्यः प्राबल्यम् । बहिरङ्गलुक एव तथात्वात् । स्वमोरिति सूत्रस्थं त्यदादिभ्यश्चेति वक्तव्यमिति वार्तिकमप्यत्र मानम् । तेन भवतादित्यत्र लुकं बाधित्वा तातङिति वदन्ति । तदप्ययुक्तम् । अतिजरसं पश्येति भाष्यस्यैकदेश्युक्तितया: प्रागुपदर्शितत्वेन तस्य तदुक्तार्थासाधकत्वात् । अम्लुग्भ्यां जरसः परत्वाच्चेति हेतूपन्यसनमपि न सम्यक् । अन्तरङ्गानपीति न्यायेन जरसादेशं बाधित्वा लुकि प्राप्ते, तं बाधित्वाऽतोऽमित्यमि सन्निपातपरिभाषया जरसादेशाप्रवृत्तेः । 'बहिरङ्गलुक एव सर्वतः प्राबल्यम् । स्वमोर्नपुंसकादिति सूत्रस्थं त्यादादिभ्यश्चेति वक्तव्यमिति वार्तिकमत्र मानम् । तेन भवतादित्यत्र लुकं बाधित्वा तातङिति' तदुक्तिरपि न युक्ता । अन्तरङ्गानपीत्यत्रापिशब्दबलेन परादिबाधकत्वस्यापि कैमुतिकन्यायसिद्धत्वात् । अत एवैङ्ह्रस्वादिति सूत्रस्थं भाष्यमप्युपपद्यते । तत्र ह्यपृक्तसंबुद्धिलोपाभ्यां लुग्विप्रतिषेधेनेति वार्तिकस्य नपा लोपलुकोर्लुगवधारणाद्यथाऽनडुह्यन इत्यनेन प्रत्याख्यानं कृतम् । व्याख्यातं चात्र कैयटेन । अन्तरङ्गानपि विधीन् बाधमानो लुग्बलवानित्यतुल्यबलेन लोपेन स्पर्धां नार्हतीति विप्रतिषेधो नोपन्यसनीय इति । बहिरङ्गलुक एव सर्वतः प्राबल्यं न लुङ्मात्रस्येत्यर्थाश्रयणे तु तत्रापृक्तलोपसम्बुद्धिलोपापेक्षया लुको बहिरङ्गत्वाभावेन तदसङ्गतिस्स्पष्टैव । कैयटे बहिरङ्गपदानुपादानेनापि लुक्ा-

त्रस्य सर्वतः प्राबल्यमित्यर्थस्सूचितः । अत एव द्यः श्वरित्याद्यव्ययेषु परमपि हल्ङ्यादिलोपं बाधित्वाऽव्ययादाप्सुप इति लुक्सिद्धिः । अन्यथा हल्ङ्यादिलोपे प्रत्ययलक्षणेन सुप्परत्वमाश्रित्याऽत्वसन्तस्येति दीर्घापत्तिः । अत एव च तत्कुलमित्यादौ परमपि त्यदाद्यत्वं बाधित्वाऽनेन न्यायेन लुकि तत्सिद्धिः । त्यदादिभ्यश्चेति वक्तव्यमिति वार्तिकन्त्वनावश्यकमेव, न्यायेन सिद्धेः । त्यदादिभ्यश्चेति वक्तव्यमिति भाष्ये काकुः । तन्न वक्तव्यमेवेत्यर्थः । हेतुस्तु प्रसिद्ध एवान्तरङ्गानपीति न्यायरूप इति तदाशयः । स्पष्टं चेदमुद्योते । तद्भाष्यस्य यथाश्रुतार्थकत्वन्तु न युक्तम् । एङ्ह्रस्वादिति सूत्रभ्थनिरुक्तभाष्यविरोधापत्तेः । भवतादिति रूपसिद्धिस्तु अन्तरङ्गानपीति न्यायस्य ज्ञापकसिद्धत्वेनाऽसार्वत्रिकत्वादप्रवृत्तौ लुकं बाधित्वा परत्वात्तातङि बोध्या । स्पष्टं चेदं तिङन्तशेखरे । बहिरङ्गलुक एव सर्वतः प्राबल्यं वदतस्त्वन्मतेऽपि तातङोऽनैमित्तिकत्वेन लुगपेक्षयाऽन्तरङ्गत्वाल्लुग्वारणायैषैव गतिराश्रयणीया ॥

यदपि यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति जरसिति भाष्यं प्रथमैकवचनादिविषयकमिति तैरुक्तम्, तदपि न । अथेह लुकस्मान्न भवति । अतिजरसं पश्येति द्वितीयैकवचने लुकि पूर्वपक्षिणा शङ्किते ततः परेणैकदेशिना प्रथमैकवचनमपि कुतो नोदाह्रियते । अतिजरसं तिष्ठतीति शङ्किते ततः पूर्वपक्षिणा तत्र द्वितीयैकवचनापेक्षया विशेष उपपादितेऽनन्तरं प्रवृत्तो यद्येवमित्यादिग्रन्थः परस्य पूर्वपक्षिणं प्रतीति स्वरसतः प्रतीयत इति तस्य तदुदाहृतद्वितीयैकवचनविषयताया एवोचितत्वात् । स्पष्टं चेदं जराया इतिसूत्रे उद्योते ॥

यच्चोक्तं द्वितीयैकवचनापेक्षया प्रथमैकवचने विशेषप्रतिपादनपरमम्भाव्ये कृते सन्निपातपरिभाषया न जरसिति नव्योक्तपाठान्तरं भाष्यपुस्तकेषु क्वापि नोपलभ्यत इति । तन्न । तत्पाठस्याधुनिकपुस्तकेष्वनुपलम्भेऽप्यतिचिरन्तनपुस्तकेषूपलभ्यमानत्वस्योद्योते स्पष्टमुक्तत्वात् । नाप्यत्र पाठे पूर्वग्रन्थासङ्गतिः ।

तथाहि सन्निपातलक्षणविधिप्रवृत्तिं विना यत्र तद्विघातकनिमित्तैः प्रवृत्तियोग्यता न, तत्रैव सन्निपातपरिभाषायाः प्रवृत्तिरिति विशेषाङ्गीकारेण द्वितीयैकवचने तत्परिभाषाया अप्रवृत्त्या जरस् भवत्येवेत्याशयेनातिजरसं पश्येत्यत्र लुक्स्यान्न भवतीति पूर्वपक्षिणा शङ्कितम्। ततः परेणैकदेशिना तत्परिभाषायां तदभिप्रेतविशेषाज्ञानेन द्वितीयैकवचन इव प्रथमैकवचनेऽपि सन्निपातपरिभाषाया अप्रवृत्त्या जरसः प्रवृत्तिं स्वीकृत्यातिजरसं तिष्ठतीत्यत्रापि कुतो न शङ्क्यत इति शङ्कितम्। ततश्च पूर्वपक्षिणा सन्निपातपरिभाषायां स्वाभिप्रेतं निरुक्तविशेषमाश्रित्य द्वितीयैकवचनापेक्षया प्रथमैकवचने सन्निपातपरिभाषया जरसादेशाप्राप्तिरूपो विशेषो दर्शितः। ततश्च परेणैकदेशिना सन्निपातपरिभाषायां तादृशविशेषाश्रयणे मानाभावः। इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरटाङसीति सूत्रस्थभाष्यविरोधश्चेत्याशयेन यदि प्रथमैकवचनेऽनेन न्यायेन जरस् न स्यात्तदा त्वदुक्तद्वितीयैकवचनेऽपि तन्न स्यादिति शङ्कितम्। ततस्सिद्धान्तिना 'गोनर्दीय आह' इष्टमेवैतत्सङ्गृहीतं भवति, अतिजरमतिजरैरिति भवितव्यमित्युक्तम्। एवञ्च प्रथमैकवचन इव द्वितीयैकवचनेऽपि जरसभाव इष्ट एव। अत एव साधारण्येनैवातिजरमिति भवितव्यमिति भगवतोक्तमिति प्रतीयते। अस्त्यत्र विशेष इति भाष्यस्य द्वितीयैकवचनापेक्षया प्रथमैकवचने सन्निपातपरिभाषया जरसादेशाप्रवृत्तिरूपो विशेष इत्यर्थः। एवञ्चात्र पाठे तद्भाष्यं पूर्वोक्तरीत्या स्वरसत एवोपपद्यते। किञ्चास्त्यत्र विशेषः। नात्राकृतेऽम्भावे जरस्भावः प्राप्नोति, किं कारणम्? पचीत्युच्यत इत्यनन्तरं यदा चाम्भावः कृतस्तदा जरस् न प्राप्नोति। सन्निपातेत्यादिपाठ एव भाष्यकारशैलीमनुसृत्यात्यन्तं स्वारस्यमधिरोहति। किञ्चात्रैव पाठे यद्येवमित्याद्युत्तरभाष्यमपि स्वरसत उपपद्यते। अन्यथा सन्निपातपरिभाषयाऽमो लुग्वारणपरस्य तद्भाष्यस्यानन्तरं 'यद्येवमतिजरसमित्यत्र न प्राप्नोति जरसिति जरसप्राप्तिशङ्कापरं भाष्यं नात्यन्तं

स्वारस्यमधिरोहेत् । एवं च विशेषप्रतिपादनपरे आधुनिकपुस्तकेषूपलभ्यमाने पाठेऽयुक्तताया उपाध्यायैरुपदर्शितत्वेन चिरन्तनपुस्तकेषूपलभ्यमानपाठस्य निरुक्तरीत्याऽत्यन्तं स्वरसत उपपन्नत्वेन च विशेषप्रतिपादने स एव पाठो युक्त इति सुधीभिर्विभावनीयम् ॥

एतेनायं पाठः पूर्वग्रन्थासङ्गतः । अतिजरसं तिष्ठतीत्यत्र लुक्कुतो न शङ्कित इति तटस्थेन शङ्किते सन्निपातपरिभाषया जरसादेशाप्रवृत्त्योक्तरूपमेव दुर्घटमिति समाधानस्य पाठान्तरकल्पनया भवदभिप्रेतस्य प्रतिपादनायास्त्यत्र विशेष इत्युक्त्यसङ्गतेः । तथोक्त्या ह्यतिजरसं तिष्ठतीति रूपं स्वीकृत्य विशेषमात्रमभिधित्सितमिति प्रतीयत इत्याचार्योक्तमपास्तम् ॥

यदप्याद्यपाठस्याऽयुक्तत्वपरिहाराय, 'किं कारणमचीत्युच्यत' इत्यन्त एव ग्रन्थो विशेषप्रतिपादनपरः । 'यदा च जरस्भाव' इत्याद्यग्रिमभाष्यन्तु द्वितीयैकवचने लुग्वारणपरम् । तस्यायमाशयः । अतोमित्यम्प्रवृत्तिं विना न जरस्भावः । सोर्हलादित्वात् । अम्भावे तु न लुक् । अमा बाधितत्वात् । अमा बाधितस्यापि पुनः प्रवृत्तौ ज्ञानमित्यत्रापि तदापत्तिः । न च जरसादेशार्थं सोरम्विधानम् । अकारादेशविधानेनैव सिद्धावम्विधानवैयर्थ्यादित्याचार्यास्तदयुक्तम् । यदा च जरस्भाव इत्यादिसन्निपातेत्यन्तग्रन्थस्य विशेषप्रतिपादनपरतया कैयटादिभिर्योजितत्वेनान्यथा व्याख्याने दृढतरमानाभावेन चायुक्तत्वात् । किञ्च तथा योजनमप्यसम्भवदुक्तिकम् । तथा हि । ज्ञानमित्यादिलक्ष्यविषयकतयोपप्लुताम्विधायकशास्त्राणां लुकि वैयर्थ्यसम्भावनया लुकोऽप्रवृत्तावप्यतिजरसमित्येतल्लक्ष्यविषयकतयोपप्लुतशास्त्रस्य जरसादेशसम्पादकतया चारितार्थ्येन वैयर्थ्यसम्भावनाभावात्तत्र लुको दुर्वारत्वात् । न च तावन्मात्रफलकत्वेऽकारविधानेनैव सिद्धेऽम्विधानं व्यर्थमित्यस्त्येव वैयर्थ्यसम्भावनमिति वाच्यम् । ज्ञानमित्यादौ मकारश्रवणाय सङ्ग्राहकवाक्ये मकारोच्चारणस्य चारितार्थ्यात् ।

**परे तु—जरसादेशाद् विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेन। तेन जराणामित्यादावामि पूर्वं नुटि जरसोऽभाव एव। एवं च 'ह्रस्वनद्यापः' इत्यत्राऽकारप्रश्लेषे न फलं, नापि मानम्। अत एव 'ङ्याप्ग्रहणेऽदीर्घः' इतिवज्जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता नाऽऽरब्ध इत्याहुः॥**

---

न चैतद्विषये स्वातन्त्र्येणाभिधायकं वाक्यमस्ति। यत्राकारविधानेनैव सिद्ध इत्यादिभवदुक्तकल्पना कर्तुं शक्येत। उपप्लुतवाक्ये मकारस्तु सङ्ग्राहकवाक्यानुसरणाय चरितार्थतया नापूर्वार्थं कल्पयितुमीष्टे। एवञ्च न्यायसिद्धपरिभाषासाध्यफलनिर्वाहायेदृशकल्पनाऽऽश्रयणीयेति भाष्याशयवर्णनं नागेशग्रन्थखण्डनाग्रहग्रस्तेभ्य एव रोचते, नान्येभ्य इत्यवधेयम्॥

यदपि यद्येवमित्यादिग्रन्थो न तावत्पूर्वपक्षिणः। तेन जरसादेशमङ्गीकृत्यैव लुक आपादनात्। नापि तटस्थस्य, इष्टमेवैतत्सङ्गृहीतमित्यग्रिमभाष्यासङ्गतेः। अतिजरसैरित्युपन्यासासङ्गतेश्च। नापि सिद्धान्तिनः, तेन जरसादेशाभावप्रतिपादनद्वारोक्तरूपस्यैव खण्डनीयतयाऽतिजरसमिति न प्राप्नोतीत्यनिष्टापादनासङ्गतेरित्याचार्यास्तन्न। दत्तोत्तरत्वात्॥

न केवलं विभक्त्यादेशानामेव पूर्वं प्रवृत्तिः, किन्तु विभक्तिसम्बन्धिकार्यमात्रं जरसादेशात्पूर्वं प्रवर्तत इत्याशयेनाह। **परे त्वित्ति। अत एवेति।** जरसादेशाद्विभक्तिसम्बन्धिकार्यमात्रस्य पूर्वं प्रवृत्तेरेवेत्यर्थः। **नारब्ध इति।** अन्यथा जरसादेशोत्तरं स्थानिवत्त्वेन प्राप्तस्य याडादेर्वारणाय सोऽपि वक्तव्य एव स्यात्। मम तु जरसादेशात्पूर्वं विभक्तिकार्येषु कृतेषु क्वचित्सन्निपातपरिभाषया क्वचिदजादिविभक्तिपरत्वाभावेन च जरस् न भवत्येवेति स नावश्यक इति भावः॥

परिभाषाया अनित्यत्वमिति । इनातोरिकारदीर्घोच्चारणम्, एसि कर्त्तव्ये ऐस्करणञ्च तदनित्यत्वे मूलमिति तदभिमानः । षष्ठ्येकवचने इति । एकसूत्रोपात्तत्वात्स्यादेशाविषयेऽपि पूर्वविप्रतिषेध इति तद्भावः । एतच्च भाष्येति । इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः, 'इष्टमेवैतत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्यम्' इति 'जराया' इतिसूत्रस्थभाष्येति चार्थ इत्यन्यत्र विस्तरः ॥

पद्दन्नो ॥ आदेशैः स्वानुरूपाः स्थानिन आक्षिप्यन्ते इत्याह—पाददन्तेति । 'अनुदात्तस्य चर्दुपधस्य' इत्यतोऽन्यतरस्यामित्यनुव-

---

यत्त्विदमयुक्तम् । अदीर्घपदेन दीर्घभिन्नजरसोऽपि ग्रहणात् । दीर्घभिन्नस्य ह्रस्वस्यैव ग्रहणे तु चित्रायां जातश्चित्र इत्यादौ हल्ङ्यादिलोपयाडागमाद्यापत्तिरित्याचार्यास्तन्न । ङ्याब्ग्रहणेऽदीर्घ इत्यस्य ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदित्यर्थेन जरसादेशस्य दीर्घभिन्नादेशत्वेऽपि ङ्याप्स्थानिकत्वाऽभावेन तन्निषेधाप्राप्तेः ॥

नन्विनातोरिकारदीर्घोच्चारणस्य प्रत्याख्यातत्वेऽप्येसि कर्तव्ये ऐस्करणमेव तदुक्तार्थे मानं स्यादित्याशङ्क्य भाष्यान्तरविरोधमप्याह । इष्टमेवैतदित्यादिना । एवञ्च तृतीयाबहुवचने सन्निपातपरिभाषया जरसभावस्यैव भाष्याभिप्रेतत्वेन तद्विरोधादनित्यत्वाश्रयणं न युक्तमिति भावः । एसि कर्तव्ये ऐस्करणन्तु छन्दसि नद्यैरित्याद्यर्थमिति बोध्यम् ॥

स्वानुरूपा इति । यथा शिवादिपठितविश्रवणरवणशब्दाभ्यामर्थतो वर्णतश्चानुरूपः स्थानी विश्रवश्शब्द आक्षिप्यते, एवं पदाद्यादेशैर्वर्णतोऽर्थतश्चानुरूपास्स्थानिन आक्षिप्यन्त इति भावः । वर्णत इत्युक्तेःश्रवणशब्दस्य न पदा-

**त्तीते। अत एव तुल्यास्यसूत्रादिभाष्ये 'आस्ये तुल्यः' 'पादेनोपहतं' 'मासेन पूर्वाय' इत्यादिप्रयोगाः, 'हृदयस्य प्रिय' इति सौत्रप्रयोगश्चोपपन्ना भवन्ति। 'ये च तद्धिते' इति सूत्रस्थे 'वा**

---

देशः। न चास्य वैकल्पिकत्वाच्चरणादेरादेशत्वेऽपि न दोष इति वाच्यम्। तथासति चरणशब्दस्य नपुंसकस्यापि सत्त्वेन तस्यादेशे पन्दीत्यापत्तेः। अत एवाऽम्भश्शब्दस्य नोदश्चादेशः। तथासत्युद्राकृतमित्यत्रौजस्सहोम्भस्तमसस्तृतीयाया इत्यनेनाऽलुगापत्तिः। अत एव च मुखशब्दस्य नासन्नादेशोऽपि। तथा सति तस्य मुखं स्वाङ्गमिति बहुव्रीहावन्तोदात्तत्वे गौरास्न इत्यादावुदात्तनिवृत्तिस्वरापत्तिः। अर्थत इत्युक्तेः श्लोकपादार्थकस्य पादशब्दस्य न पदादेश इति बोध्यम्। इदं स्थानेन्तरतम इत्यत्र सप्तम्यन्तपाठमाश्रित्य व्याकुर्वतो मूलकारस्य मतेन। सिद्धान्तभूते प्रथमान्तपाठे तु तस्य विसदृशादेशव्यावर्तकतया प्रकृते स्थानिविशेषलाभो दुर्वच एव। अत एवैच तद्धित इति सूत्रे 'शिरसो ग्रहणं कर्तव्यमि'त्युक्तम्। अन्यथा तत्राप्यादेशेन शब्दतोऽर्थतश्च स्वानुरूपस्य स्थानिनः शिरश्शब्दस्याक्षेपेण सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। अत एव 'शीर्षंश्छन्दसी'ति सूत्रे शीर्षन्नित्यस्य प्रकृत्यन्तरत्वकथनमपि सङ्गच्छते। एवं चास्य सिद्धान्ते प्रयोगनियामकत्वमेव, न तु स्थान्यादेशभावबोधकत्वम्। विश्रवणरवणावप्यण्विषये प्रकृत्यन्तरावेव। स्पष्टं चेदं हरदत्तग्रन्थे। स्थानेन्तरतम इत्यत्रार्थत आन्तर्यस्य पद्दन्नित्येतदुदाहरणपरः परिभाषेन्दुशेखरग्रन्थोऽपि सप्तम्यन्तपाठानुसारेणैव। सिद्धान्ते तु तत्रार्थत आन्तर्यग्रहणस्य तृज्वत्क्रोष्टुरित्युदाहरणम्। तस्यापि प्रयोगनियामकत्वे तु दारदबृन्दारिका, वातण्ड्ययुवतिरित्यादीन्युदाहरणानि परिभाषेन्दुटिप्पणीतोऽवसेयानि। **भाष्य इति**। जातावेकवचनम्। उपपन्ना भवन्तीति। अन्यथाऽऽदेशानां नित्यत्वेन तत्प्रयोगाणामनुपपत्तिस्स्पष्टैव। ननु यद्यन्यतरस्यामिति पदस्यात्रानुवृत्ति-

केशेषु' इतिवार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासम्बन्धबोधकम्। यद्यपि निशाशब्दस्य निश्शब्दप्रकृतिकत्वेन भागुरिमतासिद्धतयाऽपो वैकल्पिकत्वेन च वाक् वाचेत्युभयवान्निश्निशयोः सूत्रे निश्ग्रहणं विनापि सिद्धिः, तथापि सुटि हलन्तस्यासाधुत्वबोधनायात्र ग्रहणमिति वृत्त्यनुसारिणः ॥

परे तु 'अनुदात्तस्य' इतिसूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वं नास्ति। अत एव 'शीर्षंश्छन्दसि' इति सूत्रे 'शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्। आदेशत्वे हि छन्दसि शिरश्शब्दस्य प्रयोगो न स्यात्' इत्युक्तं भाष्ये। अन्यथा विकल्पानुवृत्त्याऽदेशत्वेऽपि दोषाभावेन तदसङ्गतिः स्पष्टैव। 'ये च तद्धिते' इत्यत्र चादेशत्वाय शिरसो

---

स्स्याच्चदा मध्ये 'ये च तद्धित' इति सूत्रेपि तत्सम्बन्धस्स्यात्। तथा च केशेष्वपि विकल्पस्य सिद्धतया वार्तिकं व्यर्थम्। यदि तु सूत्रस्य केशरूपार्थमात्रविषयकतां बोधयितुं वार्तिकमिति मन्यते तदा वाग्रहणं व्यर्थमित्यत आह। ये च तद्धित इत्यादि। वाग्रहणेति। वाऽर्थकान्यतरस्यांग्रहणेत्यर्थः। निश्निशयोरिति। अनयोश्शब्दपरत्वेन विभिन्नार्थत्वान्न विरूपाणामपीत्यनेनैकशेषः। वृत्त्यनुसारिण इत्यनेन सूचितामरुचिन्दर्शयन् सिद्धान्तमाह। परे त्विति। अन्यथेति। अन्यतरस्यामित्यस्य स्वरितत्वाङ्गीकार इत्यर्थः। न च छन्दसि सर्वविधीनां वैकल्पिकत्वेनादेशत्वेऽपि दोषाभावात्तद्भाष्यमेकदेश्युक्तिरेवेति वाच्यम्। तस्यागतिकगतित्वात्। स्पष्टं चेदमुद्योते। अन्यतरस्यामित्यस्यास्वरितत्वे मानान्तरमाह। शिरसो ग्रहणं कर्तव्यमित्युक्तमिति। अन्यतरस्यामित्यस्य स्वरितत्वाङ्गीकारे तत्रापि तत्सम्बन्धस्य दुर्वारत्वेनादेशत्वप्रकृत्यन्तरत्वयो रूपे विशेषाभावेनास्यादेशत्वसम्पादनाय वार्तिकारम्भो विफल एव स्यादिति भावः। आचार्यास्त्वन्यतरस्याङ्ग्रहणानुवृत्तौ-

ग्रहण कर्त्तव्यमित्युक्तं, 'वा केशेषु' इति च वक्तव्यमित्युक्तम्। तस्मात् शसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः। एवं मांस्पृत्स्नवोऽपि। अत एव नस्पृतोः स्थानिवद्भावादाद्यन्तत्वमादाय नसां पृतामित्यादौ न नुडादिः। 'नासिकाया नस् यत्तस्क्षुद्रेषु' इति वार्त्तिके आदेशत्वमेव। नासिकाया इत्युक्तेः। अत एव तद्विषये 'नासिकाक्षुद्र' इत्यादि न। अत एव पदादिषु, 'मांस्पृत्स्नूनामुपसंख्यानम्' इतिवार्त्तिके स्थानिनिर्देशो न कृत इत्याहुः॥

---

भाष्यविरोधं प्रदर्श्यादेशैस्स्वानुरूपास्स्थानिन आक्षिप्यन्त इत्यत्रापि तद्दर्शयति। शिरसो ग्रहणं कर्तव्यमित्युक्तमितीत्यवतारयन्ति। तत्तु नात्यन्तं ग्रन्थस्वारस्यं पुष्णातीत्यवधेयम्। अत्रैव मानान्तरमाह। वा केशेष्विति। यद्यन्यतरस्यामित्यस्याऽत्रानुवृत्तिः स्यात्तदा मध्ये ये च तद्धित इति सूत्रेऽपि तत्सम्बन्धस्स्यात्। एवञ्च यादौ तद्धिते परे सामान्यत आदेशस्य वैकल्पिकत्वेन शीर्षण्याश्शिरस्याः केशा इति रूपद्वयस्य सिद्धतया तदर्थं वार्तिकारम्भो विफल एवेति भावः। तत्सामर्थ्येन तत्र सूत्रेऽन्यतरस्यांग्रहणाननुवृत्तेरुत्तरत्र मण्डूकानुवृत्तेश्च कल्पनापेक्षया सर्वथा तस्याऽस्वरितत्वकल्पनैव न्याय्येति बोध्यम्। तस्मादिति। अन्यतरस्यामित्यस्याननुवृत्तेरित्यर्थः। प्रकृत्यन्तराण्येवेति। अत एव पूर्वोक्तभाष्यप्रयोगाणां नानुपपत्तिरिति भावः। अत एवेति। आदेशत्वाभावादेवेत्यर्थः। न नुडादिरिति। ह्रस्वनद्याप इत्यत्राऽकारप्रश्लेषानावश्यकतायाः प्रागुपदर्शितत्वेन न तेनात्र निर्वाह इति भावः। अत एवेति। एषां प्रकृत्यन्तरत्वादेवेत्यर्थः। स्थानिनिर्देश इति। इदमुपलक्षणमुपसंख्यानस्यापि। यद्येषामादेशत्वमेवाऽभिमतं स्यात्तदा पद्भिति सूत्रे वार्तिककारः 'मांसपृतनासानूना'मित्येवंरीत्या स्थानिनिर्देशघटितमेव वार्तिकं कुर्यात्। तथा पदादीनामदेशत्वाय 'ये च तद्धित' इति सूत्र इव पादादीनां चेति वक्तव्य-

मित्युपसंख्यानं कुर्यादिति भावः। स्थानेऽन्तरतम इति सप्तम्यन्तपाठदूषणावसरे, एतत्फलान्यथासिद्ध्यकरणेन चैषां प्रकृत्यन्तरत्वं ध्वनितमित्यवधेयम् ॥

भट्टास्तु पादादीनामादेशत्वमेव । तस्य न्यायप्राप्तत्वात् । अत एव शीर्षंश्छन्दसीति सूत्रे भाष्ये शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यमादेशो मा विज्ञायीत्युक्तम् । ये च तद्धित इति सूत्रस्थं भाष्यं त्वर्थाधिकारप्राप्तातिप्रसङ्गभङ्गायेति नाऽस्माकं प्रतिकूलम् । वा केशेष्वित्यतो वेति सम्बध्यते । तेन हृदयस्येत्यादेर्नाऽसङ्गतिः । वार्तिकस्थपदस्याऽप्यनुवृत्तिस्सूत्रे क्व दृष्टेति चेद्वैयाकरणाख्यायां चतुर्थ्या इणष इत्यनयोः पश्य । अत एव शीर्षश्छन्दसीति सूत्र इव पद्भिति सूत्रे प्रकृत्यन्तरं द्रष्टव्यमिति नोक्तम् । तेन ह्यत्र सूत्रे, आदेशत्वप्रकृत्यन्तरत्वयोः फलाविशेषो ध्वनितः । विकल्पासम्बन्धे तु विशेषस्य स्पष्टतया तदसङ्गतिस्स्पष्टैवेति वदन्ति। तदयुक्तम्। शीर्षश्छन्दसीति सूत्रे स्थानिनिर्देशाभावेन सिद्धान्तभूते स्थानेऽन्तरतम इति प्रथमान्तपाठे स्थानिविशेषस्याक्षेप्तुमशक्यतया चाऽदेशत्वस्य दुर्वचत्वेन प्रकृत्यन्तरमेव छन्दोविषयं तदित्याशयेन प्रवृत्तस्य 'शीर्षश्छन्दसि प्रकृत्यन्तरं' द्रष्टव्यमिति भाष्यस्यैव सिद्धान्त्युक्तित्वेन तदनन्तरं प्रवृत्तस्य 'किं प्रयोजनं, आदेशप्रतिषेधार्थम्, आदेशो मा विज्ञायीत्यादिभाष्यस्य सप्तम्यन्तपाठानुसार्येकदेशिनोरुक्तिप्रत्युक्तिपरत्वेन तद्भाष्यस्य तदुक्तार्थासाधकत्वात् । शीर्षश्छन्दसीत्यत्र प्रकृत्यन्तरत्वस्योक्तत्वेन तुल्यन्यायादत्राऽपि तस्योक्तप्रायत्वेनाऽत्र सूत्रे प्रकृत्यन्तरत्वाकथनमपि न तदुक्तार्थसाधकम् । वा केशेष्वित्यतो वाग्रहणानुवृत्तिकथनमपि न समञ्जसम् । सोऽपदादावित्यत्रोपसंख्यातवार्तिकगणस्याऽत्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकस्य सस्याऽनेन षत्वमिति भाष्योक्तपक्षान्तरेण फलैक्यायोत्तरसूत्रस्यापि शेषत्वमिति तात्पर्यकल्पनयोत्तरसूत्रे सम्बन्धाङ्गीकारेऽपि वार्तिकस्थपदानामुत्तरत्रानुवृत्तेरयुक्तत्वात् । करिष्यमाणवार्तिकस्थपदानुवृत्तितात्पर्येण सूत्रकृता सूत्रं

प्रत्याहार इति। व्याख्यानादौटष्टकारेणेति भावः। अक्लीब-स्येति। पर्युदासपरतयाऽप्यस्य भाष्ये व्याख्यानात् लघुत्वाच्चेति

प्रणीतमित्यर्थकथनस्याऽनुचितत्वात्। किञ्च वैयाकरणाख्यायामित्यत्रापि न वार्तिकस्थपदानुवृत्तिः। भाष्यवृत्त्यादिष्वात्मनश्च पूरण इत्यस्य सूत्रत्वेनैव पाठस्योपलभ्यमानत्वात्। यदित्वा 'ज्ञायिनि च, आत्मनश्च पूरणे, आत्मनश्च पूरण उपसंख्यानं कर्तव्यमिति भाष्यस्याऽस्वारस्येन तस्य वार्तिकत्वमेवेत्युच्यते तदापि न दोषः। वैयाकरणाख्यायां चतुर्थ्याः परस्य चेत्येकमेव सूत्रं पठित्वा चेन परप्रतिद्वन्द्वितयाऽत्मन्शब्दस्य ग्रहणात्। स्पष्टं चेदमलुक्प्रकरणे शेखरोद्योतयोः। तत्र शेखरे वार्तिकस्थात्मन इत्यस्याऽनुवृत्तिप्रतिपादनन्तु न स्वाभिमतम्। अत एव तत्र यद्वेत्यादिना पूर्वोक्त एव परिहारो दर्शितः। उद्योते च स एव दर्शितो नानुवृत्तिः। किञ्च वा केशेष्वित्यतो वाग्रहणानुवृत्तौ मध्येऽचि शीर्ष इत्यत्रापि तत्सम्बन्धस्य दुर्वारत्वेनातिप्रसङ्गो दुर्वार एव। किञ्च वार्तिकस्थपदानामुत्तरत्रानुवृत्तिस्वीकारे 'षाद्यञश्चाप् वाच्य' इत्यतो यञ इत्यनुवृत्त्या 'अवटाच्चेत्युक्तावप्यवटशब्दप्रकृतिकयञन्ताच्चाब् भवतीत्यर्थेनाऽवट्यायनीति-रूपसिद्धौ, आवट्याच्चेति गुरुन्यासो व्यर्थ एव स्यादित्यलं सूत्रभाष्यविरुद्धकल्पनया नागेशवचनखण्डनप्रयासेन। किञ्चाऽस्य मतस्य स्वाऽनभिप्रेतत्वं ध्वनयितुं 'स्थानेऽन्तरतम इतिपाठदूषणावसरे एतत्फलान्यथासिद्ध्यकरणात् प्रकृत्यन्तरत्वमेषां ध्वनितं भाष्य इत्यपि बोध्य' मित्युक्तमग्रे आहुरिति प्रतीके भट्टैः॥

मूले प्रत्याहार इति। न त्वागमः स्वादिष्विति सूत्रेऽसर्वनामस्थानग्रहणसामर्थ्यादिति भावः। व्याख्यानादिति। औटष्टकारोच्चारणसामर्थ्य मूलकादित्यर्थः। यद्वान्त्यत्वप्रयुक्ता यस्येत्संज्ञेत्येवंरूपेणादिरन्त्येनेत्यत्र व्याख्यानादित्यर्थः। रप्रत्याहारोऽपि यदीष्यते तदाऽकारस्यानुनासिकत्वप्रतिज्ञासामर्थ्यात्सम्पादयितुं शक्यत इति भावः। अक्लीबस्येति। नपुंसकभिन्नसम्ब-

**भावः । प्रसज्यप्रतिषेधेन व्याख्यानेऽत एव ज्ञापकात्केषांचिदसमर्थसमासानां साधुत्वं बोद्धव्यम् । स्वादिषु ॥ सुरत्र प्रथमैकवचनम् । आदिशब्देन कबन्तानां ग्रहणं, व्याख्यानात्, तदाह—कप्प्रत्ययावधीति । तदन्तेष्वित्यर्थः । यचि भम् । समाहारद्वन्द्वे सौत्रत्वान्न टच् । यचीत्यनेन स्वादेर्विशेषणात्तदादिविधिः । असर्वनामेति । तेन सुपादावित्यादौ पादः पत् । भसञ्ज्ञा पदत्वकार्यप्रतिबन्धरूपेऽशास्त्रीयेऽपि कार्ये भवति, न पदान्तसूत्रस्थभाष्यप्रामाण्यात् ॥**

---

न्धिस्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानीति सूत्रार्थः । एतेनानन्तर इति शेषपूरणेन व्याचक्षाणा औत्तराहाः परास्ताः ॥

**प्रथमैकवचनमिति** । न तु सप्तमीबहुवचनम् । अत एवाऽसर्वनामस्थान इति चरितार्थमिति भावः । **व्याख्यानादिति** । सूत्रोपात्तानामेव ग्रहणस्याभिप्रेतत्वे सुप्स्वित्येव वक्तव्ये आदिग्रहणरूपादित्यर्थः । आदिग्रहणादधिकग्रहणे विनिगमनाविरहात्कबन्तानां ग्रहणं सिद्ध्यतीत्याशयेनाह । **तदन्तेष्विति** ॥

**न टजिति** । इतरेतरयोगे सौत्रत्वादेकवचनमिति नोक्तम् । समासान्तविधेरनित्यतायाः क्लृप्तत्वात् । **तेनेति** । असर्वनामस्थान इत्यस्यात्र सूत्रे सम्बन्धेनेत्यर्थः । नन्वेवमपि संज्ञायाः कार्यार्थत्वाद्दतः दतेत्यादौ भसंज्ञाप्रयुक्तकार्याभावेन तस्याप्रवृत्तौ पूर्वसूत्रेण पदसंज्ञायां जश्त्वापत्तिरत आह । **भसंज्ञेति** । **भाष्यप्रामाण्यादिति** । तत्र हि चेतस्वानित्यत्र ड्मतुपि टिलोपे स्वादिष्विति पदत्वाद्रुत्वमाशङ्क्य भत्वेन समाहितम् । तत्र च भसंज्ञाया रुत्वप्रतिबन्धातिरिक्तं न किञ्चित्कार्यमस्ति । एवं च दत इत्यादौ पदत्वप्रतिबन्धद्वारा जश्त्वाभावसम्पादनाय भसंज्ञा प्रवर्तत एवेति न दोष इति भावः ॥

**आकडारा** ॥ 'प्राक्कडारात्' इति नावधिः, तत्पुरुषो द्विगुश्चेति लिङ्गात्, समावेशार्थं हि तदित्याह–कडारा इत्यादि व्याप्त्यर्थकाऽङा 'आचार्यात्' इति वक्तुं युक्तम् । एकैवेति । संख्यावाच्येकशब्दोपादानादवधारणं संपद्यत इति भावः । या परेति । द्वयोः सावकाशयोः परा । निरवकाशत्वे तु सैवेत्यर्थः । आभ्यामेव बाध-

---

**युक्तमिति** । तदुत्तरं संज्ञाविधायकानामभावेन मर्यादार्थकाङा आकडारादित्युक्तेरनुपयोगादिति भावः । यद्यपि यथाश्रुतन्यासापेक्षयाऽत्र न्यासे मात्रालाघवस्य सत्त्वेऽपि पदगौरवमस्त्येवेति नानयोर्विशेषः, तथापि यथान्यासे कडाराः कर्मधारय इत्यस्यैवावधित्वं नान्यस्येत्यत्रार्थे मानान्तरानुसन्धानं कार्यमत्र न्यासे तु तन्नेति लाघवमित्याशयः । **अवधारणं सम्पद्यत इति** । यदि संज्ञाद्वयप्रवृत्तावप्येकत्वस्य प्रत्येकवृत्तितया एका संज्ञा जातैवेत्युच्यते, तदा तदुपादानं व्यर्थं स्यादतस्तदुपादानेनाऽवधारणलाभ इति भावः ॥

यत्त्वत्राचार्याः । वस्तुतस्तु दीक्षितो नव्यश्च द्वावपि स्थूलदृश्वानौ । केवलार्थकैकशब्दस्यैवात्र ग्रहणात् । कैवल्यं हि सजातीयसंज्ञान्तराऽसमानाधिकृतत्वम् । एकाकी तिष्ठतीत्यादौ तथा प्रतीतेरित्याहुः । तन्न । अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् । अन्यत्र संज्ञासमावेशादेतस्मात्कारणादाकडारादपि संज्ञानां समावेशः प्राप्नोति । इष्यते चैकैव संज्ञा स्यादिति तच्चान्तरेण यत्नं न सिद्ध्यतीति नियमार्थं सूत्रमिति प्रकृतसूत्रस्थभाष्येणात्रैकशब्दस्य संख्यावाचकत्वस्यैव लाभात् ॥

**परेति** । धनुषा विध्यतीत्यत्र परत्वादपादानसंज्ञां बाधित्वा करणसंज्ञा भवतीति भावः । **निरवकाशत्व इति** । यथा पदसंज्ञाबाधिका भसंज्ञा । ननु परत्वानवकाशत्वाभ्यामेव बाधसिद्धावेतत्सूत्रं व्यर्थमित्याशङ्क्याह । **आभ्या-**

सिद्धिस्तु न । अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाभावाद् विप्रतिषेधाप्रवृत्तेः । लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषयेऽदर्शनेन शास्त्रेऽपि संज्ञाविषयेऽप्रवृत्तेश्च । तेनेति । अनवकाशत्वेनेत्यर्थः । परोदाहरणं तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' इत्याद्याकरे स्पष्टम् । विरो-

---

मेवेति । परत्वानवकाशत्वाभ्यामेवेत्यर्थः । अन्यत्र = आकडारीयसंज्ञाभिन्ने । अदर्शनेनेति । लोके ग्रामवाराणसीसंज्ञयोः कृष्णवृष्ण्यादिसंज्ञयोश्च बाध्यबाधकभावादर्शनेनेत्यर्थः । सूत्रारम्भेऽप्येकेत्युक्तेः परैव कुतस्स्यादित्याशङ्कयाह । विरोधाद्यभावेनेति ॥

अयम्भावः । एकस्य स्थानिनः कार्यद्वययोगकृतासम्भवरूपे केवलासम्भवरूपे च विप्रतिषेधे विप्रतिषेधशास्त्रस्य प्रवृत्तिः । यथा वृक्षेभ्य इत्यत्र दीर्घैत्वयोश्शिष्टादित्यादौ तातङ्शाभावयोश्च युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । संज्ञयोस्त्वाकडारसूत्रारम्भेऽपि तादृशविरोधाभावेन न तद्विषये विप्रतिषेधशास्त्रस्य प्रवृत्तिः, किन्तु संज्ञयोरनेन सहानवस्थाने बोधिते का वा संज्ञा प्रवर्तत इति व्यवस्थाकाङ्क्षायां विरोधसद्भावे वृक्षेभ्य इत्यादौ परत्वादेर्बलवत्त्वस्य दृष्टतया तेनैवाकडारीयेष्वपि व्यवस्था इति । यद्वा असतो विरोधस्य शास्त्रसहस्रेणाऽपि बोधयितुमशक्यतयाऽस्य सूत्रस्य विरोधातिदेशतात्पर्यकत्वस्य वक्तव्यतया वास्तविकविरोध एव विप्रतिषेधादिशास्त्रप्रवृत्तिरित्याशयेनाऽयं ग्रन्थः प्रवृत्त इत्यपि वक्तुं शक्यम् । यदि त्वविशेषात्सहानवस्थानलक्षणे आतिदेशिकेऽपि वा विरोधे विप्रतिषेधशास्त्रस्य प्रवृत्तिरित्यभ्युपेयते, तदाऽनेन सूत्रेणाऽकडारीयसंज्ञानां तादृशविरोधस्य बोधितत्वेन तेनैव सूत्रारम्भे व्यवस्था । अत एवोद्योते अरुचिबोधककेचित्त्वित्यादिनाऽयमर्थः प्रतिपादित इत्यवधेयम् ॥

एतेन चिन्त्यमिदम् । आकडारादेका संज्ञेत्यनेन निरुक्तसमानोद्देश्यता-

**धाद्यभावेन विप्रतिषेधसूत्राद्यप्रवृत्तावपि परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था । अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः पर्यायापत्तिर्दोषः । भपदसंज्ञयोः समावेशे तु राज्ञ**

---

वच्छेदककसंज्ञान्तरसामानाधिकरण्याभावस्य निरुक्तसमानोद्देश्यतावच्छेदकक-संज्ञायां बोधनेन विप्रतिषेधस्य सत्त्वेन विप्रतिषेधशास्त्रप्रवृत्तौ बाधकाभावादिति वाराणसेयोक्तमपास्तम् ॥

**पर्यायापत्तिरिति** । यथा दिवः कर्म चेत्यत्र चशब्देन कर्मत्वकरण-त्वयोस्समावेशेऽक्षान्दीव्यतीत्यत्र तत्कार्ययोर्द्वितीयातृतीययोः पर्यायेण प्रवृत्तिः, एवमाकडारसूत्राभावे धनुषा विध्यतीत्यत्र करणत्वापादानत्वयोस्समावेशे तत्का-र्ययोस्तृतीयापञ्चम्योः पर्यायापत्तिरिति भावः ॥

नन्विदमयुक्तम् । दिवः कर्म चेत्यत्र चशब्देन संज्ञयोस्समावेशेऽपि तत्का-र्ययोर्विप्रतिषेधेन परत्वात्तृतीयाया एव प्रवृत्तेर्ग्रन्थकृता कारकप्रकरणे वक्ष्यमाण-त्वेनात्रापि तद्रीत्या संज्ञयोस्समावेशेऽपि तत्कार्ययोर्विप्रतिषेधेन परत्वात्पञ्चम्या एवाऽऽपादयितुं युक्तत्वादिति चेन्न । 'दिवः कर्म चे'त्यनेन विहितकर्मसंज्ञाया अक्षै-र्देवयत इत्यत्राणावकर्मकादिति परस्मैपदाभावसम्पादनेनाऽक्षैर्दीव्यते देवदत्ते-नेत्यत्र भावे लकाराभावसम्पादनेनाऽक्षाणां देवितेत्यत्र कर्तृकर्मणोरिति षष्ठी-सम्पादनेन च कृतार्थत्वादक्षैर्दीव्यतीत्यत्र परया तृतीयया द्वितीयाबाधेऽपि धनुषा विध्यतीत्यत्र करणत्वापादानत्वयोस्तथा फलान्तराभावेन तयोस्तत्तच्छ-क्त्योरुद्भूतत्वेन भानानियामकत्वस्यैव वाच्यतया द्वयोरपि तयोर्युगपदुद्भूतत्वेन भानासम्भवात्पर्यायेण तथा भाने पर्यायेण विभक्तिद्वयापत्तेर्दुर्वारत्वात् । कारक-संज्ञानां फलान्तराभावे तत्तच्छक्त्योरुद्भूतत्वेन भानानियामकत्वस्यैवाऽऽश्रयणी-यत्वात् । तत्तद्विभक्तिवाच्यसम्बन्धघटकतया भानमेव हि तत्तच्छक्त्योरुद्भू-तत्वेन भानमिति प्रकृते विभक्तिद्वयस्य पर्यायापत्तिः सुवचैवेत्यवधेयम् ।

**किञ्च कर्मसंज्ञापादानसंज्ञयोस्समावेशे गां दोग्धि पय इत्यत्र द्वितीयां**

**इत्यादौ नलोपस्यापत्तिर्बोध्या । न च राजन्य इत्यादौ 'सुप्तिङन्तम्' इति पदत्वं दुर्वारम् । परया भसञ्ज्ञया तु न बाधस्तस्या अन्तरङ्गत्वादिति वाच्यम् । समानावधिकाया अन्तरङ्गाया अप्यनया बाध्यसामान्यचिन्तयाऽपवादत्वेनैव बाधादित्याहुः । आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यदद्र्यङ्शब्दे निरूपयिष्यते ।**

---

बाधित्वा परत्वात्पञ्चमी, गवां दोह इत्यत्र पञ्चमीं बाधित्वा परत्वात्कृद्योगलक्षणा षष्ठी च स्यादिति तदाशयः । यद्यपि गवां दोह इत्यत्र षष्ठ्या इष्टत्वेन न तदापत्तिर्वक्तुं शक्या, तथाप्यश्वैर्देवयत इत्यत्रेव षष्ठ्या शक्तिद्वयबोधापत्तिरिति बोध्यम् । किंच दुहादीनां व्यापारद्वयार्थकत्वे गां दोग्धि पय इत्यत्र कर्मसंज्ञापादानसंज्ञयोस्समावेशे तत्कार्ययोस्सुप्तिङ्विभक्त्योः पर्यायापत्तिः । गां दोग्धीत्यत्र पञ्चम्याः गौर्दुह्यते पय इत्यत्र कर्मणि लकारस्य च पर्यायेण प्रयोगापत्तिरित्यपि बोध्यम् । एतेन विप्रतिषेधे परमिति परकार्यस्यैव प्रवृत्तेरिदमयुक्तमिति वदन्त आचार्यादयः परास्ताः ॥

**न लोपाद्यापत्तिरिति** । सर्वथा निरवकाशत्वादल्लोपे जात इति भावः । **अन्तरङ्गत्वादिति** । पूर्वोपस्थितनिमित्तकत्वेनेति भावः । **बाध्यसामान्यचिन्तयेति** । अत्र च सिति चेति सूत्रं मानम् । तद्धि भवदीय इत्यादौ पदत्वार्थम् । अन्तरङ्गत्वात्सुप्तिङन्तमिति पदत्वे तु तद्वैयर्थ्यं स्पष्टमेव । प्रकृत्या के राजन्य इति सौत्रनिर्देशश्चाऽत्र मानं बोध्यम् । ननु कार्यकालपक्षे संज्ञाशास्त्राणां विधिप्रदेशेष्वेव वाक्यार्थबोधेन तत्रत्यपरत्वस्यैव बाधप्रयोजकत्वेन तृतीयादिविध्युपस्थितकरणसंज्ञापेक्षया पञ्चमीप्रदेशोपस्थितापादानसंज्ञाया एव परत्वाद्धनुषा विध्यतीत्यत्राऽपादानसंज्ञाबाधकत्वं करणसंज्ञाया न स्यात् । एवमल्लोपोऽन इत्याद्येकवाक्यतापन्नभसंज्ञया नलोपाद्येकवाक्यतापन्नपदसंज्ञायाः परत्वादसिद्धत्वाच्च बाधो न स्यादत आह । **आकडारस्थेति** । **यथोद्देशपक्ष एवेति** । अपादानमुत्तराणि कारकाणि बाधन्त इत्याकडारसूत्रस्थं भाष्यमेवाऽत्र मानं बोध्यम् । इदं

भपदसञ्ज्ञाविधावङ्गप्रकरणे भस्येत्यस्य पाठेनाङ्गमित्यनुवर्त्याङ्गं सत् पदं भवति, भं भवतीत्यर्थेन ताभ्यां तस्य समावेश एव, न पर्याय इति बोद्धव्यम्। पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि 'णलुत्तमो वा' इति ज्ञापकात्समावेशः। गुरुलघुसञ्ज्ञे वर्णस्य, नदीघिसञ्ज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशतः। उभे अपि वर्णस्येति पक्ष आकरे उपलभ्यमानोऽप्येकदेशिन एव, समावेशानुपपादनादिति दिक्। यलोप इति। 'हलि सर्वेषाम्' इत्यनेनेत्यर्थः॥

अल्लोपोऽनः॥ तपरकरणं किम्। अनितेः क्विपि आन इत्यादौ

---

च प्रगृह्यसंज्ञासूत्रस्थभाष्यप्रामाण्यात्संज्ञाशास्त्राणां कार्यकालपक्षे विधिदेशीयत्वमित्याशयेन। वस्तुतस्तत्रापि तासां विधिदेशीयत्वाभावस्य नागेशाभिप्रेतत्वेनाकडारीयसंज्ञासु कार्यकालत्वेऽपि न दोष इत्यन्यत्र निरूपितं गुरुचरणैरिति बोध्यम्। नन्वेवमेवाऽङ्गसंज्ञया भपदसंज्ञयोरपि समावेशो न स्यादित्यत आह। भपदसंज्ञाविधाविति। अस्याऽङ्गमित्यनुवर्त्येत्यनेनाऽन्वयः। एतेनाऽङ्गाधिकारे भस्येत्यस्य पाठेनाऽङ्गसंज्ञया भपदसंज्ञयोः पर्यायो भवतीत्यपास्तम्। एवमन्यत्राऽपि समावेशप्रकारमुपपादयति। पुरुषसंज्ञेति। ज्ञापकादिति। यदि पुरुषसंज्ञा परस्मैपदसंज्ञाया बाधिका स्यात्तदा परस्मैपदसंज्ञायास्तदविषये शत्रादावेव प्रवृत्त्या तत्रैव णलादेशे तत्र च स्थानिवद्भावेनोत्तमत्वाभावात्तदसङ्गतं सत्तयोस्समावेशं ज्ञापयतीति भावः। सिचि वृद्धिरित्यप्यत्राऽर्थे ज्ञापकं बोध्यम्। भिन्नावधिकत्वादिति। आकडारसूत्रेण समानावधिकयोरेव संज्ञयोस्सहानवस्थानबोधनेनाऽनयोर्भिन्नावधिकत्वात्समावेश इति भावः। तत्र नदीगुरुसंज्ञयोस्समावेशेन गार्गीबन्धुरित्यत्र नदी बन्धुनीति पूर्वपदान्तोदात्तत्वं गुरोरिति प्लुतश्च सिद्ध्यति। घिलघुसंज्ञयोस्समावेशेन च विश्व नाच विनरावित्यत्र द्वन्द्वे घीति पूर्वनिपातः। वित्रोभावः वैत्रमित्यत्रेगन्ताच्च लघुपूर्वादित्यण्प्रत्ययश्च सिद्ध्यति। स्पष्टञ्चेदमत्रैव भाष्ये। उभे अपीति। नदीघिसंज्ञ इत्यर्थः। एतत्पक्षस्यैकदेश्युक्तित्वे बीजं दर्शयति। समावेशानुपपादनादिति॥

**लोपाभावाय । अन्त्वं त्वत्रैकदेशविकृतन्यायेनेत्यन्यत्र विस्तरः । पूर्वस्मादिति । अचः परस्मिन्नित्यत्र 'पूर्वविधौ' इत्यस्यावृत्त्या पञ्चमी-समासाश्रयणादयमर्थो लभ्यते इति भावः। तेन प्रत्यैषिषन्नित्यादि-**

---

यत्त्विदमयुक्तम् । इशब्दस्य तदन्तसंज्ञापक्षेऽपि समानावधिकया लघु-संज्ञया परत्वाद्बाधेन घित्वानापत्तेः । घिसंज्ञा तु हरिशब्दे चरितार्था । तत्र भिन्नावधिकत्वेन द्वयोस्समावेशात् । अस्य स्त्री ईत्यत्र गुरुसंज्ञया बाधेन नदीत्वा-नापत्तेश्च । तस्मादेराजित्यादिनिर्देशैस्समावेशो भवता वाच्यः । स च समो वर्णसंज्ञा-पक्षेऽपि । तदा हि वेतस्वानित्यादौ भसंज्ञाया इवाऽदीदपादित्यादावभ्यासेकारस्य घिसंज्ञायां दीर्घो लघोरित्यस्य वैयर्थ्यापत्त्या तद्बलेन तयोस्समावेशकल्पनादित्या-चार्यास्तन्न । पक्षयोर्लक्ष्यानुरोधेन व्यवस्थितत्वादत्र यथोद्देशत्वस्यैवाऽऽश्रयणेनास्य स्त्री ई अस्याऽपत्यमिरित्यादावकारलोपात्प्रागेव भविष्यति किञ्चिदनेन प्रयोजन-मित्यभिसन्धिमात्रेण तदन्तसंज्ञापक्षे भिन्नावधिकत्वेनाऽविरुद्धयोर्गुरुलघुसंज्ञयोर्न-दीघिसंज्ञयोश्च युगपत्प्रवृत्तावकारलोपोत्तरमप्येकदेशविकृतन्यायेन तयोस्समावे-शस्य ज्ञापकान्तरं विनाऽपि सुवचत्वात् । वर्णवाचकयोस्तु तयोः कारप्रत्ययस्य प्रवृत्त्या न तयोस्संज्ञयोर्विषयता । बाहुलकत्वेन कारप्रत्ययस्याऽप्रवृत्तिमाश्रित्य दोषकथनं त्वयुक्तम् । यदि तु शम्भुवाचकोशब्दवत् स्वतन्त्रोपीशब्द अस्ती-त्याचार्याणामाशय इत्युच्यते, तदाऽपि अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोस्सिद्ध-मिति वार्तिकमतरीत्या यथाकथञ्चित्समानावधिकत्वसम्पादनेऽपि सूत्रभाष्यमत-योस्तदन्तत्वादेस्समुदायवृत्तिधर्मतया बौद्धसमुदायतदेकदेशयोरेव घिलघुसंज्ञयो-रवधित्वेन भिन्नावधिकत्वस्य सूपपादत्वात् ॥

**एकदेशविकृतन्यायेनेति** । स्थानिवद्भावेनेत्यर्थः । लौकिकस्यैकदेश-विकृतन्यायस्य तु नाऽत्र प्रवृत्तिः, अर्थाधिकविकारात् । पञ्चमीसमासस्या-ऽसाधारणं फलन्दर्शयति । **तेनेति** । **प्रत्यैषिषन्निति** । प्रतिपूर्वादिणस्सन्नन्ता-

सिद्धिः। अन्यथा जुस् स्यात्। अत एव 'उभे अभ्यस्तम्' इति सूत्रे उभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थम्, ऐत्सन् इत्यत्राभ्यस्तलक्षणो जुस् मा भूदित्युक्ते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं सहार्थमित्युक्तम्। तेन उभे यत्र श्रूयेते इत्यर्थेऽपि प्रत्यैषिषमिति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं सहार्थमिति तद्भावः॥

इति पक्षे त्विति। तुनाऽस्यानित्यत्वं सूचितम्। प्रविगण्य्येति भाष्योदाहरणमपि तदनित्यत्वे एव सङ्गच्छते। अत एव हे गौरित्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः। पूर्वस्मान्निमित्तत्वेनाऽश्रितादिति व्याख्याने तु न मानम्॥

(केचित्तु पूर्वस्मादव्यवहितपरस्यैव कार्ये स्थानिवत्त्वम्।

---

लुङि रूपम्। वीगतीत्यत्र प्रश्लिष्टेकारात्मकधातोस्सन्नन्तस्येदं रूपमिति मिश्रोक्तन्तु न युक्तम्। प्रसिद्धेनैव धातुना तद्रूपसिद्धौ तत्पर्यन्तानुधावनस्यानावश्यकत्वात्। पञ्चमीसमासाश्रयणे मानं दर्शयति। अत एवेति। इति पक्षे त्वित्यनेन पञ्चमीसमासस्य पाक्षिकतां ध्वनयतीति मनोरमोक्तमयुक्तमिति सूचयन्नाह। तुनेत्यादिना। भाष्योदाहरणमपीति। अपिना निष्ठायां सेटीति सूत्रे सेट्ग्रहणस्य सङ्ग्रहः। तद्धि नानिड्व्यावृत्त्यर्थम्। णिजन्तात्तदसम्भवात्। किन्तु योगविभागेन कालावधारणार्थमिटि कृते एव णिलोपो, न तु ततः प्रागिति। अन्यथा कारितमित्यादौ परमपीटं बाधित्वा नित्यत्वाण्णिलोपे एकाच इति इण्णिषेधस्स्यादिति। पञ्चमीसमासस्य नित्यत्वे हि पूर्वं णिलोपेऽपि तस्य स्थानिवद्भावेन णिचा व्यवधानादिण्णिषेधाप्रवृत्तौ तद्वैयर्थ्यं स्पष्टमेव। वस्तुतोऽस्यानित्यत्वाश्रयणमपि न भाष्याभिप्रेतमित्याशयेनाह। केचित्त्विति।

**प्रविगणय्येत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति तदनित्यत्वे न मानमित्याहुः ) ॥**

---

भाष्यानुसारिण इत्यर्थः । भाष्यानुक्तत्वात्तदनित्यत्वाभावेऽपि पूर्वस्मात्परस्याऽव्यवहितस्यैव ग्रहणेन हे गौरित्यत्रादोष इत्यादि न धातुलोप इति सूत्रस्थोद्योतेनानित्यत्वाभावस्यैव नागेशाभिप्रेतत्वप्रतीतेः । न चानित्यत्वाऽनङ्गीकारे प्रविगणय्येत्यादिभाष्योदाहरणासङ्गतिरिति वाच्यम् । वर्णग्रहणे जातिग्रहणमिति न्यायेन स्थानिवद्भावलब्धमकारं णकारं च लघुपूर्वत्वेनाश्रित्य ततः परत्वेन णेरयादेशस्य सुकरत्वात् । न च तत्र वर्णग्रहणाभावः । अवध्यवधिमतोस्साजात्यनियमेन पूर्वशब्देन वर्णस्यैव ग्रहणसम्भवात् । अत एव 'लघुपूर्वो यो वर्ण' इति व्याख्यातं दीक्षितेन । न चैवं प्रतिचिकीर्ष्येत्यादावपि चकारोत्तरवर्तिनमिकारमादायायादेशापत्तिरिति वाच्यम् । जातिग्रहणेन वर्णद्वयस्यैव ग्रहणं, न तु त्र्यादीनामित्यङ्गीकारेणाऽदोषात् । अत एव दम्भ इच्चेत्यनेनेत्त्वविधानं सार्थकम् । अन्यथा सनिमीमेतिसूत्रानन्तरं, 'दम्भ ईश्च, आप्ज्ञपृधामिति न्यासेन दम्भेरिसीसोर्विधानेन सादीनां त्रयाणां हल्पदेन ग्रहणे सनो हलन्ताच्चेति कित्त्वस्य सुलभतया नलोपे संयोगादिलोपे च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । स्पष्टं चेदमुद्योते । अत्र परेत्विति वक्तव्ये केचिदित्युक्तिस्तु प्रविगणय्येति लक्ष्यसाधनाय व्यपदेशिवद्भावाश्रयणं केषांचिदसङ्गतमिति द्योतनाय । तथा सति तुल्यन्यायेन प्रतिचिकीर्ष्येत्यादावप्ययादेशापत्तेः। एवञ्चानित्यत्वाभावांशस्तु नागेशसम्मत इत्येव सुधीभिर्विभावनीयम् ॥

एतेन केचित्त्वित्याद्याहुरित्यन्तोऽपपाठः । स्थानिवद्भावलब्धाकारस्यैव प्रविगणय्येत्यादौ व्यपदेशिवद्भावेन लघुपूर्वत्वस्वीकारे प्रतिचिकीर्ष्येत्यादावप्ययादेशापत्तेरित्याचार्योक्तं, दिधिषूशब्दादाचक्षाणण्यन्तात् क्त्वाप्रत्यये प्रशब्देन समासे ल्यप्ययादेशसम्पत्तयेऽनित्यत्वाश्रयणमावश्यकमिति मिश्रोक्तं चापास्तम् ॥

पूर्वत्रासिद्धे नेति । अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानां त्रिपाद्यां प्रवृत्तिबोधनम् । अत एव अमी, क्षीरपेणेत्यादौ मीत्वणत्वे भवतः । अत्रैकारस्यादस्सम्बन्धित्वं, पे इत्यस्यैकाजुत्तरपदत्वञ्चा-न्तवद्भावाधीनम् । तस्य दोष इति । इदं वाचनिकमेव । 'न मु ने' इति सूत्रे 'न' इति योगविभागस्तु भाष्ये न दृश्यते । अत एव सिद्धकाण्डं वार्त्तिककृताऽऽरब्धं, 'नलोपः सुप्' इति सूत्रञ्च सूत्रकृता ।

प्रकारार्थमिति । प्रकारः सादृश्यं, तच्च सुप्त्वेन । मांस्पचनी-त्यादावपि 'न लुमता' इतिनिषेधानित्यत्वाच्छसादिपरत्वं बोद्ध्यम् । शब्दत्वेन सादृश्यमित्यन्ये । तन्न । 'वा शोकष्यञ्रोगेषु' इत्यस्य वैयर्थ्यापत्तेः, 'नासिकाया यत्तस्क्षुद्रेषु नस्' इति भाष्यपठित-वार्त्तिकस्य वैयर्थ्यापत्तेश्च । 'आसन्यं प्राणमूचुः' इत्यत्रापि

---

तत्फलमिति । अनुवादफलमित्यर्थः । ननु तस्य दोष इत्यस्यापि न मुन इति सूत्रक्लृप्तयोगविभागलब्धार्थानुवादकत्वे सम्भवति वाचनिकत्वा-श्रयणमनावश्यकमेवेत्याशङ्कायामाह । न मुन इति । अत एव=योगवि-भागस्याऽसत्त्वादेव । वैयर्थ्यापत्तेरिति । न च सुप्त्वेन सादृश्यग्रहणेऽपि न लुमतेति निषेधस्यानित्यत्वेन मांस्पचनीत्यादेरिव हृच्छोक इत्यादेरपि सूत्रे-णैव सिद्धौ वा शोकेति वार्तिकवैयर्थ्यं तदवस्थमेवेति वाच्यम् । अगतिकलक्ष्य-साधनाय स्वीकृतमनित्यत्वमाश्रित्य वचनवैयर्थ्यापादनस्यायुक्तत्वात् ॥

एतेन न लुमतेति निषेधानित्यत्वेन सुप्परत्वमादाय त्वन्मतेऽपि सूत्रेण सिद्धिसम्भवादिदमयुक्तमित्याचार्योक्तमपास्तम् ॥

वैयर्थ्यापत्तेश्चेति । नासिकाया इत्येतत्पदघटितवार्तिकस्य वैयर्थ्या-

**तद्वदेव शसादिपरत्वम्। अत्र 'सुप्रभृतिषु' इति वाच्ये 'शस्प्रभृतिषु' इत्युक्त्वाऽन्यत्र क्वचिदेव प्रवृत्तिर्बोध्यते । अत एव पद्दन्निशां ग्रहणं चारितार्थम् । तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतयासुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यं स्पष्टमेव । प्रकारार्थत्वे प्रमाणमाह–भाष्ये**

---

पत्तेरित्यर्थः । अयं भावः । नासिकाया इति स्थानिनिर्देशघटितं तद्वार्तिकं यदादिषु नसित्यस्यादेशत्वसम्पादनेन नासिकाक्षुद्र इत्यादिप्रयोगवारणाय कृतम् । यदि पद्दन्नितिसूत्रे शब्दत्वेन सादृश्यं गृह्यते, तदा नासिकाया इति पदं विहाय प्रकृत्यन्तरत्वाश्रयणेऽपि पद्दन्नित्येव सिद्धे एतद्वार्तिकारम्भसामर्थ्याद्य-त्तस्क्षुद्रेषु नश्शब्दस्यैव प्रयोगो न तु नासिकाशब्दस्येत्यर्थलाभेन नासिकाक्षुद्र इत्यादिप्रयोगवारणसम्भवे तद्वारणाय नासिकाया इति पदघटितं वार्तिकं व्यर्थमिति । एतेनेदमप्ययुक्तम । नासिकाशब्दप्रयोगाभावाय तदावश्यकत्वा-दित्याचार्योक्तमपास्तम् । **तद्वदेवेति** । उक्तस्थल इव न लुमतेतिनिषेधस्या-नित्यत्वादेवेत्यर्थः । ननु सुप्त्वेनैव सादृश्यग्रहणस्येष्टत्वे सुप्प्रभृतिष्विति स्वा-दिष्वित्येव वा वदेत्, न तु शस्प्रभृतिष्वित्यत आह । **अत्रेत्यादि** । **अन्यत्रेति** । सर्वनामस्थानेष्वित्यर्थः । **अत एव** = सर्वनामस्थानेषु प्रयोगस्य क्काचित्कत्वादेव। **तद्वैयर्थ्यमिति**। न च सुप्येव पदादीनां प्रयोग इति व्यवस्थार्थं तच्चरितार्थम् । अत एव णिच्याचारक्विपि च पादशब्दस्यैव प्रयोगो न तु पच्छब्दस्येति वाच्यम् । प्रकृत्येकाजिति सूत्रप्रत्याख्यानपरभाष्यप्रामाण्येन नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन चैकाच्प्रातिपदिकेभ्यो णिचः, आचारक्विपश्चा-नभिधानेन तत्र पदादीनां प्रयोगवारणाय तदनावश्यकत्वात् ॥

एतेन पादयतीत्यादौ पद्भाववारणाय सुप्येव पदादय इति व्यवस्थार्थं तच्चारितार्थ्यादयुक्तमेवैतदित्याचार्योक्तमपास्तम् ॥

इति । तत्र हि 'शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृतिष्वपि दृश्यते, शलादोषणी ककुद्दोषणी याचते महादेवः' इत्युक्तम् । आद्यस्याभ्रिगुप्रैषे पठ्यमानस्य शलाकाकारे दोषणी इत्यर्थः । छान्दसः कादिलोपः । एतेन दोष इत्यकारान्तस्य दूषणवाचिनो दोषन्नादेश इत्यपास्तम् । तेन पदङ्घ्रिरिति । न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक्पदादिवचनं तत्र व्यर्थम् । न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानसमर्थादेशस्याप्यर्थबोधनात् । अत एव नसाद्यादेशानां कोशेऽनुपन्यास इति वाच्यम् । पदादीनां भाष्यरीत्याऽनादेशत्वात् । तत्त्वेपि 'तृज्वत्क्रोष्टुः' इतिवद्व्यवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्यावश्यकत्वात् । स्पष्टं चेदं 'वा शोक' इति सूत्रे मूले । कोशे शब्दा अर्थपरा एव । शक्तिग्रहस्तु पदत्वहे-

---

प्रकृत्यन्तरत्वपक्षेऽपि प्रभृतिग्रहणस्य प्रकारार्थत्वमावश्यकमेवेत्याह । तत्त्वेपीति । अनादेशत्वेपीत्यर्थः । अस्य = पद्दन्नित्यस्य । ननु कोशस्थपदादीनां लोकप्रसिद्धशब्दानुकरणत्वेन शब्दपरत्वात्तेष्वभिव्यक्तपदार्था ये इति न्यायेन पदाद्यादेशाप्राप्त्या पदंघ्रिश्चरणोऽस्त्रियामित्यादेः प्रकारार्थत्वप्रयोजनत्वोक्तिरसङ्गतेत्यत आह । कोशे शब्दा इति । अनेकपर्यायाणां स्वरूपबोधनपूर्वकमेकार्थत्वबोधनतात्पर्यके समानाधिकरणपदघटिते पदंघ्रिरित्यादिरूपे कोशे विद्यमानाश्शब्दा इत्यर्थः ॥

एतेन दिगिति प्रतीकमुपादायान्ये तु कोशे शब्दानामर्थपरत्वं न सम्भवति 'विधुर्विष्णौ चन्द्रमसी'त्यादावर्थपरत्वासम्भवात् । सर्वत्र शब्दपरत्वमपि न । 'सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुद' इत्यत्र शब्दपरत्वासम्भवादित्यौत्तराहोक्तमपास्तम् । अस्य ग्रन्थस्य निरुक्तकोशविषयकत्वात् ॥

तुकानुमानेन सामान्यत एव । एवञ्च 'विष्णुर्नारायण' इत्यादौ विष्णुपदार्थाभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे विस्तरेण निरूपितम् । 'एतत्पदममुकवाचकम्' इति शक्तिग्रहस्तु स्वस्वप्रसिद्धमादाय तत्तत्पुरुषस्यानियतः पश्चान्म-

---

अर्थपरा इति । अर्थविशिष्टशब्दपरा इत्यर्थः । न त्वनुकरणानीति भावः । ननु तत्तदर्थे शक्तिग्रहस्य कोशाधीनत्वादन्यत्रार्थपरत्वेऽपि तद्घटकपदानामर्थपरत्वमनुपपन्नं, तत्र तदज्ञानादत आह । शक्तिग्रहस्त्विति । अनुमानेनेति । इदं पदं क्वचिच्छक्तम् । पदत्वाद्घटपदवदित्यनुमानेनेत्यर्थः । समान्यत एवेति । पदप्रकारक इति शेषः । अत एव विष्णुर्नारायण इत्यादौ सामानाधिकरण्येनान्वयस्सङ्गच्छते । अन्यथा घटो घट इत्यादाविव तन्न स्यादिति भावः । तदेतदाह । एवं चेति । पदत्वहेतुकानुमानेन तत्पदवाच्यः कश्चिदर्थोऽस्तीत्येवंरूपेण सामान्यतः पदप्रकारके शक्तिग्रहे वृत्ते इत्यर्थः ॥

यत्त्विदं विष्णुपदं नारायणत्वावच्छिन्नार्थनिरूपितशक्तिमत् । नारायणपदघटितप्रघट्टकघटकत्वादित्यनुमानेनेत्यर्थः । अगृहीतशक्तिकपदघटितप्रघट्टकघटकेषु कोशाच्छक्तिग्रहो न भवति । पदत्वहेतुकानुमानेनार्थबोधकत्वग्रहस्तु अर्थत्वप्रकारकार्थविशेष्यकबोधमेव जनयति, न तु स्वरूपतश्शक्यतावच्छेदकधर्मप्रकारकबोधमिति पदत्वहेतुकानुमानं विफलमेव । अर्थत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य अर्थत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य च सत्त्वेपि स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य स्वरूपतो हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य चाभावेनादेशाप्राप्त्या कौमुद्यसङ्गत्यापत्तेस्तादवस्थ्यात् । तस्मात्पूर्वोक्तानुमानेन पर्यायघटितप्रघट्टकघटकपदशक्तिग्रहवतः पुरुषस्य स्वरूपतस्तत्तद्धर्मप्रकारकशक्तिज्ञानं जायत इति सर्वं समञ्जसमित्यौत्तराहास्तन्न । अगृहीतशक्तिकपदघटितप्रघट्टकघटकेष्वपि

नसैव। 'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानि' इत्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषा-मर्था इति बोधः। अत एव 'नामन्त्रिते समानाधिकरणे' इति-सूत्रभाष्ये सामान्यवचनमित्यस्य इदं प्रत्युदाहरणं दत्तम्। अन्यथै-कार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव। एकशेषस्तु न। तथा सति तत्तच्छब्दस्वरूपस्य सम्यग् बोधानापत्तेः।

---

वनौषधवर्गादौ विद्यमानेषु पदेषु क्वचिद्वृक्षाविशेषे शक्तमिदं पदमित्येवं रूपेण सामान्यतश्शक्तिग्रहस्य सर्वैरनुभूयमानतया तादृशपदेभ्यश्शक्तिग्रह एव न भवतीति कथनस्यायुक्तत्वात्। पदत्वहेतुकानुमानस्य वैफल्यकथनमपि न युक्तम्। अभेदान्वयबोधसिद्धये तस्यावश्यकत्वात्। कोशे विशिष्य बोधाभावे विशिष्य चरणत्वादिना बोधतात्पर्येणोच्चरितपादादिशब्दस्यैव पदाद्यादेशविधा-यकपद्दन्नितिशास्त्रप्रवृत्तौ प्रभृतिग्रहणस्य प्रकारार्थत्वफलतया पदंघ्रिरित्यादि-कोशोपन्यासपरकौमुदीग्रन्थासङ्गतिरिति तदुक्तिरप्ययुक्ता। 'अभिव्यक्तपदार्था' इति न्यायेन पद्दन्निति शास्त्रस्य चरणत्वप्रकारकचरणविशेष्यकबोधजनकपादादि-शब्देष्वेव प्रवृत्त्या तादृशबोधजनकत्वस्य कोशेऽपि प्रयोक्तुस्सत्त्वेन तत्र तत्प्रवृत्तेस्सुवचत्वात्॥

ननु पर्यायशब्दस्वरूपप्रतिपादनपरे श्रुतिविशेषे पदानां स्वरूपपरत्वस्य दृष्टतया तादृशे कोशेऽपि स्वरूपपरत्वमेव युक्तम्। न त्वर्थपरतेत्याशङ्क्य श्रुतावप्यर्थपरतैवेत्याह। अघ्न्ये इति। तेषामर्थपरत्वे मानं दर्शयति। अत एवेति। अन्यथेति। तेषां पदपरत्वे इत्यर्थः। ननु कोशस्थपदानामर्थ-परत्वे विरूपाणामपि समानार्थकानामित्यनेनैकशेषापत्तिरत आह। एकशेषस्तु नेति॥

बोधानापत्तेरिति। न चैकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपा-

**अनेकशब्दानां स्वरूपबोधनपूर्वमेकार्थबोधने कोशतात्पर्यात् । अत एव 'यत्तदेतेभ्य' इत्यादौ पाणिनिनैकशेषो न कृतः ।**

वच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षायाः कोशेऽभावेनैकशेषस्य प्राप्तिरेव नेति वाच्यम् । अप्येकदन्तहेरम्बलम्बोदरगजानना इत्यादि सर्वपर्यायद्वन्द्वस्थले सहविवक्षाया अवश्यमाश्रयणीयतया द्वन्द्वं बाधित्वा तत्र, तद्रीत्या सहविवक्षामाश्रित्य विष्णुर्नारायण इत्यादौ च, तत्प्राप्तेस्सुवचत्वात् । तथा करीरादिपदार्थानामप्रसिद्धानां मिलितानां प्रसिद्धघटपदार्थेऽन्वये घटः करीरः, कलश इत्यादौ करीरादिपदानां तत्प्राप्तेस्सुवचत्वाच्च । एतेन वस्तुतस्तु कोशे सहविवक्षाया अभावेनैवैकशेषाप्रवृत्तिरित्यौत्तराहोक्तमपास्तम् । **कोशतात्पर्यादिति** । तदुक्तं कोशकारैः 'भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः । कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृत' इति । लिङ्गभेदाख्यानाय स्वरूपभेदाख्यानाय च द्वन्द्वैकशेषसङ्करा न कृता इति तदर्थः । लिङ्गभेदाख्यानाय 'ह्रादिनी वज्रमस्त्री स्यात्कुलिशमि' त्यस्य स्थाने कुलिशह्रादिनीवज्रा इति द्वन्द्वो न कृतः । स्वरूपभेदाख्यानाय 'विष्णुर्नारायण' इत्यादावेकशेषो न कृतः । तथा पूर्वं परतश्चैकलिङ्गानां मध्ये भिन्नलिङ्गपाठरूपः सङ्करोपि न कृतः । यथा 'स्तवस्तोत्रं स्तुतिर्नुतिः' इति कृतम् । न तु स्तुतिस्स्तोत्रं स्तवो नुतिरिति कृतम् । अस्यापवादः भिन्नलिङ्गानामनुक्तानां क्रमादृत इति, भिन्नलिङ्गानामिति भिन्नस्वरूपाणामप्युपलक्षणम् । तेन समानलिङ्गानां समानस्वरूपाणां द्वन्द्वः एकशेषश्च कृत एव । यथा 'स्वर्गनाकत्रिदिवत्रिदशालयाः' इति । पादा रश्म्यंघ्रितुर्यांशा इति च । अनुक्तानामित्यनेन स्थानान्तरानिर्दिष्टानां द्वन्द्व एकशेषश्च न कृतः । अन्येषां तु कृत एव । यथा 'अप्सरोयक्षरक्षोगन्धर्वकिन्नरा' इति । मातापितरौ पितराविति च । क्रमादृत इत्यनेन यत्र क्रमो विवक्षितस्तत्र भिन्नलिङ्गानां द्वन्द्वसङ्करौ कृतावेव । यथा 'वर्गाः पृथ्वी पुर क्ष्माभृद्वनौषधिमृगादयः' इति । एवं विधे विषये एकशेषाप्रवृत्तौ सूत्रसम्मतिमाह । **अत एवेति** । तत्तच्छब्दस्वरूपस्य

एतेन कोशे शब्दानां शब्दपरता। अत एवैकशेषो न। अर्थपरत्वन्तु न सम्भवति इतः पूर्वं शक्तिग्रहाभावात्। एते शब्दा एकार्था इति बोधः। एवञ्चात्र प्रकारार्थत्वाभावेऽपि न क्षतिरित्यपास्तमिति दिक्। संख्यावि। 'सायेभ्य' इति वक्तव्ये पूर्वग्रहणमुत्तरपदे इत्यधिकृतस्य षष्ठ्यन्तत्वलाभाय। एतेन द्व्यह्नप्रिय इत्येवैतदुदाहरणमित्यपास्तम् ॥

विश्वपा इति। विश्वं पातीति विग्रहे 'आतोऽनुपसर्गे' इति प्राप्ते वाऽसरूपन्यायेन 'आतो मनिन् क्वनिब्वनिपश्च' इति चेन विच्। स चाऽदन्तेभ्यो लोकेऽपि, 'कीलालप आगतम्' इति

---

सम्यग्बोधानापत्तेरेवेत्यर्थः। एवं चेदृशे विषये एकशेषाप्रवृत्ताविदमपि सूत्रं ज्ञापकमिति भावः। प्राचीनोक्तं खण्डयति। एतेनेति ॥

षष्ठ्यन्तत्वलाभायेति। एवं च संख्यादिपूर्वस्योत्तरपदभूतस्याह्नशब्दस्याहन्नादेश इत्यर्थस्सम्पद्यते। एतेन=उत्तरपद इत्यस्य षष्ठ्यन्ततया व्याख्यानेन। सप्तम्यन्ततया व्याख्याने तु संख्यादिपूर्वस्याह्नशब्दस्योत्तरपदे परतोऽह्नादेश इत्यर्थलाभेन तदेवोदाहरणं स्यान्न तु द्व्यह्न इत्यादीति भावः। इत्यदन्ताः ॥

चेन विजिति। आतो मनिन्नित्यत्र चकारेणानुवृत्तो विजन्येभ्योऽपि दृश्यन्त इत्यनेनाऽत्र भवतीति भावः। तेनैव तु नाऽत्र विच्। तस्य छान्दसत्वात्। नन्वन्येभ्योऽपि दृश्यन्त इत्यनेनानाकारान्तेभ्य एव मनिन्नादीनां विधानलाभेनाकारान्तात्तेन विजयुक्त इत्यत आह। स चेति। अत्र वाक्येऽपिशब्दोभिन्नक्रमः। अन्येभ्योऽपीत्यनेन लोके विहितो विजादन्तेभ्योऽपि भवति। प्रयोगानुसरणार्थादृशिग्रहणादिति भावः। ईदृशार्थाङ्गीकारे प्रमाणभूतमभियुक्तप्रयोगं दर्शयति। कीलालप आगतमिति। अत्र पिबतेर्ग्रहणस्य

**विभाषा पूर्वाह्ण इति सूत्रे भाष्यप्रयोगात्। क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विब्भ्योऽनभिधानमेव। अत एव 'यू स्त्र्याख्यौ' इत्यत्र विजुक्तो भाष्ये, न तु क्विप्। अत एव शंस्था इत्यादिप्रयोगेषु भाष्यकृता ईत्वं**

---

निष्प्रत्यूहतया सिद्धान्तभूते ईत्वमवकारादाविति वार्तिकप्रत्याख्यानपक्षे क्विपीत्त्वप्रसक्त्या विजेव कार्य इति भावः। ननु यत्र दोषस्तत्र विजङ्गीकारेऽप्यत्र लुग्विकरणपरिभाषयेत्त्वाप्रसक्त्या विफला विच्कल्पनेत्यत आह। **क्विपस्त्विति।** अस्य ग्रन्थस्य मिश्रोक्तदिशा आतो मनिन्नित्यनेनैवाऽत्र विजित्याशयकत्वे तु 'स चादन्तेभ्य' इत्यत्रादन्तेभ्य इत्यस्य नैरर्थक्यापत्तिः। नन्वादन्तेभ्यः क्विपोऽनभिधाने 'धीध्यायतेर्दधातेर्वेति' भाष्यमसङ्गतं स्यादत आह। **भाष्यानुक्तेति।** अनभिधाने मानं दर्शयति। **अत एवेति।** आदन्तेभ्यः क्विपोऽनभिधानादेवेत्यर्थः। **न तु क्विबिति।** अन्यथा सार्वत्रिकत्वात्क्विपमेव वदेदित्याशयः। **अत एवेति।** आदन्तेभ्यः क्विपोऽभावादेवेत्यर्थः। **ईत्वं न कृतमिति।** यद्यपीत्त्वमवकारादाविति वाच्यमिति वार्तिकेन क्विप्यपीत्त्वं वारयितुं शक्यं, तथाऽपि तस्य प्रत्याख्यातत्वेन तन्मते क्विपीत्त्वस्य दुर्वारतया शंस्था इत्यादिप्रयोगेषु विजेव कार्य इति भावः। स्थः क चेति सूत्रस्थे चेन क्विबिति भाष्ये क्विप्पदमपि सदृशलक्षणयाऽचारक्विबन्तप्रकृतिककर्तृक्विबन्तत्वेन वा विचो बोधकमिति बोध्यम्। स्पष्टं चेदं घुमास्थेति सूत्रे उद्योते, स्थः क चेति सूत्रे शेखरे च। न च भाष्यकृता वर्णाश्रये प्रत्ययलक्षणानङ्गीकाराद्वार्तिकप्रत्याख्यानपरभाष्यमतेऽपि क्विपीत्त्वस्याऽप्राप्त्या शंस्था इति प्रयोगसाधनाय निरुक्तप्रयासो विफल एवेति वाच्यम्। धीध्यायतेर्दधातेर्वेति ध्यायतेस्संप्रसारणमिति वार्तिकव्याख्यानपरभाष्ये दधातेर्वेत्युक्त्या घुमास्थेति सूत्रे हलीत्यस्याऽनजादिपरत्वाश्रयणेनेत्त्वस्य वर्णाश्रयत्वाभावात्तत्प्राप्तेस्सुवचत्वात्। एतेन वस्तुतस्तु शंस्था इत्यत्र क्विपीत्त्वापादनं न तावद्वार्तिकमतेन। तेनेत्त्वमवकारादाविति निषेधा-

न कृतमिति केचित्। अन्ये क्विपमेवाहुः। दीर्घाच्च। चेन "इचि" इत्यनुकर्षः। "दीर्घाच्छस्यैव" इति नियमपरं 'दीर्घा-

---

रम्भात्। नाऽपि भाष्यमतेन। तेन वर्णाश्रये प्रत्ययलक्षणानङ्गीकारादित्याचार्योक्तमपास्तम्। केचिदिति। भाष्यानुयायिन इत्यर्थः। अन्ये इति। कैयटादय इत्यर्थः। आहुरिति। अत्राऽरुचिबीजं तु यू स्त्र्याख्याविति सूत्रस्थनिरुक्तभाष्यविरोध एवेति बोध्यम्। क्विपीत्त्वप्रसक्तिरेवाऽत्रारुचिबीजमिति श्रीधरोक्तं तु न युक्तम्। ईत्त्वविधायके लुग्विकरणालुग्विकरणयोरिति न्यायेन पिबतेरेव ग्रहणेनात्रेत्त्वस्याप्रसक्तेः। अन्य इत्यादिग्रन्थस्य शंस्था इत्यत्र क्विप्प्रतिपादनपरत्वं तु नातीव संदर्भानुगुणमिति प्रतिभाति॥

मिश्रास्तु आहुरिति प्रतीकमुपादायेत्त्वमवकारादाविति वार्तिकेनेत्त्वं वारयितुं शक्यमिति भावः। यद्यपि वकारादौ प्रत्यये घुमास्थेतीत्त्वं वचनेन चेन्निवार्यते, तदा वार्तिकमते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेन यूस्त्र्याख्यावित्यस्य शंस्था इत्यादिपदस्य च क्विपापि साधनं सम्भवति, तथाऽपि विचः प्रथमोपस्थितत्वात्स एवोक्त इत्याहुः। तन्न। वार्तिकप्रत्याख्यातृभाष्यनये क्विपीत्त्वस्य दुर्वारत्वात्॥

यदप्यौत्तराहाः—'परेतु ईत्त्वमवकारादाविति वाच्यमिति वसां वसापावानः पिबत। घृतं घृतपावानः पिबत इत्यादावीत्त्ववारणाय कृतं वार्तिकं भगवता पात्रान इति वनिपा साधयित्वा प्रत्याख्यातम्। विश्वपाश्शंस्था इत्यादौ वार्तिकमते ईत्त्वाप्राप्त्या भाष्यमते ईत्त्वप्राप्त्याऽरम्भप्रत्याख्यानयोः फलभेदेन प्रत्याख्यानासङ्गत्यापत्तेरीत्त्वमवकारादाविति वार्तिकस्य श्रूयमाणवकारादावीत्त्वं न भवतीत्यर्थः। तथाच विश्वपाश्शंस्था इत्यादौ न फलभेद इति। एवं च क्विपि वकारस्य श्रूयमाणत्वाभावेन निषेधाऽप्रवृत्तावीत्त्वस्य दुर्वारतया विजेव। अत्र मानं कीलालप आगतमितिभाष्यप्रयोग एव। अत एव यू स्त्र्या-

च्छसि' इत्येव तु न सूत्रितम् । दीर्घादेव शसीतिविपरीतनियमापत्तेः । प्रत्याहारेषु जातिपक्षाश्रयणादत्र प्राप्तिः । न्याय्यत्वादिति । जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः । धातोः किं हाहानिति । अव्युत्पन्नमिदम् । अस्य क्रियाशब्दत्वे तु 'सान्' इति प्रत्युदाहरणम् ॥

परे तु क्त्वः श्न इत्यादिसिद्ध्यर्थम् 'आतोऽनाप' इति वक्तव्यम्' इत्युक्ते 'आत' इति योगविभागेन तत्संसाद्ध्य तत्प्रत्याख्यातं

---

ख्यावित्यत्र विरुकथनं भाष्योक्तं सङ्गच्छते । एवं चाऽदन्तेभ्य आचारक्विबन्तेभ्यः कर्तरि क्विपि फलभेदाभावेनाऽचारक्विपोऽनभिधाने न मानमिति वदन्ति'। तदप्यसत् । लुग्विकरणालुग्विकरणयोरिति परिभाषया विश्वपाशब्दे ईत्वप्रसक्तेरेवाभावेनाऽरम्भप्रत्याख्यानयोस्तत्र फलभेदकथनस्यायुक्तत्वात् । आदन्तेभ्य आचारक्विपोनभिधानस्य केनाप्यत्रानुक्तत्वेन तत्खण्डनप्रयासस्य विफलत्वात् ॥

न सूत्रितमिति । प्रथमयोरिति सूत्रानन्तरमिति शेषः । एवं च तस्माच्छस इत्यत्र शस्ग्रहणं न कर्तव्यं भवति । तस्मादिति पञ्चम्या अनुवृत्तस्य शसीति सप्तम्यन्तस्य षष्ठ्यन्तत्वकल्पनसम्भवात् । चकारोऽपि न कर्तव्य इति लाघवमिति भावः । विपरीतनियमापत्तेरिति । यदि तु तद्वारणाय पश्चिमत्स्यमृगान् हन्तीत्यादिनिर्देश आश्रीयते, तदा प्रतिपत्तिगौरवमिति भावः । एतत्सूत्रविषये पूर्वसवर्णदीर्घप्राप्तिमुद्भावयति । प्रत्याहारेष्विति । क्रियाशब्दत्व इति । हा इति शोकव्यञ्जकशब्दं जहातीति व्युत्पत्त्याश्रयणे त्वित्यर्थः । सानिति । अकारेणाऽकारेण वा सहितानित्यर्थः । तेन पञ्चमीसमासेन स्थानिवत्त्वेऽपि नान्यथासिद्धिः । वस्तुत इदमपि न प्रत्युदाहरण-

**भाष्ये । एवञ्च साशब्दादेर्यद्यभिधानं, तदा योगविभागेन लोप इष्ट एव । सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव । भाष्यवार्त्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात् । आबन्तादाचारक्विबेव न,**

---

मित्याह । **परे त्विति** । **यद्यभिधानमिति** । यदीत्यनेन च वस्तुत आतोऽनाप इति वक्तव्यमिति वार्तिककारोक्तेस्तस्य च क्त्वो ल्यबिति सौत्रप्रयोगस्य भगवतोदाहरणदानात्तदनुकरणानामेव कैयटेनाप्युदाहरणदानाच्चाऽकारान्तधातुप्रकृतिकातिरिक्तानामाकारान्तप्रातिपदिकानामनभिधानमेवेति सूचितम् । स्पष्टं चेदमुद्योते । एतेनैषामनभिधाने न दृढं मानमिति वाराणसेयोक्तमपास्तम् । अभिधानाङ्गीकारेऽप्याह । **लोप इष्ट एवेति** । आतो धातोरिति सूत्रस्थनिरुक्तभाष्यवार्तिकादिप्रामाण्येनेदृशानामनभिधानं वा, अभिधानस्वीकारे वार्तिकेन सह प्रत्याख्यानपरभाष्यस्य फलैक्याय योगविभागेन लोपस्येष्टत्वमेव वा स्वीकार्यमिति नेदं धातुग्रहणव्यावर्त्यमिति भावः । एवं धातुग्रहणस्य मनोरमोक्तं प्रत्युदाहरणं निराकृत्य स्वयं तद्दर्शयति । **आबन्तनिवृत्त्यर्थमेवेति** । सूत्रे धातुपदस्याऽधात्ववयवाकारान्तेषु लोपनिवर्तकत्वस्यापाततः प्रतीतावपि वार्तिकेन सह फलैक्यायाऽबन्तनिवृत्तिमात्रफलकत्वमेव वाच्यमिति रमा इत्याद्येव तद्व्यावर्त्यमित्याशयः । अत्राऽर्थे मानमाह । **भाष्यवार्तिककृतोरिति** । आतोऽनाप इति वार्तिकेन तत्प्रत्याख्यानपरभाष्येण चाबन्तभिन्नाधात्ववयवाकारान्तानामपि लोपस्य लाभेन तदेकवाक्यतया क्त्वो ल्यप्, हलः श्न इत्यादिनिर्देशैश्च सूत्रे धातुपदस्याऽबन्तनिवृत्तिमात्रफलकत्वमेव वाच्यमिति भावः। नन्वाबन्तादाचारक्विबन्तात्कर्तृक्विपि धातुत्वाल्लोपप्राप्त्या धातुपदस्य सर्वथाऽबन्तनिवर्तकत्वस्य वक्तुमशक्यत्वेन सूत्रवार्तिकयोः फलभेदो दुर्वार एवेत्यत आह । **आबन्तादाचारक्विबेव नेति** । सूत्रवार्तिकयोः फलभेदवारणायाबन्तेभ्य आचारक्विपोऽनभिधानमाश्रयणीयमिति भावः । नन्वाबन्तादाचारक्विबङ्गीकारे-

तत्क्विबन्ताद्वा कर्त्तृक्विप् न, अनभिधानादिति न तत्र सूत्रवार्त्तिकयोर्विरोधः । अत एव 'प्रथमयोः' इतिसूत्रभाष्ये पररूपं बाद्ध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकमिति पक्षे रामानित्यादिसिद्ध्यर्थम् 'अतो दीर्घे' इति, 'सुपि च' इति चानुवर्त्तमाने 'बहुवचने झल्येत्' इति सूत्रे बहुवचने इति योगविभागेन पररूपबाधकं दीर्घं विधाय रामाणामित्यादावनेन दीर्घे परत्वात्कृतेऽग्नीनामित्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य 'ह्रस्वनद्यापः' इति सूत्रे 'आज्जसेः' इत्यत आद्ग्रहणानुवृत्त्या समाधाय कीलालपामित्यादौ–नुड्विधायके 'आतो धातोः' इत्यनुवर्त्य लोपेन नुड्बाधकेन समाहितम् । नुड्विधायके आब्ग्रहणं न कार्यमिति तदाशयः । अधात्ववयवाकारान्तानां लोपाभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः ॥

---

ऽपि तदन्तस्य धातुत्वेनाऽप्रातिपदिकत्वात्सुबनुत्पत्तौ भसंज्ञाया अभावेन सूत्रवार्तिकयोरप्राप्त्या न फलभेदः । एवं च तदनभिधाने न मानमित्यत आह । तत्क्विबन्ताद्वेत्यादि । अत एवेति । आबन्तभिन्नाधात्ववयवाकारान्तानां लोपस्येष्टत्वादेवेत्यर्थः । समाहितमिति । एवं चैतदेकवाक्यतया निपातनेन धातुपदस्याऽभिन्नपरत्वबोधनद्वारा लोप इत्यर्थः कार्यः । तदग्रे कथं श्न इति प्रश्नस्तूक्तमाशयमजानत एकदेशिन एव । अत एव भूवादिसूत्रे भाष्ये क्रियावाचिन इत्यस्याऽभावे याः पश्यसीत्यत्र धातुसंज्ञायामातो धातोरिति लोपापत्तिरित्युक्त्वा तस्यानाप इत्यनेनाऽन्यथासिद्धिः कृता । धातुपदस्य यथाश्रुतार्थकत्वे तु तदसङ्गतिः स्पष्टैवेति बोध्यम् । अधात्ववयवाकारान्तानामिति । साशब्दादीनामित्यर्थः । तदसङ्गतिरिति । यथाश्रुतन्यासे ह्रस्वान्तत्वाभावाऽनुटोऽप्राप्त्या ह्रस्वनद्याप इत्यत्राऽदित्यनुवृत्त्याऽदन्तान्नुडिति कल्पे नुटः प्राप्त्या च फलभेदाद्भाष्यासङ्गतिरिति भावः ॥

यत्त्वातो धातोरिति सूत्रकृन्मते, आतोऽनाप इति वार्तिककृन्मते, आत इति योगविभागेन तद्वार्तिकप्रत्याख्यानपरभाष्यमते च फलभेदवारणायातो धातोरिति सूत्रे आत इति पदं स्त्रीत्वबोधकतापर्याप्त्यधिकरणघटकाकारभिन्नाकारपरम्। तथा च सामित्यादावाकारस्य लोपे नुटोऽप्राप्त्या प्रथमयोरिति सूत्रस्थभाष्यमते फलभेदाभावेन अनभिधाने न दृढं मानम्। एवं धातुग्रहणमाबन्तनिवृत्त्यर्थमिति शेखरग्रन्थोऽसङ्गतः। न मुन इति निर्देशासङ्गतेः। ना इत्यस्याऽबन्तभिन्नत्वेन तत्र लोपस्य दुर्वारतया नि इति रूपस्यैव त्वन्मते लाभात्। अस्मन्मते आतपदं स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नाकारपरमित्युक्तत्वेन नाशब्दस्य च स्त्रीलिङ्गत्वेन लोपाप्राप्त्या नाऽसङ्गतिः। अत एव ङ्याप्सूत्रे भाष्ये आबन्तस्थले पूर्वान्तवद्भावेनैव सिद्धे आब्ग्रहणं किमर्थमित्याशङ्क्य बहुदामित्यादिडाबन्तविषयं प्रयोजनमुक्तं सङ्गच्छते। अन्यथा क्त्वायामित्यादिभाष्यप्रयोगेण क्त्व इत्यादिप्रयोगेण च क्त्वाशब्दस्य स्त्रीपुंलिङ्गत्वानुमानेन क्त्वायामित्यादिप्रयोगे याडुपपत्तये टाबर्थमजादौ क्त्वाशब्दपाठस्याऽवश्यकत्वेन त्वन्मते आबन्तभिन्नक्त्वासम्बन्धी य आकारस्तदन्तस्याऽबन्तभिन्नत्वेन टापि परतो भसंज्ञायां लोपे टाब्विषय एवाऽब्ग्रहणस्य प्रयोजनसत्त्वेन डाप्पर्यन्तमाब्ग्रहणप्रयोजनानुधावनमसङ्गतं स्यात्। मम तु स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नाकारस्याभावेन लोपाभावे पूर्वान्तवद्भावेन क्त्वायामित्यादौ प्रातिपदिकत्वमायातीति डाप्पर्यन्तमनुधावनं सङ्गच्छत इत्यौत्तराहाः। तन्न। आत इत्यस्य निरुक्तार्थपरत्वे प्रथमयोरिति सूत्रस्थभाष्यविरोधापत्तेः। तत्र हि नुड्विधायके आद्ग्रहणानुवृत्तिकल्पे कीलालपामित्यत्र प्रसक्तं नुटं वारयितुं तत्राऽतो धातोरित्यनुवर्त्य वाक्यभेदेन नुड्बाधकतया लोपं विधाय समाहितम्। आत इति पदस्य स्त्रीत्वबोधकतापर्याप्त्यधिकरणघटकाकारभिन्नाकारपरत्वे तु कीलालपां स्त्रीणामिति प्रयोगे आकारस्य तत्त्वाभावेन लोपाप्राप्त्या नुटि पक्षयोः फलभेदापत्तेस्तद्भाष्यमसङ्गतमेव

क्त्वः श्व इति । क्त्वाप्रत्ययस्य इडित्याद्यर्थके 'क्त्व इट्' 'श्वः शस्येत्त्वम्' इत्यादिप्रयोगस्थमत्रोदाहरणम् । एतेनाऽऽचारक्विबन्तात् कर्तृक्विपा एते प्रयोगा निर्वाह्या इत्यपास्तम् । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेन तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभाच्च । इत्यादन्ताः ॥

जसि च । ह्रस्वस्य गुण इति वर्त्तते । ह्रस्वस्य । 'संबुद्धौ च' इत्यतः संबुद्धाविति वर्त्तते । शेषो घ्य । 'यू स्त्र्याख्यौ' इत्यतो

---

स्यात् । न चाऽत इत्येतत्साहचर्येणाऽऽङ्सेरित्यतोऽनुवृत्ताऽत्पदस्यापि स्त्रीत्वबोधकाकारभिन्नाकारपरत्वेन कीलालपां स्त्रीणामिति प्रयोगे नुटोऽप्राप्त्या न भाष्यासङ्गतिरिति वाच्यम् । आत इति पदस्यादिति पदस्य च विभिन्नवाक्यस्थत्वेन तादृशसाहचर्यस्याश्रयितुमशक्यत्वात् । यदपि धातुग्रहणमाबन्तनिवृत्त्यर्थमिति शेखरग्रन्थोऽसङ्गतः । न मुन इति निर्देशाऽसङ्गतेरित्यादि तदुक्तिः । तदप्ययुक्ता । बन्धुनि बहुव्रीहावित्यादौ बन्धुनीतिवच्छब्दस्वरूपपरतया नपुंसकलिङ्गनिर्देशाङ्गीकारेण ह्रस्वो नपुंसक इति ह्रस्वेन तन्निर्देशोपपत्तेः । एतन्मते ङ्याप्सूत्रस्थभाष्यविरोधोद्भावनमत एवेत्यादिना तत्कृतमप्ययुक्तम् । 'यद्यनाप इत्युच्यते, कथं क्त्वायामिति, निपातनात्सिद्धम् । किं निपातनम् । क्त्वायां च प्रतिषेध इत्यातो धातोरिति सूत्रस्थभाष्येण 'निपातनाल्लोपाभावो याडागमश्चेति तत्सूत्रस्थकैयटेन, याडागमश्चेति कैयटप्रतीकमुपादाय 'सोऽपि याडाप इति वचनान्न प्राप्नोतीति भाव' इत्युद्योतग्रन्थेन च क्त्वाशब्दस्य टाबन्तत्वाभावस्य स्पष्टतया तदुपपादितस्य तद्भाष्यविरोधस्य शशविषाणतुल्यत्वात् ।

एतेनेति । पूर्वोक्तस्वारसिकप्रयोगविरोधेनेत्यर्थः । न केवलं स्वारसिकप्रयोगविरोध एव । वस्तुतस्तथा साधनमपि न युज्यत इत्यत आह । आचारक्विबन्तेति । आदन्तप्रकृतिकेत्यादिः ॥

यू इति, 'ङिति ह्रस्वश्च' इत्यतो ह्रस्व इति च वर्त्तते । शेषपदार्थमाह—अनदीत्यादि । तदन्तमिति । अनुवृत्तयुभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इति भावः । ननु मत्यै इत्यत्रानवकाशत्वान्नदीसञ्ज्ञैव भविष्यतीति शेषग्रहणं व्यर्थमत आह—एकसञ्ज्ञेति । अधिकारादिति । 'कडाराः कर्मधारये' इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः । स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति

---

ह्रस्व इतीति । नन्वत्र सूत्रेऽनुवृत्तस्य यूपदस्यार्थाधिकारानुरोधाद्दीर्घबोधकतयाऽस्यान्वयासम्भव इति चेन्न । अनुवृत्तयूपदस्य षष्ठ्यन्ततया विपरिणामेन य्वोर्यौ ह्रस्वौ, तदन्तमित्यर्थाश्रयणेनानुवृत्तह्रस्वपदेन सामानाधिकरण्याय शब्दाधिकाराश्रयणेन वाऽदोषात् । तदेतदभिप्रेत्याह । अनुवृत्तयुभ्यामिति । यूपदह्रस्वपदानुवृत्तिफलितार्थकथनपरमिदम् । ननु मूलेऽधिकारादित्यसङ्गतम् । लाघवात्तस्य परिभाषात्वाभ्युपगमात् । अधिकारत्वे हि प्रतिसूत्रं सम्बन्धकल्पने गौरवम्, बहुषु बहुवचनमित्यादौ तदसम्बन्धाय मण्डूकप्लुतिकल्पने गौरवं चेत्यत आह । बुद्धिस्थत्वादित्यर्थ इति । एवं च मूले अधिकारपदं बुद्धिस्थपरम् । एकसंज्ञाधिकारादित्यस्य, कडाराः कर्मधारय इत्येतत्पर्यन्तमेका संज्ञेत्यस्य बुद्धिस्थत्वादित्यक्षरार्थ इति भावः । स्पष्टतयेति । असखीति पर्युदासबलेन शब्दस्वरूपस्य विशेष्यस्य लाभेऽपि तस्य विलम्बोपस्थितिकतया झटिति विशेष्यलाभार्थमिति भावः । न च गवां पत्यै स्त्रिया इत्यादौ पतिस्समास एवेति नियमाद्घिसंज्ञाया अप्राप्त्या तत्र नदीसंज्ञायाश्चारितार्थ्यादपवादत्वाभावेन मत्यै इत्यादौ परत्वान्नदीसंज्ञां बाधित्वा घिसंज्ञा स्यादिति तद्व्यावृत्त्यर्थं शेषग्रहणमावश्यकमिति वाच्यम् । इकारांशे चारितार्थ्येऽप्युकारांशे चारितार्थ्याभावात् ङिति ह्रस्वश्चेति सूत्रेणोकारान्तस्य स्त्रियां वर्तमानस्यापवादत्वान्नदीसंज्ञा भविष्यतीति पारिशेष्यादनदीसंज्ञकस्यैवोकारान्तस्य घिसंज्ञालाभेन तत्साहचर्यादिकारान्तस्याप्यनदी-

भावः । मात्रे इति । 'ऋतो ङि' इति तु यू इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः ॥

आङो ना । पुंसीति तु नोक्तम् । अमुना कुलेनेत्यत्र मुत्वस्यासिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपा-

---

संज्ञकस्यैव घिसंज्ञेत्यर्थाश्रयणेन तत्रादोष इत्याशयात् । वस्तुतस्त्वहन्नित्यत्र वक्ष्यमाणरीत्या इकारांशेऽप्यनवकाशत्वं सुस्थमेव । पतिशब्देऽपि घिसंज्ञाप्राप्तियोग्यतायास्सत्त्वात् । नियमेनाऽपि तस्य बाध इत्यन्यत् । मूले यू किमिति । अयम्भावः । यूग्रहणाननुवृत्तावपि ह्रस्वपदानुवृत्त्या विश्वपादिशब्देषु नातिप्रसङ्गः । अदन्तस्य तु सत्यामपि घिसंज्ञायां न क्षतिः । रामेणेत्यत्रेनादेशस्य नादेशाऽपवादत्वात् । घेर्ङितीत्यत्रैकपरिभाषोपस्थित्या रामस्येत्यादावप्यदोषात् । अत्र घेरित्यत्रेदुद्भ्यामित्यस्यानुवृत्त्या सप्तम्येकवचनेऽपि न दोषः । द्वन्द्वे घीत्यस्य विषये हरिहरावित्यत्राऽप्यजाद्यदन्तमित्यस्याऽदन्तं चेदजाद्येवेति नियमाश्रयणाददोषः । ईदग्नेरिति ज्ञापकाच्च न विपरीतनियम इति । ननु यूग्रहणाननुवृत्तौ ह्रस्वान्तमात्रस्य घिसंज्ञायां ऋदन्ताङ्गस्य ङौ परतो घेर्ङितीत्येव गुणे सिद्धे ऋतो ङीति गुणविधानं व्यर्थं सत् ऋदन्ताङ्गस्य ङिति गुणो नेत्यर्थं ज्ञापयतीति मात्र इत्यादौ घिसंज्ञायामप्यदोषः । अतो यूग्रहणस्य नेदं प्रत्युदाहरणं युक्तम्, किन्तु पित्रेति । तत्र हि घिसंज्ञायां नाभावापत्तिरिति चेत्तत्राह । ऋतो ङीति । इति भाव इति । ङौ गुणविधानेनेदृशार्थज्ञापनेन घेर्ङितीति शास्त्रबाधकल्पनापेक्षया तेन घिसंज्ञासूत्रे यूग्रहणानुवृत्तिज्ञापनमेव युक्तम्, लाघवात् । एवं च मात्र इत्यत्र गुणाभावः, पित्रेत्यत्र नाभावाभावश्च सिद्ध इति भावः ॥

रूपासिद्धेरिति । किंचाऽत्र न्यासे प्रियत्रिणा कुलेनेत्यत्र पुंस्त्वाभावेन नाभावस्याप्रवृत्तौ नुमागमस्यैव वक्तव्यतया तत्र विभक्तेर्हलादित्वाभावेन पद्वि-

**सिद्धेः । 'न मुने' इति निषेधस्तु न नुमि । ' न मु टादेश ' इति वार्त्तिकविरोधात् । अत एव सूत्रकृता 'क्त्वि' इतिवत् 'नि' इति नोक्तम् । तथा सति तन्त्रेण नकारनिर्देशोऽपि सम्भाव्येत ।**

---

चतुर्भ्यो हलादिरिति स्वरासिद्धिरपि दोष इति बोध्यम् । **न नुमीति ।** न नुम्यपीत्यर्थः । उच्चारणार्थकाकारेण तस्याऽपि तन्त्रेण निर्देशादिति भावः । **वार्तिकविरोधादिति ।** वार्तिकस्वारस्यभङ्गापत्तेरित्यर्थः । तत्राऽदेश इत्युक्त्या असति बाधके सर्वं वाक्यं सावधारणं भवतीति न्यायेनाऽदेशविषय एव तत्प्रवृत्तेर्लाभादिति भावः । यद्यप्यमुष्मै कुलायेतिलक्ष्यासिद्धिरत्रार्थे वक्तुं शक्या, तत्र हि न मुन इति सूत्रविषये पूर्वं विभक्तिनिमित्तककार्याप्रवृत्तौ मुत्वे तस्य नकारविषये कमपि प्रत्यसिद्धत्वाभावेन, विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वाऽस्य स्मैभावात्परत्वेन नुमापत्तेः, तथापि लक्षणैकचक्षुष्काणामेतत्सूत्रार्थनिर्णयमन्तरा अमुष्मै कुलायेति लक्ष्यसाधुत्वस्य सन्दिग्धतया तदसिद्धिप्रदर्शनं नातीवोपयुज्यत इत्याशयेन ऋष्यन्तरवचनविरोध एव दर्शयितुं योग्य इत्याशयेनैवमुक्तमित्यवधेयम् ॥

एतेनैतत्प्रतीकमुपादाय मूले नुमीत्यस्य नुम्येवेत्याशयेन पूर्वपक्षिणो वार्तिकविरोधस्याऽकिञ्चित्करत्वादिदमयुक्तम् । अमुना घटेनेति लक्ष्यासिद्धेरिति तु वक्तुं युक्तमिति वदन्त आचार्याः परास्ताः । मनोरमायां नुम्येवेत्यत्र एवकारस्याऽप्यर्थकत्वं कथयता शब्दरत्नकृता विरोधाच्च ॥

न मुन इत्यस्य नुम्विषयेऽप्रवृत्तौ सूत्रस्वारस्यमपि दर्शयति । **अत एवेति ।** नुम्विषय एतन्निषेधाप्रवृत्तेरिष्टत्वादेवेत्यर्थः । **नोक्तमिति ।** अन्यथा लाघवात्तथैव वदेदिति भावः । **सम्भाव्येतेति ।** एवं च तादृशसंभावनानिवृत्त्यर्थमेव तथा नोक्तमिति सूत्राक्षरैरप्ययमर्थो निश्चेतुं शक्य इति भावः । ननु न इत्युक्तावप्युच्चारणार्थकाकारेण नुमोऽपि तन्त्रेण निर्देशात्यन्तं सूत्र-

आगन्तुनाऽकारेण तस्यापि ने इति निर्देशेन तन्त्रस्वीकारे त्वत्यन्तं ज्ञानगौरवमिति न किञ्चिल्लाघवमिति स्पष्टं भाष्ये । आङिनीति । ङकारविशिष्टा सञ्ज्ञा, न त्वस्य ङस्येत्त्वम् । अत एव हरिणा, मत्या इत्यादौ न गुणः । एवम् 'औङ आपः' इत्यत्रापि । अत एवासम्भव एवापवादत्वमिति वार्त्तिकमतेऽपि रमे इत्यादौ न याट् । घेर्ङितिं ।

---

स्वारस्यभङ्ग इत्यत आह । आगन्तुनेति । न किञ्चिल्लाघवमिति । एकस्यैव नेशब्दस्य सौत्रस्य तादृशशब्दद्वयोपस्थापकत्वतात्पर्येण निर्देशकल्पना, ततस्तत्सदृशशब्दद्वयोपस्थितिकल्पना, तयोर्मध्ये एकत्रागन्तुकाकारकल्पना, तत एकत्र नकारमात्रोपस्थितिरपरत्र नाशब्दस्येत्येवंरीत्या ज्ञानगौरवमपेक्ष्याङो ना पुंसीति न्यासकरणे न किंचिल्लाघवमिति भावः । नत्वस्य ङस्येत्त्वमिति । चित्रङो ङकारस्येव प्रातिपदिकान्त्यत्वेनास्य नेत्त्वमिति भावः । आचार्यास्तु, औङ आप इति सूत्रस्थकैयटानुसारेणाङो नादेशविधानादेव टकि लोप इति लोपविधानसामर्थ्यात्प्रत्ययस्येत्र वेऽपरटाया आङादेशविधायकं वाक्यमनुमीयते । एवमौङ आप इत्यत्रापीति तदीयङकारस्योपदेशान्त्यत्वात्प्राप्तमित्त्वं नेत्याशयमाविश्चक्रुः । तदयुक्तम् । उपदेशपदस्य करणघञन्ततया ग्रन्थकृता सिद्धान्तितत्वेन तन्मते विनैव वाक्यान्तरकल्पनं प्रातिपदिकान्त्यत्वादेवेत्त्वप्राप्तौ तत्प्रयासस्य निरर्थकत्वात् । स्पष्टं चेदमौङ आप इति सूत्रे उद्योते । अत एवेति । ङस्येत्त्वाभावादेवेत्यर्थः । न गुण इति । अन्यथा सूत्रे इत्संज्ञकङकारविशिष्टस्य स्थानित्वेनोपादानसामर्थ्यान्नादेशस्थानिभूतटायां ङित्त्वप्रयुक्तं कार्यं लभ्यत इति घेर्ङितीति गुणस्स्यादिति भावः । हरिणेत्यत्र नादेशस्य तक्रन्यायेन गुणबाधकतया न दोष इत्यरुचेराह । मत्येति । ङस्येत्त्वे तत्सामर्थ्यात्तदुपस्थाप्ये तत्कार्यसमर्पणात्त्र गुणापत्तिरिति भावः । इत्यत्रापीति । ङकारविशिष्टा संज्ञा न तु ङस्येत्त्वमिति शेषः । तत्रेत्त्वाभावे फलं दर्शयति । अत एवेति । वार्तिकमतेऽपीति । अपिना भाष्यकृन्मतेऽपि, रमे इत्यत्र शीभावस्य

'सुपि च' इत्यतः सुपीति वर्त्तते। तेन पट्वीति सिद्धम्। न च 'घेर्ङिं' इत्येव सूत्रं कार्यं, ङकारादावित्यर्थः। प्रवाहवेत्यत्र 'आङ्याजयारामुपसंख्यानम्' इत्याङादेशस्तु ङा इत्येवक्तुं शक्यः, इति वाच्यम्। मत्यामित्यादौ 'आण्नद्याः इत्यस्यानापत्तेः। अल्विधित्वेन स्थानिवत्त्वाभावात्। ङिद्ग्रहणे त्वनुबन्धकार्यत्वात्

---

याडप्राप्तियोग्यस्थलेऽचारितार्थ्यस्य याटि कृतेऽपि निर्दिश्यमानस्य याटा व्यवधानात्तदप्राप्तेश्च मतद्वयेऽपि सर्वथा निरवकाशविषयेण माठरकौण्डिन्यन्यायेनैव शीभावस्य याड्बाधकताया वक्तव्यत्वात्। तत्पक्षेऽपवादप्रवृत्त्यनन्तरमुत्सर्गप्रवृत्तेरिष्टत्वेऽप्यत्र शीभावोत्तरं न याट्, ङकारस्येत्त्वाभावादिति भावः॥

अत्र वार्तिकमत इत्यस्यानन्तरं, एवात्र सतीति शेषपूरणेन श्रीधराणां व्याख्यानन्तु न युक्तम्। भाष्यकृन्मतेऽपीदृशस्थलेषु शास्त्रसामर्थ्यमूलकस्य बाधकत्वस्यावश्यमाश्रयणीयत्वात्। वार्तिकमतेऽपीति प्रतीकमुपादाय 'असम्भव एवापवादत्व'मिति हि तन्मतम्। स चाऽसम्भवः प्रकृते नास्तीति भाव इति वदतां मिश्राणां तु प्रमाद एव। असम्भवस्य प्रागुपदर्शितत्वात्॥

अनापत्तेरिति। तत्र तदप्रवृत्तौ ह्रस्वनद्याप इति नुडापत्तिः। सिद्धान्ते तु परत्वादाटा नुटो बाधात्सकृद्गतिन्यायेन नुटोऽप्रवृत्तिस्सिद्ध्यतीति भावः। मूले आदिपदेन रमायामित्यस्य संग्रहः। आण्नद्या इति तु याडाप इत्यस्याप्युपलक्षणम्। अत्र सूत्रे ङीत्येतन्मात्रोक्तौ तस्यैव याडाप इत्यत्राप्यनुवृत्त्याऽबन्तात्परस्य ङादेर्याडागम इत्यर्थापत्त्या रमायामित्यत्र याटं बाधित्वाऽमि ततोऽल्विधित्वेन स्थानिवत्त्वाप्रवृत्त्या ङादित्वाभावाद्याण्न स्यादिति भावः। यदि तत्र ङेर्कामादेश एव क्रियते, तदा रमायामित्यत्र पूर्वं प्रत्ययत्वाभावेनेत्त्वाप्रवृत्त्या ङकारयुक्त एवाऽऽदेशे कृते ततोऽन्तरङ्गावपीत्संज्ञालोपौ बाधित्वा वार्णपरिभाषया याटि कृते प्रत्ययादित्वाभावादित्त्वं न स्यात्। यथाङ्गवार्णयोस्समा-

स्थानिवत्त्वं स्पष्टमिति दिक्। ङसिङ। एङो द्वित्वेऽपि अस्वरितत्वा-यथासंख्यं न। 'ङितश्च' इति तु नासूत्रि, 'ऋत उत्' इत्यत्र ऋद-न्तात् ङितोऽति परे पूर्वपरयोरित्यर्थे जाग्रतीत्यादौ दोषः स्यादिति ङसोरित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम्।

अच्च घेः। इदुद्भ्यामिति किम्? 'घेः परस्य ङेरौदच्च' इति, 'ङिप्र-कृतेर्घेरौदच्च' इति वाऽर्थो मा भूदिति। अदौतोस्तपरत्वं मुखसुखा-र्थम्। इत्सञ्ज्ञायां च 'तस्य लोप' इति तयोर्लोपः। न चौतो

---

नकार्यित्व एव तत्परिभाषाप्रवृत्त्या नाऽत्र तत्प्रवृत्तिरित्युच्यते, तदापि ङस्ये-त्संज्ञालोपयोः स्वीकारेण ङस्योच्चारणेनार्धमात्राधिक्येन सर्वत्र भूतपूर्वगत्या ङादित्वस्वीकारेण चात्यन्तं गौरवापत्तिरिति बोध्यम्। तदेतद्ध्वनयन्नाह। दिगिति॥

नाऽसूत्रीति। जयन्ति भवन्तीत्यत्र गुणादन्तरङ्गत्वात्पररूपेऽचः परेति स्थानिवत्त्वेन गुणे परादिवत्त्वेन ङित्त्वसत्त्वात् प्रकृतसूत्रेऽपि दोषो बोध्यः। पूर्वरूपे तु न स्थानिवत्त्वम्, पूर्वपरविधित्वात्॥

इदुद्भ्यामिति किमिति। तदनुवृत्तिः किमर्थेति प्रश्नः। अनुवृत्तौ दोषमाह। घेः परस्येति। अनुवृत्तस्य ङेरित्यस्य षष्ठ्यन्तत्वात्तत्साहचर्येण घेरित्यस्याऽपि षष्ठ्यन्तत्वसम्भावनयाऽऽह। ङिप्रकृतेरिति। मा भूदिति। तदनुवृत्तौ तु तस्य पूर्वत्र ङेरित्यनेन सम्बन्धस्य क्लृप्ततयाऽत्रापि तथैव सम्ब-न्धाद्घेरित्यस्य पञ्चम्यन्तत्वसम्भावना नेति भावः। मुखसुखार्थमिति। न तु तपरत्वात्प्रवृत्त्या तत्कालग्रहणार्थमिति शेषः। भाव्यमानत्वेन सवर्णग्रहणा-ऽप्राप्तेः। अकारांशे ह्रस्वस्यैव स्थानित्वेनाऽन्तरतम्याच्च तस्यैव प्रवृत्तेश्च। नन्वेवं तकारविशिष्टस्यैव विधेयत्वलाभात्प्रयोगे तकारश्रवणापत्तिरत आह। इत्संज्ञाया-

विभक्तित्वात् 'न विभक्तौ' इति निषेधात् कथमित्सञ्ज्ञेति वाच्यम्। मुखसुखार्थमित्यस्य तदेव प्रयोजनं नतु कार्यान्तरं, नापि प्रयोगे श्रवणमित्यर्थात्तत्त्वप्रतिज्ञयैव 'न विभक्तौ' इत्यस्य तत्राप्रवृत्तेः। अत एव 'इदुद्वृद्धौ' 'पत्यावैश्वर्ये'-इत्यादिनिर्देशाः सङ्गच्छन्ते। यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्, तदा इत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु, किं तस्य लोप इत्यनेन। स्वभाववादस्योभयत्रापि समत्वात्। ध्वनितश्चेदं 'तस्य लोप' इत्यत्र भाष्ये इति दिव औत्सूत्रे निरूपयिष्यामः। न चैवमग्नावित्य-

---

मिति। तथा च तद्विनिर्मुक्तस्यैव लक्ष्ये प्रवृत्त्या न दोष इति भावः। विभक्तित्वादिति। यद्यपीत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं, तथाऽपि विभक्तावित्यस्य विभक्तित्वयोग्य इत्यर्थादत्र तत्प्राप्तिः। अत एव स्मात्स्मिनोरन्त्यस्य नेत्त्वम्। सूत्रे वर्गग्रहणं च चरितार्थमिति भावः। तत्त्वप्रतिज्ञयेति। मुखसुखार्थत्वप्रतिज्ञयेत्यर्थः। अत एवेति। न विभक्तावित्यस्याऽप्रवृत्त्या इत्त्वप्रवृत्तेरेवेत्यर्थः॥

यत्तु 'वस्तुतस्तु तपरस्तत्कालस्येति शास्त्रेणाऽत् आदित्यादीनामेव संज्ञात्वबोधनेन नेत्संज्ञाप्राप्तिरिति वाराणसेयाः', तन्न। अत्र तकारस्य मुखसुखार्थत्वकथनेनाऽस्य तपरसूत्राविषयत्वात्। अवध्यवधिमतोस्साजात्यात् वर्णस्यैव संज्ञात्वम्, न तु तकारविशिष्टस्येति ग्रन्थकृता प्रागुपदर्शितत्वाच्च। औतस्तकारस्य उच्चारणार्थत्वादित्संज्ञां विनैव निवृत्तिः। अत एव न स्वरितत्वमिति प्राचीनोक्तं दूषयितुमाह। यदि त्विति। विनैव शास्त्रमिति। येषामन्यत्र विशेषणार्थत्वेनाऽपि प्रयोजनं नास्ति, किन्तु मुखसौकर्यमेव प्रयोजनं तथा विधानां नान्तरीयकतया वह्न्यानयनादौ विनैवोपदेशं सौकर्यार्थं परिगृहीतानां पात्रादीनामिव विनैव शास्त्रव्यापारमकस्मादेव निवृत्तिरित्याशयः। तद्वदेवेति। शास्त्रव्यापारं विनैवेत्यर्थः। स्वोक्तार्थे मानं दर्शयति। ध्वनितमिति।

औतः स्वरितत्वापत्तिः,—न च 'प्रत्ययाप्रत्यययोः' इत्येव सिद्धे पुनः 'तिति प्रत्ययग्रहणं कर्त्तव्यम्' इति वार्त्तिकादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्तिरिति वाच्यम्। तस्याः परिभाषाया लक्ष्यसिद्धये भाष्यकृता क्वाप्यनाश्रयणात्। स्पष्टश्चेदं 'तित्स्वरितम्' इत्यत्र कैयटे। 'अङ्गस्य' इति सूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना सोक्ता, न तु सिद्धान्तिनेति स्पष्टं तद्विदाम्। 'श्नान्नलोपः' इति सूत्रे भाष्येऽपि ध्वनितस्तदभाव इति वाच्यम्। 'प्रत्ययग्रहणम्' इत्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थात्। अत एवाऽऽदेशेषु दित्त्वमाश्रित्य तत्प्रत्याख्यानेन फलभेदो नेति दिक्।

---

न चेति। अस्य परेण वाच्यमित्यनेनाऽन्वयः। एवमिति। उच्चारणार्थकेष्वपीत्संज्ञालोपयोः प्रवृत्तावित्यर्थः। अनाश्रयणादिति। सनाशंसभिक्ष उः, वले इत्यादौ व्याख्यानात्प्रत्ययस्यैव ग्रहणमिति तदाशयः। नन्वङ्गस्येति सूत्रे भाष्ये साऽऽश्रितैवेत्याशङ्क्याह। एकदेशिनेति। वर्णग्रहणेष्वेतत्परिभाषायाः प्रवृत्त्ययोगेनाऽम्भक्ष इत्यादावपो भीत्यादेः प्रसङ्गेन एनामाश्रित्य अङ्गाधिकारप्रत्याख्यानानुपपत्तेरस्यैकदेश्युक्तित्वमित्याशयः। ध्वनित इति। तत्र हि नान्नलोप इति न्यासे नन्दिता नन्दक इत्यादौ नलोप आपादितः। उक्तपरिभाषासत्त्वे तु नशब्दस्य प्रत्ययत्वाभावादेव नलोपाप्रसक्तौ तदसङ्गतिरिति तेनैतदभावो ध्वनित इति भावः। इत्यर्थादिति। लक्षणयेति भावः। वार्तिकस्थप्रत्ययपदस्य विधानकालिकप्रत्ययत्ववति लक्षणायां मानमाह। अत एवेति। फलभेदो नेति। अन्यथा प्रत्याख्यानपक्षे तित्त्वाभावात्स्वराप्राप्त्याऽऽरम्भपक्षे च विधानोत्तरं स्थानिवद्भावेन प्रत्ययत्वस्य सत्त्वात् तत्प्राप्त्या च फलभेदस्स्पष्ट एवेति भावः

अनङ् सौ। साविति प्रथमैकवचनम्, असम्बुद्धाविति पर्युदासात्। नकाराकारस्तूच्चारणार्थ इत्सञ्ज्ञकः। अलोन्त्यात्। अवध्यवधिमतोः साजात्यादाह—पूर्वो वर्ण इति। अत एव शिष्ट इत्यादौ शा इति समुदायस्य 'शास इत्' इतीत्वं न। पञ्चम्यन्ताल्ग्रहणाच्च शस्य न। सर्वनामस्थाने। 'नोपधायाः' इति, ढ्लोपे' इत्यतो दीर्घ इति चानुवर्त्तते। अपृक्त। अपृक्त इति पुंस्त्वमविवक्षितम्। अत एवापृक्तं हलिति सङ्गच्छते। अपृक्तप्रदेशेषु हल्ग्रहणेनैव

---

सावित्यनेन सप्तमीबहुवचनस्य ग्रहणङ्कुतो नेति शङ्कानिरासायाह। सावितीति। पर्युदासादिति। सप्तमीबहुवचनस्यैव ग्रहणे सम्बुद्धौ प्राप्तेरेवाभावात्तद्वैयर्थ्यं स्पष्टमेवेति भावः। इत्संज्ञक इति। विधेयविषय उच्चारणार्थानामपीत्संज्ञालोपाभ्यामेव निवृत्तेर्वक्तव्यत्वादिति भावः॥

अलोऽन्त्यादित्यत्र पूर्वशब्देन वर्णस्यैव ग्रहणे बीजमाह। अवध्यवधिमतोरिति। अन्त्यस्यालोऽवधित्वादवधिमानप्यल्त्वेन रूपेण तत्सजातीय एव गृह्यते, यथा लोकेऽमीषां ब्राह्मणानामन्त्यात्पूर्व आनयितामित्युक्ते एक एवाऽन्त्यात्पूर्वोऽनन्तर आनीयते न समुदाय इति वर्णस्यैव संज्ञात्वमित्याशयः। उक्तरीत्या पूर्वशब्देन वर्णस्यैव ग्रहणे फलं दर्शयति। अत एवेति। समुदायस्येति। अलोऽन्त्यपरिभाषा तु नाऽनर्थक इति निषेधान्न प्रवर्तत इति भावः। तत्प्रत्याख्याने तु न दोष इति स्पष्टमत्रैव सूत्रे भाष्ये। पञ्चम्यन्ताल्ग्रहणादिति। गुणः कृतात्मसंस्कार इति न्यायात्संज्ञाशास्त्रेऽपि तस्मादिति परिभाषाप्रवृत्तिरिति भावः॥

प्रदेशेष्विति। अस्तिसिचोऽपृक्ते, गुणोऽपृक्ते, वेरपृक्तस्येत्येतेषु सूत्रेष्वपृक्तपदं विहाय तत्स्थाने हलीति वक्तव्यमिति भावः। तत्राद्ययोरुक्तो वृद्धिर्लुकि हलीत्यतोऽनुवर्तमाने पुनर्हल्ग्रहणसामर्थ्याद्विशेषणविशेष्यभावव्यत्यासेन तदा-

सिद्धे सञ्ज्ञाविधानमदृष्टार्थम् । हल्ङ्याप् । सुतिसीति पृथक् पदम् । हलन्तादिति । सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्स विहितस्तदादेरित्यस्य विशेष्यत्वेन तदन्तलाभ इति भावः । एवं ङ्यावंशो द्वेधा तदुपस्थित्या ङ्याबन्तान्तादित्यर्थो द्रष्टव्यः । हल्ङ्याभ्यः

---

दिविधिर्न भवतीति बोध्यम् । एतेन वस्तुतस्तु गुणोऽपृक्त इत्यस्य हलादौ सार्वधातुक इत्यर्थे ऊर्णोतीत्यत्राऽपि गुणापत्तिः । नचोर्णोतेर्विभाषेत्यस्य वैयर्थ्यम् । सूत्रद्वयस्य विषयव्यवस्थाया एवानापत्तेः । एवमदस्सर्वेषामित्यस्य हलादेस्सार्वधातुकस्येत्यर्थापत्तावत्ति, अत्तामित्यादावडापत्तिरित्याचार्योक्तमपास्तम् । इदानीमदस्सर्वेषामित्यत्राऽस्तिसिचोऽपृक्त इत्यतो हल्ग्रहणानुवृत्त्याऽर्थाधिकारानुरोधात्सार्वधातुकसंज्ञकस्य हल इत्येवार्थादत्तीत्यादावदोषात् । अदृष्टार्थमिति । नन्वेवं हल्ङ्याबिति सूत्रे तदन्तविधिना हलन्तं सुतिसि लुप्यत इत्यर्थेन हन्यादित्यादौ यासुड्विशिष्टस्य लोपः स्यात्, संज्ञाकरणे तु न तदन्तविधिरित्यस्त्येव दृष्टं फलम् । नच निर्दिश्यमानपरिभाषया निस्तारः । सूत्रे षष्ठीनिर्देशाभावात् । यदि तूक्तातिप्रसङ्गभङ्गाय लोपशब्दस्य भावसाधनत्वमाश्रित्य हलन्तानां सुतिसीनां लोप इत्यर्थाश्रयणेन तत्परिभाषाप्रवृत्तिरभ्युपेयते, तदाऽपि भिन्तादित्यादावतिप्रसङ्गो दुर्वारः । स्थानिवद्भावविषये उक्तपरिभाषाया अप्रवृत्तेरिति चेन्न । अपृक्तपदं विहाय सुतिसि हलिति सुतिसि हल इति वा कर्मधारयनिर्देशे हल्पदस्य परनिपातनात्तस्य विशेषणत्वाभावनिर्णयेन तदन्तविधेरभानेनाऽदोषात् । षष्ठीतत्पुरुषस्तु न । निषादस्थपत्यधिकरणोक्तदिशा कर्मधारयस्यैव न्याय्यत्वात् । एतेन हल्ङ्यादिसूत्रस्थापृक्तग्रहणस्य चिन्त्यप्रयोजनत्वकथनपरशब्दरत्नग्रन्थोऽपि व्याख्यात इत्यवधेयम् ॥

पृथक्पदमिति । अपृक्तपदेन कर्मधारयाश्रयणे तु तस्य विशेषणत्वेन पूर्वनिपातापत्तिरिति भावः । द्वेधा तदुपस्थित्येति । सुतिसिभिरेकस्य ङ्याभ्यामेकस्य च तदादेरुपस्थित्येत्यर्थः । ङ्याबन्तान्तादिति । सुतिसिभि-

किमिति। राम इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः। दीर्घात्किं निष्कौशाम्बिरतिखट्व इत्यारभ्य संयोगान्तलोपस्यासिद्धत्वादित्यन्तोऽपपाठः, मनोरमायां दर्शनात्। सखेति। यद्यप्यत्रैव 'सख्युरसम्बुद्धौ' इति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेः 'अत उपधायाः' इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम्। अचो ञ्णि। 'मृजेर्वृद्धिः' इत्यतो वृद्धिरित्यनुवर्त्तते, अङ्गस्येति चाधिकृतं, तदाह—अङ्गस्य वृद्धिरिति। ख्यत्यादिति। उच्चारणार्थाकारेण कृतयणः प्रयोगस्थस्यानुकरणादविशेषेणोभयोर्ग्रहणमित्याह—खितीत्यादि। ङस्यादिपरस्तादृशः खिखीतितीशब्दप्रकृतिक एव संभवतीति भावः॥

सुसखेति। 'न पूजनात्' इति निषेधाद् 'राजाहःसखिभ्य' इति टज् न। समुदायस्येति। असखीत्यस्य सखिभिन्नावयवाविति वर्णसंज्ञापक्षेऽर्थः। अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्येवर्णादे-

---

रुपस्थितं तदादिं विशेष्यीकृत्य तदन्तविधौ पुनरन्यं तदादिं विशेष्यमादाय तदन्तविधिरिति भावः। अत एव गोत्रष्क्रयणी बहुश्रेयसीत्यादौ सुलोपसिद्धिः। अन्यथा सुतिसीनां यतो विधानं तदादेङ्याबन्तादित्यर्थस्य न्यायप्राप्ततयाऽत्र लोपो न स्यात्। राम इत्यादाविति। राजेत्यादौ तु संयोगान्तलोपेन निर्वाह इत्याशयः। यद्वा हल्ङ्याभ्यः किमित्यस्य ङ्याभ्य इति किमर्थमित्येवाऽर्थः, समुदायद्वाराऽवयवप्रश्ने तात्पर्यात्॥

अत्राकारान्तयोर्मुख्यापत्यादिशब्दवर्तिनोर्ग्रहणं न भवति। सख्युर्यः, पत्युर्नो यज्ञसंयोगे, आपत्यस्य चेत्यादिनिर्देशादित्याशयेनाह। उच्चारणार्थाकारेणेति। उभयोर्ग्रहणमिति। अत एव विकृतनिर्देशः सार्थकः। अन्यथा खित्योरिति, खीत्योरिति वा वदेदिति भावः। अत पक्ष इति। वर्णसंज्ञापक्ष

रेव ग्रहणात् 'कृतं सख्या' इति वाक्ये न दोषः । सिद्धान्ति-संमते तदन्तसञ्ज्ञापक्षे सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पक-सखिशब्दे तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत्सर्वं हरदत्तानुरोधेन ॥

'यस्येति च' इतिसूत्रभाष्यात्तु—सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः । यथा 'अत्वसन्तस्य' इति सूत्रेऽधातोरित्येनद्घटकधातुपदस्य 'पिण्डग्रः' इत्यादिसिद्ध्यर्थं

---

इत्यर्थः । न दोष इति । अत्रेकारस्य सखिभिन्नसमुदायावयवत्वेऽपि तस्याऽप्रातिपदिकत्वान्न घित्वप्रसङ्ग इति भावः । यद्यपि पर्युदासेनेदृशार्थाश्रयणस्य सख्येत्यत्र घित्ववारणमपि फलं वक्तुं शक्यम् । तत्राऽपि सखिभिन्नखीति-समुदायावयवत्वस्येकारे सत्त्वात्, तथाऽपि सखिभिन्नस्याऽर्थवतो ग्रहणेनाऽपि तत्र दोषो वारयितुं शक्य इति न तदस्याऽसाधारणं फलमित्याशयेन वाक्ये फलं दर्शितमिति बोध्यम् । ननु सिद्धान्तभूते तदन्तसंज्ञापक्षेऽसखीति समासावयव-सखिशब्देन तदन्तविधौ सख्यन्तभिन्नेवर्णोवर्णान्तयोरित्यर्थे सुसखिशब्दस्य घित्वं दुर्लभमित्यत आह । पर्युदस्यमानसमर्पकेति । पर्युदस्यमाना ये प्रायोगिकास्सखिशब्दास्तेषां समर्पकस्सङ्ग्राहको योऽसखीति समासावयवसखि-शब्दस्तत्रेत्यर्थः । विशेष्यासन्निधानादिति । सामानाधिकरण्येनान्वययोग्यस्य विशेष्यस्यासन्निहितत्वादित्यर्थः । पर्युदासस्थलेषूत्तरपदार्थस्य प्रतियोगितया नञर्थान्वयस्य क्लृप्तत्वादिति भावः । इदं सर्वं हरदत्तानुरोधेनेत्यनेन सूचिता-मरुचिं दर्शयन् सिद्धान्तमाह । यस्येति चेति सूत्रभाष्यात्त्विति । अस्य वक्ष्यमाणेन लभ्यत इत्यनेनान्वयः । पिण्डग्र इत्यादीति । अन्यथा पिण्डग्र इति समुदायस्य धातुभिन्नत्वाद्दीर्घस्स्यादिति भावः । ननु वर्णसंज्ञापक्षे एवं-रीत्या सुसखिशब्दे घिसंज्ञाया अप्रवृत्तावपि सिद्धान्तभूते तदन्तसंज्ञापक्षे घित्वं

धात्ववयवे लक्षणाऽऽकरे दृश्यते । तदन्तसञ्ज्ञापक्षेऽप्यसखीति य्वोरेव विशेषणं, ततस्तदन्तविधिः । 'उतश्च प्रत्ययाद्, इतिवत् । ततश्च सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः । तदन्तविधिश्च शेषपदार्थविशेषेणतया । एवञ्च प्रकृते नैव घिसञ्ज्ञा इति लभ्यते । तत्रहि भाष्ये 'इवर्णस्येति किमुदाहरणम् ? अतिसखेरागच्छति । यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वाद-तिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे

---

दुर्वारमेव । तत्पक्षे सख्यवयवभिन्नयोरिवर्णोवर्णान्तयोरित्यर्थेन समुदायस्य तद्भि-न्नत्वादित्याशङ्क्याह । तदन्तसंज्ञापक्षेऽपीति । ततस्तदन्तविधिरिति । गुणः कृतात्मसंस्कार इति न्यायेनेति भावः । एवं सति पर्यवसितार्थमाह । सख्यवयवभिन्नेत्यादि । सख्यवयवभिन्नौ याविवर्णोवर्णौ तदन्तं घिसंज्ञमिति तदन्तसंज्ञापक्षेऽप्यर्थ इति भावः । यदुक्तं यस्येति चेतिसूत्रभाष्यात्त्विति, तद्दर्शयति । तत्र हीत्यादिना । इवर्णस्येतीति । इवर्णस्येकारे परे लोपविधानस्य किं फलमिति प्रश्नाशयः । अतिसखेरागच्छतीति । सखिशब्दात् सख्यशिश्वीति भाषायामिति ङीषि कृते सखीमतिक्रान्त इति प्रादिसमासे लिङ्गविशिष्टपरिभाषाया अनित्यत्वादूचोऽप्रवृत्तौ गोस्त्रियोरिति ह्रस्वः । अत्राऽसखीति निषेधाऽप्रवृत्त्या घिसंज्ञासम्पत्तिर्लोपविधाने फलमित्युत्तराशयः । तदेतद्विशदयति । यद्यत्र लोपो न स्यादित्यादिना । नन्वत्र लोपाभावेऽपि न दोषः। पूर्वान्तवद्भावेन कृतदीर्घे सखिशब्दत्वातिदेशेऽपि ह्रस्वान्तत्वाभावेन तदानीं घिसंज्ञाया अप्राप्तेः । उपसर्जनह्रस्वोत्तरं तत्प्राप्तावपि सखिशब्दस्य लाक्षणिकत्वा-दसखीति निषेधाप्रवृत्तेरित्यत आह । अतिदेशविषय इति । पूर्वान्तवद्भावेन कृतदीर्घेतिऽदिष्टं सखिशब्दत्वमुपसर्जनह्रस्वोत्तरं स्थानिवद्भावेन ह्रस्वान्तेऽतिदिश्यते । एवञ्चातिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्याऽसखीति निषे-

कृतेऽपि घिसञ्ज्ञा न स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः' इत्युक्तम् । भवद्रीत्या हि विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति नदसङ्गतिः स्पष्टैव ॥

---

धात् घिसंज्ञा न स्यादिति भावः । घिसंज्ञा निर्बाधैवेति । अस्येकारस्य लोपाभावेऽपीत्यादिः । तदसङ्गतिरिति । इकारस्येकारे परे लोपविधानस्याऽतिसखेरागच्छतीति फलप्रदर्शनपरभाष्यासङ्गतिरित्यर्थः । ननु कैयटेन 'प्रसज्यप्रतिषेधे चाऽयं दोषो, न तु पर्युदासे, तदन्तस्य सखिशब्दादन्यत्वात् घिसंज्ञायास्सिद्धत्वादि' त्यादिना असखीत्यस्य प्रसज्यप्रतिषेधत्वमाश्रित्येदं भाष्यं योजितमेवेति नेदं भाष्यं त्वदुक्तार्थे मानमिति चेन्न । वर्णसंज्ञापक्षे प्रसज्यप्रतिषेधेऽपि सखिशब्दस्य तदवयवे लक्षणाया आवश्यकत्वेनाऽऽश्यकलक्षणाश्रयणेन पर्युदासपक्षेप्यस्य भाष्यस्य सुयोजत्वेन पक्षान्तरपरतया योजनपरस्य कैयटस्याऽयुक्ततया तदवलम्बनेनैतद्भाष्यस्यामानत्वोक्तेरयुक्तत्वात् । किञ्च प्रसज्यप्रतिषेधेऽपि नायं दोषः। अतिसखीति समुदायनिष्ठघिसंज्ञायास्तेन वारयितुमशक्यत्वात् । विशेष्यान्तरासत्त्वेऽपि सखिशब्दांशे शब्दस्वरूपाध्याहारमूलकतदन्तविधिकल्पने मानाभावादिति सर्वथा कैयटोक्तदिशा तद्भाष्ययोजनमयुक्तमेवेति बोध्यम् । स्पष्टश्चेदमुद्योते । सूचितश्चायमर्थः समुदायस्य सखिरूपत्वाभावादिति मूलयोजनावसरे 'पर्युदस्यमानसमर्पकसखिशब्दे तदन्तग्रहणं तु न, विशेष्यासन्निधानादिति वदता ग्रन्थकृताऽपि । न च पर्युदासपक्षे उत्तरपदार्थस्य नञर्थेन सामर्थ्याद्विशेष्यान्तरसम्बन्धप्रयुक्ततदन्तविधेस्सखिशब्दांशेऽभावेपि प्रसज्यप्रतिषेधपक्षे उत्तरपदार्थस्य नञर्थेन सामर्थ्याभावाच्छेषपदार्थविशेषणतया सखिशब्देन तदन्तविधिः कुतो नेति वाच्यम् । प्रसज्यप्रतिषेधेऽप्युत्तरपदार्थस्य नञर्थान्वयिन्येवान्वयस्य क्लृप्ततयाऽन्यत्र तदन्वयायोगात् । ननु सखिशब्दस्य तदवयवे लक्षणाङ्गीकारेऽपि न भाष्यसङ्गतिः । लोपेऽपि लिङ्गविशिष्टपरिभाषया

**न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः। सखिशब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाभावात्। प्रातिपदिकत्ववदुपस्थापकपदोपादानं हि प्रातिपदिकग्रहणम्। ख्यत्यात्सूत्रे—'किमर्थं विकृतनिर्देशो 'न सखिपतिभ्याम्' इत्येवोच्येत, अतिसखेरित्यत्र मा भूत्' इति भाष्येपि ङ्यन्तप्रकृतिक एवायम्। विहितविशेष-**

---

ङ्यन्ते सखिशब्दत्वातिदेशेनासखीति निषेधस्य दुर्वारत्वात्। अतस्सर्वथा तद्भाष्यमेकदेश्युक्तमेवेति न त्वदुक्तार्थे साधकमित्याशङ्कते। **न चेति**। **दोष इति**। घिसंज्ञानापत्तिरूप इत्यर्थः। समाधत्ते। **सखिशब्दस्येति**। नन्वेवं ख्यत्यात्सूत्रस्थभाष्यविरोधः। तत्र हि किमर्थं विकृतनिर्देशः, न सखिपतिभ्यामित्येवोच्येत। अतिसखेरित्यत्र माभूदित्युक्तम्। विकृतनिर्देशाभावेऽतिसखेरित्यत्राऽप्युत्वापत्तिरिति तदाशयः। तत्र सखीमतिक्रान्त इति विग्रहे ङ्यन्तसखिशब्दस्य लाक्षणिकत्वेन प्रतिपदोक्तपरिभाषयाप्युत्ववारणसंभवाद्विकृतनिर्देशस्य फलत्वप्रतिपादनमसङ्गतमेव स्यात्। अतोऽतिक्रान्तस्सखा येनेति विग्रहस्स्वीकार्यः। तथा च सख्यवयवभिन्नवर्णस्येत्यर्थेऽत्र घिसंज्ञाया अप्राप्त्या तदसङ्गतिस्स्पष्टैव। मूलोक्तार्थे तु विशिष्टस्य सखिभिन्नत्वेन घिसंज्ञा निर्बाधैवेति न तद्भाष्यासङ्गतिरित्याशङ्क्य तद्विरोधं परिहरति। **ङ्यन्तप्रकृतिक एवेति**। एवं च सखिशब्दस्य लाक्षणिकत्वेनासखीति निषेधाप्रवृत्तौ न तत्प्रयोगानुपपत्तिरित्याशयः। नन्वेवं सखिपतिभ्यामित्युक्तावप्यत्र सखिशब्दस्य लाक्षणिकत्वादुत्वाप्रवृत्त्या विकृतनिर्देशस्यात्र फलप्रदर्शनमयुक्तं स्यादत आह। **विहितविशेषणानाश्रयणेनेवेत्यादिना**। अयम्भावः। अतिक्रान्तस्सखा येनेति विग्रहेऽपि सखिपतिभ्यामित्यत्र विहितविशेषणत्वमाश्रित्य सखिपतिभ्यां विहितयोर्ङसिङसोरित्यर्थाश्रयणे दोषाभावात्तदनाश्रयणेनैव तद्भाष्यं प्रवृत्तमिति त्वयाप्यवश्यमभ्युपेयतया ममाऽपि सखिपति-

णानाश्रयणेनेव प्रतिपदोक्तपरिभाषानाश्रयणेनैवैतद् भाष्यं प्रवृत्तमिति न तद्विरोध इत्यलम् ॥

---

भ्यां परस्येत्यत्र प्रतिपदोक्तपरिभाषाया अप्यनाश्रयणेनैव तद्भाष्यं प्रवृत्तमिति न तद्विरोध इति । न च परस्येत्यनेन विरोधाद्विहितविशेषणासम्भव इति वाच्यम् । परस्येत्यस्याभावे पूर्वपरयोरित्यनुवृत्त्या सखिपतिभ्यां विहितयोर्ङसिङसोः परतः पूर्वपरयोरित्यर्थापत्त्या तन्निवृत्त्या परस्यैवादेशलाभार्थं तत्सत्त्वेन तद्विरोधाभावात् । नन्वेतद्भाष्यस्थातिसखेरित्यस्य ङ्यन्तप्रकृतिकत्वे तद्घटकसखीशब्दे लिङ्गविशिष्टपरिभाषया सखिशब्दत्वातिदेशे उपसर्जनह्रस्वोत्तरं स्थानिवद्भावेन सखिशब्दत्वातिदेशेऽतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्तेस्सिद्धान्तसिद्धतया तदनाश्रयणेनैतद्भाष्यप्रवृत्तिवर्णनमनावश्यकमेवेति चेन्न । विभक्तौ लिङ्गविशिष्टाग्रहणात् । अलमिति । तदर्थस्तु विहितविशेषणत्वस्य प्रतिपदोक्तपरिभाषाया वा आश्रयणे सह खेन वर्तत इति सखः, तत इच्छाक्यजन्तात्क्विपि सख्युरित्यादौ लून्युरित्यादौ चाऽव्याप्तिरेव विकृतनिर्देशस्य फलम् । अत एव तदुत्तरं भाष्ये 'इह च न स्यात् सखीयतेरप्रत्ययः, सख्युः, पत्युः, लूनीयतेरप्रत्ययः लून्युः पून्युरि'त्युक्तम् । कैयटेनाऽपि विहितविशेषणपक्षाश्रयणेऽव्याप्तिरेव दोष इत्युक्तमिति । एतेनैतद्भाष्यप्रामाण्यादसखीत्यस्य सखिभिन्नप्रातिपदिकावयवावित्यर्थं वदन्त औत्तराहाः परास्ताः । यदपि यस्येति चेति सूत्रस्थं भाष्यं न स्वोक्तार्थे साधकम् । विनाऽपि प्रत्ययमित्यनेनातिशब्दस्य लोपे ततो ङसि सखेरित्यत्र लोपाभावे घिसंज्ञानापत्तिरूपदोषस्य जागरूकत्वेन सखीशब्दे यस्येति लोपाभावेऽतिसखिरित्यादौ सखीशब्दे पूर्वान्तवद्भावेन सखिशब्दत्वे ह्रस्वान्ते एकदेशविकृतन्यायेन पुनस्तत्त्वेऽतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्या अनङ्णिद्वद्भावयोरापत्तिरूपदोषान्तरसत्त्वेन च भाष्यस्योपलक्षणतया व्याख्यातुं शक्यत्वादित्यौत्तराहाः, तन्न ।

घनिलचौ चेति सूत्रे मनुष्यनाम्न इत्यस्यानुवृत्त्या इलचो मनुष्यनामस्वेव प्रवृत्त्या तत्रैव तत्संभवेन 'चतुर्थादनजादौ च लोपः पूर्वपदस्य च। अप्रत्यये तथैवेष्ट उवर्णाल्ल इलस्य च'ेति वार्तिकस्थचरमवाक्यस्य मनुष्यनामस्वेव प्रवृत्तेर्वक्तव्यतया वाक्यान्तराणामपि तत्रैव प्रवृत्तेर्दृष्टत्वेन च तत्साहचर्यादप्रत्यये तथैवेष्ट इत्यस्यापि तत्रैव प्रवृत्तेर्न्याय्यतया तेनात्र लोपकथनस्यात्यन्तमयुक्तत्वात्। अत एव भाष्याद्याकरग्रन्थेष्वेतद्वार्तिकस्य मनुष्यनामान्येवोदाहृतानि। किञ्च विनापि प्रत्ययमित्येतन्नापूर्वम्। किं तु न्यायसिद्धार्थानुवादकम्। तथा हि, भीमसेनादिपदानां विशिष्टार्थे शक्तिग्रहकाले नान्तरीयकानां भीमादिपदैकदेशानामपि विशिष्टार्थे शक्तिग्रहाद्भीमादयः पदैकदेशाः पदस्यार्थे प्रयुज्यन्ते। भीमसेनपदं पृथक् प्रयुज्यमानं तदवयवपदं च भीमसेने शक्तमिति शक्तिग्रहः। सेनपदादपि विशिष्टार्थबोधापत्तिस्तु न। तत्पदस्य तत्रार्थे शिष्टप्रयोगाभावेन शक्तिग्रहे तद्विषयकत्वांशेऽप्रामाण्यसंदेहेन ततो बोधानुदयात्। अप्रामाण्यज्ञानानास्कन्दितशक्तिग्रहस्यैव बोधजनकत्वात्। शक्तिभ्रमाद्बोधोऽपि भ्रमत्वेनाज्ञातादेव। एवं कृष्णसर्प इत्येतत्पदैकदेशकृष्णपदेनापि न विशिष्टार्थबोधः। तत्पदस्य तत्रार्थे शिष्टप्रयोगाभावात्। एवं च यादृशपदैकदेशस्य विशिष्टार्थे शिष्टप्रयोगस्तत एव विशिष्टार्थबोधः। तस्यैव च तत्रार्थे साधुत्वम्, नान्यस्य। विनापि प्रत्ययमित्येतदप्येतल्लब्धार्थानुवादकं सद्भी इत्यादीनां वर्णानां विशिष्टार्थे साधुत्वं वारयति। पदैकदेशस्य विशिष्टार्थे शिष्टप्रयोगस्तु प्रायशो मनुष्यनामस्वेव दृष्टः। अत एव तस्य भाष्याद्याकरग्रन्थेषु सर्वत्र मनुष्यनामान्येवोदाहृतानि। क्वचिदन्यत्रापि तथा प्रयोगः। यथा 'इग्यणस्संप्रसारणम्' 'सिद्धे शब्दार्थसम्बन्धे' इत्यादिसूत्रवार्तिकादिप्रयोगेषु। क्वचित्पूर्वपदस्यैव तथा प्रयोगः, क्वचिदुत्तरपदस्यैव, क्वचिदुभयोरित्यत्र तु शिष्टव्यवहार एव नियामकः। तथा च स्वेच्छया अस्माभिस्तथा प्रयोगेऽसाधुत्वं स्पष्टमेवेति प्रकृते भाष्यस्यातिसखि-

पतिः समा । एवकार इष्टतोऽवधारणार्थः । स्मृतिपुराणेषु पतये सखिनेत्यादि व्याकरणानिष्पन्नत्वेनासाध्वेव । त्रिशङ्क्वाद्य-याज्ययाजनादाविव तपोमाहात्म्येनासाधुप्रयोगेऽपि ऋषीणां दोषा-भावात् । याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च । अस्माकमपि स्मृति-पुराणाध्ययनविधिबलात् तेषां तपोबलाच्च यज्ञमध्येऽपि तदन्तर्ग-ततत्पाठे दोषाभावः । स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः

---

शब्दैकदेशसखिशब्दोपलक्षकत्वकथनं सुतरामयुक्तमेव । सखीमतिक्रान्त इत्यर्थे केवलसखिशब्दस्य शिष्टप्रयोगाभावेन तदर्थे तस्यासाधुत्वात् । स्पष्टं चेदं मञ्जूषायाम् । किंच नागेशोक्तदिशा अतिसखेरित्यत्रापि फलस्य सम्भवेन तस्यो-पलक्षणपरतया व्याख्यानमयुक्तम् । ख्यत्यात्सूत्रविरोधस्य परिहृतत्वेनात्वसन्त-स्येत्यादिषु बहुषु प्रदेशेष्वाकरसम्मतस्यार्थस्य त्यागे मानाभावश्चेत्यवधेयम् ॥

इष्टतोऽवधारणार्थ इति । विपरीतनियमवारणार्थ इत्यर्थः । अन्यथा समासे पतिरेव घिसंज्ञ इत्यपि नियमाकारस्स्यात् । तथा चातिसखेरागच्छति, अतिसखेस्स्वमिति भाष्यप्रयोगविरोधस्स्यात् । धात्वादेरिति निर्देशेन विपरीत-नियमवारणे तु प्रतिपत्तिगौरवमिति भावः । ननु पतिशब्दस्समास एव घिसंज्ञ इति नियमेऽपि 'सीतायाः पतये नमः', 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतावि'ति स्मृतिपुराणीयप्रयोगविरोध इत्यत आह । स्मृतिपुराणेष्विति । नन्वसाधुशब्दप्रयोगे तेषां प्रत्यवायप्रसङ्ग इत्यत आह । त्रिशङ्क्वादीति । इदञ्च यज्ञकर्मणोऽन्यत्राप्यसाधुशब्दप्रयोगस्य प्रत्यवायजनकत्वमभ्युपेत्योक्तम् । वस्तुतो याज्ञे कर्मण्येवासाधुशब्दप्रयोगे दोषो, नान्यत्रेत्याह । याज्ञे कर्मणीति । ननु ऋषीणां तपोमाहात्म्येनासाधुप्रयोगे दोषाभावेऽपि ब्रह्मयज्ञमध्ये तादृशा-साधुपदघटितस्मृतिपुराणाध्ययनेऽस्माकं दोषः स्यादेवेत्यत आह । अस्माक-

प्रत्यवयन्त्येव । अत एव नदीसंज्ञासूत्रे भाष्ये छन्दोवत् कवयः कुर्वन्तीत्युक्त्वा न ह्येषेष्टिरस्तीत्युक्तम् । "यूस्त्र्याख्यौ" इति सूत्रे हरदत्तग्रन्थे स्पष्टनरश्चैतत् । समास इत्युक्तेः बहुच्-पूर्वे न घित्वम् । अत एव "पतिर्वृत्तावेव" इति नासूत्रि । वर्णसञ्ज्ञापक्षे पत्यवयवेकार इत्यर्थः । तदन्तसञ्ज्ञापक्षे पत्यवयवे-कारान्त इत्यर्थः । सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः ।

---

मपीति । अत एवेति । स्वातन्त्र्येणासाधुप्रयोगे प्रत्यवायसत्त्वादेवेत्यर्थः । लाघवात्पतिर्वृत्तावेवेति वक्तव्ये समास इत्युक्तेः फलं दर्शयति । बहुच्पूर्व इति । समास इत्युक्तेरित्यनेन सूचितमर्थं विशदयति । अत एवेति । तत्र घिसंज्ञाया अनिष्टत्वादेवेत्यर्थः । नाऽसूत्रीति । अन्यथा लाघवात्तथैव कुर्यादिति भावः । यत्तु वृत्तिसंज्ञायाः शास्त्रकारैरनुक्त्याऽस्मदादिकृतसंज्ञाया अव्यवस्थापकत्वेन च पतिर्वृत्तावेवेति न्यास एव वक्तुमशक्य इति वाराणसेयाः । तदयुक्तम् । कृत्तद्धित-समासैकशेषसनाद्यन्तधातुरूपासु पञ्चसु वृत्तिव्यवहारस्य पूर्वसिद्धतया तदनु-रोधेनापि पाणिनिना सूत्रप्रणयनस्य तत्र तत्र दृष्टचरत्वेन च तथान्यासकरणस्य शक्यत्वात् । इत्यर्थ इति । नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे समासाघटकपतिशब्दावयवेकारः घिसंज्ञको न भवतीति सूत्रार्थः । सिद्धान्तभूते विधिमुखप्रवृत्तौ तु घिसंज्ञासूत्रघटकेकारे समासघटकपतिशब्दावयवातिरिक्तत्वेन सङ्कोचादस्य विधित्वलाभ इति बोध्यम् । लाक्षणिक इति । अत एव भाष्योक्तवर्णसंज्ञापक्षतदन्तसंज्ञापक्षयोर्न फलभेदः । अन्यथाऽस्य नियामकत्वेन नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे समासाघटकपतिशब्दो घिसंज्ञको न भवतीत्यर्थात्केवलपतिशब्दस्यानेन घिसंज्ञानिषेधेऽपि वर्णस्य घित्वं दुर्वारमेव स्यात् । किञ्च पूर्वसूत्रेण वर्णस्यैव घिसंज्ञाविधानात्समुदायस्य घित्वाप्राप्त्या विशिष्टस्य निषेधविधानमप्यशक्यं स्यादिति नेष्टसिद्धिः । तदन्तसंज्ञापक्षे

एतेन 'शेषो घ्यसखिपती' 'पतिसखी समास एव' इति वा सूत्र्यतामित्यपास्तम् । 'यस्येति चेति सूत्रभाष्यरीत्या सुपतिना सुसख्येत्यादीष्टासिद्ध्या तथा न्यासस्य कर्तुमशक्यत्वादिति स्पष्टमेवेति दिक् ॥

नित्यं बहुवचनान्त इति । 'किमः संख्यापरिमाण' इत्यनेन किंशब्दाद् बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न एव डतिरिति भाष्ये

---

तु पूर्वसूत्रेण पतिशब्दस्य घिसंज्ञायाः प्राप्तौ समासाघटकस्य तस्यानेन घिसंज्ञानिषेधाद्भवतीष्टसिद्धिरिति तयोः फलभेदस्स्पष्ट एव। लक्षणा चात्रावयवमात्रे। इकार इत्यर्थस्तु यूग्रहणानुवृत्त्यैव सिद्ध इति बोध्यम् । एवं घिसंज्ञाविधिनियमशास्त्रयोर्भाष्यानुगृहीतमर्थं निरूप्य तत्र कैश्चिदुत्प्रेक्षितं न्यासान्तरं दूषयति । एतेनेति । प्रागुक्तभाष्यप्रामाण्यादसखीत्यत्र सखिशब्दस्य तदवयवे लक्षणाया आवश्यकत्वेनेत्यर्थः । अमुमेवार्थं स्पष्टप्रतिपत्तय आह । यस्येति चेति । इष्टासिद्ध्येति । तत्राद्यन्यासे सखिशब्दस्य तदवयवे लक्षणाया भाष्यसम्मततया तदनुरोधेन पतिशब्दस्याऽपि तदवयवे लक्षणा वाच्या । अन्यथा सख्यवयवभिन्नत्वमिकारस्य विशेषणम् । पतिभिन्नत्वमिकारान्तस्य विशेषणमित्येकधर्मावच्छिन्नेऽन्वयाभावेन द्वन्द्वानुपपत्तिस्स्यात् । एवञ्च तन्न्यासे सुपतिनेत्यस्यासिद्धिः । द्वितीयन्यासे तु सुसख्येत्यस्यासिद्धिरिति भावः । किञ्चाऽद्यन्यासे पतिश्च मित्रञ्चेति सहविवक्षायां द्वन्द्वे पतिमित्रमित्यत्र पतिशब्दस्य घिसंज्ञाप्रयुक्तपूर्वनिपातानापत्तिरपि दोषो बोध्यः ॥

कतिशब्दस्य नित्यबहुवचनान्तत्वे उपपत्तिमाह । किमस्संख्येत्यादि । बहुत्वसंख्येति । बहुत्वव्याप्यत्रित्वादिसंख्येत्यर्थः । एतेनेदं प्राचामनुसारेण । स्वमते बहुत्वे सङ्ख्यात्वाभावस्य वक्ष्यमाणत्वादिति भट्टानां व्याख्यानं नात्यन्तमादरणीयमिति बोध्यम् । भाष्ये स्पष्टत्वादिति । तत्र हि किमित्ये-

स्पष्टत्वादिति भावः । बहुगुण । संख्याप्रदेशेष्वेतत्सञ्ज्ञाकरणज्ञानरूपप्रकरणसत्त्वेऽपि तन्मूलकृत्रिमाकृत्रिमन्यायस्य न प्रवृत्तिः, कर्त्तरि कर्मेत्यादाविव । अत एव 'संख्याया अतिशदन्तायाः' इति शदन्तपर्युदासः सङ्गच्छते । न हि शदन्ता कृत्रिमा संख्या-

---

तत्परिप्रश्ने वर्तते । परिप्रश्नश्चानिर्ज्ञाते । अनिर्ज्ञातश्च बहुषु भवति । द्व्येकयोः पुनर्निर्ज्ञातमेवेत्युक्तम् । द्व्येकयोस्संख्याया निर्णयेन प्रष्टव्यत्वाभावेन किमोऽप्रयोग इति तदाशयः । एवञ्च बहुत्वावच्छिन्नस्यात्र नियमेनोपस्थित्या बहुवचनान्तत्वं न्याय्यमेवेति भावः ॥

नन्वेतत्सूत्रारम्भे कृत्रिमाकृत्रिमन्यायेन संख्याप्रदेशेषु बह्वादीनामेव ग्रहणं स्यान्न त्वेकद्व्यादीनामित्याशङ्कां परिहरति । **संख्याप्रदेशेष्विति** । **न प्रवृत्तिरिति** । उभयगतिरिति परिभाषासत्त्वादिति भावः । तत्र मानमाह । **अत एवेति** । तादृशपरिभाषासत्त्वादेवेत्यर्थः । **शदन्तपर्युदास इति** । इदमुपलक्षणम्, त्यन्तपर्युदासस्यापि । अत एव यच्चापि त्यन्तायाः प्रतिषेधं शास्तीत्यादिना तस्यापि ज्ञापकत्वमुक्तं भगवता । ननु त्यन्तः कतिशब्दः कृत्रिमोऽस्तीति कथं तत्पर्युदासो ज्ञापकः । न चार्थवद्ग्रहणपरिभाषयाऽर्थवतस्तिशब्दस्य ग्रहणेन कतेस्तिशब्दस्यानर्थकत्वात्कृत्रिमसंख्यास्वर्थवत्त्यन्तभेदस्याव्यभिचरिततया व्यावर्त्यालाभात्तद्विशेषणं व्यर्थं सज्ज्ञापकं भवत्येवेति वाच्यम् । अस्यामवस्थायां संख्यापदेन कृत्रिमानामेव ग्रहणात्तासु चार्थवत्त्यन्तानामभावादर्थवदनर्थकयोरुभयोरपि ग्रहणप्रसङ्ग एवार्थवद्ग्रहणपरिभाषाप्रवृत्त्याऽत्र तत्परिभाषाया अप्रवृत्तेरिति चेदत्रोच्यते । अतिशदन्ताया इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन संख्याविशेषणतयाऽन्वयस्य वाच्यतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणतया च तत्पदजन्योपस्थितिकाले अर्थवदनर्थकयोरुभयोरपि तिशब्दयोः संभवेन पूर्वमर्थवत्परिभाषयाऽर्थवतस्तिशब्दस्य ग्रहणे निर्णीते पश्चात्संख्यापदा-

ऽस्ति । तस्मात्संख्याप्रदेशेषूभयगतिः । किं च लोकप्रसिद्धमहासंज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिति स्पष्टं भाष्ये । अत एव पञ्चकृत्व इत्यादिसिद्धिः । एतन्न्यायोपयोगस्त्वभ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः । सूत्रे बहुगणग्रहणन्तु तयोर्नियतविषयपरिच्छेदहेतुत्वाभावेनासंख्यात्वात् । बहुत्वादि हि

---

न्वयवेलायां जायमानानुपपत्तिज्ञानेन परिभाषाज्ञापनं युक्तमेव । अत एव परिभाषेन्दुशेखरे तस्यापि ज्ञापकत्वमुक्तं ग्रन्थकृता । स्पष्टश्चेदं प्रदीपोद्योतयोः । संख्याप्रदेशेषु लोकप्रसिद्धसंख्याया अपि ग्रहणे भाष्यकृदुक्तं पक्षान्तरं दर्शयति । किञ्चेति । महासंज्ञाकरणेनेति । तद्धि अन्वर्थत्वविज्ञानात्संघवैपुल्यवाचिनोर्बहुगणयोस्संज्ञावारणायेति वाच्यम् । तदभावेऽपि परस्परसाहचर्यात्संख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणमित्याश्रयणेन तयोस्संज्ञाया वारयितुं शक्यतया न तदर्थमन्वर्थसंज्ञा । अतस्तत्सामर्थ्यात् प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्यापि ग्रहणं सिद्ध्यतीति भावः । अत एव = प्रदेशेषु लोकप्रसिद्धार्थस्यापि ग्रहणादेव । नन्वेवं कृत्रिमाकृत्रिमन्यायस्य का गतिरत आह । एतन्न्याय इति । अभ्यासाम्रेडितेति । तत्रानेन न्यायेन कृत्रिमस्यैव ग्रहणं, न तु लोकप्रसिद्धार्थस्य, महासंज्ञाकरणन्तु प्राचामनुरोधेनैवेति भावः । ननु संख्याप्रदेशेषु एकत्र्यादीनामिव बहुगणयोरपि ग्रहणे सिद्धे तयोरनेन संज्ञाविधानं व्यर्थमत आह । सूत्र इति । तयोरिति । तदर्थयोरित्यर्थः । नियतविषयपरिच्छेद इति । नियतो यो विषयपरिच्छेदः, विषयज्ञानं, तद्धेतुत्वाभावेनेत्यर्थः । नियतत्वं च त्रित्वादीनामवान्तरधर्मप्रकारकसंशयानुत्थापकत्वम् । वक्ष्यमाणभाष्यप्रामाण्यान्नियतविषयपरिच्छेदहेतोरेव संख्यात्वेन बहुत्वादेस्तथात्वाभावात्संज्ञां विना तयोः संख्यापदेन ग्रहणं न भवतीति भावः । ननु तर्हि बहुपदशक्यतावच्छेदकं बहुत्वं किं, तत्राऽऽह । बहुत्वादीति । आदिना गणत्वम् ।

त्र्यादिसङ्ख्याव्यापको धर्मविशेषः। अत एव भाष्ये 'एतत्सूत्रमतिदेशार्थं, यदयमसङ्ख्यां सङ्ख्येत्याह' इत्युक्तम्। यत्तु भाष्ये 'एकादिकया चापि सङ्ख्यायते' इत्युक्तं, तस्यायमर्थः। बह्वादिकयाऽपि स्वव्या-

---

त्र्यादिसंख्येति। त्रित्वादिसंख्येत्यर्थः। धर्मविशेष इति। अखण्डोपाधिरूपो, न तु जातिरूपः। तत्त्वे मानाभावादित्यर्थः। अत एवेति। बहुत्वादेरसंख्यत्वादेवेत्यर्थः। इत्युक्तमिति। तत्र ह्यस्य सूत्रस्य संज्ञाविधायकत्वे कृत्रिमाकृत्रिमन्यायेन प्रदेशेषु बह्वादीनामेव ग्रहणं स्यान्न त्वेकत्र्यादीनामिति तेषामपि तत्र ग्रहणाय तेषामप्यनेन सङ्ख्यासंज्ञा विधेयेत्याशयक 'सङ्ख्यासंज्ञायां संख्याग्रहणं संख्यासम्प्रत्ययार्थमिति कात्यायनवचनस्य प्रत्याख्यानाय 'अथवा नेदं संज्ञाकरणं तद्वदतिदेशोऽयं बहुगणवतुडतयस्संख्यावद्भवन्तीति। स तर्हि वतिनिर्देशः कर्तव्यः, न कर्तव्यः। अन्तरेणापि वचनमतिदेशो गम्यते। तद्यथा, अब्रह्मदत्तं ब्रह्मदत्त इत्याह। तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यसंख्यां संख्येत्याह संख्यावदिति गम्यत' इति पक्षान्तरमुक्तम्। यद्यत्र संख्याशब्दस्संज्ञापरस्स्यात्तदा टिघुभादिसंज्ञावदेकाक्षरा क्रियेत। तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयतीति तदाशयं कैयटः। एवं चास्य संज्ञाविधायकत्वाभावे प्रदेशेषु न कृत्रिमाकृत्रिमन्यायप्रवृत्त्यवकाश इति भावः। बहुगणयोस्संख्यावाचकत्वे तु तदसङ्गतिस्स्पष्टैव। ननु बहुत्वादेस्संख्यात्वे एकादिकया चापि संख्यायत, इति प्रकृतसूत्रस्थभाष्यविरोधः। तत्रापिशब्देन बह्वादिष्वपि संख्यापदयोगार्थस्य प्रदर्शितत्वादित्याशङ्क्य तदाशयं वर्णयति। यत्त्विति। बह्वादिकयेति। बहुगणशब्दवाच्यबहुत्वादिकयेत्यर्थः। स्वव्याप्येति। एवञ्च स्वव्याप्यत्रित्वादिद्वारकपरम्परया कथञ्चिद्बहुत्वादेस्संख्यानकरणत्वेन न तयोरत्यन्तमवयवार्थबाध इत्येव तद्भाष्याशय इति न तद्भाष्यविरोध इति भावः। एवं बहुगणशब्दयोः

प्यत्रित्वादिसङ्ख्यया सङ्ख्यायते । कतिशब्दोऽपि सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकतया सङ्ख्यानकरणम् । एवं वत्वन्तेऽप्यूह्यम् । यद्वा चापिशब्दौ वाक्यालङ्कारे । एकादिकया सङ्ख्यायते साऽपि प्रदेशेषु यथा गृह्येतेति लोकप्रसिद्धमहासञ्ज्ञाकरणमिति तदर्थः । एतेन 'अर्थान्तरवाचित्वे, सति बहुत्ववाचिनश्चेत्सङ्ख्याकार्यं, तर्हि बहुगणयोरेव'

---

कथञ्चिदवयवार्थस्योपपत्तिमुपपाद्येतरयोरपि तां दर्शयति । कतिशब्दोऽपीति । संख्यानेति । संख्यानकरणीभूतो योऽर्थस्त्रित्वादिरूपस्तद्विषयप्रश्नार्थकतयेत्यर्थः । वत्वन्तेऽपीति । कियानियानित्यादावित्यर्थः । ननु कथञ्चिद्बह्वादीनां संख्यानकरणत्वस्य सत्त्वात्प्रदेशेषु संज्ञां विनैव बह्वादीनामपि ग्रहणे सिद्धे किं संज्ञाविधानेनेति चेन्न । संज्ञाविधानाभावे संख्यापदेन साक्षात्संख्यानकरणीभूतार्थवाचकलोकप्रसिद्धानामेव ग्रहणापत्त्या यदयमसङ्ख्यां सङ्ख्येत्याहेति भाष्येण बह्वादीनां लोकप्रसिद्धसङ्ख्यावाचकत्वाभावबोधनादेषां तद्ग्रहणस्य दुर्वचत्वात् । संज्ञाविधाने तु तद्बलाद्यथाकथञ्चित्सङ्ख्यानकरणीभूतार्थवाचकानामपि ग्रहणसिद्धिरिति तत्तात्पर्यात् । इदं चापिशब्दार्थयोर्वाक्यार्थान्वयित्वमभिप्रेत्य, वस्तुतस्तदेव नेत्याह । यद्वेति । वाक्यालङ्कार इति । एवञ्चैतद्भाष्येण बह्वादीनां सङ्ख्यानकरणत्वस्याबोधनान्न तद्विरोधाशङ्का । बह्वादिषु सङ्ख्यापदस्यान्वर्थता नास्त्येव । प्रदेशेषु महासंज्ञाकरणसामर्थ्यादेकादीनां, संज्ञाविधानेन बह्वादीनां च ग्रहणं भवतीति भावः । लोकप्रसिद्धेति । संज्ञाकरणस्य लाघवार्थतया टिघुभादिवदेकाक्षरसंज्ञायामेव कर्तव्यायां लोकप्रसिद्धमहासंज्ञाकरणं सामर्थ्यात्प्रदेशेषु लोकप्रसिद्धार्थस्यापि ग्रहणमवगमयतीति भावः । संघवैपुल्यवाचिनोर्बहुगणयोस्संज्ञावारणन्तु न तत्फलमित्युपपादितं प्राक् । एवं तद्भाष्याशयं स्वयमुपवर्ण्य तत्र कैयटोक्तं दूषयति । एतेनेति । एकादिकया चापीतिभाष्यस्य प्रागुक्ताशयकत्वेन नियतविषयपरिच्छेदहेतुत्वा-

**इति नियमार्थं तत्। तेन भूर्यादीनां न। तेषां वैपुल्याद्यर्थान्तरवाचित्वात्। वैपुल्यं विशालता। विशेष्यविशेषणदलाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिनां त्र्यादीनाञ्च न व्यावृत्तिः। यद्वा 'अनियतसङ्ख्यावाचिनाश्चेद्बहुगणयोरेव' इति नियमः। अनन्तशब्दवदनन्तवाचिशतशब्दस्य सङ्ख्याकार्याभाव इष्ट एवेत्यपास्तम्।**

---

भावेन बहुत्वादेरसङ्ख्यात्वेन चेत्यर्थः। **नियमार्थं तदिति**। अथवा महतीयं संज्ञा क्रियत इति भाष्यमुपादाय 'ननु महत्यास्संज्ञायाः करणात्संघवैपुल्यवाचिनोर्बहुगणयोः संज्ञा माभूदेकादीनां तु कथं स्यादित्याशङ्क्य तदाशयं कैयट आह। सङ्ख्येति योगो विभज्यते', महासंज्ञाकरणेन चान्वर्थत्वाश्रयणात्संज्ञायास्संज्ञ्याकाङ्क्षतया च तावदनुरूपो नियतानियतसङ्ख्यावाची सर्व एव संज्ञी आक्षिप्यते। एवंच सङ्ख्यानकरणीभूतास्सङ्ख्यासंज्ञका इत्यर्थः। अतस्सङ्ख्याप्रदेशेषु बह्वादीनामेकादीनां च ग्रहणं सिद्धम्। ततो बहुगणवतुडतय इति द्वितीयं सूत्रम्। विभक्तसूत्रेणैव सिद्धे इदं सूत्रं नियमार्थमिति नियमफलं दर्शयति। **तेनेति**। अन्यथा सामान्यसूत्रेण तेषामपि संज्ञा स्यादिति भावः। **न व्यावृत्तिरिति**। विशेष्यदलं विहायार्थान्तरवाचिनां चेद्बहुगणयोरेवेत्येतन्मात्रोक्तावेकशब्दस्यैकोऽन्यार्थे प्रधाने चेति कोशादनेकेषामर्थानां सत्त्वात्तस्य संज्ञानापत्तिः। विशेषणदलं विहाय बहुत्ववाचिनां चेद्बहुगणयोरेवेत्येतन्मात्रोक्तौ बहुत्ववाचिनां त्र्यादिशब्दानां संज्ञानापत्तिरतो दलद्वयं नियम्यकोटावावश्यकमिति भावः। नियमशरीरे लाघवायाह। **अनियतेति**। नन्वेवमनन्तवाचिशतशब्दस्य सङ्ख्याकार्यं न स्यादित्याशङ्कामिष्टापत्त्या समाधत्ते। **अनन्तवाचिशतशब्दस्येति**। **अपास्तमिति**। यदयमसङ्ख्यां सङ्ख्येत्याहेति भाष्येण बह्वादिषु सङ्ख्यापदयोगार्थाभावबोधनेन द्वितीयसूत्रस्य नियामकत्वासङ्गतेर्योगविभागं विनाऽपि पूर्वोक्तदिशा प्रदेशेष्वेकाद्यादीनां ग्रहणसम्भवाच्चैषा क्लिष्टकल्पना दुःखा दुरुपपादा चेति भावः॥

यत्त्वेतत्प्रतीकमुपादाय 'परे तु सङ्ख्यावाचकत्वं सङ्ख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वमेव । अत एवैकादिकया चाऽपि सङ्ख्यायत इति भाष्ये चापिशब्दौ सङ्गच्छेते । अन्यथा बह्वादीनां निरुक्तसङ्ख्यावाचकत्वस्याभावेन तदसङ्गतिस्स्पष्टैव । न च यदयमसङ्ख्यां सङ्ख्येत्याहेति भाष्यविरोध इति वाच्यम् । वत्वन्तस्य डतिप्रत्ययान्तस्य च सङ्ख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वरूपसंख्यावाचकत्वस्याभावेन तस्य भाष्यस्य तद्विषयकत्वेनादोषात् । भूर्यादीनां तु 'अनियतसंख्यावाचिनां चेद्बहुगणयोरे'वेत्यादि नियमेनैव वारणं बोध्यमित्याहुरि'त्यौत्तराहाः । तदयुक्तम् । एकादिकया चापीति भाष्यस्थचापिशब्दार्थयोर्वाक्यार्थान्वयित्वस्वीकारे तेन सूत्रोपात्तेषु चतुर्ष्वपि बह्वादिषु संख्यानकरणीभूतार्थवाचकत्वलाभात्तद्भाष्यबलेन वत्वन्तडत्यन्तासंग्राहकतया संख्यावाचकत्वपरिष्करणस्य तेषामयुक्तत्वात् । चापिशब्दाभ्यां बहुगणयोरेव संख्यानकरणत्वप्रतिपादने भाष्यतात्पर्यं, न त्वितरयोरपीति कल्पनायां मानाभावात् । बह्वादीनां चतुर्णामपि नियामकत्वप्रतिपादनपरप्रकृतसूत्रस्थकैयटेन डति चेतिसूत्रस्थकैयटेन च चतुर्णामपि संख्यानकरणीभूतार्थवाचकताया लाभेन तन्मतस्थापनाग्रहवतां तेषां तत्सिद्धान्तविरुद्धार्थकथनस्यात्यन्तमयुक्तत्वात् । किंच यदयमसंख्यां संख्येत्याहेति भाष्यस्य वत्वन्तडत्यन्तमात्रविषयकत्वकल्पनमपि सुतरामयुक्तम् । तथा सति सूत्रस्य बहुगणशब्दविषये संज्ञाविधायकताया इतरविषयेऽतिदेशबोधकत्वस्य च वक्तव्यतया वैरूप्यापत्तेः । वाक्यभेदप्रसङ्गाच्च । 'अथवा नेदं संज्ञाकरणं तद्वदतिदेशोऽयमि'ति सम्पूर्णसूत्रस्यातिदेशशास्त्रत्वप्रतिपादनपरप्रकृतसूत्रस्थभाष्यविरोधाच्च । किंच त्वदुक्तरीत्या बहुगणशब्दयोस्संख्यावाचकत्वस्यैव भाष्याभिप्रेतत्वे 'यदयमसंख्यां संख्येत्याहे'ति भाष्योत्तरं बहुगणशब्दविषयेऽतिदेशत्वानुपपत्तिशङ्कासमाधाने कुर्यात् । तथाऽकरणेन च तयोरप्यसंख्यात्वमेव भाष्याभिप्रेतमित्यवधेयम् । ननु महासंज्ञाकरणसामर्थ्याल्लौकिकसंख्याया

**संघवैपुल्यवाचकयोर्नेह ग्रहणं, परस्परसाहचर्येण त्र्यादिसङ्ख्याव्यापकधर्मवाचिनोरेव ग्रहणात्। 'वतु' इति सानुबन्धनिर्देशो ब्राह्मणवदित्यादिव्यावृत्त्यर्थः। डतिस्तद्धित एव, वतुसाहचर्यादित्यलम्। 'ष्णान्ता' इत्यतः षडिति वर्तते, सङ्ख्येति च प्रकृतं तदाह—डत्यन्तेति। अत एव 'षट्कति' इति डडनुवादेन थुग्विहितः।**

---

अपि प्रदेशेषु ग्रहणमिति भाष्याशयवर्णनमयुक्तम्। संघवैपुल्यवाचिनोर्बहुगणयोस्संज्ञानिरासाय तत्सार्थक्यादित्याशङ्क्याह। **संघेत्यादि**। अस्य ग्रन्थस्य यदीदं सूत्रं न नियमार्थं, तदा संघवैपुल्यवाचकयोरपि ग्रहणं प्राप्नोतीत्यत आहेति मिश्रोक्तमवतरणं तु न सम्यक्। नियमार्थत्वाश्रयणेऽपि नियमेन तयोस्संज्ञाया वारयितुमशक्यत्वात्। **परस्परसाहचर्येणेति**। अवैपुल्यार्थकगणशब्दसाहचर्याद्बहुशब्दस्य तथाविधस्यैव ग्रहणम्। तस्य च त्र्यादिसङ्ख्याव्यापकधर्मविशेषवाचकतया तादृशबहुशब्दसाहचर्याद्गणशब्दस्यापि तथाविधस्यैवेत्येवं परस्परसाहचर्येणेत्यर्थः। **सानुबन्धनिर्देश इति**। उकारानुबन्धनिर्देश इत्यर्थः। अन्यथा निरनुबन्धकस्य वत उभयसाधारणत्वात्तस्यापि ग्रहणं स्यादिति भावः। पतिशब्दस्याप्यौणादिकडतिप्रत्ययान्तत्वेन संज्ञाप्रसङ्गं वारयति। **डतिस्तद्धित एवेति**॥

संज्ञाविधावपि तदन्तविधावुपपत्तिं दर्शयति। **संख्येति च प्रकृतमिति**। अत्र तदन्तविध्यभावे केवलप्रत्ययमात्रस्य संख्यासंज्ञाया अभावेन तेन सहान्वयासम्भवात्संज्ञाविधावप्यत्र तदन्तविधिरिति भावः। ननु संज्ञाविधाविति निषेधात्संख्यासंज्ञाया डतेरेव सत्त्वेनात्र तदनुवृत्तावपि तदन्तविधिर्दुरुपपाद एवेत्याशङ्क्य तत्र तदन्तविधौ मानमाह। **अत एवेति**। संख्यासंज्ञायां तदन्तविधेरेवेत्यर्थः। **डडनुवादेनेति**। अन्यथा तस्य पूरण इत्यत्र प्रातिपदिकाधिकारात्प्रातिपदिकसंज्ञकात्संख्यावाचकाड्डडित्यर्थे कतिशब्दात्तदप्राप्त्या तदनुवादेन

**अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । सङ्ख्येति किम् । पतयः ॥**

**प्रत्ययस्य । अनेकसञ्ज्ञाकरणादावृत्त्या विभक्तिविपरिणा-**

---

थुग्विधानमसङ्गतं स्यादिति भावः । यद्यपि केवलयोस्संज्ञायाः फलाभावात्तत्र तदन्तविधिर्वक्तुं शक्यः, उक्तं च तथैव हरदत्तेनाऽपि, तथात्युपायस्योपायान्तरादूषकत्वादेवमुक्तमिति बोध्यम् । पूर्वसूचितमेवार्थं स्पष्टप्रतिपत्तय आह । **अत एवेति** । संख्येत्यस्य प्रकृतेऽनुवर्तनादेवेत्यर्थः । यद्यपि संख्यापदाननुवृत्तावपि केवलप्रत्ययस्य संज्ञायां फलाभावात्संज्ञाविधावपि तदन्तविधिर्लभ्यत एव, तथाऽपि शास्त्रारम्भसामर्थ्यात्संज्ञाविधावित्यस्याप्रवृत्तिकल्पनापेक्षया पतिशब्दस्य संज्ञावारणायावश्यकसंख्यापदानुवृत्त्यैव तदप्रवृत्तिकल्पने लाघवमित्याशयेनैवमुक्तमिति बोध्यम् । **पतय इति** । संख्याग्रहणाननुवृत्तौ डत्यन्तं शब्दस्वरूपं षट्संज्ञमित्यर्थादौणादिकडतिप्रत्ययान्तपतिशब्दस्यापि षट्संज्ञायां षड्भ्यो लुगिति जसो लुगापत्तिः । तदनुवृत्तौ तु संख्यासंज्ञासूत्रे वतुसाहचर्यात्तद्धितडत्यन्तस्यैव संख्यासंज्ञात्वेन नास्य षट्त्वप्राप्तिरिति भावः । वस्तुतस्त्वेतत्सर्वं डति चेति सूत्रस्थकैयटानुरोधिमूलकृन्मतेन, सिद्धान्ते तु तदनुवृत्तिरनावश्यिकैव । उणादीनामव्युत्पन्नत्वाच्च पतिशब्दे न दोषः । व्युत्पन्नत्वेऽपि पातेः कतिनाऽपि तत्सिद्धिरिति न तत्र डतिनियम इति बोध्यम् । स्पष्टं चेदमुद्योते ॥

ननु प्रत्ययादर्शनं लुक्श्लुलुप्संज्ञमित्यर्थे लुगादिसंज्ञानां परस्परं साङ्कर्यप्रसङ्गः । लोपशब्देन भावितप्रत्ययादर्शनविषयेऽप्यासां प्रसङ्ग इत्यत आह । **अनेकसंज्ञाकरणादिति** । यद्यासां परस्परं साङ्कर्यं स्यात्तदा तिसृणामपि संज्ञानां समानफलकत्वस्यैव लाभेनैकस्य समानफलकानेकसंज्ञाकरणस्य वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतत्वेनानेकसंज्ञाकरणमनर्थकं स्यात् । तस्मादनेकसंज्ञाविधानात्तद्भावितानां संज्ञाऽश्रीयत इति न साङ्कर्यप्रसङ्ग इति भावः । तद्भावितग्रहणे उपायं दर्शयति । **आवृत्त्येति** । यद्यप्यदर्शनबोधका लुगादिशब्दाः

प्रत्ययादर्शनस्य संज्ञा इत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते, तस्यैव सा संज्ञेत्यर्थ आवृत्तिं विनाऽपि लभ्यते, तथाऽपि तादृशी प्रत्यासत्तिस्सर्वैर्दुर्ज्ञेये-त्याशयेनैवमुक्तमिति बोध्यम् । स्पष्टं चेदं प्रदीपोद्योतयोः ॥

आचार्यास्तु—अत्र तद्भावितसंज्ञाश्रयणे विधिप्रदेशेष्वन्योन्याश्रयपरिहाराय भाविसंज्ञाश्रयणे गौरवादनेकसंज्ञाकरणसामर्थ्यादाकडारीयत्वाभावेऽपि नाऽसां संज्ञानां समावेश इत्येव युक्तम् । लोपसंज्ञा त्वासां विषये प्रवर्तत एव । बाधकाभावात् । न ह्येता इव लोपसंज्ञा प्रत्ययादर्शनमुद्दिश्य विहिता, किन्त्वदर्शनमात्रम् । एकसंज्ञ्युद्देश्यकानेकसंज्ञानां तु पृथक्संज्ञाकरणसामर्थ्यान्न युक्तस्समावेशः । न लुमतेति निषेधाच्च लोपसंज्ञैव तासां विषये प्रवर्तते । लोपसंज्ञाविषये तु नासां प्रवृत्तिः । पृथक्संज्ञात्रयकरणसामर्थ्येन स्वभिन्नसंज्ञासामान्यविषये आसामप्रवृत्तिकल्पनात् । अत एव प्रत्ययलोप इति सूत्रस्थं भाष्यं संगच्छते । तत्र हि प्रत्ययादर्शनं तु लुमत्संज्ञमित्यादिना लुगादिसंज्ञानां परस्परं साङ्कर्यमाशङ्क्य, न वा पृथक्करणात् । न वा एष दोषः, किं कारणम्, पृथक्करणात् । पृथक्करण-सामर्थ्याल्लुकि श्लुविधिर्न भविष्यतीति समाधायानन्तरं 'तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञामवगाहत' इति लुगादिसंज्ञाविषये लोपसंज्ञायाः प्रवृत्तिमुपपाद्य ततो 'यथैव तर्हि अदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञामवगाहते, एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन् । तत्र को दोषः । अगोमती गोमती सम्पन्ना गोमतीभूतेति लुक्तद्धितलुकीति ङीपो लुक् प्रसज्येतेत्युक्तम् । न वा पृथक्करणादिति भाष्यस्य तद्भावितसंज्ञाभिप्रायकत्वे तु लोपसंज्ञाविषयेऽपि लुगादिसंज्ञानां प्रवृत्तिशङ्कापरं यथैव तर्हीत्याद्युत्तरभाष्यमसङ्गतं स्यादतः प्रागुक्तरीत्यैवाऽसां समावेशाभावकल्पनमुचितमित्याशयमाविश्चक्रुः । तन्न । संज्ञाविधायकेष्विग्यणस्सम्प्रसारणमित्यादिषु प्रदेशेषु यण इगित्येव सिद्धे संज्ञाविधानसामर्थ्यात्तद्भावित-संज्ञाश्रयणस्याऽऽवश्यकतयाऽत्रापि तद्रीत्या पृथक्संज्ञाकरणसामर्थ्यात्तद्भा-

वितपक्षाश्रयणेन साङ्कर्याभावप्रतिपादन एव भाष्यतात्पर्यवर्णनस्य न्याय्यत्वात् । उपपत्तिं विना केवलं पृथक्संज्ञाकरणसामर्थ्येन परस्परसमावेशाभावकल्पनस्यायुक्तत्वात् । अत एव कैयटहरदत्तादिभिः कौस्तुभकृता चैवमेव लुगादिसंज्ञानां समावेशाभाव उपपादितः । उद्योतकृताऽपि 'यथैव तर्हीत्यादिभाष्याशयवर्णनपरस्य 'तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां माभूत् । लोपसंज्ञाविषये तु ताः प्रवर्तेरन्निति कैयटग्रन्थस्य व्याख्यानावसरे' तद्भावितग्रहणे यथैवेत्यादिग्रन्थोऽनुपपन्न इत्यत आह । तिसृणामिति । इतरेतराश्रयपरिहाराय भाविसंज्ञाविज्ञाने गौरवापत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो भगवता, न तु तद्भावितसंज्ञाश्रयेणेत्यभिमान इत्युक्त्या, उपपत्तिं विना केवलं संज्ञात्रयकरणसामर्थ्येन समावेशाभावकल्पनमयुक्तमित्यर्थस्सूचितः । कैयटोऽपि 'यथैव तर्हीत्यादिशङ्कापरभाष्यसमाधानभूतं 'ननु चात्रापि पृथक्संज्ञाकरणादित्येव सिद्ध'मिति सिद्धान्तभाष्यं लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थ इत्येव व्याचख्यौ, न त्वाचार्योक्तदिशा । तस्माद्बहुग्रन्थविरोधादुपपत्तिशून्यत्वाच्चाचार्योक्तं नादरणीयमिति बोध्यम् । ननु पृथक्संज्ञाकरणसामर्थ्यादिति भाष्यस्य तद्भावितसंज्ञाभिप्रायकत्वे यथैव तर्हीत्यादिशङ्कापरभाष्यमनुपपन्नं स्यादिति चेन्न । एतद्भाष्यस्य 'न वा पृथक्करणादि'ति भाष्यस्य पूर्वोक्ताशयकत्वाज्ञानेन प्रवृत्ततयैकदेश्युक्तित्वेनादोषात् । अत एव तदुत्तरमेकदेश्युक्तशङ्कासमाधानाय पूर्ववार्तिकाशयं स्पष्टयितुं तेनैव वार्त्तिकेन सिद्धिरुक्ता । पूर्ववार्तिकस्य त्रयाणामेव परस्परसाङ्कर्यवारणपरत्वे तूत्तरत्र 'इत्येव, सिद्धमित्युक्तेरसाङ्गत्यं स्पष्टमेव । न वा पृथक्करणादित्येव सिद्धमिति भाष्यस्य लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थ इति व्याचक्षाणः कैयटोऽपि यथैव तर्हीत्यादिभाष्यं पूर्वभाष्याशयाज्ञानेनैव प्रवृत्तमित्यर्थं सूचयति । किं चोत्तरत्र 'न वा पृथक्करणादित्येव सिद्ध'मिति भाष्याक्षरानुगुण्याय

**मेन च तद्भाविसञ्ज्ञाश्रयणम्, अतो न सङ्करः। तेन 'हन्ति' इत्यादौ 'श्लौ' इति द्वित्वं न, तदाह—लुक्श्लुलुप्शब्दैरिति। 'अदर्शनं लोपः' इत्यतोऽदर्शनमित्यनुवर्त्तते। प्रदेशेषु भाविसञ्ज्ञाविज्ञानाञ्चान्योन्याश्रयः। एकसञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः। तेन प्रत्ययलक्षणसिद्धिः॥**

---

'न वा पृथक्करणादिति' पूर्वभाष्यस्यान्यसंज्ञाविषय इव लोपसंज्ञाविषयेऽपि लुगादिसंज्ञानामप्रवृत्तिरित्याशयो यदि त्वया कल्प्येत, तदा 'यथैव तर्ही'ति भाष्यस्यैतदाशयापरिज्ञानेनैव प्रवृत्तत्वकल्पनं तवाप्यायातीति न किंचिदेतत्। पृथक्संज्ञाकरणसामर्थ्यात्किंचिदर्थकल्पनमावयोस्समम्। परन्तु तव शास्त्रेऽक्लृप्तार्थस्य स्वभिन्नसंज्ञाभिः स्वस्यासमावेश इत्यस्य कल्पनप्रयुक्तमेकं, लुगादिसंज्ञाविषये लोपसंज्ञाया ज्ञापकान्तरेण साधनप्रयुक्तमपरं च गौरवम्। मम तु शास्त्रे क्लृप्तस्य प्रदेशेषु लोकन्यायसिद्धभाविसंज्ञाश्रयणपूर्वकतद्भावितपक्षस्यैवाश्रयणमिति लाघवमित्याचार्योक्तं गौरवोद्भावनं विपरीतमेवेति बोध्यम्। अत्रत्यं तत्त्वमाकरग्रन्थपर्यालोचयितॄणां सुधियां स्फुटीभविष्यतीति नास्माभिर्विशेषतः प्रतन्यत इत्यलम्। **द्वित्वमिति**। इदमुपलक्षणम्। जुहोतीत्यादावुतो वृद्धिरिति वृद्धेः, हरीतक्याः फलानीत्यर्थे हरीतक्यादिभ्यश्चेत्यणो लुपि लुक्तद्धितलुकीति स्त्रीप्रत्ययलुकः, श्रविष्ठासु जात इत्यर्थे श्रविष्ठाफल्गुनीत्यादिना जातार्थप्रत्ययस्य लुकि लुपि युक्तवदिति लिङ्गवचनयोश्च। तद्भावितग्रहणे विधिप्रदेशेष्वन्योन्याश्रयदोषशङ्कां परिहरति। **भाविसंज्ञाविज्ञानादिति**। सूत्रशाटकन्यायेन षड्भ्यो लुगित्यादौ षड्भ्यः परयोर्जश्शसोस्स भवति, यस्य जातस्य लुगित्येषा संज्ञा भवतीत्यर्थाश्रयणादिति भावः। लोपसंज्ञयाऽसां समावेशं दर्शयति। **अन्यदेशस्थत्वेनेति**। अनाकडारीयत्वेनेत्यर्थः॥

**षड्भ्यो । "जश्शसोः शि" इत्यतो जश्शसोरिति वर्त्तते । षड्भ्य इति विहितविशेषणम् । तेन गौणे न ।**

यत्तु वाराणसेयाः, लुक्श्लुलुप्पदानां लुक्श्लुलुप्पदप्रयोज्यत्वे, विधेयतायां, अदर्शने च खण्डशः शक्तिः । यत्र लुगादिपदं विधेयसमर्पकं, तत्रादर्शनरूपखण्डस्यैवोपस्थितिः, न तु लुगादिपदप्रयोज्यत्वरूपखण्डस्य, विधेयतारूपखण्डस्य चानुपयोगात् । तन्नियामिका च समभिव्याहृता प्रथमेति । यत्र तु लुगादिपदमुद्देश्यसमर्पकं, तत्र खण्डत्रयस्याप्युपस्थितिः । लुगादिपदप्रयोज्यविधेयताश्रयादर्शनरूपार्थलाभस्त्वाकाङ्क्षावैचित्र्यात् । तथा च न लुकि श्लुपदप्रयुक्तं कार्यम् । नाऽपि लुपि, नवा श्लौ लुगादिपदप्रयुक्तकार्यसङ्कर इति भाविसंज्ञाविज्ञानस्य नोपयोगः । गुरुचरणास्तु लुगादिपदशक्यतावच्छेदकमदर्शनत्वमेव । अन्यत्सर्वमुपलक्षणमिति वदन्तीत्याहुस्तदयुक्तम् । लुगादिपदानां शक्तिग्राहकेण प्रकृतसूत्रेण लुगादिपदप्रयोज्यविधेयताश्रयप्रत्ययादर्शने लुगादिपदानां शक्तिबोधनात्खण्डशक्तिस्वीकारे मानाभावात् । तत्स्वीकारेऽपि खण्डशक्तिस्थले विशेष्यविशेषणभावव्यत्यासेनान्वयाङ्गीकारेऽप्येकांशमोषेणान्यांशबोधस्यादृष्टचरत्वेन प्रदेशेष्वन्योन्याश्रयदोषस्य दुष्परिहरत्वाद्भाविसंज्ञाविज्ञानस्याऽवश्यकत्वात् । लुक्पदप्रयोज्यत्वविधेयत्वयोरुपलक्षणत्वमित्यपि न युक्तम् । काकवद्देवदत्तगृहं पश्येत्यादौ सिद्धस्यैव धर्मस्योपलक्षणतायाः क्लृप्ततया षड्भ्यो लुगित्यादौ लुक्पदप्रयोज्यविधेयताया असिद्धतया लुक्पदप्रयोज्यविधेयत्वोपलक्षितमदर्शनं भवतीत्यर्थेऽन्योन्याश्रयदोषस्य दुष्परिहरत्वेन भाविसंज्ञाविज्ञानस्याऽवश्यकत्वात् ॥

विहितविशेषणमिति । अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवतीति सर्वादिसूत्रस्थभाष्यप्रामाण्यादिति भावः । नचैवं परमकतीत्यत्र लुगनापत्तिरिति वाच्यम् । उक्तभाष्यबलेनात्र विहितविशेषणतायाः सिद्धतया परमकतरेऽड्डभावस्येव सत्यभिधानेऽत्र लुगभावस्यैवेष्टत्वात् । एतेनैवं सति परमकतीत्यत्र लुगनापत्तिरित्याचार्योक्तमपास्तम् । गौणे इति । प्रियपञ्चान

**परमपञ्चेत्यादौ तु विशिष्टस्यापि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येवेति न दोषः। स्पष्टश्चेदं 'षट्प्रधान एष समासः' इत्यादिना सर्वादिसूत्रे भाष्ये। कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम्॥**

---

इत्यत्रेत्यर्थः। नन्वेवं तदन्ते परमपञ्चेत्यत्र कथं निर्वाह इत्यत आह। **परमपञ्चेत्यादाविति।** **संख्येयविशेष्यकेति।** संख्येयमुख्यविशेष्यकेत्यर्थः। तत्त्वं च स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वम्। यस्य संख्यावाचकत्वमभिमतं स स्वपदार्थः। एवं च प्रियपञ्चान इत्यत्र समासवाच्यान्यपदार्थनिष्ठ विशेष्यतानिरूपितप्रकारताश्रयत्वस्यैव संख्येये सत्त्वेन संख्येयमुख्यविशेष्यकबोधजनकत्वाभावात् षट्संज्ञाया अभावेन न लुगिति भावः। अत्र यद्वक्तव्यं तन्नामीतिसूत्रव्याख्यानावसरे प्रपञ्चितमिति तत एवावगन्तव्यम्। **कैयटस्येति।** तेन हि गृह्यमाणविभक्तेस्तद्भवतीति भाष्यस्य गृह्यमाणानां सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी, तस्या इत्यर्थ उक्तः। स चायुक्त इति भाष्यप्रदीपोद्योते निरूपितम्। निरूपयिष्यते चात्रापि अद्ड्डतरादिभ्य इति सूत्रव्याख्यानावरे॥

यत्तु 'बोधजनकत्वेनेति प्रतीकमुपादाय 'यस्य संख्यावाचकत्वं वक्तव्यं, तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता, तादृशविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा, या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वरूपसंख्यावाचकत्वस्य परमपञ्चन्शब्दघटकपञ्चन्शब्दे सत्त्वेन षड्भ्यो लुगित्यादावुद्देश्यताया अपर्याप्ताया अपि विवक्षणात्परमपञ्चेत्यादौ न दोष इति भाव इत्यौत्तराहा व्याचख्युः। तत्तु विशिष्टस्यापि संख्यावाचितया षट्त्वमस्त्येवेत्यक्षरानुगुणत्वादुपेक्ष्यम्॥

प्रत्ययलोपे । प्रत्ययस्येत्यनुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत् । तेन "आग्नीय" इत्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये । इदमेव प्रत्ययग्रहणं ज्ञापकमवयवेऽपि

---

अनुवृत्त्या सिद्ध इति । यस्य कस्य चिल्लोपे प्रत्ययनिमित्तककार्यातिदेशाभाव इत्यर्थः । यथा भागुरिमते लुप्ताकारादपिपूर्वादीङ् गतावित्यस्मात् क्विपि पियौ पिय इत्यादावेरनेकाच इति यणः, ननन्देत्यत्रेत्संज्ञकवर्णयोर्लोपे प्रत्ययनिमित्तकामश्च । अवयवलोपे मा भूदिति । पुनः प्रत्ययग्रहणे सति तत्सामर्थ्यात्प्रत्ययत्वपर्याप्त्यधिकरणस्य लोप इत्यर्थादवयवलोपेऽस्याप्रवृत्तिरिति भावः । अवयवलोपस्थलं निर्दिशति । आग्नीयेत्यादाविति । आदिना समिधमिच्छति समिध्यति, क्विप्, समिधा इत्यत्रेनादेशाभावस्य संग्रहः । आग्नीयेत्यत्राऽङो यमहन इत्यात्मनेपदम् । विधिलिङुत्तमपुरुषैकवचने इट् । गमहनेत्युपधालोपः । सीयुटस्सकारस्य प्रत्ययावयवस्य लोपे प्रत्ययलक्षणेन झलादिप्रत्ययपरत्वेन नानुनासिकलोप इति भावः । ननु प्रत्ययावयवे प्रत्ययत्वाभावेनावयवलोपे प्रत्ययलोपाभावात्प्रत्ययलक्षणाप्रसक्त्या पुनः प्रत्ययग्रहणं व्यर्थमेवेत्यत आह । इदमेवेत्यादिना । ज्ञापकमिति । ननु प्रत्ययस्य लुगिति सूत्रे कैयटे उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्य, मित्यादिभाष्यव्याख्यानावसरे 'अवयवक्रिया समुदायेऽपि व्यपदिश्यते । यथा पटो दग्ध इति । अवयवेपि पटाख्योऽवयवी समवेत इति तस्याप्यसौ दाहः । न त्वयं गौणव्यपदेशः । गौणत्वे हि मुख्यस्यैव सम्प्रत्ययान्न कर्तव्यमेव प्रत्ययग्रहणं स्यादित्युक्तम् । तस्यायमाशयः । समवायिकारणनाशेऽसमवायिकारणनाशे वा कार्यनाश इति सर्वसम्मतम् । एवञ्चावयवनाशे महापटस्य नाशो मुख्य एव । तन्नाशसहकृतान्य कारणकलापात् खण्डपटोत्पत्तिः । तद्वत्प्रकृतेऽप्यवयवलोपे मुख्यस्य प्रत्ययलोपव्यवहारस्य सत्त्वात्प्रत्ययलक्षणप्रसक्त्या तद्वारणाय पुनः प्रत्ययग्रहणं कार्यम् ।

प्रत्ययत्वव्यवहारस्य । एवञ्च "आदेशप्रत्यययोः" "इदुदुपधस्य"

---

कृते तु तस्मिन् तत्सामर्थ्यात्प्रत्ययत्वपर्याप्त्यधिकरणस्येत्यर्थान्न दोष इति। एवञ्च तद्रीत्या प्रत्ययग्रहणस्य सार्थकतया कथं ज्ञापकत्वमिति चेदत्रोच्यते। तदभावबुद्धिं प्रति तद्बुद्धिः प्रतिबन्धिकेति सर्वसम्मतम् । शास्त्रे त्वाहार्यापि सा तथेति च निर्विवादम्। एवं चावयवलोपेन समुदायलोपे सत्यप्यवयवान्तरेऽतिदेशेन तद्बुद्धिसत्त्वेन कथं तल्लोपबुद्धिः स्यादतः कैयटोक्तमयुक्तम्। तथाचावयवलोपे प्रत्ययलोपव्यवहाराभावेन प्रत्ययलक्षणाप्रसक्त्या न तद्वारणाय प्रत्ययग्रहणमिति तज्ज्ञापकमेवेति । वस्तुतस्तु लोपे प्रत्ययलक्षणमित्युक्तावपि प्रत्यासत्त्या प्रत्ययस्य लोपे सति प्रत्ययनिमित्तं कार्यं भवतीत्यर्थेन यस्य कस्य चिल्लोपे प्रत्ययनिमित्तकार्यातिदेशाभावस्य सिद्धतयाऽतिरिक्तं प्रत्ययपदं सामर्थ्यात्प्रत्ययत्वपर्याप्त्यधिकरणस्य लोप इत्यर्थसम्पादकं भवतीत्येकं प्रत्ययग्रहणं शक्यमकर्तुम्। स्पष्टश्चेदं भाष्ये। अवयवेऽपि प्रत्ययत्वव्यवहारस्येति। नचैवं खुकञि कक्कारस्य, इष्णुचि षकारणकारयोश्चेत्त्वापत्त्याऽतिप्रसङ्ग इति वाच्यम् । आदिग्रहणानुवृत्तिसामर्थ्येन प्रत्ययत्वपर्याप्त्यधिकरणस्याऽऽदेरेव विवक्षितत्वेनादोषात्। एवमेवाऽयनेयीत्यादौ, आद्युदात्तश्चेत्यादौ चातिप्रसङ्गो वारणीय इति बोध्यम्। नन्वेवमपि येन विधिरिति सूत्रे भाष्ये अचि श्नु इति सूत्रे तदादिविधेरभावे श्रियौ भ्रुवावित्यत्रैव स्यात्। श्रियो भ्रुव इत्यादौ न स्यादित्युक्तम्। यदि प्रत्ययावयवेऽपि प्रत्ययत्वव्यवहारस्स्यात्तदाऽजूपे प्रत्यय इत्यर्थे अजन्ते प्रत्यय इत्यर्थे वा तत्राऽऽदेशस्य सुलभतया तदर्थं तदादिविधेरनावश्यकत्वेन तद्विरोध इति चेन्मैवम्। तस्य प्रत्ययत्वेपि तावन्मात्रस्य ततो विधानाभावेनाङ्गसंज्ञानिमित्तत्वाभावात् । अङ्गस्येत्यधिकारेणाङ्गसंज्ञानिमित्तभूतप्रत्यय एव तद्विधानात् । यदि क्वाप्यन्यत्रातिप्रसङ्गः प्राप्नोति, तदा ज्ञापकसिद्धस्यासार्वत्रिकत्वेन परिहरणीय इत्यवधेयम्। ज्ञापनफलं दर्शयति

इत्यनयोर्लक्षणादि नाश्रयणीयं, 'सात्पदाद्योः' इति च चरितार्थम् । स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति भाष्यम् ।

---

**आदेशप्रेति** । **लक्षणादीति** । अत्रादिशब्देनाऽद्ये सौत्रत्वाद्द्वन्द्वो व्यधिकरणान्वयश्च, अन्त्ये व्यधिकरणान्वयश्च गृह्यते । उक्तार्थे साधकान्तरमप्याह । **सात्पदाद्योरिति चेति** । प्रत्ययावयवे प्रत्ययत्वानङ्गीकारे सातेस्सकारस्य प्रत्ययत्वाभावेन षत्वाप्राप्त्या तद्वैयर्थ्यं स्पष्टमेव। तत्सामर्थ्येन तत्र तत्र प्रत्ययपदस्य लक्षणाद्याश्रयणापेक्षया ईदृशार्थज्ञापनमेव युक्तमिति भावः । **स्थानिवत्सूत्रेण सिद्ध इति** । न च स्थानिवत्सूत्रस्याल्विधावप्रवृत्त्या तत्र विध्यर्थमिदमावश्यकमिति वाच्यम् । वर्णाश्रये नास्ति प्रत्ययलक्षणमिति निषेधेनास्याप्यल्विधावनिष्टत्वात् । न च तन्निषेधस्य वर्णप्राधान्यविषयकतयाऽप्राधान्येनालाश्रयणे तस्याप्रवृत्त्या तत्र विध्यर्थमिदमावश्यकम् । अत एवातृणेडित्यत्र हल्ङ्यादिलोपोत्तरं हलादिपिन्निमित्तकेमागमस्य, मित्रशीरित्यत्र हलादिकिन्निमित्तकत्त्वस्य च सिद्धिरिति वाच्यम् । तृणह इमित्यत्र नाभ्यस्तस्येत्यतोऽचि नेत्यनुवर्तनेनाजादौ तस्याप्रवृत्तेरसिद्धतया तत्र हल्ग्रहणानुवृत्तेः फलाभावेनाल्विधित्वाभावात्तत्रापि स्थानिवद्भावेनैव सिद्धिः । एवं शास इदङ्हलोरित्यत्राङीति योगं विभज्याजादौ यदि स्यात्तदा अङ्येवेति नियमाश्रयणेन हल्ग्रहणस्य प्रत्याख्यानान्मित्रशीरित्यत्रापि स्थानिवत्त्वेनैव सिद्धिरिति न तदर्थमपीदमावश्यकमित्याशयात् । **नियमार्थमिति** । तत्फलं तु शोभना दृषदोऽस्य सुदृषत्प्रासाद इत्यत्र स्थानिवद्भावेनासन्तत्वादत्वसन्तस्येति दीर्घस्य, सोर्मनसी अलो मोषसीति स्वरस्य चाभावः । न च निर्दिश्यमानपरिभाषया निर्दिश्यमानासवयवस्याच एव दीर्घविधानात्कथमत्र तत्प्राप्तिरिति वाच्यम् । अस्पदस्य षष्ठ्यन्तत्वाभावेन तत्परिभाषाया अप्रवृत्तेः । न चातुसाहचर्यात्सकारप्रश्लेषाद्वाऽसन्तमपि श्रूयमाणासन्तमेव गृह्यत इति नात्र दीर्घप्राप्तिरिति नियमो व्यर्थ इति वाच्यम् । यमवच्छन्दा-

**प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवेति। न चैवं दाधर्त्तीति सूत्रे 'तेतिक्ते इति किं निपात्यते?। आत्मनेपदम्। नैतदस्ति। 'अनुदात्तङित' इत्येव सिद्धम्। नियमार्थं तर्हि भविष्यति अत्रैव यङ्लुगन्तस्य, नान्यत्र बेभिदीति' इत्युक्तम्। अस्य नियमत्वे तेनात्मनेपदं दुर्लभं, ङित्त्वस्य प्रत्ययाप्रत्ययसाधरणत्वादिति वाच्यम्। आत्मनेपदमित्यस्यैव सिद्धान्त्युक्तित्वात्। ततो विध्यर्थमिदमिति वार्तिकानुसारिणा "अनुदात्तङित" इत्येव सिद्ध-**

---

त्क्विपि णिलोपटिलोपयोः ततस्सुविभक्तौ तत्रातोरप्यश्रूयमाणस्य संभवेन श्रूयमाणत्वेनानुसाहचर्यस्य ग्रहीतुमशक्यत्वात्। नन्वन्तरङ्गानपीति परिभाषया इत्संज्ञालोपाभ्यां प्रागेव जसो लुकि स्थानिवत्त्वेन जसन्तत्वमेव नासन्तत्वमिति कथं तत्प्राप्तिः। न च स्थानिवत्त्वेन जसन्तत्वेऽसन्तत्त्वमार्थसमाजग्रस्तमिति वाच्यम्। तथा सत्याटिटदित्यादौ स्थानिवत्त्वेन ण्यन्तत्वे निर्दिश्यमानणिबुद्धेरप्यार्थसमाजग्रस्तत्वेन णिलोपसिद्धौ षाष्ठद्वित्वस्य आदेशरूपत्वे आटिटदित्यत्र णिलोपो न स्यादिति भाष्योक्तेरसङ्गत्यापत्तेरिति चेन्न। तन्न्यायस्येत्संज्ञालोपातिरिक्तविषयकत्वेन प्रकृते तदप्रवृत्तेः। अत एव लुमति प्रतिषेधे एकपदस्वरस्योपसङ्ख्यानमिति न लुमतेति सूत्रस्थवार्तिकतद्भाष्ययोस्सङ्गतिः। अन्यथा गर्गा भिदा इत्यादावपत्यार्थकयोर्यञञोर्बहुत्वेऽनेन न्यायेनेत्संज्ञातः पूर्वमेव यञञोश्चेति लुकि स्वराप्राप्त्या वार्तिकारम्भो विफल एव स्यात्। किञ्च वर्णाश्रये नास्ति प्रत्ययलक्षणमित्यस्य गवे हितं गोहितमित्युदाहरणपरं प्रत्ययलक्षणसूत्रस्थभाष्यमप्यत्रार्थे मानमिति बोध्यम्। नियमस्वरूपं दर्शयति। **प्रत्ययस्यासाधारणं रूपमिति**। प्रत्ययमात्रवृत्तिधर्म इत्यर्थः। एतच्च स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणसामर्थ्याल्लभ्यत इति प्रत्ययलोप इति सूत्रे उद्योते स्पष्टम्। न च प्रत्ययलक्षणमित्यस्याभावे नखनिर्भिन्न इत्यादौ स्थानिवत्त्वेनैसापत्तिः।

यथान्यासे तु बहुव्रीहिणा प्रत्ययनिमित्तकमेव कार्यं प्रत्ययलोपे सति भवति, न तु प्रत्ययस्थानिकमित्यर्थाश्रयणाददोष इति कथं तेनासाधारण्यलाभ इति वाच्यम् । नखनिर्भिन्न इत्यत्र स्थानिवद्भावेन भिस्त्वातिदेशेऽप्युच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाभावेनैसोऽप्रवृत्त्या तदर्थं प्रत्ययलक्षणग्रहणस्यानावश्यकत्वमित्याशयात् । ननु प्रत्ययग्रहणसामर्थ्यादवधारणान्तर्भावेण समासेऽसाधारण्यलाभेऽपि स्वसमानाधिकरणवर्णविशेष्यत्वरूपं प्रत्ययप्राधान्यं दुर्लभम् । एवं च चित्रायां जाता चित्रेत्यादावनिष्टङीबादिविधायकत्वमेवास्य स्यान्न नियामकत्वमिति चेन्न । प्रत्ययलोपे तल्लक्षणमित्येतावन्मात्रोक्तावपि स्थानिवदित्यनुवृत्त्यैव सिद्धे तल्लक्षणग्रहणसामर्थ्यादवधारणान्तर्भावेण समासाश्रयणादसाधारण्यलाभे सिद्धे प्रत्ययलक्षणग्रहणसामर्थ्येन यत्र विधौ प्रत्ययत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण प्रत्ययस्य प्राधान्येनाश्रयणं तदेव भवतीत्यर्थस्य सुलभतया चित्रेत्यादावस्याप्रवृत्तेः । वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषाव्याख्यानावसरे 'स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणात्प्राधान्यलाभं, प्रत्ययलोप इति सूत्रस्थभाष्यव्याख्यानावसरेऽनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणसामर्थ्यादसाधारण्यलाभं च वदतोपाध्यायेन प्रागुक्तदिशा तदुभयलाभः प्रत्ययलक्षणग्रहणसामर्थ्यादेव भवतीति सूचितमित्यवधेयम् । एतेन विभाषा फाल्गुनीश्रवणेत्यादिसूत्रे श्रवणेत्यादिनिर्देशेन प्राधान्यलाभ इति भट्टोक्तं नातीवादरणीयम् । परिभाषेन्दुशेखरे प्रत्ययलक्षणग्रहणसामर्थ्येन प्राधान्यलाभस्योपाध्यायैः कण्ठत उक्तत्वात् । यत्राश्रीयत इति । यत्र शास्त्रे प्राधान्येन निमित्ततया आश्रीयत इत्यर्थः । तत्रैवेति । तादृशकार्यविषय एव स्थानिवद्भाव इत्यर्थः । प्रत्ययत्वतद्व्याप्यान्यतरधर्मपुरस्कारेण यत्र प्रत्ययस्य प्राधान्येनाश्रयणं, तदेव कार्यं प्रत्ययलोपे सति भवति, नान्यदिति नियम्यत इति भावः । नियामकत्वाश्रयणे भाष्यविरोधमाशङ्कते । न चैवमिति । तेनेति । अनुदात्तङित इत्यनेनेत्यर्थः ।

मिति शङ्किते तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः। प्रत्ययलोपे प्रत्ययवदिति सिद्धे लक्षणग्रहणं प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्थानिकमित्यर्थलाभार्थम्। तेन नखभिन्न इत्यादावैसादिकं नेत्येके। अतिदेशेनाहार्यतद्बुद्धिसम्पादनेऽप्युच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावान्नैसादीति तद्व्यर्थमित्यपरे। कार्यमिति। प्राधान्यात् कार्यातिदेशोऽयमिति भावः। इहापि 'परिवीरिति-शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति' इति भाष्येण

---

प्रत्ययवदिति सिद्ध इति। प्राधान्यलाभस्यासाधारण्यलाभस्य च सिद्धे इत्यर्थः। प्रत्ययनिमित्तकमेवेति। लक्षणशब्दस्य निमित्तपरत्वात्। ईदृशार्थाश्रयणे फलं दर्शयति। नखभिन्न इत्यादावित्यादिना। नचात्र लुगुत्तरमप्यैसः प्राप्त्या लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावेनान्तरङ्गानपीति परिभाषाया अप्रवृत्त्या पूर्वमसि लक्ष्ये लक्षणन्यायेन पुनरैसोऽप्रवृत्त्या दोषाभाव इति लक्षणग्रहणं व्यर्थमिति वाच्यम्। पञ्चभिः खट्वाभिः क्रीतं कुलं पञ्चखट्वमित्यत्र क्रीतार्थकप्रत्ययस्य टापश्च लुकि टाब्लुकः पूर्वमदन्तत्वाभावेनैसादेशाप्राप्त्या लक्ष्ये लक्षणन्यायाविषयत्वेन भिसः प्रत्ययलक्षणेनैसादेशवारणाय, रमायाः पुत्र रमापुत्र इत्यादौ निरुक्तदिशा पूर्वं याटि निर्दिश्यमानपरिभाषया याड्रहितस्य लुकि याट्श्रवणाभावाय च लक्षणग्रहणसामर्थ्येन तादृशार्थकल्पनाया आवश्यकत्वात्। तदेतदुभयत्राऽदिपदाभ्यां ग्रन्थकृत्सूचयति। एके इति। प्राञ्च इत्यर्थः। अपरे = सिद्धान्तिनः। प्राधान्यादिति। कार्यस्यैव शास्त्रे प्राधान्यादिति भावः। ननु प्रत्ययनिमित्तकं कार्यं स्यादिति व्याख्याने प्रत्ययलोप इति सूत्रेणैव कार्यप्राप्तिर्वाच्या। तथा च परिवीरित्यत्र वेञः क्विपि सम्प्रसारणे कृते क्विपो लोपे प्रत्ययलोप इति शास्त्रेण तुग्दीर्घत्वयोः प्राप्तौ पर्यायस्तयोस्स्यादेकदेशस्थत्वादत आह। इहापीति। कार्यातिदेशेऽपीत्यर्थः।

तृज्वत्सूत्रे शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात्परिवीरित्यत्र तुग्दीर्घौ पर्यायेण न; किंतु दीर्घ एव, परत्वात्। अन्यथाऽनेनैवोभयोर्विधानात्परत्वाभावेन पर्यायो दुर्वार इति बोद्धव्यम्। तदाह–जसि चेति गुणे प्राप्ते इति। जसिचेति विहितेऽनेन गुणे प्राप्त इत्यर्थः॥

न लुमता। लुशब्दयुक्ता लुमन्तस्तदाह। लुगित्यादि। अङ्गकार्यमिति। लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वेत्यर्थः। .... .... .... ....

---

अन्यथा = उपदेशदेशत्वानङ्गीकारे। तदाहेति। अतिदिश्यमानकार्याणामुपदेशदेशत्वमभिप्रेत्याहेत्यर्थः। इति गुणे प्राप्त इति वक्तव्ये 'जसि चेति गुणे प्राप्ते' इति कथनेन गुणस्यानेनातिदेशेऽप्युपदेशदेशत्वमेव तस्य, नैतद्देशत्वमिति मूलकारोऽप्यभिप्रैतीति भावः॥

इत्यर्थ इति। लुप्तप्रत्ययाव्यहितपूर्वत्वावच्छिन्ना लुप्तप्रत्ययनिरूपिताङ्गसंज्ञावल्लुप्तप्रत्ययप्रकृतिपर्याप्तधर्मेण साक्षात्परम्परया अवच्छिन्ना च या उद्देश्यता, तादृशोद्देश्यताके कार्ये प्रत्ययलक्षणं न भवतीत्यर्थ इति भावः। पञ्चेत्यत्र प्रत्ययलक्षणेन सुबन्तत्वमाश्रित्य पदसंज्ञायां कर्तव्यायामेतन्निषेधाप्रवृत्तये लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नेति। उत्क्रामेत्यत्र प्रत्ययलक्षणेन परस्मैपदपरकशिन्निरूपिताङ्गसंज्ञावत्पर्याप्तधर्मेण परम्परया अवच्छिन्नोद्देश्यताके क्रमः परस्मैपदेष्विति दीर्घे कर्तव्ये एतन्निषेधाप्रवृत्तयेऽङ्गसंज्ञायां लुप्तप्रत्ययनिरूपितत्वनिवेशः। अङ्गसंज्ञायां कर्तव्यायामेतन्निषेधाप्रवृत्तयेऽङ्गसंज्ञावत्पर्याप्तधर्मेणेति। असिद्धवत्सूत्रप्रत्याख्यानपक्षे विदाङ्कुर्वित्यत्र हिलुगुत्तरं प्रत्ययलक्षणेनात उत्सार्वधातुक इत्युत्वसिद्धये लुप्तप्रत्ययप्रकृतिपर्याप्तधर्मेणेति। अन्यथा सार्वधातुकाव्यवहितपूर्वत्वविशिष्टोप्रत्ययान्तकरोतेरत उत्वविधानेन तदीयोद्देश्यतायां लुप्तप्र-

**तेन पश्चेत्यादौ पदसंज्ञा भवति। राजपुरुषादौ भसञ्ज्ञा च न। अङ्गसञ्ज्ञा तु यथोद्देशत्वात् प्रत्ययसत्ताकाले जाता तिष्ठत्येव। तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा। तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाप्रवृत्तेः। स्पष्टश्चेदं 'युवोरनाकौ' इत्यत्र कैयटे।**

---

त्ययाव्यवहितपूर्वत्वावच्छिन्नत्वस्य लुप्तप्रत्ययनिरूपिताङ्गसंज्ञावत्पर्याप्तधर्मेण परम्परयाऽवच्छिन्नत्वस्य च सत्त्वेनानेन निषेधात्प्रत्ययलक्षणाप्राप्त्या उत्त्वं न स्यात्। तन्निवेशे तु लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्युप्रत्ययान्ते लुप्तप्रत्ययप्रकृतित्वाभावान्न दोषः। निर्जरधनं, परमत्रिपुत्र इत्यादावेतन्निषेधसिद्धये परम्परयेति। अन्यथा प्रत्ययलक्षणेनाजादिविभक्तिपरत्वाज्जरसादेशत्रयादेशयोरापत्तिः। त्रयाणां धनं त्रिधनमित्यत्रैतन्निषेधसिद्धये साक्षादिति। यत्तूक्तमित्यत्रैतन्निषेधाप्रवृत्तये लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नत्वनिवेश इति वाराणसेयास्तन्न। क्रमः परस्मैपदेष्वित्यनेन परस्मैपदपरकशिन्निरूपिताङ्गसंज्ञावतो दीर्घविधानात्तदीयोद्देश्यताया लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परम्परया वा अवच्छिन्नत्वाभावादेव निषेधाप्रवृत्तौ तदर्थं तादृशनिवेशस्यानावश्यकत्वात्। न लुमताङ्गस्येति सूत्र उद्योते, प्रत्ययस्लोप इति सूत्रशब्दरत्ने च उत्क्रामित्यत्र न लुमतेति निषेधाप्रवृत्तेरुक्तरीत्यैवोपपादितत्वाच्च। लुप्तप्रत्यये परतो यः पूर्व इत्यस्य फलमाह। **तेनेति**। अप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्तिककृन्मतेनैतत्सूत्रोदाहरणं दर्शयति। **राजपुरुषादाविति**। सर्वमतसाधारण्येनैतत्सूत्रोदाहरणं तु कतीत्यादि। लब्धाङ्गसंज्ञक इत्यस्य प्रयोजनमाह। **अङ्गसंज्ञा त्विति**। अन्यथान्तरङ्गानपीति न्यायेनाङ्गसंज्ञातः पूर्वं लुक्प्रवृत्तौ यथोद्देशेऽपि सा न स्यात्तद्विशेषणे तु लुक्यपि प्रत्ययलक्षणेनाङ्गसंज्ञाप्रवृत्तेरव्याहतत्वेन लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावात्तन्न्यायाप्रवृत्तावङ्गसंज्ञासिद्धिरिति भावः। कार्यकालेऽपि तद्विशेषणस्य फलमाह। **तत्काल इत्यादिना**। **कैयट इति**। तत्र हि 'एवं तर्हि न वा परनिमित्तं, संज्ञा च प्रत्ययलक्षणे-

**'न लुमता' इत्यस्यानित्यत्वादङ्गसंज्ञायामप्रवृत्तिरिति तत्त्वामिति कश्चित्। अत एव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमिति 'तद्धितार्थे' इति समासे ठको 'अध्यर्ध' इति लुकि 'लुक्तद्धित, इति स्त्रीप्रत्ययलुकि च 'पञ्चक्रोष्टृ' इत्यत्र तृज्वत्त्वम्। तदुक्तं भाष्ये तृज्वदिति सूत्रे—'न**

ने'ति भाष्यव्याख्यानावसरे न हीह विभक्तिः प्रत्ययान्तरं वा परं निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाकयोर्नास्तीति न लुमताङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्यायमविषयः । केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते, अस्ति च प्रत्ययलक्षणेनाङ्गसंज्ञा । न हि तस्यां विधीयमानायां न लुमताङ्गस्येति प्रतिषेधः प्रवर्तते । लब्धाङ्गसंज्ञस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्तते । न चाङ्गसंज्ञाऽङ्गस्य कार्यमिति प्रतिषेधाभाव इत्युक्तम्। अत्र कैयट इत्यनेनारुचिस्सूचिता । तद्बीजं तु न लुमता तस्मिन्निति वार्तिककृदुक्तन्यायान्तरे लुमता लुप्तो यः प्रत्ययस्तन्निमित्तकं तत्प्रकृतिसम्बन्धि यत्कार्यं, तत्र प्रत्ययलक्षणं नेत्यर्थादङ्गसंज्ञाविषयेऽपि निषेधलाभेन तदनुरोधात्तत्प्रत्याख्यानेन सह फलैक्याय च सूत्रमतेऽप्यङ्गपदस्य प्रकृतिमात्रोपलक्षकत्वमाश्रित्य लुमता लुप्तप्रत्ययनिमित्तकं तत्प्रकृत्युद्देश्यकं कार्यमाङ्गमनाङ्गं वा नेत्येवार्थ उचित इति चिन्त्योऽयं कैयटः। तस्मान्निषेधानित्यत्वादेवाङ्गसंज्ञा भवतीति तद्भाष्याशयो वक्तुमुचितः। स्पष्टं चेदं तत्रैव सूत्रे, तृज्वत्क्रोष्टुरिति सूत्रे चोद्योते। अत एवाव्ययस्याङ्गत्वे फलाभावेन प्रत्ययस्य लुका लुप्तत्वेन च तदप्राप्त्या, इति शब्दरत्नग्रन्थोऽपि सङ्गच्छत इति। तदेतद्ध्वनयन्नाह। **अनित्यत्वादिति**। **कश्चिदिति**। न लुमता तस्मिन्निति वार्तिकसमानफलकतासम्पत्तये सूत्रेऽङ्गपदस्य प्रकृतिबोधकत्वमावश्यकमिति विजानानो यः कोऽपीत्यर्थः। एतेनैतत्प्रतीकमुपादाय 'अत्रारुचिबीजं तु अङ्गसंज्ञाया उपजीव्यत्वेन तन्निषेधो न लुमताङ्गस्येत्यनेन कर्तुमशक्य इती'ति वाराणसेयोक्तमपास्तम् । पूर्वोक्तदिशाऽङ्गसंज्ञाया उपजीव्यत्वविरहात् । **अत एव**=अङ्गसंज्ञाविषयेऽस्य निषेधस्यानित्यत्वादप्रवृत्तेरेव । **तृज्वत्त्वमिति** ।

अन्तरङ्गत्वाज्जातं तिष्ठत्येवेति शेषः। अयं भावः। पञ्चन् + भिस्, क्रोष्टु + भिस् इत्यवस्थायामङ्गसंज्ञातृज्वद्भावयोः तद्धितार्थे विषये समासस्य च प्राप्तौ पदद्वयाश्रितत्वेन बहिरङ्गसमाससंज्ञां बाधित्वान्तरङ्गत्वादङ्गसंज्ञातृज्वद्भावयोः कृतयोः ततोऽन्तरङ्गत्वात् ङीपि समासे लुकि च कृते आर्हीये ठकि तस्याऽध्यर्धेति लुकि स्त्रीप्रत्ययलुकि चान्तरङ्गत्वात्पूर्वं जातं तृज्वत्त्वं तिष्ठत्येव। अन्तरङ्गानपीतिन्यायेन तृज्वद्भावात्पूर्वं समासस्य तु न प्रवृत्तिः। समासे लुकि च कृतेऽपि अङ्गसंज्ञाविषये न लुमतेति निषेधस्याप्रवृत्तौ प्रत्ययलक्षणेनाङ्गसंज्ञायास्सुलभतया तन्मात्रनिमित्तकतृज्वद्भावप्रवृत्तेरव्याघातात्समासस्यान्तरङ्गनिमित्तविनाशकत्वाभावात्। अङ्गसंज्ञाविषयेऽपि न लुमतेतिनिषेधप्रवृत्तौ तदसिद्धिरिति॥

एतेनास्य ग्रन्थस्य स्वयमन्यादृशमाशयं प्रकल्प्य इदमयुक्तं, तथाहि किमयं ग्रन्थः स्त्रियां चेत्यत्र स्त्री ई इति प्रश्लिष्येकारे परतस्त्रियां तृज्वद्भावः, अत एव ज्ञापकात्तुन्नन्तात् ङीषिति भाष्योक्तपक्षान्तराभिप्रायेण, आहोस्वित् स्त्रियां क्रोष्टोरङ्गस्य तृज्वद्भाव इति पक्षान्तराभिप्रायेण। नाद्यः। स्त्रीप्रत्ययलुकि प्रत्ययलक्षणेन ईकारपरत्वस्य न लुमतेति निषेधे जागरूके सत्यसम्भवेन तत्पक्षे पञ्चक्रोष्ट्रीति रूपस्यैव दुर्लभत्वात्। नान्त्यः। तत्पक्षे तृज्वत्त्वप्रवृत्तेः पूर्वं स्त्रीप्रत्ययस्यैवाभावेन तल्लुकः खपुष्पगन्धायमानत्वात्। तस्मात्पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमित्यर्थे ठकि तस्याध्यर्धेति लुकि पञ्चक्रोष्टृ इत्यत्र तृज्वत्त्वमिति वक्तुं युक्तमित्याचार्योक्तमपास्तम्॥

औत्तराहास्तु स्त्रीप्रत्ययलुगपेक्षयाऽन्तरङ्गत्वात्पूर्वं जातं तृज्वत्त्वं तिष्ठत्येव, तल्लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावेनान्तरङ्गानपीतिन्यायाप्रवृत्तेरित्याशयपरतया व्याचख्युः। तदसत्। तथा सत्याचार्योक्तानुपपत्तेर्दुर्वारत्वात्॥

चापरं निमित्तमाश्रीयते, किंतर्हि, अङ्गस्य क्रोष्टुस्तृज्वदिति; अङ्ग-सञ्ज्ञा च भवति प्रत्ययलक्षणेन' इति। न चोरदत्त्ववत् तृज्वत्त्वेऽपि परनिमित्ताश्रयणमिति पञ्चक्रोष्टृ इत्यस्यासिद्धिरिति वाच्यम्। 'उरत्' इत्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेऽपि अङ्गसञ्ज्ञा-द्वारोरदत्त्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव 'लिट्यभ्यासस्य' इति सूत्रस्थभाष्याशयात्। नियमतः परबुद्धेः पूर्ववृत्तितया परनिमित्तत्वात्। अत एव 'चर्करीति' 'अजर्घा' इत्यादावत्त्व-प्रवृत्तिः। 'अचिश्नु' इत्यदावजादिप्रत्यय इत्यर्थस्तु अङ्गस्येतिषष्ठ्या

---

ननु लिट्यभ्यासस्येति सूत्रे भाष्ये वव्रश्चेत्यत्रोरदत्त्वस्याचः परस्मिन्निति स्थानिवत्त्वेन सम्प्रसारणत्वमुक्तम्। तथा च तस्य परनिमित्तकत्वं भाष्यकृतोऽभिप्रेतमित्यवश्यमभ्युपेयम्। तच्चाङ्गस्येत्यधिकारादेव लभ्यं, नान्यथा। तथा च तद्वदत्राऽप्यङ्गस्येत्यधिकारेण प्रत्ययनिमित्तलाभे पञ्चक्रोष्टृ इत्यस्याऽसिद्धिस्तदवस्थैवेत्याशङ्कते। न चेति। लिट्यभ्यासस्येति सूत्रभाष्याशयं वर्णयति। उरदित्यत्रेति। अङ्गसंज्ञाद्वारेति। अङ्गस्येत्यनेन सह तस्य सूत्रस्यैक-वाक्यतयाऽङ्गत्वज्ञानस्य वाक्यार्थज्ञाने करणतयाऽङ्गत्वज्ञानस्य परप्रत्ययप्रयोज्यतयोरदत्त्वस्यापि परप्रत्ययप्रयोज्यत्वेन वस्तुतः परनिमित्तकत्वात्तावताऽपि स्थानिवद्भावप्रवृत्तिरित्येव तद्भाष्यबलात्कल्प्यते, न तूरदत्त्वस्य शब्दतः पर-निमित्तत्वमस्तीति न तद्दृष्टान्तबलेनास्य परनिमित्तकत्वलाभ इति भावः। नच तृज्वत्त्वस्यापि तादृशं परनिमित्तकत्वमाश्रित्य न लुमतेति निषेधप्रवृत्तौ पञ्चक्रोष्टृ इत्यस्यासिद्धिस्तदवस्थैवेति वाच्यम्। तस्य निषेधस्य तृज्वत्सूत्र-स्थभाष्यप्रामाण्याच्छब्दतो लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावदुद्देश्यककार्य एव प्रवृत्तिर्न तु वस्तुतो लुप्तप्रत्ययनिमिककार्य इति कल्पनेनादोषात्। अत एवेति। उरदत्त्वस्य शब्दतः परनिमित्तत्वानाश्रयणेन न लुमतेति निषेधस्याऽप्रवृत्तेरे-वेत्यर्थः। अत्त्वप्रवृत्तिरिति। अन्यथा यङो लुकि प्रत्ययलक्षणाभावेन

**'निमित्ते' इत्यध्याहारेण तस्य विशेष्यतया यथाकथञ्चिदुपपाद्यः। आकडाराधिकारस्थेषु कार्यकालत्वस्याभावाच्च। वस्तुतस्तु कार्य-**

---

प्रत्ययपरत्वाभावात्तन्न स्यादिति भावः। न च तयोस्तिन्निमित्तकाङ्गत्वमादाया-ऽस्वप्रवृत्तिरिति पाठकोक्तदिशा न दोष इति वाच्यम्। अङ्गाधिकारस्थाभ्या-सकार्याणां प्रत्यासत्त्याऽभ्यासाङ्गोभयनिमित्तप्रत्यय एव प्रवृत्तेः। अत एव जिहननीयिषतीत्यादौ न कुत्वम्॥

नन्वेवमचि श्निवत्यादावजादिप्रत्यय इत्यर्थो दुर्लभः। शब्दतः प्रत्ययस्य निमित्तत्वानाश्रयणे तदादिविधेर्दुर्वचत्वादत आह। **अचि श्निवत्यादाविति। निमित्त इत्यध्याहारेणेति।** निमित्त इति शब्दस्याध्याहारेणेत्यर्थः। **तस्य**= अध्याहृतनिमित्त इति पदस्य। **विशेष्यतयेति।** अजादावङ्गस्य निमित्त इत्येवं रीत्येत्यर्थः। **कथंचिदिति।** शब्दाध्याहारेणोपपादनात्क्लेशः। तृज्वत्क्रो-ष्टुरित्यादीनामङ्गस्येत्यधिकारमात्रेण न शब्दतः परनिमित्तकत्वलाभ इत्यत्र हेतुमाह। **कार्यकालत्वस्याभावाच्चेति।** चो हेतौ। यत आकडारीयसंज्ञासु कार्यकालत्वाभावः, अतोऽङ्गसंज्ञासूत्रस्य तत्राऽनुपस्थित्या न तेषां शब्दतः परनिमित्तकत्वलाभ इति भावः। इदं चायादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसो मादिति सूत्रस्थभाष्यस्य यथाश्रुताशयकत्वं स्वीकृत्य प्रवृत्तेन संज्ञाशास्त्राणां कार्यकालपक्षे विधिदेशीयत्वमिति सिद्धान्तेन। तदानीं पञ्चमीप्रदेशोपस्थिता-पादानसंज्ञाया एव तृतीयादिविध्युपस्थितकरणादिसंज्ञापेक्षया परत्वादपादान-मुत्तराणि कारकाणि बाधन्त इत्याकडारादिति सूत्रस्थभाष्यविरोध इति तद्बले-नाऽकडारीयसंज्ञासु यथोद्देश एवेति नियमोऽवश्यमङ्गीकार्यः। वस्तुतस्तु परैव प्रगृह्यसंज्ञेति भाष्यस्य प्रगृह्यसंज्ञाप्रयुक्तप्रकृतिभावः पर इत्येवं रीत्याऽऽशयस्य

**कालपक्षेऽपि क्रोष्टुशब्दः प्रत्ययेऽङ्गसंज्ञो भवति, अङ्गसंज्ञकस्य च तस्य तृज्वत्त्वं, स्त्रियामित्येवार्थ इति तृज्वत्त्वमनैमित्तिकमेव। उरदित्यादौ तु गतिरुक्तैव। पदैकवाक्यतयाऽन्वयस्तु संज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम्। एतेन उरदित्यादौ त्वावृत्त्याऽत्त्वं प्रति निमित्ततापि। वव्रश्चेति लक्ष्यानुरोधात्। न तथा प्रकृते, लक्ष्यानुरोधा-**

---

तत्सूत्र एवोद्योते परे त्वित्यादिनोपाध्यायैरुपवर्णितत्वेन न तद्बलात्कार्यकालपक्षे संज्ञाशास्त्राणां विधिदेशीयत्वलाभः। अत एव परिभाषेन्दुशेखरे तत्पक्षे संज्ञाशास्त्राणां विधिदेशीयत्वं केचित्त्वित्यादिनैवोक्तम्। अन्यथाऽन्यत्रेव तत्रापि स्वसिद्धान्तप्रकाशनं परे त्वित्यादिनैव कुर्यात्। एवं च संज्ञाशास्त्राणां विधिदेशीयत्वस्य सर्वथा नागेशानभिप्रेतत्वेन तत्पुरस्कारेण प्रवृत्तः 'आकडारीयसंज्ञासु यथोद्देश' एवेति नियमोऽपि नागेशानभिप्रेत एव। अत एव रामावित्यादौ कार्यकालपक्षे कथं पदत्वमित्येकदेशविकृतन्यायावतरणग्रन्थोऽपि स्वरसतस्सङ्गच्छते। विवृतं चैतल्लघुटिप्पण्यामस्मद्गुरुचरणैरिति नास्माभिः प्रतन्यत इत्यवधेयम्। तदेतद्ध्वनयन् कार्यकालपक्षेऽपि दोषमुद्धरति। **वस्तुतस्त्वित्यादिना** ॥

एतेन कार्यकालत्वस्याभावाच्चेति प्रतीकमुपादाय इदमयुक्तम्, कार्यकालं संज्ञापरिभाषम्, भस्येत्युपस्थितमिदं भवति, यचि भमितीत्याद्यनेकभाष्यविरोधादित्याचार्योक्तम्, कार्यकालत्वमभ्युपेत्याप्याह। वस्तुतस्त्वतीति मिश्रोक्तमवतरणं चापास्तम् ॥

**दुर्लभ इति**। अन्यतरपदवैयर्थ्यादिति भावः। कैयटोक्तं दूषयति। **एतेनेति**। आवृत्तिं विनाऽपि पूर्वोक्तदिशा निर्वाहेणेत्यर्थः। **आवृत्त्येति**। उपस्थितसंज्ञासूत्रघटकप्रत्यय इत्यस्येत्यर्थः। **लक्ष्यानुरोधादेवेति**। पञ्चक्रोष्टृ

देवेति तदाशयः । 'चर्करीति' 'अजर्घा' इत्यादौ तु 'न लुमता' इति निषेधानित्यत्वादत्त्वप्रवृत्तिः 'त्रपो' इत्यादौ गुणवत्। अङ्गाक्षिप्तप्रत्ययनिमित्तं लुकि भवत्येवेति तु भ्रुवे हितं भ्रूहितमित्यादावुवङापत्त्या चिन्त्यमित्यपास्तम् ।

त्रिषु सरूपा इति । 'ङे प्रथमयोः' इति सूत्रे युष्मानित्यादौ 'तस्माच्छसो नः' इत्युपन्यासपरेण भाष्येण 'स्वमोर्नपुंसकात्' इति सूत्रे शिशीनुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन, तद्भाष्येण च, 'न षट्' इति निषेधेन च लिङ्गसत्ताबोधनेऽपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । 'साम आकम्' इतिसूत्रस्थस्य 'अलिङ्गे युष्मदस्मदी' इति भाष्यस्य पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयत इत्यर्थ इति दिक् ।

---

इति लक्ष्यानुरोधादित्यर्थः । चर्करीत्यजर्घा इत्यादावत्त्वप्रवृत्तये केनचिद्दर्शितमुपायं दूषयति । अङ्गाक्षिप्तेति ॥

स्वमोर्नपुंसकादिति । इत्यनुवर्तमाने नेतराच्छन्दसीति सूत्र इत्यर्थः । लिङ्गबोधकप्रत्ययानुत्पत्त्येति । युष्मदस्मच्छब्दविषये शेषे लोपस्यान्त्यलोपत्वे बुद्धावित्यत्रेव सन्निपातपरिभाषया तदप्राप्तिः । षट्संज्ञकेषु च न षडिति निषेधादनुत्पत्तिरिति भावः । युष्मदस्मच्छब्दार्थयोर्लिङ्गसत्ताभ्युपगमे प्रसक्तं साम आकमिति सूत्रस्थभाष्यविरोधं परिहरति । साम आकमिति । न प्रतीयत इति । लिङ्गस्य वस्तुतस्सत्त्वेऽप्यनियतलिङ्गेभ्यो लिङ्गप्रतीतेर्गमकापेक्षत्वेन स्त्रीत्वप्रतीतिगमकस्य टापस्सन्निपातपरिभाषयाऽप्रवृत्त्या पदान्तरसन्निधानस्यैवात्र गमकत्वस्य वक्तव्यतया पदसंस्कारवेलायां तत्सन्निधेरभावेन लिङ्गविशेषो

**त्रेस्त्रयः । अयं न सान्तो 'निजां त्रयाणाम्' इति निर्देशात् । त्रेरयङ् न कृतः 'अयङ् यि' इत्यादाविवोच्चारणार्थत्वशङ्कावारणाय । केचिदिति । 'आमि सर्वनाम्न' इति साहचर्यादिति भावः । वस्तुत-**

---

न प्रतीयते । अतष्टाब्न भवतीति तात्पर्यम् । अत एव सन्निपातपरिभाषया टाबभावप्रतिपादनपरतयोत्तरत्र व्याख्यास्यमानस्य 'न वा टिलोपवचनानर्थक्यम्, लिङ्गाभावात्' इति वार्तिकस्य विवरणपरतयैतत्प्रवृत्तिरुपपद्यत इति बोध्यम् । उद्योतेऽस्य भाष्यस्यैकदेश्युक्तित्वकथनं त्वेतद्भाष्यस्य लिङ्गनिषेधबोधकत्वेन लिङ्गवत्त्वबोधकदर्शनापेक्षया पृथग्दर्शनत्वमिति कैयटानुसारेण, दर्शनान्तरत्वाभ्युपगमेऽप्यस्य दर्शनस्यैकदेश्युक्तित्वं लिङ्गसत्त्वबोधकस्य सिद्धान्त्युक्तित्वमित्यवश्यमभ्युपेयम् । अतो लिङ्गनिषेधाश्रयणं सर्वथाऽनादरणीयमित्येवमाशयकम्, न तु सर्वथा एकदेश्युक्तित्वबोधनाभिप्रायकमिति न तेनोद्योतेनायं ग्रन्थो विरुणद्धीति बोध्यम् । एतेनास्य ग्रन्थस्येदृशार्थकत्वं न युक्तमिति वदन्त आचार्याः परास्ताः ।

त्रयोदशेत्यादौ त्रेस्त्रय इत्यनेन विहितत्रयसादेश इवायमपि सान्त एव स्यादिति शङ्कायामाह । **अयं न सान्त इति ।** ननु त्रेरयङिति न्यासे ङस्येत्संज्ञालोपकल्पनाप्रयुक्तगौरवस्य यथाश्रुतन्यासे मात्रागौरवेण तुल्यत्वेऽपि यथाश्रुतन्यासे सान्तत्वशङ्कावारणाय निर्देशाश्रयणे गौरवात् त्रेरयङित्येव कुतो न सूत्रितमित्यत आह । **त्रेरयङिति । शङ्कावारणायेति ।** एवञ्चायङ्पक्षेऽप्यकारस्योच्चारणार्थत्वशङ्कावारणाय निर्देशाश्रयणमावश्यकमिति न त्रयादेशापेक्षया लाघवमिति भावः । किञ्च परमात्रिशब्दादाख्यानार्थे णिचि टिलोपे ततः क्वौ णिलोपे च कृते तत आमि क्वौ लुप्तमिति स्थानिवत्त्वनिषेधे निर्दिश्यमानत्रिशब्दस्य त्रयादेशे परमत्रयाणामित्यत्रान्त्यरेफस्यादेशापत्तिरत्र न्यासे दोष इत्यपि बोध्यम् । एतेन 'इदमयुक्तम् । त्रयोदशेत्यादौ सान्तादेशविधायके

स्त्विति। साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्थतदाश्रयणे दृढतर-प्रमाणाभावाच्चेति भावः। न च गौणमुख्यन्यायेनात्र नेति वाच्यम्। अप्रसिद्धत्वगौणलाक्षणिकत्वान्यतररूपगौणत्वाभावात्। अत एवो-पसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता। इतरविशेष-णतामात्रेण तत्त्वाभावात्। पदकार्य एव तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः॥

द्विशब्दो नित्यं द्विवचनान्त इति। संख्यापरत्वेऽपीत्यर्थः। अत एव कस्य द्वित्वे इत्यर्थे 'कयोर्द्वयोः' इति भाष्ये 'बहुषु' इति सूत्रे प्रयुक्तम्। त्यदादी॥ 'अष्टन' इत्यतो विभक्ताविस्यनु-वर्त्तते, तत्फलं तत्कुलम्। सोर्लुक्यत्वं न। इष्टिरिति। भाष्यकार स्येति भावः। द्विपर्यन्तानां किमिति। युष्मदस्मदोरात्वयत्वलोपै र्बाधात् किमः कादेशविधानाच्च प्रश्नः। भवान् भवन्तावित्यभ्यु-च्चयाय॥

---

त्रेस्त्रय इत्यादाविवात्राऽपि सान्तत्वभ्रमवारणसम्भवादि'त्याचार्योक्तमपास्तम्। अयङादेशविधानेन सान्तत्वशङ्काया दूरापास्तत्वेऽप्यकारस्योच्चारणार्थत्वशङ्का-वारणाय निर्देशाश्रयणस्याऽवश्यकत्वेन लाघवाभावात्। साहचर्यस्यासार्वत्रि-कत्वेऽप्यत्र तदप्रवृत्तौ मानाभावोऽत आह। सूत्रान्तरेति। नन्वस्य गौणे साहचर्येणाप्रवृत्तेर्वक्तुमशक्यत्वेऽपि न्यायसिद्धैवास्य तत्राप्रवृत्तिरिति शङ्कते। न चेति। अत एवेति। गौणमुख्यपरिभाषायां तादृशगौणत्वस्यैव ग्रहणादे-वेत्यर्थः। आरब्ध इति। अन्यथा सर्वनामकार्याणामनेनैवोपसर्जने वारणसम्भवे तदारम्भो व्यर्थ एव स्यादिति तदप्युक्तार्थे गमकमिति भावः। लोकनिरूढ्या उपसर्जनस्यापि गौणत्वेन परिग्रहेप्यत्र तन्न्यायाऽप्रवृत्तिरित्याह। पदकार्य एवेति। अत एव=संख्यापरत्वेऽपि नित्यद्विवचनान्तत्वादेव॥

बाधादिति। येन नाप्राप्तिन्यायेनेत्यर्थः। अभ्युच्चयायेति। अनेक-

**ङौ तु सवर्णदीर्घ इति । इदं सम्भावनामात्रेण । एषां ङौ 'ईदूतौ च सप्तम्यर्थे' इतिसूत्रस्थभाष्यप्रामाण्येनानभिधानात् । क्विबन्तवातेति । 'ईत्त्वमवकारादौ' इतिवार्तिकस्य, पावान इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च फलैक्यायेदृशेभ्यः क्विपोऽनभिधानमावश्यकमिति । ... .... ... ....**

---

प्रत्युदाहरणदानेन समाधानस्य व्यापकत्वबोधनात्तदर्थावश्यकतायाः स्पष्टप्रतिपत्तय इत्यर्थः । केचित्तु त्यच्छब्दात्प्रागेव भवच्छब्दः पठिष्यते । तथा च भवानित्यादौ न दोष इत्यरुचेराह । **भवन्ताविति** । स च भवांश्च भवन्ताविति विग्रहः । त्यच्छब्दात्पूर्वं भवच्छब्दपाठे तु 'त्यदादीनां मिथस्सहोक्तौ यत्परं तच्छिष्यत' इति तच्छब्दस्यैकशेषापत्तिः । तद्वारणाय यथाश्रुतरीत्यैव पाठे भवानित्यस्यासिद्धिरिति मूलकाराशयमाहुः । परे तु भवन्तावित्येकेनैव प्रत्युदाहरणेन यथाश्रुतपाठे पाठविपर्यासे वा भाष्यकारेष्टेस्साफल्यसम्भवे प्रत्युदाहरणद्वयदानमभ्युच्चयायेत्याशयः । अत एव भवान् भवन्तावित्यभ्युच्चयायेत्युपाध्यायैरुक्तम् । न तु भवन्तावित्यभ्युच्चयायेति नागेशनिगूढाशयमुद्भावयन्ति ॥

**भाष्यप्रामाण्येनेति** । तत्र ह्रीकारोकाररूपसप्तम्या असम्भवात्सप्तमीपदेन सप्तमीसहचरितस्य ग्रहणं भवतीत्युक्तम् । एषां ङावभिधाने तु ईकाररूपसप्तम्यास्सम्भवेन तदसङ्गतिरिति भावः । **ईत्त्वमवकारादाविति** । अस्य तथेत्यादिः । आदाविति फलितार्थकथनम् । भाष्ये ईत्त्वे वकारप्रतिषेध इत्येवोक्तेः । **ईदृशेभ्यः**=आदन्तेभ्यः । **आवश्यकमितीति** । अस्येदमपि सम्भावनामात्रेणेत्यन्तः । ङौ तु सवर्णदीर्घ इति परममूलवत् 'क्विबन्तवातप्रमीशब्दस्य त्वि'त्याद्यपि सम्भावनामात्रेणैव । न तु वस्तुतस्तेषामभिधानमस्तीत्याशयः ॥

**धीवरी पीवरीत्यादि तु 'ध्याप्योः संप्रसारणञ्च' क्विप् क्वनिप् च चेने-त्यर्थकात् 'जनसनखनां सञ्झलोः' 'घुमास्थागापा' इति सूत्रभाष्य-**

---

अयं भावः। घुमास्थेति सूत्र घृतपावानः, वसापावान इत्यादौ पाधातोः क्वनिपीत्ववारणायारब्धं 'ईत्वे वकारप्रतिषेध' इति वार्तिकं वनिपा तद्रूप-सिद्धिमास्थाय प्रत्याख्यातम्। यद्यादन्तेभ्यः क्विप् स्यात्तदा वार्तिकारम्भपक्षे वकारादिप्रत्ययसामान्ये तेन निषेधबोधनेन क्विपीत्वप्रतिषेधस्य वनिपा तत्सा-ध्यप्रयोजनसाधनरूपतत्प्रत्याख्यानपक्षे च प्रत्ययलक्षणेनेत्वप्राप्त्या च फलभेदस्य स्पष्टतया तयोः फलैक्यायाऽदन्तेभ्यः क्विपोऽनभिधानं कल्पनीयमिति॥

नन्वप्राधान्येनालाश्रयणे विध्यर्थं प्रत्ययलक्षणसूत्रमिति वार्तिकमते आदन्तेभ्यः क्विपि प्रत्याख्यानपक्षे ईत्वप्राप्तावपि नियमार्थं तदिति भाष्यमतेऽलिवधौ प्रत्ययलक्षणनिषेधेनेत्वाप्राप्तेरनभिधानकल्पनमनावश्यकमेवेति चेन्न। ध्यायतेस्सम्प्रसारणमिति वार्तिके धीध्यायतेर्धातेर्वेति भाष्यकारोक्त्या घुमास्थे-त्यत्र हलीत्यस्यानजादिपरत्वतात्पर्यकताया अङ्गीकार्यतयेत्वस्यालाश्रयत्वा-भावेन भाष्यमतेऽपि प्रत्ययलक्षणेनेत्वप्राप्त्या फलभेदस्य दुर्वारत्वात्। न चैवमपि यादृशादन्तेभ्यः क्विपि वार्तिकारम्भप्रत्याख्यानयोः फलभेद आपतति, तेभ्यो घुमास्थाभ्यः क्विपोऽनभिधानकल्पनेऽपि सामान्यत आदन्तेभ्यः क्विपो-ऽनभिधानकल्पने न मानमिति वाच्यम्। सार्वत्रिकत्वात् क्विप्येव वाच्ये यू स्त्र्याख्यावित्यत्र विच्प्रतिपादनपरभाष्यस्यैव सामान्यतोऽनभिधानकल्पने मानत्वात्। नन्वेवंरीत्या धीवर्यादीनामप्यनभिधानं प्राप्नोति। आरम्भे ईत्व-प्रतिषेधस्य प्रत्याख्यानपक्षे ईत्वस्य च प्राप्त्या फलभेदादित्यत आह। **धीवरी पीवरीत्यादि त्विति**। आदिना धीरित्यादिसंग्रहः। **भाष्यपर्यालोचनया सिद्धादिति**। एतेनैतादृशानुपूर्वीकवार्तिकानुपलम्भेऽपि न क्षतिरिति ध्वनि-तम्। जनसनेति सूत्रे धियौ धिय इत्यत्रेयङादेशे कर्तव्ये धाधातोः क्विपि

**पर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धम् । धीर्ध्यायतेर्दधातेर्वेति 'क्विब्व-चि' इतिवार्तिकस्थभाष्ये दधातेर्वेत्युक्तिरेकदेशिनः । शंस्था इत्यत्र विजेवेति न दोषः । मीङ् माने इतीकारान्तात् क्विबित्येके । वातप्रमीर्निःश्रृङ्गो मृगाकृतिर्जन्तुविशेषः । बहुश्रेयसीति । 'ईयसो बहुव्रीहेर्न' इति निषेधान्नोपसर्जनह्रस्वः ॥**

---

यदीत्वं तस्यासिद्धत्वं प्राप्नोतीत्याशङ्क्य 'नैतदीत्वं, किं तर्हि ध्याप्योस्सम्प्रसारणमेतदि'त्युक्तम् । एवं घुमास्थेति सूत्रे पावान इत्यादावीत्ववारणायेत्वे वकारप्रतिषेध इति वार्तिकारम्भे 'यदि तर्हि वकारप्रतिषेध इत्युच्यते, कथं तर्हि धीवरीपीवरीति प्रश्ने नैतदीत्वं, किं तर्हि ध्याप्योस्सम्प्रसारणमेतदि'त्युक्तम् । एवं चैतत्सूत्रद्वयभाष्यपर्यालोचनया तादृशं वार्तिकं फलतीति भावः । **सिद्धमिति** । एवं चानयोर्धीङ्धातुप्रकृतिकत्वाभावेन नानभिधानावश्यकेताति भावः । नन्वादन्तेभ्यः क्विपोऽनभिधाने 'धीर्ध्यायतेर्दधातेर्वे'ति भाष्यविरोध इत्यत आह । **दधातेर्वेत्युक्तिरिति** । **एकदेशिन इति** । घुमास्थेति सूत्रस्थभाष्यप्रामाण्येन ततः क्विपोऽनभिधानलाभेन तद्विरोधादिति भावः । नन्वेवमपि शंस्था इत्यत्र स्थाधातोः क्विप्प्रतिपादनपरस्थः क चेति सूत्रभाष्यविरोधो दुर्वार एवेत्यत आह । **शंस्था इत्यत्रेति** । **विजेवेति** । तत्र भाष्ये क्विप्पदमाचारक्विबन्तप्रकृतिककर्तृक्विबन्तम् । सदृशलाक्षणिकं वेति तात्पर्यम् । यदि क्विबन्तवातप्रमीशब्दोऽपि प्रामाणिकस्सोऽन्यथा साधनीय इति मनसि निधायाह । **मीङ्मान इति** । **एके इति** । मुख्या इत्यर्थः ॥

यत्तु वस्तुतस्तु यथोत्तरमिति परिभाषयेत्वमवकारादाविति वार्त्तिकं पावादीनां वनिपा सिद्धिमबुद्ध्वैव प्रवृत्तमिति धीर्ध्यायतेर्दधातेर्वेति भाष्यानुग्रहात्कल्प्यते । शंस्था इत्यादावन्तरङ्गपरिभाषयेत्वात्पूर्वमेव वेरपृक्तस्येति लोपे हलादित्वाभावादेव नेत्वप्राप्तिः । धीः वातप्रमीरित्यादावन्तरङ्गपरिभाषया

अनित्यत्वान्न दोष इत्यौत्तराहाः, तन्न । धीरित्यत्रान्तरङ्गपरिभाषाया अनित्यत्वादप्रवृत्तावपि नित्यत्वाद्वेरपृक्तस्येत्यनेन लोपे शंस्था इत्यत्रेव हलादिकित्परत्वाभावेनेत्वाप्रवृत्तौ दधातेर्वा धीरिति भाष्यविरोध इति तद्बलाद्धलीत्यस्यानजादिपरत्वतात्पर्यकताया वक्तव्यत्वेनेत्वस्यालाश्रयत्वाभावेन शंस्था इत्यत्रान्तरङ्गत्वादपृक्तलोपेऽपि प्रत्ययलक्षणेनेत्वस्य दुर्वारत्वात् ॥

यदपि 'परे तु प्रकृतिविशेषोद्देश्यकक्विपि परत एवेत्वमवकारादाविति वार्तिकं प्रवर्तते । शंस्था इत्यादौ स्थः क चेति चकारेण स्थाधातोः क्विपो विधानादीत्वं न जायते । धीः वातप्रमीरित्यादौ क्विप्चेत्यनेन क्विपो विधानातत्र प्रकृतिविशेषोपादानाभावात् 'ईत्वमवकारादा, वित्यस्य विषयो नास्तीतीत्वमवकारादाविति वार्तिकमते, वनिपा तत्प्रत्याख्यानपरभाष्यमते च न फलभेद इत्याहुरित्यौत्तराहाः । तदप्ययुक्तम् । ईत्वमवकारादाविति वार्तिकस्य कथंचिद्विशेषपरत्वाङ्गीकारेऽपि प्रकृतिविशेषोद्देश्यकवकारादिप्रत्ययपरत एव निषेध इत्यर्थलाभेऽपि क्विप्येवेति तदुक्तार्थालाभात् । अथैवमपि शंस्था इत्यत्र निषेधस्य धीर्वातप्रमीरित्यादौ तदभावस्य च सिद्धतया सिद्धमेव मदभिलषितमिति ब्रूषे, तदा वार्तिकस्य तादृशविशेषपरत्वस्वीकारे घृतपावान इत्यादावेव तन्निषेधो न स्यात् । वनिपः प्रकृतिविशेषोद्देशेनाविधानात् । किंच दधातेर्वा धीरिति भाष्यबलेन यथाकथंचित् त्वदुक्तरीत्या विशेषपरत्वाङ्गीकारेऽपि शंस्था इत्यत्र वार्तिकारम्भपक्षे तेन निषेधादीत्वाप्राप्त्या, तत्प्रत्याख्यानपक्षे तत्प्राप्त्या चारम्भप्रत्याख्यानयोः फलभेदस्तदवस्थ एव । किंचाऽदन्तशेखरव्याख्यानावसरे विड्यपाश्शंस्था इत्यादौ क्विपीत्वापत्त्या विजेव भवतीति परे त्वित्यादिना स्वेनैवोक्तत्वेन पुनरत्र शंस्था इत्यत्र क्विप्प्रतिपादनं स्वग्रन्थविरुद्धं चेत्यपि बोध्यम् ॥

यू स्त्र्या । दीर्घयोरेव ग्रहणं, व्याख्यानात् । 'वा च्छन्दसि' इति पूर्वसवर्णदीर्घः । यू किम् । मात्रे । 'आणनद्या' इति न । स्त्रियमाचक्षाते स्त्र्याख्यौ । मूलविभुजादित्वात् कः । स्त्र्याख्यावित्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरित्याह—ईदूदन्ता-

---

व्याख्यानादिति । प्रकृतसूत्रस्थभाष्यरूपादित्यर्थः । तत्र हि 'किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोरिति विकल्प्य दीर्घग्रहणपक्षे यू इत्यत्र पूर्वसवर्णदीर्घस्य, ङिति ह्रस्वश्चेत्यत्र सामानाधिकरण्यस्य चानुपपत्तिमुद्भाव्य ह्रस्वग्रहणे शकटिबन्धुरित्यत्र नदीबन्धुनीति पूर्वपदान्तोदात्तस्य बहुशकटिरित्यत्र नद्यृतश्चेति कपः प्राप्तिं चोक्त्वा दीर्घयोरेव ग्रहणमिति सिद्धान्तितम् । पूर्वसवर्णदीर्घस्तु दीर्घाज्जसि चेत्यत्र वा च्छन्दसीत्यनुवृत्त्या साधितः । ङिति ह्रस्वश्चेति सूत्रे तु य्वोर्यौ ह्रस्वावित्येवं वैयधिकरण्यमेवाऽऽश्रितमिति बोध्यम् । यू किमिति । स्त्र्याख्यं नदीत्येव सूत्रमस्तु । आबन्तस्य तु न नदीसंज्ञा, ङेराम्नद्याम्नीभ्य इत्यत्र नद्याः पृथगापो ग्रहणादित्याशयः । मात्र इति । न च मातृशब्दस्य जननीपरिच्छेत्तृवाचकतया नानालिङ्गत्वेन नित्यस्त्रीत्वाभावादेव न नदीत्वमिति वाच्यम् । प्रवृत्तिनिमित्तभेदस्य शब्दभेदनियामकत्वेन जननीपरिच्छेतृवाचकमातृशब्दयोः प्रवृत्तिनिमित्तभेदेन भेदात् परिच्छेत्तृवाचकमातृशब्दस्य पुंलिङ्गत्वेऽपि जननीवाचकस्य तस्य नित्यस्त्रीत्वाव्याघातादत्र तस्यैव ग्रहणेन स्त्र्याख्यावित्यनेन नदीत्वस्य वारयितुमशक्यत्वात् । ननु स्त्र्याख्यावित्यत्र स्त्रियमाचक्षाते इति विग्रहे आतश्चोपसर्ग इति कप्रत्ययस्याणा परत्वाद्बाधादुपसर्गपूर्वत्वेनाऽतोऽनुपसर्ग इत्यस्याप्राप्त्या च रूपासिद्धिरत आह । मूलविभुजादित्वादिति । विशेष्यत्वात्तदन्तविधिरिति । तन्व्यादिघटकेकारादेरवाचकत्वात्स्त्रीप्रत्ययानां द्योतकत्वेन गौर्यादिघटकस्यापि तस्यावाचकतया वर्णसंज्ञापक्षो न युक्त इति बोध्यम् । ननु तदन्तसंज्ञापक्षे तुदन्तीत्यत्र नुम् न

**विति। 'आच्छीनद्योः' इत्यादौ नदीशब्दस्य तदवयवे लक्षणा बोद्धया। आख्याग्रहणान्नित्यत्वलाभस्तदाह—नित्यस्त्रीलिङ्गाविति। तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः। नित्यस्त्रीत्वञ्च प्रवृत्तिनिमित्तैक्ये**

---

स्यात्। अवर्णान्ताङ्गात्परो यः शतुरवयवस्तदन्ताङ्गस्य नदीपरत्वाभावादित्यत आह। **तदवयवे लक्षणेति**। शत्रन्तस्याङ्गसंज्ञाया निमित्तभूते नद्यवयव इत्यर्थः। तेन तुदद्गौरीत्यत्र गकारस्य नद्यवयवत्वेऽपि न दोषः। नन्वेवमपि शत्रन्तान्मतुपि तुदद्वतीत्यत्र नुमापत्तिः, मतुपस्तदङ्गसंज्ञानिमित्तत्वान्नद्यवयवत्वाच्च। न चेष्टापत्तिः। वर्णसंज्ञापक्षेऽप्राप्तेरिति चेन्न। शीसाहचर्येणेकारप्रश्लेषेण वा ईकाररूपनद्यवयवस्यैव ग्रहणेनादोषात्। न चैवमपि तुदते हितं तुदतीयम्, तदतति गच्छतीति तुदतीयात्, ततस्तमाचष्ट इति णिचि क्विपि णिलोपे टिलोपे यलोपे च कृते तुदती, ततो मतुपि ङीपि तुदतीमतीत्यत्र दोष एव। छप्रत्ययसम्बन्धीकारस्य शत्रन्ताङ्गसंज्ञानिमित्तत्वादीकाररूपनद्यवयवत्वाच्चेति वाच्यम्। वर्णसंज्ञापक्षेऽपि तत्र नुमः प्राप्त्या इष्टापत्तेः। अत एव शीङ्योरिति नासूत्रि। यदि तत्र नुमोऽनिष्टत्वे मानमुपलभ्यते, तदा नदीपदस्य नदीचरमावयवे लक्षणेति बोध्यम्। **आख्याग्रहणान्नित्यत्वलाभ इति**। आख्याग्रहणसामर्थ्येन स्त्रीत्वविशिष्टमेव याचक्षते, न तु लिङ्गान्तरयुक्तमपीत्येवं नियमाश्रयणादिति भावः। निरुक्तनियमाश्रयणे फलं दर्शयति। **ग्रामण्यादेर्व्यावृत्तिरिति**। ग्रामणीशब्दस्य क्रियाशब्दत्वेन त्रिलिङ्गत्वान्नित्यस्त्रीत्वाभावेन नदीसंज्ञा न भवतीति भावः। लिङ्गभेदेन शब्दभेदस्तु न। प्रवृत्तिनिमित्तभेदस्यैव शब्दभेदप्रयोजकत्वात्। लिङ्गभेदेऽपि भेदव्यवहारस्य लोकेऽदृष्टत्वात्। **नित्यस्त्रीत्वं चेति**। नित्यस्त्रीलिङ्गशब्दत्वं चेत्यर्थः। **प्रवृत्तिनिमित्तैक्य इति**। यदा येन प्रवृत्तिनिमित्तेन लिङ्गान्तराविशिष्टयेन स्वेन स्त्रीत्वविशिष्टोऽर्थोऽभिधीयते, तदा स्वस्य नित्यस्त्रीत्वमिति भावः। यस्य नदीसंज्ञा

**लिङ्गान्तरविशिष्टार्थानभिधायकत्वम्। ङ्यन्तकुमार्यादीनां क्यचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय प्रवृत्तिनिमित्तैक्ये इति। नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यात्, अत आह—प्रथमेति। अर्थान्तरसङ्क्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रमेऽपि नदीत्वं वक्तव्यमित्यर्थः। यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यम्। .... .... .... ....**

---

चिकीर्षिता, स स्वपदार्थः। येन प्रवृत्तिनिमित्तेन स्त्रीत्वविशिष्टार्थस्याभिधायकं, तेनैव प्रवृत्तिनिमित्तेन लिङ्गान्तरविशिष्टार्थस्याभिधायकं यन्न भवति तादृशशब्दत्वं नित्यस्त्रीलिङ्गशब्दत्वमिति यावत्। प्रवृत्तिनिमित्तैक्य इति विशेषणस्य फलमाह। **ङ्यन्तकुमार्यादीनामिति। क्यचि निर्वृत्तेनेति।** क्यजन्तकुमारीशब्देनेत्यर्थः। **समानाकारतयेति।** शब्दतस्समानाकारत्वेनेत्यर्थः। इदं च प्रवृत्तिनिमित्तभेदेऽपि शब्दमात्रसारूप्येण शब्दैकत्वमित्याशयकप्रथमलिङ्गग्रहणं चेति वार्तिकस्थकैयटानुरोधेन। वस्तुतस्तु प्रवृत्तिनिमित्तभेदस्य शब्दभेदप्रयोजकतायाः प्रकृतसूत्रे प्रदीपोद्योतयोः स्पष्टतया ङ्यन्तक्यजन्तकुमारीशब्दयोः प्रवृत्तिनिमित्तभेदाद्भेदेन क्यजन्तकुमारीशब्दस्य त्रिलिङ्गत्वेऽपि ङ्यन्तकुमारीशब्दस्य लिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपनित्यस्त्रीत्वस्याव्याघातात्प्रवृत्तिनिमित्तैक्य इति विशेषणमनावश्यकमेवेति बोध्यम्। **एवमिति।** एवंविधस्य नित्यस्त्रीत्वस्य स्वीकार इत्यर्थः। **नदीत्वं न स्यादिति।** तस्यान्यपदार्थविशेष्यकबोधजनकत्वेन लिङ्गान्तरविशिष्टार्थाभिधायकत्वादिति भावः। प्रथमलिङ्गग्रहणं चेति वार्तिकप्रत्याख्यानप्रकारं दर्शयति। **यथोद्देश इति। पूर्वप्रवृत्तेति।** तत्र पक्षे भविष्यति किंचिदनेन प्रयोजनमित्यभिसन्धिमात्रेण संज्ञाप्रवृत्तेरन्तरङ्गत्वाद्वृत्तेः पूर्वं प्रवृत्तेत्यर्थः। न चाकृतव्यूहपरिभाषया पूर्वं नदीत्वं न भवतीति वाच्यम्। तस्या असत्त्वात्। प्रकृतवार्तिकप्रत्याख्यान

**कार्यकालपक्षेऽपि कुमारीत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा। समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः। तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम्। तदुक्तं भाष्ये 'अवयवस्त्रीविषयत्वात्सिद्धम्, अवयवोऽत्र स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यति' इति। आकडारस्थसञ्ज्ञानां कार्यकालत्वाभावात्। अन्यथा तत्तद्विध्येकवाक्यतापन्नयोः कथं बाध्यबा-**

परस्य 'अवयवस्त्रीविषयत्वात्सिद्धमिति' भाष्यस्य कैयटोक्तयथोद्देशमात्राभिप्रायकत्वं न युक्तमिति सूचयन् कार्यकालेऽपि वार्तिकस्यानावश्यकतां दर्शयति। **कार्यकालपक्षेऽपीति।** **कुमारीत्यादाविति।** क्यजन्तादाचारक्विबन्ताद्वा कर्तृक्विपि निष्पन्नकुमारीशब्दादावित्यर्थः। **प्रकृतिभूतकुमारीशब्दस्येति।** क्यचः क्विपो वा प्रकृतिभूतस्य ङ्यन्तकुमारीशब्दस्येत्यर्थः। **तदवयवस्य**=समासावयवस्य श्रेयसीशब्दादेः। समुदायस्य नदीकार्यं तु नद्यन्तत्वाद्भवतीति भावः। प्रत्याख्यानप्रकारस्य भाष्यारूढत्वं दर्शयति। **तदुक्तमिति।** **अवयवस्त्रीविषयत्वादिति।** अवयवशब्देनात्र वृत्तिप्रकृतिभूतशब्दमात्रग्रहणम्। तेन क्यजाद्यन्ते न दोषः। इदं च पक्षद्वयसाधारणं भाष्यम्। अत एव तदाश्रया नदीसंज्ञा भविष्यतीत्युक्तम्। कार्यवेलायामपि भविष्यतीति तदर्थः। कैयटरीत्या यथोद्देशमात्राभिप्रायकत्वे तु 'तदाश्रया नदीसंज्ञाऽस्ती' त्येव वदेत्। स्पष्टं चेदमुद्योते। अवयवस्त्रीविषयत्वात्सिद्धमिति भाष्यं यथोद्देशपक्षाभिप्रायकमेवेति कैयटाशयमुपवर्णयति। **आकाडारस्थसंज्ञानामिति।** **कार्यकालत्वाभावादिति।** एतदुत्तरमवयवस्त्रीवियत्वात्सिद्धमिति भाष्यं यथोद्देशपक्षाभिप्रायकमेवेति शेषः। **अन्यथा**=कार्यकालत्वाङ्गीकारे। **एकवाक्यतापन्नयोरिति।** अपादाने पञ्चमी, कर्तृकरणयोस्तृतीयेति शास्त्रैकवाक्यतापन्नयोरपादानसंज्ञाकरणसंज्ञयोरित्यर्थः। **कथं बाध्यबाधकभाव इति।**

**धकाभावः स्यादिति बोध्यमित्यपि केचित् ॥**

---

अभीष्ट इत्यर्थः । प्रगृह्यसंज्ञासूत्रस्थभाष्यप्रामाण्यात्संज्ञानां कार्यकालपक्षे विधिदेशीयत्वाभ्युपगमेनाऽकडारीयसंज्ञानां कार्यकालत्वाङ्गीकारे तृतीयाविध्येकवाक्यतापन्नकरणसंज्ञापेक्षया पञ्चमीविध्येकवाक्यतापन्नापादानसंज्ञाया एव परत्वेन करणसंज्ञाबाधकत्वमेवापादानसंज्ञायाः स्यान्न त्वभीष्टमपादानसंज्ञाबाधकत्वं करणसंज्ञायाः । तथा चापादानमुत्तराणि कारकाणि बाधन्त इत्याकडारादिति सूत्रस्थभाष्यासङ्गतिः । एवं च तद्बलादाकडारीयसंज्ञानां कार्यकालत्वाभाव अभ्युपेय इति भावः ॥

**केचिदिति** । अत्रारुचिबीजं तु, व्यवहर्तृदृष्टान्तमूलकस्य परिभाषास्वभ्युपगतस्य विधिदेशीयत्वाभावस्य संज्ञासु परित्यागो निर्बीजः । कश्चिदेकदेशस्थ इत्यादि भाष्यमपि संज्ञापरिभाषोभयसाधारणमिति वक्तुं शक्यम् । परिभाषारूप इति कैयटस्तु परार्थोपलक्षकतया योज्यः । अत एव निषेधशास्त्राणामपि सङ्ग्रह उपपद्यते । संज्ञासु पदैकवाक्यताया असम्भवेन दीपदृष्टान्तविरोधाच्च तद्भाष्यं संज्ञाविषयकमिति तु न युक्तम् । तद्दृष्टान्तबलेन कथंचित् विधिप्रकाशकत्वलाभेऽपि पदैकवाक्यतायाश्शब्दमर्यादया अलाभात् । अन्यथा क्ङिति चेति सूत्रविषये तद्दृष्टान्तोपन्यासस्यासाङ्गत्यापत्तिः । निषेधशास्त्राणां विधिभिर्वाक्यैकवाक्यताया एवाङ्गीकारात् । अयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसो मादिति सूत्रस्थभाष्यं तु प्रगृह्यसंज्ञाप्रयुक्तः प्रकृतिभावः पर इत्यर्थकम् । अन्यथा संज्ञाया अन्तरङ्गत्वात्तदसङ्गतिरेव । कथम्? कार्यकालं संज्ञापरिभाषमित्यादि तदुत्तरभाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरमेव । स्पष्टश्चेदमुद्योते । एवञ्च संज्ञाशास्त्राणां कार्यकालपक्षेऽपि विधिदेशीयत्वाभावस्य परमसिद्धान्ततया अपादानमुत्तराणि कारकाणि बाधन्त इति भाष्यस्य कार्यकालेऽप्यनुपपत्त्यभावेनाऽकडारीयसंज्ञासु कार्यकालत्वाभावो निर्मूलः, अत एव भसंज्ञाविषये कार्यकालत्व-

हे बहुश्रेयसीति। ह्रस्वे कृते गुणस्तु न। प्रक्रियालाघवाय अम्बार्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येव वाच्ये ह्रस्वविधान सामर्थ्यात्। 'जसि च' इत्यत्रैकदेशो स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम्। अम्बार्थानामपि गुणस्तु वक्तुमशक्यः। 'अनः क्लीबं जले शोके मातृस्यन्दनयोरपि' इति रभसाद्युक्तानःशब्दस्याम्बार्थत्वेन गुणापत्तेः। ह्रस्वग्रहणे तु 'अच'

---

प्रतिपादनपरं ष्यङस्सम्प्रसारणमिति सूत्रस्थं भाष्यमपि सङ्गच्छते। पक्षविशेषानुपक्रमेण प्रवृत्त 'मवयवस्त्रीविषयत्वासिद्ध'मित्यादि प्रकृतसूत्रस्थं भाष्यं च स्वरसतः सङ्गच्छत इति। एतेन केचिदिति प्रतीकमुपादाय संज्ञयोः कार्यार्थमन्यदेशगमनेऽपि न स्वदेशीयत्वत्यागः। व्यवहारार्थं तत्तद्देशगतानां व्यवहर्तॄणामिवेत्यस्वरस इति कैश्चिदुक्तमस्वरसम्, इदमयुक्तम्। अधिकारो नाम त्रिप्रकारः, कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयतीति भाष्यफक्किकाव्याख्यानावसरे कश्चित्परिभाषारूप' इति कैयटव्याख्यानेन परिभाषाविषय एव स्वदेशात्यागेन कार्यसम्पादनमिति कल्पना। संज्ञाविषये तु कार्यकालपक्षेऽप्यादिभ्यः परैव प्रगृह्यसंज्ञेति प्रगृह्यसंज्ञायाः परत्वस्यादसो मादिति सूत्रभाष्ये उक्तत्वेन संज्ञाविषये स्वदेशत्यागेन व्यवस्थाया भाष्यसम्मतत्वादिति ग्रन्थेन खण्डयित्वान्यादृशमस्वरसं वदन्तो मिश्राः परास्ताः॥

यथाश्रुतन्यासापेक्षया करिष्यमाणन्यासे मात्रालाघवस्य पदलाघवस्य वाऽभावादाह। प्रक्रियालाघवायेति। सामर्थ्यादिति। ह्रस्वोत्तरं गुणप्रवृत्तेरिष्टत्वे ह्रस्वं विधाय तस्य गुणविधाने प्रक्रियागौरवाल्लाघवार्थं साक्षादेव गुणं विदध्यान्न तु ह्रस्वमिति तत्सामर्थ्यात्तस्य न गुण इति भावः। नन्वेवं न्यासे जसि चेत्यनेन नद्या अपि गुणः प्राप्नोतीत्यत आह। एकदेश इति। भाष्ये स्पष्टमिति। ह्रस्वविधानसामर्थ्याद्गुणवारणं 'ह्रस्वस्य गुण' इति सूत्रे, कश्चिदेक-

इत्युपस्थित्याजन्ताम्बार्थग्रहणान्न दोषः । तस्य नपुंसकत्वेऽपि हे वारे इतिवत् पक्षे गुणः स्यादेव । गुणश्रुत्यैकपरिभाषोप-

---

देशस्याप्यनुवृत्तिरिति दामहायनान्ताच्चेति सूत्रस्थे च भाष्ये स्पष्टमित्यर्थः । तत्र हि संख्याव्ययादेर्ङीबित्यतस्संख्यादेरिति वर्तते, अव्ययादेरिति निवृत्तमित्युक्तम् । यद्यपि ह्रस्वस्य गुण इति सूत्रे भाष्ये नद्यन्तेषु सम्बुद्धिह्रस्वे कृते गुणः कुतो नेत्याशङ्क्य 'अम्बार्थानां ह्रस्वो नदीह्रस्वयोर्गुण' इत्येव सिद्धे ह्रस्वविधान-सामर्थ्याद्गुणो न भवतीति समाधाय तदुत्तरं यद्येवमुच्यते, जसि चेत्यनेन नद्या अपि गुणः प्राप्नोतीत्याशङ्क्यैवं तर्हि योगविभागः करिष्यते । अम्बार्थनद्यो-र्ह्रस्वः, ततो ह्रस्वस्य, अम्बार्थनद्योर्ह्रस्वस्य च ह्रस्वो भवति किमर्थमिदं' गुणं वक्ष्यति तद्बाधनार्थम् । ततो गुणो गुणश्च भवति ह्रस्वस्येति । अथवा ह्रस्वस्य गुण इत्यत्राम्बार्थनद्योर्ह्रस्व इत्येतदनुवर्तिष्यत इत्येवं पक्षद्वयमुक्तम्, तथाऽपि पूर्वभाष्यस्यैकदेशानुवृत्तितात्पर्यकत्वाज्ञानेन प्रवृत्तं 'यद्येवमुच्यत' इत्यादिशङ्का-परभाष्यं योगविभागवाक्यभेदाद्याश्रयणप्रयुक्तगौरवोपहितप्रकारान्तरानुधावन-परमेवं तर्ही'त्यादि तदुत्तरभाष्यं चैकदेशिनोरुक्तिप्रत्युक्तिपरमित्याशयेन तथा-ऽऽहतमिति बोध्यम् । एतेन भाष्ये स्पष्टमिति प्रतीकमुपादाय 'वस्तुतो नैवं भाष्यकृतोक्तम् । किन्त्वित्यादिना पूर्वोक्तपक्षद्वयं प्रदर्शयन्त आचार्याःपरास्ताः । अम्बार्थनद्योर्गुण इत्येव सिद्धे ह्रस्वविधानसामर्थ्यान्न गुण इति कस्य चिदुक्तिं खण्डयति । अम्बार्थानामपीति । ननु मातृवाचकस्याप्यनश्शब्दस्य नपुं-सकलिङ्गत्वात् स्वमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न गुणापत्तिरित्यत आह । तस्य नपुंसकत्वेऽपीति । गुणः स्यादेवेति । इकोऽचि विभक्ताविति सूत्रस्थाज्ग्रहणवैयर्थ्यमूलकेन न लुमतेति निषेधानित्यत्वेन सम्बुद्धिगुणप्रवृत्ते-रिकोऽचि विभक्ताविति सूत्रस्थाकरसम्मतत्वेन तद्रीत्याऽत्रापि गुणस्स्यादेवेति भावः । यत्त्वनित्यस्थले लक्ष्यैकचक्षुष्कतया आवश्यकत्वेन न लुमताङ्गस्ये-

स्थितौ त्वम्बेत्यादावप्यनापत्तिः। अयं ह्रस्वः—'अनन्तरस्य' इति न्यायाद् 'ह्रस्वस्य गुणः' इत्यस्यैव बाधकः। तेन मातरित्यत्र 'ऋतो ङीति गुणो भवत्येवेति दिक्॥

आटश्च॥ 'न माङ्योगे' इति सूत्रस्थभाष्योक्ते 'अटश्च, इति न्यासे तु 'वृद्धिरेचीति बोध्यम्। अत्र अट् तु वक्तुमशक्यः। अस्वपोऽहसन्नित्यत्र वृद्धिवारणाय 'अटश्च' इत्यत्र धाता-

---

त्यस्याप्रवृत्तौ बीजाभावान्नदीसाहचर्यात् स्त्रीलिङ्गस्यैवाम्बार्थस्य ग्रहणादनश्शब्दे गुणप्राप्तेरभावाच्चेदमयुक्तमिति मौनिश्रीकृष्णभट्टा इत्याचार्याः। तन्न। अस्मादृशामन्यत्राविद्यमानाया लक्ष्यैकचक्षुष्कताया अनित्यस्थलेऽपि सम्भवाभावेन लक्ष्यैकचक्षुष्केण भगवता सम्बुद्धिगुणविषये न लुमतेति निषेधस्यानित्यत्वाद्-प्रवृत्तेरुक्तत्वेन तद्रीत्याऽत्रापि गुणापत्तेस्सुवचत्वात्। अत्र सूत्रे सहचरितपरिभाषाप्रवृत्ताविगन्तत्वेनापि नदीसाहचर्यस्य सम्भवेन विनिगमनाविरहात्तेन रूपेण साहचर्यग्रहणेऽम्बार्थके मातृशब्द एव गुणस्स्यान्न त्वम्बेत्यादावनिगन्त इत्यत्र सूत्रे सहचरितपरिभाषाया अनित्यत्वादप्रवृत्तेरावश्यकत्वाच्च। ननु ह्रस्वविधानसामर्थ्यान्नद्यामीवाम्बार्थकेऽपि गुणसामान्यस्याप्रवृत्तौ मातरित्यादौ ऋतो ङीति गुणोऽपि न स्यादत आह। अयमिति। अनन्तरस्येति न्यायादिति। सामर्थ्यवर्णन उपस्थितस्य ह्रस्वस्य गुण इत्यस्यैव ग्रहणौचित्यादिति भावः। बाधक इति। सामर्थ्यान्निवर्तक इत्यर्थः। गुणो भवत्येवेति। ह्रस्वापेक्षया नित्यत्वादिति भावः। भाष्योक्त इति। तत्र हि अजादीनामटा सिद्धम्, नार्थ आटा इत्याडजादीनामिति सूत्रं प्रत्याख्याय तदुत्तरमेवं तर्हि वृध्यर्थमाड्वक्तव्य इत्याशङ्क्याटो वृद्धिर्वक्ष्यत इत्युक्तम्। नन्वेवमत्राऽपि लाघवादडेव कुतो न विहित इत्यत आह। अत्रेति। आण्णद्या इत्यत्रेत्यर्थः। अस्वपो हसन्नित्यत्रेति। स्वपेर्लङि सिपि अड्गार्ग्यगालवयोरित्यटि शपि तस्य लुकि

वित्यपकर्षेण वृद्ध्यनापत्तेः । 'वृद्धिरेचि' इत्यस्य तु पररूपं बाधकमिति बोध्यम् । ङेरिति सप्तम्येकवचनं, व्याख्यानात् । इह परत्वादिति । सकृद्गतिन्यायाश्रयणादिति भावः । स्पष्टश्चेदं 'ह्रस्वनद्यापः' इत्यत्र भाष्ये । यद्यपीह आडपवादो नद्याम् सर्वथाऽनवकाशत्वात्

---

सस्य रुत्वे हशि चेत्युत्वम् । तत्राऽऽङुणं बाधित्वाऽटश्चेति वृद्धिः प्राप्नोति । न चान्तरङ्गायां वृद्धौ बहिरङ्गस्योत्वस्यासिद्धत्वं शङ्क्यम् । नाजानन्तर्ये इति निषेधात् । अपकर्षेणेति । उपसर्गादृति धातावित्यतो भाष्यकृत्कृतेनेत्यर्थः । वृद्ध्यनापत्तेरिति । धात्ववयवाच्येवाटश्चेत्यस्य प्रवृत्त्यङ्गीकाराद्बहुश्रेयस्यै इत्यत्र वृद्ध्यनापत्तेरिति भावः । ननु माभूदनेन वृद्धिः, इदानीमपि वृद्धिरेचीत्यनेनैव वृद्धिः क्रियतामित्याशङ्कायामाह । पररूपं बाधकमिति । अतो गुण इति सूत्रविहितं पररूपं बाधकमित्यर्थः । अड्विधानसामर्थ्यात्पररूपं नेति तु वक्तुमशक्यम् । ङेरामि कृते नुड्बाधनार्थमटश्चारितार्थ्यात् । किञ्च श्रियै श्रिया इत्यादौ 'सावेकाचस्तृतीयादिर्विभक्ति'रिति विभक्त्युदात्तत्वं मा भूदागमानुदात्तत्वं यथा स्यादित्यड्विधानमिति न तत्सामर्थ्यम् । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव विभक्तिस्वरमपि बाधते । विशेषतोऽत्राड्वचनसामर्थ्यादिति बोध्यम् । व्याख्यानादिति । व्यवस्थायामिति निर्देशमूलकादित्यर्थः । सकृद्गतिन्यायेति । ङेरामि कृते परत्वादाटा बाधितो नुडनेन न्यायेन वृद्ध्युत्तरं न पुनः प्रवर्तत इत्यर्थः । नद्याम आडपवादत्वेन तदुत्तरं कथमाटः प्रवृत्तिरिति कस्यचिच्छङ्कां निरस्यति । यद्यपीति । सर्वथाऽनवकाशत्वादिति । आटि कृते निर्दिश्यमानस्याऽटा व्यवधानादिति भावः । नच वृद्ध्युत्तरं चारितार्थ्यमस्तीति वाच्यम् । पञ्चमीसमासेन स्थानिवद्भावात्तदुत्तरमप्याटा व्यवधानात् । नन्वागमादेशयोर्भिन्नफलकत्वेन बाध्यबाधकभावाभावादिदमयुक्तम् । अत एव ब्राह्मणेभ्यो दधि दीयताम्, कम्बलः कौण्डिन्यायेत्यादौ कम्बलदानेन न

'अपवादो नुग्दीर्घत्वस्य' इति 'दीर्घोकितः' इतिसूत्रभाष्ये उक्तत्वेनाऽगमादेशयोरपि तत्त्वसत्त्वात्, तथाऽपि अनवकाशत्वेन बाधेऽपवादप्रवृत्त्यनन्तरमुत्सर्गप्रवृत्तेर्न दोषः। अत एव 'न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते, किं तर्ह्यनवकाशत्वात्' इति 'गुणो यङ्लुकोः' इति सूत्रभाष्ये उक्तम्। 'पादः पत्' इति

---

दधिदानबाधः। स्पष्टश्चेदं च्छ्वोरिति सूत्रे कैयट इत्यत आह। अपवादो नुग्दीर्घत्वस्येति। एवं चैतद्भाष्यविरोधात्प्रागुक्तकैयटश्चिन्त्य इति भावः। उत्सर्गप्रवृत्तेरिति। सर्वथाऽनवकाशत्वे माठरकौण्डिन्यन्यायेनैव बाधस्य वक्तव्यतया तद्विषयेऽपवादप्रवृत्त्युत्तरमुत्सर्गप्रवृत्तेरभ्युपगमादिति भावः। अत एव=सर्वथा निरवकाशत्वेन बाधस्थले येन नाप्राप्तिन्यायेन बाधस्थलीयव्यवस्थाविलक्षणव्यवस्थास्वीकारादेव। किं तर्ह्यनवकाशत्वादिति। अलोऽन्त्यपरिभाषैकवाक्यतया गण्रूपाभ्यासान्त्यस्येत्वमित्यर्थे हलादिश्शेषेण णकारनिवृत्तावीत्वमनवकाशमित्यर्थः।

यत्तु वस्तुतस्तु गण्रूपाभ्यासान्त्यस्येत्वमित्यर्थाश्रयणेनानवकाशत्वप्रतिपादने 'अभ्यासविकारेषु बध्यबाधकभावो नास्ती'ति परिभाषाश्रयणेऽपि हलादिश्शेषो न स्यात्। ईत्वस्योक्तरीत्या निर्विषयत्वापत्तेः। तस्माद्युगपद्द्वयोरसम्भवेऽनवकाशत्वं, यथाऽडामोः, आमो ङिद्वचनापहारकत्वेनाऽगमिन एवासत्त्वेन युगपत्तयोः प्रवृत्त्यसम्भवादित्याचार्याः। तन्न। अभ्यासविकारेष्विति परिभाषाश्रयणे तया परिभाषयाऽभ्यासविकाराणां परस्परं समावेशबोधनाद्धलादिश्शेषोत्तरं सामर्थ्याद्भूतपूर्वगत्या गण्रूपत्वमाश्रित्येत्वप्रवृत्तेर्येन नाप्राप्तिन्यायनिरूपणावसरे ग्रन्थकृता स्वयमेवोक्तत्वात्। भाष्ये उक्तमिति। तत्र ह्यभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्त इति परिभाषायाः फलनिरूपणावसरे 'गणेरीत्वं हलादिश्शेषस्य, गणेरीत्वमपवादत्वाद्धलादिश्शेषं न बाधत

सूत्रस्थं 'शब्दान्तरप्राप्त्या ऽनित्ययोराडामोः परत्वादाम्' इति भाष्यं त्वेकदेश्युक्तिरिति बोध्यम् ॥

अङ्यन्तत्वादिति । 'लक्षेर्मुट् च' इत्यौणादिकेप्रत्ययान्तत्वादिति भावः । कुमारीति । ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणाद् 'गोस्त्रियोः' इति ह्रस्वो न । अचि श्नु । भ्रूशब्दो ऽव्युत्पन्नं प्रातिपदिकं, भ्रमेर्डूप्रत्ययान्तो वा । इह 'य्वोः' इति धातोः समानाधिकरणं विशेषणं, तदाह—इवर्णोवर्णान्तधातोरिति । इत्यस्येति । इत्यन्तस्येत्यर्थः । तेन सुभ्रुवाविति सिद्धम् । आन्नरेति । स्थानत इति भावः । य्वोरिति किम् । वव्रे । अचि किम् । युयात् । इती-

---

इत्युक्त्वा तदुत्तरं न गणेरीत्त्वमपवादत्वाद्धलादिश्शेषं बाधते, किंतर्ह्यनवकाशत्वा' दित्युक्तम् । शब्दान्तरप्राप्त्येति । अयं हेतुराटोऽनित्यत्वे । आम् तु स्वत एवानित्यः । आटि कृते निर्दिश्यमानस्याऽटा व्यवधानात्तदप्राप्तेः । एकदेश्युक्तिरिति । उभयोस्तुल्यबलत्व एव विप्रतिषेधशास्त्रप्रवृत्त्याऽमोऽनवकाशत्वेन परत्वादित्यस्यासङ्गतत्वादिति भावः ॥

ननूङ्च गमादीनामिति निष्पन्नस्य क्विबन्तभ्रूशब्दस्य धातुत्वादेव सिद्धे भ्रूशब्दोपादानं व्यर्थमत आह । अव्युत्पन्नं प्रातिपदिकमिति । व्युत्पन्नत्वेऽपि न तद्वैयर्थ्यमित्याह । डूप्रत्ययान्तो वेति । समानाधिकरणमिति । सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादिति भावः । इत्यन्तस्येति । आङ्गत्वात्तदन्तविधेर्न्याय्यत्वादिति भावः । ग्रहणवतेति निषेधस्तु न । तस्याः प्रत्ययविधिविषयत्वात् । वव्रे इति । पूर्वोत्तरसाहचर्येणाजन्तधातोरेव ग्रहणाद्धलन्तेषु दोषवारणेऽप्यत्र दोषो दुर्वार इति भावः । ननु धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति परिभाषयेयङुवङोर्धातुसंशब्दनेन विहितप्रत्यय

यङीति । सुधीशब्दे यण्निषेधारम्भादत्र प्रकरणे 'धातोः स्वरूपग्रहणे' इति परिभाषाया अप्रवृत्तिरिति भावः ।

एरनेकाचो । धात्ववयवसंयोग पूर्वो न भवतीति । धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः । तद्भिन्नश्च धात्ववयवपूर्व एवेति उदियावित्यादौ न दोषः । असंयोगादित्येव धात्ववयवसंयोगभिन्नात्परस्येत्यर्थेन सिद्धे पूर्वग्रहणं स्पष्टार्थम् । .... .... .... .... ....

---

एव प्रवृत्त्या कथं कुमार्यावित्यत्रेयङः प्राप्तिरत आह । अत्र प्रकरण इति । असति बाधके प्रमाणानां सामान्ये पक्षपातादिति भावः । अप्रवृत्तिरिति । नन्विको यणचीति यण्णिषेधेन न भूसुधियोरिति चरितार्थमिति कथमत्र ज्ञापकत्वमिति चेन्न । इको यणचीत्यनन्तरमेव निषेधे कर्तव्य एतत्प्रकरणे निषेधकरणान्निरुक्तार्थज्ञापनसम्भवात् । किञ्च न भूसुधियोरिति इयङ्घटितनिर्देशोऽपि निरुक्तार्थे मानम् । अन्यथा धातोः कार्यमुच्यमानमिति परिभाषयेयङोऽप्राप्त्या तन्निर्देशासङ्गतिस्स्पष्टैवेति बोध्यम् ॥

मूले 'न भवति य इवर्ण' इत्युक्त्या नञः क्रियान्वयेन प्रसज्यप्रतिषेधत्वभ्रमं निराकरोति ।'धात्ववयवसंयोगपूर्वभिन्न इति । धात्ववयवपूर्व एवेति । नञिवयुक्तन्यायादिति भावः । पर्युदासपरतया व्याख्याने फलमाह । उदियाविति । उत्पूर्वादीङ्गतावित्यस्मात्किपि रूपम् । स्पष्टार्थमिति । न च धात्ववयवसंयोगभिन्नात्परस्येत्यर्थे यवक्रियौ, कटप्रुवावित्यादौ धात्ववयवसंयोगभिन्नसंयोगघटितसमुदायात्परत्वस्येकारे सत्त्वेन यणापत्तिः । पूर्वग्रहणसत्त्वे तु धात्ववयवसंयोगपूर्वत्वावच्छिन्नप्रतियोगिताकभेदस्य लाभेन यवक्रियावित्यादाविकारे तादृशभेदाभावान्नातिप्रसङ्ग इति कथं पूर्वग्रहणस्य स्पष्टार्थत्वमिति वाच्यम् । धात्ववयवसंयोगभिन्नस्य पर्युदासन्यायेन धात्ववयवस्यैव ग्रहणेन पूर्वग्रहणाभावेऽपि तत्र दोषो वारयितुं शक्य इत्याशयात् । न चैवमपि धात्व-

**एः किम् । असंयोगपूर्वग्रहणमिवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूदिति । तेन यवक्रियावित्यादौ नातिप्रसङ्गः । लुलुवतुरित्यादौ तु नातिप्रसङ्गः 'ओः सुपि' इति नियमात् । विपरीतनियमस्तु न । सुधीशब्दे 'अचि सुपि' यण्निषेधारम्भात् । कुमार्यां-**

---

वयवसंयोगभिन्नसंयोगावयवरेफपादायोक्तदोषो दुर्वार एवेति वाच्यम् । असंयोगादिति विशेषणसामर्थ्येन धात्ववयवसंयोगभिन्नधात्ववयवस्य संयोगानवयवस्यैव ग्रहणेनादोषात् । एवं रीत्या तत्र दोषवारणेऽपि तद्वारणोपायं स्पष्टं बोधयितुं पूर्वग्रहणमिति बोध्यम् ॥

एतेन 'वस्तुतस्तु संयोगभिन्नसंयोगैकदेशात्तद्घटितसमुदायाद्वा परस्य संयोगपूर्वकस्यापि यणापत्तिः । धात्ववयवसंयोगात्परस्य नेत्यर्थे तुदियावित्यादौ दोषः । पर्युदासेनोक्तार्थालाभादिति पूर्वग्रहणमावश्यकमिति वदन्त आचार्याः, तदनुसारेणास्य ग्रन्थस्य चिन्त्यत्वं वदन्त औत्तराहाश्च परास्ताः ॥

**एः किमिति** । अचि श्नुधात्वित्यतो य्वोरित्यनुवृत्त्यैव सिद्धेरित्याशयः । **यथा स्यादिति** । 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्' इति न्यायेनेति भावः । **अङ्गविशेषणं माभूदिति** । एरित्यस्याभावे द्वयोरप्यनुमितत्वेन तन्न्यायाप्रवृत्तौ कदाचिदङ्गविशेषणताऽपि स्यादिति भावः । **तेन**=असंयोगपूर्वग्रहणस्येवर्णविशेषणत्वेन । नन्वेरित्यस्याभावे पूर्वसूत्रात् य्वोरित्यस्यानुवृत्त्या लुलुवतुरित्यादावुवर्णस्य यणापत्तिरिति तन्निवृत्त्यर्थमपि एरित्युपात्तमिति कुतो नोक्तमत आह । **लुलुवतुरित्यादाविति** । **नियमादिति** । एरित्यनुच्यमानेऽनेनैवोरपि यणिसिद्धावोस्सुपीति सूत्रमुवर्णान्तस्य चेत्सुप्येवेति नियमार्थं भवतीति न लुलुवतुरित्यादौ यणापत्तिरिति भावः । **विपरीतनियमस्त्विति** । सुपि चेदुवर्णान्तस्यैवेत्येवं रूप इत्यर्थः । **यण्णिषेधारम्भादिति** । अन्यथा नियमेनैव सुपि सुधीशब्दस्य यण्वारणसम्भवे तन्निषेधो व्यर्थ एव स्यादिति भावः ॥

**विति । अन्तर्वर्तिविभक्त्या पदत्वाच्छाकलं त्वत्र न । 'नः क्ये' इति निषेधात् । प्रधीरिति । 'प्रकृष्टं ध्यायति' इति विग्रहे नित्यस्त्रीत्वाभावान्न नदीत्वम् । 'प्रकृष्टा धीर्यस्य' इति विग्रहे तु नदीत्वम् । ग्रामणीरिति । अग्रग्रामाभ्यां नयतेरिति णत्वम् ॥**

**'गतिकारकपूर्वस्यैव' इति भाष्ये पठ्यते । स च नियमः ।**

---

**निषेधादिति ।** नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे तेन निषेधादित्यर्थः । विधिमुखप्रवृत्तौ तु क्यच्क्यङ्प्रकृतिभूतसुबन्तातिरिक्तत्वेन सामान्यशास्त्रे सङ्कोचात्पदत्वाप्राप्तिरेवेति बोध्यम् । न चैवमपि राजीयतेः क्विपि राज्यावित्यादाविकोऽसवर्ण इति शाकलं स्यादिति वाच्यम् । उत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधेनात्रय इत्यादौ पूर्वरूपस्येवात्र शाकलप्रकृतिभावस्य वारयितुं शक्यत्वात् । उत्तरपदशब्दस्य वृत्तिचरमावयवे रूढत्वात् । यद्यप्येवं रीत्या कुमार्यावित्यादावपि शाकलं वारयितुं शक्यं, तथाऽप्युपायस्योपायान्तरादूषकत्वात्तथोक्तमित्यवधेयम् । **न नदीत्वमिति ।** मतद्वयेऽपीति शेषः । अस्य पुंलिङ्गत्वेन वृत्तिमते न नदीत्वम् । कैयटमते तु सुतरां तन्नेति भावः । **इति विग्रहेत्विति ।** इदमुपलक्षणम् । कर्मधारयस्यापि । **नदीत्वमिति ।** सर्वलिङ्गेऽपि मतद्वयेऽप्यवयवस्य धीशब्दस्येति शेषः । अत्र नेयङिति निषेधस्तु न । यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङादिस्थितिः क्वचिद्दृष्टा, तस्य तदवयवस्य च नदीत्वं नेति तस्यार्थेन प्रकृते इयङो यणा बाधेन बाधकाबाधितेयङादिस्थितेरभावात् । निरूपयिष्यते चेदमग्रे ॥

भाष्ये 'गतिकारकपूर्वस्यैवेष्यत' इत्येवोक्तत्वेन मूले गतिकारकेतरपूर्वपदस्य यण्णे'ति कथनमयुक्तमित्यत आह । **स च नियम इति ।** सपूर्वस्य चेद्गतिकारकपूर्वस्यैवेत्येवं रूप इत्यर्थः । अन्यथा एवकारस्यानन्वयापत्तेः ।

**तेन गतिकारकपूर्वभिन्नस्य नेति फलति । तद्भिन्नश्च तत्सदृशं सपूर्वपदमेव । तेन निन्यतुरित्यादौ यण् । तदाह—गतिकारकेतरेति । यत्त्वत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वाद् गृह्यत इति । तन्न । भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषयप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः । अत एव नदीसञ्ज्ञासूत्रस्थः 'प्रकृष्टा धीर्यस्या' इतिविग्रहाभिप्रायेण प्रवृत्तः 'प्रध्यै ब्राह्मण्यै' इति भाष्यप्रयोगः सङ्गच्छते । शुद्धधियाविति । 'शुद्धा धीर्यस्य' इति विग्रहः । 'शुद्धं ध्यायति' इति विग्रहे यणेव । आद्ये सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वात् शुद्धत्वस्य कथमपि न कारकत्वमिति भावः ॥**

---

नियामकत्वाश्रयणेन फलितमर्थमाह । तेनेति । पर्युदासन्यायेन गतिकारकपूर्वभिन्नस्य सपूर्वस्यैव ग्रहणे फलमाह । तेनेति । तदाहेति । नियामकत्वाश्रयणेन फलितमर्थमाहेत्यर्थः । नित्याधिकारस्थ इति । कुगतिप्रादय इत्यनेन विहित इत्यर्थः । पूर्वपदग्रहणाभावेनेति । गतिकारकेतरपूर्वपदस्येति मूलोक्तस्य मूलभूतभाष्येष्टौ पूर्वपदग्रहणाभावेनेत्यर्थः । विशिष्टरूपोपादानविषय इति । प्रतिपदोक्तत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकं लाक्षणिकत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकं च यद्रूपं, तद्रूपावच्छिन्नोपादानविषय इत्यर्थः । अत एव=अत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्तेरेव । सङ्गच्छत इति । अन्यथा तत्र प्रतिपदोक्तगतिसमासाभावेन यणोऽप्रवृत्त्या तदसङ्गतिरिति भावः ॥

यणेवेति । शुद्धत्वस्यासत्त्वभूतक्रियान्वयित्वेन कारकत्वादिति भावः । सत्त्वभूतार्थकेति । विग्रहे स्त्रीत्वान्वयानुरोधाच्छुद्धत्वस्य सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वस्याऽवश्यकत्वेन वृत्तिविग्रहयोस्समानाकारकत्वानियमाद्वृत्तावपि तद्विशेषणत्वमाश्रयणीयमिति भावः । न कारकत्वमिति । असत्त्वभूत-

**कथन्तर्हीति । 'दुर्ध्यायतीति 'दुष्टा धीर्ध्यानं येषामिति 'वृश्चिकाद् भीः' 'इति विग्रहाभिप्रायेण प्रश्नः । दुःस्थितेति दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः । प्रकृष्टा धीरित्यादौ प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमिति यण् भवत्येव । यत्क्रियेति । या चासौ क्रियेत्यर्थः । तं प्रति–तद्वाचकं प्रति । यद्वा यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः । नेहेति । ततश्च सम्बन्धसामान्यषष्ठ्यैव समासः । भीत्रार्थानामिति तु हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम् । विभक्तिप्रकरणे तु न कृतं,**

---

क्रियान्वयिनामेव कारकत्वादिति भावः। सत्त्वभूतक्रियायोगेऽपि गतित्वमस्तीत्याशयेनाह। **धीध्यानिमिति। तद्वाचकमिति।** तच्छब्दस्य तद्वाचके लक्षणेति भावः। या चाऽसौ क्रियेति विग्रहे तम्प्रतीत्यत्र पुंलिङ्गानुपपत्तिं लक्षणायां गौरवं चाभिप्रेत्याह। **यद्वेति।** यत्क्रियेत्यत्र षष्ठीतत्पुरुषः। वाच्यवाचकभावसम्बन्धश्च षष्ठ्यर्थः। यच्छब्दार्थो धातुः। तदाह। **धातोर्वाच्ययेति। ततश्चेति।** भाष्यकृता बुद्धिपरिकल्पितमपायमाश्रित्य भीत्रार्थानामिति सूत्रस्य प्रत्याख्यातत्वेन प्रकृते बौद्धस्य तस्याविवक्षणादित्यर्थः। नन्वत्र कथं षष्ठीसमासः। भीत्रार्थानामित्यस्याऽरम्भपक्षे शेषषष्ठीबाधनार्थत्वस्य कैयटेनोक्तत्वेन तन्मते आरम्भप्रत्याख्यानयोः फलाभेदाय प्रत्याख्यानपक्षेऽप्यनभिधानात् षष्ठ्या अप्रवृत्तेरवश्यमभ्युपेयत्वात्। उद्योते च तथैव तदाशयस्य वर्णितत्वादित्याशङ्क्य कैयटानुरोधेनाऽनभिधानं न युक्तम्। तस्य चिन्त्यत्वादित्याशयेन तदुक्तवत् सूत्रारम्भाशयमन्यथा वर्णयति। **भीत्रार्थानामिति त्विति। तृतीयाबाधनार्थमिति।** हेतुपदस्वारस्येन हेतुत्वप्रकारकबोधे तृतीयाबाधकतामात्र एव तस्य न्याय्यतया षष्ठीबाधकत्वमुपजीव्य प्रत्याख्यानपक्षेऽनभिधानाश्रयणं निर्मूलमेवेति भावः। नन्वेवमकर्तर्यृणे पञ्चमीति सूत्रान्तरमेव भीत्रार्थानां

कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः। किं हेतुत्वाविवक्षायां सम्बन्धत्वेन विवक्षया षष्ठी सूत्रारम्भेपीत्यपि बोद्धव्यम्। अभ्युच्चयेनाह—वृश्चिकसम्बन्धिनीति। अत्र पूर्वपदान्तर्गतोत्तरपदलोपः, शाकपार्थिवादित्वात्॥

न भू॥ अनन्तरस्येति न्यायेन 'एरनेकाचः' 'ओः सुपि' इत्यनयोरेव निषेधः। सुपीति चानुवर्त्तते तदाह—सुपीति। लोपाविति। 'अतो लोपः' 'लोपो व्योर्वलि' इत्याभ्यामिति भावः। यलोपे निषेधादल्लोपो न स्थानिवत्। वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते,

---

भयस्येति कुतो न सूत्रितम्। हेताविक्यस्य पञ्चमीत्यस्य चाऽनुवृत्त्या इष्टसिद्धेरित्यत आह। कारकत्वप्रयुक्तकार्येति। वृश्चिकभीत इत्यादौ कारकत्वप्रयुक्तथाथादिस्वरादेरित्यर्थः। नन्वेवमपि सूत्रारम्भपक्षे षष्ठ्या दुर्घटत्वेन प्रत्याख्यानपक्षे शेषत्वविवक्षया षष्ठ्याः प्रसक्त्या चारम्भप्रत्याख्यानयोः फलाभेदायानभिधानस्य तत्राप्यावश्यकतया षष्ठीसमासानुपपत्तिस्तदवस्थैवेत्यत आह। किञ्चेति। बोद्धव्यमिति। सूत्रकारमतेऽपि हेतुत्वप्रकारकबोधस्य वैवक्षिकतया तदभावे षष्ठी निर्बाधैवेति फलभेदस्यैवाभावादनभिधानाश्रयणं निर्मूलमेवेति न षष्ठीसमासानुपपत्तिरिति भावः। एवं सूत्रभाष्यमतयोरुभयोरपि पूर्वोक्तसमाधानस्य सुसंबद्धतया सूत्रमते आद्यं समाधानं न घटत इत्याशयेन मतद्वयसाधारणं समाधानमिदमिति मनोरमाग्रन्थं कटाक्षयन्नाह। अभ्युच्चयेनेति। पूर्वसमाधानस्य मतद्वयसाधारणत्वेन न ततोऽस्य वैलक्षण्यमिति भावः॥

सुद्ध्युपास्य इत्यत्रापि यण्निषेधमाशङ्क्याह। अनन्तरस्येति। प्रकारान्तरमप्याह। सुपीति चेति। नन्वल्लोपयलोपाभ्यां प्रागन्तरङ्गत्वाद्वेरपृक्तलोपे ततोऽल्लोपेऽपि वलि लोपो न स्यादत आह। वेरपृक्तलोपादित्यादि। वेरपृक्तलोपात्पूर्वं वलि लोपो यथा भवति, तथा कर्तव्यमित्यर्थः। एवं चातो

स्थानिवत्त्वादिति। एवञ्च यणादेशे यलोपे सत्य् इति स्यादिति भावः। अन्तर्वर्त्तिविभक्त्या पदत्वात् 'न पदान्त' इति निषेधस्तु न स्थानिवत्त्वस्य। 'नः क्ये' इतिसामान्यापेक्षनियमेनास्यापदत्वात्। परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च। क्विबपेक्षक्यच्सम्बन्धियलोपस्य यणि बहिरङ्गासिद्धत्वन्तु न, अनित्यत्वात्।

---

लोपस्य वलि लोपस्य च वेरपृक्तलोपात्पूर्वं प्रवृत्तिरिति भावः। सामान्यापेक्षेति। असति बाधक इतिन्यायेन क्ये सुबन्तं यदि पदं स्यात्तदा नान्तमेवेत्येवंरूपेत्यर्थः, न त्वनुनासिकान्तं यदीति हलन्तं यदीति वा विशेषापेक्षेति भावः। तथा सति सुत्यावित्यादौ शाकलप्रकृतिभावापत्तेः। ननु पदान्तस्य स्थाने विधौ नेत्यर्थेऽत्र पदत्वाभावान्निषेधाप्रवृत्तावपि पदचरमावयवे कर्तव्ये निषेध इत्यर्थे निषेधो दुर्वारः। सम्प्रति पदत्वाभावेऽपि जायमानस्य यणः पदचरमावयवत्वादत आह। परपदस्थेति। नन्वल्लोपस्य स्थानिवत्त्वेऽपि यलोपस्य यणि बहिरङ्गासिद्धत्वेन यणोऽप्राप्तिरेव। नचाऽत्र पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वस्यैव वक्तव्यतया तस्य च लोकन्यायेन युगपत्प्राप्तिविषयकताया अन्यत्र वर्णितत्वेन प्रकृते युगपत्प्राप्तेरभावेन कथमसिद्धत्वप्रसक्तिरिति वाच्यम्। तन्न्यायसिद्धस्यातरङ्गं बहिरङ्गाद्बलीय इत्यस्याऽसिद्धपरिभाषया क्रोडीकरणमिति नागेशनये उभयसङ्ग्राहकवाक्ये तत्राऽन्तरङ्गबहिरङ्गशब्दाभ्यां सर्वविधान्तरङ्गानामपि ग्रहणस्येष्टत्वादित्यत आह। असिद्धत्वं तु नेति। अनित्यत्वादिति। अनित्यत्वादप्रवृत्तिश्च जातविषये युगपत्प्राप्तिविषये च। अत एव तत्सङ्ग्राहकपरिभाषापवादत्वेन जातासिद्धविषयकनाजानन्तर्यपरिभाषाया युगपत्प्राप्तिविषयकाणामन्यासां च परिभाषाणां प्रदर्शनं सर्वासां परिभाषाणामनित्यत्वमूलकत्वमिति कथनं च सङ्गच्छते। पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं युगपत्प्राप्तिविषयकमेवेति सङ्कोचोऽपि नाऽजानन्तर्य इति परिभाषावदनित्यत्वमूलक

**कौलुप्तमिति । भावे क्तः । लोप इत्यर्थः । गोमत्यतेरप्रत्यये गोमानिति भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकारः। क्वौ विधिं प्रति नेत्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः । अनङिति । 'अभिव्यक्तपदार्था ये' इति न्यायस्तु गौणमुख्यन्यायवत् पदकार्यविषय एवेति भावः ।**

---

एवेति भावः । एवं चाऽनित्यत्वादित्यस्य यलोपे कृते अकृते च यणोऽप्राप्तत्वादित्यक्षराननुगुणमर्थवर्णनं श्रीधरस्य मुधैवेति बोध्यम् । नन्वल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते क्वौ लुप्तं न स्थानिवदिति मूलमसङ्गतं, लोपस्य लोपकर्मत्वाभावादित्यत आह । **भावे क्त इति** । अस्मादेव भाष्यप्रयोगात् क्वचित्सकर्मकेभ्योऽपि भावे क्तो भवति, यत्र प्रयोगस्य न गत्यन्तरमिति भावः । **भाष्योक्तेरिति** । अन्यथा तत्राऽल्लोपस्य स्थानिवद्भावान्नुम् न स्यादिति भावः । **अस्याप्यर्थस्य**=क्वौ लोपो न स्थानिवदित्यर्थस्यापि। **क्वचिदिति**। सखीयतेः क्विपि सख्युरिति ख्यत्यात्सूत्रभाष्योक्ते, ण्यन्तपदेः पद इति येन विधिरिति सूत्रभाष्योक्ते, गोमत्यतेरप्रत्यये गोमानित्यादौ, कण्डूयतेः पिपठिषतेश्चाप्रत्यये कण्डूः पिपठीरित्यादौ चेत्यर्थः । तत्राऽद्येऽस्यार्थस्यानाश्रयणेऽल्लोपस्य स्थानिवद्भावाद्यणि लोपो व्योर्वलीति यलोपापत्तिः । यलोपे कर्तव्ये स्थानिवत्त्वं तु न, यलोपे तन्निषेधात् । यकारस्यानादिष्टादचः पूर्वत्वाभावाद्वा । द्वितीये णिलोपस्य स्थानिवद्भावाच्छासि पादः पदिति पद्भावानापत्तिः । गोमानित्यत्राऽल्लोपस्य स्थानिवद्भावान्नुमनापत्तिः । कण्डूरित्यत्राल्लोपस्य स्थानिवद्भावाद्यणापत्तिः । पिपठीरित्यत्र स्थानिवत्त्वेन रुत्वानापत्तिश्चेति बोध्यम् । **अन्यत्र**=न पदान्तसूत्र उद्योते ॥

**पदकार्यविषय एवेति** । तस्याऽपि गौणमुख्यन्यायमूलकत्वादिति भावः । यत्त्विह 'मभिव्यक्तपदार्था य इति न्यायमूलकं प्रसिद्धे'ति सर्वनामप्रकरणस्थस्वग्रन्थविरुद्धमित्याचार्यास्तन्न । तद्ग्रन्थस्य मतान्तरपरतायाः प्रागुक्तत्वात् ॥

दीर्घस्यापीति । प्रयोगस्थयकारान्तानुकरणं, सूत्रेऽकारश्चोच्चारणार्थ इति भावः । लूनीरित्यादि । 'ल्वादिभ्यः' 'क्षायो मः' प्रस्त्योऽन्यतरस्याम्' इति नत्वमत्वे । 'शुषः कः' 'पचो वः' इति कत्वमत्वे ॥

व्याख्यानात् प्राधान्याच्च रूपातिदेशोऽयमित्याह—क्रोष्टृशब्द इति । तच्चोदात्तऋकारविशिष्टमतिदिश्यते, तृज्वदिति चकारोच्चारणात् । तेन क्रोष्ट्रेत्यादौ 'उदात्तयणः' इति स्वरसिद्धिर्बोद्धव्या । पक्त्रादेस्तु नातिदेशः, अर्थत आन्तर्याभावात् । इदं सूत्रं 'स्त्रियाश्च' इति च प्रयोगनियमफलकमिति बोद्धव्यम् ॥

---

व्याख्यानादिति । निमित्तव्यपदेशादिभेदेनातिदेशस्य षड्विधत्वेऽपि तत्र तृजन्तत्वरूपनिमित्तस्य तद्व्यवहारस्य वाऽतिदेशे प्रतिपदोक्तस्य तृजन्तत्वप्रयुक्तकार्यस्य लाभेऽपि ऋदन्तत्वप्रयुक्तं कार्यं न स्यात् । तादात्म्यातिदेशस्त्वसम्भवी । उभयोस्सहप्रयोगाभावात् । शास्त्रकार्यातिदेशावपि न, तुन्नन्तस्याऽनुदात्ततया तृज्वद्भावेनोकारस्य रेफरूपयणादेशेऽपि तस्योदात्तस्थानिकयणोऽभावेनोदात्तयणो हल्पूर्वादिति स्वरानापत्तेः । अर्थातिदेशस्त्वसम्भवी । तयोरैक्यस्य स्वत एव सत्त्वादित्येवंरूपादित्यर्थः । युक्त्यन्तरमाह । प्राधान्यादिति । सर्वेषामप्यतिदेशान्तराणां रूपनिष्पादनार्थत्वादित्यर्थः । ननु रूपातिदेशे स्वरातिदेशो न स्यात् । वर्णसंस्थानविशेषस्यैव रूपत्वेन स्वरस्यारूपत्वात् । अत एव विभिन्नस्वरकयोर्विभिन्नार्थकयोर्हरिणीशब्दयोरेकशेष इत्यत आह । तच्चेत्यादि । उदात्तविशिष्टातिदेशे प्रमाणमाह । चकारोच्चारणादिति । तत्सामर्थ्यादित्यर्थः । ननु रूपातिदेशे यस्य कस्यचित्तृजन्तस्य रूपं कुतो नाऽतिदिश्यत इत्यत आह । पक्त्रादेरिति । आन्तर्याभावादिति । स्थानषष्ठ्यभावेऽपि रूपातिदेशस्य फलतः स्थान्यादेशभावपर्यवसायित्वेन स्थानेऽन्तरतमपरिभाषाप्रवृत्तिरित्याशयः । प्रयोगनियमफलकमिति । फलतः

**अप्तृन्** । ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थम्, अत आह—नियमार्थमिति । अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां नेति । नेष्ट्रादयोऽप्युणादय एवेति भावः । तेषां 'तृन्' इतिसूत्रस्थवार्तिकेन व्युत्पादनात् नप्त्रादीत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणमित्यन्ये । अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोद्धव्यम् । भाष्यप्रयोगादिति । एवञ्चौणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजादिवद्योगरूढोऽयम् । ये त्वौणादिकत्वमेवास्य स्वीकृत्य भाष्यप्रयोगादेव दीर्घत्वमिच्छन्ति ते मान्याः । भाष्याकृताऽन्यप्रयोगस्योदाहरणत्वेन दानेऽप्यस्य

---

प्रयोगनियामार्थमित्यर्थः । शृगालवाचिनोस्तुन्नन्ततृजन्तयोर्द्वयोरपि प्रकृत्यन्तरयोस्सत्त्वेऽप्यसम्बुद्धौ सर्वनामस्थाने स्त्रियां च तुन्नन्तस्य नित्यं तृजन्तरूपातिदेशेन तत्र तृजन्तस्यैव प्रयोगो, न तुन्नन्तस्येत्येवं प्रयोगनियमः फलतीति भावः । वाच्यवृत्त्या तु न प्रयोगनियमलाभः । रूपातिदेशस्यैव तया लाभात् ॥

**अन्येषामिति** । इदं फलितार्थकथनम्, नियमशरीरं तूणादिव्युत्पन्नानां संज्ञाशब्दानां चेदेषामेवेति । इति भाव इति । व्युत्पत्तिपक्षे नप्त्रादीनां ग्रहणस्य नियमार्थत्वप्रतिपादनपरमूलग्रन्थस्येत्यर्थः । **वार्तिकेनेति** । क्षत्विक्षु चानुपसर्गस्यानिट्त्वं चेत्यनेनेत्यर्थः । **प्रशास्तृशब्दस्यैवेति** । तस्य तृजन्तत्वेनोणादिषु व्युत्पादनादिति भावः । इत्यन्य इति । एवं चात्र मते सूत्रे नेष्ट्रादिग्रहणं प्रपञ्चार्थमेवेति भावः । **अप्रामाणिकमिति** । उणादिव्युत्पन्नत्वे नियमेन दीर्घानापत्तेरिति भावः । ननूद्गातृशब्दस्य रूढत्वदर्शनादुणादिभिन्नकृद्व्युत्पन्नानां यौगिकत्वस्यानुभवसिद्धत्वात्कथमेतदित्यत आह । **पङ्कजादिवदिति** । तेषां मान्यत्वे हेतुमाह । **भाष्यकृतेति** । **अन्यप्रयोगस्येति** ।

भाष्यप्रयोगत्वाभावात्। 'ण्वुल्तृचौ' इति भाष्ये तु 'तृचश्चकारो ऽप्यर्थः। न च 'अप्तृन्तृच्' इत्यादौ विशेषणार्थः। तृ इत्येव सिद्धेः। न च तृ इत्युच्यमाने मातरौ पितरावित्यादौ प्राप्नोति। तत्र हि तृप्रत्ययो निरनुबन्धक इति वाच्यम्। नप्तृग्रहणस्य योनिसम्बन्धवाचिनाञ्चेदस्यैव, नान्येषां योनिसम्बन्धवाचिनामिति नियमात्' इत्युक्तम्। नेष्टृत्वष्टृहोतृपोतृणान्तृन्नन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य 'तृन्' इति सूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषाङ्ग्रहणं प्रपञ्चार्थमेव। एवञ्च यथान्यासे नियमफलं चिन्त्यम्। क्रोष्टेति। अनङि

---

कुत्रचिद्दृष्टस्य होतृपोतृनेष्टोद्गातार इत्यस्येत्यर्थः। भाष्यप्रयोगत्वाभावादिति। भाष्यकृता स्वातन्त्र्येणास्याप्रयुक्तत्वादित्यर्थः। एवं प्राचीनरीत्या नियमस्वरूपं प्रतिपाद्य भाष्यरीत्या तमाह। ण्वुल्तृचाविति। पितरावित्यादाविति। इत्यादावपीत्यर्थः। न च तृ इत्युच्यमाने निरनुबन्धकपरिभाषयाऽस्यैव ग्रहणं स्यादिति वाच्यम्। लक्ष्यानुरोधेन ज्ञापकसिद्धतयाऽनित्यत्वेन च तस्या इहाप्रवृत्तेः। अत एव भाष्ये 'तृ इत्युच्यमाने मातरौ पितरावित्यत्रापि प्राप्नोती' त्युक्तम्। अन्यथा 'इत्यत्रैवेत्येव' वदेत्। इत्युक्तमिति। एवं चायं नियमो योनिसम्बन्धवाचिविषयक इत्युद्गातृशब्दे दीर्घः स्वत एव सुलभ इति भाष्यप्रयोगाद्दीर्घ इति कथनं निष्फलमेवेति भावः। प्रपञ्चार्थमेवेति। यथान्यासे भाष्योक्तन्यासे चेति भावः। यथान्यास इति। ण्वुल्तृचौ, अप्तृन्तृजिति न्यास इत्यर्थः। नियमफलं चिन्त्यमिति। एतद्भाष्यबलेन पितृमातृप्रभृतीनां तृप्रत्ययान्तताया लाभेन तत्र दीर्घस्य प्राप्तेरेवाभावेन तत्र दीर्घव्यावृत्तेर्नियमस्य फलत्वेन वक्तुमशक्यत्वादिति भावः। एवं च यथान्यासे नप्तृग्रहणमपि प्रपञ्चार्थमेव। भाष्योक्तन्यासे तु पितृमातृप्रभृतिषु दीर्घवारकतया

'सर्वनामस्थाने च' इति दीर्घः। प्रथमोपस्थितत्वात् । क्रोष्टाराविस्या-द्यर्थन्तु तल्लेखः । यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः ॥

विभाषा तृ । अयमपि नियम एव । 'तृतीयादावच्येवोभयम्' इति । तेन भ्यामादौ, शसि, क्रोष्टुपुत्र इत्यादौ च न दोषः । सर्वत्र विशिष्टाभावस्य सुलभत्वात् । 'तृज्वत्क्रोष्टुः' 'स्त्रियाश्च' इत्याभ्यां सर्वनामस्थाने स्त्रियाश्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थ-

---

नियमार्थं तदावश्यकमिति बोध्यम् । प्रथमोपस्थितत्वात्=अष्टाध्याय्यां प्रथमोपस्थितत्वात् । ननु तर्ह्यप्तृन्नित्यस्यात्र किमर्थं लेख इत्यत आह । क्रोष्टाराविति । स एव=अप्तृन्नित्येव । न्याय्यः=सावपीति शेषः ॥

अयमिति । योग इत्यर्थः । नियम एवेति । फलतः प्रयोगनियम एवेत्यर्थः । तृतीयादावच्येवेति । अजादितृतीयादिविभक्तावेवेत्यर्थः । तृतीयादावचि तुन्नन्ततृजन्ताभ्यां रूपद्वयसिद्धावपि तुन्नन्तस्य विकल्पेन तृजन्तरूपातिदेशात्तत्रैवोभयोः प्रयोगो, नान्यत्रेति प्रयोगनियमः फलतीति भावः । न दोष इति । न द्वयोः प्रयोगप्रसङ्ग इत्यर्थः । विशिष्टाभावस्येति । भ्यामि तृतीयादिविभक्तिपरत्वेऽप्यजादित्वरूपविशेषणाभावेन, शस्यजादिपरत्वेऽपि तृतीयादिविभक्तित्वरूपविशेष्याभावेन,समासे विशेषणविशेष्ययोरुभयोरप्यभावेन चाजादित्वविशिष्टतृतीयादिविभक्तिपरत्वाभावस्य सुलभत्वादिति भावः । नन्वस्य प्रयोगनियामकता न सम्भवति । तृज्वत्क्रोष्टुः, स्त्रियां चेत्यनयोरसम्बुद्धौ सर्वनामस्थान एव, स्त्रियामेव तृजन्तस्य प्रयोग इति नियमाङ्गीकारेण तृतीयादावचि तृजन्तस्य प्रयोगासिद्धौ तत्सम्पादनायास्यावश्यकत्वादित्यत आह । तृज्वदित्यादिना । प्रयोगनियमार्थत्वमिति । सर्वनाम-

त्वं फलति। एतेन तृज्वत्सर्वनामस्थान एवेति नियमादिदं विध्यर्थमिति परास्तम्। न चैवमपि क्रोष्टूनित्याद्यसङ्गतम्। अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यम्। तृज्वत्क्रोष्टुरिति योगविभागस्यैवं सति वैयर्थ्यापत्तेः। न च 'तद्धितेष्वचामादेः' 'इको गुणवृद्धी' इति सूत्रयोः क्रौष्ट्रः, क्रोष्ट्रीया इतिभाष्यप्रयोगासङ्गतिरिति वाच्यम्। ऋकारान्तस्यैव ऋषिवाचकत्वेनादोषात्। इदं सूत्रत्रयन्तु शृगालवाचिक्रोष्टुक्रोष्टृशब्दयोर्व्य-

---

स्थाने, स्त्रियां च तृज्वदेव, न तुन्नन्त इत्येवंविधो नियम इति भावः। फलतीति। विधेयत्वेन प्रधानभूतस्य तृज्वद्भावस्य सङ्कोचकल्पनापेक्षया निमित्तत्वेनाऽभिमतस्य सर्वनामस्थानस्य तुन्नन्तनिरूपितपरत्वं यथा न भवति, तथा कल्पनमुचितमिति भावः। एतेन = पूर्वसूत्रद्वयस्योक्तरीत्या नियमाश्रयणेन। विध्यर्थमिति। तृतीयादावच्यप्राप्ततृजन्तप्रयोगसम्पादनार्थमित्यर्थः। नन्वस्य सूत्रस्य तृतीयादावच्येवोभयं नान्यत्रेति नियमस्य फलितत्वेन शसादावुभयोः प्रयोगवारणेऽपि तत्राभीष्टस्तुन्नन्तस्यैव प्रयोगः कथं लभ्यते। अन्यत्र तृजन्तस्यैव प्रयोगेणापि नियमस्य कृतार्थत्वात्। शसादावुभयोः प्रयोगवारणस्यैव तेन लाभादित्याशयेन शङ्कते। न चैवमिति। इत्यादीत्यादिशब्देन भ्यामादिसङ्ग्रहः। योगविभागस्येति। इदमुपलक्षणम्, स्त्रियां चेति सूत्रस्यापि। वैयर्थ्यापत्तेरिति। उक्तनियमेन तृतीयादावच्येवोभयमन्यत्र तृजन्तस्यैव प्रयोग इत्येवं कल्पनायां सर्वनामस्थाने स्त्रियां च तुन्नन्तस्याप्रयोगे सिद्धे तदर्थं योगविभागस्त्रियां चेति सूत्रं च व्यर्थं स्यादिति तत्सामर्थ्यादन्यत्र तुन्नन्तमेवेत्येव कल्पनीयमतो नातिप्रसङ्ग इति भावः। एवं कल्पनायां दोषमाशङ्कते। न चेति। ननु तस्य ऋषिवाचकत्वेऽपि तृजन्तत्वेन कुतो न नियमविषयतेत्यत आह। इदं सूत्रत्रयमिति। उक्तव्यवस्थाङ्गीकारे मान-

वस्थार्थमित्यवधेयम् । तदुक्तं भाष्ये—'तृज्वद्भावविषये एतत् तृजन्तं मृगवाचि' इति । 'तृतीयाद्यजादिविभक्तिषु तृजन्तं तुन्नन्तश्च मृगवाचि' इति च । अनेन हि अन्यत्र तुन्नन्तमेवेत्यपि सूचितमिति दिक् ॥

ऋत उत् । तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकताज्ञापनद्वाराऽन्तर्यतो द्विमात्रनिवृत्त्यर्थम् । तेनाग्नू इत्यादिसिद्धिरिति छ्वोरिति सूत्रे कैयटः । यत्तु तपरत्वं 'ढ्लोप' इति दीर्घबाधनार्थमिति; तन्न ॥

'सुपत्रवाजिता बाणा ज्वलिता इव पन्नगाः ।
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा' ॥

इति रामायणप्रयोगविरोधात् । 'उरण् रपरः' इति सूत्रेऽण्ग्रणाभावे 'ऊ रपर' इति भाष्यप्रयोगविरोधाच्च । सस्यैवेति । संयोगान्तलोपेन सिद्धे नियमार्थम् । तेनोर्गित्यादौ नेति भावः । विपरीतनियमस्तु न, 'पुनान् स्त्रिया' इति निर्देशात् ॥

---

माह । तदुक्तमित्यादिना । मृगवाचीति । मृगशब्दोऽत्र पशुजातीयपरः । अन्यत्र = तृज्वद्भावाविषये । भाव्यमानस्यापीति । उकारस्येति शेषः । क्वचिदिति । अदसोऽसेरित्यत्रेत्यर्थः । तेन सनाशंसेत्यत्र, तनादिकृञ्भ्य इत्यत्र च न सवर्णग्रहणं, धर्मिग्राहकसाजात्यादादेशविषय एवास्याः प्रवृत्तेरिति भावः । कौस्तुभोक्तिं खण्डयति । यत्त्विति । दीर्घबाधनार्थमिति । प्रयोगे श्रूयमाणैकमात्रिक एवाऽऽदेशो भवतीत्यर्थकल्पनेनात उत्सार्वधातुक इत्यादाविव भाविद्विमात्रव्यावृत्त्यर्थमित्यर्थः ॥

विपरीतेति । रादेव संयोगान्तस्य सस्येत्येवं रूपेत्यर्थः । निर्देशादिति । खर्परे शरीत्यनेन विसर्गस्य झरो झरीत्यनेन सस्य वा लोपेऽपि तस्या-

'एरनेकाचः' इति सूत्रमेरितिपदरहितं सानुवृत्ताधृत्तविशेषणं सवार्तिकश्चानुवर्त्तत इत्याह—धात्ववयवेत्यादि। गर्तीत्यादि च। सकृल्ल्वावित्यत्र क्रियाविशेषणत्वेन कर्मत्वाद्यण्। 'न भूसुधियोः' इति निषेधे प्राप्ते आह—वर्षाभ्वश्चेति। वर्षाभूर्दर्दुरे पुमान्। स्वार्थिक इति। स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भव इत्यर्थेऽध्यात्मादित्वाट्ठञ्। द्वारादिषु स्वग्रामस्वाध्याययोः पाठेन स्वशब्दादेश्चेदेतयोरेवेति नियमार्थकेनैजागमो न। पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह—यौगिक इति॥

---

सिद्धत्वान्नस्यापदान्तत्वादनुस्वारस्स्यात्। संयोगान्तलोपे तु तस्य सिद्धत्वात् पदान्तत्वान्नस्याऽनुस्वाराभावे निर्देशसङ्गतिरिति भावः। क्रियाविशेषणत्वेनेति। लुनात्यर्थफलांशविशेषणत्वेनेत्यर्थः। ननु मूले स्वार्थिक इति प्रयोगोऽनुपपन्नः। स्वशब्दस्य द्वारादित्वेन द्वारादीनां चेत्यैचो दुर्वारत्वात्। न च स्वशब्दस्य तत्र पाठेऽपि विशिष्टस्य पाठाभावान्न तत्प्राप्तिरिति वाच्यम्। अचामादेरित्यनुवृत्त्याऽङ्गस्याचामादेरनन्तरौ यौ य्वौ ताभ्यां परस्य न वृद्धिः। ताभ्यां पूर्वावैचौ भवतस्तौ चेद्द्वारादिसम्बन्धिनावित्यर्थाश्रयणेन तदादावपि तस्य प्रवृत्तेराकरसम्मतत्वादत एव स्वादेरिञीति निषेधस्सार्थकः। द्वारपालस्येदं दौवारपालमित्यत्रैजागमश्च सिद्ध इत्यत आह। द्वारादिष्विति। ऐजागमो नेति। स्वाभाविकं, स्वाराज्यमित्यादावैजभावोऽपि नियमफलं बोध्यम्। नन्वेवं सौवर्यस्सप्तम्य इति निर्देशासङ्गतिः। अनेन नियमेनैचोऽप्राप्तेरिति चेन्न। अत्र सुपूर्वकऋधातोरचि निष्पन्नस्य स्वरशब्दस्य ग्रहणेन तस्य च प्रकृतनियमाविषयत्वेनादोषात्। अप्राकृतस्तु यः स्वार इत्यादौ तु स्वशब्दपूर्वकराधातोः के निष्पन्नस्वरशब्दस्य ग्रहणादनेन नियमेनैज्न। सौवर्यस्सप्तम्यः, अप्राकृतस्तु यस्स्वार इत्यादिनिर्देशा एव द्विविधस्वरशब्दस्वीकारे मानमिति बोध्यम्। रूढस्य = द्विरूढाबोधकस्य॥

वर्णैकदेशानां वर्णग्रहणेनाग्रहणे रेफाभावादाह—ऋवर्णादिति । व्युत्पत्तिपक्षे इति । अव्युत्पत्तिपक्षेऽबादिष्वपाठाद्दीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धकतृप्रत्ययान्ना एवेति 'ण्वुल्तृचौ' इति भाष्यस्वरसः ॥

वैकल्पिकेति । 'यत्तदेतेभ्यः' इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य, 'क्षियः' इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः । अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वम् । अनुकार्यश्चानुकरणाद्भिन्नमेवेति 'मतौ छः' इति सूत्रे भाष्ये स्पष्टम् । ईषदानुपूर्वीव्यत्ययेऽपि वाचकसादृश्यादर्थोपस्थापकत्वमिति अत्र कैयटे, 'प्राग्दीव्यतोऽण्' इत्यत्र भाष्ये च स्पष्टम् । अत एव 'किर' इत्यादितः कृधातुरिति बोधः । 'भू सत्तायाम्' इत्यादौ त्वित एव निर्देशात्कदाचिदनुकरणाद्विभक्त्य-

---

अग्रहण इति । इति पक्ष इति शेषः । भाष्यरीत्या व्युत्पत्तिपक्षेऽपि दीर्घशङ्का नेत्याह । व्युत्पत्तिपक्ष इति । वैकल्पिकत्वस्य चेति । अन्यथाऽनन धातुत्वातिदेशे प्रातिपदिकत्वाभावाद्विभक्त्यनुपपत्तिरिति भावः । नन्वनुकार्यानुकरणयोरभेद इति पक्षे वृत्त्याऽर्थवत्त्वाभावेनाप्रातिपदिकत्वात्कथं विभक्तिरत आह । अनुकार्यश्चेति । नन्वनुकरणे किञ्चिद्विकारे कथमनुकार्यबोधोऽत आह । ईषदिति । वाचकेति । अनुकरणेत्यर्थः । अर्थोपस्थापकत्वमिति । एकदेशविकृतन्यायेन तत्राप्यनुकरणत्वसत्त्वादिति भावः । अत एव=एकदेशविकारेऽप्यनुकरणस्यानुकार्योपस्थापकत्वादेव । ननु किर इत्यादाविव भू सत्तायामित्यत्राप्यनुकरणात्कुतो न विभक्तिरत आह । निर्देशादिति । भुवो वुगित्यादौ विभक्तिकरणादाह । कदाचिदिति । विभक्त्यभावोऽपीति । ततो निर्देशात्प्रातिपदिकमात्रस्यापि प्रयोगोऽभ्यनु-

भावोऽपि । स च सूत्रेष्वेवेति प्रामाणिकाः । गवित्ययमाहेति वान्तस्यैवानुकरणम् । अनुकार्यस्वरूपभङ्गभिया च न वलोपः, 'झलां जश्' इत्यादौ जश्त्वाभाववदित्याहुः । इत्वे इति । 'किरश्च पञ्चभ्य' इति निर्देशादधातुप्रत्ययेऽपि तत्प्रवृत्तिरिति भावः । कीरिति । कॄधातुरित्यर्थः । गुणो नेति । 'ऋत उत्' इत्युत्वमप्यत एव न । अत एव 'ग्रो यङि' इति सूत्रनिर्देशः सङ्गच्छते ॥

अनङिति । ऋलृवर्णयोः सावर्ण्यादिति भावः । गमॄनिति । लृवर्णस्य दीर्घाभावादृवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्य-

---

ज्ञायत इति भावः । सूत्रेष्वेवेति । प्रातिपदिकमात्रप्रयोगाभ्यनुज्ञानमार्षवाक्येष्वेव न लौकिकेष्विति तात्पर्यम् । नन्वेवं गवित्ययमाहेत्यादिलौकिकप्रयोगे गोशब्दादनुकरणाद्विभक्तिश्रवणापत्तिरत आह । वान्तस्यैवानुकरणमिति । तथा च ततो विभक्त्युत्पत्तावपि हल्ङ्यादिलोपेनापहारान्न श्रूयत इति भावः । नन्वेवमन्तर्वर्तिविभक्त्या वान्तस्य पदत्वात्कुतो न वलोप इत्यत आह अनुकार्येति । यत्तु न वलोप इति प्रतीकमुपादाय 'गवित्यस्य सादृश्यज्ञानाधीनोपस्थित्याऽर्थबोधकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यार्थविषयकबोधजनकत्वरूपार्थवत्सूत्रोक्तार्थवत्त्वस्याभावेन प्रातिपदिकत्वाभावादिति भावः, इत्यौत्तराहाः, तन्न । सिद्धान्तभूतभेदविवक्षायामपि दोषवारणार्यैतद्ग्रन्थप्रवृत्त्याऽस्याभेदविवक्षातात्पर्यस्य वक्तुमशक्यत्वात् । किञ्चास्य तदुक्तरीत्याऽभेदविवक्षातात्पर्यकत्वेऽपदान्तत्वादेव लोपवारणसम्भवादनुकार्यस्वरूपभङ्गभियेति हेतूपन्यसनमनर्थकं स्यादिति बोध्यम् । ननु धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति परिभाषया कथमत्रेत्वप्रवृत्तिरत आह । किरश्च पञ्चभ्य इति । अत एव नेति । तपरकरणादेव नेत्यर्थः । अत एव=तपरकरणादुत्वाप्रवृत्तेरेव ॥

कृता 'ऋति ऋ वा' इत्यादिविधेययो रेफद्वयगर्भयोरच्त्ववदीर्घत्वाङ्गीकारेणात्र द्विलकार ईषत्स्पृष्टो दुर्वारः। आमि च तथा धातृणामित्यत्र रेफद्वयगर्भोऽपीति चेन्न । 'अकः सवर्णे' इति सूत्रे उक्तोत्तरत्वात् । गम्लेति । यत्तु—लण्सूत्रे 'उरण्रपरः' इत्यत्र 'अजिति वक्तव्येऽण्ग्रहणसामर्थ्येनाण्पूर्वेणैव' इत्युक्तं भाष्ये, लृकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्योक्तिर-

---

ईषत्स्पृष्टो दुर्वार इति। नच प्रथमयोरिति सूत्रस्य पूर्वसवर्णादेशविधायकत्वेनास्य प्रयत्नभेदेन पूर्वस्य सवर्णत्वाभावात्कथमियमाशङ्केति वाच्यम् । तत्रत्यसवर्णपदस्य सजातीयपरत्वेनास्याच्त्वविशिष्टदन्त्यत्वेन सजातीयत्वाप्राप्तिरित्याशयात् । वस्तुतस्तु तत्रत्यसवर्णपदस्य सवर्णसंज्ञकपरत्वेनात्र तदापत्तेरभावादन्यत्र तमापादयति । आमि चेति । गमृणामित्यत्रेत्यर्थः। ईषत्स्पृष्टो दुर्वार इति शेषः। रेफद्वयगर्भ इति। ईषत्स्पृष्ट ऋकार इत्यर्थः । उक्तोत्तरत्वादिति । वार्तिके ऋतीति तपरकरणेन 'यदेतद्दतीति' 'एतद्दत इति वक्ष्यामी'ति तुल्यास्यसूत्रस्थभाष्येण च प्रथमस्य ह्रस्वऋकारद्वयस्थानिकैकादेश एव, द्वितीयवार्त्तिके लृकारग्रहणेन तस्य ह्रस्वऋकारलृकारद्वयस्थानिकैकादेश एव च साधुत्वमिति प्रतिपादितत्वादित्यर्थः। लण्सूत्रस्थभाष्यविरोधात् लृकारस्य स्थाने यणोऽप्रवृत्त्या गम्लेत्यसङ्गतमिति केषांचिदुक्तिं खण्डयति । यत्त्वित्यादिना। सामर्थ्योक्तिरसङ्गतेति। अयं भावः। लण्सूत्रे भाष्ये उरण् रपर इत्यत्राण् पूर्वेण परेण वेति सन्दिह्य यद्यत्र सूत्रे परेणाऽण्ग्रहणं स्यात्तदा हल्रूपाण्सु एतत्सूत्रप्रवृत्तौ फलाभावेनासन्देहायाजित्येव वक्तव्येऽण्ग्रहणमनर्थकं स्यादतस्तत्सामर्थ्यादण्पूर्वेणैवेति सिद्धान्तितम् । लृकारस्य स्थाने यणि तु तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति हल्रूपाण्सु फलाभावादजित्येव वाच्येऽण्ग्रहणसामर्थ्यादण्पूर्वेणैवेति भाष्योक्तिरसङ्गतेति । ननु तुल्य-

**सङ्गता। ऋकारस्य यणि तु 'रो रि' इति लोपेन न विशेष इति। तन्न, ऋकारांशे हल्रूपाऽगि रोरीति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्याद् ऌकारांशेऽपि हल्रूपाऽण्यप्रवृत्तिरित्याशयात्। वस्तुत ईदृशानामभिधाने, इदं मानं चिन्त्यम्॥**

---

युक्त्या ऋकारस्थानिकयण्घटितप्रयोगाणामप्यसाधुता स्यादत आह। **ऋकारस्येति। न विशेष इति।** उरण् रपर इत्येतच्छास्त्रप्रवृत्त्यप्रवृत्त्योर्न फले विशेष इत्यर्थः। एवं च ऋकारस्य यण्यपि न तद्भाष्यविरोध इति भावः। **अप्रवृत्त्येति।** उरणित्यस्याप्रवृत्त्येत्यर्थः। **आशयादिति।** भाष्यकारस्येत्यादिः। ननु ऋकारांशे रपरत्वप्रवृत्तेः फलाभावेऽपि पर्जन्यन्यायेन तत्प्रवृत्तेर्दुर्वारतया तत्साहचर्येण ऌकारांशे लपरत्वाप्रवृत्तेर्वक्तुमशक्यतया भाष्यासङ्गतिस्तदवस्थैवेत्यत आह। **वस्तुत इति। ईदृशानामिति।** ऌकारस्थानिकलादेशघटितानामनार्षप्रयोगाणामित्यर्थः। क्वापि तादृशानामार्षप्रयोगाणां सत्त्वेऽप्यार्षत्वादेव तत्रोरण् रपर इत्यस्याप्रवृत्त्या न भाष्यासङ्गतिरिति भावः॥

यत्त्विदमयुक्तम्। अग्निपुराणे इको यणित्यस्य लाकृतिरित्युदाहरणदर्शनादलोऽन्त्यस्येत्यतोऽल्ग्रहणमपकृष्य शब्दाधिकारं चाश्रित्योरस्थाने लकारभिन्नोऽण् रलपर इत्यर्थाङ्गीकारेण, लाकृतिरित्यग्निपुराणोक्तप्रामाण्येन मूलोक्तसाहचर्याश्रयणाद्वा नोरणिति सूत्रस्थभाष्यविरोध इत्याचार्याः। तन्न। अनार्षप्रयोगानभिधानस्यैवैतद्ग्रन्थाभिप्रेतत्वेनाऽर्षस्य तस्य सत्त्वेऽपि बाधकाभावात्। उक्तभाष्यविरोधपरिहाराय शब्दाधिकारालग्रहणापकर्षविभक्तिव्यत्ययकल्पनापेक्षयाऽनभिधानकल्पनाया एवौचित्याच्च। यरोऽनुनासिक इति सूत्रेऽपकर्षस्य भाष्यासम्मतत्वं स्वयमुक्त्वा पुनरत्रापकर्षमाश्रित्य भाष्यविरोधपरिहारस्य स्वोक्तिविरुद्धत्वाच्च। साहचर्यानुपपत्तेरप्यस्माभिरनुपदमेवोपपादितत्वाच्च॥

सेरिति। इना सहेत्यर्थः। 'वोपसर्जनस्य' इति सत्वम्। एकादेशस्य पूर्वान्तवत्त्वेऽपि लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वादव्ययमिति महासञ्ज्ञयाऽस्यानव्ययत्वान्न विभक्तिलुक्। सादेशात्पूर्वमाद्गुणस्तु न। 'नेन्द्रस्य' इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः। न च 'नान्तः पादम्' इति सूत्रस्थेन 'न चैङः पदान्तात्परो रुरस्ति' इति भाष्येण विरोधात्सावीदृशानां प्रयोगोऽनुचितः, सावपि पदत्वसत्त्वादिति वाच्यम्। योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात्। सावप्रयोग एवेत्यन्ये। सय इति। न चास्यान्तर्वर्त्तिविभक्त्या पदत्वाद् 'एङः पदान्तात्'

---

नन्वेकादेशस्य पूर्वान्तत्वेन ग्रहणादव्ययत्वे विभक्तिलुका भाव्यत्वेन सेरित्यनुपपन्नमत आह। एकादेशस्येति। ननु सादेशात्पूर्वमन्तरङ्गत्वाद्गुणे ततस्सादेशेऽदन्तरूपापत्तिः। न च गुणोत्तरमुत्तरपदपरत्वाभावात्सादेशाप्राप्तिरिति वाच्यम्। अचः परस्मिन्निति स्थानिवत्त्वेनोत्तरपदपरत्वसत्त्वात्तत्प्राप्तेरित्यत आह। आद्गुणस्तु नेति। सावपीति। उत्तरपदत्वे चेति वार्तिकप्रत्याख्यानाय स्वादिष्विति योगं विभज्य सामान्यतस्स्वादिषु पूर्वस्य पदत्वं विधाय ततोऽसर्वनामस्थाने यचीत्युत्तरेण यजादौ सर्वनामस्थाने पूर्वस्य पदत्वं निषिध्य ततो भमित्यनेन यजादावसर्वनामस्थाने पूर्वस्य पदत्वबाधकतया भसंज्ञाविधानात् पारिशेष्यात् भ्यामादाविव सावपि स्वादिष्विति विभक्तसूत्रेण पदत्वसिद्धिरिति भावः। ननु योगविभागसिद्धार्थस्य क्वाचित्कत्वे तत्समानविधिकद्वितीययोगवैयर्थ्यस्यैव मूलत्वेनात्र पूर्वोत्तरसूत्रयोर्विधेयभेदेन द्वितीययोगविभागवैयर्थ्याभावात् क्वाचित्कत्वे मानाभावोऽत आह। अप्रयोग एवेति। अन्ये=सिद्धान्तिनः। अस्येति। परादिवद्भावेनैकारस्य पूर्वान्तवद्भावेन विशिष्टस्य चेत्यर्थः। विभक्त्येति। इशब्दप्रकृतिकया सहशब्दप्रकृतिकया चेत्यर्थः। विभज्येति। अस्योत्तरेण व्याख्यानेनेत्यनेनान्वयः।

इत्यादि दुर्वारमिति वाच्यम्। भाष्ये 'स्वादिषु' इति योगं विभज्य स्वादिषु पूर्वं पदमित्यर्थः, ततो 'अ सर्वनामस्थाने यचि'। सुबन्तमित्यनुवर्त्तते। अ यचीति प्रसज्यप्रतिषेधः। तेन यजादौ सर्वनामस्थाने पूर्वं पदं न, मद्धये चेत्सुबन्तं तदपि पदं नेति व्याख्यानेनादोषात्। आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव। 'उत्तरपदत्वे चापदादिविधा'विति प्रतिषेधाच्च। उत्तरपदस्य तद्धटितस्य

---

अयचीति। असर्वनामस्थान इत्यत्र अ इति पृथक्पदं निषेधार्थकम्। तदेवाऽत्र निर्दिष्टम्। न त्वसर्वनामस्थानेऽयचीति छेदः। नञ्द्वयवैयर्थ्यात्। यद्यप्यसर्वनामस्थान इति प्रसज्यप्रतिषेध इत्येव वक्तुमुचितम्, तथापि भाष्ये नञस्सर्वनामस्थान इत्यनेनासम्बन्धसूचनाय सर्वनामस्थानेऽयचीति पाठस्याऽश्रितत्वेन तदनुरोधादत्रैवमुक्तमिति बोध्यम्। पूर्वमिति। तदादीत्यर्थः। यस्मात्प्रत्ययविधिरित्यतस्तदनुवृत्तेः। नन्ववयवस्यानेन निषेधात्पदत्वाभावेऽपि पूर्वान्तवद्भावेन विशिष्टे तत्त्वं दुर्वारमेवेत्यत आह। आतिदेशिकस्याऽपीति। मध्ये सुबन्तस्यातिदेशमन्तरा पदत्वस्य दुर्लभत्वेन तल्लाभादातिदेशिकस्याऽप्ययं निषेध इत्यवश्यमभ्युपगन्तव्यमिति भावः। तदाह। स्पष्टमेवेति। प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधायाऽह। उत्तरपदत्वे चेति। प्रतिषेधाच्चेति। प्रतिषेधाद्वेत्यर्थः। पूर्वान्तवत्त्वेन प्राप्तपदत्ववारणायाह। तद्धटितस्य वेति। उत्तरपदत्व इत्यत्रोत्तरेत्यावर्तते। एकमुत्तरपदपरम्। अपरं तु तद्धटितपरम्। वाशब्दश्चार्थ इति भावः। यद्वा उत्तरपदघटितस्य पदत्वे कर्तव्येऽन्तर्वर्तिविभक्तेः प्रत्ययलक्षणं नेत्येवार्थः। वाशब्दः प्रथमपक्षप्रतिक्षेपे। एकारस्योत्तरपदघटितत्वं तु व्यपदेशिवद्भावेन बोध्यम्। न च सशब्दमादाय ससहायत्वेन नास्ति व्यपदेशिवद्भावावकाश इति वाच्यम्। इशब्दप्रकृतिकप्रत्ययनिमित्तकपदसंज्ञायां कर्त-

**था पदत्वे कर्त्तव्येऽन्तर्वर्त्तिविभक्तेः प्रत्ययलक्षणं नेति तदर्थः । अतो न योगविभागमूलकप्रत्याख्यानेन फलभेद इति केचित् ॥**

**इतोदित्यतोऽनुवृत्तं सर्वनामस्थाने इति प्रथमया विपरिणम्यते,**

---

व्यायां सशब्दस्य विजातीयत्वेन सजातीयसहायाभावात् । न चैवं दधिसेचावित्यादौ समुदायोत्तरसुपमादाय विशिष्टस्य पदत्वं प्रत्ययलक्षणेन न स्यात् । विशिष्टस्योत्तरपदघटितत्वेन प्रकृतनिषेधादिति वाच्यम् । विशिष्टोत्तरसुप्प्राग्वर्तिसमुदायघटकसुन्निमित्तकपदत्व एव तन्निषेधप्रवृत्तेरङ्गीकारात् । अत एवाऽरम्भप्रत्याख्यानयोर्न फलभेद इति बोध्यम् । अत्र मानमाह । **अत इति** । **फलभेद इति** । अन्यथा सय इत्यादौ प्रत्याख्यानपक्ष उक्तरीत्या पदत्वाभावात्पूर्वरूपाप्रसक्त्याऽराम्भपक्षे तत्प्रसक्त्या च फलभेदो दुर्वार इति भावः । **केचिदिति** । अत्रारुचिर्बीजं त्वारम्भप्रत्याख्यानयोः फलाभेदायास्यानभिधानमेव । वार्तिकस्योक्तार्थकत्वं तु भाष्यानुक्तत्वादप्रामाणिकमिति ॥

**विपरिणम्यत इति** । अयं भावः । प्रकृतसूत्रे भाष्ये 'किमिदं गोतः परस्य सर्वनामस्थानस्य णित्त्वमुच्यते, आहोस्वित्सर्वनामस्थाने परे णित्कार्यमतिदिश्यत इति पक्षद्वयमुक्तम् । तत्राऽद्यस्याणितस्सर्वनामस्थानस्य स्थाने णित्सर्वनामस्थानमादेशो भवतीत्याशयः । द्वितीयस्य त्वनुवृत्तसर्वनामस्थान इत्यस्य प्रथमान्ततया विपरिणामेन गोतः परं सर्वनामस्थानं णिद्भवतीति वाच्यार्थे निष्पन्ने सत्यणितो णित्त्वासम्भवाल्लोकन्यायेन णिद्वद्भवतीत्यर्थलाभात्तस्मिन्परे पूर्वस्य णित्कार्यं फलतीत्याशयः । तत उक्तपक्षद्वये विशेषमाशङ्क्य, आद्यपक्षे षष्ठ्यभावादसम्प्रत्ययं द्वितीये कार्यातिदेशस्य वक्तव्यतां चोक्त्वा तत एवं तर्हीत्यादिनाऽतिदेशत्वं व्यवस्थाप्य तदुत्तरमनुवृत्तसर्वनामस्थानपदस्य सप्तम्यन्तत्वे वतिनिर्देशं विनाऽतिदेशत्वलाभो न भवतीतित्याशयेन 'स तर्हि वतिनिर्देशः कर्तव्यः, न कर्तव्यः, न ह्यन्तरेण वतिमतिदेशो गम्यत, इत्युक्तम् । तदुत्तरं

**णिदित्यनेन सामानाधिकरण्यादित्याह—सर्वनामस्थानमिति । तत्र णितः कार्यस्यासंभवात् णिति यत्कार्यं तददतिदिश्यते । शसेति । अचीत्यधिकारात्तद्धितशसो न ग्रहणमिति भावः । गामिति । परत्वादत्र**

---

सर्वनामस्थानपदस्य प्रथमान्तत्वेन विपरिणाममभिप्रेत्यान्तरेणापि वतिमतिदेशो गम्यते । अब्रह्मदत्तं ब्रह्मदत्त इत्याह । ब्रह्मदत्तवदिति गम्यते । एवमिहाप्यणितं णिदित्याह णिद्वदिति गम्यत इत्युक्तम् । अनेन च भाष्यग्रन्थसन्दर्भेण विपरिणामस्य भाष्याभिप्रेतत्वं स्पष्टमेव गम्यते । किं च णलुत्तमो वेत्युत्तरसूत्रे णित्पदस्य सामानाधिकरण्येनैव सम्बन्धस्य क्लृप्ततयाऽर्थाधिकारानुरोधादत्रापि तथैवोचित इति तदनुरोधाद्विपरिणाम आवश्यकः । किञ्चाऽसंयोगादित्यादिष्वतिदेशशास्त्रेषु विधेयस्य सामानाधिकरण्येनैव सम्बन्धस्य क्लृप्ततयाऽत्राप्यनुवृत्तसर्वनामस्थानपदस्य विभक्तिविपरिणामेन तथैव सम्बन्ध उचित इति ॥

एतेनोक्तभाष्यस्य यथाश्रुतमर्थं गृहीत्वा प्रवृत्तं 'भावनापक्षे गोत इति पञ्चमी, तद्वदतिदेशपक्षे तु षष्ठीति कैयटमनुश्रुत्य 'वस्तुतस्तु सर्वनामस्थान इति सप्तम्यन्तं' गोत इति षष्ठ्यन्तं 'णित्पदं णित्त्वप्रयुक्तकार्यपरम् । एवं च गोशब्दस्य सर्वनामस्थाने परतो णित्त्वप्रयुक्तकार्यं भवती'त्येवार्थो युक्त इत्याचार्योक्तमपास्तम् ॥

**तत्रेति** । सर्वनामस्थान इत्यर्थः । **तददतिदिश्यत इति** । तत्कार्यं सर्वनामस्थाने परे पूर्वस्यातिदिश्यत इत्यर्थः । णिद्वदिति वृत्तौ तृतीयान्ताद्वतिरिति भावः । ननु शसस्तद्धितस्यापि सम्भवादेतत्साहचर्यात्सुबेवाम् गृह्यत इत्यनुपपन्नमत आह । **अचीत्यधिकारादिति** । **परत्वादिति** । आङ्गवार्णयोर्युगपत्प्राप्तावन्तरङ्गपरिभाषाया अव्यवस्थापकत्वस्य वार्णपरिभाषया बोधनेन तयाऽत्वस्य प्राबल्यस्य वक्तुमशक्यत्वेन विप्रतिषेधसत्त्वाद्विप्रतिषेधे परमित्येवात्र व्यवस्था-

वृद्धिस्तु न । अनवकाशत्वेनात्वस्यापवादत्वात् । तदाह—ओतो णिदिति । सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भावः । तेन चित्रगुरित्यादौ न दोषः । अन्यथाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोऽन्तत्वाद्दोषः स्यादेव । मम त्वोकारान्तत्वाभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः । परे तु गोतो णिदिति सूत्रे भाष्ये तपरत्वं प्रत्याख्यातम् । चित्रगुरित्यादौ तु न दोषः । गोः पूर्वत्वणित्त्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेधात् । हे चित्रगो इत्यादौ तु

---

पकम् । अत एव भाष्ये परत्वात् वृद्धिरापादितेति भावः । एतेनास्य ग्रन्थस्य अनौचित्यं सूचयन्तः आङ्गत्वादिति वक्तुं युक्तमिति वदन्त आचार्याः परास्ताः । ननु गोशब्दातिरिक्तौकारान्ते णित्त्वस्याभावेन वृद्धेरप्राप्त्या तत्राऽत्वं कृतार्थमिति कथमपवादत्वमत आह । तदाहेति । अपवादत्वमेव दर्शयतीत्यर्थः । ओतो णिदित्येतद्वचनं नापूर्वं, किन्तु कथञ्चित्सूत्राक्षरलब्धमेवेति सूचयति । सूत्र इति । तपरकरणेनेति । वृद्धिरादैच्, अतो लोप इत्यादौ वर्णनिर्देश एव तपरत्वस्य दृष्टतयाऽत्रापि तपरकरणेन गकारस्याविवक्षणादिदं लब्धमिति भावः । न दोष इति । सम्बुद्धौ तु विहितविशेषणत्वस्य वक्ष्यमाणतया न दोष इति बोध्यम् । एवं मूलकाराशयमुपवर्ण्य गकारस्याविवक्षितत्वं सर्वथा भाष्यवार्तिककारासम्मतत्वान्नादरणीयमित्याह । परे त्विति । प्रत्याख्यातमिति । तत्र हि भाष्ये तपरकरणस्य प्रयोजनमाशङ्क्य तपरकरणाभावे चित्रगुरित्यादावपि स्थानिवद्भावेन गोशब्दत्वस्य विद्यमानत्वादङ्गाधिकारे तदन्तविधेस्सत्त्वाच्च णिद्वद्भावापत्तिः । तत्सत्त्वे तु तत्सामर्थ्यादनण्त्वेऽपि तत्कालग्रहणं भवतीति भिन्नकालिकस्य चित्रगुशब्दावयवगोशब्दस्य ग्रहणं न भवतीति न दोष इति समाधाय तदुत्तरं सम्बुद्धिजसोः स्वाश्रयप्राप्तेर्लक्षणप्रतिपदोक्तपरिभाषया वारयितुं शक्यत्वेऽप्यतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्या स्थानिवद्भावेन गोशब्दत्वमाश्रित्य प्रसक्तस्याति-

लाक्षणिकत्वान्न दोष इत्यत्रैव सूत्रे भाष्ये स्पष्टम् । 'द्योः सर्वनामस्थाने णित्त्वं वक्तव्यम्' इति 'औतोऽम्' इत्यत्र भाष्ये उक्तमित्याहुः । सुद्यौरिति । केवलद्योशब्दस्य स्त्रीत्वाद् बहुव्रीहिरुदाहृतः ।

---

प्रसङ्गस्य तपरत्वसत्त्वेऽपि वारयितुमशक्यतया तद्वारणाय गोः पूर्वत्वणित्वात्वस्वरेषु स्थानिवद्भावप्रतिषेध" इत्यस्यावश्यकतया आवश्यकेन तेनैव चित्रगुरित्यादावप्यतिप्रसङ्गवारणसम्भवात्तपरकरणं न कार्यमिति वार्तिकरीत्या तपरत्वं प्रत्याख्यातम् । यदि प्राचीनोक्तदिशा तपरकरणेन गकारस्य सर्वथाऽविवक्षितत्वमित्युच्यते, तदा निरुक्तस्थानिवद्भावप्रतिषेधानाश्रयणेऽपि सम्बुद्धिजसोरोकारस्य लाक्षणिकत्वेन स्वाश्रयप्राप्तेर्लक्षणप्रतिपदोक्तपरिभाषयाऽनल्विधाविति निषेधेन स्थानिवद्भावप्राप्तातिप्रसङ्गस्य च वारणसम्भवात्तदर्थं स्थानिवद्भावप्रतिषेधस्यावश्यकत्वप्रतिपादनं तमवष्टभ्य तपरकरणप्रत्याख्यानं चासङ्गतं स्यात् । अतस्तपरकरणेन गकारस्य सर्वथाऽविवक्षितत्वमिति प्राचीनोक्तं वार्तिककारासम्मतमिति भावः । एवं प्राचीनमते वार्तिककारासम्मतिं प्रदर्श्य भाष्यकारासम्मतिमपि दर्शयति । द्योश्च सर्वनामस्थान इति । यदि तदुक्तरीत्या गकारस्य सुतरामविवक्षा स्यात्तदाऽस्य वार्तिकस्यानुत्थानमेव स्यात् । वार्तिकरीत्या तदुत्थानेऽपि तपरत्वसामर्थ्यात्स्थानिवत्त्वप्रतिषेधस्येव तस्याकर्तव्यतां वा ब्रूयात् । तदप्रत्याख्यानेन गोत इत्यस्यौकारोपलक्षकत्वं सर्वथा भाष्यविरुद्धमिति भावः । किञ्चौतोऽमित्यत्र भाष्ये 'ओतश्तिङि प्रतिषेधो वक्तव्यः । अचिनवम्, असुनवम् । स तर्हि प्रतिषेधो वक्तव्यः, न वक्तव्यः, गोग्रहणं करिष्यते । आ गोत इति वक्तव्यमि'त्युक्तम् । यदि तदुक्तरीत्या वर्णनिर्देश एव तपरकरणस्य प्रसिद्धत्वात्तपरकरणेन गकारस्याविवक्षितत्वमित्युच्यते, तदाऽत्रापि तेन गकारस्याऽविवक्षालाभादत्र न्यासेऽप्यचिनवमित्यादावतिव्याप्तेर्वारयितुमशक्यतयाऽनेन न्यासेनौतश्तिङीति वार्तिकप्रत्याख्यानमसङ्गतं स्यात् । गोग्रहणे द्योरुपसंख्यानं

कर्तव्यमिति तदुत्तरभाष्यं चासङ्गतं स्यादित्यपि बोध्यम् । ननु स्थानिवत्सूत्रे भाष्ये 'गोः पूर्वत्वणित्त्वात्वस्वरेषु स्थानिवद्भावप्रतिषेधो वक्तव्य' इति वार्तिके णित्त्वात्वग्रहणस्य चित्रगुश्चित्रगुं पश्यत्यादौ स्थानिवत्त्वेन प्राप्तयोर्णित्त्वात्वयोरभावं फलत्वेन प्रदर्श्य तदुत्तरं 'नैष दोषस्तपरकरणात्सिद्धम् । तपरकरणसामर्थ्याण्णित्त्वात्वे न भविष्यत इति णित्त्वात्वग्रहणं प्रत्याख्यातम् । तस्य च तपरकरणेन गकारस्याविवक्षितत्वादोकारमात्रस्यैव निर्दिष्टत्वादनल्विधाविति निषेधेन तस्याऽतिदेष्टुमशक्यत्वान्न दोष इत्येवाशयो वाच्यः । अन्यथा चित्रगुरित्यादौ तात्कालिकगोशब्दत्वस्याभावेन दोषवारणेऽपि चित्रगव इत्यत्र स्थानिवद्भावेन गोशब्दत्वस्य स्वतस्तत्कालत्वस्य च सत्त्वेन स्थानिवत्त्वप्रतिषेधमन्तराऽतिप्रसङ्गस्य वारयितुमशक्यतया तत्प्रत्याख्यानमसङ्गतं स्यात् । तस्य पूर्वोक्ताशयकत्वे त्वत्र स्वत ओकारत्वस्य विद्यमानत्वेऽपि तस्य लाक्षणिकत्वात्स्थानिवद्भावेनौकारत्वस्यातिदेष्टुमशक्यत्वाच्च न दोष इति तत्सङ्गतिरतो गकारस्याविवक्षितत्वं सर्वथा भाष्यकारासम्मतमित्येतदयुक्तमेवेति चेन्न । औतोऽमिति सूत्रस्थभाष्यानुरोधेन तद्भाष्यस्य विशिष्टसवर्णाप्रसिद्ध्या तदानीं गकारस्याविवक्षया ओकारमात्र एव तपरत्वस्य पर्यवसानेनौकारस्य विवक्षितत्वलाभादोकारविशिष्टगोशब्दत्यर्थलाभेन चित्रगुशब्दे तत्त्वस्याल्वृत्तिधर्मघटितधर्मत्वेनाऽतिदेष्टुमशक्यतया णित्त्वात्वयोरप्राप्त्या स्थानिवद्भावोऽनावश्यक इत्येव तात्पर्यस्य वक्तव्यत्वेन तस्य तदुक्तार्थासाधकत्वात् । न चैवं रीत्या चित्रगुरित्यत्र दोषवारणेऽपि चित्रगव इत्यत्र गुणोत्तरं स्वत ओकारवैशिष्ट्यं, स्थानिवद्भावेन गोशब्दत्वं चाश्रित्य दोषो दुर्वार एवेति प्रत्याख्यानासङ्गतिरिति वाच्यम् । ओत्सूत्रस्थभाष्यप्रामाण्येन वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषाप्रवृत्त्या प्रतिपदोक्तौकारवैशिष्ट्यस्यैव ग्रहणेन स्वतो विद्यमानमोकारवैशिष्ट्यमादायातिप्रसङ्गस्य वक्तुमशक्यत्वात् । तपरत्वसामर्थ्याद्गस्याविवक्षितत्वेनाल्विधित्वात्स्था-

विहितमिति । यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोऽयं यत्नः ॥

स्मृनौरिति । स्मृत उर्वेनेत्यर्थः । यत्तु एषामभिधाने 'अयवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वाय' इतिवार्त्तिकव्याख्यावसरे 'अवादेशे नास्त्युदाहरणम्' इति 'स्वरितो वा' इति सूत्रस्थभाष्यविरोधः । प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानु-

---

निवत्त्वाभाव इति तत्रत्योद्योतग्रन्थोऽप्येवमाशयक एव, प्रकृतसूत्रस्थशेखरानुरोधादिति सर्वमनवद्यम् । न चैवं द्योस्सर्वनामस्थान इत्यारम्भणीयमिति गौरवमिति वाच्यम् । सामान्यधर्मावच्छिन्नोद्देश्यताककार्यविधानापेक्षयाऽभिमतविशेषधर्मावच्छिन्नोद्देश्यताककार्यविधान एव लाघवस्य सर्वैरभ्युपगतत्वात् । अत एव कतर्नामीति वक्तव्ये नामीत्यारम्भस्य सामर्थ्यकल्पनं ग्रन्थकृतां संगच्छत इति दिक् ॥

एतेन परे तु त्वदुक्तरीत्या गोद्योशब्दातिरिक्तौकारान्ताभावेन तयोश्च णित्त्वस्येष्टत्वेनात्र गस्य विवक्षितत्वे द्योर्णित्त्वं वक्तव्यं स्यादिति लाघवाद्गकाराविवक्षैव । चित्रगो इत्यादौ तु विहितविशेषणेन लक्षणप्रतिपदोक्तपरिभाषया वा न दोषः । एवं च गोः पूर्वत्वणित्त्वात्वेत्यत्र णित्त्वात्वग्रहणं न कार्यमित्यपरमनुकूलम् । ध्वनितं चेदं तपरकरणाणित्त्वात्वयोः स्थानिवत्त्वप्रतिषेध इति वार्तिकप्रत्याख्यानपरभाष्येण । प्रकृतसूत्रस्थं भाष्यं त्वेकदेश्युक्तिरित्याहुरित्याचार्योक्तपास्तम् ॥

यदि त्विति । अत्र यदीति न पाक्षिकत्वसूचनाय, किन्तु शास्त्राणि चेत्प्रमाणानीतिवदसंदिग्धे संदिग्धवचनं विधेयस्यार्थस्य दार्ढ्यसूचकमेव । वर्ण-

दात्तत्वात्तदेकादेशस्य 'एकादेश उदात्तेन' इत्युदात्तत्वे स्मृतवेत्यादौ तदुदाहरणसम्भवादिति। तन्न; तृतीयादिष्वनभिधानेऽप्यन्यत्र तत्सत्त्वे बाधकाभावात्। न च गोत इति सूत्रे 'द्योश्च वृद्धिर्वक्तव्या' इति वार्तिके द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम्। उपलक्षणतया व्याख्यानेनादोषात्। परेतु ईदृशानामनभिधानेऽपि न क्षतिरित्याहुः॥

रायो हलि। अष्टन आ इत्यत आ विभक्तावित्यनुवर्त्तते॥

॥ इत्यजन्तपुंलिङ्गप्रकरणम्॥

---

रमेति। रमयतेः पचाद्यच् टाप्। एकादेशस्य पूर्वान्तवत्त्वेन

---

ग्रहणेऽस्याप्रवृत्तिरिति केषांचिदुक्तिस्तत्तद्भाष्यविरोधादिना परिभाषेन्दुटिप्पण्यां विस्तरेण निराकृतेति नात्र प्रतन्यते। उरिति। शम्भुरित्यार्थः। तृतीयादिष्विति। अजादिष्विति शेषः। तावतापि भाष्यस्योपपन्नत्वादिति भावः। बाधकाभावादिति। इदं गोत इत्योकारमात्रोपलक्षणमिति प्राचीनानुरोधेन। उपलक्षणतयेति। ओकारान्तमात्रोपलक्षणतयेत्यर्थः। इदं कैयटरीत्या। वस्तुतस्तु गोतो णित्, औतोऽम्शसोरिति सूत्रद्वयस्थभाष्यग्रन्थसंदर्भेणैषां सामान्यत एवानभिधानं वक्तुमुचित इत्याह। परे त्विति। ईदृशानामिति। गोद्योशब्दारिक्तौकारान्तानामित्यर्थः॥

॥ इत्यजन्ताः पुंलिङ्गाः॥

---

पचाद्यजिति। घञजपाः पुंसीति पुंस्त्वापत्तिस्तु न, तेन भावार्थकघञाद्यन्तानामेव पुंस्त्वविधानेन कर्त्रर्थकाजन्ते तदप्राप्तेः। पूर्वान्तवत्त्वेनेति।

प्रातिपदिकत्वात्स्वादयः। वाचेत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते। आप इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिरित्याह—आबन्तादिति। 'जसः शीः' इत्यतः शीति वर्त्तते। रमे इति। यस्येति लोपो न, अभत्वात्। सम्बुद्धौ च॥ 'बहुवचने झलि' इत्यत एदिति, 'आङि चापः' इत्यत आप इति चानुवर्त्तते। एङ्ह्रस्वादिति। सम्बुद्धौ प्रतिपदोक्तत्वेन शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात् प्रथममेत्वेऽनेन सम्बुद्धिलोप इति भावः। सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्तते। आङि चा॥ चेन प्रकृतम् 'ओसि' इतिपराम्-

---

लिङ्गविशिष्टपरिभाषयेति तु नोक्तं, लिङ्गबोधकप्रत्ययज्ञानायान्तादिवत्सूत्रप्रवृत्तेरावश्यकतया तेनैव निर्वाहेऽतिदेशद्वयस्वीकारे गौरवात्। हलन्तेभ्यः टाबभावस्य वाचेत्यस्यासाधुतायाश्च वक्ष्यमाणत्वादाह। आदाविति। आदिना दामेति डाबन्तस्य, अनडुहीति ङ्यन्तस्य च संग्रहः। प्रतिपदोक्तत्वेनेति। अपवादत्वेनेत्यर्थः। एतेन हल्ङ्यादिलोपस्यापि प्रतिपदोक्तत्वमस्तीत्यपास्तम्। अनेन संबुद्धिलोप इति। एत्वस्य तक्रन्यायेन लोपबाधकतया तक्रन्यायविषयेऽनादप्रवृत्त्युत्तरमुत्सर्गाप्रवृत्तेर्न्यायसिद्धतया एत्वोत्तरं हल्ङ्यादिलोपस्य वक्तुमशक्यत्वादिति भावः। भाष्यमते आकाररूपस्यापोऽभावाच्च। एतेनास्य ग्रन्थस्यान्तरङ्गत्वादेत्वस्य प्रथमं प्रवृत्तिरित्याशयकत्वमभिप्रेत्य प्रश्लेषपक्ष इदम्। वस्तुतस्त्वेत्वस्य हल्ङ्यादिलोपापवादत्वेन पुनरुत्सर्गाप्रवृत्तावेङ्ह्रस्वादिति लोप इत्याशय उचित इत्याचार्योक्तमपास्तम्। अनित्यत्वादिति। गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संबुद्धिलोपविषये तस्या अनित्यत्वादित्यर्थः। न चास्य परिगणितेष्वभाव इति वाच्यम्। भाष्योक्तपरिगणनस्य दोषाल्पत्वसूचनद्वारा परिभाषास्वीकार एव तात्पर्यात्। न हि भिक्षुका-

श्यते । 'घेर्ङिति' इत्यतोऽनुवृत्तं ङितीति-आप इति पञ्चम्या षष्ठ्या विपरिणम्यत इत्याशयेनाह-ङिद्वचनस्येति ॥

सर्वनाम्नः स्या ॥ आबन्तात्परस्य सर्वनाम्नो विहितस्येत्यर्थः । तेन मासपूर्वायै इति सिद्धम् । अत्र ह्रस्वो न स्याटः, तस्य विधेयत्वेनोद्देश्यत्वासम्भवात् । नापि ङिद्वचनस्य, ... ....

---

स्पन्तीति दृष्टान्तेन तथैव लाभात् । अत एव गवाग्रादिसिद्धिः । ध्वनितं चेदमितोऽन्यत्र प्रवृत्तिरेवेति स्वकीये वाक्ये इतोऽन्यत्रेत्यत्र रुत्वोत्वे गुणं पूर्वरूपं च कुर्वता भाष्यकृता । अन्यथाकारनिमित्तकोत्वस्य गुणद्वारा पूर्वरूपद्वारा च तद्विघातकत्वात्तदसङ्गतिः स्पष्टैवेति बोध्यम् । विपरिणम्यत इति । ङितीति सप्तम्याः पूर्वत्र कृतार्थत्वादिति भावः ॥

मासपूर्वायेत्यत्रातिप्रसङ्गवारणायाबन्तात्सर्वनाम्नो विहितस्येत्युक्तौ तस्यै इत्याद्यसिद्धिरित्याशयेनाह । आबन्तात्परस्येति । सर्वनाम्नो विहितस्येति ॥

यत्तु 'वस्तुतस्तु आबन्ताङ्गाभिन्नं यत्सर्वनाम ततः परस्य ङितः स्याट्स्यादापश्च ह्रस्व इत्युच्यमानेऽपि मासपूर्वायै इत्यादौ दोषाभावाद्विहितविशेषणे गौरवात्तस्मादिति परिभाषायां जागरूकायां दिग्योगलक्षणपञ्चम्यन्तं विहायान्यथाकल्पनायां मानाभावाच्च चिन्त्यमिदमिति वाराणसेयास्तन्न । अङ्गाधिकारेऽङ्गस्यैव विशेष्यतायाः पदाङ्गाधिकार इत्यनेन बोधनात्तादृशार्थालाभात् । तस्य विशेष्यत्वे त्वाबन्तं यत्सर्वनाम तदन्तं यदङ्गमित्यर्थलाभेन मासपूर्वायै इत्यत्र दोषस्य दुर्वारत्वात् । अधिकं जसश्शीति सूत्रव्याख्याने द्रष्टव्यम् ॥

उद्देश्यत्वासंभवादिति । सिद्धस्यैवोद्देश्यत्वेनात्र चकारात्स्याड्ढ्रस्वयोरेककालमेव विधानलाभेन स्याट उद्देश्यत्वं न संभवतीति भावः । सायंचिरमिति सूत्रविहितयोः ट्युट्युलोस्त्वनद्यतन इत्यादिनिर्देशादावृत्त्या उद्देश्यत्व-

**व्याख्यानात्। अत आपो ह्रस्व इत्याह—आपश्चेति। आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह—एकादेशस्येति। ग्रहणादिति। सर्वनामशब्देनेत्यर्थः। न चैवमप्याबन्तत्वाभावः, एकादेशनिष्पन्नस्याप्त्वाभावात्, अत एव खट्वेत्यादौ परादिवद्भावेनाप्त्वमाश्रित्याबन्तादिति सोर्लोप उक्तः, परादिवद्भावेन तत्त्वं तु न लभ्यम्, उभयत आश्रयणे अन्तादिवत्त्वाभावादिति वाच्यम्। उभयत आश्रयणे तदभावस्य भाष्ये एकदेशयुक्तत्वेऽपि सिद्धान्तिसंमतत्वा-**

---

माश्रयणीयम्। युष्मद्युपपद इत्यत्र तु तिङ्पदं तत्स्थानिकलकारे लाक्षणिकमिति बोध्यम्। व्याख्यानादिति। ङित इत्यस्यागमापेक्षयावयवषष्ठ्यन्तत्वेन स्थानषष्ठ्यन्तत्वासंभवरूपादित्यर्थः। **आपो ह्रस्व इति।** ह्रस्वपदश्रुत्याचश्चेति परिभाषोपस्थितावाबन्तात्सर्वनाम्नः परस्य ङिद्वचनस्य स्याट् स्यादचश्च ह्रस्व इत्यर्थादलोऽन्त्यपरिभाषयाऽयमर्थः फलतीति भावः। एतेन वाक्यभेदेन मिश्राणां व्याख्यानमनादरणीयमिति बोध्यम्। **न चैवमिति।** यद्यपि सुड्विधावाबन्तत्वस्य न निवेशः, तथापि तुल्यन्यायात्स्याड्विधावपि पूर्वान्तवद्भावेन सर्वनामत्वाश्रयणे आबन्तत्वं दुर्लभमिति भावः। **अत एव**=एकादेशनिष्पन्नस्य स्वत आप्त्वाभावादेव। **उभयत आश्रयण इति।** पूर्वपरशब्दाभ्यामन्तादिशब्दाभ्यां च विरोधस्य पुरःस्फूर्तिकत्वाद्विरुद्धातिदेशद्वयस्य युगपदसंभवः। यथा तुल्यबलयोरेकः प्रेष्यस्ताभ्यां युगपद्भिन्नदेशकार्यप्रेरितोऽविरोधार्थी कस्यापि कार्यं न करोति, तद्वदिति भावः। **सिद्धान्तीति।** वतिघटितशास्त्रस्याहार्यारोपबोधकत्वेन तस्य च विरुद्धविषयस्यापि युगपत्संभवेन न प्रागुक्तलोकन्यायेनास्य सिद्धिः। किन्तु पौर्वापर्यलक्षणो व्यपवर्गो न विरुद्धातिदेशद्वयेन लभ्य इत्येव सिद्धान्तिसम्मत इत्यव्यपवर्गे प्रकृते तदभावस्य सिद्धान्तिसम्मतत्वाभावादिति भावः। एकदेशिमतेऽपि प्रकृते निर्वाहमाह।

भावात्। एतच्च तिङन्ते इणधातौ वक्ष्यामः। परे तु लिङ्गविशिष्टपरिभाषयाऽऽबन्तस्य सर्वनामत्वम्। आबन्तत्वन्तु परादिवद्भावेनेत्याहुः। सर्वस्यामिति । इह परत्वात्स्याटि कृते सकृद्गतिन्यायात्सुड्न ॥

प्रतिपदोक्तस्येति । दिक्शब्दमुच्चार्य विहितत्वादस्य तत्त्वम् । योत्तरेति 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। 'सर्वनाम्नो वृत्तिमात्रे' इतिमात्रग्रहणात्सम्प्रत्यसर्वनामत्वेऽपि पुंवत्त्वम् । योत्तरेति। यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः। स्पष्टार्थमिति । 'दिङ्नामानि'

---

परे त्विति। आबन्तस्येति। एतदुत्तरं सर्वादित्वातिदेशादिति शेषः। सर्वनामत्वमिति। सर्वादीनीत्यनेनेत्यर्थः। एतेन विभक्तौ लिङ्गविशिष्टाग्रहणमिति निषेधादिदं चिन्त्यमिति भट्टोक्तमपास्तम्। सकृद्गतिन्यायादिति। इदमुपलक्षणम्, सन्निपातपरिभाषाया अपि। बुद्धावित्यत्रेव तयाप्यत्र सुटो वारयितुं शक्यत्वात् ॥

ननूपसर्जनप्रतिषेधेन बहुव्रीहिघटकानामसर्वनामत्वात्कथं पुंवद्भाव इत्यत आह। मात्रग्रहणादिति । तेन सकलास्वपि वृत्तिषु पुंवत्त्वविधानलाभेन तत्सामर्थ्याद्भूतपूर्वसर्वनामत्वमाश्रित्यापि बहुव्रीहौ पुंवत्त्वमिति भावः। उद्देश्यविधेयत्वप्रतीत्येति । यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमित्यभियुक्तोक्त्या यत्तच्छब्दसमभिव्याहृतयोरुद्देश्यविधेयभावप्रतीत्येत्यर्थः। इदं च योत्तरा सा पूर्वेति वाक्यस्य वक्ष्यमाणार्थकत्वे हेतुः। इत्यर्थेनेति। तच्छब्दसमभिव्याहृतस्य पूर्वाशब्दस्य न विधौ परः शब्दार्थ इति न्यायेन लक्षणाया वक्तुमशक्यत्वादीदृशार्थस्यैव वाक्याल्लाभेनेत्यर्थः। गुणवाचकत्वादिति । गुणोपसर्जनद्रव्यवाचकत्वादित्यर्थः। पूर्वनिपात इति ॥

अयं भावः। वृत्तावेकार्थीभावमहिम्ना उद्देश्यविधेयभावस्याप्रतीतावपि वाक्यानुरोधेन तत्राप्युत्तराशब्दस्यैव ज्ञानविशेष्यपर्यन्तलक्षकताया युक्तत्वेन तस्य गुणवाचकत्वाद्गुणद्रव्ययोः समभिव्याहारे गुणप्रवृत्तिनिमित्तकस्य विशेषणताया विशेषणं विशेष्येणेति सूत्रे भाष्यकृता व्यवस्थापितत्वाद्ग्रन्थकृतापि संज्ञागुणयोस्समभिव्याहारे गुणप्रवृत्तिनिमित्तकस्य विशेषणतायास्समासशेखरे वक्ष्यमाणत्वाच्च गुणवाचिन उत्तराशब्दस्यैव पूर्वनिपातो युक्तः, न तु संज्ञावाचिनः पूर्वाशब्दस्य। वस्तुतस्तु वृत्तावप्युद्देश्यविधेयभावप्रतीतिरस्त्येव। अत एव भगवतैकार्थीभावविशेषपरिगणनेऽयं नोक्तः। स्पष्टं चैतल्लघुमञ्जूषायाम्। एवं च न विधाविति न्यायेन विधेयबोधके पूर्वाशब्दे लक्षणाया वक्तुमशक्यतया निरुक्तदिशोत्तराशब्दस्यैव पूर्वनिपात इति॥

न च पर्वतो वह्निमानित्यादावुद्देश्यस्य विशेष्यताया विधेयस्य प्रकारतायाश्च दृष्टत्वेन पूर्वापदार्थस्य विधेयत्वे विशेषणतया तस्य पूर्वनिपातापत्तिः। अतः पूर्वाशब्दस्य ज्ञानविशेष्यपर्यन्तलक्षणया या पूर्वात्वप्रकारकज्ञानविशेष्या, सा प्रसिद्धोत्तरा यस्या इत्येव युक्तमिति वाच्यम्। पूर्वाशब्दस्य लाक्षणिकत्वे तस्य गुणवाचकत्वेन निरुक्तदिशा तस्य पूर्वनिपातापत्तेः। विधेयतायाः प्रकारतासमनैयत्याभावेन पूर्वाशब्दार्थस्य विधेयत्वेऽपि विशेष्यत्वे बाधकाभावात्। अत एव नीलरूपवत्त्वेन ज्ञातं पदार्थं विषयीकृत्य प्रवृत्तस्य नीलः क इति प्रश्नस्योत्तरभूते नीलो घट इति वाक्ये विधेयभूतघटस्य विशेष्यता सङ्गच्छते। एवं पर्वते वह्निरित्यादिसाध्यविशेष्यकानुमितौ विशेष्यस्य वह्नेर्विधेयतापि सङ्गच्छते। पर्वतो वह्निमानित्यादिपक्षविशेष्यकानुमित्युत्तरमिव पर्वते वह्निरित्यादिसाध्यविशेष्यकानुमित्युत्तरमपि वह्निमनुमिनोमीत्यनुव्यवसायस्यैव दृष्टत्वेनोभयत्रापि वह्नेरेव विधेयतायाः स्वीकार्यत्वात्। स्पष्टं चेदं जागदीश्यां, सिद्धान्तपक्षतायां गादाधर्यां च। अत एव प्रकृतसूत्रे भाष्येपि या पूर्वा सोत्तरा-

ऽस्योन्मुग्धस्य पूर्वोत्तर उन्मुग्ध इत्युद्देश्यभूतस्य पूर्वाशब्दस्यैव पूर्वनिपातः कृतः। एवं चानुभवविरोधात्तन्त्रान्तरविरोधाद्भाष्यविरोधाच्च नोद्देश्यविधेयभावो विशेषणविशेष्यभावनियामकः। किन्तूक्तभाष्याद्युक्तदिशैव स निर्णय इति बोध्यम्। नन्वेवमपि योत्तरा सा पूर्वेति विग्रहे प्रसिद्धोत्तरस्यां पूर्वात्वप्रकारकज्ञानविशेष्यत्वस्यैव सर्वानुभवसिद्धत्वेन विधेयबोधकस्य पूर्वाशब्दस्यैव लक्षणास्तु, न विधौ परः शब्दार्थ इति तु चिन्त्यम्। सिंहो माणवक, आयुर्घृतमित्यादौ विधेये लक्षणाया दृष्टत्वादिति चेन्न। तथा सति पूर्वाशब्दस्य गुणवाचकत्वेन भाष्योक्तदिशा तस्य विशेषणत्वेन पूर्वनिपातापत्तेः। किंच न विधाविति न्यायस्य, विधेयस्यापूर्वबोध्यत्वेनान्वयानुपपत्तेस्तात्पर्यानुपपत्तेर्वा प्रायशोऽसंभव इत्येतादृशयुक्तिमूलकतया यत्र विधेयविषयेऽप्यनुपपत्तिप्रतिसंधानं दृश्यते, लक्षणामन्तराऽनुपपत्तिपरिहारो न भवति च यथा सिंहो माणवक इत्यादौ, तादृशे विधेयविषयेऽस्य त्यागेऽप्यौत्सर्गिकस्य तस्य सर्वथा त्यागे मानाभावः। एवं च योत्तरा सा पूर्वेति विग्रहे सामानाधिकरण्यानुपपत्त्या कस्य चिल्लक्षणाया आवश्यकत्वे औत्सर्गिकेनानेन न्यायेनोद्देश्यवाचकोत्तराशब्दस्यैव सा युक्ता। तस्य लक्षणायामप्यनुपपत्तेः परिहर्तुं शक्यत्वात्। सिंहो माणवक इत्यत्र तु माणवके प्रसिद्धसिंहसादृश्यप्रतिपादन एव वक्तृतात्पर्यात्तदनुपपत्त्या विधेयबोधकसिंहपदस्यैव लक्षणा। माणवकपदे लक्षणायां तस्याः परिहर्तुमशक्यत्वात्। एव मायुर्घृतमित्यादावप्यव्यभिचारेणायुर्जनकत्वरूपस्य लक्षणाफलस्यायुश्शब्दे लक्षणां विनाऽसिद्ध्या तत्रैव लक्षणेति बोध्यम्॥

एतेन पर्वतो वह्निमानित्यादाविवोद्देश्यस्य विशेष्यत्वेन विधेयस्य प्रकारता स्यादितीदं चिन्त्यम्। एवं च पूर्वाशब्दस्य पूर्वात्वप्रकारकज्ञानलक्षणया, या पूर्वात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरेत्येव परमप्राचीनोक्तमुत्तरपूर्वेत्येव युक्तम्। न विधौ परः शब्दार्थ इत्यपि चिन्त्यम्। आयुर्घृतमित्यादौ घृतमायु-

इत्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः। अन्तरायै नगर्यै इति। अपुरीत्यस्य पूःशब्दार्थस्य विशेष्यत्वे नेत्यर्थ इति भावः। अत्र मानमन्वेष्यम्। हे अम्बेति। ह्रस्वे कृते 'सम्बुद्धौ च' इत्येत्वं न। आआबिति प्रश्लेषात्। द्व्यक्षरं यदीति पठित्वा द्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य 'डलकवतां ह्रस्वो न' इत्यस्य भाष्ये प्रत्याख्यानात्फलाभेदाय सामान्यतोऽपि वार्तिकमसंयुक्ताविषयमित्याशयेनाह-असंयुक्ता इति। द्व्यक्षरं यदीत्यस्याङ्गत्वाद् द्व्यक्षराम्बार्थकान्ताङ्गस्य ह्रस्व इति नियमशरीराज्जगदम्बेत्यादौ ह्रस्वो भवत्येव ॥

यद्यपि जरसादेशस्येति। एवञ्चैत्वशीनुड्याडामां नित्यत्वा-

---

जनकमित्यर्थेन विधेयगुरुशब्दस्य लक्षणया तस्य दुष्टत्वात्। सिंहो माणवक इत्यादौ विधेयसिंहशब्दस्य सिंहसदृशे लक्षणायाः स्वयमुक्तेश्चेति भट्टोक्तमपास्तम् ॥

अत्र मानमन्वेष्यमिति। स्वं रूपमिति शास्त्रेण पूःशब्दस्य स्वरूपपरत्वात्प्रत्यासत्त्याऽन्तरशब्दार्थनिरूपितविशेष्यसमर्पके पूःशब्दे सतीत्यर्थस्यैव ततो लाभादिति भावः। एवं च नगरीशब्दार्थस्य विशेष्यत्वे सर्वनामत्वमिष्टमेवेति बोध्यम्। प्रश्लेषादिति। याडापः ह्रल्ङ्याभ्य इत्यनयोरेव प्रश्लेष इति वक्ष्यमाणरीत्या तु ह्रस्वस्य तक्रन्यायेनैत्वबाधकतया न तदुत्तरमेत्वमिति बोध्यम्। फलाभेदायेति। आरम्भपक्षे हे अक्केत्यादौ ह्रस्वनिषेधात्प्रत्याख्यानपक्षे च द्व्यक्षरत्वेन ह्रस्वप्राप्त्या च फलभेद इति भावः। नन्वेवमपि जगदम्बेत्यस्य द्व्यक्षरत्वाभावेन प्रत्याख्यानपक्षे ह्रस्वाप्राप्त्याऽऽरम्भपक्षे निषेधाविषयत्वेन ह्रस्वप्राप्त्या च फलभेदो दुर्वार एवेति चेत्तत्राह। आङ्गत्वादिति। द्व्यक्षरमित्यस्य श्रौतेनाम्बार्थकेनैव संबन्धो न त्वङ्गेनेति न फलभेद इति भावः। एवं चेति। जरसादेशोत्तरं स्थानिवद्भावेनाप्त्वादेत्वादीनां प्राप्तौ चेत्यर्थः। नित्यत्वादिति। उक्तरीत्या तेषां कृताकृतप्रसङ्गित्वादित्यर्थः। यद्यप्येत्व-

त्पूर्वमेषु क्वचिदजादित्वाभावात्क्वचित्सन्निपातपरिभाषया जरसो ऽनापत्तिरिति भावः । यद्यपि याडांमोर्जरसपेक्षया परत्वात् तयोः कृतयोराद्येऽजादित्वविघातादन्त्ये सन्निपातपरिभाषया च न जरसः प्राप्तिः, एवमेत्वेऽपि; तथापि .... .... .... ....

---

विषये जरसोऽपि नित्यत्वमस्ति, तथाप्युभयोर्नित्ययोः परत्वादेत्वे ततस्सकृद्गति-न्यायेन जरसोऽनापत्तिरित्याशयः । एत्वे नित्यत्वप्रतिपादनं त्वेत्वापेक्षया नित्यत्वात्पूर्वं जरस एव प्रवृत्तिरिति शङ्कावारणायैव, न तत्साक्षात्तस्य पूर्वप्रवृत्ति-प्रयोजकम् । किन्तु परत्वमेव । 'क्वचित्सन्निपातपरिभाषये'त्यत्र सन्निपातपरि-भाषयेति सकृद्गतिन्यायस्याप्युपलक्षणम् । न च जरसादेशोत्तरं निर्दिश्यमान-स्यापोऽभावादेत्वाप्राप्त्या कथं तस्य नित्यत्वमिति वाच्यम् । स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषाया अप्रवृत्तिरित्यभिमानेनाप्त्वस्य पकारेत्संज्ञकाकार-रूपत्वेनाल्विधिरिति वर्णग्रहणतया प्राचीनमते वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिरित्याशयेन वा तद्ग्रन्थप्रवृत्तेः । जरसोऽनापत्तिरिति । सति त्वाकार-प्रश्लेषे जरसादेशोत्तरमनल्विधाविति निषेधेन स्थानिवत्त्वाप्रवृत्त्या तेषां नित्यत्वा-भावाच्छीनुड्विषये परत्वाज्जरसः प्रवृत्तिः । याडामेत्वानामाकाररूपाधिकसा-पेक्षत्वेन बहिरङ्गत्वात्ततः पूर्वं जरसः प्रवृत्तिरित्याशयः । एवं 'यद्यपि जरसा-देशस्ये, त्यादिमूलस्याशयमुपवर्ण्य तदुत्तरग्रन्थमवतारयति । यद्यपीत्यादिना । परत्वादिति । अल्पापेक्षमन्तरङ्गमित्यस्य तत्तद्भाष्यविरोधादिनाऽन्यत्र निरा-कृतत्वान्न तादृशान्तरङ्गत्वमादाय जरसः पूर्वं प्रवृत्तिरित्याशयः । न जरसः प्राप्तिरिति । एवं च तत्राकारप्रश्लेषस्य न फलमिति भावः । एवमेत्वेऽपीति । एतदुत्तरमाकारप्रश्लेषस्य न फलमिति शेषः । तद्विषये नित्यत्वाज्जरसि तदुत्तरं निर्दिश्यमानस्यापोऽभावेनैत्वाप्राप्तेरिति भावः । आबन्ते जरसादेशप्रवृत्त्या स्थानिवद्भावेन जरस्याबन्तत्वातिदेशेऽप्याप्त्वृत्तिनिर्दिश्यमानत्वस्यातिदेष्टुमश-

तत्र प्रश्लेषफलं दर्शयितुमाह—एवमिति। अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम् ॥

स्वाश्रयमिति। स्वं श्रूयमाण आकारः। स्थानिवद्भावेनाप्त्वमिति। न च ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति ह्रस्वे आप्त्वस्य

---

क्यतयाऽत्र तत्परिभाषाया अप्रवृत्तौ न मानम्। वर्णग्रहणे तदप्रवृत्तौ च न मानम्। हयवरट् सूत्रस्थभाष्यविरोधश्चेत्याशयः। याडामपेक्षयैत्त्वविषये एवं विधिवैलक्षण्यसूचनायैवास्य ततः पृथगुपन्यासः। अन्यथा याडामेत्वाना-मित्येव ब्रूयादित्यवधेयम्। तत्रेति। याडामोर्विषय इत्यर्थः। प्रश्लेषफल-मिति। अन्यथा द्वयोरपि नित्यत्वेन परत्वाद्याडामोः कृतयोः सकृद्गति-न्यायेन नसादेरनापत्तिः। पुनः प्रसङ्गविज्ञानात्तत्प्रवृत्तावपि नसे नसीत्या-दिरूपासिद्धिः। सति स्वाकारप्रश्लेषे याडामोर्नित्यत्वाभावेन ततः प्रागादे-शेषु कृतेषु तत्सिद्धिरित्याशयः। आङि चाप इत्यत्राकारप्रश्लेषफलं स्वति-खट्वशब्द इति बोध्यम्। एतेनैत्वशीनुड्याडामामिति प्रतीकमुपादाय इदमेत्वेऽपीति वक्ष्यमाणं च चिन्त्यम्। नित्यत्वस्यैत्वविषये जरस्यपि तौल्यात्। तस्मात्परत्वादेत्वे पश्चाज्जरसि लक्ष्ये लक्षणस्येति न्यायेन पुनरे-त्वाप्रवृत्तिरित्येव तत्त्वमित्याचार्योक्तमपास्तम्। निर्जरशब्दे उक्तमिति। याडामेत्वानां परत्वान्नुट्श्योर्भाष्यप्रामाण्येन पूर्वविप्रतिषेधेनेष्टत्वात्तेषु कृतेषु क्वचिदजादित्वाभावात्क्वचित्सन्निपातपरिभाषया जरसोऽप्राप्तिरेव। चतुर्षु प्रश्लेष-फलं स्वतिखट्वशब्दे, ह्रस्वनद्याप इत्यत्र प्रश्लेषस्य न फलं नापि मानमित्युक्तं तत्रेति बोध्यम्। वस्तुतः पदादीनामादेशत्वाभावान्न तदर्थमपि ह्रस्वनद्याप इत्यत्र प्रश्लेष आवश्यक इति तदाशयः। स्वं श्रूयमाण आकार इति। न च कर्म गच्छतीत्यादि प्रयोगवारणाय तद्धर्मे तद्धर्मविशिष्टान्वयस्याव्युत्पन्नतया अन्यत्रोक्तत्वेन कथमेतत्सङ्गतिरिति वाच्यम्। तद्धर्मस्यानुल्लेखे तथान्वयस्यानङ्गी-

विच्छेदात्कथं दीर्घे स्थानिवत्त्वेन तल्लाभः। ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदिति तदर्थ इति वाच्यम्। 'याडापः' 'औङ आपः' आङि चापः' 'ङेराम्नद्याम्' 'हल्ङ्याब्', इत्येतेष्वाकारप्रश्लेषमाश्रित्य स्थानिवत्त्वनिषेधप्रत्याख्यातृभाष्यनये शङ्कासत्त्वेना-

कारेऽपि तस्योल्लेखे तथान्वयस्य भट्टाचार्यादिभिरङ्गीकृतत्वेनादोषात् ॥

एतेन स्वमादेश इति वक्तुं युक्तम्। आकाराश्रयमाकारत्वमित्युक्तौ पौनरुक्त्यापत्तेरिति भट्टोक्तमपास्तम् ॥

ङ्याब्ग्रहणे आदेशो न स्थानिवदित्युक्तौ खट्वाशब्देऽपि स्थानिवद्भावस्य निषेधः स्यादत आह। दीर्घभिन्न इति। खट्वाशब्दे सवर्णदीर्घात्क्यजन्तकुमारीशब्दे क्यजन्तखट्वाशब्दे चाकृत्सार्वेतिदीर्घाच्च भिन्न इत्यर्थः। याडादिविधायकानां डाबन्ते चारितार्थ्यान्न तत्सामर्थ्यादत्र स्थानिवत्त्वं वक्तुं शक्यमिति भावः। न च खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावादिदं विशेषणं व्यर्थमिति वाच्यम्। न स्थानिवदित्यस्य स्थानिकार्यं न लभत इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेऽप्याप्त्वप्रयुक्तकार्याभावशङ्कावारणार्थं तस्यावश्यकत्वात्। ह्रस्व इति तु नोक्तम्। चित्रायां जातश्चित्रेत्यादौ जातार्थप्रत्ययस्य लुकि टापो लुक्यपि प्रत्ययलक्षणेन हल्ङ्यादिलोपापत्तेः। अदीर्घ इत्युक्तौ तु लुकोऽपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति बोध्यम्। भाष्यनय इति। एतन्मते ह्रस्वे स्थानिवत्त्वेनाप्त्वे तदादेशे पुनः स्थानिवत्त्वेन तद्बुद्धिस्सुलभेति भावः। ननु गङ्गीयतेः क्विपि गङ्गीरित्यादावादेशस्य दीर्घरूपत्वेन स्थानिवत्त्वनिषेधाप्रवृत्तौ सुलोपापत्तिः। भाष्यनये त्वाकाररूपस्यापोऽभावेन न तत्प्रसङ्गः। एवं सूत्रमतेऽपि दीर्घपदेन ङ्याप्पदोपस्थितेकाराकाररूपयोरेव दीर्घयोर्ग्रहणेन न सुलोप इति फलभेदः। एवमतिखट्वस्य अः अतिखट्वा इत्यादौ सूत्रमते

**दोषात्। अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेषामनभिधानम्। यथा अतिखट्वस्य अः अतिखट्वा इत्यादेः। वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ फलभेदस्यैवाभावाच्च। यत्त्वाकारान्तरं प्रश्लिष्याकाररूप एव यो न कदा-**

---

भाष्यमते च सुलोपो भवति। वार्तिकमते तु न। अतिखट्वे आबन्तत्वस्य विच्छेदात्सवर्णदीर्घोत्तरं तस्य पुनः प्ररोहाभावादिति फलभेदस्य विद्यमानत्वेन कथमनेन वार्तिकेन दीर्घग्रहणप्रत्याख्यानमाकारप्रश्लेषेण वार्तिकप्रत्याख्यानं च घटत इत्याशङ्क्याह। **अत्रेति**। उक्तसूत्रविषय इत्यर्थः। **इत्यादेरिति**। आदिना गङ्गीरित्यादिसङ्ग्रहः। वस्तुतोऽतिखट्वा इत्यस्यानभिधानं नावश्यकमेवेत्याशयेनाह। **वक्ष्यमाणरीत्येति**। **फलाभावेनेति**। अतिदेशस्य कार्यार्थत्वात्तदभावे तदप्रवृत्तौ सूत्रभाष्यमतयोरपि दीर्घोत्तरमाप्त्वस्य प्ररोहाभावेन सुलोपाप्राप्तेरिति भावः। नन्वेवं सुनयिकेत्यादौ गुणोत्तरं फलाभावात्स्थानिवत्त्वाप्रवृत्तावयादेशोत्तरं स्थानिवत्त्वेन धातुत्वस्य दुर्लभतया धात्वन्तयकोरितीत्त्वं न स्यात्, एवं शिवोऽर्च्य इत्यादौ रुत्वे उत्वे च फलाभावात्स्थानिवत्त्वेन पदत्वाप्रवृत्तौ गुणोत्तरं तदभावेन पूर्वरूपानापत्तिः। तथा आरतुरित्यादौ तसि स्थानिवत्त्वेन कित्त्वाप्रवृत्तौ तदादेशे तन्न स्यादिति चेन्न। फलाभावेऽपि संज्ञाविषये भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसंधिमात्रेणोपदेशस्येवातिदेशस्यापि प्रवृत्त्याऽद्ययोर्दोषाभावात्। अन्त्येऽपि लावस्थायां कित्त्वस्य फलाभावेनापिदिति पर्युदासबलेन च लिट्पदस्य लिडादेशपरत्वेन लिडादेशे तसि कित्त्वप्रवृत्तौ तदादेशे तस्य सुलभत्वात्। एतेनोक्तलक्ष्यासिद्ध्याऽस्य ग्रन्थस्य चिन्त्यत्वं वदन्तो भट्टा अन्ये च परास्ताः। अतिखट्वा इत्यत्र फलभेदवारणाय कैश्चिदुक्तमनूद्य खण्डयति। **यत्त्वित्यादिना**। **आकारान्तरं प्रश्लिष्येति**। सूत्रमते ईकाराकारौ प्रश्लिष्य, भाष्यमते ईकाराकारयोः प्रश्लेषान्तरं च कृत्वेत्यर्थः। **आकाररूप एवेति**। ईकाराकारयोः प्रश्लेषेणैव निष्कौशाम्बिरतिखट्व

षिद्रूपान्तरं प्राप्त इत्यर्थ इति। तन्न; मानाभावात्। भाष्ये तस्यानुक्तेश्च। आबन्तं यदङ्गमिति। 'प्रत्ययग्रहणे' इति परिभाषयाऽति खट्वस्य नाबन्तत्वं, यच्चाबन्तं खट्वेति, न तदङ्गमिति भावः। न चानयाऽऽबन्तग्रहणे तेनाङ्गविशेषणादाबन्तान्तं यदङ्गमित्यर्थादतिखट्वायेत्यादौ दोषस्तदवस्थ इति वाच्यम्। अङ्गस्य विशेषणत्वात्। एतेन श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्यादेव याडित्यपास्तम्। तस्य लाक्षणिकत्वाच्च। ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तत्कथमस्य तत्र प्राप्तिरत आह। उपसर्जनेति। 'स्त्रीप्रत्यये चानुपसर्जनेन' इति वचनस्यैव भाष्ये पाठादिति भावः। अत्रोपसर्जनत्वं लौकिकमेव। स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासंभवात्। यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति तथापि न तेन 'प्रत्ययग्रहणे' इति तदादिनियमप्रसक्तिः। एतत्सर्वं व्याख्यादर्शाद्यनुरोधेन॥

---

इत्यादौ सुलोपव्यावृत्तौ सिद्धायां सूत्रमते दीर्घग्रहणस्यैकप्रश्लेषेणैव निर्वाहे भाष्यमते तत्प्रत्याख्यानाय कृतस्य प्रश्लेषान्तरस्य च नियमार्थत्वेनेदृशार्थलाभ इति तदाशयः। मानाभावादिति। ननु प्रत्याख्यानपरं भाष्यमेवात्र मानं किं न स्यादत आह। भाष्यानुक्तेश्चेति। ङ्याब्ग्रहणेऽदीर्घ इत्यस्यातिखट्वायेत्येव प्रयोजनं प्रदर्श्याऽकारप्रश्लेषेण तत्प्रत्याख्यानाद्वार्तिकफलत्वेनास्याकथनाच्च न तद्भाष्यं हल्ङ्याबित्यत्राकारद्वयप्रश्लेषे मानं भवितुमर्हतीति भावः। एतेनेति। आबन्तं यदङ्गमित्यर्थाश्रयणेनेत्यर्थः। उक्तरीत्याऽकारे आप्त्वानुसंधानेऽप्याबन्तेऽङ्गत्वाभावादिति भावः। अङ्गस्य विशेष्यतयाऽवित्यनेनाबन्तान्तं यदङ्गमित्येवार्थ इति वक्ष्यमाणस्वसिद्धान्तरीत्यापि तस्यायुक्ततां दर्शयति। तस्येति। असंभवादिति। परिभाषायां स्त्रीप्रत्ययपदेन न तदन्त-

ग्रहणं, तेन तदादिविधेरप्रसक्त्या निषेधस्यानुपयोगात् । किन्तु स्त्रीप्रत्ययमात्रस्यैव । एवं च प्रत्यासत्त्या 'यो ह्युपसर्जनं स्त्रीप्रत्ययस्तत्रैषा परिभाषोपतिष्ठते, इति व्यक्त इति सूत्रस्थभाष्यस्वारस्येन च स्त्रीप्रत्ययगतमेवोपसर्जनत्वं ग्रहीतुमुचितमिति तन्मात्रगतस्य शास्त्रीयोपसर्जनत्वस्यासंभवात्परिभाषायां लौकिकमेवोपसर्जनत्वं ग्राह्यमिति भावः । ननु वासुदेववाचकाकारात्पुंयोगलक्षणे ङीषि यस्येति चेत्यकारलोपे तस्य निरित्यनेन प्रादिसमासे निरिरित्यत्र स्त्रीप्रत्ययमात्रस्यापि विग्रहे नियतविभक्तिकत्वरूपस्य शास्त्रीयोपसर्जनत्वस्य संभवादिदमयुक्तमिति चेन्न । तत्र तन्मात्रस्य कथं चित्तत्संभवेऽपि फलाभावात् । न च विशिष्टस्य स्त्रीप्रत्ययान्ततदादित्वाभावाद्ध्रस्वाभाव एव फलमिति वक्तुं शक्यमिति वाच्यम् । अतिराजकुमारिरित्यादौ ह्रस्वसिद्धये गोस्त्रियोरित्यस्योपसर्जनस्त्रीप्रत्ययान्तान्तप्रातिपदिकस्य ह्रस्व इत्यर्थस्यावश्यकतयाऽत्र ह्रस्वस्य दुर्वारत्वात्। न चैवमपि विशिष्टस्य स्त्रीप्रत्ययान्ततदादित्वाभावात्स्त्रीभ्यो ढगिति ढगभावः फलमिति वाच्यम्। तस्य स्त्रीत्वरूपार्थवाचकेभ्यो ढगित्यर्थस्य वक्ष्यमाणत्वेन तत्र प्रत्ययग्रहणस्यैवाभावेन प्रकृतपरिभाषाया अविषयत्वात् । न च तस्य तादृशार्थकत्वेऽनुपसर्जनादिति सूत्रस्थभाष्यविरोधः । तत्र हि तदधिकारसामर्थ्येन तदन्तविधिज्ञापनात्कौम्भकारेयसिद्धिः । अन्यथा कारशब्दान्ङीप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन विशिष्टस्य स्त्रीप्रत्ययान्तत्वेन ढक्सिद्धावपि कारीशब्दस्यापि स्त्रीप्रत्ययान्ततया कदाचित्ततोऽपि ढकि कुम्भकारेयोऽप्यापद्येतेत्युक्तम् । त्वदुक्तार्थे केवलकारीशब्दस्य स्त्रीत्वरूपार्थवाचकत्वाभावात्तदसङ्गतिः स्पष्टैवेति वाच्यम् । विशिष्टस्य स्त्रीत्वेन योगे विशेष्ये तदयोगस्य वक्तुमशक्यतया कारशब्दस्यापि स्त्रीत्वरूपार्थबोधकत्वेन तद्विरोधाभावात् । निष्कर्षनिवेशेतु न मानमिति बोध्यम् । दरदिडबिडादिशब्देभ्यस्त्वनभिधानाड्ढगभावः। शिवादित्वाद्वा तत्सिद्धिः । ध्वनितं चेदमृष्यन्धकेतिसूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम् । स्त्रीप्रत्ययान्तेभ्यो ढगित्यर्थप्रतिपादनपरं

स्त्रीभ्यो ढगितिसूत्रस्थं भाष्यं त्वेकदेशयुक्तिः । अत्र पक्षे वैमात्रेय इत्यादिसिद्धये विमात्रादीनां शुभ्रादिपाठस्यार्थग्रहणपक्षे दरदादिशब्देभ्यो ढग्वारणाय तेषां शिवादिपाठस्य च तुल्यत्वेऽपि स्त्र्यधिकारोक्तप्रत्ययानां ग्रहणमित्यर्थलाभाय स्त्रीशब्देऽधिकस्य स्वरितत्वप्रतिज्ञानस्य स्त्रियां क्तिनित्यधिकारविहितानामग्रहणाय प्रत्यासत्तेश्चावश्यकतया गौरवग्रस्तत्वात् । जम्बूशब्दादस्त्रीप्रत्ययान्तात् क्यचश्चेति ढक्प्राप्तिप्रतिपादनपरर्ष्यन्धकेतिसूत्रस्थभाष्यविरुद्धत्वाच्च । किञ्च ढकि लोप इत्यारम्भसामर्थ्येन पितृष्वसृमातृष्वसृशब्दयोरपूर्वतया ढक्कल्पनापेक्षया तत्सामर्थ्येनास्यार्थपरत्वमेव युक्तमित्यलमतिविस्तरेण । नन्वत्र परिभाषायां लौकिकोपसर्जनत्वस्वीकारे एकदेशिसमासप्रत्याख्यानपरपरवल्लिङ्गमिति सूत्रस्थभाष्यविरोधः। तत्र हि समानाधिकरणसमासमाश्रित्यैकदेशिसमासः प्रत्याख्यातः। यद्यत्र लौकिकमेवोपसर्जनत्वं गृह्यते, तदाऽर्धपिप्पलीमतिक्रान्त इति विग्रहे एकदेशिसमासपक्षे ङीष उपसर्जनत्वात्तदादिनियमेन ह्रस्वाप्रवृत्तेरत्यर्धपिप्पलीति भवति । कर्मधारयाश्रयणेन तत्प्रत्याख्याने तु स्त्रीप्रत्ययस्यानुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वप्रवृत्त्याऽत्यर्धपिप्पलिरिति भवतीति फलभेदस्य स्पष्टतया तदसङ्गतिः । शास्त्रीयोपसर्जनत्वग्रहणे त्वेकदेशिसमासपक्षे 'एकविभक्तावषष्ठ्यन्तवचन'मिति प्रतिषेधेन, समानाधिकरणसमासपक्षे कस्यापि विग्रहे नियतविभक्तिकत्वाभावेन पक्षद्वयेऽप्युपसर्जनत्वाभावात्तदादिनियमनिषेधेन ह्रस्वो भवतीति फलभेदाभावान्नासङ्गतिरिति चेन्न । आरम्भप्रत्याख्यानयोः फलाभेदाय तेषामनभिधानात् । एतेन निरिरित्यत्र स्त्रीप्रत्ययमात्रस्यापि शास्त्रीयोपसर्जनत्वसंभवाच्चिन्त्यमिदम् । स्त्रीभ्यो ढगिति सूत्रशेखरोऽपि चिन्त्य एवेति भट्टोक्तमपास्तम् । पदाङ्गाधिकार इति परिभाषयाऽङ्गस्य विशेष्यताया एवौचित्यादाबन्तान्तं यदङ्गमित्यर्थस्यैव लाभेन मूलोक्तरीत्याऽत्र याड्वारणमयुक्तमित्याशयेन

**परे त्वस्याकारस्य लाक्षणिकत्वान्नात्र याट्। वर्णग्रहणेऽपि तत्प्रवृत्तेः 'ओत्' इत्यादौ भाष्ये स्पष्टमुक्तत्वात्। न च खट्वायै**

---

प्रकारान्तरेण तं वारयति। परे त्विति। लाक्षणिकत्वादिति। लक्षणवशसंपन्नत्वादित्यर्थः। यत्तु तत्तच्छब्दानुवादेन विहितत्वरूपप्रतिपदोक्तत्वस्य सत्त्वेन कथं परिभाषया वारणमिति चिन्त्यमेतदिति भट्टास्तन्न। तत्तच्छब्दानुवादेन विहितत्वमित्यस्य यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकज्ञानसंपादकत्वेनोपयुज्यमानानुपूर्व्यवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयत्वमित्यर्थेन तादृशप्रतिपदोक्तत्वस्यात्रासंभवात्। नन्वादेच उपदेश इति सूत्रस्थोपदेशग्रहणेन वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः प्राचीनैरङ्गीकृतत्वेन कथमनया परिभाषयाऽत्र याड्वारणमत आह। वर्णग्रहणेऽपीति। उक्तत्वादिति। तत्र ह्यदोऽभवत्, तिरोऽभवदित्यादावोकारस्य लाक्षणिकत्वादनया परिभाषया प्रगृह्यसंज्ञा वारितेति वर्णग्रहणे तदप्रवृत्तिर्भाष्यविरुद्धेति भावः। न चाग्रे गोऽभवदित्यादौ प्रगृह्यसंज्ञावारणायाश्रितेन गौणमुख्यन्यायेनैवात्रापि दोषवारणसंभवादियमेकदेश्युक्तिरिति वाराणसेयोक्तदिशा नेदं भाष्यं वर्णग्रहणे तत्प्रवृत्तिसाधकमिति वाच्यम्। लक्षणप्रतिपदोक्तपरिभाषाया अविषये गोऽभवदित्यादावतिप्रसङ्गवारणायाश्रितेन गौणमुख्यन्यायरूपप्रकारेण पूर्वपरिहारस्यैकदेश्युक्तित्वकल्पनाया अयुक्तत्वात्। न हि प्रतिपदोक्तपरिभाषाविषय एव गौणमुख्यन्यायोऽपि संचारितः, येन तत्सामर्थ्यात्पूर्वपरिहारेऽरुचिर्वा तस्यैकदेश्युक्तित्वं वा कल्पयितुं शक्येतेति बोध्यम्। आदेच इति सूत्रस्थोपदेशग्रहणस्य गोभ्यामित्यादावात्ववारणायावश्यकतया न तदस्या वर्णग्रहणेऽप्रवृत्तिज्ञापकम्। तत्र धातुग्रहणानुवृत्तिः स्त्वणिञोरिति सूत्रस्थभाष्यविरुद्धा। अत एव नानुबन्धकृतमनेजन्तत्वमिति परिभाषाज्ञापनोत्तरमपि माङ इति निर्देशसङ्गतिः। अन्यथाऽनुबन्धलोपोत्तरं तद्विनिर्मुक्तस्यैव धातुसंज्ञाया न धातुलोप इति सूत्रे

**इत्यत्र याडनापत्तिः, सूत्रन्तु निशायै इत्यादौ चरितार्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात् । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वात् । पदाङ्गाधिकारे इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च ।** .... .... .... ...

---

भाष्यकृता प्रतिपादितत्वेन विशिष्टस्य क्रियावाचकत्वनिबन्धनधातुसंज्ञाया अभावात्तदसङ्गतिरित्यन्यत्र निरूपितम् । न च वर्णग्रहणेऽपि तत्प्रवृत्तौ क्रापयतीत्यादावाकारस्य लाक्षणिकत्वादनया परिभाषया पुङ्न स्यादिति वाच्यम् । भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणेन सामान्यतः परिभाषाया अनित्यत्वस्वीकारेण तेनैव तत्र तस्या अप्रवृत्तेरदोषात् । फलाभावेनैषा वर्णग्रहणे न प्रवर्तत इति वाराणसेयोक्तं तु न युक्तम् । औत्सर्गिकस्य तन्न्यायस्यान्यत्रेव बाधकाभावाद्वर्णग्रहणेऽपि प्रवृत्तेरौत्सर्गिकत्वेन तत्र फलविचारस्यानावश्यकत्वात् । प्रत्युतौत्सर्गिकस्य तस्य वर्णग्रहणेऽप्रवृत्तिरिति सङ्कोचयतां तेषामेव फलप्रमाणयोर्विचारस्यावश्यकत्वात् । निरुक्तरीत्या द्वयोरप्यभावेन तादृशसङ्कोचस्यायुक्तत्वात् । ननु वर्णग्रहणेऽप्यस्याः प्रवृत्त्यभ्युपगमे खट्वायै इत्यत्र याडनापत्तिः । तत्राकारस्य सवर्णदीर्घनिष्पन्नत्वेन लाक्षणिकत्वादिति शङ्कते । न चेति । आरम्भसामर्थ्यात्तु नात्र याट्सिद्धिरित्याह । सूत्रं त्विति । भाष्यानुक्तत्वाद्धलन्तेभ्यष्टापोऽभावादाह । आदाविति । आदिना डाबन्तसंग्रहः । तद्रूपसत्त्वादिति । आकाररूपसत्त्वादित्यर्थः । यत्त्वतिखट्वायेत्यत्र ह्रस्वात्पूर्वमाकारसत्त्वेन कथं तस्य लाक्षणिकत्वमिति चिन्त्यमेतदिति भट्टास्तन्न । ह्रस्वात्पूर्वमाकाररूपसत्त्वेऽपि ह्रस्वोत्तरमाकाररूपस्य लक्षणप्रवृत्तिं विना संभवाभावेनात्र तद्रूपस्य लाक्षणिकत्वाव्याघातात् । औचित्यबोधनाच्चेति । चो हेतौ । यतोऽङ्गाधिकारेऽङ्गस्य विशेष्यत्वमेवोचितमतो याडाप

**अत एवाबन्तान्तं यदङ्गमित्यर्थाभिप्रायेणातिखट्वायेत्येतत्सिद्धये-ऽतिखट्व ए इति स्थिते प्रवृत्तं 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेनाशङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्याने एतत्परिहारायोपायान्तराकथनं भाष्ये। किंचाङ्गस्य विशेषणत्वे वार्तिकस्य तत्प्रत्याख्यानायाऽकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव। .... .... ....**

---

इत्यस्याबन्तान्तं यदङ्गमित्यर्थलाभेऽपि मूलोक्तार्थालाभादनयैवात्र याड्वारणीय इत्याशयः। ननु विशेष्यान्तरासत्त्व एव शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरुक्तत्वेनाङ्गस्य विशेष्यत्वेऽपि तदन्तविधिद्वयालाभेन मूलोक्तरीत्याऽत्र याट् सुवार एवेत्यत आह। **अत एवेति**। विशेष्यान्तरसत्त्वेऽप्यर्धखट्वायै इत्यादौ याट्सिद्धये वनो रचेत्यादाविव शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरावश्यकत्वेनात्रानयैव परिभाषया याटो वारणीयत्वादेवेत्यर्थः। **इत्यर्थाभिप्रायेणेति**। एवं चेदमपि भाष्यमङ्गस्य विशेष्यत्वे शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरप्याश्रयणे च मानमिति भावः। **तत्प्रत्याख्यान इति**। ङ्याब्ग्रहणेऽदीर्घ इति वार्तिकप्रत्याख्यान इत्यर्थः। **एतत्परिहारायेति**। अतिखट्वायेत्यत्र दीर्घोत्तरं स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य प्रसक्तस्य याटः परिहारायेत्यर्थः। **उपायान्तराकथनमिति**। अनेन च पूर्वोक्त एवोपायो न त्वन्य इति सूचितमिति भावः। एतेनोपायान्तराकथनमात्रेण तत्कल्पनायाः कर्तुमशक्यत्वात् स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषया दोषवारणेन तत्कथने फलाभावाच्चेदमयुक्तमिति वदन्त औत्तराहाः परास्ताः। नन्वतिखट्वायेत्यत्र याड्वारणायोपायान्तराकथनेनाङ्गस्य विशेषणत्वमेव सूचितमिति युक्तमेव मूलोक्तमित्यत आह। **किंचेति**। **वैयर्थ्यमिति**॥

**अयं भावः। स्थानिवत्सूत्रे भाष्ये 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्तिकस्य**

**किं च खट्वाया अर्द्धेऽद्धखट्वायामित्यादौ याडनापत्तिः । किं चाऽकारप्रश्लेषपक्षेऽपि दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाऽत्वमिति शङ्काऽयुक्तैव । दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोपस्य दुर्लभत्वात् । परंपरया कार्यमादायस्थानिवत्त्वप्रवृत्तौ मानाभावात् ।**

---

निष्कौशाम्बिरतिखट्व इत्यादौ सुलोपवारणं फलत्वेन प्रदर्श्य ततो दीर्घग्रहणेनैव तस्य वारयितुं शक्यतया वार्तिकारम्भो विफल इत्याशयेन 'ननु च दीर्घादित्युच्यत' इत्याशङ्कां कृत्वा वार्तिकारम्भे तन्न वक्तव्यं भवतीति समाधाय तदुत्तरं 'किं पुनरत्र ज्यायः, स्थानिवद्भावप्रतिषेध एव ज्यायान्, इदमपि सिद्धं भवति । अतिखट्वाय, अतिमालाय । याडाप इति याड् न भवती'त्युक्तम् । अनेन च वार्तिकानारम्भेऽनयोरसिद्धिस्सूचिता । अङ्गस्य विशेषणत्वे तु वार्तिकानारम्भेऽपि तत्सिद्ध्या तदर्थं गुरुभूतेन प्रश्लेषेण तत्सिद्धिमास्थाय वार्तिकप्रत्याख्यानं वार्तिकारम्भस्यावश्यकत्वप्रतिपादनं च व्यर्थं स्यादिति ॥

एतेन चित्रायां जातश्चित्र इत्यादौ दोषवारणायोभयोरप्यावश्यकत्वेन चिन्त्यमेतदित्याचार्योक्तमपास्तम् । अङ्गस्य विशेषणत्वे लक्ष्यासिद्धिमपि दर्शयति । **किंचेति । याडनापत्तिरिति** । उपसर्जनस्त्रीप्रत्यये तदादिनियमेनाङ्गस्याबन्तत्वाभावादिति भावः । कर्मधारयसमासमाश्रित्यैकदेशिसमासप्रत्याख्यानपक्षे तु गोवशायै इत्यादौ याडनापत्तिर्बोध्या । वस्तुतो मूलोक्ता शङ्कैवायुक्तेत्याह । **किंचेति । मानाभावादिति** । यत्त्विदं चिन्त्यम् । अतिखट्वायै इत्यादावुक्तरीत्यैव याडप्रवृत्तावाकारप्रश्लेषवैयर्थ्यापत्तेरेव मानत्वादित्याचार्यास्तन्न । अतिखट्व ए इत्यवस्थायां यादेशं बाधित्वा नित्यत्वात्प्राप्तस्य याटो वारणाय प्रश्लेषस्यावश्यकत्वेन तद्वैयर्थ्याभावात् । तस्यामवस्थायां फलस्य विद्यमानत्वेन स्थानिवत्त्वप्रवृत्तेरव्याघातात् । आकारप्रश्लेषसत्त्वे तु ह्रस्वे स्था-

'याडापः' इति सूत्रे भाष्येऽपि 'अतिखट्वायेत्यत्र स्थानिवत्त्वात् प्राप्तस्य याटः प्रतिषेधो वक्तव्यः, न वक्तव्यो ङ्याब्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधात्। न च दीर्घत्वे आबसौ भूतपूर्व इति याट् प्राप्नोति, लाक्षणिकत्वात्। स्थानिवत्त्वे तु तत्सामर्थ्यान्नैतत्परिभाषाप्रवृत्तिः' इत्युक्तम्। यद्यपि स्थानिवत्सूत्रयाडापसूत्रस्थभाष्याभ्यां हल्ङ्याप्सूत्रयाडापसूत्रयोरेव प्रश्लेषो लभ्यते, तथापि भाष्यमुपलक्षणमितरसूत्राविषयोदाहरणानभिधानं वेत्यनयोर्युक्तं सुधीभिर्विचार्यमित्याहुः॥

व्रश्च। अत्र राजिसाहचर्याद्भ्राजिः फणादिरेव। तेनान्यस्य

---

निवत्त्वेनाऽप्यत्वेऽप्याकाररूपत्वाभावेन याडादेरप्राप्त्या फलाभावेन तत्र स्थानिवत्त्वाप्रवृत्तौ न दीर्घे स्थानिवत्त्वेन तत्त्वमिति बोध्यम्। मूलोक्तसमाधानस्याप्ययुक्ततां भाष्यान्तरसंवादेन द्रढयति। याडाप इति सूत्र इति। भाष्याभ्यामिति। तत्राद्ये सूत्रद्वयोदाहरणविषय एव शङ्कासमाधानयोः करणेन, अन्त्येऽतिखट्वायेत्यत्रैव शङ्कासमाधानयोः करणेन चायमर्थो लभ्यत इति भावः। सुधीभिर्विचार्यमिति। स्थानिवत्सूत्रे याडाप्सूत्रविषये शङ्कासमाधाने कृत्वा याडाप इति सूत्रे पुनः शङ्कासमाधानयोः करणेनेतरसूत्रोदाहरणविषये तदकरणेन च तद्वार्तिकारम्भस्य तद्विषय एवासाधारणफलत्वध्वननात् तत्प्रत्याख्यानायाश्रितस्य प्रश्लिष्टनिर्देशस्यापि तद्विषयकत्वमेवोचितमितीतरसूत्रविषयोदाहरणानभिधानमेव भाष्याल्लभ्यत इत्याशयः॥

राजिसाहचर्यादिति। अर्थवता राजिना साहचर्यादित्यर्थः। फणादिरेवेति। न च विनिगमनाविरहादेकनुबन्धकराजिसाहचर्यादेकानुबन्धकभ्राजेरेव ग्रहणे द्व्यनुबन्धकस्य फणादेष्षत्वं न स्यादितीदमयुक्तमिति वाच्यम्। इत्संज्ञाविधायकशास्त्रानुसंधानसापेक्षतया विलम्बोपस्थितिकेनैकानुबन्धकत्वरूप-

**विभ्रागित्येवेत्याहुः । छशौ वर्णौ ताभ्यां शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह—छशान्तयोरिति । छशयोरित्युक्तेऽपि न क्षतिरिति चिन्त्यम् । पदस्येति तु पृष्टमित्यादिसिद्धये व्यधिकरणमेव । अन्तादेश इति । अलोऽन्त्यस्येति वचनात् । अत्र 'झलो झलि' इत्यतो झलीति, पदस्येति, 'स्कोः' इत्यतोऽन्ते इति चानुवर्त्तते । 'छ्वोः शूड्' इत्यत्र क्ङितीत्यनुवृत्तेः प्रष्टेत्यादौ शादेशाभावाद्**

---

धर्मेण साहचर्याश्रयणापेक्षया शीघ्रोपस्थितिकेन फणादित्वरूपधर्मेण साहचर्याश्रयणस्योचितत्वमित्याशयात् । एतेनास्य ग्रन्थस्य चिन्त्यत्वं वदन्तो भट्टाः परास्ताः । **फणादिरेवेति** । अर्थवद्ग्रहणपरिभाषया राजृदीप्तावित्यस्यैव ग्रहणे तत्साहचर्याद्भ्राजिरपि फणादिरेव गृह्यत इति भावः । न चैवं शान्तस्य भ्राशतेष्षत्वे विभ्राडिति, जान्तस्य भ्राजतेः कुत्वे विभ्रागिति च रूपद्वयसिद्धौ सूत्रे भ्राजिग्रहणं व्यर्थमिति वाच्यम् । विभ्राजयतेर्णिजन्तात्क्विपि णिलोपटिलोपयोः कृतयोरवशिष्टस्य षत्वार्थं तत्सत्त्वात् । **आहुरिति** । भाष्यानुक्तत्वमत्रारुचिः । **चिन्त्यमिति** । केचित्तु व्रश्चेतिसूत्रे धातोरित्यनुवर्तयन्तीति वक्ष्यमाणमूलग्रन्थेनात्र सूत्रे धातुग्रहणानुवृत्तेर्मूलकारानभिमतत्वस्य स्पष्टतया लाभेनात्र शब्दस्वरूपविशेष्याध्याहारमूलकतदन्तविधेरेव स्वीकर्तव्यतया तथा स्वीकारे फलं चिन्त्यमिति भावः । एतेन धातोरित्यस्यैकाच इत्युत्तरार्थमत्रानुवृत्तस्य विशेष्यत्वेन तदन्तविधेस्सुलभत्वादिदं चिन्त्यमित्याचार्योक्तमपास्तम् । ननु पदस्येत्यधिकारात्तद्विशेषणत्वेन तदन्तविधिस्सुलभ एवेत्यत आह । **पदस्येति** । छग्रहणप्रयोजनं दर्शयति । **छ्वोश्शूडित्यत्रेति** । ननु प्रष्टेत्यत्र छकारस्य षत्वेऽपि तुकः श्रवणापत्तिः । निमित्तापाय इत्यस्य सिद्धान्तेऽसत्त्वादित्यत

अशान्तत्वेन षत्वाप्राप्तौ छग्रहणम्। अत्रापि सतुङ्निर्देशो बोद्धयः। तस्यासिद्धत्वादिति। 'चयो द्वितीया' इत्यस्य 'नादिन्या' इति सूत्रे भाष्ये पाठादिति भावः। टतयोरिति। धुडभावे टस्य, धुटि तस्येत्यर्थः। न भवतीति। जश्त्वात्प्राक् षस्य नेत्यर्थः। जश्त्वे तु प्राप्तिरेव नेति बोद्धयम्। केचित्त्विति। 'एकाचः' इत्युत्तरसूत्रेऽनुवृत्त्या मध्येऽपि सम्बन्ध एवोचित इति भावः। जश्त्वेनेति। यत्तु 'जश् झशि' इति निर्देशात् शस्य न जश्त्वमिति तन्न, अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वायोगात्। 'उपदेशेऽज्' इत्यादि-

---

आह। अत्रापीति। अनुवृत्त्येति। तद्वाडित्यत्र भष्भाववारणाय तत्र सूत्रे धातुग्रहणानुवृत्तिरावश्यकीति भावः। तात्पर्यादिति। आचार्यस्येति शेषः। जश्त्वेन विकृतस्य स्वरूपस्योच्चारणे तत्र प्रत्याहारज्ञानस्यासुलभतया स्वरूपस्यैव विधेयत्वशङ्का स्यादिति भावः। अत एवैकाचो बशो भष् झषन्तस्य, अभ्यासे चर्चेत्यादौ सन्धिकार्यं न कृतमिति बोध्यम्। ननु सत्यपि तथा तात्पर्ये कथमस्य साधुत्वं, जश्त्वस्य दुर्वारत्वादत आह। भत्वाच्चेति। चो हेतौ, यतोऽयस्मयादिपाठाद्भत्वमतो जश्त्वाप्रवृत्त्या साधुत्वमिति भावः। तत्र = जश्पदे। तदप्राप्ताविति। जश्त्वाप्राप्तावित्यर्थः। ज्ञापकत्वायोगादिति। निरुक्तरीत्या निर्देशस्योपपन्नत्वादिति भावः। यत्तु जश्त्वमित्यादिभाष्यप्रयोगनिर्वाहायोक्तार्थज्ञापकस्य संभवेनायस्मयादित्वकल्पनाया अनौचित्यादिदमयुक्तमित्याचार्याः, तन्न। अनेन निर्देशेनोक्तार्थस्य ज्ञापनेऽपि चर्त्वम्, झषन्तः, यय्परत्वादित्यादिप्रयोगेषु पदान्तत्वप्रयुक्तविसर्गादिवारणाय प्रकारान्तरस्यान्वेषणीयतया तेनैव तद्भाष्यप्रयोगस्याप्युपपत्तौ तदर्थं ज्ञापकताया अनावश्यकत्वात्। निरुक्तरीत्या तस्यासंभवाच्च। सूत्रनिर्देशमात्रेण सामान्यतस्तत्तद्वर्णेषु

निर्देशैः कुत्वाद्यनापत्तेश्च । अत्र मते भाष्यानुग्रहो विचार्यः । 'मांसपृतना' इत्यस्य 'पद्दन्न' इति सूत्रे उपसंख्यातत्वादाह—शसादौ वेति । स्त्रीत्वादिति । पुंस्त्वाभावादित्यर्थः । नात्वं नेति । स्त्रीत्वादित्यनुकृष्यते । अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम् । न हि पुंस्त्वाभावो नाभावे प्रतिबन्धकः । नपुंसकेऽपि तदङ्गीकारात् ॥

ङितीति ह्र् । अत्र वाक्यद्वयम् । आद्ये यू इति, स्त्र्याख्याविति, अस्त्रीति, इयङुवङ्स्थानाविति, वेति चानुवर्त्तते । अन्त्ये यू इति, वेति, स्त्रीवाचकावित्येतन्मात्रार्थकं स्त्र्याख्याविति च । तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु 'नेयङ्' इति निषेधादप्राप्ते विभाषा ।

---

शास्त्राप्रवृत्तिकल्पनायामतिप्रसङ्गं दर्शयति । उपदेश इति । अत्र मत इति । केचिन्मत इत्यर्थः । भाष्यानुग्रहः = भाष्यसंमतिः । विचार्यः = चिन्त्यः ॥

कार्याभावे कारणाभावस्य प्रयोजकतया स्त्रीत्वस्य तद्रूपत्वाभावेन स्त्रीत्वान्नत्वाभाव इत्ययुक्तमत आह । पुंस्त्वाभावादिति । व्याप्यस्य स्त्रीत्वस्य सत्त्वे तद्व्यापकीभूतपुंस्त्वाभावस्य सत्त्वं स्वतस्सिद्धमिति भावः । अनुकृष्यत इति । पूर्ववाक्यादित्यर्थः । अत एवेति । उत्तरवाक्ये स्त्रीत्वादित्यस्यानुकर्षार्थमेवेत्यर्थः । पुंस्त्वाभावादित्यस्योत्तरवाक्येऽनुकर्षेण न निस्तार इत्याह । न हीति ॥

वाक्यद्वयमिति । संज्ञिसमुच्चयार्थेन चकारेणैतल्लाभ इति भावः । आद्य इत्यस्य तत्रेत्यादिः । ह्रस्वयोरप्राप्त इति । नच यूस्त्र्याख्याविति सूत्रे ह्रस्वदीर्घयोरविशेषेण ग्रहणमिति पक्षस्यापि भाष्ये उक्तत्वात्कथमप्राप्तिरिति वाच्यम् । तत्रैव पक्षे शसग्रहणमकृत्वा ह्रस्वांशे परत्वाद्घिसंज्ञया बाध इत्यस्याप्युक्तत्वेना-

इष्वादिष्वप्राप्तिमाशङ्क्य 'ङिति ह्रस्वश्च' इत्यत्र नित्यस्त्रीलिङ्गाविल्येवंविधो नियमो नाश्रीयत इति कैयटस्तु ह्रस्वांशमात्रविषय इत्याशयेनाह—नित्यस्त्रीलिङ्गाविति। अत एवास्य दीर्घांशे निषेधविकल्पत्वं भाष्ये उक्तं 'यू स्त्र्याख्यौ' इति सूत्रे। तत्फलं कटप्रुवे ब्राह्मण्यै इति। लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन तत्त्वाभावात्॥

परे त्वत्र विकल्पो भवत्येव। आख्याग्रहणरहितस्यैवात्र संबन्धात्। यद्वा स्त्र्याख्यावित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र, शब्दाधिकारात्। तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम्।

---

दोषात्। दीर्घवाक्ये नित्यस्त्रीलिङ्गावित्यर्थकस्त्र्याख्यावित्यस्यानुवृत्तौ प्रसक्तं कैयटाविरोधं परिहरति। इष्वादिष्वित्यादिना। ह्रस्वांशमात्रविषयक इति। उपक्रमानुरोधात्तस्य तन्मात्रविषयकत्वमेवेत्याशयः। अत एव=आद्यवाक्ये स्त्र्याख्यावित्यस्य नित्यस्त्रीलिङ्गावित्यर्थकत्वादेव। तत्फलमिति। दीर्घवाक्ये नित्यस्त्रीलिङ्गावित्यर्थकस्यानुवृत्तेः फलमित्यर्थः। अत्रेति। कटप्रुवे ब्राह्मण्यै इत्यत्रेत्यर्थः। एकदेशे स्वरितत्वकल्पनायां गौरवाद्भाष्ये ह्रस्वघटितवाक्ये स्त्र्याख्यावित्यस्य कण्ठत उक्तत्वाच्चाह। यद्वेति। अत्रेति। एतदुत्तरं संबध्यत इति शेषः। एवं च वाक्यद्वयेऽपि स्त्र्याख्यावित्येतत् स्त्रीवाचकावित्येतन्मात्रार्थकमेवेति भावः। ङिदाक्षिप्ताङ्गस्येति। न च ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणतया कथं तेनाङ्गाक्षेप इति वाच्यम्। वामीति सूत्रसाहचर्येणात्र ङितः प्रत्ययस्यैव ग्रहणेनादोषात्। यदि तु सूत्रान्तरसाहचर्यस्यान्यत्र ग्रन्थकृता निराकृतत्वेन नेदं युक्तमिति विभाव्यते, तदा प्रत्यये परत एवेयङुवङोर्विधानात्तदाक्षिप्तप्रत्ययेन ङिद्विशेषणात्तद्विशेषणाङ्गस्याक्षेप इत्याशयः। यथा नेयङिति सूत्रे आक्षिप्तस्याङ्गस्य 'सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ तत्प्रतिषेधादि'ति वार्तिकभाष्यप्रामाण्याच्छाब्दान्वयित्वमङ्गीकृतमेवमत्राप्याक्षिप्तस्य तस्य वक्ष्यमाणवार्ति-

अत एव 'प्रथमलिङ्गग्रहणं च' इत्यस्यात्राप्रवृत्त्यन्वाख्यायके 'ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ च प्राक्च प्रवृत्तेः स्त्रीवचनावेव नदीसञ्ज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यम्' इति वार्त्तिके–'अतिशकटयै ब्राह्मण्यै' क्व मा भूत्? अतिशकटये ब्राह्मणाय अतिश्रियै ब्राह्मण्यै, श्रियै ब्राह्मण्यै। क्व माभूत्? अतिश्रिये ब्राह्मणाय श्रिये ब्राह्मणाय' इति यूस्त्र्याख्याविति सूत्रशेषे भाष्ये उक्तम्। एवञ्चास्य

कभाष्यबलात्तदङ्गीकार इति बोध्यम्। स्पष्टं चेदमुद्योते। अत्र सूत्रे स्त्रीवाचकाविल्येतन्मात्रार्थकस्त्र्याख्यावित्यस्यानुवृत्तौ तस्याक्षिप्ताङ्गविशेषणत्वे च मानं दर्शयति। अत एवेति। प्रथमलिङ्गग्रहणं चेति। इदमुपलक्षणम्। तत्प्रत्याख्यानप्रकारस्य 'अवयवस्त्रीविषयत्वात्सिद्धमित्यस्यापि। अत्र=ङिति ह्रस्वश्चेति सूत्रविषये। अप्रवृत्त्यन्वाख्यायक इति। अनाश्रयणबोधक इत्यर्थः। अस्य च वार्तिक इत्यनेनान्वयः। प्रवृत्ताविति। प्रवृत्तिरर्थान्तरसङ्क्रान्तिरिति कैयटः। तस्यां सत्यामित्यर्थः। एवं च ह्रस्वेवर्णाद्यन्तावियङादिस्थानेवर्णाद्यन्तौ च शब्दावर्थान्तरसङ्क्रान्तौ सत्यां तत्पूर्वं च स्त्रीवचनावेव नदीसंज्ञौ भवत इति तदर्थः। वार्तिक इति। इत्यर्थकवार्तिकव्याख्यानावसर इत्यर्थः। उक्तमिति। अनेन च वार्तिकेन ङिति ह्रस्वश्चेत्यत्रानुवृत्तस्त्र्याख्यावित्यस्य ङिदाक्षिप्ताङ्गविशेषणताया अन्वाख्यानात्तस्य च नित्यस्त्रीलिङ्गावित्यर्थकत्वेऽतिश्रियै ब्राह्मण्यै इत्युदाहरणासङ्गतिः। अङ्गस्य लिङ्गान्तरानभिधायकत्वरूपानित्यस्त्रीत्वस्याभावेन प्रकृतसूत्राप्रवृत्तेरिति भावः। किंच यूस्त्र्याख्याविति सूत्रे ङिति ह्रस्वश्चेत्यत्रानुवृत्तस्त्र्याख्यावित्यस्योक्तभाष्यप्रामाण्यादङ्गविशेषणत्वमाख्याग्रहणरहितस्य स्त्रियामित्येतन्मात्रस्यैवात्रानुवृत्तेः कैयटाभिमतत्वं च वदन् कौस्तुभकारोऽपि मूलोक्तार्थस्य स्वानभिमतत्वं सूचितवान्। अत एव कौस्तुभे प्रकृतसूत्रव्याख्यानावसरे 'इयङुवङ्स्थानौ ह्रस्वौ च यू वा नदीसंज्ञौ स्तः स्त्रियां ङिति परे' इत्यविशेषेणैवोक्तमित्यवधेयम्। एवं चेति। उक्तभाष्य-

निषेधविकल्पत्वमसम्भवि। समुदायस्य केनापि प्राप्त्यभावात्। अवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावात्। ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पात्। एतच्च प्रवृत्तौ स्त्रीवचनावित्यनेन सूचितम्। अत एवात्र वाक्यद्वयेऽपि विधिविकल्प एव दर्शितः। एवञ्च 'अत्र नियमो नाश्रीयते' इति कैयटो वाक्यद्वयपर एवोचितः। उपक्रमे निषेधपरतया व्याख्यानं तु स्याख्यावित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो 'यू इति ह्रस्वयोर्ग्रहणम्'इति पक्षोपपादने युक्तिभूतमिति तन्नादरणीयम्॥

---

बलादाख्याग्रहणरहितस्यैवात्रानुवृत्तेस्तस्याङ्गविशेषणतायाश्च लाभे चेत्यर्थ। असंभवीति। निषेधस्य प्राप्तिपूर्वकत्वात्प्रकृते प्राप्तेरेवाभावादिति भावः। तदाह। समुदायस्येति। ननु समुदायस्याप्राप्तावप्यवयवस्य साऽस्त्येवेत्यत आह। अवयवस्येति। एतच्चेति। स्त्रीवाचकस्य ङिदाक्षिप्ताङ्गस्यैवानेन विकल्प इत्येतदित्यर्थः। सूचितमिति। प्रवृत्तौ स्त्रीवचनावित्यस्यार्थान्तरसङ्क्रान्तौ सत्यां स्त्रीवचनावित्यर्थेनार्थान्तरसङ्क्रातेरङ्गस्यैव सत्त्वेनाङ्गस्य स्त्रीवाचकत्व एवैतत्सूत्रप्रवृत्तिरिति सूचितमिति भावः। अत एव=निषेध विकल्पत्वासंभवादेव। दर्शित इति। ह्रस्वेयुवस्थानप्रवृत्ताविति वार्तिकव्याख्यानभाष्य इत्यर्थः। एवं चेति। उक्तभाष्यप्रामाण्याद्वाक्यद्वयेऽप्याख्याग्रहणरहितस्त्रियामित्येतन्मात्रस्य संबन्ध इत्यर्थलाभे चेत्यर्थः। नन्वेवमुपक्रमे दीर्घांशे निषेधविकल्पपरतया भाष्यकृत्कृतं व्याख्यानमसङ्गतं स्यादत आह। उपक्रम इति। पक्षोपपादन इति। तत्र हि भाष्ये 'किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद्ध्रस्वयोरित्याशङ्क्य दीर्घयोर्ग्रहणे निर्देशानुपपत्तिमुत्तरसूत्रे ह्रस्वग्रहणसत्त्वेनानन्वर्थं चोक्त्वा ततो ह्रस्वयोर्ग्रहणमिति पक्षे सवर्णग्रहणेन दीर्घयोर्नदीसंज्ञासिद्धावपि शकटिबन्धुरित्यत्र नदीबन्धुनीति स्वरः, बहुश्र-

यत्तु 'दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषणं, पुनरङ्गेन तदन्तविधिः, अङ्गस्य च केवलस्त्रीत्वं विशेषणम्। एवं ह्रस्वघटितवाक्येऽपि स्त्रियामित्येतन्मात्रमुभयोर्विशेषणं' इति। तत्तु चिन्त्यम्। भाष्यात्तदलाभात्। .... .... ....

कटिरित्यत्र नद्यृतश्चेति कप् च स्यादित्यापाद्य तदुत्तरं ङिति ह्रस्वश्चे-त्यस्य ङित्येव यू ह्रस्वौ नदीसंज्ञौ भवतो नान्यत्रेत्येवंरूपेण नियमार्थ-त्वमाश्रित्य स दोषः परिहृतः। तदुत्तरं पूर्वेण नित्यं प्राप्तायाः संज्ञाया विकल्पेन विधानार्थमस्यावश्यकतया कथमस्य नियामकत्वमित्याशङ्क्य ततो यूस्त्र्याख्यौ नदी, नेयङुवङ्स्थानावस्त्री, वामि, ङिति, ह्रस्वश्चेत्येवं योगविभागं कृत्वा तत्र ङितीति सूत्रं ङिति चेयङुवङ्स्थानौ यू वा अस्त्री नदीसंज्ञौ न भवत इत्येवं निषेधविकल्पपरतया व्याख्याय ह्रस्वश्चेतिसूत्रस्येयङुवङ्स्थानौ, वा, नेत्ये-तेषां निवृत्त्या नित्यनदीसंज्ञाविधायकत्वमुपपाद्य नियामकत्वसमर्थनेन ह्रस्व-योर्ग्रहणमिति पक्ष उपपादितः। एवं चायं पक्षोऽस्य वाक्यस्य नियामकत्वं विना नोपपद्यत इति स्पष्टमेव। अस्य वाक्यस्य नियामकता च यूस्त्र्याख्या-वित्यत्र स्त्र्याख्यावित्यस्य नित्यस्त्रीत्वार्थकत्वाङ्गान एव घटते, नान्यथा। अन्यथा इष्वशनिप्रभृतीनामुभयलिङ्गानां पट्वादीनां च गुणवचनत्वात्सर्वलिङ्गानां नित्यस्त्रीत्वाभावात्तेषां स्त्रियां वृत्तौ पूर्वेणाप्राप्तनदीसंज्ञाविधानायास्यावश्यक-तया नियामकत्वायोगात्। एवं चेदानीमङ्गस्य स्त्रियां वृत्तौ पूर्वेण नदीसंज्ञायाः प्राप्ततया ङितीति वाक्यस्य निषेधविकल्पपरत्वेनैव व्याख्येयत्वादेकदेशिमतानु-सारितद्व्याख्यानविरोधोऽकिंचित्कर इति बोध्यम्। भाष्यात्तदलाभादिति। तत्र हि 'प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवे'त्यविशेषेणाख्याग्रहणरहित-स्यैवोभयत्र संबन्धबोधनेन ततस्तादृशविशेषस्यालाभ इति भावः। ननु प्रकृत-सूत्र इव नेयङित्यत्रापि स्त्र्याख्यावित्यस्येयङाद्याक्षिप्ताङ्गविशेषणत्वेऽतिश्रिये ब्राह्मणायेत्यत्राङ्गस्य स्त्रियामवर्तनान्नेयङिति निषेधाप्रवृत्तावनयवस्य प्रथमलिङ्ग-

'नेयङुवङ्' इत्यत्र तु नेयङाद्याक्षिप्ताङ्गविशेषणं स्त्रीत्वम्। तदाक्षिप्तस्येयङादिविशेषणताया एवौचित्यात्। 'यस्याङ्गस्येयुवौ' इति भाष्योक्तेः। स्त्र्याख्यावित्यस्य नित्यस्त्रीलिङ्गावित्यर्थकस्य यू इत्यनेनैव क्लृप्तसम्बन्धत्वाच्च। अत एवातिश्रिये ब्राह्मणायेत्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्यं न ॥

ननु यथा खरकुट्यै ब्राह्मणायेत्यादौ लुबन्तस्य त्रिलिङ्गत्वेऽपि प्रथमलिङ्गग्रहणान्नित्यनदीत्वं भवतीति भाष्ये उक्तम्। चञ्चा ब्राह्मणान् पश्येत्यादौ युक्तवद्भावेन स्वलिङ्गप्रयुक्तकार्याभावस्याप्यतिदेशान्न नत्वम्। स्पष्टं चेदं 'तस्माच्छस' इति सूत्रे भाष्य-

---

ग्रहणं चेति नित्यनदीत्वापत्तिरत आह। नेयङुवङिति। न्यायसिद्धेऽर्थे मानमप्याह। यस्याङ्गस्येति। एवं चाक्षिप्ताङ्गस्येयङादिविशेषणत्वे न ह्युपाधेरुपाधिर्भवतीति न्यायेन स्त्रियामित्यस्य तद्विशेषणत्वमयुक्तमिति भावः। एकत्र विशेषणतापन्नस्य पदार्थान्तरनिरूपितविशेष्यतयाऽन्वयस्य प्रायो दृष्टतया प्रकृतेऽङ्गस्य स्त्रीत्वविशेष्यत्वे न बाधकमिति यद्यभ्युपेयते, तदाप्याह। क्लृप्तसंबन्धत्वाच्चेति। पूर्वसूत्र इति शेषः। नेयङितिसूत्रे स्त्रियामित्यस्याङ्गविशेषणत्वाभावे फलं दर्शयति। अत एवेति। स्त्रीवाचकावित्येतन्मात्रार्थकस्त्र्याख्यावित्यस्यात्र सूत्रे वाक्यद्वयेऽपि संबन्ध इति भाष्यसंमतस्वसिद्धान्ते दोषमाशङ्कते। नन्वित्यादिना। यथेति। अस्य दूरस्थितेनैवमित्यनेनान्वयः। अस्य च चञ्चा ब्राह्मणान्पश्येत्युत्तरवाक्येऽपि संबन्धः। युक्तवद्भावेनाङ्गस्य स्त्रियां वृत्तावयं दृष्टान्तः, आद्यस्तु लुबन्तस्य त्रिलिङ्गत्वे। यथा लुबन्तस्य त्रिलिङ्गत्वेन नित्यस्त्रीत्वाभावात्सूत्रेण नदीत्वस्याप्राप्तौ वार्तिकेन सा साधिता, एवं श्रिये ब्राह्मणायेत्यत्रापि लुबन्तस्य त्रिलिङ्गत्वेऽपि युक्तवद्भावेनाङ्गस्य स्त्रियां वृत्तेर्विकल्पापत्तिरिति भावः। लुबन्तस्य लिङ्गत्रयसत्त्व एवायं दृष्टान्तो, न तु विधेयविषयेऽपि। ननु लुबन्तस्य त्रिलिङ्गत्वे चञ्चा ब्राह्मणान्पश्येत्यादौ पुंस्त्वप्रयुक्तनत्वापत्तिरत आह। चञ्चा ब्राह्मणानिति। उभयातिदेशे गौरवाद्-

कैयटयोः । यद्वा ऽतिदेशेन प्रकृतिलिङ्गप्रयुक्तकार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिः । स्पष्टश्चेदं 'स्त्रियाम्' इति सूत्रे भाष्ये । युक्तवद्भावादिप्रत्याख्यानेऽपि यथा दारादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं, तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति न नत्वम् । पुंस्त्वे वाच्ये नत्वमित्यर्थात् । न चैवं खरकुट्यै इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम् । स्त्र्याख्यावित्यस्य स्त्रीत्वविशिष्टमेव य आहेत्यर्थात् । न चायं तथा । स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात् । यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति, तथापि व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोद्ध्यत्वदशायां तत्सत्त्वे मानाभावात्

---

स्यार्थस्यातिदेशस्वभावसिद्धत्वेनातिदेशानपेक्षणाच्चाह । यद्वेति । कार्याप्रवृत्तिरिति । अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वादिति भावः । नन्वाचार्येण युक्तवद्भावस्य प्रत्याख्याततत्वेनोक्तप्रकारद्वयस्यासंभवात्कथमत्र नत्ववारणमत आह । युक्तवद्भावादीति । आदिना लुप्सङ्ग्रहः । प्रत्याख्यानेऽपीति । लिङ्गविषये लोकव्यवहाराणामेव प्रमाणत्वेन विनापि शास्त्रव्यापारं यथा दारादिशब्दैश्शास्त्रीयपुंस्त्वविशिष्टस्यैव स्त्रीरूपार्थस्य भानं, तथा लुबन्तैरपि शास्त्रीयप्रकृत्यर्थगतलिङ्गसंख्याविशिष्टस्यैव स्वार्थस्य लोकतो भानसंभवात्तदंशे शास्त्रव्यापारो नावश्यक इति तदाशयः । पुंस्त्वे वाच्य इति । सूत्रे पुंसीति धर्मपरो निर्देश इति भावः । एवमिति । युक्तवद्भावेन प्रकृतिलिङ्गातिदेश इत्यर्थः । सूत्रेणैवेति । एवं चास्य वार्तिकफलत्वेन कथनं भाष्यकृतामसंगतं स्यादिति भावः । स्त्रीत्वविशिष्टमेवेति । स्त्रीत्वेन रूपेण वस्तुतस्त्रीत्वविशिष्टमेवेत्यर्थः । एवेन वस्तुतो लिङ्गान्तरविशिष्टस्य व्यवच्छेदः । ननु शास्त्रीयलिङ्गत्रयस्य केवलान्वयित्वेन स्त्रीत्वविशिष्टमेवेति नियमासंभवोऽत आह । यद्यपीति । तत्तल्लिङ्गोपजननेऽपीति । तत्तल्लिङ्ग-

**प्रकृते तु ब्राह्मणायेत्यादिविशेष्यदर्शनेन तत्सत्त्वानुमानात्। स्पष्टं चेदं भाष्यकैयटयोः। एवं श्रीशब्दात्कनि लुपि श्रिये ब्राह्मणायेत्यादौ विकल्पापत्तिः। युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तनात्, अत्र सूत्रे नित्यस्त्रीत्वानिवेशाच्च; इति चेन्न। सत्यभिधाने इष्टापत्तेः भाष्ये दृश्यमानं 'श्रिये ब्राह्मणाय' इत्यादि तु क्यजन्तात्क्विपि बोद्ध्यम्। विपरीतं नित्यस्त्रीत्वनिवेशवादिनो लुबन्ते श्रियै ब्राह्मणायेत्यादौ तदनापत्तिर्दोष इत्याहुः॥**

**यू किम्। मात्रे। यद्यपि यू इति दीर्घपरं, तथापि विभक्तिविपरिणामेन य्वोर्ह्रस्वावित्यन्वयो बोद्ध्यः। एतत्सर्वं वामीत्यत्रापि**

---

ग्रामावपीत्यर्थः। **तत्सत्त्वे**=लिङ्गान्तरसत्त्वे। नन्वेवं प्रकृतेऽपि तदभाव एवेति तथा अर्थेऽपि सूत्रेणैव सिद्ध्या भाष्यासांगत्यं तदवस्थमेवेत्यत आह। **प्रकृते त्विति**। खरकुट्यै ब्राह्मणायेत्यत्रेत्यर्थः। एवं तत्तद्भाष्योक्तमनूद्य तद्दृष्टान्तेन स्वसिद्धान्ते अतिप्रसङ्गमाशङ्कते। **एवमिति**। **सत्यभिधाने इष्टापत्तेरिति**। न चायं ग्रन्थः 'तत्फलं तु श्रिये ब्राह्मणायेत्यत्र लुपि ङितिह्रस्वश्चेति विकल्पाभाव इत्युद्योतेन विरुद्ध इति वाच्यम्। तद्ग्रन्थस्य दीर्घांशे निषेधविकल्पपरत्वेन व्याख्यानपरतत्सूत्रस्थैकदेशिभाष्यानुरोधाद्दीर्घवाक्ये नित्यस्त्रीलिङ्गाविित्यर्थकस्त्र्याख्यावित्यस्य संबन्ध इति केषांचिन्मतानुसारेण प्रवृत्ततया तद्विरोधस्याकिंचित्करत्वात्। नन्वेवं ह्रस्वेयुवस्थानप्रवृत्तौ च स्त्रीविचन इति वार्तिकव्याख्यावसरे श्रिये ब्राह्मणायेत्यत्र ङितिह्रस्वश्चेत्यस्याप्रवृत्तिप्रतिपादनपरप्रागुक्तभाष्यविरोधोऽत आह। **भाष्ये दृश्यमानमिति**। **क्यजन्तात् क्विपीति**। शकटये इत्युदाहरणं तु लुबन्तं बोध्यमित्युद्योतेनापि भाष्ये दृश्यमानस्यास्य लुबन्तत्वाभावस्सूचित इति बोध्यम्। कैयटादिमतेऽयमपि दोष इत्याह। **विपरीतमिति**। **तदनापत्तिरिति**। विकल्पानापत्तिरित्यर्थः। **य्वोर्ह्रस्वाविति**। वाचकत्वं षष्ठ्यर्थः। **एतत्सर्वमिति**। ङिति ह्रस्वश्चेत्यत्रोक्तं सर्वमित्यर्थः।

**बोद्धयम् । 'इदुद्भ्यामौदच्चघेः' इति सूत्रं योगविभागेन व्याचष्टे, इदुद्भ्यामिति । अनदीसंज्ञकेषु 'अच्च घेः' 'औत्' इत्याभ्यां बाधात्, 'ङेराम्' इति सूत्रान्नदीग्रहणानुवृत्तेश्चाह—नदीसञ्ज्ञकाभ्यामिति । मत्यामिति । सन्निपातपरिभाषाया अनित्यत्वाश्रयण् ॥**

**त्रिचतुरोः । 'अष्टन आ' इत्यतो विभक्ताविति वर्त्तते । तत्फलं त्रिभार्यः । तृतीयान्तेन समासः । भार्या भरणीयः । अचि र ।**

---

**योगविभागेनेति** । तत्फलं तु मत्यामित्यादिसिद्धिः । अन्यथा नदीत्वपक्षेऽपि गौर्यामित्यादौ कृतार्थस्यामस्सख्यौ पत्यावित्यादौ कृतार्थेनौत्त्वेन परत्वाद्बाधे तदसिद्धिरिति भावः । **बाधादिति** । ननु घिसंज्ञकेष्वच्च घेरित्यनेन बाधेऽपि तद्भिन्नेष्वनदीसंज्ञकेषु मत्यामित्यादौ च इदुद्भ्यामौदित्यनयोर्योग-विभागसामर्थ्येन पर्यायतापत्तिरत आह । **नदीग्रहणानुवृत्तेश्चेति** । नन्विकार-सन्निपातेन जातस्यामस्तद्विघातकयणादेशप्रवृत्तिं प्रति निमित्तता न स्यात्सन्नि-पातपरिभाषाविरोधादत आह । **अनित्यत्वादिति** । सोऽचि लोपे चेदित्यादि-निर्देशेन संधिकार्येऽनित्यत्वात्सन्निपातपरिभाषा न प्रवर्तत इति भावः ॥

**त्रिभार्य इति** । विभक्तावित्यस्याननुवृत्तावत्र तिस्रादेशे तच्छ्रवणा-पत्तिरिति भावः । नन्वत्र सत्यपि तिस्रादेशे पुंवद्भावेन तन्निवृत्तौ तत्सिद्धिरत आह । **तृतीयान्तेनेति** । ननु भार्याशब्दस्य संज्ञाशब्दत्वेन क्रियायोगाभावा-त्कथं कर्तृकरण इत्यस्य प्राप्तिरत आह । **भार्या भरणीय इति** । ऋहलोर्ण्य-दिति ण्यत् । न च भृञोऽसंज्ञायामिति क्यपा भाव्यत्वेनेदमयुक्तमिति वाच्यम् । तदनुबन्धकपरिभाषया भौवादिकस्यैव तत्र सूत्रे ग्रहणेन ञ्यनुबन्धकाज्जौहोत्या-दिकाण्ण्यति तत्सिद्धेः ॥

ननु तिसृचतस्रित्यस्यानुवृत्त्या तस्य षष्ठ्यन्तत्वकल्पनयाऽलोऽन्त्यपरि-

अलोऽन्त्यपरिभाषयैव सिद्धे ऋत इत्यनुवर्त्तमानातिसृचतसृ इत्यस्य षष्ठ्यन्तत्वकल्पनाय। अन्यथा त्रिचतुरोरित्यस्यैवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक्। नुमचिरेति। अत्राचिरांशे 'न तिसृ' इति निषेधो मूलम्। एतेन स्त्रीत्वरूपार्थविशेषविभक्तिसञ्ज्ञानिमित्ततिस्राद्यपेक्षया नुडन्तरङ्ग इत्यपास्तम्। अतो निषेधादेवार्थसञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणम्। अन्यथाऽऽमितिप्रत्ययविशेषापेक्षत्वेऽपि संज्ञाऽर्थविशेषानपेक्षत्वेनान्तरङ्गत्वा-

---

भाषयैव ऋकारस्यादेशे सिद्धे सूत्रे ऋत इति व्यर्थमत आह। अलोन्त्यपरिभाषयैवेति। षष्ठ्यन्तत्वकल्पनायेति। उद्देश्यसमर्पकतया तस्यैवात्र संबन्ध इत्यर्थलाभायेत्यर्थः। अन्यथा=ऋत इत्यस्याभावे। इत्यस्यैवेति। तयोः पूर्वसूत्रे उद्देश्यतायाः क्लृप्तत्वादिति भावः। बाधापत्तिरिति। अजादौ विभक्तावित्यादिः। तिस्रादेशविधानन्तु हलि चरितार्थम्। सूत्रे ऋत इत्युक्तौ त्वसंभवान्न तयोरनुवृत्तिरित्याशयः। ननु रादेशस्य बाध्यसामान्यचिन्तया गुणाद्यपवादत्ववन्नुडपवादत्वमपि स्यात्तत्कथं विप्रतिषेधः। उत्सर्गापवादयोस्तदयोगादित्यत आह। अत्रेति। वार्तिक इत्यर्थः। मूलमिति। यदि रादेशो नुटोऽपि बाधकः स्यात्तदा तत्र कृते नुटोऽप्राप्त्या दीर्घस्य प्राप्तेरेवाभावेन न तिसृति व्यर्थमतस्तेन रादेशस्य नुडपवादत्वाभावो ज्ञाप्यत इति न विप्रतिषेधासङ्गतिरिति भावः। एतेनेति। रादेशनुटोर्विप्रतिषेधप्रतिपादनेनेत्यर्थः। अपास्तमिति। अन्यथा त्रि+आमित्यवस्थायां तिस्राद्यपेक्षयाऽन्तरङ्गत्वान्नुटि रादेशनुटोर्यौगपद्याभावेन विप्रतिषेधकथनासङ्गतिरिति भावः। तिस्राद्यपेक्षया नुटोऽन्तरङ्गत्वाभावे साधकान्तरमप्याह। अतो निषेधादेवेति। न तिसृचतसृेति निषेधादेवेत्यर्थः। अर्थसंज्ञाकृतेति। अर्थसंज्ञाशब्दयोर्द्वन्द्वं कृत्वा तस्य कृतशब्देन समासेऽर्थकृतस्य संज्ञाकृतस्य च बहिरङ्गत्वस्यानाश्रयणमित्यर्थः फलति। अन्य-

त्रयादेशे तदसङ्गतिः स्पष्टैव । वस्तुतः स्वरूपेणोपादाने न बहिरङ्गत्वं, किं तु केन चिद्विशेषधर्मेणोपादान एवेति, विशेषापेक्षस्य बहिरङ्ग-

---

था=तादृशबहिरङ्गत्वाश्रयणे । त्रयादेश इति । इदमुपलक्षणम् । नुड्दीर्घयोरपि । तदसङ्गतिरिति । अन्तरङ्गत्वात्त्रयादेशे नुटि दीर्घे च कृते ततः स्थानिवत्त्वेन त्रिशब्दत्वात्तिस्रादेशेऽपि लक्ष्ये लक्षणस्येति न्यायेन पुनर्दीर्घाप्राप्त्या निषेधासङ्गतिरिति भावः । ननु तिस्रादेशस्य संज्ञासापेक्षत्वाद्बहिरङ्गत्वेऽपि त्रयादेशादेरप्यामि प्रत्ययविशेषापेक्षत्वेन बहिरङ्गत्वादुभयोस्समत्वेन परत्वात्तिस्रादेशे न तिस्रिति निषेधस्य सफलत्वान्नेदमर्थसंज्ञाकृतबहिरङ्गत्वानाश्रयणे मानम् । एवं रादेशनुटोर्विप्रतिषेधकथनमपि न तत्र मानम् । तयोर्विप्रतिषेधकथनस्यायुक्ततायाः तृज्वत्सूत्रे भाष्यकृता प्रतिपादितत्वादत आह । वस्तुत इति । स्वरूपेणेति । यथा त्रेस्त्रय इत्यत्राम आम्त्वादिरूपेणेत्यर्थः । केन चिद्विशेषरूपेणेति । यथा रुदादिभ्यस्सार्वधातुक इत्यत्र सार्वधातुकत्वेन रूपेणेत्यर्थः । तत्र हि सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं, प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति सामान्यधर्मस्याप्यधिकस्य निमित्तत्वेनाश्रयणादिडपेक्षया यासुडन्तरङ्गः, त्रेस्त्रय इत्यत्र तु तथा सामान्यधर्मस्य निमित्तत्वेनानाश्रयणान्न तस्य तादृशं बहिरङ्गत्वमिति भावः । स्वसिद्धान्तरीत्याह । विशेषापेक्षस्येति । बहिरङ्गत्वमेव नेति । बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोश्शब्दमर्यादयाऽलाभेन तादृशान्तरङ्गबहिरङ्गभावस्यानाश्रयणात् । तदङ्गीकारेऽपि रुदादिभ्य इत्यादौ व्याप्येन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वाभावादीदृशान्तरङ्गबहिरङ्गभावस्य भाष्ये क्वाप्यनुल्लेखाच्च न तस्य बहिरङ्गत्व, मेवं च न तिस्रिति निषेधस्य निरुक्तार्थे ज्ञापकत्वं सुस्थमेवेति भावः । एवमाचिरादेशात्पूर्वविप्रतिषेधेन नुडिति वार्तिका-

त्वमेव नेति च रुदधातौ निरूपयिष्यामः। तृज्वत्सूत्रे भाष्ये तु 'न तिसृचतसृ इति ज्ञापकाद् रादेशो नुड्विषये न। पूर्वविप्रतिषेधेन तु न सिद्ध्यति, अपवादविषये विप्रतिषेधाप्रवृत्तेः। रादेशस्य सर्वापवादत्वात्' इत्युक्तम्। त्रिचतुरोर्विशेषणादिति। स्त्रीनिष्ठसंख्यायां वर्त्तमानयोरित्यर्थ इति भावः। नेहेति। त्रिशब्दस्य पुंनपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति भावः। आमि त्विति। तत्राऽम् षष्ठीबहुवचनमेवार्थाधिकारादतो न ङेरामि त्रयादेश इति बोद्ध्यम्। प्रियतिसेति। अङ्गविशेषणत्वेऽत्राऽव्याप्तिः स्यादिति भावः। प्रिया जस् त्रि जसिति स्थिते 'अन्तरङ्गानपि' इतिन्यायेन विभक्तिलुकि पुनः सुपि तदन्त-

शयमुपवर्ण्य तद्विषये भाष्यकृदुक्तं दर्शयति। तृज्वत्सूत्र इति। इत्युक्तमिति। यद्यप्युक्तरीत्या न तिसृचतसृ इति ज्ञापकेन रादेशस्य नुडपवादत्वाभावकल्पनया विप्रतिषेध उपपद्यते, तथापि पूर्वविप्रतिषेधकथनेऽपि तदुपपत्तये ज्ञापकानुसरणस्यावश्यकत्वे तेनैव नुड्विषये रादेशाप्रवृत्तिज्ञापने पूर्वविप्रतिषेधाकल्पनाप्रयुक्तं लाघवमस्तीति तदाशयः। ननु श्रुतत्वात्स्त्रियामित्यस्य त्रिचतुरोर्विशेषणत्वेऽपि प्रियास्त्रयस्त्रीणि वा यस्यास्सा प्रियत्रिरित्यत्र तिस्रादेशो दुर्वारः। अजहत्स्वार्थायां वृत्तावन्यपदार्थस्य त्रिशब्देनाप्युक्ततया तस्य स्त्रियां वर्तमानत्वादत आह। स्त्रीनिष्ठसंख्यायामिति। प्रियत्रिरित्यत्र त्रिशब्दस्यान्यपदार्थस्त्रीनिष्ठसंख्यावाचकत्वाभावान्न तिस्रादेशापत्तिरिति भावः। सप्तम्येकवचने त्रयादेशप्रसक्तिं वारयति। तत्रेति। त्रेस्त्रय इति सूत्र इत्यर्थः। अर्थाधिकारादिति। आमि सर्वनाम्न इत्यत्र षष्ठीबहुवचनस्यैव ग्रहणस्य सिद्धान्ततयाऽत्रापि तदनुरोधात्तस्यैव ग्रहणमुचितमित्याशयः। ननु प्रियतिसेत्यसङ्गतं, त्रिशब्दस्य स्त्रियां वृत्तेरलौकिकप्रक्रियावाक्य एव पदद्वयापेक्षत्वेन बहिरङ्गं समासं बाधित्वाऽन्तरङ्गत्वात्तिस्रादेशे नपुंसकेति कबापत्तेरत आह। अन्तरङ्गानपीति। ऋकारान्तोत्तरपदस्या-

विधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः । ततो 'नद्यृतश्च' इति कप्तु न । समासार्थालौकिकवाक्ये ऋकारान्तोत्तरपदत्वाभावात् । 'ऋदुशन' इत्यनङ् । प्रियतिसृणी इत्यादि । अत्र नुमः परत्वात्तिस्रादेशे पुनः प्रसङ्गविज्ञानेन नुम् । 'न तिसृ' इति ज्ञापकेन सामान्यत आगमविषये रादेशो नेति ज्ञाप्यते । 'प्रत्ययोत्तर' इति सूत्रे चेमौ भाष्ये प्रयोगौ ॥

द्विरत्वे इति । बहिरङ्गासिद्धत्वन्तु 'न यासयोः' इति निर्देशेनानित्यत्वान्न प्रवर्त्तते । विभक्ताविति । 'युवोरनाकौ' इत्यत्र भाष्ये पाठात्, ङ्याप्सूत्रे तत्परिभाषादोषेषु पाठाच्च । 'सख्यशिश्वी' इति ङीप् । 'यस्येति च' इतीकारलोपः । लक्ष्मीरिति ।

---

भावादिति । ऋदन्तप्रकृतिकसुबन्तोत्तरपदत्वाभावादित्यर्थः । विभक्तिनिरपेक्षत्वेनान्तरङ्गे कपि कर्तव्ये बहिरङ्गस्य तिस्रादेरसिद्धत्वेनान्तरङ्गबहिरङ्गभावानाक्रान्तविषय एव कपः प्रवृत्त्या तदनाक्रान्तविषयश्चालौकिकवाक्ये ऋकारान्तोत्तरपदत्व एव संभवतीत्याशयः । नदीसाहचर्येण ऋदन्तप्रकृतिकसुबन्तोत्तरपदकसमास एव कपः प्रवृत्तिरिति तु न युक्तम् । ऋकारसाहचर्येण नदीविषय ईदृशार्थस्य ग्रन्थकृता वक्ष्यमाणत्वात् । ननु पुनः प्रसङ्गविज्ञानेन नुमित्यसङ्गतम् । बाध्यसामान्यचिन्तया रादेशस्य सर्वापवादत्वादत आह । न तिसृतिज्ञापकेनेति । सामान्यतो ज्ञापने मानं दर्शयति । प्रत्ययोत्तरेति । इमौ = प्रियतिसृणी, प्रियतिसृणीत्येतौ । नन्वपरनिमित्तकत्वेनान्तरङ्गे टापि कर्तव्ये बहिरङ्गस्य त्यदाद्यत्वस्यासिद्धत्वेनादन्तत्वाभावात्कथमत्वोत्तरमापः प्रवृत्तिरत आह । बहिरङ्गासिद्धत्वमिति । भाष्ये पाठादिति । एतेनास्य समूलत्वमुक्तम् । वस्तुतो घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनात्तन्मूलिकैवैषा नापूर्वेत्याशयेनाह । ङ्याप्सूत्र इति ।

,'कृदिकारात्' इति ङीषि लक्ष्मीत्यपि। स्त्यायतोऽस्यां शुक्रशोणिते इति स्त्री। स्त्यायतेर्ड्रट्, टिलोपयलोपौ, टित्त्वात् ङीप्। इयङिति। स्त्रीशब्दस्येकारान्तत्वादियङेवानुवर्तत इति भावः। गुणेनेति। 'जसि च' 'आङो ना' 'अच्च घेः' 'ह्रस्वनद्यापः' इत्येतैरित्यर्थः। बाध्यत इति। स्त्रीशब्दस्येयङ् इत्यनेनान्वयः। नुम् 'इकोचि' इति। पूर्वकारिकोक्तैर्बाधे सति यत्फलितं तदाह—ओस्याविति। अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य स्त्रियाः स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणादिभिर्बाधादिति भावः। पुंवद्भावादिति। 'तृतीयादिषु भाषितपुंस्कम्' इत्यनेनेति भावः। ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य संबन्धेन स्त्रीशब्दावयवभिन्नह्रस्वेवर्णान्तादित्यर्थेन कथमत्र प्राप्तिरत आह—अस्त्रीति। तत्र बीजमाह—तत्संबद्धस्यैवेति। प्रसज्यप्रतिषेधस्तु न, वाक्यभेदाद्यापत्तेः। नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह—दीर्घस्यायमिति। तत्र ह्रस्वपदाभावादिति भावः। श्रयन्त्येनामिति श्रीः। 'क्विब्वचि' इत्यादिना वागित्यत्रेव कर्मणि क्विब्दीर्घौ। अङ्यन्तत्वान्न सुलोपः॥

नेयङु। ङ्द्वयोच्चारणं स्पष्टार्थम्। स्थानशब्दो भावल्युडन्तः। इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः। सा च बाधकाविषये

---

इयङेवेति। उवङ् तु संबन्धानर्हत्वान्नानुवर्तत इति भावः। उपसर्जने पुंसीति। पुंस्त्वविशिष्टेऽर्थे उपसर्जनं योऽर्थस्तत्र वर्तमानस्येत्यर्थः। स्त्रीशब्दावयवभिन्नेति। अत्वसन्तस्येत्यादाविव स्त्रीशब्दस्य तदवयवे लक्षणयेत्यर्थः। ह्रस्वेवर्णान्तमिति पाठः। पञ्चम्यन्तपाठस्तु लेखकप्रमादात्। ननु प्रसज्यप्रतिषेधेन व्याख्याने तत्सम्बद्धत्वमेव नेति ह्रस्ववाक्यप्राप्तस्यापि निषेधः स्यादेवेत्यत आह। प्रसज्यप्रतिषेधस्त्विति। तत्रेति। नेयङुवङित्यत्रेत्यर्थः। बहुव्रीहिरिति। व्यधि-

एव । तेन प्रकृष्टा धीः प्रधीः, प्रध्द्यै इत्यादौ न निषेधः । सा चोपलक्षणं व्याख्यानात् । तेन हे श्रीरित्यादौ निषेधसिद्धिः । श्रियावित्यादौ तत्स्थितिसत्त्वात् । यत्र नदीकार्याश्रयेऽङ्गे बाधकाबाधितेयङादिस्थितिः क्वचित् दृष्टा तस्य तदवयवस्य च निषेध इति फलितम् । अत एव प्रकृष्टा धीर्यस्या, यस्य वा प्रधीरित्यत्रावयवधीशब्दस्य नदीत्वं भवत्येव । तदुक्तं भाष्ये अवयवस्त्रीविषयत्वात्सिद्धामिति चोदियङुवङ्स्थानप्रतिषेधे यणस्थानयोरपि य्वोः प्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात् । आध्द्यै प्रध्द्यै । सिद्धं त्वङ्गरूपग्रहणात् ।

---

करणबहुव्रीहेरपि सप्तमीविशेषण इति ज्ञापकात्साधुत्वादिति भावः । एतेन मूलोक्तार्थस्य वाच्यार्थपरतयैवोपपत्तावधिकरणल्युडन्तस्थानशब्देन कर्तृषष्ठ्यास्समासं कृत्वा फलितार्थपरतया वर्णनमनावश्यकमिति सूचितम् । बाधकाविषय एवेति । इयङुवङोरिति षष्ठ्यन्तस्य यू इत्येतद्विशेषणतयोपपत्तौ स्थानपदोपादानसामर्थ्यादियङुवङोर्यत्र स्थितिस्तत्र प्रतिषेधो, यत्र त्वपवादेन बाधस्तत्र नेत्ययमर्थो लभ्यत इति भावः । व्याख्यानादिति । व्याख्यानं चात्र निषेधशास्त्रारम्भरूपमेव । तद्धि हे श्रीरित्यादौ नदीत्वनिषेधायैव । अन्यत्र विकल्पस्यैवेष्टत्वात् । यदीयङुवङ्स्थानत्वाभावात्तत्र निषेधाप्रवृत्तिस्तदा वेयङुवङ्स्थानावस्त्रियावित्येव वदेत्, नजं वामीतिसूत्रं च न ब्रूयादिति भावः । स्थानग्रहणसामर्थ्येन बाधकाबाधितेयङादिस्थितेर्ग्रहणे इयङादिस्थितेरुपलक्षणत्वे च यत्फलितं तदाह । यत्रेत्यादिना । नदीकार्याश्रयेऽङ्ग इति । नदीसंज्ञाप्रयुक्तकार्यप्रवृत्तिप्रयोजकश्रूयमाणविभक्तिनिरूपिताङ्ग इत्यर्थः । अत एव = ईदृशार्थाश्रयणादेव । भवत्येवेति । अन्यथा धीशब्दावयवेकारस्येयङ्स्थानत्वात्तन्न स्यादिति भावः । उक्तमर्थं प्रमाणयति । तदुक्तमिति । अङ्गरूपग्रहणादिति । अचि श्नुधात्वित्यनेनाङ्गस्येयङुवङ्विधानादियङादि-

यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम् । न चैतस्याङ्गस्येयङुवङौ भवतः' इति । श्रियै इति । ङिति ह्रस्वश्चेति विकल्पः ॥

वामि । आमीतिच्छेदः । प्रधीशब्दस्येति । प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः । वृत्तिकारादीनामिति । अयं भावः—भाष्ये आध्यै प्रध्यै इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्गे इत्युक्तरीत्या समाहितम् । तत्र न बहुव्रीहिः, कबापत्तेः । किं तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत् । तत्र कैयटोक्तनित्यस्त्रीत्वाभावेन

---

स्थानित्वस्याङ्ग एव संभवात्ताभ्यामङ्गमाक्षिप्यते । तस्य च शब्देऽन्वय इति तात्पर्यम् ॥

यत्तु भट्टाः सुधीत्यत्र सुस्धीस् इति स्थिते समासान्तस्यालौकिके प्रक्रियावाक्ये प्रवृत्त्या तत्र सुबन्ते नदीकार्याश्रयेऽङ्गे इयङुवङोः स्थितिः क्वापि न दृष्टेति तत्र निषेधाभावे यूस्त्र्याख्यावित्यनेन नदीसंज्ञायां कप् स्यात् । किञ्च नैकत्र गृहे काकदर्शनेऽन्यत्र गृहे काकवन्तो देवदत्तस्य गृहा इति भवतीत्युपलक्षणताप्यशक्येति चिन्त्यमेतदिति वदन्ति तन्न, सौ ङयादिषु च नदीसंज्ञाकार्यप्रवृत्तिप्रयोजकतायास्सत्त्वेन तन्निरूपिते धीशब्दरूपेऽङ्गे ङयादिषु परत इयङादिस्थितेर्दृष्टत्वेन तस्यान्यत्रापि नदीसंज्ञाप्रतिषेधात्कबापत्तेरभावात् । एवं नदीसंज्ञाकार्यप्रवृत्तिप्रयोजकप्रत्ययनिरूपिताङ्गत्वस्य सुप्रत्ययप्रकृतिभूतेयङादिप्रकृतिभूते च धीशब्दे सत्त्वेनोपलक्षणताया अपि युक्तत्वात् ॥

अमीति च्छेदभ्रमवारणायाह । आमीति । प्रकृष्टा धीरिति विग्रहे मतद्वयेऽपि लक्ष्मीवद्रूपस्यानुपदं वक्ष्यमाणत्वादाह । इत्यर्थकस्येति । पदान्तरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमित्यभ्युपगच्छतां वृत्तिकारादीनामाशयं वर्णयति । अयं भाव इति । ईदृशनित्यस्त्रीत्वालाभ इति । स्वरसत

नदीत्वाप्राप्त्या भाष्यासङ्गतिः। अतः 'स्त्रीविषयावेव यौ यू नित्यम्' इत्यत्र भाष्ये एवकारो भिन्नक्रमः। नित्यमेव यौ स्त्रीविषयावित्यर्थः। नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थः। खलपूकटप्रूग्रामणीत्यादीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः। पुंसः खल्वयमुचितो धर्मः, शक्तत्वाद्भयरहितत्वाच्च। अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम्। ध्यानादि तु स्त्रीपुंससाधारणमिति। अत्रारुचिबीजन्तु सूत्रभाष्याद्यक्षरैरीदृशनित्यस्त्रीत्वालाभः। भाष्योदाहरणे बहुव्रीहिरेव। कप्तु न। ऋकारसाहचर्येण यस्य वृत्तेः प्राग्नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः। धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वनिषेधात्। गतिपूर्वकत्वाद्यणपि सुलभः। 'आध्यै इति, चिन्त्यमेतत् क्रियाशब्दत्वेन नित्यस्त्रीत्वाभावात्' इति कैयटस्तु चिन्त्य एवेति दिक्। लक्ष्मीवदिति। स्त्रियामिति शेषः। पुंवद्रूपमिति। उक्तविग्रहे नित्य-

---

इति शेषः। इदमुपलक्षणम्। प्रथमलिङ्गग्रहणं चेत्यस्य लुबन्तखरकुट्यै इति भाष्योक्तफलासङ्गतेरपि। अन्यथा तस्य पदान्तरसमभिव्याहारं विना स्त्रियां वर्तमानत्वेन सूत्रेणैव सिद्धया तदसङ्गतिः। नन्वेवमाध्यै प्रध्यै इत्यादौ नदीत्वनिषेधशङ्कापरं भाष्यमसङ्गतं स्यादत आह। बहुव्रीहिरेवेति। ध्यानं= धीः, आ=ईषत्प्रकृष्टा वा धीर्यस्या इति विग्रह इति भावः। ऋकारसाहचर्येणेति। प्रियतिसेत्यादौ बहिरङ्गस्य तिस्रादेरसिद्धत्वेन कपोऽप्रवृत्त्या ऋकारस्य कविषये तादृशस्यैव संभवात्तत्साहचर्येणेत्यर्थः। गतिपूर्वकत्वादिति। प्रशब्दार्थप्रकर्षस्याङर्थेषत्त्वस्य च धीशब्दोपात्तधात्वर्थेऽन्वयेन प्राङोर्गतित्वमस्तीति भावः। कैयटोक्तमनूद्य खण्डयति। आध्यै इतीति। चिन्त्य एवेति। बहुव्रीहिणा भाष्योदाहरणसामञ्जस्यादिति भावः। नित्यस्त्रीत्वाभावादिति। लिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपनित्यस्त्रीत्वस्याभावादि-

स्त्रीत्वाभावात् पुंसीव स्त्रियामप्यनदीत्वादिति भावः। प्रकृष्टा धीरिति विग्रहे इति। ईदृशपदघटितविग्रहे इत्यर्थः। तेन कर्मधारये बहुव्रीहौ च सर्वलिङ्गेऽपि मतद्वयेऽपि लक्ष्मीवत्। 'प्रथमलिङ्गग्रहणञ्च' इत्यवयवधीशब्दस्य नदीत्वात् 'नेयङ्' इति निषेधस्योक्तरीत्या प्राप्त्यभावादिति भावः। विशेष इति। लक्ष्मीशब्दापेक्षयेत्यर्थः। श्रीवदिति। स्त्रियामिति शेषः। विशिष्टस्यापीयङ्स्थानत्वेन ङिदाम्रोर्विकल्पस्यान्यत्र निषेधस्य च प्राप्तेरिति भावः। पुंसि त्वीदृशबहुव्रीहावपि न नदीत्वम्। नेयङिल्यवयवस्य निषेधात्, समुदा-

---

त्वर्थः। उक्तरीत्येति। यत्र नदीकार्याश्रयेऽङ्गे इत्युक्तरीत्येत्यर्थः। लक्ष्मीशब्दापेक्षयेत्यर्थ इति। धीत्यस्य धातुत्वेन यणादेशस्य न्याय्यत्वादिति भावः। इयङ्स्थानत्वेनेति। न भूसुधियोरिति यणिषेधादिति भावः। नन्विष्वादिषूभयलिङ्गेषु नदीत्वविकल्पस्याप्राप्तिमाशङ्क्य 'ङिति ह्रस्वश्चे'त्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयत इति यू स्त्र्याख्याविति सूत्रस्थकैयटेन ह्रस्वौ चेयङुवङ्स्थानौ चेत्यादिवार्तिकेन तद्भाष्येण च ङिति ह्रस्वश्चेत्यत्र वाक्यद्वयेऽपि स्त्रीवाचकावित्येतन्मात्रार्थकस्त्र्याख्यावित्यस्यैवानुवृत्तिरित्यर्थस्य लाभेन तन्मते सुष्ठु धीरिति विग्रहे, सुष्ठु ध्यायतीति विग्रहे च श्रीवाद्रूपस्यैव सत्त्वेन मतान्तरे पुंवदिति मूलमसङ्गतम्। न चोपक्रमानुरोधेन प्रागुक्तकैयटो ह्रस्वांशमात्रविषयक एव। दीर्घवाक्ये तु नित्यस्त्रीलिङ्गावित्येतदर्थकस्त्र्याख्यावित्यस्यैवानुवृत्तिस्तदभिमता। तच्चाङ्गविशेषणम्। व्याख्यातं च ङिति ह्रस्वश्चेति सूत्रं तद्रीत्यैव मूलकृता। अतो नैतद्ग्रन्थासङ्गतिरिति वाच्यम्। कैयटमते ङिति ह्रस्वश्चेत्यत्र वाक्यद्वयेऽप्याख्याग्रहणरहितस्य स्त्रीग्रहणमात्रस्यैव संबन्धः। एवं चाविशेषेण सुधीशब्दे विकल्पो भवत्येव। सुधीः पुंवदिति प्रक्रिया तु प्रामादिक्येवेति यू स्त्र्याख्याविति सूत्रे कौस्तुभकृता

यस्याप्राप्तेश्च। पुंवदिति। 'सुष्टु ध्यायन्तीति विग्रहे' इति शेषः। तस्य नित्यस्त्रीत्वाभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः। इति विग्रहे त्विति। ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ कर्मधारये चेत्यर्थः। तत्र बहुव्रीहाववयवस्य 'नेयङ्' इति निषेधः, ङिति तु समुदायस्य विकल्प इति बोद्धव्यम् ॥

स्त्रियाश्च। अत्र 'असंबुद्धौ सर्वनामस्थाने' इति न संबद्ध्यते, आरम्भसामर्थ्यात्। ऋन्नेभ्य इति। तदन्तशब्दानां बहुत्वाद् बहुवचनम्। प्रातिपदिकविशेषणत्वात्तदन्तविधिः। स्त्रियामिति चाधिकारः। क्वासि हे सुभ्रु इति। रावणेन सीताऽपहारोत्तरं राम-

---

सिद्धान्तितत्वेन तद्विरोधेनैतद्ग्रन्थयोजनस्यायुक्तत्वात्। ङिति ह्रस्वश्चेति सूत्रस्थकौमुदीग्रन्थस्य प्रक्रियानुसारित्वात्। अतो मतान्तरे पुंवदित्यारभ्य श्रीन्देवेत्यन्तं मूलग्रन्थं पूर्वोक्तयत्तुदीर्घवाक्ये इत्यादिमतरीत्या व्याचष्टे। पुंवदित्यारभ्य विकल्प इति बोध्यमित्यन्तेन। इति शेष इति। तादृशविग्रहेऽवयवस्य नित्यस्त्रीत्वाभावेन विकल्पस्याप्रवृत्तेरिति भावः। यद्यपि प्रक्रियानुसारिङिति ह्रस्वश्चेति सूत्रस्थकौमुदीग्रन्थानुसारेण विनापि शेषपूरणमयं ग्रन्थो योजयितुं शक्यस्तथापि तन्मतस्य सर्वथा कैयटासम्मतत्वेन तद्रीत्यैतद्ग्रन्थयोजनमयुक्तमित्याशयेनैवमुक्तमित्यवधेयम्। यत्त्वित्यादिमतं सर्वथा कैयटासम्मतमित्यत्र तु न दृढं मानमिति बोध्यम्। विकल्प इति। अवयवस्य नित्यस्त्रीत्वादङ्गस्य स्त्रियां वृत्तेश्चेति भावः ॥

आरम्भसामर्थ्यादिति। तयोरत्र संबन्धेऽस्यापि पूर्वविषय एव प्रवृत्त्या तेनैव सिद्धेरिति भावः। तदन्तशब्दानामिति—ऋन्नान्तशब्दानामित्यर्थः। ऋन्नाभ्यामिति द्विवचननिर्देशे गौरवं चेत्यपि बोध्यम्

सीतापहारेति। अत्र त्रिभुवनविधातुरित्यत्रेव शेषषष्ठ्या समासः

**विलापोऽयम्। विधिना त्वया हापितस्त्याजितः सः सुभ्रु 'हे क्वासि' इत्येवं बहु विललापेत्यर्थः। 'नेयङ्' इत्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः। प्रमाद इति। विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः। स च विरहपोषकत्वात्काव्ये गुणः॥**

---

एतेन कृद्योगे षष्ठीसमासस्य निषेधात्सीताया अपहारेति वक्तुं युक्तमिति भट्टोक्तमपास्तम्। **विधिनेति।** विधिना त्वयाऽहं हापितः त्याजितः, किं कुर्वः। हे सुभ्रु? त्वं क्वासीत्येवं स बहु विललापेत्येवं योजना। न तु त्याजितस्स इति। त्वयेत्यस्यानन्वयापत्तेः। भट्टिकाव्ये षष्ठसर्गे एकादशं पद्यमिदम्। 'आः कष्टं बत ही चित्रं हूं मातर्दैवतानि धिक्। हापितः क्वासि हे सुभ्रु बह्वेवं विललाप सः, इति। यद्यपि जयमङ्गलायामिदं पद्यं 'शोकेनाक्रान्तमना विकल्पन्नाह। आ इति। आः पीडायाम्। पितृवियोगात्पीडित आ इत्याह। अस्मद्वियोगमात्रात्पिता प्राणांस्त्यक्तवानित्याह। कष्टं कृच्छ्रमिति। भर्तृमरणादस्मद्वियोगाच्च मातुः कावस्थेत्यभिप्रायेणाह। बतेति। बतेति खेदे। सौमित्रिरपि सीतया शङ्कित इति विस्मितः हीत्याह। ही विस्मये। यदि नाम मूढतया शङ्कितः सीतया, तथापि सौमित्रिणा विदुषा सतापि कथं तादृशश्शापो दत्त इत्यभिप्रायेणाह। चित्रमिति। यदेवंविधमनर्थजातं कैकेयीप्रभवमिति क्रुद्ध्यन्नाह। हूं मातरिति। हूंशब्दः क्रोधे। अथवा सर्वमेवेदं दैवविचेष्टितमित्यभिप्रायेणाह। दैवतानीति। धिक्कुत्सायाम्। प्राणांस्त्यक्तवन्तमपि पितरं न पुनरहं द्रष्टास्मीत्याह। हा पितः क्व द्रष्टव्योऽसीति। हा शोके। हे सुभ्रु? सीते, क्वासीत्येवं स रामो बहु विललापेत्येवं'रीत्या व्याख्यातं, तथापि पितृवियोगदुःखस्यादित एव 'आः कष्टमि'तिपदाभ्यां प्रतिपादितत्वेन पुनर्हापितरित्यनेनापि तस्यैव प्रतिपादने पौनरुक्त्यं स्यात्। किंच स्वानवधानप्रयोजकस्य प्रियाविरहस्य शब्दतः क्वाप्यनुक्तत्वेन हापित इत्यस्य

एकाजुत्तर । एकोऽच् यस्मिन्, तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदे इत्यनेनास्य वाक्यस्य समास-पदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्य इत्याह—तस्मिन्-समासे इति । आरम्भेति । 'प्रातिपदिकान्त' इत्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः । पुनरिति । णग्रहणेऽनुवर्त्तमाने इत्यर्थः । यणमिति । 'हन्कर' इति यणमित्यर्थः । भेकजाताविति । 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः' इत्यमरादस्य बह्वादित्वेन वा

---

त्याजित इत्येवार्थ उचितः । किञ्च दैवतानि धिगित्यनेन कृता विधिनिन्दा-ऽप्यत्रैवार्थेऽत्यन्तं स्वारस्यमधिरोहति । यतः कैकेयीवाक्येन साम्राज्यं पित्रादींश्च त्यक्त्वा वने वसन्नप्यहं विधिना त्वया हापित इत्यर्थाद्यतो विधिना त्वया हापितस्स लक्ष्मणः, अतो धिक्दैवतानीत्येवं रामो बहु विललापेत्यर्थाद्वेत्याशयेनैव-मुक्तमित्यवधेयम् । एतेनास्यार्थस्य प्रकरणाननुगुणत्वं वदन्तो भट्टाः परास्ताः ॥

समास इत्येतल्लाभप्रकारमाह । उत्तरपद इत्यनेनेति । उत्तरपद इत्य-नेन समास इत्यस्याक्षेपे तस्य शाब्दान्वयित्वं न स्यादित्याशयेनाह । वाक्यै-कदेशत्वानुमानादिति । तेनैकाजुत्तरपदे समासे ण इति समासे गृहीता शक्तिस्तदेकदेशस्य समास इत्यस्याप्रयोगेऽवशिष्टे विश्राम्यतीति भावः । स्पष्टा चेयं रीतिर्मञ्जूषायाम् । एतेनैकाजुत्तरपदे समास इत्यर्थे लक्षणेति भाव इति वदन्तः श्रीधराः परास्ताः ॥

ननु वर्षाभूशब्दस्य स्त्रियां गौरादित्वान्ङीषि वर्षाभूरिति प्रयोगोऽनुपपन्न इत्यत आह । वा ङीषिति । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवकोशाच्छिलीगण्डूपदीत्यमरकोशाच्चास्य बह्वादित्वकल्पनमुचितमिति भावः । यादवकोशस्य प्रकारान्तरेणोपपत्तेर्वक्ष्यमाणत्वात्तदनुरोधेनास्य बह्वादित्वकल्पन-

ङीषिति भावः । अन्ये त्वस्य गौरादिपाठान्नित्यमेव ङीष् । 'भेक्यां पुनर्नवायां स्त्री' इति यादवस्य—'सुतः पुत्रः स्त्रियामन्त्वमी आहुर्दुहितरम्' इतिवत् नित्यङ्यन्तत्वेऽप्युपपत्तेरित्याहुः । गौरादिकल्पने मानाभावादमरे 'वर्षाभूः कमठी डुलिः' इत्येव पाठ इति सुबोधिनीकार इति माधवः। तदनुसारेण मूलं बोद्ध्यम् । टाब्ङीपौ न स्त इति । 'स्त्रियां यत्प्राप्नोति तन्न' इति व्याख्यानादिति भावः । स्वस्रादिषु मातृशब्दस्य ननान्द्रादिसाहचर्यात्प्रसिद्धत्वाच्च ससम्बन्धिकजननीवाचकस्यैव ग्रहणम् । सन्निपातपरिभाषयैव तिसृचतस्रोर्ङीबभावे सिद्धे तदनित्यत्वज्ञापनार्थं

---

मयुक्तमित्याशयेनाह । अन्ये त्विति । गौरादिपाठादिति । गौरादेराकृतिगणत्वेनामरसम्मत्या तत्रास्य पाठो युक्त इति भावः । यादवकोशस्योपपत्तिमाह । इतिवदिति । तत्रेवात्रापि स्त्रीत्वस्य प्रकृतिमात्रप्रतिपादने कोशतात्पर्यकल्पनयेति भावः । मूलतात्पर्यं वर्णयति । गौरादित्वेति । माधव इति । अत्रारुचिबीजन्तु प्रसिद्धामरकोशप्रयोगस्यैव तत्कल्पने मानत्वेन मानाभावादमरस्यान्यथापाठकल्पनमनुचितमिति । तदनुसारेण=माधवानुसारेण ॥

नन्वनन्तरस्येतिन्यायेन ङीप एव निषेधस्योचितत्वाट्टाप्ङीपौ न स्त इति वृत्तिरसङ्गतेत्यत आह । स्त्रियां यत्प्राप्नोतीति । यद्यनन्तरस्येति न्यायेन ङीप एव निषेधः स्यात्तदा ऋन्नेभ्यो ङीबषट्स्वस्रादिभ्य इत्येकयोगेनैव तत्सिद्धौ पृथग्योगकरणमनर्थकं स्यात् । अतस्तत्सामर्थ्यादीदृशार्थाश्रयणेन स्त्रियां प्राप्तस्य सर्वस्यापि निषेधः । एवं च प्रियपञ्चानं द्रौपदीमित्यादौ डाबपि नेति बोध्यम् । प्रसिद्धत्वाच्चेति । अवयवप्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसीति न्यायादिति

तयोर्ग्रहणमिति केचित् । स्वस्रादिषु तिसृचतस्रोः पाठोऽनार्ष इति कृन्मेजन्तसूत्रस्थभाष्यस्वरसः ॥

इत्यजन्ताः स्त्रीलिङ्गाः

---

अतोऽम् । अत इत्येतदधिकृतस्याङ्गस्य विशेषणम् । 'स्वमोर्नपुंसकात्' इति चानुवर्तते । अम् लुग्बाधको येन नाप्राप्त इति न्यायात् । 'अम्' इतिच्छेदो न तु 'म्' इति । ज्ञानमित्यादौ

---

भावः । केचिदित्यनेन सूचितामरुचिं प्रकाशयन्नाह । भाष्यस्वरस इति । तत्र हि सन्निपातपरिभाषाफलनिरूपणावसरे तिसृचतसृत्वं ङीब्विधेरनिमित्तम् । क्व? तिस्रस्तिष्ठन्ति, चतस्रस्तिष्ठन्तीति तिसृचतसृभावे कृते ऋन्नेभ्य इति ङीप् प्राप्नोति । सान्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवतीत्युक्त्वा 'एतदपि नास्ति प्रयोजनम्, आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे कृते ङीप् भवतीति । यदयं न तिसृचतसृेति नामीति दीर्घत्वस्य प्रतिषेधं शास्तीत्युक्तम् । यद्यनयोः स्वस्रादिषु पाठः स्यात्तदा तेनैव ङीबभावे सिद्धे तदर्थं ज्ञापकानुसरणं व्यर्थं स्यात् । एवं चैतद्भाष्यप्रामाण्यात्तयोः स्वस्रादिपाठोऽप्रामाणिक इति भावः । स्पष्टं चेदमुद्योते ॥

॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

---

येन नाप्राप्तिन्यायादिति । तदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टा, कृते चारितार्थ्याभावविशिष्टा याऽपवादप्रवृत्त्युत्तरमुत्सर्गप्रवृत्तावपवादशास्त्रवैयर्थ्यसंभावना तद्रूपवत्तृतीयबाधबीजस्य सत्त्वादिति भावः । न तु मितीति । तथाऽसत्यसन्देहाय 'मत' इति 'आन्म' इति वा ब्रूयादिति भावः । अत्र न्यासे

**'सुपि च' इति दीर्घापत्तेः। सन्निपातपरिभाषया दीर्घवारणे तु हे ज्ञानेत्यादौ सम्बुद्धिलोपस्यानापत्तिः। .... .... ... ....**

---

लक्ष्यासिद्धिमपि दर्शयति। **दीर्घापत्तेरिति**। न च सन्निपातपरिभाषया दीर्घाप्रवृत्तेर्नायं दोष इति वाच्यम्। कष्टायेति निर्देशेन सुपि चेति दीर्घविषये तस्या अप्रवृत्तिरित्याशयात्। ननु चतुर्थ्येकवचने तत्परिभाषाया अप्रवृत्तिकल्पनेन निर्देशोपपत्तेरन्यत्रापि तदप्रवृत्तिकल्पने फलाभावाच्चात्रौत्सर्गिकप्रवृत्त्या इष्टसिद्धिरत आह। **सन्निपातेति**। **दीर्घवारणे त्विति**। नन्वाने मुगिति सूत्रे भाष्ये मुडिति न्यासे पचमान इत्यादावतो दीर्घो यञीति दीर्घापत्तिर्भाष्ये दत्ता। तथा एङ्ह्रस्वादिति सूत्रे भाष्ये हल्ग्रहणानुवृत्त्यभावे कुण्डशब्दात्संबुद्धावमादेशे, आदेः परस्येत्यकारलोपे सुपि चेति दीर्घे कुण्डामिति प्राप्नोतीत्युक्तम्। एतद्भाष्यद्वयप्रामाण्यात्सामान्यतो दीर्घविषये सन्निपातपरिभाषानाश्रयणस्य स्वीकर्तव्यत्वादिदमयुक्तमिति चेन्न। तद्भाष्यस्य पूर्वपक्ष्युक्तित्वेन तद्बलान्निष्फलतादृशार्थकल्पनाया अयुक्तत्वात्। ध्वनितं च तस्य तत्त्वं तद्व्याख्यानावसरे 'सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्ति'रित्यभिमान इत्युद्योतग्रन्थेन। अत एव मूलकृतापि रामाणामित्यत्र परत्वात्प्राप्तस्सुपि चेति दीर्घस्सन्निपातपरिभाषया वारितः। नामीत्यस्य चारम्भसामर्थ्यात्प्रवृत्तिरुक्ता। न च तादृशार्थकल्पने सर्वेषामिति रूपसिद्धिः फलम्। अन्यथा तत्परिभाषयैत्वं न स्यादिति वाच्यम्। तद्भाष्यबलेन तादृशार्थकल्पनेऽपि प्रतिपदमुच्चार्य विहितदीर्घविषय एव तदप्रवृत्तिकल्पनायाः स्वारसिकत्वेन तत्फलस्य वक्तुमशक्यत्वात्॥

एतेनोक्तभाष्यबलात्सामान्यतो दीर्घविषये सन्निपातपरिभाषाया अप्रवृत्तिरित्यर्थस्य लाभेनात्र तुशब्देनारुचिर्बोधितेत्याचार्योक्तमपास्तम्। प्रागुक्तोद्योतग्रन्थेनात्र परिभाषाप्रवृत्तावेव ग्रन्थकृत्तात्पर्यावगमात्॥

**संबुद्धिलोपस्यानापत्तिरिति**। न च गुणात्संबुद्धेरिति वक्तव्ये एङ्-

मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात् ।

---

ह्रस्वग्रहणसामर्थ्यात्संबुद्धिलोपविषये सन्निपातपरिभाषाया अप्रवृत्तेः प्रागुक्तत्वेनेदमयुक्तमिति वाच्यम् । संबुद्धिनिमित्तकप्रकृत्यादेशनिमित्तकसंबुद्धिलोपविषये, औपदेशिकसंबुद्धित्ववल्लोपविषय एव वा तत्परिभाषाया अप्रवृत्ताविङ्ह्रस्वग्रहणं ज्ञापकमित्यत्र तदप्रवृत्तौ मानाभावेनादोषात् । मनिमित्तेति । मादेशनिमित्तेत्यर्थः ॥

यत्त्विदं चिन्त्यम् । सन्निपातपरिभाषाया उपजीव्यविरोधस्यान्याय्यमूलकत्वेनातो मिति मादेशोपजीव्यस्यादन्तसन्निपातस्याविनाशेन प्रकृतपरिभाषाया अप्रवृत्तेः । प्रकृतिप्रत्ययसन्निपातं प्रयोगिणमादाय प्रकृतपरिभाषासञ्चारस्तु न, तस्य शैव इत्यादिसाधारण्येनाङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति भाष्यस्यैकदेश्युक्तित्वस्य वक्ष्यमाणत्वात् । भवतीत्यादाववादीनामप्यनापत्तौ दोषाः खल्वपि साकल्येनेति भाष्यासङ्गतेश्चेत्याचार्याः । तन्न । बुद्धावित्यत्र टाञ्चारणाय प्रकृतिप्रत्ययसन्निपातस्यापि परिभाषायां ग्रहणस्यावश्यकत्वात् । अत एव सन्निपातपरिभाषाव्याख्यानावसरे सर्वविधसन्निपातस्यापि ग्रहणमुक्तं ग्रन्थकृता । विशेषणविशेष्यभावरूपसन्निपातस्यापि परिभाषायां ग्रहणे 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादि'ति कृन्मेजन्त इति सूत्रस्थं भाष्यं प्रमाणत्वेनोपन्यस्य तदुत्तरं पूर्वपरसन्निपातस्यैव परिभाषायां ग्रहणमित्याशयेन प्रवृत्तां न प्रत्ययः सन्निपातनिमित्तकः, इत्येकदेशिनः शङ्कामभ्युपेत्यैव प्रवृत्तस्याङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति भाष्यस्यैकदेश्युक्तित्वं ग्रन्थकृतोक्तमिति न तेन प्रकृतिप्रत्ययसन्निपातस्याग्रहणलाभः । वर्णाश्रय इत्यादिकात्यायनवचनस्य प्रत्ययसन्निपातप्रयुक्ताङ्गसंज्ञा प्रकृतिसंबन्धिवर्णनाशकं यस्येति लोपं प्रति निमित्तं न स्यादित्याशयकत्वे तस्य शैव इत्यादिसाधारण्येन प्रत्ययांशे वर्णाश्रयत्वविशेषणमनर्थकमित्येतादृशार्थापरिज्ञानेन प्रवृत्तत्वात्तद्भाष्यमेकदेश्युरित्याशयः ।

अत एव 'एङ्ह्रस्वात्' इति सूत्रे ज्ञानेत्यादौ मलोपाय, कतरदित्यादौ लोपाभावाय चाङ्गाक्षेपऽयधिकरणान्वयहल्पदानुवृत्तय आस्थिता भाष्ये, न तु 'म्' इतिच्छेद उक्त इत्यलं भाष्यविरुद्धकल्पनयेति दिक् ॥

'जसः शी' 'औङ आपः' इत्याभ्यां शी, औङ इति चानुवर्त्तते, तदाह—क्लीबादित्यादि। यस्येति च। इश्चाश्च यं तस्येत्यर्थो, व्याख्यानात्। भस्येत्यधिकारः, चेन 'नस्तद्धिते' इत्यतः 'तद्धित' इत्यनुकृष्यते, तदाह—भस्येत्यादि। भस्येति किम्। गर्गरूप्यम्। औङः श्यामिति। इत एव निर्देशादस्य नित्यस्त्रीत्वं बोद्धव्यम्।

---

भवतीत्यादाववाद्यनापत्तिस्तु न, इतोऽन्यत्रेति भाष्यप्रयोगेण, एचोऽयवायाव इत्यादिसौत्रप्रयोगेण च सन्धिकार्यविषये सन्निपातपरिभाषाया अप्रवृत्तेः। प्रकृतिप्रत्ययसन्निपातमनाश्रयद्भिराचार्यैरप्येवंरीत्यैव तत्रावादेशः संपादनीयः। अन्यथेगन्ताङ्गत्वमुपजीव्य प्रवृत्तस्य गुणस्य स्वातिरिक्तविघातकशास्त्रं प्रत्य निमित्ततया तन्नस्यादित्यवधेयम् ॥

अत एवेति। औत्सर्गिकसन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वादेवेत्यर्थः। आस्थिता इति। गुरुभूता अपि फलमुखत्वाददुष्टा इत्याश्रिता इति भावः। न तु मितीति। अन्यथा अनित्यत्वात्तदप्रवृत्तौ म् इति च्छेदेऽपि दोषाभावेन लाघवात्तमेवाश्रयेदिति भावः ॥

ननु यस्येति सूत्रं यकारमात्रस्यैव लोपविधायकं कुतो नेत्यत आह। व्याख्यानादिति। सूर्यतिष्येत्युत्तरसूत्रे पुनर्यग्रहणरूपादित्यर्थः। ननु वार्तिके शीत्यस्य शब्दस्वरूपपरत्वेन नपुंसकत्वात्कथं नदीकार्यप्रवृत्तिरत आह। इत एव

आँङ इति स्वरूपकथनं, 'सर्वे' इत्यस्य भाधिकारेण सिद्धेः ॥

जश्शसोः । शस् अत्र सुबेव, व्याख्यानात् । नपुंसकस्य । इदितो नुम् इत्यतो नुम् इति, सर्वनामस्थान इति चानुवर्त्तते । अङ्गस्येति च प्रकृतम् । तच्च झलज्भ्यां विशेष्यते । नपुंसकस्येति गृह्यमाणस्याभावादङ्गस्यैव विशेषणम् । 'अस्थिदधि' इत्यादौ तु गृह्यमाणस्यैव, प्रकरणात् श्रुतेर्बलवत्त्वात् । अत एव 'त्रिचतुरोः' इत्यत्र स्त्रियामिति तयोरेव विशेषणमित्याकरः । उपधादीर्घ इति । 'सर्वनामस्थाने चासंबुद्धौ' इत्यनेनेति भावः । शेषमिति कर्मणि घञ् । 'घञजपाः पुंसि' इति प्रायोवादः ॥

अड्ड । दृड्डेति पाठः । दस्य ष्टुत्वं, डस्य संयोगान्त

---

निर्देशादिति । स्वरूपकथनमिति । न व्यावर्तकमिति शेषः । नन्वेवं सर्वे इत्यत्रातिप्रसङ्गः स्यादत आह । सर्वे इति । भाधिकारेणेति । यस्येति चेत्यत्र भस्येत्युक्त्या तत्र लोपस्य प्राप्तेरेवाभावेन न तद्व्यावृत्तये इदमिति भावः । व्याख्यानादिति । जस्साहचर्यमूलकादित्यर्थः । बलवत्त्वादिति । प्रकरणादुपस्थितार्थापेक्षया श्रुतार्थस्य शीघ्रोपस्थितिकत्वेन बलवत्त्वमिति भावः । अत एव=प्रकरणाच्छ्रुतेर्बलवत्त्वादेव । भावे घञि प्रकृतार्थासङ्गतेराह । कर्मणीति । ननु शेषशब्दस्य घञन्तत्वे नपुंसकत्वानुपपत्तिः, घञजपाः पुंसीत्यनुशासनादत आह । प्रायोवाद इति । लिङ्गस्य लोकाश्रयत्वादिति भावः । अत एव संबन्धमनुवर्तिष्यत इति भाष्यस्य संबध्यत इति संबन्धमिति व्याख्या कैयटेन कृता ॥

द्विडकारको निर्देश इति प्रकृतसूत्रस्थभाष्यात् ष्टुत्वघटितः पाठोऽसाम्प्रदायिक इति सूचयन्नाह । इति पाठ इति । अत्र पाठे वृद्धसंमतिं

लोपश्चाऽदेशस्वरूपभङ्गभिया न कृत इति कैयटः, पञ्चभ्य इति अधिकव्यवच्छेदाय, अस्य सर्वाद्यन्तर्गणत्वात्। परे तु डतरादिभ्य इति विरुद्धविभक्तिपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ इति सर्वादिसूत्रे भाष्ये स्पष्टम्। एवञ्च परमकतरं कुलमित्यादौ नादुड्।

---

दर्शयति। कैयट इति। यत्तु कैयट इत्यनेनारुचिस्सूचिता। तद्बीजं तु हलनुबन्धात्प्रागचोऽज्रूपानुबन्धस्य वा सर्वत्र दर्शनेन प्रकृतेऽप्यकारानुबन्धसहितादडित्येव न्यास उचित इति वाराणसेयास्तन्न। कैयटादृतपाठस्य भाष्यादेव लाभात्। तथाहि। अत्र हि भाष्ये द्विडकारको निर्देश इत्युक्तम्। एतद्धि सति सन्देहे तन्निवर्तकतयोपयुज्यते। उच्चारणार्थकवर्णरहितपाठ एव हि सन्देहस्यावकाशः। उच्चारणार्थवर्णघटितपाठे तु डकारद्वयवत्तानिश्चयस्य श्रुतित एव संभवेनेदमनर्थकमेव स्यात्। तद्रहितपाठे तु 'न हि व्यञ्जनात्परस्ये'ति न्यायेन दकारात्परस्यैकस्य द्वयोर्वोच्चारणे श्रुतितो विशेषानुपलम्भेन द्विडकारको निर्देश इति सार्थकम्। अतो भाष्यरीत्या कैयटोक्तपाठस्य प्रमितत्वे सिद्धे तद्विरुद्धपाठकल्पनमयुक्तमेवेति बोध्यम्। अस्य सूत्रस्य भाष्यसम्मतत्वेन कैयटोत्प्रेक्षितमर्थं निराकरिष्यन्सिद्धान्तार्थमाह। परेत्विति। अन्वयानर्हमिति। यद्यप्यङ्गस्येति सूत्रे भाष्येऽतो भिस इत्यादौ विरुद्धविभक्तित्वादसंबन्धमाशङ्क्यातः परस्याङ्गसंज्ञानिमित्तस्येत्येवंरीत्या संबन्धो दर्शितः, तथापि लक्ष्यानुसारात्षड्भ्यो लुगदड्डतरादिभ्य इत्यनयोर्विहितविशेषणत्वमाश्रयणीयमिति भाष्याशयः। विरुद्धविभक्तित्वादिति सर्वादिसूत्रस्थभाष्यं त्वेकदेश्युक्तिः, अङ्गस्येति सूत्रस्थभाष्यविरोधादित्यन्यत्र निरूपितम्। भाष्ये स्पष्टमिति। तत्र हि 'इह ताव-डुतरादिभ्यः पञ्चभ्य इति पञ्चमी। अङ्गस्येति षष्ठी, तत्राशक्यं भिन्नविभक्तित्वाड्डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुं, तत्र किमन्यच्छक्यमन्यद्दतो

यत्तु कैयटेनार्थद्वारकं विधानमाश्रयितव्यम्। तेन परमकतरादित्युक्तम्। तन्न। तस्य यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसम्भवः। यदि षष्ठ्यर्थे पञ्चमी, तदा 'विरुद्धविभक्तित्वात्' इति भाष्यासङ्गतिः, विधानस्य सर्वथाऽनाश्रयणेनार्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतिश्च। न चैतदर्थे उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यम्। तत्प्रत्याख्यानायैवैतद्भाष्यप्रवृत्तेः। परमकतरादिव्यावृत्तयेऽवश्याश्रयणीयविहित-

---

विहितात्प्रत्ययात्। डतरादिभ्यो यो विहित, इतीत्युक्तम्। अस्य भाष्यस्य कैयटोक्ताशयमनूद्य खण्डयति। यत्त्वित्यादिना। डतरादिभ्यः परत्वेनार्थस्य विधानासंभवादर्थद्वारकं विधानमिति कैयटस्य यथाश्रुतार्थपरत्वं न युज्यत इति तदाशयं विकल्प्य दूषयति। तस्य यदीति। ननु षष्ठ्यर्थे पञ्चमीति स्वीकारेण डतरादिसंबन्धिनोः स्वमोरित्यर्थलाभात्संबन्धस्य तदर्थगतसंख्याभिधायित्वरूपस्य ग्रहणेन पञ्चम्यन्तादपि कथंचित्तादृशार्थप्रतीतिसंभवोऽत आह। यदि षष्ठ्यर्थे इति। भाष्यासङ्गतिरिति। अर्थतस्समानविभक्तित्वादिति भावः। ननु विरुद्धविभक्तित्वादिति हेतुवाक्यस्यैकदेशयुक्तित्वात्तद्विरोधोऽकिञ्चित्कर इत्यत आह। तद्ग्रन्थासङ्गतिश्चेति। षष्ठ्यर्थे पञ्चमीस्वीकारे विधानस्य कथं चिदप्यनाश्रयणेनार्थद्वारकं विधानमाश्रयितव्यमिति कैयटग्रन्थासङ्गतिरिति भावः। एतदर्थ इति। डतरादिभ्यो विहितयोरित्यर्थ इत्यर्थः। व्यर्थः स्यादिति। विहितविशेषणत्वेनैवातिकतरं ब्राह्मणकुलमित्यादावद्डभावे सिद्धे सर्वाद्यानन्तर्यकार्यार्थमारब्ध उपसर्जनप्रतिषेधो व्यर्थः स्यादिति भावः। तत्प्रत्याख्यानायैवेति। सर्वाद्यन्तर्गणकार्यार्थमुपसर्जनप्रतिषेधो वक्तव्य इत्यस्य प्रत्याख्यानायैवेत्यर्थः। एतद्भाष्येति। अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेरिति भाष्यस्य विरुद्धविभक्तित्वाददड्डतरादिभ्य इत्यत्र विहितपदाध्याहारेण संबन्धप्रतिपादन-

**विशेषणेनैवातिकतरादिव्यावृत्तौ स व्यर्थ इति तदाशयः। 'त्यदादीनामः' इत्यत्र षष्ठ्यन्तत्वात्त्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणम्, 'अस्थिदधि' इत्यादावङ्गं तथा तद्विशेषणं व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः ॥**

---

परतदुत्तरभाष्यस्य चेत्यर्थः । नन्वेतावता कथं तत्प्रत्याख्यानं, त्यदादीनाम इत्यस्योपसर्जनेऽप्रवृत्तये तस्यावश्यकत्वादत आह । **त्यदादीनाम इत्यत्रेति** । **अर्थद्वारकमिति** । त्यदाद्यर्थगतसंख्याभिधायिविभक्तावित्यर्थ इति भावः । नन्वेवमस्थिदधीत्यत्रापि षष्ठ्यन्तत्वादेवमन्वये प्रियदध्ना ब्राह्मणेनेत्यत्रानङ् न स्यादत आह । **अस्थिदधीत्यादाविति** । **तथेति** । अर्थद्वारकमित्यर्थः । **तद्विशेषणम्** । विभक्तिविशेषणम् । **व्याख्यानादिति** । लक्ष्यानुसरणरूपादित्यर्थः । **भाष्ये स्पष्टमिति** । तत्र हि निरुक्तसूत्रद्वये गृह्यमाणस्य अङ्गस्येत्यस्य च द्वयोरपि षष्ठ्यन्तत्वेन तत्र विशेषणविशेष्यभावे कामचाराल्लक्ष्यानुरोधात्क्वचिद्गृह्यमाणेन विभक्तिर्विशेष्यते । क्वचिदङ्गेनेतीत्युक्तम् ॥

यत्तु 'परे तु संज्ञोपसर्जनप्रतिषेध इति वार्तिकसत्त्वे सर्वस्मै, परमसर्वस्मै, अतिसर्वाय, कतरद्, अतिकतरमित्यादिरूपाणि भवन्ति । तत्प्रत्याख्यानेऽपि फलैक्याय तथैव रूपाणि यथा भवेयुस्तथा वक्तव्यम् । त्वद्रीत्याङ्गाधिकारे यदुच्यत इति प्रत्याख्यानकल्पे सर्वादीनीत्यत्र यदि तदन्तविधिरस्ति तदाऽतिसर्वाय, अतितत्, अतिकतरमित्यादौ दोषो दुरुद्धरः स्यात् । यदि तदन्तविधिर्नास्ति तदा परमसर्व इत्यादिरूपाणि न सिद्ध्यन्तीति गृह्यमाणविभक्तेरित्यस्य गृह्यमाणार्थगतसंख्याभिधायिविभक्तौ परतो गृह्यमाणार्थगतसंख्याभिधायिविभक्तेश्च तत्कार्याणि भवन्तीत्युपलक्षणतया निरुक्तभाष्यस्यावश्यं व्याख्येयत्वेन परमकतरमित्येव भवति, न तु परमकतरदिति तदुक्तिस्साहसमात्रमेव । अद्ड्डतरादिभ्य इत्यस्य डतराद्यर्थगतसंख्याभिधायिनौ तदव्यव-

हितोत्तरौ च यौ स्वमौ तयोरद्डित्यर्थः। एवं सप्तम्याश्लित्यादेस्सर्वनामार्थगत-संख्याभिधायिनी या सप्तमी सर्वनामोत्तरा च तदन्ततदादेश्लादिर्भवतीत्यर्थे-नातिसर्वायातिकतरमित्यादौ कुत्रापि प्रत्याख्यानकल्पे न दोष इति प्राहुरिति वाराणसेयास्तदयुक्तम् । अनुपसर्जनादित्येष योगः प्रत्याख्यायते, तमेवमभि-संभन्त्स्यामः, अकारात्कारावनुपसर्जनस्य द्रष्टव्यावित्यादिपूर्वभाष्यस्याद्डुतरा-दिभ्य इत्यत्र विहितविशेषणत्वप्रतिपादनपरोत्तरभाष्यस्य च सर्वाद्यन्तर्गणका-र्यार्थमुपसर्जनप्रतिषेधो वक्तव्य इति कात्यायनवचनप्रत्याख्यानायैव प्रवृत्तत्वेन तत्प्रकरणपतितस्य 'अङ्गाधिकारे पञ्चम्या यदुच्यत, इत्यादिभाष्यस्यापि तादृश-वचनप्रत्याख्यानपरताया एव न्याय्यत्वादतिसर्वायेत्यादौ फलभेदकथनस्या-युक्तत्वात् । अतितत्, अतिकतरमित्यादौ गृह्यमाणाद्विहितविभक्तेरभावेन प्रत्या-ख्यानपक्षेऽप्यत्वादेरप्राप्त्या न तत्रापि फलभेदशङ्का । परमकतरशब्देऽद्डादेश-साधकस्य भाष्यान्तरस्याभावेन सर्वाद्यानन्तर्यकार्यार्थमारब्धोपसर्जनप्रतिषेधप्रत्या-ख्यानायाश्रितस्याद्डुतरादिभ्यो विहित इत्यर्थस्य लक्ष्याविरोधेन भाष्यकृता दूषणाकरणाच्च परमकतरशब्देऽद्डभाव इष्ट इत्येव भाष्याशयो वक्तुं युक्तः । किं च गृह्यमाणविभक्तेरिति भाष्यस्य त्वदुक्तरीत्या गृह्यमाणार्थगतसंख्याकर्मा-भिधायिविभक्तेरित्यर्थे परमपञ्च परमसप्तेत्यादौ लुको निर्बाधत्वेन 'यद्येवं परम-पञ्च परमसप्तेत्यादौ षड्भ्यो लुगिति लुङ्न प्राप्नोती, त्यादितदुत्तरभाष्यम-सङ्गतं स्यात् । न चैतद्भाष्यं गृह्यमाणविभक्तेरिति भाष्यस्य निरुक्तार्थापरि-ज्ञानेन प्रवृत्तमिति न तद्विरोध इति वाच्यम् । नागेशोक्तदिशा भाष्यस्य समञ्जस्ये विना विरोधमज्ञानकल्पनाया अन्याय्यत्वात् ॥

यदपि डतरादिभ्यो यो विहित इति भाष्यस्यायमर्थः । डतरादिभ्य इति ल्यब्लोपे पञ्चमी । अर्थपरश्चायं निर्देशो लक्षणया, एतदर्थमेव बहुवचन-निर्देशः । तथा च डतराद्यर्थमाश्रित्य विहितयोः स्वमोरिति पर्यवसितम् ।

डित्त्वफलमाह—टेः । 'ति विंशतेः' इत्यतो डितीति वर्त्तते, भस्येति चाधिकृतम् । पञ्चम इति । डटो मटि भत्वाभाव इति

---

एवमेव षड्भ्यो लुगित्यत्रापि । न च कतरधनमित्यादावतिप्रसङ्गः । प्रत्यासत्त्योपस्थितडतरादिभ्यः परयोरेव विधानात् । न च लुप्तकन्नन्ते कतरशब्देऽतिप्रसङ्गः, तत्र कनुत्पत्तौ दृढतरमानाभावात् । उत्पत्तौ वास्येष्टत्वे बाधकाभावात् । न च कतरोऽन्य इवेति विग्रहे कतरान्यशब्देऽतिप्रसङ्गः । अन्यशब्दस्य व्याघ्रादित्वे मानाभावात् । तत्त्वे वा यादृशडतराद्यन्यतमार्थमाश्रित्य स्वमौ विहितौ ततः परत्वस्य विवक्षितत्वात् । न चोक्तानेकविधक्लेशाश्रयणे मानाभावः । आरम्भप्रत्याख्यानयोः फलैक्यस्यैव मानत्वात् । नव्यमते चोपसर्जनप्रतिषेधारम्भे परमकतरादिष्यते । प्रत्याख्याने तु नेति फलभेदः स्पष्ट एव । किं च नव्यमते संज्ञोपसर्जनप्रतिषेधप्रत्याख्यानावसरे परमकतरमिति न सिद्ध्यतीति वार्तिककृतं प्रति भाष्यकृता न्यूनतोद्भावनीया स्यादित्याचार्यास्तदप्ययुक्तम् । न षट्स्वस्रादिभ्य इत्यादौ शब्दबाहुल्याभिप्रायेणेव तिसृभ्यो जस इत्यादौ प्रयोगबाहुल्याभिप्रायेणेवात्रापि बहुवचनस्य सत्त्वेन तत्सामर्थ्याड्डतरादिभ्य इत्यस्य लक्षणाया अयुक्तत्वात् । किं च कतरधनं कतरान्य इत्यादिषु बहुष्वतिप्रसङ्गवारणाय बहुविधक्लेशाङ्गीकारेऽपि 'भक्षितेऽपि लशुन, इति न्यायेन कन्लुबन्तकतरशब्दे त्वयाप्यादेशप्रवृत्तेरिष्टताया एवाश्रयणीयतया परमकतरशब्दे आदेशाप्रवृत्तेरिष्टत्वमङ्गीकुर्वतामुपाध्यायानां मतमपेक्ष्य त्वन्मते को वा विशेष इत्यवेहि । किञ्च भवन्मते प्रत्याख्यानपक्षे भगवता 'इदमपि संगृहीत, मित्यादिना कन्लुबन्तकतरशब्दे आदेशसंपादनरूपफलविशेषाकथनमिवास्मन्मतेऽपि परमकतरशब्दे न्यूनतानुद्भावनमिति न तावन्मात्रेण त्वदुक्तार्थसिद्धिरित्यवधेयम् ॥

भत्वाभाव इति । न च भस्येत्युक्तावपि मटः प्रागेव टिलोपः कुतो नेति वाच्यम् । माठरकौण्डिन्यन्यायेन मटः टिलोपबाधकत्वात् । नचैवमपि

भावः। अन्यतमस्येति। डतरादिष्वपाठादिति भावः। एकतरमिति। 'एकाच्च प्राचाम्' इति डतरच्। एकतमस्य त्वेकतमदित्येव।

परत्वादिति। नुमपेक्षयेति शेषः। शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः। केचित्तु शिभावात्परत्वाज्जरसि ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः। अत्र यद्वक्तव्यं तद् निर्जरशब्दे उक्तम्॥

सान्तमहतः। सान्तेति लुप्तषष्ठीकं पृथक् पदं संयोगस्येत्यनेन समानाधिकरणम्। नोपधायाः, सर्वनामस्थाने चासंबुद्धावित्यनुवर्त्तते। तदाह—सान्तसंयोगस्येत्यादि। उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम्। पारिभाषिकार्थस्येहासंभवात्। सर्वनामस्थान इति सान्तसंयोगस्य विशेषणम्। अत एव हंसशिरांसीत्यादौ न दोषः।

---

यथोद्देशे पूर्वप्रवृत्तभसंज्ञामाश्रित्य मड्डुतरमपि टिलोपो दुर्वार एवेति वाच्यम्। अकृतव्यूहपरिभाषया पूर्वं भत्वस्याप्रवृत्तेः। तस्या असत्त्वे तु लक्ष्यानुरोधादत्र कार्यकालत्वाश्रयणेनादोष इत्यवधेयम्। आकडारीयसंज्ञासु यथोद्देश एवेति नियमस्तु नागेशानभिप्रेत इति निरूपितं प्राक्। नुम्जरसोर्विप्रतिषेधविचारपरजराया इति सूत्रस्थभाष्यविरोधादत्र परत्वादित्यस्य त्रिभक्त्यादेशेभ्यः परत्वादित्यर्थो न युक्त इत्याशयेनाह। इति शेष इति॥

असंभवादिति। सान्तसंयोगावयवनकारस्यान्त्यालत्वाभावेन तमादायोपधात्वस्यासंभवादित्यर्थः। अत एव=सर्वनामस्थान इत्यस्य सान्तसंयोगविशेषणत्वादेव। न दोष इति। हंसशब्दावयवाकारस्य दीर्घापत्तिरूपो दोषो नेत्यर्थः। अङ्गविशेषणत्वे तु हंसशब्दावयवसान्तसंयोगमाश्रित्य हकाराकारस्य दीर्घः स्यादिति भावः। प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन निरुक्तपक्षस्या-

113

**यद्वा अनन्त्यविकारेऽन्त्यसदेशस्येति न दोषः । मांस्पचन्या इति । 'मांसस्य पचनीत्यर्थः । मांसस्य पचियुड्घञोः' इत्यप्येतत्सिद्धार्थानुवाद एव । शब्दत्वेन च सादृश्यं, 'न लुमता' इत्यस्य च नित्यत्वमित्यभिमानः । वृत्ताविति । भाष्यस्वरसस्त्वननुवृत्ताविति भावः । मासश्छन्दसीति । मासस्तकारः स्याद्भादौ प्रत्यये छन्दसीत्यर्थः । 'माद्भिः शरद्भिर्दुरोदरं तव' इत्युदाहरणम् ॥**

---

स्वारसिकत्वादाह । यद्वेति । नन्वनन्त्यवर्णतद्वर्णयोरितराव्यवधान एव तत्प्रवृत्तेरन्यत्रोक्तत्वेन कथमत्र तया निर्वाह इति चेन्न । तत्रेतरपदेनान्त्यवर्णवृत्तिवर्णविभाजकधर्मविरुद्धधर्मवत एव ग्रहणेन प्रकृते तादृशधर्मवद्वर्णव्यवधानराहित्यस्य सत्त्वेन तत्परिभाषाप्रवृत्तेर्निष्प्रत्यूहत्वात् ॥

यत्त्वत्र भट्टाः 'परिभाषेन्दुशेखरेऽन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावेवास्याः प्रवृत्तेरुक्तत्वेनात्रोभयोर्युगपत्प्राप्त्यभावेन कथमेतत्प्रवृत्तिरित्याशङ्क्य यस्य कस्य चिल्लक्ष्ये युगपत्प्राप्तिरस्ति तस्यैकत्राप्राप्तावपि भवतीत्यर्थाच्छिरांसीत्यत्रोभयोः प्राप्तिरस्ति, हंसशिरांसीत्यत्रान्त्यस्यैवेति न दोष इत्याहुः । तच्चिन्त्यम् । सर्वनामस्थान इत्यस्याङ्गविशेषणत्वे हंसशिरांसीत्यत्रोभयोर्युगपत्प्राप्तेस्सत्त्वात् ॥

ननु प्रभृतिग्रहणस्य प्रकारार्थत्वे युड्घञोः प्रकृतिभूते पचधातावपि पद्दन्निति सूत्रेणादेशो भविष्यतीति तस्मिन्परे लुम्पेदवश्यम इत्यादिना मांसशब्दान्त्यस्य लोपविधानं निरर्थकं स्यादत आह । **एतत्सिद्धार्थानुवाद एवेति** । प्रभृतिग्रहणस्य प्रकारार्थत्वाश्रयणेन सिद्धो योऽर्थस्तदनुवाद एव, नापूर्व इत्यर्थः । **इत्यभिमान इति** । अत्रारुचिबीजन्तु प्राक्प्रपञ्चितम् । **मूले वृत्ता**वित्यनेन सूचितामरुचिं सूचयन्नाह । **भाष्यस्वरसस्त्विति** । पदादीनां

**ह्रस्वो नपुंसके । क्लीबवदर्थे वर्त्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे प्रातिपदिकस्येत्येतत्सत्त्वप्रधानस्येत्यर्थकम् । तेन काण्डे इत्यादावन्तवद्भावेन प्रातिपदिकत्वेऽपि न ह्रस्वः । विभक्त्यर्थ-**

---

प्रकृत्यन्तरत्वस्य तत्सिद्धान्तासिद्धत्वेन तन्मते लोकेऽपि पदादीनां प्रयोगस्येष्टत्वादिति भावः ॥

**क्लीबवदर्थ इति** । सूत्रे नपुंसकपदस्यार्श आद्यजन्तत्वादीदृशार्थलाभ इति श्रीधरादयः । वस्तुतस्तु स्त्रीत्वपुंस्त्वनपुंसकत्वादेरेव लिङ्गत्वेन स्त्रीपुन्नपुंसकादिशब्देभ्यः स्त्रीत्वादिविशिष्टार्थस्य स्वरसतः प्रतीत्या अर्श आदित्वकल्पनमनावश्यकमिति बोध्यम् । **सामर्थ्यादिति** । समर्थत्वादित्यर्थः । नपुंसकत्वविशिष्टार्थवृत्तित्वस्य प्रातिपदिकधर्मत्वेन तस्यैव तदर्थाभिधानसमर्थत्वादिति भावः । **सत्त्वप्रधानस्येति** । स्वप्रयोज्यप्रकारत्वभिन्नया तादृशप्रकारत्वानवच्छेद्यया वा तादृशविशेष्यतया लिङ्गाद्यन्वय्यर्थबोधकस्येत्यर्थः । ननु वारिणीत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणस्यावश्यकतया कथं तेनेदृशार्थलाभः । न च तत्र श्यादेशे ईकारोच्चारणसामर्थ्यादेव ह्रस्वो न भविष्यतीति वाच्यम् । तथापि वारिणा वारिणे इत्यादौ ह्रस्ववारणाय तस्यावश्यकत्वादिति चेन्न । अर्थवत्सूत्रात्प्रातिपदिकग्रहणमनुवर्त्य तस्य षष्ठ्या विपरिणामेनोक्तदोषवारणेन प्रातिपदिकग्रहणवैयर्थ्यस्य तदवस्थतया तेनोक्तार्थलाभात् । प्रातिपदिकग्रहणसामर्थ्येनेदृशार्थाश्रयणे फलमाह । **तेनेति** । **न ह्रस्व इति** । तस्य विभक्त्यर्थकारकशक्तिप्रधानत्वादिति भावः । ननु पञ्चकं प्रातिपदिकार्थ इति पक्षे तत्तत्कारकशक्तीनां विभक्तिद्योत्यत्वात्क्रियाकारकभावरूपस्संबन्ध एव विभक्तिवाच्यः । तस्य च संसर्गतयैव भानमिति तत्तत्कारकशक्तीनां प्रकृत्यर्थविशेषणतयैव भानमिति चान्यत्र ग्रन्थकृता सिद्धान्तितत्वेन कथं तन्मते काण्ड इत्यादीनां विभक्त्यर्थप्रधानतेत्यत आह । **विभक्त्यर्थस्य संसर्गत्वेऽपीति** ।

र्थस्य संसर्गत्वेपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव। .... ....

प्राधान्यमिति। तत्त्वं च तस्य प्रकृत्यर्थप्रकारकत्वमात्रेणैव, न तु तत्र विशेष्यत्वापेक्षाऽस्ति। विशेष्यतानिरूपितत्ववत्सांसर्गिकविषयतानिरूपितत्वमपि प्रकारतायां स्वीक्रियत इत्यन्यत्र निरूपितम्। काण्डे इत्यादीनामधिकरणशक्तिप्रधानत्वव्यवहारस्तु प्रधानभूत विभक्त्यर्थसंबन्धघटकतया शक्तेरपि प्राधान्यादुपपादनीय इति बोध्यम्॥

यत्तु काण्डे कुड्ये इति विभक्त्यर्थप्रधानामिति भाष्याद्विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यतायास्तत्र स्वीकारे बाधकाभावः। शब्देन प्रतिपादितेऽर्थे विशेष्यत्वस्वीकारस्सर्वसम्मतः। संसर्गताख्यविषयतायाः प्रकारत्वविशेष्यत्वविरुद्धत्वे साधकाभावः। अत एव वह्निर्नास्तीत्यत्र नञर्थे वह्निपदार्थस्य वह्नित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वये वह्नित्वमवच्छिन्नत्वं प्रतियोगित्वं चेति विशेषणविशेष्यभावापन्नं त्रितयमेव संसर्ग इत्युक्तं परैः, इति मिश्राः। तदसत्। संसर्गे तत्प्रतियोगिनिष्ठप्रकारतानिरूपितविशेष्यतायाः क्वाप्यनङ्गीकारात्। विभक्तिप्रतिपाद्यस्य प्रकारत्वविशेष्यत्वाभ्यां भानमिति वैयाकरणानामसम्मतत्वेन तस्य सर्वसम्मतत्वकथनं वैयाकरणानां न शोभते। अत एव राज्ञः पुरुष इत्यत्र राजा विशेषणं, पुरुषो विशेष्यः। तयोरभिसंबन्धस्य षष्ठी वाचिकेति भाष्यं संगच्छते। संसर्गस्य विशेष्यतया भाने उपपादकतया यत्परेषां ग्रन्थमनूदितं, तत्तद्ग्रन्थतात्पर्यानवबोधमूलकम्। तैः प्रमेयं नास्तीत्यादेः संसर्गांशे भ्रमत्वोपपादनाय संसर्गघटकपदार्थानां परस्परं विशेषणविशेष्यभावोऽभ्युपगतः, न तु संसर्गप्रतियोगिनस्संसर्गस्य च परस्परं विशेषणविशेष्यभाव इति तद्ग्रन्थपरिज्ञानवतां स्पष्टत्वात्। विभक्त्यर्थप्राधान्योक्तेः प्रकारान्तरेणोपपत्तौ सर्वतन्त्रविरुद्धविशेष्यत्वकल्पनमनुचितमिति बोध्यम्॥

ननु सप्तम्यन्तस्थले निरुक्तरीत्या ह्रस्ववारणेऽपि काण्डे तिष्ठत इत्यादौ

प्रथमाया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम् । काण्डे तिष्ठत इत्यादावाख्यातार्थकर्तुः कर्तृक्रियाभावेन क्रियायामन्वये तदभिन्नप्रथमार्थस्यापि तेन सम्बन्धेनान्वयात्तस्य प्राधान्यम् । स्पष्टश्चेदं भाष्ये । ज्ञानवदिति।

---

प्रथमान्ते कथं न ह्रस्वः, तत्र प्रातिपदिकार्थमात्रे प्रथमाविधानेन सत्त्वप्राधान्यस्य सुवचत्वादत आह । प्रथमाया अपीति । उत्तरवाक्यस्थस्य काण्डे तिष्ठत इत्यादावित्यस्य मध्यमणिन्यायेनात्रापि संबन्धः । अन्याभिहितशक्तिरिति इदमुपलक्षणं, क्रियाकारकभावरूपसंबन्धस्यापि । तिङ्कृत्तद्धितसमासैरभिहिते कर्त्रादौ प्रथमेत्यर्थकेऽभिहिते प्रथमेति न्यासान्तरे कर्तृत्वादिशक्तीनां प्रथमावाच्यत्वलाभादिति भावः । तत्संसर्गक इति । तद्घटितसंसर्गक इत्यर्थः । तस्याः=शक्तेः। प्राधान्यमिति । प्रधानभूतसंबन्धघटकतयेत्यर्थः । यथान्यासेऽपि तत्र विभक्त्यर्थप्राधान्यमुपपादयति । काण्डे तिष्ठत इत्यादाविति । तदभिन्नेति। आख्यातार्थकर्त्रभिन्नेत्यर्थः । प्रथमार्थस्येति। प्रथमाप्रकृत्यर्थस्येत्यर्थः। तेन संबन्धेनान्वयादिति । कर्तृक्रियाभावेनान्वयादित्यर्थः । कटं भीष्मं कुर्वित्यादौ कटस्येव तदभिन्नस्य भीष्मपदार्थस्यापि कर्मतयाऽन्वयस्य भगवता प्रतिपादितत्वेन तद्रीत्याऽत्राप्याख्यातार्थाभिन्नप्रथमाप्रकृत्यर्थस्यापि कर्तृक्रियाभावेनैवान्वयस्य वाच्यतया तत्र प्रथमातिरिक्तस्य तादृशसंबन्धवाचकस्य कस्यचिदभावेन तस्या एव तद्द्योतकत्वमावश्यकमिति तत्रापि विभक्त्यर्थप्राधान्यमक्षतमेवेति भावः । तादृशसंबन्धस्याकाङ्क्षाभास्यत्वं तु वक्तुमशक्यम् । ग्रन्थकृता विशेष्यविशेषणभावातिरिक्तस्याकाङ्क्षाभास्यत्वानङ्गीकारात् । न चैवं ग्रामणि तिष्ठतीत्यादौ नपुंसकह्रस्वात्पूर्वमन्तरङ्गानपीति न्यायेन लुकि ह्रस्वानुपपत्तिः । प्रातिपदिकस्य सत्त्वप्रधानत्वाभावादिति वाच्यम् । तत्र सुबुत्पत्तेः प्रागेव ह्रस्वप्रवृत्त्या दोषाभावात् । अन्तरङ्गानपीतिन्यायस्य लुक्प्रयोजकसमासादीनां

प्राबल्यबोधकत्वेऽपि सुपोऽपि प्राबल्यबोधकत्वे मानाभावेन तेन ह्रस्वात्पूर्वं सुबुत्पत्तेः संपादयितुमशक्यत्वात् ॥

यत्तु शब्दादीदृशार्थालाभः। किं च पर्जन्यवल्लक्षणप्रवृत्त्या प्रथमतो ह्रस्वे कृते ऊखतुः प्रोखतुरित्यादाविव लक्ष्ये लक्षणस्येति न्यायेन पुनः प्रवृत्तिरेव नास्ति। अत एव ज्ञानेभ्य इत्यादौ न ह्रस्वः। किं च धनलक्ष्म्यादावतिप्रसङ्गवारणाय प्रधानाप्रधानन्यायेन नपुंसकत्वविशिष्टार्थविशेष्यकबोधजनकस्यैव ह्रस्वस्य वक्तव्यतया काण्डे इति सप्तम्यन्तजन्यबोधविशेष्यस्य नपुंसकत्वाश्रयत्वाभावादेव दोषवारणे उक्तप्रयासवैयर्थ्यादिति चिन्त्यमेवैतदित्याचार्याः, तन्न। प्रातिपदिकग्रहणेऽनुवर्तमाने पुनः प्रातिपदिकग्रहणेन विभक्त्युत्पत्तेः प्राक्प्रातिपदिकमात्राद्यादृशार्थप्रतीतिस्तादृशार्थप्रत्यायकस्यैव ह्रस्व इत्यर्थस्य शब्दतो लाभसंभवेन शब्दादीदृशार्थालाभ इत्युक्तेरयुक्तत्वात्। लक्ष्ये लक्षणस्येति न्यायेन ह्रस्ववारणमप्युनुचितम्। एकादेशस्य तन्मात्रोद्देश्यकविकारत्वाभावेन तल्लक्ष्यत्वाभावात्। सिचि वृद्धिरितिसूत्रस्थभाष्यबलेन तन्मात्रोद्देश्यकविकारघटितस्यैव तल्लक्ष्यत्वस्य स्वरसतः प्रतीतेः। अत एव काण्ड इत्यत्र प्रकारान्तरेण ह्रस्ववारणपरं प्रकृतसूत्रस्थं भाष्यमपि संगच्छते। न च शकन्ध्वर्थमित्यादौ प्रकृतपरिभाषया पूर्वरूपनिवारणपरसंप्रसारणाच्चेति सूत्रस्थभाष्यप्रामाण्येन तस्य तदन्यस्य च स्थाने यो विकारस्तद्विशिष्टस्यापि तल्लक्ष्यत्वमाश्रयणीयम्। प्रकृतसूत्रस्थं भाष्यन्तु न्यायानादरेणैव प्रवृत्तमिति वाच्यम्। तत्रैव भाष्ये लक्ष्यभेदेन तद्रीत्या पूर्वरूपवारणस्यायुक्ततायाः कण्ठत उक्तत्वात्। नचात्र विकारस्य तन्मात्रोद्देश्यकत्वस्वीकारे प्रोखतुरित्यादावुपसर्गैकादेशस्य तन्मात्रोद्देश्यकत्वाभावेन तल्लक्ष्यत्वानापत्त्या ह्रस्वापत्तिरिति वाच्यम्। एकादेशस्य बहिरङ्गतयासिद्धत्वेन ह्रस्वाप्रवृत्तेः। किं च तत्राभ्यासोत्तरखण्डयोरेकादेशोत्तरं स्थानिन्यभ्याससंज्ञायाः फलाभावेनाप्रवृत्त्या परादिवद्भावेनैकादेशविशिष्टेऽभ्यासत्व-

दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । श्रीपाणीत्यादौ 'एकाजुत्तरपदे' इति णत्वं भवत्येवेति बोध्यम् ॥

इकोऽचि । सुपीति वक्तव्ये विभक्ताविति चिन्त्यप्रयोजनम् ।

---

स्यातिदेष्टुमशक्यत्वेन तदप्रवृत्तेः । अत्र मात्रपदेन लब्धे तदितरानुद्देश्यकत्वे इतरद्विभक्तिरूपमेव गृह्यत इति विवक्षणेन दोषानवकाशाच्च । तन्मात्रोद्देश्यक-विकारग्रहणादेव गाङ्कताविल्यस्य भौवादिकतायामातांञयोर्गाते इत्यत्र शपा सवर्णदीर्घोत्तरं पुनस्सवर्णदीर्घसिद्धिः । तथा चिकीर्षन्तीत्यत्र शबकारेण पर-रूपोत्तरमन्त्याकारेण पुनः पररूपं च सिध्यति । अन्यथाऽनेन न्यायेन पुन-स्तन्न स्यात् । ऊकालोऽजिति निर्देशबलेनाननुगतानित्यत्वमाश्रित्यैतद्दोषवारणं त्वनुचितमित्यवधेयम् । काण्डे इति सप्तम्यन्तपदजन्यबोधविशेष्यस्य नपुंसक-त्वाश्रयत्वाभावकथनमप्ययुक्तम् । शक्तेर्विभक्तिवाच्यत्वमिति नये तथा वक्तुं शक्यत्वेऽपि सिद्धान्तभूते द्योत्यत्वपक्षे तथा वारयितुमशक्यत्वात् । संसर्गस्य विशेष्यत्वं नास्तीति प्राङ्निरूपितत्वाच्च ॥

ननु श्रीपं ज्ञानवदित्यनुपपन्नं, श्रीपाणीत्यत्र विशेषसद्भावादित्यत आह । दीर्घान्तत्वप्रयुक्त इति ॥

**चिन्त्यप्रयोजनमिति** । न च नपुंसकवृत्तेरिदंशब्दादधुना प्रत्यये इशि नुमर्थं विभक्ताविल्युक्तमिति वाच्यम् । तत्र नुम्यपि नस्तद्धित इति टिलोपेन विशेषाभावात् । यत्तु वारिशब्दादाचारक्विबन्ताद्भावे आशीर्लिङि वारि, इषीष्ट इति स्थिते नुमर्थं सुपीति विहाय विभक्तावित्युक्तमित्यौत्तराहास्तन्न । सत्य-भिधाने नुमः परत्वात्सार्वधातुकार्धधातुकयोरिति गुणे वारयिषीष्टेति प्रयोगस्यै-वेष्टत्वात् । पूर्वविप्रतिषेधेन नुम् तु न । तत्र साहचर्यात्सुब्निमित्तकगुणस्यैव ग्रहणात् । अर्थभेदाच्छब्दभेदस्य प्राङ्निरूपितत्वेनाचारक्विबन्तवारिशब्दस्यासत्त्व-

विभक्तौ किम् । मधुन इदं माधवम् । हेवारे हेवारीति । अत एव 'इकोऽचि' इति सूत्रस्थम् 'इह किंचित्त्रपो' इति, । 'एङ्ह्रस्वात्' इति सूत्रस्थं 'हेत्रपु' इति च भाष्यं सङ्गच्छते । वृद्ध्यौत्वेति । वृद्ध्यादीनां क्रमेण गावौ, हरौ क्रोष्टा, हरये इत्यवकाशाः, नुमो वारिणी इति ॥

तृतीयादिषु । भाषितः पुमान् येन शब्देनेत्यर्थे पीलुशब्देऽतिप्रसङ्गस्तस्माद्भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाऽऽक्षिप्तशब्दश्च क्लीबेन समानानु-

---

भूतत्वेन नपुंसकवृत्तित्वासंभवान्नुमोऽप्राप्तेश्च । माधवमिति । यद्यत्र नुम् स्यात्तदा टिलोपः स्यादिति भावः । अनित्यस्य वचनस्यैकस्मिन्नेव लक्ष्ये पाक्षिकप्रवृत्तौ मानमाह । अत एवेति ॥

पीलुशब्देऽतिप्रङ्ग इति । अर्थभेदेऽपि शब्दैक्यमिति मतेनेदम् । यदि तु प्रवृत्तिनिमित्तभेदाच्छब्दभेद इति सिद्धान्तस्तदाऽस्मिन्नप्यर्थे न कश्चिद्दोषः । परं तु वृत्तिद्वयाकल्पनाप्रयुक्तं लाघवमत्र पक्ष इति बोध्यम् । न चास्मिन्नर्थे भाषितपुंस्कस्य शब्दस्य पुंवत्कार्यं भवतीत्यर्थस्य लाभेन प्रकृतस्य नुम एव प्रतिषेधः स्यान्न तु ह्रस्वस्यापि । अत एव भाष्ये 'अर्थातिदेशात्सिद्धि'मित्यादिना प्रवृत्तिनिमित्तेऽन्यपदार्थे बहुव्रीहिमाश्रित्य भाषितपुंस्कप्रवृत्तिनिमित्तविशिष्टार्थवाचकस्य नपुंसकलिङ्गशब्दस्य पुंस्त्वविशिष्टार्थवाचकशब्दरूपातिदेशाद्ध्रस्वनुमोरभावस्साधित इति वाच्यम् । नुम्निषेध एव विधातव्येऽतिदेशारम्भासामर्थ्याद्व्याप्तिन्यायाश्रयणेन प्रकृताप्रकृतयोर्नुम्ह्रस्वयोरपि प्रतिषेधस्य वक्तुं शक्यत्वात् । स्पष्टं चेदं पदमञ्जर्याम् । प्रकृतसूत्रस्थं भाष्यं तु संभवात्परिहारान्तरप्रदर्शनपरमिति कैयटे स्पष्टम् । मूलमपि तदनुरोधेनैवेत्यवधेयम् । समानानुपूर्वीक इति । अन्यथा घनरसशब्देनाप्यशब्देन वाऽम्बुत्वं प्रवृत्तिनिमित्तमादाय पुमानुक्त

**पूर्वोक्तः समानार्थश्च गृह्यते प्रत्यासत्तेः । ततोऽर्थ आगच्छ् । तत्फलितमाह—प्रवृत्तिनिमित्तैक्ये इति । इकोऽचीति, नपुंसकस्येति चानुवर्तते । ते च तत्र षष्ठ्यन्ते । अत्रार्थात्प्रथमान्ते । इक इति**

---

इत्यम्बुशब्दे पुंवत्त्वापत्तिरिति भावः । प्रद्युशब्दे पुंवत्त्वव्यावृत्तय इदं विशेषणमिति पाठकोक्तिरपि सम्यगेव । यत्तु तत्तुच्छम् । ग्रामण्ये सेनान्ये कुलायेत्यादौ पुंवद्भावेन ह्रस्वाप्रवृत्तिप्रदर्शनपरभाष्यासङ्गतेः । इगन्तप्रद्युशब्दवद्ध्रस्वेकारान्तग्रामणिशब्दस्यापि भाषितपुंस्कत्वाभावात् । एवमिकः किम्? श्रीपेणेत्यग्रिमग्रन्थासंगतिश्चेत्याचार्याः, तन्न । नपुंसकलिङ्गग्रामणीशब्दस्य तृतीयादिविभक्त्युत्पत्त्यनन्तरं पुंवद्भावविषयतायास्सत्त्वेन प्रकल्प्य चापवादविषयमिति न्यायेनान्तरङ्गस्यापि ह्रस्वस्य पूर्वमप्रवृत्तिरिति तद्भाष्याशयात् । एवमिक इत्यस्याभावे तेन न्यायेन पूर्वं ह्रस्वाप्रवृत्तौ श्रीपेणेत्यस्यासिद्धिरित्यग्रिमग्रन्थाशयाच्च । प्रद्युशब्दे तु ह्रस्वप्रवृत्तिमन्तरेगन्तत्वाभावेनापवादविषयताया अभावान्न तेन न्यायेन ह्रस्वाप्रवृत्तिर्वक्तुं शक्या । एवं च तत्र ह्रस्वे कृते प्राप्तपुंवत्त्वव्यावृत्त्यर्थमपि तद्विशेषणमावश्यकमिति बोध्यम् । ननु फले लुबिति सूत्रस्वरसात्फलवाचिनः पीलुशब्दस्य पीलुफलत्वं प्रवृत्तिनिमित्तमिति वक्तव्यम् । तस्य च पीलुत्वघटितत्वाद्विशिष्टवृत्तिप्रवृत्तिनिमित्ततायास्तद्घटके पीलुत्वेऽपि सत्त्वात्फलवाचकपीलुशब्देऽतिप्रसङ्ग उक्तविवक्षयाऽपि न निरस्त इत्याशयेनाह । **समानार्थश्चेति** । अत्रार्थः प्रवृत्तिनिमित्तरूपः । यथा पीलुत्वं पुंस्त्वसमानाधिकरणं, न तथा फलवाचिनि नपुंसकत्वसमानाधिकरणमिति भावः । तुल्ये प्रवृत्तिनिमित्त इत्यत्र तौल्यं स्वरूपतस्संसर्गतश्च ग्राह्यम् । समनार्थश्चेत्युपरञ्जकतयेति वदन्नाचार्योऽपि साक्षादसाक्षाद्भावकृतविशेषमेवाभिप्रैतीति बोध्यम् । **अनुवर्तत इति** । अत्राचीत्यनुवृत्तेः फलं तु ग्रामण्यादिशब्दानां भ्यामादौ पुंवत्त्वव्यावृत्तिः । तत्त्वे वा ह्रस्वाप्रवृत्त्या ग्रामणीभ्यामिति स्यादिति बोध्यम् । **त इति** । इक इति नपुंसकस्य चेत्यर्थः । **अर्थादिति** । पुंवदित्यनेनान्वयानुरोधादित्यर्थः ।

**किम्। श्रीपेण। टादौ किम्। आनादिनी। अयश्च ह्रस्वनुमोरभावाति-देशः, क्लीबत्वविशिष्टार्थवाचकस्य पुंस्त्वविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्यप्रवृत्तेरित्यन्यत्र विस्तरः ॥**

**अस्थिदधि। नकारादकार उच्चारणार्थः। अनङ उदात्तस्यो-च्चारणेन सिद्धावुदात्तग्रहणम् 'असति यत्ने उदात्तादिशब्दैरनुपात्तो गुणोऽविवक्षितः' इति ज्ञापनार्थम्। त्रिचतुरोरिति सूत्रे तिसृचत-स्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये आद्युदात्तनिपातनं विवक्षा-**

---

**श्रीपेणेति।** इक इत्यस्याभावे प्रकल्प्य चापवादविषयमिति न्यायेनान्त-रङ्गस्यापि ह्रस्वस्य पूर्वमप्रवृत्तौ तदसिद्धिरिति भावः। ननु प्राधान्यात्कार्याति-देशे प्रकृतस्य नुम एवाभावोऽनेनातिदिश्येतेत्यत आह। **ह्रस्वनुमोरभावा-तिदेश इति।** तल्लाभप्रकारमाह। **क्लीबत्वविशिष्टेत्यादिना। रूपाति-देश इति।** यद्यपि भाष्ये 'अर्थातिदेशात्सिद्ध'मित्यादिनाऽर्थातिदेश उक्तः, तथाप्यर्थस्याजादितृतीयादिविभक्तिपरत्वासंभवादर्थविशिष्टशब्दरूपातिदेशादि-त्येव तस्याप्यर्थो वाच्य इत्याशयः। **अन्यत्र** = उद्योते ॥

ननु यद्युदात्तादिशब्दैरनुपात्तस्य गुणस्याविवक्षा ज्ञाप्यते, तदा चतस्रः पश्येत्यत्र चतुरश्शसीत्यस्याप्रवृत्तिसिद्ध्यर्थं चतसर्याद्युदात्तनिपातनं करिष्यते। स च निपातनस्वरः चतुरश्शसीत्यस्य बाधको भविष्यतीति भाष्योक्तमसङ्गतं स्यात्। तत्रापि गुणस्योदात्तादिशब्दैरनुपादानेनाविवक्षितत्वादत आह। **असति यत्न इति।** सति तु यत्ने उदात्तादिशब्दैरनुपात्तोऽपि विवक्ष्यत एवेति भावः। चतसरि विवक्षाप्रयोजकं यत्नविशेषं दर्शयति। **द्वन्द्वप्रयुक्त इति।** यद्यपि चतुश्शब्दस्य त्रस्संख्याया इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणमुपपन्नमेव, तथापि प्रकृते तस्य द्वन्द्वसमासघटक-त्वेन तत्प्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थमिति भावः।

र्थम्। निपातनं नामान्यादृशो प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्। वधादेशोऽपि हन्त्यनुरूपेऽन्तोदात्तेऽनुदात्ते वोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम्। तदुक्तमसति यत्न इति। परमास्थिशब्दादावन्तोदात्ते उदात्तगुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम्। उदात्तत्वफलं दध्नेत्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं, दधनीत्यादौ श्रवणं च। ज्ञापनफलन्तु तृन्तृजन्तानां भिन्नस्वरकान्तानाम् ऋदुशनेत्यनेन तत्स्वरकानङ्सिद्धिरिति दिक्। तदन्तेति। आङ्गत्वादिति भावः। अत्रापि नपुंसकस्येति संबद्ध्यते। तेन धाञ 'आदृगमहन' इति किप्रत्यये दधिने-

---

तदेतद्ध्वनयन्नाह। निपातनं नामेति। अन्यत्रापि तद्विशेषणस्य फलमाह। वधादेशोऽपीति। अन्तोदात्तेऽनुदात्ते वेति। स्थानिनो हनित्यस्य धातुस्वरेणान्तोदात्तत्वरूपेण साधुत्वबोधनादनुनासिकलोपार्थमनुदात्तोपदेशत्वप्रतिज्ञानाच्च तदनुरूपेऽन्तोदात्ते सर्वानुदात्ते वोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थमिति भावः। नन्वेवमस्थ्यादीनां नब्विषयस्यानिसन्तस्येति फिट्सूत्रेणाद्युदात्ततयाऽन्त्यस्यानुदात्तत्वात्तदादेशस्यानङः स्थान्यनुरूपे अनुदात्त एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थं भविष्यतीति न ज्ञापनोत्तरमप्युदात्तग्रहणस्य चारितार्थ्यसंभव इत्यत आह। परमास्थिशब्दादाविति। अन्तोदात्त इति। समासस्वरेणेति भावः। नब्विषयस्येति त्वखण्डप्रातिपदिकविषयं, ज्ञापनपरभाष्यप्रामाण्यादित्याशयः। उदात्तनिवृत्तिस्वरेण=अनुदात्तस्य च यत्रोदात्तलोप इति सूत्रविहितेन। भिन्नस्वरकान्तानामिति। ञ्नित्यादिर्नित्यमित्यनेन तृन्नन्तानामाद्युदात्तत्वाच्चित इति सूत्रेण तृजन्तानामन्तोदात्तत्वाच्चेति भावः। तत्स्वरकेति। भिन्नस्वरकेत्यर्थः। उदात्तस्वरकेत्यर्थ इति मिश्राणां व्याख्यानं तु प्रामादिकम्। ऋदुशनेत्यत्रानङ् सावित्यतोऽनङोऽनुवृत्त्या तत्र

त्यादौ न। एतच्च गृह्यमाणस्यैव विशेषणम्। तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम्। सुधियेति शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात् पुंवत्। प्रधीशब्दे प्रकृष्टज्ञानवत्त्वमेकं तत्। मध्विति। मकरन्द–मद्य–माक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम्। मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न। स च 'माध्वीकं मधु न द्वयोः' इत्यमरेणोक्तः। भाष्ये मधोस्तृप्ता इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु 'माध्वीर्गावो भवन्तु नः' इति लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक्। स्नुवेति। 'मांस्पृत्स्नूनां पदादिषूपसंख्यानम्' इति वार्त्तिकेनेति भावः। पूर्वविप्रतिषेधेनेति। न च नित्यत्वादेव नुम्सिद्धः, किं पूर्वविप्रतिषेधेनेति वाच्यम्।

---

गुणस्योदात्तादिशब्दैरनुपात्तत्वेनाविवक्षितत्वात्स्थान्यनुरोधेनैव तत्प्रवृत्तेः। गृह्यमाणस्यैवेति। श्रुतानुमितयोरिति न्यायेनेति भावः। पुन्नपुंसकयोस्सत्त्वादिति। 'मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः। अर्धर्चादिगणे पठात्पुन्नपुंसकयोर्मधु' इत्यभियुक्तोक्तेरिति भावः। ननु यदि मकरन्दादिवाचकस्योभयलिङ्गत्वं, तदा मधोस्तृप्ता इत्यस्य विनापि व्यत्ययमुपपत्तौ तस्य लिङ्गव्यत्ययोदाहरणत्वं भाष्यकृतामसङ्गतमत आह। भाष्ये इति। लिङ्गसिद्धेति। गाव इति विशेष्यभूतचिह्नसिद्धेत्यर्थः। गाव इति विशेष्येण मधुशब्दस्य क्षीरवाचित्वमस्तीत्यनुमीयत इति भावः। यद्यप्यनुपदोक्तमृद्वीकाविकारवाचिनपुंसकमधुशब्दाभिप्रायकत्वमपि तस्य वक्तुं शक्यम्, तथापि तादृशार्थस्य तत्राविवक्षितत्वादेवमुक्तमिति बोध्यम्। नित्यत्वादेवेति। तृज्वद्भावे कृतेऽकृते च नुमः प्राप्तेर्नुम्नित्यः। नुमोऽङ्गभक्तत्वेन तेन व्यवधानात्तृज्वत्त्वस्य नुमुत्तरमप्राप्त्या न तस्य नित्यत्वमित्याशयः॥

यत्त्विदं चिन्त्यम्। तृज्नुटोर्विप्रतिषेधोपपत्तयेऽवश्याश्रयणीयेन तृज्वत्त्व-

**तदन्ते नुमि कृतेऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन यदागमा इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात् सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेन तृज्वत्त्वप्राप्तेः । सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम् । नन्वयं क्रुशक्रोष्टुने इत्यस्यैव**

---

स्युत्तरकालिकसन्निपातपरिभाषाप्रवृत्तिप्रयुक्तानित्यत्वेनैव पूर्वविप्रतिषेधोपपत्तेरित्याचार्यास्तन्न । तत्राजादितृतीयादिविभक्त्यानन्तर्यं निमित्तीकृत्य जायमानस्य तृज्वद्भावस्य तद्विघातकनुटं प्रति निमित्तत्वायोगेन तदुत्तरं नुटोऽप्राप्त्या तस्यानित्यत्वेऽप्यत्र सन्निपातपरिभाषाविषयत्वाभावेन नुमोनित्यत्वस्य सुवचत्वात् ॥

तृज्वत्त्वस्यापि नित्यत्वमुपपादयति । **तदन्त इति** । क्रोष्टुशब्दान्त इत्यर्थः । **नुमि कृतेऽपीति** । अस्य तृज्वत्त्वप्राप्तेरित्यनेनान्वयः । तत्र हेतुमाह । **अङ्गाधिकार इति** । **तद्ग्रहणेनेति** । क्रोष्टुशब्दान्ताङ्गग्रहणेनेत्यर्थः । क्रोष्टुग्रहणेनेति मिश्राणां व्याख्यानं तु न युक्तम् । नुमस्तदन्तभक्तत्वात् । क्रोष्टुशब्दमात्रस्य क्लीबत्वाभावात् । नन्वेवमपि निर्दिश्यमानपरिभाषाप्रवृत्त्या निर्दिश्यमानस्य क्रोष्टुशब्दस्यैव सर्वनामस्थाने तृज्वत्त्वस्य न्याय्यतया तस्य च नुमा व्यवधानान्न तत्प्राप्तिरत आह । **षष्ठीनिर्देशाभावादिति** । सूत्रे स्थानषष्ठ्यन्तपदबोध्यस्यैव निर्दिश्यमानत्वमिति प्रकृते न तत्परिभाषाप्रवृत्तिरिति भावः । न च तृज्वत्क्रोष्टुरित्यत्र निर्दिश्यमानस्येति परिभाषाया अप्रवृत्तौ परमक्रोष्ट्रेत्यादावङ्गस्य तृजन्ततदादिरूपापत्तिरिति वाच्यम् । अनुत्तरपदस्येति ज्ञापकेन क्वचित्तदादिविधेरप्रवृत्त्या स्थानेऽन्तरतम इति परिभाषया परमक्रोष्टुशब्दस्य स्थाने परमक्रोष्टृ इति तृजन्तादेशस्यैव प्रवृत्त्या दोषाभावात् । नन्वेवं पूर्वविप्रतिषेधेन नुमि कृतेऽपि तृज्वत्त्वं कुतो नेत्यत आह । **सकृद्गतीति** । अन्यथा पूर्वविप्रतिषेधारम्भो विफल एव स्यादिति भावः । **अयमिति** ।

भाष्ये उदाहरणात्तृतीयादिष्वचीत्येतद्विषयक एव। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे बीजानापत्तिरिति चेन्न। उदाहरणस्य संकोचकत्वे मानाभावात्। तदुक्तं 'न चोदाहरणमादरणीयम्' इति। उदाहृतातिरिक्तोदाहरणाभाव इत्येवंपरतया नादरणीयमिति तदर्थ इत्याहुः। सुल्वेति। अत्र शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तम्। पुंवत्त्वे ह्रस्वाभावेनाघित्वान्नाभावो न। नुमभावाच्च गुण्। धातृ इति। अनङ् न, नलुमतेति निषेधात्। धारणादिकर्तृत्वं चास्यैकं प्रवृत्तिनिमित्तम्। हे धातरिति। 'ह्रस्वस्य गुणः' इति गुणः॥

एच इक्। आदेश इति कर्मणि घञ्। ह्रस्वपदेन कर्मधारयः। निर्द्धारणे सप्तमी, सौत्रमेकवचनं, तदाह—आदिश्येत्यादि। मध्ये

---

पूर्वविप्रतिषेध इत्यर्थः। अन्यथा=तृज्वद्भावमात्रविषयकत्वे। सङ्कोचकत्व इति। पूर्वविप्रतिषेधस्य विभाषा तृतीयादिष्वचीति सूत्रमात्रविषयकत्व इत्यर्थः। ह्रस्वाभावेनेति। विभक्तिनिरपेक्षत्वेनान्तरङ्गस्यापि ह्रस्वस्य प्रकल्प्य चापवाद-विषयमिति न्यायेन पूर्वमप्रवृत्तिरित्याशयः॥

ननु कारक इति सूत्रस्थभाष्यप्रामाण्यान्निर्धारणविषये तिरोहितावयवभेदसमुदायविवक्षयाप्येकवचनस्यासाधुताया वक्ष्यमाणत्वात्कथमेकवचनोपपत्तिरत आह। सौत्रमेकवचनमिति। ननु यद्ययं स्वतन्त्रो विधिः स्यात्तदा यथासंख्यशास्त्रप्रवृत्त्या ऋलवर्णयोरपि विधानं स्यात्। न चैवं सूत्रे ह्रस्वादेश इति व्यर्थमिति वाच्यम्। यत्र ह्रस्वो विधीयते, तत्रैवास्योपस्थानं यथा स्यात्। प्लुतादिविधावुपस्थानं माभूदिति विषयविशेषनिर्देशार्थं तस्यावश्यकत्वात्। किं च ह्रस्वादेशविधायकेष्वस्योपस्थित्या वाक्यभेदेन ह्रस्वबाधकतयैचां स्थाने इको विधीयमाना अन्तरतमा दीर्घा एव स्युः। न च भाव्यमानत्वेन सवर्णाग्रहणा-

इत्यपपाठः। तद्योगे षष्ठ्या एवौचित्यात्। एचां पूर्वभागोऽवर्णसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः। तत्रोभयान्तरतमह्रस्वाभावात्पर्यायेणावर्णादेः प्राप्तावर्णाभावायेदं, तदाह—इगेवेति । यथाप्राप्तमेव नियम्यत इति न यथासंख्यम्। ह्रस्व एच्तु नास्त्येव। 'एओङ्' इत्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये। .... .... ....

---

नायं दोष इति वाच्यम्। भाष्यमानेनाप्युकारेण सवर्णग्रहणस्य दृष्टत्वात्। न च सत्यपि दीर्घे पुनर्ह्रस्वप्रवृत्त्या न दोष इति वाच्यम्। ह्रस्वस्य बाधितत्वेन दीर्घोत्तरं पुनस्तदप्रवृत्तेरित्यत आह। यथाप्राप्तमेवेति। शास्त्रान्तरप्राप्तमेवेत्यर्थः। नियम्यत इति॥

अयं भावः। अस्य परिभाषाप्रकरणपठितत्वेन परिभाषात्वस्य न्याय्यत्वाद्विषयविशेषनिर्देशार्थं ह्रस्व इत्येव वक्तव्ये आदेशग्रहणाच्च विध्यन्तरशेषतयैव लक्ष्यसंस्कारकत्वस्य वक्तव्यतया ह्रस्वादेशविधायकेष्वेव इगित्यस्योपस्थितिरनेन बोध्यते। तथा च ह्रस्वो नपुंसक इत्यादौ प्रथमं ह्रस्वपदश्रुत्याऽचश्चेति परिभाषोपस्थापनादजन्तस्य प्रातिपदिकस्य ह्रस्वो भवतीति वाक्यार्थस्संपद्यते। अक्ष्वेचामप्यन्तर्भावात्तेषां समुदायान्तरतमस्य ह्रस्वस्याभावेनावयवान्तरतमे इगनिग्लक्षणे ह्रस्वेऽनेन प्राप्ते ततो वाक्यान्तरेणैजन्तस्य त्विग्घ्रस्वो भवतीत्यनया परिभाषया नियम्यते। एवं च सति परिभाषाद्वयस्याप्यनुग्रहो भवति। यथासंख्यस्य च न प्रसङ्गः। वाक्यान्तरेण प्राप्तस्यैवानेन नियमादेचां स्थाने ऋऌवर्णयोः कथं चिदपि प्राप्त्यभावादिति॥

एच इग्वचनं सवर्णाकारनिवृत्त्यर्थमिति वार्तिककृदुक्तफलद्वये आद्यं फलमस्य नेति सूचयति। ह्रस्व एच्तु नास्त्येवेति। तत्र हेतुमाह। दीर्घनिर्देशादिति। यदि हि तौ स्यातां तदा अइउणित्यादौ ह्रस्वोपदेशस्य शैलीसिद्धतयाऽत्रापि तावेवोपदिशेदिति भावः। यद्यपि सुजाते ए अश्व सूनृत

न चार्द्धमात्रावर्णस्याद्ध्यर्द्धमात्रेवर्णोवर्णयोरित्युत्तरभूयस्त्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम्। अद्ध्यर्द्धमात्रावर्णस्यार्द्धमात्रेवर्णोवर्णयोरित्यस्यापि पक्षस्य 'प्लुतावैच' इति सूत्रे विनिगमनाविरहेण भाष्ये उक्ततया समप्रविभागपक्षस्यैव भाष्यकृत्संमतत्वादित्याहुः॥

प्ररीणामिति। न च 'रायो हलि' इति विषयसप्तमीति प्रागेवाऽऽत्वम्। निर्दिष्टपरिभाषाबाधे मानाभावात्। आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च। केचितु नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न। .... .... .... ....

---

इत्यादौ तौ दृष्टौ, तथापि सात्यमुग्रिराणायणीयैर्विशिष्य तयोर्विधानात्तच्छाखामात्रविषयत्वमेव तयोरिति स्पष्टं भाष्ये। द्वितीयस्यापि फलस्यैचोश्चोत्तरभूयस्त्वादित्यादिना वार्तिककृता निराकृतत्वात्तदनुसारेण शङ्कते। न चेति। भाष्यकृत्संमतत्वादिति। यथोत्तरं मुनीनां प्रामाण्यात्समप्रविभागपक्षस्यैव न्याय्यतयाऽकारनिवृत्त्यर्थं सूत्रमावश्यकमेवेति भावः। ऐचोश्चोत्तरभूयस्त्वादिति प्रकृतसूत्रप्रत्याख्यानपरं वार्तिकन्तु सिद्धं 'त्विदुतोर्दीर्घवचनादि'ति प्लुतावैच इदुतौविति सूत्रस्थवार्तिकेन सह विरुद्धत्वादुपेक्ष्यमिति तत्रैव भाष्ये स्पष्टम्। प्रागेवात्वमिति। एवं च तदुत्तरं ह्रस्वान्तत्वाभावान्नुटोऽप्रवृत्त्या नुड्घटितं रूपमसङ्गतमित्याशयः। मानाभावादिति। अत्र शास्त्रेऽसति बाधके प्रायेणौपश्लेषिकाधिकरणसप्तम्यन्तग्रहणस्यैव निर्दिष्टपरिभाषाबलाल्लाभेनात्र तदनाश्रयणे न मानमित्याशयः। तुष्यतु दुर्जन इति न्यायेन विषयसप्तमीत्वाश्रयणेऽपि न नुटः प्रागात्वमित्याह। आत्वे कृते नुडनापत्त्येति। तद्विषय इति। नुड्विषय इत्यर्थः। विषय एव नेति। नामीत्यारम्भसामर्थ्यात्सामान्यतो

नामीति दीर्घस्तु 'सुपि च' इति दीर्घं नित्यत्वाद् बाधत इति माधवाशयमाहुः । ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे 'ह्रस्वस्य पिति' इति तुङ्न । समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमात्रा-

---

नुड्विषये सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनादिति भावः । नन्वेवं रामाणामित्यादौ नामीति दीर्घ इति ग्रन्थासङ्गतिः । परत्वात्सुपि चेत्यस्य न्याय्यत्वादत आह । नामीति दीर्घस्त्विवति । माधवाशयमाहुरिति । अत्रारुचिबीजन्तु श्वाम्नलोप इति सूत्रस्थभाष्यासङ्गतिः । तत्र हि श्वश्शमकारोच्चारणाभावे नाम्नलोप इति न्यासे यज्ञानामित्यत्र दीर्घनलोपयोः प्राप्तौ परत्वान्नलोप इत्युक्तम् । सामान्यतो नुड्विषये सन्निपातपरिभाषाया अप्रवृत्तिरिति ज्ञापने तु ततोऽपि परत्वात्सुपि चेति दीर्घे तदसङ्गतिरिति । तस्मान्नामीति दीर्घे कर्तव्य एव नुड्विषये सन्निपातपरिभाषाया अनित्यत्वं नान्यत्रेति बोध्यम् । नपुंसकह्रस्वविषये प्रसक्तातिप्रसङ्गवारणस्य प्रक्रान्तत्वात्तत्प्रसङ्गेनान्यमपि तद्विषये प्रसक्तमतिप्रसङ्गं वारयति । ग्रामणि कुलमिति । पदद्वयमिदम् । ग्रामणीशब्दस्य नपुंसकत्वद्योतनाय कुलशब्दप्रयोगः । किंच नपुंसकलिङ्गग्रामणीशब्दस्य कुलशब्देन समासे उत्तरपदनिमित्तकं ह्रस्वं बाधित्वाऽन्तरङ्गत्वान्नपुंसकह्रस्व इत्येतदपि सङ्ग्रहीतुमुभयसाधारण्यसंपादनार्थापि तदुपादानमित्यपि बोध्यम् । तदाह । नपुंसकह्रस्वत्व इति । समुदितप्रातिपदिकापेक्षेति । प्रातिपदिकरूपसमुदायाश्रयेत्यर्थः । वर्णमात्राश्रय इति । ननु कृतः प्रत्ययत्वात्तेन यस्माद्विहितस्तदादेरित्यस्योपस्थित्या सौत्रह्रस्वग्रहणस्य तद्विशेषणत्वेन तदन्तविधौ तुगपि समुदायापेक्ष एवेति चेन्न । परिभाषाणां फलविशेषसत्त्व एव प्रवृत्त्या प्रकृते तदाद्यंशोपस्थितावनुपस्थितौ च फलविशेषाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्तिरित्याशयात् । किंच तदुपस्थितावपि कृन्मेजन्त इति सूत्रस्थभाष्यप्रामाण्याद्विशेषणत्वमेव तस्येत्यदोषः । तत्र हि सन्निपातपरिभाषाफलनिरूपणावसरे 'ह्रस्वत्वं तुग्विधेः, ग्रामणि कुल-

मित्युक्त्वा नैतदस्ति प्रयोजनं, बहिरङ्गं ह्रस्वत्वमन्तरङ्गस्तुगित्यन्तरङ्गपरिभाषामाश्रित्य तत्प्रयोजनं निराकृतम्। यदि तुग्विधौ तदाद्यंशोपस्थित्या तदन्तविधिः स्यात्तदा तस्य प्रकृतिप्रत्ययोभयसापेक्षत्वेन ह्रस्वापेक्षयाऽन्तरङ्गत्वाभावात्तदसङ्गतिः स्पष्टैव। न च तद्भाष्यमिको ह्रस्वो ङ्य इति ह्रस्वस्य तुगपेक्षया बहिरङ्गत्वप्रतिपादनपरमिति तुग्विधौ तदाद्यंशोपस्थितावपि न तद्विरोधः। पदद्वयापेक्षह्रस्वापेक्षया तुको घटकनिमित्तत्वेनान्तरङ्गत्वस्य सुवचत्वादिति वाच्यम्। सामान्यतः प्रवृत्तस्य तद्भाष्यस्य तथा सङ्कोचे मानाभावात्। नपुंसकलिङ्गग्रामणिशब्दघटितसमासे व्यस्ते च बहिरङ्गपरिभाषया तुको वारयितुमशक्यतया नैतदस्ति प्रयोजनमित्यादिना सामान्यतो ग्रामणिकुलमित्यस्य सन्निपातपरिभाषाप्रयोजनत्वनिराकरणस्यासंगतत्वाच्च। अत एव कैयटे 'यदपि ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वं, तदप्यर्थाश्रयत्वाद्बहिरङ्गमिति नपुंसकह्रस्वाभिप्रायकत्वमपि तस्योक्तमित्यत्रधेयम्। एतेन तुग्विधौ यस्मात्प्रत्ययविधिस्तदादीत्यस्योपस्थितौ तस्यापि प्रकृतिप्रत्ययसमुदायाश्रयणाद्बहिरङ्गत्वादिदं चिन्त्यमित्याचार्योक्त, मेतच्छङ्कावारणाय समुदितप्रातिपदिकापेक्षेति प्रतीकमुपादाय पदद्वयात्मकसमुदितप्रातिपदिकापेक्षेत्यर्थः। वर्णमात्राश्रयेत्यस्य ह्रस्ववर्णमात्रं विद्यते यस्मिंस्तद्वर्णमात्रमेकपदाश्रयेत्यर्थः। यथाश्रुतन्तु न युक्तम्। प्रत्ययग्रहणे यस्मात्प्रत्ययविधिस्तदादीत्यस्योपस्थितेरिति श्रीधरोक्तं चापास्तम्। ग्रन्थकृता नपुंसकह्रस्वस्य बहिरङ्गताया उक्तत्वेन तस्य पदद्वयापेक्षत्वाभावात्। एवं कृन्मेजन्त इति सूत्रस्थभाष्योक्तदिशा तुकं निराकृत्य वस्तुतोऽत्र बहिरङ्गपरिभाषया तुग्वारणमयुक्तम्। परनिमित्तकत्वेन पित्त्वकृत्त्वज्ञानसापेक्षत्वेन च तुकोऽपि ह्रस्वसमानत्वात्। नाजानन्तर्य इति निषेधाच्च। कृन्मेजन्त इति सूत्रस्थं भाष्यं तु नाजानन्तर्य इति निषेधानाश्रयणेन प्रवृत्तत्वादेकदेशिन एवेति सूचयन्नस्य वार्तिककृदुक्तं सन्निपातपरिभाषाफलत्वमेव युक्तमित्याशयेनाह।

श्रयेऽन्तरङ्गे तुकि असिद्धत्वात् । ये तु 'षत्वतुकोरसिद्धः' इति वचनात्, 'न लोप' इति सूत्रे कृतितुग्ग्रहणाच्च 'ह्रस्वस्य पिति' इति सूत्रेऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति, तेषामुपजीव्यविरोधान्न तुक् । अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः । न चैवं सन्निपातपरिभाषा व्यर्था । तस्या अप्युपजीव्यविरोधमूलकत्वात् । किं च तस्या अपि स एवार्थः । अत एव सन्निपातपरिभाषादोषनिरूपणावसरे वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इत्युक्तम् ।

---

ये त्विति । अप्रवृत्तिमिति । नाजानन्तर्य इति निषेधादनित्यत्वाच्चेति भावः । अत एव प्रकृत्येत्यत्र तुक् सिद्धः । अन्यथा बहिरङ्गस्य ल्यपोऽसिद्धत्वान्न स्यादिति बोध्यम् । परिभाषा व्यर्थेति । शतानीत्यादावप्युपजीव्यविरोधाल्लुकोऽप्रवृत्तेरिति भावः । उपजीव्यविरोधमूलकत्वादिति । एवं चोपजीव्यविरोधस्यान्याय्यत्वमिति न्यायमूलिकैवैषा परिभाषा, न त्वपूर्वेति न तेनास्य वैयर्थ्यशङ्का युक्तेत्याशयः । ननु पौर्वापर्यलक्षणसन्निपातमात्रविषयकत्वादस्याः परिभाषायाः कथं तन्मूलकत्वमत आह । किंचेति । तस्या अपि=सन्निपातपरिभाषाया अपि । स एवार्थ इति । निमित्तनिमित्तिनोस्संबन्धवद्विशेषणविशेष्ययोस्संबन्धोऽप्यत्र सन्निपातशब्देन गृह्यते । एवं चोपजीव्यविरोधन्यायादस्या अर्थतोऽपि भेदाभावेनोभयोरैक्यमेवेत्याशयः । अत एवेति । उभयोरेकार्थत्वादेवेत्यर्थः । इत्युक्तमिति । यद्यत्र सन्निपातपदेन पौर्वापर्यलक्षणो निमित्तनिमित्तिनोस्संबन्ध एव गृह्यते, तदा दाक्षिरित्यत्र प्रत्ययस्य तादृशसन्निपातनिमित्तकत्वाभावेन परिभाषाविषयत्वस्यैवाभावात्परिभाषादोषनिरूपणावसरे वर्णाश्रय इत्याद्युक्तिरसङ्गता स्यादतोऽत्र विशेषणविशेष्ययोस्संबन्धोऽपि सन्निपातपदेन ग्राह्य इति भावः । सन्निपातपदेन सर्वविधसन्निपातग्रहणेऽग्रिमभाष्य-

न च 'न प्रत्ययः सन्निपातलक्षणः, अङ्गसञ्ज्ञा तल्लोपनिमित्तं स्यात्' इत्यग्रिमभाष्यविरोध इति वाच्यम्। तस्यैकदेश्युक्तित्वात्। अन्यथा शैव इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम्। ग्रामणिपुत्रो ग्रामणि कुलमित्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि तुग्वारणं सिद्ध्यतीत्याशयेन 'कृन्मेजन्तः' इति सूत्रे ह्रस्वस्य पितीत्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम्॥

॥ इत्यजन्ता नपुंसकलिङ्गाः॥

---

विरोधमाशङ्कते। न चेति। तस्यैकदेश्युक्तित्वं साधयति। अन्यथेति। तस्य सिद्धान्त्युक्तित्व इत्यर्थः। सेति। अङ्गसंज्ञेत्यर्थः। लोपनिमित्तं न स्यादिति। अयं भावः। वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादिति कात्यायनवचनस्य प्रत्ययसन्निपातप्रयुक्ताङ्गसंज्ञा प्रकृतिसंबन्धिवर्णविनाशकं यस्येति लोपं प्रति निमित्तं न स्यादित्याशयकत्वे शैवो गार्ग्य इत्यादौ समुदायाश्रयप्रत्ययविषयेऽपि तद्दोषस्य संभवेन प्रत्यये वर्णाश्रयत्वविशेषणमनर्थकं स्यात्। अतस्तादृशार्थापरिज्ञानेन प्रवृत्तत्वात्तद्भाष्यमेकदेश्युक्तिरिति। ननु तुग्विषये बहिरङ्गपरिभाषाया अप्रवृत्तौ कृन्मेजन्त इति सूत्रस्थभाष्यविरोधः। तत्र ग्रामणि कुलमित्यादौ बहिरङ्गपरिभाषया तुको वारितत्वादित्याशङ्क्याह। ग्रामणिपुत्र इति। एकदेशिन इति। तुग्विधावुक्तरीत्या बहिरङ्गपरिभाषायाः प्रवर्तयितुमशक्यत्वाभासौ सिद्धान्त्युक्तिरिति भावः॥

॥ इत्यजन्ता नपुंसकलिङ्गाः॥

## ॥ अथ हलन्तपुंलिङ्गप्रकरणम् ॥

**हो ढः । 'झलो झलि' इत्यतो झलीति, पदस्येति, स्कोरित्यतोऽन्त इत्यनुवर्त्तते । झलि परे पूर्वस्य पदान्ते विद्यमानस्य हस्येत्यर्थः ।**

---

झलीति यथा औपश्लेषिकाधारे सप्तमी, पदान्त इत्यपि तथा स्यादिति भ्रमवारणायाह । पदान्ते विद्यमानस्येति । अत्र प्रकरणे उद्देश्यस्य पदान्तवृत्तित्वं तादात्म्येनैव ग्राह्यम् । तेन पदचरमावयवस्य हस्येति फलितम् । अत एव चजोः कुघिण्ण्यतोः, न्यङ्क्वादीनां चेत्यादिभिः कुत्वविधानं सार्थकम् । अन्यथा मार्ग्यः, न्यङ्कुरित्यादौ पदसंस्कारपक्षे चोः कुरित्यनेनैव कुत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव । एवं झलां जश् झशीति सूत्रमप्यत एव सार्थकम्, अन्यथा दोग्धा दोग्धुमित्यादावपि झलां जशोऽन्त इत्येव सिद्धे तद्वैयर्थं स्यात् । एतेन हस्य पदविशेषणत्वं स्वीकृत्य हान्तं यत्पदं तदवयवस्य निर्दिश्यमानस्येति वक्तुं युक्तम् । यद्वा अन्ते इत्यस्य षष्ठ्यन्तत्वं प्रकल्प्य पदान्तस्य हस्येति व्याख्यानमुचितम् । यथाश्रुतं तु न सम्यक् । लिहावित्यादौ हाविति समुदायस्य पदान्तत्वेन तत्र विद्यमानस्य हस्य ढत्वापत्तेरिति केषांचिदुक्तिः परास्ता । हाविति समुदायस्य पदचरमावयवत्वेऽपि तत्र हकारस्य तादात्म्येनावर्तनात् । हस्य पदविशेषणत्वेनान्वये झलीत्यस्यापि तदेकवाक्यतयैवान्वयाद्धान्तं यत्पदं तदवयवस्य हस्य ढो भवति झलीत्यर्थापत्त्या लिड्भ्यामित्यादावेव स्यान्न तु लेढीत्यादौ । अन्तग्रहणानुवृत्तौ तु पूर्वत्र चशब्दाद्वाक्यभेदस्य स्पष्टतयाऽत्राप्यर्थाधिकारात्तथेति न दोषः । अन्तशब्दस्य षष्ठ्यन्तत्वेन विपरिणामेऽप्युक्तातिप्रसङ्गो दुर्वारः । बहुषु प्रदेशेषु तस्य षष्ठ्यन्तत्वेन विपरिणामे गौरवं चेत्यवधेयम् । यत्तूक्तदोषवारणायान्तशब्दस्य प्रकृतेऽवसानार्थकत्वं स्वीकृत्य वावसान इत्यादाविव पदावसाने विद्यमानस्य हस्येत्यर्थकरणेन लिहावित्यादौ ढत्ववारणं

डस्तु न विहितः। झषन्तत्वाभावेन भष्भावाप्राप्त्या ध्रुडित्याद्य-
सिद्धेः॥

दादेर्धा। दादिग्रहणमौपदेशिकदादित्ववल्लक्षकं, व्याख्याना-
दित्यभिप्रेत्य फलितार्थमाह—उपदेश इति। एतच्च प्रकृतसूत्रे भाष्ये
ध्वनितम्। तत्र हि घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोतीत्याशङ्क्यापवाद-
त्वेन समाधाय, 'अथवा एवं वक्ष्यामि—होढोऽदादेरिति। ततो
धातोरिति, दादेरिति वर्त्तते, नेति निवृत्तम्' इत्युक्तम्। द्रुहेस्तु
'वा द्रुह' इत्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति तदाशयः।

---

बोध्यमिति वाराणसेयाः। तन्न। अवयववाचिनोऽन्तशब्दस्यावसानलक्षकताया
अयुक्तत्वात्। वर्णोच्चारणाभावस्यैवावसानसंज्ञात्वेन तद्वृत्तित्वस्य हकारेऽसंभ-
वात्। अभावस्यापि बौद्धं पौर्वापर्यमाश्रित्य वावसान इत्यादाववसाने परत
इत्यर्थस्यैव ग्रन्थकृतोक्तत्वेन, वावसान इत्यादाविवेति दृष्टान्तस्याप्यसंगतत्वाच्च।
तद्वदिहाप्याश्रयणे वाक्यान्तपदे ढत्वसिद्धावपि मध्यवर्तिषु वाक्यसंस्कारपक्षे
हरिर्गच्छतीत्यादौ विसर्गस्येव ढत्वस्यानापत्तेः। एतादृशेषु सर्वत्र पदसंस्कार
एवेति वक्तुमशक्यत्वाच्च। तावतापि समासघटकपदेषु दोषस्य दुर्वारत्वाच्च।
डस्त्विति। प्रतिपत्तिलाघवायेति शेषः। असिद्धेरिति। वा द्रुहेत्यनेन
घत्वाभावेऽनेन डकारादेशे झषन्तत्वाभावेन भष्भावाप्राप्तेरिति भावः॥

एतच्चेति। दादिपदस्यौपदेशिकदादित्ववल्लक्षकत्वं चेत्यर्थः। ध्वनन-
प्रकारमेव दर्शयति। तत्र हीत्यादिना। असिद्धत्वपक्षेऽपि योगविभागेन
ढत्वं वारयति। अथवेति। ननु यदि होढोऽदादेरित्युच्यते, तदा ध्रुडित्यादौ
वा द्रुहेत्यनेन घत्वाभावेऽनेन ढत्वं न स्यादत आह। द्रुहेस्त्विति। ढत्व-
स्यापीति। अपिना घत्वसंग्रहः। तत्र समुच्चयार्थो वाशब्द इति भावः।

**तत्र धातोरिति सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्दादिलक्षकम्, सामर्थ्यात्। अर्थाधिकारानुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम् । अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ । एवञ्च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादित्ववल्लक्षकतोचिता । तदनन्तरं दादेरिति वर्त्तत इति भाष्यस्योक्ताशयमजानतो घो दादेरित्युच्यते, कथमधोगिति शङ्कायाम् 'एकाच' इति सूत्रार्थमपि प्रसङ्गान्निर्णेतुं धातो-**

---

**तत्रेति** । अथवेत्यादिना भाष्यकृदुक्तेऽसिद्धत्वपक्ष इत्यर्थः । **फलान्तराभावेनेति**। अदादिधातुषु घत्वाप्रवृत्तिरेव हि तदनुवृत्तेः फलं वाच्यम्। तच्चानुवृत्त्यभावेऽपि सिद्ध्यति । तत्र घत्वस्यासिद्धत्वाड्ढत्वप्रवृत्तेरिति भावः । **सामर्थ्यादिति**। अनुवृत्तिसामर्थ्यादित्यर्थः। **निषेध्यसमर्पकेऽपीति**। अदादेरित्येतद्घटकदादिपदेऽपीत्यर्थः। एवं च पूर्वसूत्रस्यौपदेशिकदाद्यवयवभिन्नस्य ह्स्येत्यर्थः। सूत्रद्वयेऽपि दादिपदस्य तादृशार्थकत्वे फलं दर्शयति । **अत एवेति** । **सिद्धाविति** । न चैवमपि कथमत्र तयोस्सिद्धिः । उद्देशोपदेशयोरसङ्कीर्णत्वेनौपदेशिकदादित्वस्य धातुत्वस्य च सत्त्वादिति वाच्यम् । दादिपदानुवृत्तिसामर्थ्यादत्र तयोर्भेदस्यैवाङ्गीकारात् । **एवं चेति** । असिद्धत्वपक्षे उक्तरीत्या दामलिडित्यत्र तयोस्सिद्धौ चेत्यर्थः । **तदेकवाक्यतयेति** । असिद्धत्वपक्षैकवाक्यतयेत्यर्थः। **उचितेति**। अन्यथा दामलिडित्यत्र मक्षयोः फलभेदेन पक्षभेदस्यैवासंगत्यापत्तेरिति भावः। नन्वेवमधोगित्यत्राडागमोत्तरं दादित्वाभावेऽप्युपदेशे दादित्वस्य सत्त्वाद्धत्वं सिद्धमेवेति तत्र घत्वासिद्धिशङ्कापरं तदुत्तरं भाष्यमसंगतं स्यादत आह। **तदनन्तरमिति**। अजानत इत्यस्य शङ्कायामित्यत्रान्वयः। ननु शङ्काया अज्ञानतः प्रवृत्तत्वेऽप्युत्तरे उपदेशे यो दादिरित्यर्थप्रतिपादनेनैवातिप्रसङ्गवारणं युक्तम्। तथाऽकथनेन च दादिपदस्य लक्षणा न भाष्याभिमतेत्यत आह। **एकाच इति सूत्रार्थमपीति**। **निर्णेतुमिति**। इदमुपलक्षणम् ।

**रवयवो यो दादिरित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्वा दोग्धेति तु व्यपदेशिवद्भावात्सिद्धमिति भाष्ये उक्तम् । तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितम् । ....**

---

दादिपदस्य लक्षणायामधोगित्यस्यासाधारणफलत्वाभावं दर्शयितुमित्यस्यापि । एतेन लेशतोऽप्येतदर्थकत्वाभावे तन्निर्णयस्यात्रानुपयोगोऽसंगतिश्चेति शङ्का निरस्ता । इत्यर्थमुक्त्वेति । उपदेशे यो दादिरित्यर्थमुपेक्ष्य वैयधिकरण्यमुक्त्वेत्यर्थः । एवं च न तद्भाष्यविरोधोऽस्माकमिति तात्पर्यम् । लक्षणाश्रयणेऽसाधारणं फलं तु दामलिडित्यादिसिद्धिरिति बोध्यम् । ननूत्तरसूत्रार्थनिर्णयायैवात्र वैयधिकरण्यप्रतिपादनमित्यत्र किं बीजमत आह । **वैयधिकरण्यमुक्त्वेति।** गर्धबित्यादौ भष्भावायोत्तरसूत्रे वैयधिकरण्यमावश्यकमित्युक्त्वेति योजना । यथाकथं चिदप्यत्र सूत्रे धातोरवयवो यो दादिरित्यर्थस्योक्तत्वात्तादृशार्थे दोग्धेत्यादेरसिद्धिमाशङ्क्य समाधत्ते । व्यपदेशिवद्भावादिति । न केवलं मदुक्तार्थे तद्विरोधाभावः, किन्तु मदुक्तार्थसाधकमपि तद्भाष्यमित्याह । **तत्रेत्यादिना।** **इति वदतेति।** सा चावश्यमवयवयोगा षष्ठी विज्ञेया, उत्तरार्थेत्यादिनेति भावः । **तस्येति।** वैयधिकरण्यस्येत्यर्थः । इह=दादेरिति सूत्रे । **अनावश्यकत्वं सूचितमिति।** तद्बीजं त्वत्र वैयधिकरण्यान्वयाश्रयणेऽपि दामलिट् पादलिडित्यादौ घत्वाभावायावश्यिकया लक्षणयैवाधोगित्यादिसिद्धावत्र सूत्रे तदनावश्यकमिति । अन्यथा अधोगित्यादौ घत्वप्रवृत्तिरूपप्रयोजनान्तरसिद्धये इहैव तस्यावश्यकत्वेनोत्तरार्थत्वेन तस्यावश्यकत्वप्रतिपादनं निर्बीजं स्यादित्याशयः । एतेन नामधातुदामलिडादौ घत्वप्रवृत्तिरिष्टैवेत्याचार्योद्युक्तं सर्वथा भाष्यविरुद्धत्वादुपेक्ष्यमिति बोध्यम् । नच सा चावश्यमवयवयोगा षष्ठी विज्ञेयेति भाष्ये चशब्दस्योत्तरार्थेत्यनेन संबन्धे इहार्थत्वमपि तद्भाष्यांल्लभ्यत एवेति वाच्यम् । भवद्रीत्या तस्य वाक्यान्तरत्वेन चशब्दस्य तेन सह संबन्धस्य

तेन च दादेरित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः ॥ धुगित्यादि-

वक्तुमशक्यत्वात् । किन्तु तत्र चशब्दो वाक्यालङ्कार एव । उत्तरार्थेति भाष्यस्योपलक्षणत्वकथनमपि दादिपदलक्षणातोऽविशिष्टमिति बोध्यम् । किञ्चात्रापि वैयधिकरण्यस्यावश्यकत्वं यदि भाष्याभिमतं स्यात्तदाऽन्यत्रेवात्रापि नावश्यमिहैव, उत्तरार्थाऽपि साऽवश्यं विज्ञेयेत्येव वदेदित्यप्यवधेयम् । वैयधिकरण्यस्येहानावश्यकत्वसूचनेन सूचितमर्थं दर्शयति । तेनेति । उक्तार्थकत्वमिति । औपदेशिकदादित्ववदर्थकत्वमित्यर्थः ॥

यत्तु 'दादेरित्यत्र कर्मधारयः । धातोरित्यवयवषष्ठी । धातोरवयवो य आदिर्दकारस्तस्मात्परस्य हस्य घः स्यादिति वाक्यार्थः । धुगित्यत्र दात्पराव्यवहितहकारासंभवेन येन नाव्यवधानमिति न्यायेनैकव्यवायेऽपि घत्वं, दामलिडित्यत्र बहूनां व्यवायसत्त्वान्न भवति । एवमधोगित्यत्रापि न दोष इति बोध्यम् । एवं च दादेरित्यस्यावृत्तिर्लक्षणा च न कर्तव्या भवति । त्वन्मते धातोरिति व्यर्थं चेति भट्टास्तन्न । आदिभूतदात्परस्येत्यर्थे वर्णद्वयव्यवधानेन द्रुहेर्घत्वाप्राप्त्या वा द्रुहेत्यस्योभयत्रविभाषात्वप्रतिपादनपरकैयटादिग्रन्थासङ्गतेः । द्राहृ निद्राक्षये इत्यस्मात्क्विपि ध्रागित्यत्र घत्वानापत्तेश्च । धातुपदस्योत्तरार्थमावश्यकत्वेन वैयर्थ्याभावाच्च । इह किञ्चित्रपो इति न्यायेन दादिपदस्योक्तार्थलक्षकतायां तात्पर्यग्राहकतया इहार्थमपि तस्यावश्यकत्वाच्च ॥

यदपि 'अन्ये तु पूर्वत्र निषेध्यसमर्पके दादेरित्यस्यौपदेशिकदादित्ववति लक्षणायां धातोरित्युत्तरसूत्रे दादेरित्यनुवृत्तिवैयर्थ्यम् । अपवादपक्षेऽपीत्याद्यपि न । औपदेशिकदादित्ववतो धातुत्वाव्यभिचारेण धातोरित्यस्य वैयर्थ्यापत्तेः । तस्माद्दादेरित्यस्यौपदेशिकदादित्ववति लक्षणायां मानाभावः । धातोरित्युत्तरसूत्रे दादेरित्यनुवृत्तिस्त्वधोगित्यत्र पूर्वसूत्रप्राप्तढत्वनिवृत्त्यर्था । तथाहि, धातोर्घ इत्येतन्मात्रेण धुगित्यादिसिद्धौ दादेरित्यनुवृत्तिर्वैयधिकरण्येनान्वयेनादादावप्यधो-

**सिद्ध्ये गो नोक्तः। 'औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम्' इति परिभाषा तु तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन 'तरप्तमपौ घः' 'अत्वसन्तस्य' इत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी। तत्र हि भाष्ये इदमुक्तम् 'इह हि व्याकरणे सर्वेष्वेव**

---

गित्यादौ घत्वार्था। तत्सामर्थ्येन चाधोगित्यत्र न पूर्वेण ढत्वम्। धातोरिति तु दारुलिडित्यादौ घत्वाभावार्था। दामलिहमात्मन इच्छति, दामलिह्यति, ततः क्विप्, दामलिगित्यत्र, घत्वप्रवृत्तेः, इत्याहुरित्याचार्यास्तदप्ययुक्तम्। पूर्वत्र निषेध्यसमर्पकदादिपदस्य लक्षणायामर्थाधिकारस्यैव गमकत्वेनोत्तरत्र दादिपदस्यानुवृत्तिसामर्थ्याल्लक्षणाश्रयणमन्तरा पूर्वत्र तस्या वक्तुमशक्यत्वात्। दादिपदस्योक्तार्थलक्षणायामपि धातुपदसार्थक्यस्य प्रागुपपादितत्वात्। अधोगित्यत्र ढत्वनिवृत्तये दादिपदानुवृत्तेरुत्तरत्रावश्यकत्वेन लक्षणायां मानाभाव इत्यपि न युक्तम्। दादेरित्यनुवृत्तिसामर्थ्येन वैयधिकरण्यमाश्रित्याधोगित्यत्र घत्वसंपादनेऽपि दामलिट्, पादलिडित्यादौ घत्वस्य दुर्वारत्वेन तद्वारणाय तत्सामर्थ्याल्लक्षणाश्रयणस्यैव युक्तत्वात्। दामलिडित्यादौ घत्वप्रवृत्तिरिष्टैवेति तु न युक्तम्। वैयधिकरण्यस्येहानावश्यकत्वसूचकभाष्येणात्र तदप्रवृत्तेरेवेष्टत्वलाभात्। किञ्च घत्वस्यापवादत्वानाश्रयणेऽपि ढत्वदृष्ट्याऽसिद्धत्वस्वीकारेऽपि दोग्धेत्यादौ ढत्ववारणाय भगवता अथवेत्यादिपक्ष उपक्रान्तः। यदि तत्रापि पक्षे दादेरित्यनुवृत्तिसामर्थ्यमूलकवैयाधिकरण्यान्वयसामर्थ्येन घत्वस्यासिद्धत्वाभावकल्पनया वाऽपवादत्वकल्पनया वाऽधोगित्यत्र ढत्वं नेत्युच्यते, तदाऽद्यपक्षापेक्षया अथवेत्यादिपक्षे विशेषाभावेन योगविभागादिप्रयासो भाष्यकृतोऽसंगत एवेति बोध्यम्॥

**गो नोक्त इति**। गत्वविधाने झषन्तत्वाभावेन भष्भावानापत्तिरिति भावः। औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणमिति परिभाषया प्रकृते उपदेश इत्यर्थलाभ इति सीरदेवाद्युक्तिं दूषयति। **औपदेशिकेति**। **इदमुक्त-**

सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते। कोऽसौ? उपदेशो नामेति'। अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तम्। न्यायस्यान्यत्रापि तुल्यत्वादिति बोद्धव्यम् ॥

एकाचो॥ 'झष् झषन्तस्य' इति वक्तुं युक्तम्। भष्पदाशक्तिकल्पनेन लाघवात्। निवृत्तमिति। धुग्भ्यामित्यादौ पदान्तत्वादेव

---

मिति। वक्ष्यमाणमुक्तमित्यर्थः। यदीयं प्रामाणिकी स्यात्तदौपदेशिकग्रहणस्यैव न्यायप्राप्ततया 'लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्ती'ति हेतुना द्वितीयः प्रयोग आश्रीयते, कोऽसावुपदेशो नामेति भाष्योक्तिरसंगता स्यादिति भावः। सानुबन्धकग्रहणेष्विति। इदं च प्रकृताभिप्रायकं, शब्दमात्रग्रहणेऽपि स्वं रूपमित्यनेन रूपाश्रयणात्। यत्रास्येति। यत्रास्यानुबन्धयुक्तं रूपं, तत्र घसंज्ञेत्यर्थः। एवं चोपदेश एव घसंज्ञा, प्रयोगे तु स्थानिवद्भावेन सेति भावः। नन्वेतद्भाष्यप्रामाण्यात्सानुबन्धकग्रहणेषु तन्न्यायानाश्रयणेऽपि सर्वत्र तदनाश्रयणे न मानमित्यत आह। अनुबन्धप्रस्तावादिति। न्यायस्येति। स्वं रूपमित्यनेन रूपग्रहणस्येत्यर्थः ॥

वक्तुं युक्तमिति। आन्तरतम्येन बशः स्थाने भषमेव प्रवर्त्यार्थाज्झकारस्य निवृत्तेरिति भावः। ख्यत्यादित्यादिवदस्वरितत्वादत्र यथासंख्याप्रवृत्तिरित्याशयः। एतेन वस्तुतस्तु मदोज्झमाचष्टे मधोगित्यादौ कुत्वप्रवृत्त्या प्रयोगे झान्तासंभवेऽपि ञमङणनमिति सूत्रस्थभाष्योक्तदिशा विधेयनिमित्तयोः प्रतिपत्तिकालिकसंख्यासाम्यमादाय परत्वादन्तरतमपरिभाषां बाधित्वा यथासंख्यशास्त्रप्रवृत्तौ गर्धबित्यादौ मकारापत्तिः। अत एव झष् झषन्तस्येति नोक्तमित्याचार्योक्तमपास्तम्। तुल्ययुक्त्या भष् भषन्तस्येत्येव तु वक्तुमशक्यम्।

सिद्धिरिति भावः। सामर्थ्यादिति। स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः। धातोः किम्। तद्धाडित्यादि। ननु दुहेर्घत्वे धात्ववयवमेकाज्रूपं दु इति, उघिति च। तत्राद्यो न झषन्तोऽन्त्ये न बश्। दुघिति तु नावयव इति कथं भष्भावः?, अत आह—व्यपदेशिवदिति। विशिष्टोऽपदेशो मुख्यव्यवहारः सोऽस्यास्तीति व्यपदेशी तेन तुल्यमित्यर्थः। इदमाद्यन्तवत्सूत्रे भाष्ये स्पष्टम्। एकाचः किम्। दामलिट्। बशः किम्। क्रोत्स्यति। झषन्तस्य किम्, दास्यति। धुगिनि। 'अत्वसन्तस्य' इति सूत्रेऽधातोरिति निषेधेन कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः। न च 'धातोरुच्यमानङ्कार्यन्तत्प्रत्यये भवति' इति परि-

---

झषस्तथोरित्याद्यर्थं झष आवश्यकत्वात्। अत एवोज्झधातोः क्किचि उग्धिरिति सिद्धम्। एतेन झान्तधातवस्सेट्का एवेति भष्प्रत्याहार एवास्तु, किं झष्प्रत्याहारेणेति चिन्त्यमेतदिति भट्टोक्तमपास्तम्। क्किचि तितुत्रेत्यादिना इण्णिषेधात्। ननु स्ध्वोर्ग्रहणस्येतरझल्व्यावृत्त्यर्थतया सार्थक्यात्कथं सामर्थ्यमत आह। स्ध्वोर्ग्रहणस्येति। तदनुवृत्तौ=झल्ग्रहणानुवृत्तौ। फलाभाव इति। नच बुबुधिध्व इत्यत्र भष्भावनिवृत्तये ध्वमो झलीति विशेषणमावश्यकमिति वाच्यम्। इटो ध्वमोऽवयवत्वेऽपि भष्भावनिमित्तध्वशब्दानवयवत्वेनैकाज्ध्वशब्दयोरिटा व्यवधानेनादोषात्। तद्धाडिति। नन्वत्र जश्त्वस्यासिद्धत्वाद्भष्भावेऽपि पुनर्जश्त्वेन न दोष इत्यत आह। आदीति। आदिना मृद्धाडित्यस्य संग्रहः। मृदु आह्वयतीति विग्रहः। एतेन 'इदमयुक्तम्। भष्भावे कृतेऽपि जश्त्वेन पुनर्दकारप्रवृत्ते'रित्याचार्योक्तमपास्तम्। ननु क्रियावाचकस्य धातुत्वात्तच्छरीरघटकक्रियायाः प्रधानभूताया एव ग्रहणस्योचितत्वेन कथमत्र धातुत्वमत आह। अत्वसन्तस्येतीति। निषेधेनेति। प्रधानभूतक्रियावाचिन एव धातुत्वे

**भाषया कथमत्र घत्वादि?, तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्यय इति वाच्यम् । अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात् ।**

---

तस्य सुपरत्वासंभवेन दीर्घाप्राप्त्या पर्युदासो व्यर्थ इति भावः । **कथमिति** । धातुशब्दमुच्चार्य विहितप्रत्ययपरत्वाभावादिति भावः । **घत्वादीति** । आदिना भष्भावः । एवं चाधोगित्यादावेव तदुभयप्रवृत्तिः स्यादिति भावः । **प्रत्ययनिमित्तत्वाभावादिति** । हनस्तोऽचिण्णलोरित्येव सिद्धे दाण्डिनायनेतिसूत्रेण भ्रौणहत्येत्यत्र तत्वनिपातनेनास्याः परिभाषाया ज्ञापितत्वाद्धर्मिग्राहकसाजात्यात्सप्तम्यन्तपदेन यत्र प्रत्ययस्य निमित्तत्वं, तत्रैवानियमप्रसङ्गे नियमार्थैषा, नान्यत्रेति भावः । नचायं नियमो निष्फलः, धुगित्यादौ प्रत्ययलक्षणेन धातुविहितप्रत्ययस्य क्विपः परत्वात्प्रकृतपरिभाषोपस्थितावपि घत्वादेरुपपादत्वादिति वाच्यम् । तत्प्रत्यय इत्यस्य धातुसंशब्दनेन विहिते प्रत्यये निमित्ते सति भवतीत्यर्थेन, प्रकृते तत्परिभाषाप्रवृत्त्यभ्युपगमे प्रत्यासत्त्या धातुविहितप्रत्ययनिमित्तकपदत्वप्रयुक्तमेव पदान्तत्वं घत्वनिमित्तं स्यादिति क्विपः पदत्वानिमित्तत्वेन घत्वाप्रवृत्तिरित्याशयात् । घत्वविधिस्त्वधोगित्यादौ चरितार्थ इति भावः । एतेन 'क्विपः प्रत्ययलक्षणेन धातुशब्दोच्चारणेन विहितप्रत्ययाव्यवहितपूर्वत्वविशिष्टहस्य पदान्ते विद्यमानत्वेन तत्प्रवृत्तेरनुपपत्त्वाच्छङ्कासमाधाने अत्र निर्दले । ज्ञापकसाजात्याद्धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्ये तस्याः प्रवृत्तिस्वीकारेण तस्या अत्राप्रवृत्तेश्चेति वाराणसेयोक्तमपास्तम् । धर्मिग्राहकसाजात्यात्कस्मिंश्चित्सङ्कोचेऽवश्यमाश्रयणीये ग्रन्थकृदुक्तदिशैव सङ्कोचस्य वक्तुं युक्तत्वात् । त्वदुक्तसङ्कोचेन प्रकृते तस्या अप्रवृत्तेस्सिद्धत्वेऽपि नहो धः, नशेर्वेत्यादौ तत्प्रवृत्त्या दोषस्य दुर्वारत्वात् । किञ्च परिभाषाणामनियमप्रसङ्ग एव प्रवृत्तेर्न्याय्यतया यत्र शास्त्रे सप्तम्यन्तपदेन प्रत्ययस्य निमित्तत्वं, तत्रैवानियमप्रसक्तया तत्रैवास्याः प्रवृत्तिरुचितेत्यवधेयम् ॥

अत एव 'अप्रशान्' इति चरितार्थम्। अन्यथा 'मो नो धातोः' इत्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तदसङ्गतिः स्पष्टैव। वा द्रुह॥ द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम्॥

इग्यणः॥ यणः स्थाने इति। नन्वेवमदुहितरामित्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणत्वाद्धल इति दीर्घापत्तिः। न च यथासंख्यसम्बन्धाददोषः। ऋलृक्सूत्रे 'लृकारोपदेशः किमर्थं' इत्यादिभाष्यविरोधात्; इति चेन्न। विधिप्रदेशेषु 'यण इक्' इत्येव

---

यद्प्येवं नियमे 'अनुदात्तस्य चर्दुपधस्य' 'अचि विभाषेत्यादौ तदप्रवृत्त्यापत्ति'रित्याचार्याः' तदप्ययुक्तम्। अनुदात्तस्य चेत्यत्राकितीति पर्युदासात्प्रत्यय इत्यर्थलाभेन प्रत्ययनिमित्तत्वाक्षतेः। अचि विभाषेत्यत्रापि ग्रो यङीति पूर्वसूत्रसाहचर्यात्प्रत्यय इत्यर्थलाभेन प्रकृतपरिभाषाप्रवृत्तेस्सुवचत्वात्। सूत्रान्तरसाहचर्यानाश्रयणेऽपि पूर्वसूत्रेऽसत्त्वभूतक्रियावाचिन एव गिरतेस्संभवेनात्राप्यर्थाधिकारानुरोधात्तादृशस्यैव ग्रहणे तस्मात्परस्याचः प्रत्ययसंबन्धिन एव संभवाच्च। धातोः कार्यमुच्यमानमिति परिभाषाया गिर इत्युदाहरणपरं भाष्यमप्येतदाशयकमेव। धातोः कार्यविधाने औपश्लेषिकाधिकरणसप्तम्यन्तेनोपात्तनिमित्तस्य प्रत्यासत्त्या धातुसंबन्धिन एव ग्रहीतुमौचित्यात्। ज्ञापकेनापूर्वार्थकल्पनापेक्षया एतत्प्रत्यासत्तिलभ्यार्थानुवादकत्वकल्पनायां लाघवात्। अत्रार्थे ज्ञापकमप्याह। अत एवेति॥

नन्वेवमिति। यणः स्थाने प्रयुज्यमानस्यैकस्संप्रसारणसंज्ञायामित्यर्थः। अदुहितरामिति। तरपो ग्रहणं त्वदुहीत्यस्याङ्गत्वाय। अदोष इति। लकारस्थानिकेकारस्य संप्रसारणत्वाभावादिति भावः। भाष्यविरोधादिति। अदुहितरामित्यादावतिप्रसङ्गवारणायात्र सूत्रे यथासंख्यशास्त्रप्रवृत्त्यभ्युपगमे ऋलृक्सूत्रस्थलृकारोपदेशस्यात्र यथासंख्यशास्त्रप्रवर्तकतया सफलत्वाल्लृकारोपदेश-

**सिद्धे सञ्ज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणान्न दोषः। 'वाक्यस्य सञ्ज्ञा' इति पक्षे भाष्ये 'सम्प्रसारणस्येत्यादौ सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहणम्' इत्युक्तनया तदेकवाक्यतयाऽत्र पक्षे तद्भावितस्य संज्ञेति भाष्ये सूचितम्। .... .... ...**

---

प्रयोजनशङ्का, तस्य फलान्तरप्रतिपादनं च निर्दलं स्यादतस्तद्विरोध इत्याशयः। **विधिप्रदेशेष्विति** । वसोस्संप्रसारणं, संप्रसारणाच्चेत्यादावित्यर्थः। **इत्येव सिद्ध इति** । मात्रालाघवानुरोधेन, संज्ञाशास्त्राननुसंधानप्रयुक्तज्ञानलाघवानुरोधेन च, वसोर्यण इक्, यण इक इत्येवंन्यासेनैव सिद्ध इत्यर्थः। **सामर्थ्येनेति** । शब्दव्यापारलाभादिति शेषः। **तद्भावितेति** । तेन भावितः तद्भावितः । यणः स्थाने संप्रसारणशब्देन भावितः इक् संप्रसारणसंज्ञ इत्यत्र पक्षे संज्ञासूत्रीयो वाक्यार्थः। एतत्सूत्रजशक्तिग्रहे संप्रसारणशब्देन भावितत्वस्योपलक्षणतया विधिप्रदेशे वसोस्संप्रसारणमित्यादौ वस्वन्तभसंज्ञकाङ्गस्य संप्रसारणसंज्ञोपलक्षित इग्भवतीति वाक्यार्थः। एतेन तस्य शक्यतावच्छेदकत्वमभिप्रेत्य वर्णसंज्ञापक्षे तद्भावितसंज्ञाश्रयणमयुक्तम् । सूत्रशाटकन्यायेनाप्यपरिहार्यस्यान्योन्याश्रयस्यापत्तेरित्याचार्योक्तमपास्तम् । तद्भावितपक्षानाश्रयणे लाघवानुरोधेन यण इगित्येव सिद्धे संज्ञाप्रणयनस्य नैरर्थक्यापत्तेश्च । किञ्चाचार्योक्तदिशा सर्वथाऽन्योन्याश्रयस्यापरिहार्यत्वे वृद्धिसंज्ञासूत्रे भाष्ये तद्भावितानां ग्रहणमिति पक्षे एतद्दोषाकथनेन न्यूनतापत्तेश्च । भाष्यानुक्तत्वादयं पक्षो न भाष्यकृत्सम्मत इत्याशङ्कां परिहरति । **भाष्ये सूचितमिति** । तथाहि। प्रकृतसूत्रे भाष्ये वर्णसंज्ञापक्षे संप्रसारणविधायकेष्वितरेतराश्रयप्रसङ्गमुद्भाव्य तत्परिहाराय वाक्यसंज्ञापक्ष आश्रितः। यण इग्भवतीति वाक्यार्थस्य संप्रसारणमित्येषा संज्ञेति तदाशयः। अत्रापि पक्षेऽनुवादस्थलेषु संप्रसारणपदेनोपस्थितस्य वाक्यार्थस्य कार्यासंभवेनातिप्रसङ्गमाशङ्क्य, यथा काकाज्जातः

**तेन द्युभ्यामित्यादावपि न दीर्घप्राप्तिः। अत एव अक्षद्यूश्चासा वरुणश्च अक्षद्युरुण इत्यादौ पूर्वरूपं न। समानाङ्गग्रहणं तु भाष्ये प्रत्याख्यातम्। तथा च भाष्यं—'शकह्र्वर्थमित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यम्। न कार्यम्। असंप्रसारणत्वात्। अन्योऽयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते। यदि नेदं संप्रसारणम्, 'हलः' इति दीर्घत्वं न प्राप्नोति। वचनप्रामाण्याद्भविष्यति' इति। 'न संप्रसारणे' इति निषेधोऽपि ... ....**

---

काकः, एवं संप्रसारणाज्जातं संप्रसारणं, तस्मात्परः पूर्वो भवति, तस्य दीर्घो भवतीत्येवंरीत्या समाहितम्। काकाज्जातो यथा काकत्वाभिसंबन्धात्काकः, एवं संप्रसारणाज्जातोऽपि संप्रसारणत्वारोपात्संप्रसारणमिति तदाशयः। एवं च तत्पक्षे अदुहितरामित्यत्रेकारस्य संप्रसारणपदाज्जातत्वाभावेन दीर्घाप्राप्त्या तदेकवाक्यत्वाय वर्णसंज्ञापक्षेऽपि तस्याप्रवृत्तिर्वाच्या, सा च तद्भावितग्रहणादेवेत्ययं पक्षो भाष्यसम्मत एवेति भावः। तद्भावितग्रहणे फलमाह। **तेनेति। इत्यादावपीति।** अपिना प्रागुक्तादुहितरामित्यस्य संग्रहः। अत्र तद्भावितग्रहणे फलान्तरमप्याह। **अत एवेति।** ननु संप्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्तव्यमिति वार्तिकादत्र न दोष इत्यत आह। **समानाङ्गग्रहणं त्विति। प्रत्याख्यातमिति।** एवं चास्मादपि भाष्यादत्र तद्भावितानामेव ग्रहणमित्यर्थो ध्वनित इति बोध्यम्। अन्यथा शकह्र्वर्थमित्यादौ पूर्वरूपस्थानिकदीर्घस्यासंप्रसारणत्वात्पूर्वरूपाप्राप्तावप्यक्षद्युरुण इत्यादौ तद्वारणाय तदावश्यकत्वेन प्रत्याख्यानमसंगतमेव स्यात्। **एक आदिश्यत इति।** संप्रसारणाचेत्यनेनेति भावः। पूर्वरूपे स्थानिवद्भावेन तु न संप्रसारणत्वम्, अल्विधित्वात्। **वचनप्रामाण्यादिति।** हल इति दीर्घारम्भसामर्थ्यात्तद्विषये स्थानिवत्त्वनिषेधाप्रवृत्तिरिति भावः। नन्वेवं न संप्रसारण इति निषेधासङ्गतिः, अन्तरङ्गत्वात्पूर्वरूपे तत्र संप्रसारणत्वाभावादित्यत आह। **न संप्रसारण इति॥**

**वचनप्रामाण्यात्पूर्वरूपोत्तरम् । न च यु–उ–अन्–अस् इति स्थिते-ऽन्तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम् । अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाप्रवृत्तेः । न चैवं तत्र सवर्णदीर्घोत्तरं 'न संप्रसारण' इति निषेधो न स्यादिति वाच्यम् । 'अचः परस्मिन्' इति स्थानि-वत्त्वादिति दिक् ॥**

**वाह ऊठ् ॥ 'भस्य' इत्यधिकारः । 'वसोः संप्रसारणं' इत्यतः संप्रसारणमित्यनुवर्त्तते, तच्चोठो विशेषणम् । तेन 'अलोऽन्त्यस्य' इति न । तदाह–भस्येत्यादि । ह्रस्व उठ् न कृतः । वृद्ध्यनापत्तेः ।**

---

**वचनप्रामाण्यादिति** । निषेधारम्भसामर्थ्यादित्यर्थः । **पूर्वरूपोत्तर-मिति** । भविष्यतीति शेषः । **पूर्वरूपं न स्यादिति** । उक्तवचनद्वयप्रामाण्या-त्संप्रसारणपूर्वरूपे संप्रसारणत्वातिदेशेऽप्यन्यत्र तदतिदेशे मानाभाव इति भावः। **अनित्यत्वेनेति** । नाजानन्तर्य इति परिभाषाज्ञापकस्यान्तरङ्गपरिभाषानित्यत्व एव ज्ञापकत्वादिति भावः । **अप्रवृत्तेरिति** । एवं च परत्वात्पूर्वरूपे यस्य न संप्रसारण इति निषेधः । दीर्घस्य नित्यत्वं तु शब्दान्तरप्राप्त्या परिहरणीयमिति भावः। **नचैवमिति** । एवमपीत्यर्थः । उक्तरीत्या पूर्वरूपस्य सिद्धावपीति भावः। **तत्र**=यून इत्यत्र । **निषेधो न स्यादिति** । पूर्वरूपस्थानिकदीर्घे संप्रसारणत्वातिदेशे मानाभावादिति भावः । **स्थानिवत्त्वादिति** । नच तेनैव स्थानिवत्त्वेनोकारेण व्यवधानान्निषेधो न स्यादिति वाच्यम् । यूनस्तिरिति निर्देशेन तत्र व्यवधानेऽपि निषेधप्रवृत्तेरभ्युपगमात् । **दिगिति** । तदर्थस्तु निषेधविषये संप्रसारणपूर्वरूपेऽप्यनेन संप्रसारणत्वस्यातिदेष्टुं शक्यतया तत्र संप्रसारणत्वातिदेशाय सामर्थ्याश्रयणमनावश्यकमिति । एतेन 'निषेधोऽपि वचनप्रामाण्यादिति पूर्वग्रन्थस्यायुक्तत्वं वदन्त आचार्याः परास्ताः । न्याय-साम्यात्तत्र तथोक्तेः ॥

वृद्धिविधावपि ह्रस्वग्रहणे जनौरित्याद्यसिद्धिः। 'च्छ्वोः शूड्' इत्यत्रापि ह्रस्वकरणेऽक्षद्यूरित्याद्यसिद्धिः। अतद्भावितत्वेन तस्यासंप्रसारणत्वाद् 'हल' इति दीर्घाप्राप्तेः। संप्रसा॥ 'अमि पूर्वः' इत्यतः पूर्व इति, 'इको यण्' इत्यतः अचीति, 'एकः पूर्वपरयोः' इति चानुवर्तते।

---

यत्तु केचित्तु अतद्भावितपक्षाश्रयणेऽपि न दोषः। नच द्युभ्यामित्यादावदुहितरामित्यादौ च हल इति दीर्घापत्तिरिति वाच्यम्। निरुतं दुरुतमित्यादौ दोषवारणाय संप्रसारणनिमित्तप्रत्ययनिमित्तकाङ्गावयवाद्धलः परस्य दीर्घविधानेन प्रकृते संप्रसारणस्य प्रत्ययानिमित्तकत्वेनादोषात्। अत एव तृतीय इत्यादौ न दोषः। अक्षद्य्वरुण इत्यादौ समानाङ्गग्रहणं कर्तव्यमितिवार्तिकेनैव दोषवारणं बोध्यम्। नच तद्भावितपक्षाश्रयणे समानाङ्गग्रहणं कर्तव्यमिति वार्तिकाकरणेन लाघवमिति वाच्यम्। सुद्व्युक्तं, शकहूक्तमित्यादौ दोषवारणाय तद्वार्तिकस्यावश्यकत्वात्। एवं चाक्षद्यूरित्यादौ हल इत्यनेनैव सिद्ध्यतीति ऊठ् दीर्घो न कर्तव्य इति लाघवं भवतीत्याहु, रित्यौत्तराहास्तन्न। हल इत्यत्राधिकृतस्याङ्गस्येत्यस्यावृत्त्या हलिवशेषणत्वस्यापि स्वीकारेणाङ्गावयवाद्धलः परं यत्संप्रसारणं तदन्ताङ्गस्य दीर्घः स्यादित्यर्थस्य नागेशाभिप्रेतत्वान्निमित्तनिमित्तिनोः प्रत्यासत्त्या समानाङ्गघटकत्व एव तस्य प्रवृत्त्या निरुतमित्यादौ दोषाभावेन त्वदुक्तप्रत्यासत्तेरनावश्यकत्वात्। तृतीय इत्यत्र दीर्घवारणं तु ढ्रलोप इत्यतोऽण्ग्रहणानुवृत्त्या, द्वितीयतृतीयचतुर्थेति सूत्रे निपातनाद्वा बोध्यम्। स्पष्टं चेदं भाष्ये। किञ्च भवदुक्तप्रत्यासत्तिरपि दुर्लभा। दीर्घविधौ प्रत्ययस्य निमित्तत्वेनानुपादानात्। यद्यङ्गद्वारा प्रत्ययस्य निमित्तत्वमभ्युपेयते, तदा तुल्ययुक्त्या पदत्वद्वारा संप्रसारणस्यापि प्रत्ययनिमित्तकत्वेन द्युभ्यामित्यादौ भवदुक्तप्रत्यासत्तावपि दोषध्रौव्यात्। अत एव तृतीय इत्यत्र दीर्घशङ्कासमाधानपरं हल इति सूत्रस्थं भाष्यमपि संगच्छते। अन्यथा भवदुक्तप्रत्यासत्त्यैव तत्र दीर्घवारणे तदसङ्गतिः

स्पष्टैव । किञ्च भाष्यकृत्कृतसमानाङ्गग्रहणप्रत्याख्यानप्रकारस्योपाध्यायैः स्फुटमुपपादितत्वेन तेनैवाक्षद्यरुण इत्यत्र पूर्वरूपवारणं सुतरामसङ्गतमेव । किञ्च तद्भावितपक्षाश्रयणेऽपि सुध्युक्तमित्यादौ दोषवारणाय तद्वार्तिकस्यावश्यकत्वप्रतिपादनमप्ययुक्तम् । अस्य शकन्ध्वर्थमित्यतो विशेषाभावेन संप्रसारणपूर्वरूपे वचनसामर्थ्यात्संप्रसारणत्वेऽपि तत्स्थानिकदीर्घे संप्रसारणत्वाभावेन पूर्वरूपाप्राप्तेः । हल इति दीर्घात्प्रागेव पुनःपूर्वरूपापत्तिरिति तु वक्तुमशक्यम् । पदान्तरसापेक्षपूर्वरूपापेक्षया दीर्घस्यान्तरङ्गत्वात्पूर्वं दीर्घप्रवृत्तेः ॥

यदपि 'अन्ये तु वर्णसंज्ञापक्षे न तद्भावितपक्षाश्रयणं, सूत्रशाटकन्यायेनाप्यपरिहार्यस्यान्योन्याश्रयस्यापत्तेः । अदुहितरामित्यत्र यथासंख्यविज्ञानान्न दोषः । लृकारोपदेशः किमर्थः? लृकारोपदेशो यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थ इति ऋलृक्सूत्रस्थं भाष्यन्तु यथासंख्यशास्त्रप्रवृत्तेरप्युपलक्षणम् । एवं च वकारस्थाने लृकारवारणायोक्तं कुसृष्ट्यादिकमपि न । द्युभ्यामित्यत्र तु दिव उदिति तपरत्वसामर्थ्यान्न दीर्घः । अक्षद्यरुण इत्यत्रापि न पूर्वरूपम् । ऊठि पूर्वरूपात्परत्वादन्तरङ्गत्वाच्च तस्य हल इति दीर्घेऽल्विधित्वेन स्थानिवत्त्वेन संप्रसारणत्वाभावात् । यद्वा छ्वोश्शूडित्यत्र ह्रस्वे विधातव्ये दीर्घविधानं छ्वोरिति विहितस्योठः संप्रसारणपदेनाग्रहणज्ञापनार्थम् । तेनात्र न पूर्वरूपमिति दिगित्याहु'रित्याचार्याः, तन्न । अन्योन्याश्रयपरिहारस्य प्रागुपदर्शितत्वात् । कथंचिद्भवदुक्तादिशा अदुहितरामित्यादौ दोषवारणेऽपि द्युभ्यामित्यादौ दीर्घवारणाय तद्भावितग्रहणस्यावश्यकत्वात् । अत एवैतत्पक्षाश्रयणे फलान्तरकथनमपि नागेशस्य संगच्छते । अत्र तपरत्वसामर्थ्यान्न दीर्घ इति तु वक्तुमशक्यम् । दीर्घस्य बह्वपेक्षत्वेन परनिमित्तकत्वेन च बहिरङ्गतयाऽसिद्धत्वात्तेन व्यावृत्तेरशक्यत्वात् । अत एव ऋत इदिति तपरत्वेन चिकीर्षतीत्यादौ हलि चेति दीर्घस्य न व्यावृत्तिः । अत एव धूच इत्यादौ चाविति दीर्घस्सिद्ध इति बोध्यम् ॥

तदाह—संप्रसारणादचीत्यादि। ऊठश्छित्त्वम् 'एत्येधति' इत्यत्र विशेषणार्थम्। छन्दस्येवेति। छन्दसीत्यनुवर्तमाने 'वहश्च' इत्यनेनेति भावः। णिजन्ताद्विजिति। अनेन लोके विश्ववाट्शब्दस्य साधुत्वमात्रमुच्यते। न त्वस्योठ्। णिलोपस्य स्थानिवत्त्वात्। अङ्गभसंज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात्। विज्ग्रहणं क्विपोऽप्युपलक्षणम्। 'वच्यादिभ्यो विहिते क्विति' इति व्याख्यानस्याचः परस्मिन्नित्यत्र काम्यच्सूत्रे च भाष्ये उक्तत्वेन ण्यन्तात्क्वौ संप्रसारणाप्राप्तेः। प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव 'क्वौ विधिं प्रति न स्थानिवत्' इत्यत्र ग्रहणेन णिलोपस्य स्थानिवत्त्वाच्च। तेन काम्यच्सूत्रोक्तविहित-

---

ननूठीत्संज्ञायाः फलाभावादठस्येत्त्वं न स्यादत आह। विशेषणार्थमिति। मूले इति पक्ष इत्यनेन विजन्तस्य ण्यन्तसमकक्षताप्रतीत्या फलाभेदभ्रमवारणायाह। अनेनेत्यादिना। ननु णिलोपस्य स्थानिवत्त्वेऽपि भसंज्ञकाङ्गावयवस्य वाहेरित्यर्थात्प्रकृते स्यादेवोडित्यत आह। अङ्गभसंज्ञेति। अङ्गसहितभसंज्ञेत्यर्थः। एतेन केवलभसंज्ञाया वृषण्वसुरित्यादौ प्रातिपदिके परेऽपि दर्शनेन व्यभिचारात्प्रत्ययाक्षेपकत्वाभावेऽपि न ग्रन्थासङ्गतिः। वाहो विशेषणादिति। अत एव प्रष्ठवाड्रूप्यमित्यादौ न संप्रसारणमिति बोध्यम्। विचोऽसार्वत्रिकत्वादाह। विज्ग्रहणं त्विति। ननु क्विपि सति संप्रसारणापत्तिरत आह। वच्यादिभ्य इति। प्रकारान्तरेणापि संप्रसारणं वारयति। प्रतिपदोक्ततयेति। तेनेति। क्विशब्दमुच्चार्यविहितविधेरेव क्वौ विधिं प्रतीत्यत्र ग्रहणेनेत्यर्थः। काम्यच्सूत्रोक्त इति। तत्र हि ककारस्येत्त्वं कस्मान्न भवतीत्याशङ्क्य फलाभावान्नेत्त्वमिति समाधाय, इदं तर्हि प्रयोजनं, उपयट्काम्यति। क्वितीति संप्रसारणं यथा स्यात्। एतदपि नास्ति प्रयोजनं, यजादिभिरत्र क्वितं विशेषयिष्यामो यजादिभ्यो विहित इति। अयं च सुबन्ताद्विहित इति

विशेषणपक्षतदितरपक्षयोर्न फलभेदः । वस्तुतो 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इति सूत्रे प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्' इति भाष्ये लौकिकविग्रहवाक्ये प्रष्ठौह इति प्रयोगादन्यत्रापि ण्विः । तदुक्तम्–इति पक्षे इति ॥

चतुरनडु । 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इति वर्तते । सावन । 'आच्छीनद्योः' इत्यतो नुमनुवर्तते, आदिति च ।

---

नात्र संप्रसारणप्राप्तिरित्युक्तम् । न फलभेद इति । णिजन्ताद्विचि निष्पन्ने विश्ववाड्शब्द इति भावः । अन्यथा विहितविशेषणत्वपक्षे संप्रसारणाप्राप्त्या तदितरपक्षे क्वौ लुप्तमितिनिषेधेन स्थानिवत्त्वाप्रवृत्तौ तत्प्राप्त्या च फलभेदः स्पष्ट एव । मूलकृता इति पक्ष इत्यनेन सूचितामरुचिं प्रकटयति । वस्तुत इति । लौकिकविग्रहवाक्य इति । अनेन तत्प्रयोगस्य छान्दसत्वाभावस्सूचितः । प्रयोगादिति । इदमुपलक्षणम्, एकयोग एव कर्तव्ये पृथग्योगकरणसामर्थ्यस्यापि । न च पृथग्योगकरणं कव्यपुरीषपुरीष्येष्विति सूत्रे वहमात्रसंबन्धार्थमावश्यकमिति वाच्यम् । क्वचिदेकदेशोऽप्यनुवर्तत इति न्यायेन तत्सिद्धेः । अन्यत्रापीति । वहश्चेत्यत्र छन्दसीत्यस्याननुवृत्त्या लोकेऽपीत्यर्थः । कव्येत्यादिसूत्रे छन्दोग्रहणानुवृत्तिस्तु मण्डूकप्लुत्या । अत्र चेदं भाष्यमेव मानमिति भावः ॥

ननु वसुस्रंसुध्वंस्वनडुहां दुरिति न्यासं कृत्वा उगित्त्वसामर्थ्यादसिद्धत्वं बाधित्वा उगिदचामिति नुमा सिद्धेरिदं सूत्रं व्यर्थमिति चेन्न । दुरितिन्यासे स्वनड्वान् स्त्रीत्यत्रोगितश्चेति ङीबापत्तेः । न च पदत्वमुपजीव्य प्रवृत्तं दुत्वं पदत्वविघातकङीपो निमित्तं न स्यादिति वाच्यम् । ङीपस्साक्षात्पदत्वविघातकत्वाभावात् । नुमामोरागमत्वेऽपि बाध्यबाधकभावप्रयोजकं विरोधं दृष्टान्त-

तदाह। आदित्यधीति। विशेषविहितेनेति। यासुटा सीयुडिवेत्यर्थः। न बाद्ध्यत इति। उपजीव्यत्वादिति भावः। अमा चेति। 'अम्सं-बुद्धौ' इति विशेषविहितेनामेत्यर्थः। नुम उपजीवकत्वेन विरोधा-भावात्। ततः प्राक् तस्याप्राप्तेश्चेति भावः। क्व चित्तु 'आमा च नुम्न बाद्धयते' इति पाठः। तत्रायमर्थः। बह्वनड्वांहीत्यादौ 'नपुंसकस्य' इति नुम् परत्वादामा बाद्ध्येत। पुनःप्रसङ्गविज्ञानात्तु न बाद्ध्यत इति। दत्वं नेति। अनड्वांस्तत्रेत्यत्र रुत्वं भवत्येव। तत्रोपदेश-वैयर्थ्याभावात्। संयोगान्तलोपस्येति। हस्थानिकस्येत्यर्थः। एवञ्च नस्य प्रातिपदिकान्तत्वाभाव इति भावः। अनड्वानिति। अनः शकटं वहतीत्यर्थे वहेः क्विबनसि, अनसो डश्च। यजादित्वात्संप्रसार-णम्। ननु हेऽनड्वन् इत्यत्र सम्बुद्धिलोपेऽड्यंप्राप्ते अम आरम्भादमो-

---

मुखेन सूचयति। यासुटा सीयुडिवेत्यर्थ इति। यथा तयोर्लिङ आद्य-वयवत्वेन प्रवृत्तेर्युगपदसंभवः, एवमनयोरन्त्यादचः प्रवृत्तेर्युगपदसंभवाद्विरोधो-ऽस्तीत्याशयः। अप्राप्तेश्चेति। चो हेतौ। यत आदित्यधिकारादमामोः प्राङ्निमित्ताभावान्नुमोऽप्राप्तिरतस्ताभ्यामस्य न बाध्यबाधकभावो, विरोधा-भावादित्याशयः। उपदेशेति। सावनडुह इत्यस्येत्यर्थः। यं विधिं प्रत्युप-देशोऽनर्थकस्स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव, नासौ बाध्यत इति न्यायादिति भावः। उपदेशवैयर्थ्याभावादित्यस्य रुत्वविधिशास्त्रवैयर्थ्याभावा-दित्याचार्याणां व्याख्यानं तु प्रामादिकम्। ननु मूलकृता ङ्यापस्सोरिति न्यासस्य सिद्धान्तितत्वेन तत्र न्यासे राजेत्यादौ नलोपाय न ङिसंबुद्ध्योरिति सूत्रे संबुद्धिग्रहणेन नलोपे कर्तव्ये संयोगान्तलोपो नासिद्ध इत्यर्थस्यावश्यकत्वा-दत्र तस्यासिद्धत्वप्रतिपादनं मूलकृतोऽसङ्गतमत आह। हस्थानिकेति। धर्मिग्राहकसाजात्याद्यत्र नकारविभक्त्योरानन्तर्यं तद्विषयकमेव तदिति भावः।

ऽपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः। विषयभेदेऽप्यचिरादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्ये, इति चेन्न । प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादत्वस्यैवासम्भवात् । ध्वनितश्चेदं प्रत्ययलक्षणसूत्रे भाष्यकैयटयोः । .... .... ....

---

अपवादत्वेनेति । येन नाप्राप्तिन्यायादिति भावः । संबुद्धिलोपानापत्तिरिति । प्रकल्प्य चापवादविषयमिति न्यायेनापवादविषये उत्सर्गाप्रवृत्तेरिति भावः । ननु विषयभेदादसंभवाभावेन कथमनयोरपवाद्यापवादकभाव इत्यत आह । विषयभेदेऽपीति । अपवादत्वस्यैवाभावादिति । उभयोरप्यपूर्वबोध्यत्व एवापवाद्यापवादकभावो युक्तः । अत्र तु लोपेनानुत्पत्तेरेवान्वाख्यानादभावरूपस्य प्रत्ययलोपस्य पूर्वकालसिद्धतयाऽपूर्वबोध्यत्वाभावान्नापवाद्यापवादकभाव इत्याशयः । ध्वनितं चेदमिति । उभयोरपूर्वबोध्यत्व एवापवाद्यापवादकभावो, नान्यथेत्ययमर्थो ध्वनित इत्यर्थः । भाष्येति । तत्र हि आद्यप्रत्ययग्रहणस्य, सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणं यथा स्यात्, लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणं माभूत्, किं प्रयोजनं, ग्रामणि कुलं, सेनानि कुलमित्यत्रौत्तरपदिके ह्रस्वत्वे कृते ह्रस्वस्य पितीति तुक् प्राप्नोति, स माभूदिति प्रयोजनमुक्तम् । तस्यायमाशयः । सूत्रे प्रत्ययशब्दो लुप्तसप्तमीको निर्दिश्यते, तेन प्रत्यये सति यत्कार्यं दृष्टं, तल्लोपेऽपि भवतीति सूत्रार्थः । न हि ग्रामणि कुलमित्यत्र क्विपि सति तुग्दृष्टः । ह्रस्वाभावात् । कृते क्विपो लोपे ह्रस्वत्वे च तुकः प्राप्तिरतो न तस्यातिदेश इति । ततो भगवता यदि तर्हि यत्सति प्रत्यये प्राप्नोति, तत्प्रत्ययलक्षणेन भवति । लोपोत्तरं यत्प्राप्नोति तन्न भवति, जगत् । जनगदित्यत्र तुङ्न प्राप्नोति । लोपोत्तरं ह्यत्र तुगागम इत्युक्तम् । अत्र क्विलोपात्प्रागपि गमः क्वावित्यस्य प्राप्तिसत्त्वात्तेनानुनासिकलोपे क्विपि सति तुकः प्राप्तिरस्त्येवेति चेदत्र तदाशयं कैयटः । अन्तरङ्गत्वात्पूर्वं विलोपः, गमः

एवमेव 'अतृणेट्' 'अनड्वान्' इत्यादेस्तत्सूत्रोदाहरणत्वमुपपद्यत इति दिक्। सहेः सा। 'अपदान्तस्य मूर्द्धन्यः' इत्यधिक्रियते। लोके त्विति। एतेन 'तुराषाण्मेघवाहनः' इति व्याख्यातम्। नहिवृति' इत्यनेन क्विबन्तसहावेव दीर्घविधानादाह—'अन्येषामपि' इति ॥

---

क्वावित्ययं लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः। तस्मात्सति क्विपि नात्र तुकः प्राप्तिः, अपितु विलोपे कृते इति। लोपस्याप्यन्येनापवाद्यापवादकभावो यदि स्यात्तदाऽनुनासिकलोपस्य क्विलोपापवादतयाऽन्तरङ्गत्वात्तस्य प्रथमं प्रवृत्त्याशयकमिदं भाष्यमसंगतं स्यादतस्तेनायमर्थो ध्वनित इति बोध्यम्। न चास्माद्भाष्याद्विषयभेदे बाध्यबाधकभावो नेत्येव कल्प्यत इति वाच्यम्। अचिरादेशस्य नुडपवादत्वमाशङ्क्य न तिसृचतसृतिज्ञापकेन नुट्साधनपरेण, प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनबाधकत्वप्रतिपादनपरेण च भाष्येण विषयभेदेऽपि बाध्यबाधकभावस्य स्पष्टमुक्ततया तद्विरोधात्। एवमेवेति। शास्त्रेणानुत्पत्त्यन्वाख्यानस्थले बाध्यबाधकभावाभावादेवेत्यर्थः। तत्सूत्रेति। प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रेत्यर्थः। उपपद्यत इति। अन्यथा नुमामोरिमागमस्य च येन नाप्राप्तिन्यायेन हल्ङ्यादिलोपबाधकतया प्रकल्प्य चापवादविषयमिति न्यायेन तद्विषये उत्सर्गाप्रवृत्त्या तदुदाहरणत्वमनुपपन्नं स्यादिति भावः ॥

वाराणसेयास्तु दिगिति प्रतीकमुपादाय 'दिगर्थस्तु इदमयुक्तम्। तथासति स इत्यत्रापि प्रथमतो हल्ङ्यादिलोपे प्रत्ययलक्षणेन त्यदाद्यत्वेऽपि विसर्गश्रवणं न स्यात्। किञ्च प्रत्ययस्थानिककार्ये कर्तव्ये प्रत्ययलक्षणाभावेन भवतादित्यत्रातो हेरित्यनेन लुकि भवेत्येकस्यैव रूपस्यापत्तेः। तस्मात्स्वविषये नाप्राप्तप्रत्ययानुत्पत्तिरपि बाध्यते, तथा च प्रकृतदोषस्तदवस्थ एव। तस्माद्धल्ङ्यादिलोपविषये तक्रन्यायस्यानित्यत्वमेवाश्रयणीयमिति वदन्ति, तदसत्। उक्तभाष्यप्रामाण्यात्प्रत्ययलोपविषयेऽपवाद्यापवादकभावानङ्गीकारेऽपि त्यदाद्यत्वस्य पर-

दिव औत्। ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञोचिता। अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः। ध्वनितश्चेदमदूड्सूत्रे भाष्ये। तत्र हि ङित्त्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानु-

---

त्वाश्रित्यत्वाद्वा हल्ङ्यादिलोपबाधकतया स इत्यत्रादोषात्। भवतादित्यत्रापि सर्वथा निरवकाशत्वात्तातङो लुग्बाधकतयाऽदोषात्। प्रत्ययलोपविषये येन नाप्राप्तिन्यायेनापवाद्यापवादकभावाभावस्यैव तद्भाष्याभिप्रेतत्वात्। अत एव जगत्, जनगदित्यादावनुनासिकलोपापेक्षया क्विलोपस्यान्तरङ्गत्वात्प्रथमं प्रवृत्तिरित्येतत्तात्पर्यकं तद्भाष्यमुपपद्यत इति बोध्यम्॥

अनुवादस्थल इव विधेयविषयेऽप्युच्चारणसौकर्यमात्रफलकानां नान्तरीयकतया वह्न्यानयनादौ सौकर्यार्थं परिगृहीतानां पात्रादीनामिव विनैवेत्संज्ञामकस्मादेव निवृत्तिरिति दीक्षितादिमतं निराकर्तुमाशङ्कते। नन्विति। उचितेति। व्यवसितान्त्यत्वेन हलन्त्यसूत्राप्रवृत्तौ बीजाभावादिति भावः। नन्वनुवादस्थल इव विधेयेऽपि स्वत एव तेषां निवृत्त्या इत्त्वाप्रवृत्तावपि बाधकाभावान्मास्त्वित्संज्ञेत्यत आह। अन्यथेति। तान्तस्य विधानमिति। अनुवादस्थले उच्चारणार्थवर्णघटितसमुदायस्य तद्रहिते लक्षणया निर्वाहेऽपि विधेयविषये न विधौ परश्शब्दार्थ इति न्यायेन लक्षणाया वक्तुमशक्यत्वादिति भावः इत्संज्ञायां तु 'तस्य लोपः, तित्स्वरितमित्यादेरनुपपत्तिज्ञापकस्य सत्त्वाद्विधेयविषयेऽप्यनुपपत्तिज्ञानमूलिका लक्षणा आश्रीयत इत्यन्यदेतत्। निरूपितं चैतत्प्राक्। इत्यस्याप्यापत्तेरिति। न च तपरस्तत्कालस्येति तत्कालस्य संज्ञित्वबोधनादिदमयुक्तमिति वाच्यम्। अत्र तत्कालग्रहणेऽप्यान्तरतम्यान्निरनुनासिकस्यानुदात्तस्यैवोकारस्य प्रवृत्त्या फलाभावेन तपरसूत्राप्रवृत्तेः। एतेन तपरस्तत्कालस्येति तत्कालस्य संज्ञित्वबोधनादिदमयुक्तमित्याचार्योक्तमपास्तम्।

**नासिकोपधत्वादिति समाहितं, न तूच्चारणार्थत्वादिति। किं च द्वितीयवर्णोच्चारणे सहायसंपादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव हलन्त्यसूत्राप्रवृत्तौ मानाभावः। अत एव 'तस्य लोपः' इति सूत्रेऽनुबन्धानामेकान्तत्वपक्षे 'दिव औत्' इत्यादीनां सर्वादेशत्वापादनं भाष्ये कृतम्। 'तित्स्वरितम्' इति सूत्रे च भाष्ये 'तिति प्रत्ययग्रहणं कर्त्तव्यम्' इति वार्त्तिकस्य द्युभ्यामित्यादौ तदभावः फलमित्युक्तम्। द्वित्वमाश्रित्य च प्रत्याख्यातं तदित्यन्यत्। किं चाऽदेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाभावात्तिति प्रत्ययग्रहणं व्यर्थमेव स्यात्। तथा विधेयविषये उच्चारणार्थानाम-**

---

**न तूच्चरणार्थत्वादितीति**। तथाऽकथनेनोच्चारणार्थानामपि विधेये इत्संज्ञालोपाभ्यामेव निवृत्तिर्न तु स्वत इत्ययमर्थो ध्वनित इति भावः। ननूच्चारणार्थत्वमुत्तरवर्णस्य पूर्ववर्णोच्चारणे सहायसंपादकत्वरूपमन्यत्र हयवरडित्यादौ दृष्टं, न तु पूर्ववर्णस्य तथान्यत्र दृष्टमित्यत्राकारस्योच्चारणार्थत्वं न युक्तमित्याशयेन भगवता तथा नोक्तमित्यरुचेरुच्चारणार्थेष्वित्संज्ञाप्रवृत्तौ युक्तिमाह। **किञ्चेति**। **मानाभाव इति**। इत्संज्ञालोपातिरिक्तफलस्य सर्वथाऽसंभवे उच्चारणसामर्थ्यादित्संज्ञा नेति वक्तुं शक्यम्। यथा काम्यजादौ ककारादीनाम्। उच्चारणार्थेषु त्वित्संज्ञालोपातिरिक्तस्योच्चारणसौकर्यरूपस्य फलान्तरस्य सत्त्वेन विशेषणार्थेषु जसादिघटकजकारादिष्विव हलन्त्यशास्त्रप्रवृत्तौ न मानमित्याशयः। विधेयविषये उच्चारणार्थहलामित्संज्ञालोपाभ्यामेव निवृत्तिरित्यत्र मानमाह। **अत एवेति**। **सर्वादेशत्वापादनमिति**। अनेकाल्पदबोध्यस्सर्वस्य भवतीत्यर्थादिति भावः। तत्रैव मानान्तरमाह। **तित्स्वरितमिति**। **तदभाव इति**। स्वरितत्वाभाव इत्यर्थः। ननु तद्वार्तिकस्य प्रत्याख्यातत्वेन न तदुक्तार्थे मानं भवितुमर्हतीत्यत आह। **द्वित्वमाश्रित्येति**। अत्रार्थे वार्तिकसम्मतिमप्याह। **किञ्चेति**। **व्यर्थमेवेति**। आदेशेषु स्वरवारणाय तदारम्भात्तत्र तित्त्वाभावादेव स्वरा-

प्यनुनासिकत्वेनेत्सञ्ज्ञा । अत एव 'वेरपृक्तस्य' इत्यत्रापृक्तग्रहणाभावे दर्विरित्यत्र लोपमाशङ्क्यानुनासिकपरस्य वेर्ग्रहणमिति भाष्ये उक्तम् । अत एव 'इदितो नुम्' इति सूत्रे भाष्ये धातोरित्यस्याभावे सिच इदित्त्वादभैत्सीदित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितं, न तु सिच इकारस्योच्चारणार्थत्वादित्त्वाभावेन । ल्युडादावुकारस्यानाकाभ्यामेव निवृत्तिरिति न तस्येत्संज्ञा । अनुनासिकत्वाभावात् । अत एव नन्द्यादिभ्यो ल्युप्रत्यये 'नन्दना' इति टाबन्तप्रयोगो 'गाङ् लिटि' इति सूत्रे भाष्ये । 'ल्युः कर्त्तरि पुंसि' इति त्वमरस्य प्रमादः । अनुवादविषये तु हलन्त्यसूत्रभाष्योक्तरीत्या

---

प्रवृत्तौ तन्न्यर्थमेवेति भावः । एवं विधेयघटकोच्चारणार्थहलामित्त्वं व्यवस्थाप्य तादृशानामचामपीत्त्वं व्यवस्थापयति । तथेति । तत्र मानमाह । अत एवेति । प्रागुक्तमदड्सूत्रस्थं भाष्यन्तु नात्र मानम् । हे कतरदित्यत्र संबुद्धिलोपाभावार्थं डित्त्वस्यावश्यकत्वेनाकारस्यापि श्रवणार्थमावश्यकत्वात्सिद्धान्ते तत्रेत्संज्ञाया एवाभावादिति भावः । अनुनासिकपरस्येति । अनुनासिकः परोऽवयवो यस्येत्यर्थः । तादृशश्च क्विबादिरेवेति भावः । यदि तत्रापीकारस्योच्चारणार्थत्वेनेत्संज्ञां विनैव निवृत्तिस्तदा सूत्रस्य निर्विषयत्वं स्यादित्याशयः । अत्रैव साधकान्तरमाह । अत एवेति । सजादेशकरणेनेति । नचात्र पक्षे सजादेशे अमंस्तेत्यत्रानिदितामिति नलोपापत्तिरिति वाच्यम् । आहतेत्यत्र नलोपार्थमारब्धेन हनस्सिजिति कित्त्वेन सिजन्ते नलोपाभावज्ञापनेनादोषात् । नन्वेवं पाचिकेत्यादौ ण्वुल उगित्त्वादुगितश्चेति ङीबापत्तिरत आह । ल्युडादाविति । अत्रोकारस्येत्त्वाभावे मानमाह । अत एवेति । प्रमाद इति । भाष्यप्रयोगेण तस्य स्त्रीत्वस्यापि लाभादिति भावः । विधेयविषय इत्यनेनानुवादे तेषामित्त्वाभावस्य सूचितत्वेन तत्रेत्त्वाप्रवृत्तौ बीजमाह । अनुवादविषये

तेषां व्यवसितान्त्यत्वाभावेन फलाभावेन चेत्संज्ञाशास्त्राप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्रहिते लक्षणा। विधौ तु नोचिता सा। 'न विधौ परः शब्दार्थः' इति न्यायात्। 'णौ गमिः' इत्यादीनां नुम् तु न। स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वात्। 'गमेरिङ्' इतिवच्च नोपधालोपः। अत एव सुबुत्पत्तिः। अन्यथा 'हनो वध लिङि' इतिवत् सा न स्यात्। 'अस्तेर्भूः'

---

त्विति। आतो धातोः, सुद्तिथोरित्यादावित्यर्थः। गुणाभेदकत्वेनैव तत्कालसवर्णग्रहणस्य सिद्धतया तपरसूत्रप्रवृत्तेरनावश्यकत्वेनोच्चारणमात्रफलक एवात्र तकार इत्याशयः। व्यवसितान्त्यत्वाभावेनेति। धात्वाद्यन्तत्वाभावेनेत्यर्थः। नचास्य प्रातिपदिकत्वमस्त्येवेति वाच्यम्। धात्वादिसाहचर्येण स्वरूपातिरिक्तार्थबोधकानामेव तत्र प्रातिपदिकपदेन ग्रहणात्। न चैवं नमो वरिवसिति सूत्रपठितस्य चित्रङः स्वरूपबोधकतया तत्रत्यप्रातिपदिकपदेनाग्रहणान्ङस्येत्त्वानापत्तिरिति वाच्यम्। तस्यापि विशेषणतया स्वरूपातिरिक्तार्थबोधकत्वेनादोषात्। साहचर्यानाश्रयणेऽप्याह। फलाभावेन चेति। तद्रहिते लक्षणेति। उच्चारणार्थवर्णघटितसमुदायस्य स्वं रूपमिति शास्त्रेण स्वरूपबोधकतायाः क्लृप्तत्वेन हलः श्न इत्यादिनिर्देशानुमिततात्पर्यानुपपत्त्या तस्य तद्रहिते लक्षणा। तत्प्रयोजकसंबन्धश्च स्वघटकसाजात्यमिति भावः। परश्शब्दार्थ इति। शक्यादन्यो लक्ष्यार्थ इत्यर्थः। नन्वेवमिण्धातोर्णिचि गमयतीत्यत्रेदित्त्वान्नुमापत्तिरत आह। णौ गमिरित्यादीनामिति। ननु यद्ययमिका निर्देशस्तदा गमहनेत्युपधालोपः प्रसज्येतेत्यत आह। गमेरिङिति वदिति। प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वेन प्रकृते तदप्रवृत्त्या धातुत्वाभावादिति भावः। शब्दनित्यतावादेऽस्य साधुत्वविधायकत्वेन लक्ष्यस्यानुकरणत्वमस्येति बोध्यम्। कार्यशब्दवादेऽप्याह। चेति। चेनादेशस्वरूपभङ्गभियस्संग्रहः। अत एवेति। इकानिर्देशादेवेत्यर्थः। सा न स्यादिति। धातुत्वेनाप्रातिपदिकत्वाद्विभक्तिर्न

इत्यत्रापि निर्विसर्ग एव पाठ इति केचित् । एवञ्चात्र 'तित् स्वरितम्' इति स्वरितापत्तिरिति चेन्न । दिव इकारस्योदात्तत्वेन स्रंसनधर्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वेनेकारस्य यणि 'उदात्तस्वरितयोर्यणः' इतिस्वरितसिद्ध्या फलाभावात् । तिति प्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकेन तदप्राप्तेश्च । अन्तोदात्तं द्यौरिति तु द्योशब्दस्य बोध्यम् ॥

अल्विधित्वेनेति । 'अनल्विधौ' इत्यत्र पञ्चमीसमासस्याप्याश्रयणादिति भावः । पदान्त इति । एङः पदान्तादित्यनुवृत्तस्य विभक्तिविपरिणाम इति भावः । अयमुकारोऽन्तोदात्तो निपात्यते । तेन 'द्युभिरक्तुभिः' इत्यादौ पठ्यमानमन्तोदात्तत्वं सिद्धम् । अत्र यथा 'हलः' इति दीर्घो न तथोक्तम् । उतस्तपरत्वन्तु 'भाव्यमानो-

---

स्यादित्यर्थः । नन्वेवमस्तेर्भूरित्यत्र कथं विभक्तिरत आह । निर्विसर्ग एवेति । केचिदिति । अत्रारुचिर्बीजं तु प्रकृतिवदनुकरणमित्यस्यानित्यत्वादप्रवृत्त्या धातुत्वाभावेन सविसर्गपाठोऽपि साधुरेवेति । एवं चेति । विधेयघटकोच्चारणार्थेष्वित्त्वप्रवृत्तेर्भाष्याभिप्रेतत्व इत्यर्थः सूत्ररीत्या स्वरितप्राप्तिमभ्युपेत्य समाधत्ते । फलाभावादिति । वस्तुतो वार्तिकरीत्या तस्य प्राप्तिरेव नेत्याह । तिति प्रत्ययग्रहणमिति । द्योशब्दस्येति । तस्य फिट्स्वरेणान्तोदात्तत्वादिति भावः ॥

अन्तोदात्तत्वं सिद्धमिति । अन्यथा स्रंसनधर्मिहल्स्थानिकत्वेनोकारस्यानुदात्तत्वे उदात्तस्वरितयोरिति स्वरितः स्यात् । उदात्तत्वनिपातने तूदात्तस्वरितयोरित्यस्यासिद्धत्वान्निपातनस्वरेणोकारस्योदात्तत्वं सिद्ध्यतीति भावः । तथोक्तमिति । तद्भावितपक्षाश्रयणादिति भावः । ननु भाव्यमानत्वेन सवर्णग्रहणाप्रसक्त्या तपरत्वं व्यर्थमत आह । उतस्तपरत्वं त्विति ।

ऽप्युकारः सवर्णग्राहकः' इत्यर्थज्ञापनार्थमिति 'तित्स्वरितम्' इति सूत्रे भाष्ये उक्तम्। द्युभ्यामित्यत्र ऊठ् न। क्ङितीत्यनुवृत्तेः। यत्तु अस्मात्तपरत्वात्, कुरुत इत्यादावुदिति तपरत्वाद् गुणाभावो यथा स्थानिवत्सूत्रे भाष्ये उक्तः तथा प्रकृते दीर्घाभाव इति कैयटः, तदेतेन परास्तम्। दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च। अत एव 'ऋत इत्' इति तपरत्वेन चिकीर्षतीत्यादौ 'हलि च' इति दीर्घस्य न व्यावृत्तिः। अत एव द्यूच इत्यादौ 'चौ' इति दीर्घसिद्धिः॥

षट्चतु॥ रेफान्तस्य षट्संज्ञैव तु न कृता चत्वार इत्यत्र लुगापत्तेः। तत्र 'रो न' इत्युक्तौ तु पदलाघवाभावः। के चित्तु

---

ज्ञापनार्थमिति। तत्फलं त्वदसोऽसेरित्यत्र ह्रस्वदीर्घयोर्ग्रहणमिति बोध्यम्। नचान्तरतम्यादुकारे ह्रस्वस्यैव प्रवृत्त्या ज्ञापनोत्तरमपि तपरतकरणं व्यर्थमिति वाच्यम्। दिव्धातोर्ण्यन्तात्क्विप्यूठि द्युभ्यामित्यादौ तच्चारितार्थ्यात्। ननु विमल ु अहरित्यात्रोत्वविधेस्सावकाशतया द्युभ्यामित्यादौ स्वादिष्विति पदत्वं बाधित्वा परत्वादूठि सकृद्गतिन्यायेन पदत्वानापत्त्या उत्वं न स्यादत आह। द्युभ्यामिति। एतेन = ज्ञापनपरातित्स्वारितमिति सूत्रस्थभाष्यविरोधेन। अन्यथा भाविद्धिमात्रव्यावृत्तये तस्यावश्यकतया तदसंगतिरिति भावः। एवं तन्मते भाष्यविरोधं प्रदर्श्य वस्तुतस्तदुक्तदिशा दीर्घवारणं न घटत एवेत्याह। दीर्घस्येति। बहिरङ्गतयेति। बह्वपेक्षत्वेन परनिमित्तकत्वेन चेति भावः। न व्यावृत्तिरिति। बहिरङ्गतया त्रैपादिकत्वेन चासिद्धत्वादिति भावः। द्यूच इति। दिवमञ्चतीति विग्रहे क्विनि दिव उदित्युत्वे शसि रूपम्॥

ननु लाघवात्षट्संज्ञासूत्रे रेफोच्चारणेनैवेष्टसिद्धावत्र सूत्रे चतुर्ग्रहणं किमर्थमत आह। रेफान्तस्येति। तिस्र इत्यादावुपजीव्यविरोधाल्लुको वारयितुं शक्यत्वादाह। चत्वार इत्यत्रेति। तत्र=षड्भ्यो लुगित्यत्र। पदलाघवाभाव इति।

**षडित्यादि षडाद्यर्थपरम् । अर्थात्परत्वश्चामः शब्दद्वारकम् । स चार्थः प्रधान एवेति न गौणेऽतिप्रसङ्ग इति । तन्न । शब्दद्वारकमित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वा अर्थे आरोप इत्यर्थः । एवञ्च गौणत्वात्तत्र सम्बन्धे तन्निरूपितसम्बन्धे च न विभक्तिः । परम्परासंबन्धेनान्वय इत्यपि न । प्रकृतिप्रत्ययार्थयोः साक्षात्संबन्धेन**

---

नच पृथाङ्निषेधसूत्रकरणेन गौरवस्यैवापादयितुं शक्यत्वेनेवमुक्तिरनुचितेति वाच्यम् । लुग्विधावर इति करणेऽस्य तात्पर्यात् । अत्र न्यासे संज्ञासूत्रस्थरेफेण सह पदत्रयं, यथान्यासे तु षट्चतुर्भ्यश्च, षट्चतुर्भ्यो हलादिरिति सूत्रद्वये चतुर्ग्रहणद्वयमेवेति यथान्यासापेक्षया पदलाघवाभाव इति भावः । षट्कतीति सूत्रे चतुर्ग्रहणं तु पक्षद्वयेऽप्यावश्यकमेव । तत्र कतिशब्दोपादानेन षडिति स्वरूपस्यैव ग्रहणादिति बोध्यम् । दीक्षिताद्युक्तिं खण्डयति । **केचित्त्विति** । **अर्थपरमिति** । बहुवचननिर्देशसामर्थ्यादिति भावः । **शब्दद्वारकमिति** । स्ववाचकशब्दात्परत्वमेवार्थात्परत्वमिति भावः । नन्वेवं प्रियपञ्चन् शब्दादामि स्ववाचकपञ्चन् शब्दात्परत्वस्यामि सत्त्वान्नुडापत्तिरत आह । **स चार्थः प्रधान एवेति** । प्रधानाप्रधानयोरिति न्यायादिति भावः । **शब्दनिष्ठेति** । षट्संज्ञकशब्दनिष्ठेत्यर्थः **परत्वावधित्वस्येति** । आम्निष्ठपरत्वावधित्वस्येत्यर्थः । इदं पञ्चम्यर्थोऽवधित्वं तत्र प्रकृत्यर्थस्याधेयतयाऽन्वय इत्यभिप्रायेण । अत्र्यवधिमद्भावस्संबन्धो विभक्त्यर्थः । तेन संबन्धेन प्रकृत्यर्थस्य परशब्दबोध्यपरत्वादावन्वय इत्याशयेनाह । **परत्वस्य वेति** । परत्वनिरूपकत्वस्येत्यर्थः । निरूपकतासंबन्धेन परत्वस्येत्यर्थो वा । **गौणत्वादिति** । अर्थनिष्ठस्यावधित्वस्य परत्वनिरूपकत्वस्य वा आरोपितत्वादिति भावः । **तत्र संबन्ध इति** । अवधित्वरूपसंबन्ध इत्यर्थः । **तन्निरूपितेति** । अवधिनिरूपितसंबन्ध इत्यर्थः । **न विभक्तिरिति** । अवधित्वादेरारोपमन्तरा प्रकृत्यर्थान्वयायोगादिति भावः । ननु मास्त्वारोपः, परंपरासंबन्धेन प्रकृत्यर्थस्य विभक्त्यर्थावधित्वेऽन्वयसंभवादत आह । **परम्परा-**

क्लृप्तस्यान्वयस्य भङ्गापत्तेः । अत एव गङ्गायां घोष इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता । अत एवेदृशस्थले षष्ठ्यपि न । अत एव 'स्त्रियाः पुंवत्' इति सूत्रे स्त्रिया इत्यर्थग्रहणमिति पक्षे भाष्यकृतोक्तं 'भाषितपुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ति' इति । दिक्शब्दयोगे इत्यस्य दिक्शब्दार्थान्वयभूतेऽवधित्वादौ सम्बन्धे पञ्चमीत्यर्थः । स च सम्बन्धो मुख्य एव साक्षात्सम्बन्ध एव च ग्रहीतुमुचित इति दिक् । णत्वं द्वित्वमिति । ननु 'पूर्वत्रासिद्धीयम-

---

संबन्धेनेति । स्ववाचकप्रतियोगिकसंबन्धेनेत्यर्थः । निरुक्तार्थद्वये मानमाह । अत एवेति । स्वरितत्वप्रतिज्ञादिनेति । अन्यथा तत्र मुख्याधारे सप्तम्यामपि स्वप्रकृत्यर्थप्रवाहस्य स्वसंयुक्ततीरवृत्तित्वसंबन्धेन विभक्त्यर्थे स्वसंयुक्ततीरद्वारकाधाराधेयभावसंबन्धेन घोषे वाऽन्वयसंभवेन स्वरितत्वप्रतिज्ञया तत्साधनं विफलमेवेति भावः । एवं गौणे विभक्त्युत्पत्तावपि तद्व्यर्थमेवेति बोध्यम् । न च गङ्गापदलक्ष्यार्थतीरस्य मुख्यघोषाधारताया एव सत्त्वात्तत्र गौणाधारे विभक्तिविधानमनावश्यकमिति वाच्यम् । अन्वयानुपपत्तिमूलिका लक्षणा पदे एवेति विभक्त्युत्पत्तिवेलायां लक्षणाया अप्रसरात् । अत एवेति । गौणेऽर्थे विभक्त्युत्पत्तेर्यत्नसाध्यत्वादेवेत्यर्थः । ईदृशेति । गौणसंबन्धेत्यर्थः । अत एवेति । अर्थस्य पौर्वापर्यासंभवादेवेत्यर्थः । ननु ध्रुवमपायेऽपादानमित्यनेन विश्लेषावधेरपादानसंज्ञाविधानेन कारकपञ्चम्या अवधित्वार्थकत्वलाभेऽपि दिग्योगलक्षणपञ्चम्याः कथं तल्लाभः । दिग्वाचकपदसमभिव्याहारे समभिव्याहृतात्पञ्चमीत्यर्थस्यैवानुशासनाल्लाभादित्याशङ्क्य तस्या अपि तद्वाचकत्वं दर्शयति । दिक्शब्दयोग इत्यस्येति । अवधित्वादाविति । आदिनाऽवध्यवधिमद्भावसंबन्धस्य ग्रहणम् ॥

द्वित्वे' इति णत्वात्पूर्वमेव द्वित्वं युक्तम् । वाक् वाक् इति भाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वात् । अन्यथा चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वेऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः। अवसाने चर्त्वस्यासिद्धत्वात् खर्परत्वाभावेन तस्य चर्त्वसंभावनाऽपि न । न च कस्य द्वित्वेऽपि अवसाने चर्त्वस्यासिद्धत्वाद्गकारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारमिति

द्वित्वं युक्तमिति । पूर्वत्रासिद्धीयमद्वित्व इत्यस्य द्वित्वविषयेऽसिद्धत्वं नेत्यर्थाद्द्वित्वस्याप्यन्यदृष्ट्याऽसिद्धत्वं नेत्याशयेनेयं शङ्का । यद्यपि पूर्वं द्वित्वप्रवृत्तावप्याद्यनस्य णत्वे परस्य ष्टुत्वे च रूपे न विशेषः, तथाप्येवमेव प्रक्रियाक्रम उचित इत्याशयः । अत एवास्य युक्तत्वमेव प्रतिपादितं, नतु रूपविशेषः । श्रीधरस्तु पूर्वं द्वित्वे पूर्वनस्य णत्वेऽपि बहिरङ्गणत्वस्यासिद्धतया परनस्य ष्टुत्वाभावेन नस्य श्रवणार्थं द्वित्वं युक्तमिति भाव इत्याह, तदयुक्तम् । त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तेः । प्राचीननयेऽपि यथोद्देशेन सिद्धेः। पक्षयोर्लक्ष्यानुरोधेन व्यवस्थितत्वात् । ननु द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यमिति वार्तिकारम्भसामर्थ्यादस्य वर्णद्वित्वेऽप्रवृत्त्या युक्तैव मूलोक्तप्रक्रियेत्यत आह । भाष्योदाहरणेति । अन्यथा=वर्णद्वित्वे तदनङ्गीकारे । गस्यैव द्वित्व इति । अस्य वर्णद्वित्वे प्रवृत्त्यभावे जश्त्वद्वित्वचर्त्वानामसिद्धत्वात्पूर्वं कुत्वे ततो द्वित्वचर्त्वयोरसिद्धत्वाज्जश्त्वेन गकारे ततश्चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वे इत्यर्थः । नचावसाने चर्त्वस्य पदान्तजश्त्वापवादतायाः स्वेनैव प्रागुक्तत्वात्कथमेतदिति वाच्यम् । तद्ग्रन्थस्य मूलकाराशयवर्णनमात्रपरतायाः प्रागुपदर्शितत्वात् । ष्णान्ता षडिति निर्देशेन तयोर्बाध्यबाधकभावाभावकल्पनाया एव ग्रन्थकृदभिप्रेतत्वात् । एतेनास्य ग्रन्थस्य स्वोक्तिविरुद्धत्वं वदन्त आचार्याः परास्ताः । ननूपान्त्यस्यापि खरि चेति चर्त्वे इष्टसिद्धिर्भवत्येवेत्यत आह । अवसान इति । वर्णद्वित्वे परिभाषाप्रवृत्त्यङ्गीकारेऽपि भाष्योदाहरणासिद्धिमाशङ्कते नचेति । उक्तरीत्यैवेति । अवसाने चर्त्वस्या-

**वाच्यम्। 'न मु ने' इतिवत् पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्य्ये कर्त्तव्येऽसिद्धत्वं नेत्यर्थ इति न दोषः। एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यं संय्यन्तेत्यत्र त्रियकारकत्वार्थम्' इतिवचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिरित्यपास्तम्। एतदवयुत्यानुवादरूपत्वादिति चेन्न ।पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्येऽन्यदसिद्धं नेत्येवार्थो न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः॥**

---

सिद्धत्वेनेत्यर्थः। कृतेऽपीति। अनया परिभाषया त्रिपाद्यामुपस्थापितस्याद्वित्व इति पदस्य विषयसप्तमीत्वमाश्रित्य वाक्यभेदेन प्रसज्यप्रतिषेधपरतया व्याख्यानादीदृशार्थलाभ इति भावः। एतेन=उक्तभाष्यप्रयोगसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वेन। वचनसामर्थ्येनेति। वर्णद्वित्वेऽप्येतत्प्रवृत्तावनेनैव परसवर्णस्यासिद्धत्वाभावे सिद्धे तदर्थं वचनारम्भो व्यर्थ इति तदाशयः। ननु भवन्मते सिद्धत्ववचनस्य का गतिरित्यत आह। एतदिति। अस्य तद्वचनस्येत्यादिः। पूर्वत्रासिद्धीयमिति न्यायसिद्धमर्थं पृथक्कृत्यैकदेशानुवादरूपत्वादिति तदर्थः। द्वित्वे कर्तव्ये इति। द्वित्वविषय इत्यर्थः। अतो न प्रागुक्तभाष्योदाहरणासङ्गतिः। इत्येवार्थ इति। पूर्वत्रासिद्धीयमित्यत्रोपतिष्ठत इत्यध्याहारः। पूर्वत्रासिद्धे भवं यच्छास्त्रं, तत्राद्वित्व इत्युपतिष्ठत इति तदर्थः। एवं च रषाभ्यामित्यादौ पूर्वत्रासिद्धमित्यस्याद्वित्व इत्यस्य चोपस्थित्या रषाभ्यां परस्य नो णो भवति। इदं च शास्त्रं पूर्वत्रासिद्धम्। द्वित्वरूपपूर्वशास्त्रविषये तु नासिद्धमित्येवंरीत्या वाक्यभेदेन संबन्धः। अतो द्वित्वविषयेऽन्यस्यासिद्धत्वाभाव एव लभ्यते। न त्वन्यदृष्ट्यापि द्वित्वस्य तदभाव इति भावः॥

यत्तु अन्ये तु पूर्वत्रासिद्धीयमद्वित्व इत्येतत्पदद्वित्वविषयकमेव। द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्। उभौ साभ्यासस्येति च लिङ्गात्। तेनोर्णुनाव,

**रोः सुपि** । अत्र खरीत्यनुवर्त्तते । तेन सप्तमीबहुवचनमेवात्र सुप् । एवञ्च 'खरवसानयोः' इति सिद्धे इतरनिवृत्तिफलक एवैष विधिरित्याह—रोरेवेति । विपरीतनियमस्तु न । 'हलोऽनन्तराः

---

औजढदित्यादि सिद्धम् । अन्यथा परत्वाण्णत्वढत्वयोस्तदसिद्धिः । द्वित्वे कृते द्वित्वाश्रयस्य कार्ये कर्तव्ये असिद्धत्वं नेत्यपि न, मानाभावात् । अभ्यासे जश्त्वचर्त्वयोरेत्वतुकोरिति वार्तिकाच्च । अत एव फलभजिग्रहणं ज्ञापकम्, अभ्यासादेशसिद्धत्वस्येत्यत एकहलिति सूत्रे भाष्ये उक्तम् । त्वद्रीत्या द्वित्वाश्रयस्यैत्वे जश्त्वासिद्धत्वाभावेन ज्ञापकोपन्यासवैयर्थ्यमिति दिगित्याचार्यास्तन्न। उक्तभाष्योदाहरणेन वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकतयाऽसिद्धवचनस्य तदेकदेशानुवादरूपताया एव युक्तत्वात् । उभौ साभ्यासस्येति लिङ्गेन सामान्यतोऽनित्यत्वज्ञापनेनोर्णुनाव, औजढदित्यादेस्सिद्धत्वात् । भवदुक्तदिशा तेन लिङ्गेनास्य न्यायस्य पदद्वित्वमात्रविषयकत्वकथने भाष्योदाहरणासाङ्गत्यस्य दुर्वारत्वात् । द्वित्वे कृतेऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वं नेत्यर्थे निरुक्तभाष्योदाहरणस्यैव मानत्वेन तत्रार्थे मानाभाव इति तदुक्तिरप्ययुक्ता । किंच तृफलेति सूत्रे फलभजिग्रहणमप्यत्रार्थे मानम् । अन्यथा तत्र द्वित्वोत्तरं जश्त्वादीनामसिद्धत्वादत एकहलिति सूत्रेणैवैत्वाभ्यासलोपयोस्सिद्ध्या तद्वैयर्थ्यं स्पष्टमेव । फलभजिग्रहणं ज्ञापकमभ्यासादेशसिद्धत्वस्येत्यत एकहलिति सूत्रस्थं भाष्यमपि तेन लिङ्गेनात्र न्याये ईदृशार्थाश्रयणद्वारा अभ्यासादेशसिद्धत्वप्रतिपादनतात्पर्यकमेव । अन्यथा वाकिति तदुदाहरणासङ्गतेर्दुर्वारत्वादिति दिक् ॥

**सप्तमीबहुवचनमेवेति** । न तु प्रत्याहारः, सप्तमीबहुवचनादन्यत्र खरोऽसंभवादिति भावः । **एवं चेति** । सप्तमीबहुवचनस्यैव ग्रहण इत्यर्थः । **विपरीतनियमस्त्विति** । रोर्यदि विसर्जनीयः स्यात्सदा सुप्येवेत्येवंरूप इत्यर्थः । ननु चतुर्ष्वित्यादौ सत्यपि द्वित्वे झरो झरीति लोपेनेष्टसिद्ध्या

संयोगः' इति निर्देशात्। द्वित्वे इति। 'अचो रहाभ्याम्' इत्यनेन। अचो रहेत्यतो द्वे इति, नादिनीत्यतो नेति च वर्त्तते। तदाह—न द्वे स्त इति। 'झरो झरि' इति लोपस्तु वैकल्पिकः। प्रियचत्वार इति। आङ्त्वात्तदन्तस्यापि 'चतुरनडुहोः' इत्याम्। गौणत्वे तिष्वति। अत्र यद्वक्तव्यं तत् 'नामि' इत्यत्रोक्तम्। यत्तु 'ष्णान्ता' इत्यत्र संख्यापदानुवृत्तेः, तस्य च संख्याबोधकशब्दपरत्वात्प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न। संख्यापदेन च संख्येयमुच्यते। अतः संख्येयपरपञ्चादौ तस्य प्रधान्यात् संज्ञा सिद्धा। यद्वा षडित्यन्वर्था संज्ञेति न गौणे सा,

निषेधारम्भो व्यर्थोऽत आह। वैकल्पिक इति। एवं च लोपाभावपक्षे द्विषकारकरूपवारणाय निषेध आवश्यक इति भावः। नामीत्यत्रोक्तमिति। षट्चतुर्भ्य इत्यस्य गौणेऽपि प्रवृत्तिरिति हि तत्रोक्तमिति भावः। तस्य चेति। अनुवृत्तसंख्यापदस्येत्यर्थः। प्रधानन्यायेनेति। प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्यय इति न्यायेनेत्यर्थः। षट्त्वमेव नेति। प्राधान्येन संख्याबोधकत्वाभावादिति भावः। नन्वादशतः संख्यास्संख्येय इत्युक्त्या पञ्चादिशब्दानां संख्येयपरत्वेनाश्रयविशेषणतयैव ततस्संख्यायाः बोधेन प्राधान्येन संख्याबोधकत्वाभावात्तेषां संज्ञा न स्यात्। किञ्च प्रधानाप्रधानयोरुभयोरपि सत्त्व एव प्रधानन्यायप्रवृत्त्या प्रकृते प्राधान्येन संख्याबोधकषान्तनान्तानामसंभवेन न तन्न्याय प्रवृत्त्यवकाश इत्यत आह। संख्यापदेन चेति। तस्येति। संख्येयस्येत्यर्थः। एवं च प्रधानन्यायप्रवृत्तिरपि सूपपादैवेति भावः। ननु प्रधानन्यायस्य नात्र प्रवृत्तिः, यत्र हि प्राधान्येनार्थस्य ग्रहणं, यथा स्त्रियामित्यादौ, तत्रैव तत्प्रवृत्तेः। प्रकृते चार्थस्य प्राधान्येनानुपादानात्। अत एवाक्षिदधीत्यादीनां गौणेऽपि प्रवृत्तिरुक्ता भाष्ये इत्यत आह। यद्वेति। अन्वर्था संज्ञेति। षडिवाचरति षडित्येवं रूपेत्यर्थः। न गौणे सेति।

इति। तन्न। प्रियपञ्चा द्रौपदीत्यत्र 'न षट्' इति डाप्निषेधानापत्तेः। आकडारसूत्रे भाष्येऽस्या डुसञ्ज्ञया व्यवहाराच्च। सर्वनामसंज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च। सर्वनामसंज्ञासूत्रस्थेन 'षड्भ्य' इति सूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम्॥

कमलिति। 'तदाचष्टे' इति णिचीष्ठवद्भावाट्टिलोपे कर्तरि

---

षट्शब्दवत्प्राधान्येन संख्येयवाचकषान्तनान्तानामेव षट्संज्ञाविधानेन गौणे तदप्रवृत्तिरित्याशयः। डाप्निषेधानापत्तेरिति। नच स्त्रियां यत्प्राप्नोति तन्नेत्यर्थाश्रयणसामर्थ्येन भूतपूर्वषट्त्वमादाय निषेधप्रवृत्तेः स्वेनैवोक्तत्वाद्वृत्तेः प्राक्स्थितं षट्त्वमादायात्रापि निषेधप्रवृत्तेरसंभवादिदमयुक्तमिति वाच्यम्। पञ्चेत्यत्र नलोपे कृतेऽपीत्यादिवक्ष्यमाणमूलकृन्मतानुसारेणैतद्ग्रन्थप्रवृत्त्याऽदोषात्। स्वमतेऽपि षट्संज्ञाप्रयोजकनान्तसंख्यावाचकत्वविशेषणीभूतनान्तत्वांशे भूतपूर्वगत्याश्रयणेन तदर्थस्य कृतार्थतया अन्यांशे तदाश्रयणे मानाभाव इति बोध्यम्। निरूपयिष्यते चेदं स्त्रीप्रत्ययप्रकरणे। एतेनास्य ग्रन्थस्यायुक्तत्वं वदन्त आचार्याः परास्ताः। नन्वेवमपि सति तात्पर्येऽन्वर्थत्वाभावे न मानमत आह। आकडारसूत्र इति। अस्याः=षट्संज्ञायाः। डुसंज्ञयेति। एवं च तदानीमन्वर्थताया वक्तुमशक्यतयाऽत्रान्वर्थत्वाश्रयणेन तद्विरुद्धफलकल्पनमयुक्तमित्याशयः। ननु शिट्सर्वनामपदयोरिव षट्शब्दडुशब्दयोः पर्यायत्वाभिप्रायेणैव तथा व्यवहारो, नतु संज्ञासूत्रे डुपदमेव कार्यमित्याशय इति न तद्भाष्यमन्वर्थत्वाश्रयणे बाधकमित्यत आह। सर्वनामसंज्ञावदिति। अनारम्भाच्चेति। वार्तिककृतेति शेषः। अस्य गौणेऽप्रवृत्तेरिष्टत्वे तत्रेवात्रापि तेनोपसर्जनप्रतिषेध आरब्धस्स्यादिति भावः। गौणेऽस्या अप्रवृत्तौ भाष्यविरोधं दर्शयति। सूत्रविषय भाष्येणेति। तत्र हि गौणे लुकोऽप्रवृत्तये षड्भ्यो लुगित्यत्र विहितविशेषणत्वमाश्रितम्। त्वद्रीत्या प्रियपञ्चान इत्यत्र षट्त्वा-

क्विपि 'णेरनिटि' इति णिलोपः। वस्तुतो लण्सूत्रे 'न हि पदान्ताः परेऽणः सन्ति। ननु चायमस्ति कर्तृ हर्तृ' इति भाष्यात् 'भोभगो' इति सूत्रे 'वृक्षव् करोति' इति भाष्यस्यैकदेशयुक्तित्वात् कमल् वृक्षव् इत्यादेरनभिधानमेवोचितम्। यान्तास्तु नैव सन्ति। क्विपि 'लोपो व्योः' इति यलोपात्। णिलोपस्य स्थानिवत्त्वं तु न, यलोपे तन्निषेधात्॥

प्रशानिति। शाम्यतेः क्विप्। 'अनुनासिकस्य' इति दीर्घः। अयं शान्तिसाम्यान्यतरवद्वाचकः सत्त्ववाचीति स्वरादिपाठेऽप्यस्य नाव्ययत्वम्। साम्यवाचिन्यसत्त्वार्थके तु स पाठः सार्थक इति दिक्। विभक्ताविति। 'अष्टन आ' इत्यतोऽनुवृत्तेरिति भावः।

---

भावादेव लुगप्रवृत्तौ तदाश्रयणं व्यर्थमिति भावः। इति भाष्यादिति। प्रथमतस्सामान्यतो नहि पदान्ताः परेऽणस्सन्तीत्याभिधाय ततो ननु चायमस्ती त्यादिना अज्रूपस्यैव पराणः प्रदर्शनेन हल्रूपस्य तस्यासत्त्वं तस्माल्लभ्यत इति भावः। ननु भोभगो इति सूत्रे भाष्ये वृक्षव्करोतीति प्रयोगस्य कण्ठत उक्तत्वाद- नभिधानोक्तिरयुक्तेत्यत आह। एकदेशयुक्तित्वादिति। अनभिधानमेवेति। अत्रत्यं तत्त्वमधस्तान्निरूपितं गुरुचरणैः। यान्तास्तु नैव सन्तीति। लोके इति शेषः। तेनायवायाव इत्यादिसौत्रप्रयोगसत्त्वेऽपि न क्षतिरिति बोध्यम्। ननु ण्यन्तकतिपयादिशब्देभ्यः क्विपि यान्तानां संभवोऽस्त्येवेत्यत आह। क्विपीति। ननु प्रशाम् शब्दस्य स्वरादिपाठेनाव्ययत्वात्प्रशामावित्याद्यनुप- पन्नमत आह। अयमिति। नाव्ययत्वमिति। अव्ययमिति महासंज्ञया असत्त्वार्थकस्यैव तस्याव्ययत्वादिति भावः। नन्वेवमस्य स पाठो व्यर्थोऽत आह। साम्यवाचिनीति॥

**अकच्सहितस्यापीति । तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात्। अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच् । यद्यपि निर्दिश्यमान-परिभाषया न प्राप्नोति । अत एव 'भिन्धकीत्यत्राकचि धित्वं न प्राप्नोति' इति भाष्ये पूर्वपक्षं कृत्वा 'अन्तरङ्गत्वाद्धित्वेऽकच्' इत्याद्युक्तम् । तथापि आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटः ॥**

---

नन्वकज्विशिष्टस्य शब्दान्तरत्वात्कथं तस्यादेश इत्यत आह। **तन्मध्येति**। नन्वकजपेक्षया परत्वात्कादेशे सकृद्गतिन्यायेन पुनस्तदप्रवृत्ताविदमसङ्गतमत आह । **अङ्गानपेक्षत्वेनेति** । अङ्गनिमित्तप्रत्ययानपेक्षत्वेनेत्यर्थः । एतेन संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणाच्चिन्त्यमेतदित्यपास्तम् । यद्यपि कुत्सित इति सूत्रस्थभाष्यप्रामाण्यात्सुबुत्पत्त्यनन्तरमेवाकचः प्रवृत्तिस्तथापि तत्र प्रातिपदिका-दित्यस्य सुप इत्यस्य चानुवृत्त्या वाक्यभेदेन संबन्धस्य प्रागुक्तत्वेन तत्र युष्मदस्मद्भिन्नसर्वनामविषयकेनाद्यवाक्येनैवात्राकचो वक्तव्यतया तस्य वस्तुतस्सु बुत्पत्त्यनन्तरमुत्पत्तावपि तत्र सुपश्शब्दतो निमित्तत्वेनानाश्रयणादादेशापेक्षया-ऽन्तरङ्गत्वमिति भावः । हुझल्भ्यो हेर्धिरिति सूत्रस्थभाष्येणाकज्विशिष्टस्य निर्दि-श्यमानत्वं नेति कैयटानुरोधेन शङ्कते। **यद्यपीति**। **अत एवेति**। अकज्विशिष्ट-स्य निर्दिश्यमानत्वाभावादेवेत्यर्थः । **न प्राप्नोतीति** । निर्दिश्यमानपरिभाष-येति तदाशयः । **अन्तरङ्गत्वादिति**। अज्ञाताद्यर्थापेक्षत्वेनाकचो बहिरङ्गत्व-मिति कैयटोक्तरीत्येदम् । भाष्ये तु परत्वाद्धित्वमित्येवोक्तं, न त्वन्तरङ्गत्वादिति बोध्यम् । **इत्युक्तमिति** । अकज्विशिष्टस्यापि निर्दिश्यमानत्वे शङ्कासमाधान-योरसङ्गतिः स्पष्टैवेति भावः। **कैयट इति** । एतेनात्रारुचिस्सूचिता । तद्बीजन्तु स्थानिवद्भावेनेव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात्स्थानिवद्भावविषय इव तन्मध्यपतिन्यायविषयेऽपि न निर्दिश्यमानपरिभाषायाः प्रवृत्तिः । अत

इदमो मः। 'तदोः सः सौ' इत्यतोऽनुवृत्तेराह—साविति। इदोऽय्। 'यः सौ' इत्यतः साविति वर्त्तते। दश्च। इह 'अष्टन' इत्यतो विभक्ताविल्यनुवर्त्तते। साविदमो दस्यासम्भवात्। तदाह—विभक्ताविति हलादाविति। आपीति वर्त्तते। 'हल्यग्' इति वक्तुं युक्तम्। अक इति पर्युदासादिदं गौणे न प्रवर्त्तेत इत्याहुः।

---

एव कादेशः खल्ववश्यं वक्तव्यः, साऽकच्कार्थमिति त्यदादीनाम इति सूत्रस्थं भाष्यं संगच्छते। अत एव च नेदमदसोरकोरिति ककारवत्पर्युदासस्य तन्मध्यपतितन्यायज्ञापकत्वप्रतिपादनपरयेनविधिरिति सूत्रस्थं भाष्यमप्युपपद्यते। अन्यथा साकच्कयोरिदमदसोर्निर्दिश्यमानत्वाभावेन त्यदाद्यत्वाप्राप्त्या स्वांशे चारितार्थ्याऽयोगात्तदसङ्गतिः स्पष्टैव। हुझल्भ्यो हेर्धिरिति सूत्रस्थं भाष्यं तूक्तभाष्यद्वयविरोधादेकदेशिन एवेत्यावृत्त्याश्रयणं विफलमेवेति। एतेनाकज्विषये नायं न्याय इति परिभाषेन्दुशेखरेणेदं विरुद्धमित्यपास्तम् ॥

ननु सन्निकृष्टस्य सावित्यस्यैव कुतो नानुवृत्तिरित्यत आह। साविदम इति। नन्वककारस्येदम इदो लोपो हलादौ विभक्तावित्यर्थे इत इत्यादौ साकच्के चरितार्थस्येशादेशस्य परत्वादनेन बाधे सकृद्गतिन्यायेनेशादेशो न स्यादत आह। आपीति। एवं च विभक्ताविल्यनुवृत्तेः फलाभाव इति बोध्यम्। मात्रालाघवानुरोधेनाह। हल्यशिति। संज्ञावाचकानामर्धमात्रिकत्वं त्विण इति तिस्रो मात्रा इति भाष्यविरोधादयुक्तमित्याशयः। तदभ्युपगमेऽप्यलोऽन्त्यविध्यप्रवृत्तये नानर्थक इति परिभाषानुसन्धानं, तत्प्रत्याख्यानेऽप्यन्ग्रहणानुवृत्तिः, तस्य षष्ठ्यन्तत्वकल्पनमित्यादि ज्ञानगौरवं यथान्यास इति बोध्यम्। गौणेऽस्याप्रवृत्तये त्यदादीनामित्यस्यानुवृत्तिः केषांचिदनावश्यकीति सूचयन्नाह। अक इति। श्रीधरास्तु 'नन्विदमाचष्टे इद् ततो भ्याम्यशादेशे आभ्यामिति. लोपे इभ्यामिति च स्यादित्यत आह। अक इतीत्यवतारयन्ति।

नन्विदोऽन्त्यस्य लोपः स्यादत आह—नानर्थके इति। इयमुपधा-संज्ञासूत्रे भाष्ये स्पष्टा। फलानामन्यथोपपादनेन भाष्ये प्रत्याख्याता च। प्रत्याख्याने अनापीत्यतोऽन् इत्यनुवर्त्त्य हलीति सप्तम्याः षष्ठीं प्रकल्प्यान एव 'अलोऽन्त्यस्य' इति लोपे पररूपे चेष्टसिद्धिर्बोद्ध्या। ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे अ भ्यामिति स्थितेऽङ्गस्याऽकाररूपत्वेनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह—आद्यन्तवदिति। आदिरन्त्येनेति सूत्रोक्तरीत्याऽऽद्यन्तशब्दयोर्विशिष्टशक्ततया तत्प्रयुक्तकार्याण्यसहाये न

---

तदसत्। यथान्यासेऽपि नानर्थक इति निषेधादलोऽन्त्यपरिभाषाया अप्रवृत्त्या सर्वस्यापि लोपे फलभेदाभावात्। तत्प्रत्याख्यानेऽप्यनादेशोत्तरमनोऽन्त्यस्य लोपेन तदभावात्। पर्युदासादिति। न चाक इत्यस्य बहुव्रीहित्वेनेदमसङ्गतमिति वाच्यम्। तत्त्वेऽपि संयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात्संभवत्ककारवत एवेदमो ग्रहणमित्याशयात्। अत्र नञ उत्तरपदार्थानन्वयित्वेन पर्युदासत्वाभावेऽप्यक इत्यस्य विशेषणतया निषेधस्यार्थिकत्वात्पर्युदाससादृश्यात्त्वेन व्यवहार इति बोध्यम्। यद्वा अक इत्यत्र अर्श आद्यजन्तकशब्देन नञ्तत्पुरुष इत्याशयको वाऽयं ग्रन्थ इति बोध्यम्। गौण इति। इदम् शब्दादाचक्षाणण्यन्तात्क्विपि ततो भ्यामीद्भ्यामित्यादावित्यर्थः। इदं च यथान्यासेऽपि, नत्वशिति न्यास एव। एतनाश्लोपयोः कः फलभेदो येनाक इत्याद्युक्तमित्यपास्तम्। नन्वश्करणे उदात्तानुदात्तयोः स्थाने जायमानोऽश् स्वरित एव स्यात्। तथा चान्तोदात्तात्परत्वाभावेनोडिदमित्यस्य सावेकाच इत्यस्य वाऽप्रवृत्त्या आभ्यामित्यन्तानुदात्तं स्यात्। लोपे तु तत्प्रवृत्त्याऽन्तोदात्तमिति फलभेदः स्यादिति चेन्न। इद इत्यनुवर्त्येदम इदोऽश्विधानेनादोषात्। द्वयोरकारयोः पररूपेऽकारस्योदात्तत्वानपायात। विशिष्टशक्ततयेति।

स्युरित्ययमारम्भः । एकस्मिन्निति । असहाये इत्यर्थः । तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इवासहायेऽपि स्यादित्यन्वयः। उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह—आदाविवेति । एकस्मिन्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽल्न । आदिवत्त्वफलमौपगवेऽण आद्युदात्तत्वम् । कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव । तदाह—कार्यमिति । ननु इद ए इति स्थिते स्मैभावात्परत्वादनादेशो सकृद्गताविति न्यायेन स्मै न स्यादत आह—नित्यत्वादिति । स्मै—आदेशे तु न अनादेशो हलि लोपेन बाधात् । लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्र ग्रहणात्। अकोऽकोरित्यनयोः फलमाह—ककारयोगे त्विति । अव्ययसर्वनाम्नामित्यकचीति भावः। अस्यानवयवत्वेऽपि तन्मध्यपतितन्यायात्तद्विशिष्टे प्राप्तिरिति बोध्यम् ॥

इदमोऽन्वा ॥ अनुदात्तत्वमाभ्यामित्यादावूडिदमिति 'सावेकाच' इति वा विभक्त्युदात्तत्वाभावाय । उभयत्राप्यनुवृत्त्य-

---

स्वघटकत्वस्वघटकपूर्वत्वस्वघटकोत्तरत्वाभाववत्त्वैतात्रितयसंबन्धेन यत्किञ्चित्समुदायविशिष्टे आदिशब्दस्य, स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वैतत्त्रितयसंबन्धेन यत्किञ्चित्समुदायविशिष्टेऽन्तशब्दस्य च शक्ततयेत्यर्थः। न स्युरिति । निरुक्तत्रितयसंबन्धेन समुदायविशिष्टत्वस्य तत्र दुर्वचत्वादिति भावः । असहाय इति । तत्त्वं चातिदिदिक्षितधर्मवद्द्वितीयशून्यत्वम् । ननु कृताकृतप्रसङ्गमात्रेणापि नित्यताया अभ्युपगमादनादेशस्यापि तत्त्वमक्षतमेवेत्यत आह । लक्ष्यानुरोधेनेति । अकोकोरित्यनयोरिति । अनाप्यक इत्यत्राक इत्यस्य नेदमदसोरकोरित्यत्राकोरित्यस्य चेत्यर्थः । ननूडिदमित्यादिना विभक्तेरुदात्तत्वे शेषनिघातेन इदमोऽनुदात्तत्वे सिद्धेऽनुदात्तविधानं व्यर्थमत आह। अनु-

पकर्षाभ्यामन्तोदात्तादित्यस्य सम्बन्धात्। एवञ्चाभ्यामित्यादि सर्वानुदात्तम्। 'एभिरग्ने प्रेणा तदेषाम्' इत्यादौ तथा श्रवणात्। नन्वेवमप्यत्वे हलि लोपेनाऽभ्यामित्यादेः सिद्धावनुदात्तत्वेनैवसिद्धावश्विधानं व्यर्थमत आह। साकच्कार्थमिति। शित्त्वात्सर्वादेश इति भावः। संज्ञोपसर्जनयोस्तु नेदम्। एतदस्त्रतसोरित्युत्तरसूत्रसाहचर्यात्। न च त्यदाद्यत्वेन सिद्धेऽकारविधानमेव साकचि सर्वादेशार्थं भविष्यति, किं शित्त्वेनेति वाच्यम्। अन्यार्थतापत्तेः। द्वितीयाटौ॥ पूर्वसूत्रादिदम इति, 'एतदस्त्रतसोः' इत्यत एतद इति चानुवर्त्तते, अनुदात्त इति च। विधातुमिति विधानमत्राज्ञातज्ञापनमेव, न तु प्रवर्त्तनाविषयत्वम्। तच्चेदमैवेति नाग्रहः। स्पष्टश्चेदं भाष्ये॥

---

दात्तत्वमिति। सर्वानुदात्तमिति। प्रकृतेरनेन, प्रत्ययस्य सुप्पिताविल्यनेन चानुदात्तत्वादिति भावः। अनन्वादेशे तूडिदमित्यनेन विभक्तेरुदात्तत्वे शेषनिघातेनादिरनुदात्त इति विशेषः। अस्य सर्वानुदात्तत्वे साधकमाह। एभिरिति उत्तरसूत्रसाहचर्यादिति। एतच्छब्दस्य सर्वनामत्व एव त्रतसोस्संभवेन गौणे तदभावात्तस्य गौणेऽप्रवृत्तिरिति भावः। सूत्रान्तरसाहचर्यानाश्रयणे त्वेतद इत्युत्तरसूत्रविषयेऽशोऽनुपसर्जनस्थानिकत्वेनात्राप्यर्थाधिकारानुरोधादनुपसर्जनस्थानिकत्वमेवोचितमिति बोध्यम्। अत्र साहचर्यादिति त्वर्थाधिकारोपलक्षकम्। अन्यार्थतापत्तेरिति। आभ्यामित्यादौ दीर्घादिबाधनार्थत्वापत्तेरित्यर्थः। न च साक्षाद्विधिबाधकल्पनापेक्षयाऽलोन्त्यपरिभाषाबाध एवोचित इति वाच्यम्। एवमपि विनिगमनाविरहात्कदाचित्तन्निमित्तपरिभाषायाऽपि बाधापत्तौ विभक्तेरादेशप्रसङ्गात्। तच्चेति। अज्ञातज्ञापनमित्यर्थः। इदमैवेति। इदंशब्देनैवेत्यर्थः। स्पष्टं चेदमिति। 'अन्वादेशश्च कथितानुकथनमात्रं, न त्विदमा कथितमिदमैव यद्यनुकथ्यत', इति ग्रन्थेनेति भावः॥

सुगण्ड्स्विति। 'ङ्णोः' इति टुक्। तस्यासिद्धत्वान्न जश्त्वम्। नलोप इति। नकारलोप इत्यर्थः। न चात्र प्रत्ययान्तत्वादप्रत्यय इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यम्। पर्युदासे यथोद्देशेन सिद्धेः। न च कार्यकालपक्षे दोषः, व्यवस्थित-पक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्ध्या पक्षान्तरेण दोषदानस्य काप्यदृष्टत्वात्। ध्वनितञ्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये। न च—प्रसज्यप्रतिषेधे दोषः, तत्पक्षे लोपेनेव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वादिति वाच्यम्। 'न ङिसम्बुद्ध्योः' इति निषेधेन प्रत्यय-लक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात्। स्पष्टश्चेद-मर्थवत्सूत्रे भाष्ये॥

न ङि॥ ङौ तु छन्दसीति। राजनीत्यादौ भत्वान्नलोपाप्राप्तेः। राजनीवाचरतीत्यर्थे 'अधिकरणाच्च' इति क्यष् तु लोके नास्त्येव।

---

परत्वादुपधादीर्घः हल्ङ्यादिलोपः। ततो नलोपः इति मूलस्य ततो दीर्घानन्तरं हल्ङ्यादिलोपो यः प्राप्तस्स सकृद्गतिन्यायान्न भवतीत्यर्थभ्रमवार-णायाह। नकारेति। नलोप इति षष्ठीसमासो न तु निषेधार्थको नञ्। तत इत्यस्य पुनः प्रसङ्गविज्ञानाद्धल्ङ्यादिलोपानन्तरमित्यर्थ इति भावः। कार्य-कालपक्षाभिप्रायेण शङ्कते। न चेति। पर्युदास इति। प्रसज्यप्रतिषेधे तु यथोद्देशेपि प्रकल्प्य चापवादविषयमिति न्यायेन पूर्वं सा न स्यादिति भावः। ध्वनितमिति। तत्र हि कार्यकालत्वाभिप्रायेणाग्नी इत्यत्राप्रगृह्यस्येत्यनुनासिक-प्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वाद्द्विमात्रिकत्वाभावादीदूदेदिति प्रगृह्यत्वं न प्राप्नोतीत्याशयेन 'एवमपि यत्सिद्धे प्रगृह्यकार्ये तत्प्लुतस्य न प्राप्नोतीत्याशङ्क्य यथोद्देशपक्षमाश्रित्य समाहितम्। तेनेदं ध्वनितमिति भावः॥

ङौ नलोपनिषेधस्य छन्दोमात्रविषयकत्वमुपपादयति। राजनीत्यादा-

अनभिधानात् । अत एव परमे व्योमन्नित्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छत इति भावः । सामर्थ्यादिति । न लुमतेति निषेधानित्यत्वप्रतिपादनद्वारेत्यर्थः । एतदनित्यत्वबललब्धमेव 'वा नपुंसकानाम्' इति बोध्यम् । न च परमे व्योमन्नित्यत्र घोषत्वाल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे स्वादिष्विति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनेदं चरितार्थमिति वाच्यम् । अन्तरङ्गानपीति न्यायेन, संयोगान्तलोपस्यासिद्धत्वेन च पूर्वसवर्णेऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात् । स्पष्टश्चेदं भाष्ये । ङावुत्तरपदे इति । एतद्बललब्धमेव 'ङौ तु छन्दस्युदाहरणम्' इत्युक्तम् । न चेति । पञ्चमीसमासेन प्राप्तिः। षाष्ठीमिति। 'वाह ऊठ्' इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । कार्यकालपक्षेऽपि त्रिपाद्यां तदप्रवृत्तिः प्रागुक्ता । जञोर्ज्ञ इति । जञयोगे लोकवेदसिद्धताद्दशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनं, न त्विदं वर्णान्तरम् । शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात् । अत एव तज्ज्ञानमित्यादौ श्चुत्वसिद्धिः ॥

---

विति । अनभिधाने मानमाह । अत एवेति । यदीदृशानां लोकेऽभिधानं स्यात्तदाऽत्र लोपनिषेधाय तस्यावश्यकतया तदसङ्गतिरित्याशयः । निषेधानित्यत्वद्वारा प्रत्ययलक्षणकल्पने फलान्तरमप्याह । एतदिति । ननु निषेधसमर्थ्यात्प्रत्ययलक्षणमिति मूलमयुक्तम् । निषेधस्यान्यत्र सावकाशत्वादिति शङ्कते । न चेति । एतल्लब्धमेवेति । ङौ निषेधस्य लुक्येव संभवः । अन्यथा पदत्वाभावेन नलोपाप्राप्तेः । लुक् तु समासे छन्दसि च भवति । तत्रोत्तरपदेऽनेन तस्य निषेधे तन्निषेधस्य छन्दोमात्रविषयकत्वं फलतीत्याशयः। अत एव=वर्णान्तरत्वाभावादेव ॥

**सुब्विधाविति ।** सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम् । विधिशब्दो भावसाधनः, कर्मसाधनश्च । तत्र स्वरादिविषये भावसाधनः । सुब्विषये कर्मसाधनः । कृतीत्ये तत्सामर्थ्यात्तुक एव विशेषणमित्याह—कृति तुगिति । पूर्वत्रासिद्धमित्येव सिद्धेऽन्यनिवृत्तिफलकोऽयम्, तदाह—नान्यत्रेति । अन्यनिवृत्तिफलक—सिद्धविषयकविधित्वमेव नियमत्वम् । अत एव पस्पशायां भाष्ये 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र 'भक्ष्यनियमेऽभक्ष्य प्रतिषेधो गम्यते' इत्युक्तम् । तदाह—इत्यसिद्धत्वादितीत्यन्यत्र विस्तरः। सुब्विधि शब्देन सुप्त्वतव्याप्यधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणम् ।

---

**सर्वविभक्त्यन्तेति ।** सर्वग्रहणमनेकोपलक्षकम् । सुपि विधिः, सुपो विधिरिति च समास इति भावः । यद्वा युगपदेकस्मादनेकविभक्तेः कर्तुमशक्यतया सर्वविभक्त्यन्तार्थकषष्ठ्यन्तावयवकस्समास इत्यर्थो बोध्यः । एकदेशान्वयासंभवादाह । **सामर्थ्यादिति ।** अन्यत्र तद्विशेषणस्यासंभवादाह । **तुक एवेति । निवृत्तिफलक इति ।** एतेन नियमप्रदेशेषु निषेधस्याशाब्दत्वं सूचितम् । तेन च नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिरित्यर्थस्सूचितः । नियमस्थले प्रतिषेधस्यार्थिकत्वे मानमाह । **अत एवेति । पस्पशायामिति ।** स्पशबाधनस्पर्शनयोरित्यस्माद्यङि ततः पचाद्यचि यङो लुकि रूपम् । एतेन स्पृशेर्यङन्तादप्रत्यये संज्ञापूर्वकविधेरनित्यत्वात्पृषोदरादित्वाद्वा साधुरित्याचार्योक्तं नातीव समञ्जसमिति बोध्यम् । **गम्यत इति ।** प्रतीयत इत्यर्थः । एतेन तस्याशाब्दत्वमुक्तं भवति । तस्यापि शाब्दत्वं यद्यभिमतं स्यात्तदा अभक्ष्यप्रतिषेध उच्यत इत्येव वदेदिति बोध्यम् । **तदाहेति ।** नियमशास्त्राणां विधिमुखप्रवृत्तेरुक्तभाष्यतो लाभान्निषेधमुखेन प्रवृत्तौ दोषत्रयसत्त्वाच्च विधिमुखेन प्रवृत्तिरेव युक्तेत्याशयेनाहेत्यर्थः । **अन्यत्र**=मञ्जूषायाम् । नन्वत्र

सुब्विधिशब्देन सुप्शब्दमुच्चार्य विहितविधेरेव ग्रहणे राजभिरित्यादावैसि कर्तव्ये नलोपासिद्धत्वाप्राप्त्या ऐस् स्यात् । भाष्ये सर्वविभक्त्यन्तावयवकस-मासाश्रयणवैयर्थ्यं च । किञ्चाज्ग्रहणस्य न लुमतेति निषेधानित्यत्वज्ञापनपरे-कोऽचि विभक्ताविति सूत्रस्थभाष्यासङ्गतिः । तत्र सुपः स्वरूपेणोच्चारणाभावेन तद्विषये नलोपस्यासिद्धत्वाप्राप्तौ अज्ग्रहणाभावपक्षे नपुंसकदण्डिन्शब्दाद्ङ्यामि नलोपे नुमि लक्ष्ये लक्षणन्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणेन, अज्ग्रहणे नुमोऽप्राप्त्या तदश्रवणेन च फलभेदादित्यत आह । सुब्विधिशब्देनेति । न च भिस्त्वस्य ब्राह्मणभिस्सेत्यादावसुप्यपि सत्त्वेन कथं तस्य तद्व्याप्यत्वमिति वाच्यम् । केवलभिस्त्वस्य तथात्वेऽप्यङ्गसंज्ञानिमित्तस्य तस्यातथात्वेनादोषात् । अतो भिस इत्यस्यादन्तात्परस्याङ्गसंज्ञानिमित्तस्य भिस इत्येवार्थात् । नचैव-मपीकोऽचि विभक्ताविति सूत्रस्थभाष्यविरोधस्तदवस्थ एव । तत्र विभक्तित्वस्य सुप्त्वव्याप्यत्वाभावादिति वाच्यम् । सुप्त्वतद्व्याप्येत्यादेः वस्तुगत्या सुम्मात्रस्य निमित्तत्वेन कार्यित्वेन वा यत्राश्रयणं तत्रैवासिद्धत्वमित्याशयकत्वात् । न चैवमर्थे मानाभावः इति वाच्यम् । असति बाधके सर्वं वाक्यं सावधारणमिति न्यायेन सुप एव विधावित्यर्थलाभेनोक्तार्थस्य फलितत्वात् । षत्वस्य तिङादिष्वपि प्रवृत्त्या ऽतथात्वात् । न च नियमापेक्षया विधेर्ज्यायस्त्वाद्विधित्वानुरोध एव तत्र बाधकमिति वाच्यम् । तथा सति तस्यैव ग्रहणलाभेन षग्रहण एव कर्तव्ये सुब्ग्रहणवैयर्थ्यापत्तेः । न च तदनुरोधेनोभयोर्ग्रहणमस्तु, मास्त्ववधारणमिति वाच्यम् । तथा सत्येतद्विषये पूर्वपरयोर्ग्रहणं स्वारादिषु पूर्वस्यैव ग्रहणमिति, सुब्विधावित्यस्य षत्वविषये विधित्वमन्यविषये नियमत्वमिति वैरूप्यापत्तेः । तदेतत्सकलमभिसन्धायाग्रे वक्ष्यति । वैरूप्यापत्तेश्चेति । धर्मावच्छिन्नेति । साक्षात्परंपरया वा धर्मावच्छिन्नेत्यर्थः । तेन यत्र सुपो निमित्तत्वं, तत्र तद्धर्मस्यापि

**एतेन दण्डिष्वित्यादौ षत्वरूपसुब्विधावप्राप्तासिद्धत्वविधानार्थ मिद-मित्यपास्तम् । वैरूप्यापत्तेश्च । संज्ञाविधौ दण्डिदत्तौ, दत्तदण्डिनौ । अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः । इष्यते त्वनियमः । असिद्धत्वे तु घित्वाभावात्सिद्ध्यति । न च पूर्व-निपाते नलोपो नलोपे वा घित्वे पूर्वनिपात इत्ययुक्तम् ।**

---

परम्परयोद्देश्यतावच्छेदकत्वान्न क्षतिः । एतेन = उक्तार्थविवक्षणेन । षत्वस्य वस्तुतस्तत्र प्रवृत्तेराह । **सुब्विधाविति** । **अप्राप्तेति** । षत्वस्य नलोपात्परत्वे-नेति भावः । **विधानार्थमिति** । विधानार्थमपीत्यर्थः । यथाश्रुते सुब्ग्रहण-वैयर्थ्यप्रसङ्गात् । **इदमिति** । सुब्विधिग्रहणमित्यर्थः । **इत्यपास्तमिति** । इति शङ्का निरस्तेत्यर्थः । षत्वस्योक्तरूपसुब्विधित्वाभावादिति भावः । एतेन वस्तुतस्तु पूर्वत्रासिद्धमित्यतः पूर्वत्रेत्यनुवर्त्य पूर्वसुप्स्वरसंज्ञाविधिषु कर्तव्येषु नलोपोऽसिद्ध इत्यर्थकरणात्षत्वस्य पूर्वत्वाभावादस्याप्राप्त्या सुब्विधिशब्देन सुप्त्वतद्व्याप्यान्यतरधर्मावच्छिन्नोद्देश्यकविधेर्ग्रहणे मानाभावः । किञ्च त्वन्मये इकोऽचीत्यस्य सुब्विधित्वाभावेनाज्ग्रहणाभावपक्षे नपुंसकदण्डिन्शब्दात् भ्यामि नलोपे नुमि लक्ष्ये लक्षणन्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणेन, अज्ग्रहणे नुमोऽप्राप्त्या तदश्रवणेन च फलभेदादिह किञ्चित्रपो इति भाष्यविरोधापत्ति-रित्यौत्तराहोक्तमपास्तम् । **वैरूप्यापत्तेश्चेति** । उक्तोऽर्थः । यत्तु सा च सुब्विधौ विधित्वमितरेषु नियमत्वमित्येवंरूपेति भट्टाः । तन्न । तादृशवैरूप्यस्य क्रादि-सूत्रादिषु दृष्टत्वात् । पञ्चेत्यत्र नलोपोत्तरं टाब्निषेधस्संज्ञाविधावित्यस्य प्रयो-जनमिति मनोरमोक्तमयुक्तम् तत्र यथोद्देशे पूर्वप्रवृत्तसंज्ञाया नलोपोत्तरं स्थानि-वद्भावेनातिदेष्टुं शक्यतया निषेधप्रवृत्तेः । षट्त्वस्य नान्तसंख्यावाचकत्वसमा-नाधिकरणधर्मविशेषरूपत्वेनानल्विधावित्यस्याप्रवृत्तेः । न च कार्यकाले दोष इति वाच्यम् । पक्षयोर्लक्ष्यानुरोधेन व्यवस्थितत्वादित्याशयेन तस्य भाष्योक्तं फलमाह । **संज्ञाविधावित्यादिना** । **पूर्वनिपाते नलोप इति** । परनिपाते

**यस्य पूर्वपदत्वे घित्वं भवति तत्पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थान्न दोषः । न च घित्वे बहिरङ्गतया नलोपोऽसिद्ध इति वाच्यम् । संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । कृति तुग्विधौ—वृत्रहभिः । कृतीति किम् । वृत्रहच्छत्रम् । अस्मादेव संज्ञाकृतं, बहिर्भूतनिमित्तकसंज्ञाकृतञ्च बहिरङ्गत्वं परिभाषायां नाश्रीयते । अन्यथा वृत्रहभिरित्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तोनलोपोऽसिद्धः स्यादिति तद्वैयर्थ्यं स्यात् । भाष्ये तु सन्निपातपरि-**

---

तूत्तरपदत्वे चेति निषेधेनापदत्वात्स नेति भावः । **अयुक्तमिति** । **नलोपे** दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिरिति प्रागुक्तमन्योन्याश्रयादयुक्तमित्यर्थः । एवं चानियमस्य सिद्धतया संज्ञाविधाविति व्यर्थमिति भावः । **सूत्रार्थादिति** । संज्ञाविधौ दत्तदण्डिनौ दण्डिदत्ताविति भाष्ये उदाहृतत्वेन द्वन्द्वे घीत्यस्य तथाऽर्थो वाच्य इत्याशयः । तत्फलं तु ग्रामणिपुत्राविति द्वन्द्वे ग्रामणीशब्दस्य पूर्वनिपातः । अन्यथा पूर्वनिपातोत्तरं ह्रस्वप्राप्त्या पूर्वं घित्वाभावात्स न स्यात् । एवं सुग्लुवटावित्यपि तत्फलं बोध्यम् । एतेन मास्त्वयमर्थः । संज्ञाग्रहणमपि मास्तु । अनियमस्तु सिद्ध एवेति शङ्का निरस्ता । न चैवमर्थस्वीकारे हरिहरावित्यत्र पूर्वमेव घित्वप्रवृत्त्या दोष इति वाच्यम् । तदुत्तरमपि तत्प्रवृत्त्याऽदोषात् । यद्वा द्वन्द्वे घीत्यस्य यस्य पूर्वपदत्वे घित्वं दृश्यते, तत्पूर्वं प्रयोज्यमित्यर्थाश्रयणेनादोषात् । **अस्मादेव**=कृति तुग्ग्रहणादेव । **बहिर्भूतनिमित्तकसंज्ञेति** । बहिर्भूतभिसादिनिमित्तकपदसंज्ञेत्यर्थः । **सन्निपातपरिभाषयेति** । नच यदागमपरिभाषया तुग्विशिष्टस्यागमिग्रहणेन ग्रहणान्नास्ति सन्निपातविघात इति वाच्यम् । तत्र यमुद्दिश्य विहित इत्युक्त्या यत्पर्याप्तोद्देश्यताको य आगमस्तद्विशिष्टस्य तत्त्वेन ग्रहणमित्यर्थलाभात्तुक्तो ह्रस्वमात्रभक्तत्वेन प्रनिदारयतीत्यादौ रेफविशिष्टे घुत्वस्येव वृत्रहभिरित्यादौ तुग्विशिष्टे

**भाषया वृत्रहभिरित्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातम्। पदत्वद्वारा लोपस्य भिस्सन्निपातनिमित्तकत्वात्। सन्निपातानिमित्तकनलोपविषयाणां वृत्रहधनमित्यादीनामनभिधानमिति तदाशयः। तदभावे कृतीत्यपि व्यर्थमेव। न च—सन्निपातपरिभाषया तुङ्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं कृतीति, 'कृति तुगेव न, अन्यस्तु भवत्येवेति' इति वाच्यम्। वृत्रहच्छत्रमित्यत्र नलोपस्य सन्निपातलक्षणत्वाभावादिति दिक्। राजनीति। 'विभाषा ङिश्योः' इत्यल्लोपविकल्पः। प्रतिदिवेति। कनिनन्तम् ॥**

---

प्रातिपदिकत्वादेरतिदेष्टुमशक्यतया नलोपसन्निपातविघातस्य स्पष्टत्वात्। **इदमिति**। तुग्ग्रहणमित्यर्थः। ननु वृत्रहधनमित्यादौ नलोपस्यान्तर्वर्तिसुब्निमित्तकपदत्वानिमित्तकत्वेन तुकः सन्निपाताविघातकत्वात्तया तत्र तुको वारयितुमशक्यतया तत्र तुग्वारणाय तुग्ग्रहणस्यावश्यकत्वात्कथं प्रत्याख्यानमत आह। **सन्निपातानिमित्तकेति**। **तदाशयः**=तुग्ग्रहणप्रत्याख्यानपरप्रकृतसूत्रस्थभाष्याशयः। **तदभाव इति**। तुग्ग्रहणाभाव इत्यर्थः। **व्यर्थमेवेति**। तस्य छलक्षणतुग्व्यावृत्त्यर्थमुपात्तत्वेन तुग्ग्रहणाभावे व्यावर्त्याभावात्कृतीत्यपि व्यर्थमित्याशयः। एवं सिद्धान्तभूतं प्रत्याख्यानप्रकारं प्रदर्श्य तुग्ग्रहणप्रयोजनप्रतिपादनपरस्य तदुत्तरभाष्यस्यैकदेशयुक्तित्वसूचनाय तदुक्तं प्रयोजनान्तरमाशङ्क्य निराकरोति। **न चेत्यादिना**। **सन्निपातलक्षणत्वाभावादिति**। एवं च तुङ्मात्रस्य सन्निपातपरिभाषया व्यावर्तयितुमशक्यतया न नियमोपपत्तिर्नियमानुपयोगश्चेति नियामकत्वतात्पर्यकं तद्भाष्यमेकदेशिन इति भावः ॥

ननु हलि चेत्यस्य पदाधिकारस्थत्वेन रेफवान्तस्य धातोरुपधाभूतो य इक् तदन्तस्य पदस्य दीर्घः स्याद्धलीत्यर्थलाभात्प्रतिदिन्नि इत्यादौ दीर्घो न स्यात्। सूत्रं तु दधिशब्दपूर्वकाद्रैशब्दाद्विशब्दाच्च णिचि टिलोपेऽचो यदिति

हलि च । 'र्वोरुपधायाः' इति सूत्रं, सिपि धातोरित्यतो धातोरिति चानुवर्त्तते । र्वोरिति च धातोर्विशेषणम् । पदस्येति सम्बद्ध्यमानमपीक एव व्यधिकरणं विशेषणम् । तद्ध्वनयन्नाह— प्रतिदीव्न इति । अत्र वान्तस्य भत्वाभावात् 'न भकुर्छुराम्' इति निषेधो न । धातोः किम् । अग्निः करोति । न संयोगा । अन्तग्रहणं स्पष्टार्थम् । संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् ॥

---

यति दधीर्यो दधीव्य इत्यादौ चरितार्थमत आह । व्यधिकरणं विशेषणमिति । अत एव प्रतिदीव्न इति न पदान्तसूत्रस्थभाष्यप्रयोगस्संगच्छते । तथा च पदावयवस्येक इत्यर्थान्नातिप्रसङ्ग इति भावः । स्पष्टार्थमिति । केचित्तु न हलो वमादित्येव लाघवात्सूत्रमस्तु, हलः परौ यौ वकारमकारौ ताभ्यां परस्यानोऽकारस्य लोपो नेत्यर्थेन यज्वनः ब्रह्मण इत्यादीनां सिद्धेरित्याशङ्कय तत्र न्यासे पटुशब्दादाचक्षाणण्यन्तान्मनिनि ततश्शसि पट्मन इत्यत्र णिलोपस्य टिलोपस्य वा पञ्चमीसमासेन स्थानिवत्त्वेन मकारस्य हलः परत्वाभावेन निषेधाप्राप्त्या लोपापत्तिः । यथाश्रुतन्यासे तु संयोगसंज्ञाया उभयसंबन्धित्वेन पूर्वमात्रसंबन्धित्वाभावात्स्थानिवत्त्वाप्रवृत्त्या निषेधप्रवृत्तिः स्पष्टैवेति दोषमाहुः । तन्न । भट्टोक्तदिशा पञ्चमीसमासानित्यत्वेन तद्दोषस्य परिहर्तुं शक्यत्वात् । वस्तुतस्तु अत्रान्तग्रहणस्य स्पष्टार्थताया मूले उक्ततयाऽवशिष्टापेक्षया न हलो वमादिति न्यासे पदलाघवाभावः । न च हल्पदापेक्षया संयोगपदस्य बहुवर्णघटितत्वेन गौरवमिति वाच्यम् । संज्ञापदानामर्धमात्रिकत्वनये तदभावात् । न च इण इति तिस्रो मात्रा इति भाष्यप्रमाण्येन तेष्वपि लाघवगौरवचर्चाऽस्तीति वाच्यम् । शास्त्रमात्रविषयसंज्ञाविषये तादृशचर्चायास्सत्त्वेऽपि लौकिकसंज्ञाविषयेऽर्धमात्रिकत्वाङ्गीकारे बाधकाभावेन न हल इति

सर्वनामस्थाने चासंबुद्धावित्येव सिद्धे नियमोऽयमित्याह— शावेवेति। उपधाया इति। तेन 'अनुनासिकस्य' इत्यस्यापि नियम इति भावः। अत्र सर्वनामस्थानग्रहणं न सम्बद्ध्यते। तेन वृत्रहणी, वृत्रघ्नः, वृत्रघ्नीत्यादौ नानुनासिकस्येति दीर्घः। इति निषेधे इति। एतत्फलभूते निषेधे इत्यर्थः। शिस्वोरिति वक्तव्ये 'सौ च' इति योगविभाग उत्तरार्थः। हो हन्तेः। ञ्णिन्न-

---

न्यास एव गौरवम्। किञ्च न हल इति न्यासे वैयधिकरण्येनान्वय आश्रयणीयः। यथाश्रुतन्यासे तु तन्नास्तीत्यपरं लाघवम्। एवं च सति पञ्चमीसमासानित्यत्वाश्रयणक्लेशोऽपि नेत्यपरमनुकूलम्। ये तु सामान्यतोऽनित्यत्वमनङ्गीकृत्य पूर्वस्मान्निमित्तत्वेनाश्रितादित्यनुगममभ्युपगच्छन्ति, तेषां मते लक्ष्यासिद्धिरप्यत्र न्यास इति दिक्। तेनेति। उपधापदसंबन्धेनेत्यर्थः। इत्यस्यापीति। अपिना सर्वनामस्थान इत्यस्य समुच्चयः। नन्वत्र सूत्रे उपधापदसंबन्धेऽपि सर्वनामस्थान इत्यस्यानुवृत्तौ तत्संबद्धोपधादीर्घस्यैव ग्रहणापत्तौ कथमनुनासिकस्येत्यस्यापि नियम इत्यत आह। सर्वनामस्थानग्रहणमिति। शौ सर्वनामस्थानत्वाव्यभिचारादिति भावः। उपधाग्रहणस्य तूत्तरत्रापि संबन्धस्यावश्यकत्वादत्रापि सम्बन्धः। अत उपधादीर्घस्यैवायं नियमो न त्वकृत्सार्वधातुकयोरिति दीर्घस्यापि। अत एव वृत्रहायत इत्यादावकृत्सार्वेति दीर्घस्सिद्ध इति बोध्यम्। सर्वनामस्थानग्रहणासंबद्धोपधापदानुवृत्त्या उपधादीर्घमात्रस्य नियमाङ्गीकारे फलमाह। तेनेति। वृत्रहणीत्याद्यनेकोदाहरणोपन्यसनं वैचित्र्यार्थम्। ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तेस्सिद्धान्तितत्वादिति निषेधे प्राप्त इत्यनुपपन्नमत आह। एतत्फलभूत इति। नियमस्येतरनिवृत्तिफलकत्वादिति भावः। इति वक्तव्य इति। चशब्दाकरणेन मात्रालाघवस्य पदलाघवस्य च सत्त्वादिति भावः। उत्तरार्थ इति। अत्वसन्तस्य चेत्येतदर्थ इत्यर्थः॥

कारा हस्यैव विशेषणम् । तत्र ञ्णिद्विषये येन नाव्यवधानन्यायेन द्वाभ्यां व्यवाये घातक इत्यादावेव, न तु हननीयतेण्र्बुल्यनेकव्यवधाने । इदं 'धातोः कार्यमुच्यमानम्' इति परिभाषया धातु, संशब्देन विहितप्रत्यय एव । तेन वृत्रहणमाचष्टे वृत्रहयतीत्यादौ न । ने तु परे वृत्रघ्न इत्यादावेव, स्थानिवत्त्वकृतव्यवधानेऽपि श्रौताव्यवधानसत्त्वात्, न तु हननमित्यादौ श्रौतव्यवधाने इति स्पष्टं भाष्ये । वृत्रघ्न इत्यादौ णत्ववारणाय हन्तेरत्पूर्वस्येति विभज्य व्याचष्टे—हन्तेरिति । उपसर्गादसमासेऽपीत्यत .... ....

---

हस्यैवेति । नकारपरकाङ्क्षासंभवान्नाङ्गविशेषणमित्याशयः । ननु नकारस्याङ्गविशेषणत्वासंभवादन्यत्रान्वयाङ्गीकारेऽप्युत्थिताकाङ्क्षानुरोधात् ञ्णितोऽङ्गविशेषणत्वमेवास्तु । अव्यवहितपदार्थे सङ्कोचोऽपि मास्त्विति चेन्न । तथा सति सहविवक्षाया अभावेन द्वन्द्वानापत्तेः । ननु वृत्रहयतीत्यादावव्यवधानेऽपि णिति प्राप्तिसत्त्वाद्येन नाव्यवधानन्यायप्रवृत्तिरसङ्गतेत्यत आह । इदमिति । न च ञ्णित्त्वस्य धातावपि सत्त्वेनास्य प्रत्ययनिमित्तकत्वाभावात्कथं तत्परिभाषाप्रवृत्तिरिति वाच्यम् । अस्याङ्गाधिकारीयत्वेनाङ्गस्य प्रत्ययांशे उत्थिताकाङ्क्षतया प्रत्ययनिमित्तकत्वात् । श्रौताव्यवधानसत्त्वादिति । विधानसामर्थ्यात्तस्मिन्निति परिभाषयाऽव्यवहितत्वांशोपस्थितावपि तद्विषये येन नाव्यवधानन्यायेन श्रौतवर्णव्यवधानराहित्यमेव बोध्यत इति भावः । विधानसामर्थ्यात्स्थानिवत्त्वस्याप्रवृत्तिरित्याशय इति श्रीधरोक्तं तु न युक्तम् । अन्यत्र विधानसामर्थ्यादव्यवहितत्वांशे सङ्कोचस्यावश्यकतया तेनैवात्रापि निर्वाहे स्थानिवत्सूत्रस्यापि बाधकल्पनाया अयुक्तत्वात् । स्थानिवत्त्वकृतव्यवधानेऽपीति शेखराक्षराननुगुणत्वाच्च ॥

णत्ववारणायेति । कुमति चेतिप्राप्तणत्ववारणायेत्यर्थः । विभज्य

उपसर्गादिति वर्त्तते, रषाभ्यामिति च। तात्स्थ्यात्ताच्छब्द्य-मित्याह—उपसर्गस्थादिति। प्रकृतोपयुक्तमाह—अत्पूर्वस्येति। अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम्। अत्रोपसर्गात् इत्यस्य निवृत्त्या णत्वमात्रस्यायं नियम इत्याह—एकाजुत्तरेति। णत्व-मपीति। अपिना 'प्रातिपदिकान्त' इत्यस्य, कुमतिचेत्यस्य च सङ्ग्रहः। बाद्ध्यसामान्यचिन्ताश्रयणात्सर्वबाधः। इदमत्पूर्वग्रहणं ह्स्थानिककवर्गाभाववद्धन्तेरुपलक्षणम्। अतो बहुवृत्रहाणीत्यत्र, प्राघानि प्रघनाघन इत्यत्र च न दोष इत्यन्यत्र विस्तरः। .... ....

---

व्याचष्ट इति। यद्यपि भाष्ये 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः, किं प्रयोजनं, वृत्रघ्नः सुघ्नः प्राघानि। हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्तव्यं भवती-त्युक्तम्, तथापि तद्वार्तिकाशयवर्णनमात्रपरं, नतु वस्तुस्थितिः। वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसंग्रहस्यैव न्याय्य-त्वादिति तदाशयः। स्पष्टं चैतन्मनोरमायाम्। प्रकृतोपयुक्तमिति। वृत्रघ्न इत्यत्र णत्ववारकमित्यर्थः। निवृत्त्येति। तदनुवृत्त्या हन्तेरिति सूत्रविहितस्यैव नियमे योगविभागनियमयोर्व्यर्थत्वादित्याशयः। ननु णत्वमात्रस्य नियमेन व्यावृत्तावत्पूर्वत्वाभावाद्बहुवृत्रहाणीत्यत्रैकाजुत्तरपद इति णत्वमपि न स्यादत आह। इदमत्पूर्वग्रहणमिति। ननु बहुवृत्रहाणीत्यत्र कार्यकालपक्षे बहिरङ्ग-परिभाषयापि दोषवारणसंभवादुपलक्षणत्वे फलाभावोऽत आह। प्राघानीति। प्रपूर्वाद्धन्तेः कर्मणि लुङि चिणि वृद्धौ रूपम्। एतद्विषये बहिरङ्गपरिभाषाप्रवृत्ति-स्वीकारेऽत्रापि तया परिभाषया वृद्धेरसिद्धत्वाण्णत्वापत्तिः। अतो यथोद्देशपक्ष-माश्रित्यैतद्विषये तत्परिभाषाया अप्रवृत्तिरवश्यं वाच्या। तथाच बहुवृत्रहाणी-त्यत्रातिप्रसङ्गवारणायोपलक्षणत्वमावश्यकमिति भावः। वक्ष्यमाणयत्नमतरीत्या लक्ष्यानुरोधात्कार्यकालयथोद्देशत्वयोराश्रयणेन बहिरङ्गपरिभाषाप्रवृत्त्यप्रवृत्ति-भ्यामुक्तलक्ष्यद्वये दोषवारणसंभवेऽप्युपलक्षणत्वस्वीकारे फलमाह। प्रघनाघन

यत्तु कार्यकालपक्षे बहिरङ्गदीर्घासिद्धत्वाद् बहुवृत्रहाणीत्यादौ न दोषः। प्राघानीत्यादौ यथोद्देश एव लक्ष्यानुरोधादिति। तन्न; तत्पक्षेऽपि त्रिपाद्यां तत्परिभाषाया अप्रवृत्तेरुक्तत्वात्। प्रघनाघन इत्यत्र दोषाच्च। माधवेनोक्तमिति। वृत्रघ्नो वृत्रघ्ण इति रूपद्वयं तेनोक्तम्। तद्भाष्येति। 'कुत्व्यवाये हादेशेषु प्रतिषेधो वक्तव्यः।

---

इति। हनधातोः पचाद्यचि 'हन्तेर्घत्वं चे'त्यनेन हकारस्य घत्वे द्वित्वेऽभ्यासस्यागागमे च रूपम्। अत्पूर्वस्येत्यस्योपलक्षणत्वानङ्गीकारे हन्तेरित्यनेनात्राभ्यासावयवनकारस्य णत्वापत्तिरिति भावः। नन्वभ्यासस्य नैरर्थक्यादर्थवद्धन्तित्वाभावान्न णत्वप्रसङ्गः। परस्य त्वभ्यासेन व्यवायान्नेति चेन्न। हन्तेरित्यस्यार्थवद्धन्तिसंबन्धिनकारस्येत्यर्थेन णत्वापत्तिरित्याशयात्। अन्यत्र=शब्दरत्ने। इदं च मूलकाराशयवर्णनपरं, शब्दरत्नग्रन्थोऽप्येवमेव। वस्तुतस्तु योगविभागाश्रयणेऽत्पूर्वग्रहणस्योपलक्षणत्वस्वीकारे च गौरवान्नियामकत्वाश्रयणे स्वार्थहान्यादिरूपदोषत्रयापत्तेश्च योगविभागाश्रयणेन वार्तिकप्रत्याख्यानापेक्षया वार्तिकारम्भ एवोचितः। यथोत्तरं मुनीनां प्रामाण्यात्। अत एव भगवता वार्तिकेनात्पूर्वग्रहणस्याकर्तव्यत्वमुक्तं, नतु योगविभागमाश्रित्य वार्तिकं प्रत्याख्यातमिति बोध्यम्। बहिरङ्गदीर्घेति। प्रत्ययसापेक्षत्वेन दीर्घस्य बहिरङ्गत्वमिति भावः। प्राचीनरीत्या कार्यकालपक्षे त्रिपाद्यां बहिरङ्गपरिभाषाप्रवृत्त्यभ्युपगमेऽप्युपलक्षणत्वानाश्रयणे दोषमाह। प्रघनेति। रूपद्वयमिति। भसंज्ञायामल्लोपेऽल्विधित्वेन स्थानिवत्त्वाप्रवृत्त्या उत्तरपदस्थानन्त्वेनैकाजुत्तरपद इत्यस्याप्राप्त्या प्रातिपदिकान्त इत्यनेन विकल्पे रूपद्वयमिति तदाशयः। कुत्व्यवाये हादेशेष्विति। कुव्यवायनिमित्तकणत्वविधिमात्रे हस्य स्थाने आदेशेषु प्रत्यासत्त्या कवर्गरूपेषु सत्सु णत्वस्य प्रतिषेधो वक्तव्य इति वार्तिकार्थः।

वृत्रघ्नः, स्रुघ्नः, प्राघानि। हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवति' इति भाष्येत्यर्थः। अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः। अनिनिति। एतच्च 'येन विधिः' इति सूत्रे भाष्ये स्पष्टम्। अन्यत्र तु 'अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेन' इति हन्ग्रहणे प्लीहन्ग्रहणं न॥

मघवा ब। षष्ठ्यर्थे प्रथमा, तृ इति वर्त्तते। ऋइदिति। तेनानेकाल्त्वाभावान्न सर्वादेशः। उगिदचाम्। अचामित्यञ्चुधातोर्ग्रहणं व्याख्यानात्। नलोपिन इति। अकारलोपाकरणपूर्वक

---

हादेशकवर्गव्यवाये णत्वं नेति यावत्। स्रुघ्न इति। स्रुचो हन्यन्ते यत्रेति घञर्थे कविधानमिति कः। न कर्तव्यं भवतीति। तत्करणेऽपि बहुवृत्रहाणी-त्याद्यसिद्धेः प्रघनाघन इत्यत्र णत्वापत्तेश्च सकलेष्टसंग्राहकतया वार्तिकारम्भ एवोचित इति भावः। नन्वत्पूर्वग्रहणस्य निरुक्तार्थोपलक्षकतया वार्तिकाकरणेऽपि न प्रागुक्तातिप्रसङ्गोऽत आह। अत्पूर्वग्रहणस्येति। मानाभाव इति। इदमुपलक्षणं, योगविभागनियामकत्वयोराश्रयणे गौरवस्यापि। तदाशय इति। वार्तिकेनात्पूर्वग्रहणस्याकर्तव्यताप्रतिपादनपरभाष्याशय इत्यर्थः। अन्यत्रेति। अर्थवद्ग्रहणपरिभाषापवादभूतैतत्परिभाषाविषयातिरिक्ते इत्यर्थः। अलैवानर्थकेनेति। लस्येति सूत्रस्थभाष्यप्रामाण्याद्वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषाया अप्रवृत्तेरिति भावः। हन्ग्रहण इति। विशिष्टरूपोपादानसत्त्वेनार्थवद्ग्रहणपरिभाषाप्रवृत्तेरिति भावः॥

षष्ठ्यर्थे प्रथमेति। अनुवर्तमानतृ इत्यपेक्षयेति भावः। अञ्चुधातोरिति। नतु प्रत्याहारस्य प्रत्ययस्य वेति शेषः। व्याख्यानादिति। नपुंसकस्य झलच इति सूत्रे पुनरज्ग्रहणरूपात्प्रत्यय इत्यादिनिर्देशरूपाच्चेत्यर्थः। अकारलोपाकरणपूर्वकेति। तेन हि नलोपस्य लक्षणवशसंपन्नत्वाभावप्रतीत्या

नलोपकरणस्य विवक्षार्थत्वादिति भावः। अत्रोगित् झलन्त एव, व्याख्यानात् । तेन शमी शमिनावित्यादौ नातिप्रसङ्ग इति 'युवोरनाकौ' इत्यत्र भाष्ये स्पष्टम् । उपधादीर्घ इति। सर्वनामस्थाने चेत्यनेन। असिद्धत्वाभावकल्पने मानमाह—तथा चेति । निपातनादिति । वनो र चेति सूत्रे भाष्ये तु 'मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम्' इत्युक्तम्। मघशब्दादिति। धनार्थादित्यर्थः। भाषायामपीति। अपिना छन्दसि। मघवानमीमह इति मध्योदात्तं च

---

नलोपिनोऽश्वतेरनुकरणत्वलाभादिति भावः। व्याख्यानादिति। नपुंसकस्येति सूत्राज्झल्ग्रहणापकर्षणादञ्चुधातुसाहचर्यरूपाद्वेत्यर्थः। भाष्ये स्पष्टमिति। तत्र हि युवोरनाकाविति चेद्धातुप्रतिषेधः युत्वा युतत्रानिति शङ्कायामनुनासिकपरयोर्युवोर्ग्रहणमिति समाहितम्। अनुनासिकः परावयवो ययोरित्यर्थः। ततो यद्यनुनासिकपरयोर्ग्रहणं, तदेत्संज्ञा प्राप्नोतीत्याशङ्क्य तत्र को दोषः? नुमागमप्रसङ्गः, तत्प्रतिषेधो वक्तव्यः। अन्यथा नन्दनः कारक इत्यत्र नुम्प्राप्नोतीति शङ्कायां नुम्विधौ झल्ग्रहणं, झलन्तस्योगित इष्यत इत्युक्तम्। मूले निपातनादिति। महेर्हकारस्य घकारोऽवुगागमः कनिप्रत्ययश्चेत्येतत्त्रितयस्य निपातनादित्यर्थः। वस्तुतोऽस्य व्युत्पन्नत्वं भाष्यासम्मतमिति सूचयन्नाह। वनो र चेति सूत्र इति। इत्युक्तमिति। तत्र हि मघोनीत्यत्र रभावमाशङ्क्यैवमुक्तम्। ननूक्तरीत्या लोकवेदयोश्शब्दद्वयस्य साधुत्वसंपत्तावपि छन्दसि 'मघवानमीमह' इति मध्योदात्तप्रयोगानुपपत्तिः। निपातितस्याव्युत्पन्नस्य वा मघवन्शब्दस्यान्तोदात्तत्वादत आह। मघवानमिति। द्वितीयान्तमेतत्। अस्य प्रथमान्तत्वभ्रमेण 'ननु धनार्थान्मघशब्दादन्तोदात्तान्मतुपि ह्रस्वनुड्भ्यामिति मतुप उदात्तत्वे मध्योदात्तत्वासिद्धिरित्यत आह। मघवानमीमह इती'ति मिश्राणामवतरणं तु हेयमेव। मध्योदात्तं वनिपि बोध्यमिति समाधानग्रन्थेनास्य नान्तमघवन्शब्द-

वनिपि बोद्धयम् । आकरे इति । 'केशाद्व' इति सूत्रे कैयटे इत्यर्थः । एवञ्च मतुपि अत्वसन्तस्येति दीर्घसत्त्वेन त्रादेशे तदभावे, फलभेदे प्रत्याख्यानासम्भव इति भावः । नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं, मतुपि तु ह्रस्वनुड्भ्यामिति प्राप्तस्य मतुबुदात्तत्वस्य 'न गोश्वन्' इति प्रतिषेधेन पित्त्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदोऽस्त्येवेति चेन्न । त्रादेशपक्षे दीर्घवत् बहुलग्रहणेन घकाराकारोदात्तत्वस्याप्यङ्गीकारात् । तत्रैव मानान्तरमाह—हविरिति । मघवानृजीषीत्यस्याप्युपलक्षणमिदम् । 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् । .... ....

---

प्रकृतिकद्वितीयान्ततायाः स्पष्टत्वात् । मतुबन्तस्यापि ह्रस्वनुड्भ्यामिति प्राप्तस्य मतुबुदात्तत्वस्य न गोश्वन्निति निषेधेन मध्योदात्ततया एवानुपदं वक्ष्यमाणत्वान्मध्योदात्तत्वासिद्धिरित्युक्तेरयुक्तत्वाच्च । भाष्ये एवंरीत्या सूत्रप्रत्याख्यानस्यानुपलम्भादाकर इत्यस्यार्थमाह । कैयट इति । बहुलग्रहणेनेति । क्वचिदन्यदेवेत्यर्थकेनेति भावः । तत्रैवेति । बहुलग्रहणेन निरुक्तार्थद्वयकल्पनायामेवेत्यर्थः । भट्टिप्रयोगस्य दीर्घविषये मानत्वेऽपि स्वरविषयेऽमानत्वादाह । उपलक्षणमिति । अर्वणस्तृ इत्यादि । अत्र तृ इति स्वरूपपरं नपुंसकम् । तच्छब्देन त्रादेशः परामृश्यते, न प्रकृतिः । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् । अत एव तादित्येकवचनप्रयोगस्संगच्छते । अन्यथा छान्दसौ हि तावित्येव वदेत् । एवं चार्वणो मघोनश्च तृ न शिष्यम् । हि यतस्तच्छान्दसं, छन्दोमात्रविषयमित्यक्षरार्थः । छन्दसि दृष्टानुविधिरिति न तदर्थः शास्त्रारम्भ इति तात्पर्यम् । छान्दसार्थमपि प्रायशः सूत्रकृतः प्रयत्नदर्शनेन छान्दसत्वात्सूत्रप्रत्याख्यानमनुचितमतोऽशिष्यत्वे छान्दसत्वं न पर्याप्तो हेतुरित्याशयेन हेत्वन्तरमाह ।

मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्' इत्यत्रत्यवार्त्तिकरीत्या मघ-

---

मतुब्वन्योरिति । अत्र चशब्दः पूर्वोक्तहेतुसमुच्चायकः । एवं चैतत्समुच्चितं छान्दसत्वमशिष्यत्वे हेतुः । ऋधातुप्रकृतिकविजन्तादर्शब्दान्मघशब्दाच्च मतुब्वनिभ्यां छन्दसि रूपद्वयसिद्धेस्सूत्रद्वयमनारम्भणीयमित्याशयः । नच छन्दसि वनिपो मतुब्बाधकतया कथं तत्र ताभ्यां रूपद्वयसिद्धिरिति वाच्यम् । छन्दसी वनिपावित्यस्य केशाद्वोन्यतरस्यामिति सूत्रस्थतयात्राप्यन्यतरस्यांग्रहणसंबन्धेन वैकल्पिकत्वात्पक्षे औत्सर्गिकस्य मतुपः प्रवृत्त्येष्टसिद्धेः । ननु मघवा बहुलमित्यस्य वैकल्पिकत्वेनोक्तरीत्या तस्य प्रत्याख्यानसंभवेऽप्यर्वणस्तृ इत्यस्य कथं प्रत्याख्यानं, तस्य नित्यत्वेनारम्भे नित्यस्तृ आदेशोऽर्वणः, प्रत्याख्याने तु पक्षे तदभावोऽपीति फलभेदादित्यत आह । छन्दस्युभयेति । त्रादेशतदभावेत्यर्थः । यथा वाजमर्वत्सु इमान्यर्वणः पदानीत्यादि च । एवं च सूत्रारम्भेऽपि त्रादेशाभावस्य छान्दसत्वेनैव साधनीयतया ततो वरं तदकरणमिति भावः । मघवन्शब्दस्येति । तदुद्देश्यकत्रादेशघटितरूपस्येत्यर्थः । वार्तिकाक्षरस्वारस्येन तथैव प्रतीतेः । श्वयुवमघोनामिति सूत्रस्थभाष्यप्रदीपोद्योताभ्यामस्यार्थस्य स्फुटत्वाच्च । तत्र हि भाष्ये मघवता मघवते इत्यादौ संप्रसारणाभावाय श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमित्याशङ्क्य 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तदि'ति प्रागुक्तत्वान्नकारान्तग्रहणं न कर्तव्यमिति समाहितम् । उद्योते च छान्दसमिति प्रतीकमुपादाय 'अत एव वनिबन्ते संप्रसारणे यस्येति लोपाभावः । तत एव तान्ते संप्रसारणाभावोऽपीत्यर्थ' इति तदाशयः प्रकटीकृतः । एतेन त्रादेशघटितरूपस्य छान्दसत्वं स्पष्टमेवाभिहितम् । असिद्धवत्सूत्राद्युक्ता 'व्युत्पन्नप्रातिपदिकरूपस्यापि भाषायां नास्ति प्रयोगः । नियतविषयत्वाच्छान्दसाना'मिति प्रकृतसूत्रस्थोद्योतेऽपि रूपपदप्रयोगेणाव्युत्पन्नप्रातिपदिकोद्देश्यकत्रन्तरूपस्यैव छान्दसत्वमभिहितमिति बोध्यम् । ननु त्रादेश-

वन्शब्दस्य लोकेऽसाधुत्वं लभ्यते। तथा च तृज्वत्सूत्रे भाष्यम्—'अविशेषाविहिता अपि शब्दा नियतविषया दृश्यन्ते इति' इत्यन्यत्र विस्तरः। छन्दस्येवेति। न च वनिबन्तस्य संप्रसारणे यस्येतिलोपे मघोन इत्यसिद्धिः। व्याश्रयत्वान्नाभीयासिद्धत्वं लोपे संप्रसारणस्य। नापि बहिरङ्गासिद्धत्वं, तस्या वाह ऊठ्सूत्रस्थतयाऽभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्याऽसिद्धत्वेनात्र तस्या अप्र-

---

स्याविशेषेण विहितत्वात्कथं छन्दोमात्रविषयतेत्यत आह। तथाचेत्यादिना। नियतविषया इति। घृधात्वादिवदिति भावः। एवंच त्रादेशाविधौ सङ्कोचे मानाभावादव्युत्पन्नवनिबन्तयोरुभयोरपि मघवन्शब्दयोरुद्देश्यत्वेन ग्रहणादुभयोरपि त्रादेशघटितरूपं छान्दसमिति वार्तिकाशयः स्फुटं प्रतीयते। तथाच तत्समानफलकतया वार्तिकोक्तमतुबन्तरूपस्यापि छान्दसत्वस्योक्तप्रायत्वेन सर्वथा तान्तयोरर्वन्मघवच्छब्दयोर्भाषायामसाधुतैव। अर्वन्मघवन्शब्दयोर्भाषायामसाधुत्वप्रतिपादनपरप्रकृतसूत्रस्थकैयटोऽप्येवमाशयक एव। मघशब्दान्मतुपा तान्तस्यापि लोके साधुत्वप्रतिपादनपरकेशाद्र इति सूत्रस्थकैयटस्तु चिन्त्य एव। वार्तिकाक्षरस्वारस्यविरोधात्प्रकृतसूत्रस्थस्वग्रन्थविरोधाच्च। निपातितकनिप्रत्ययान्तस्याव्युत्पन्नस्य वा मघवन्शब्दस्य त्रादेशाघटितं रूपं लोकेऽपि साध्वेव। तस्य छान्दसत्वे मानाभावात्। एवमृधातुप्रकृतिकवन्नन्तार्वन्शब्दोऽपि भाषायां साधुरिति विभावनीयम्। एतेनाविशेषेण मघवन्शब्दस्य भाषायामसाधुत्वं नागेशाभिमतमित्याशयेनास्य ग्रन्थस्य चिन्त्यत्वप्रतिपादनपरं भट्टोक्तमपास्तम्। ननु संप्रसारणस्याभीयासिद्धत्वान्नलोपप्रसङ्गोऽत आह। व्याश्रयत्वादिति। तद्दृष्ट्येति। परिभाषादृष्ट्येत्यर्थः। अत्र=आभीयान्तरङ्गे। अप्रवृत्तेरिति। परिभाषायां चेतनत्वारोपेणान्तरङ्गबहिरङ्गयोः परिभाषाबुद्धिगोचरत्व एव परिभाषाप्रवृत्त्या परिभाषादृष्ट्याऽन्तरङ्गस्यासिद्धत्वे तन्निरूपितबहिरङ्गत्वस्य बहिरङ्गे ग्रही-

वृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतमिति वाच्यम् । निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । 'एकादेश उदात्तेनोदात्तः' इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाणरूपाभावान्नानिष्टापादनम् । अन्तोदात्तं त्विति । कन्यन्तत्वादव्युत्पन्नत्वाद्वा तत्त्वम् ॥

---

तुमशक्यतया तस्या अप्रवृत्तेरिति भावः । स्पष्टं चेदमसिद्धवत्सूत्रे भाष्ये । तत्र हि ' वसुसंप्रसारणमज्विधौ सिद्धं वक्तव्यं, पपुषः पश्य । वसोस्संप्रसारणे कृतेऽचीत्याकारलोपो यथा स्यात् । किं पुनः कारणं न सिद्ध्यति, बहिरङ्गलक्षणत्वादसिद्धत्वाच्च । समानाश्रयवचनात्सिद्धम् । व्याश्रयं चैतत् । द्वौ हेतू व्यपदिष्टौ । बहिरङ्गलक्षणत्वमसिद्धत्वं च । तत्र भवेदसिद्धत्वं प्रत्युक्तम् । बहिरङ्गलक्षणत्वं तु नैव प्रत्युक्तम् । नैष दोषः, अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्विभाविनावेतावर्थौ, सत्यन्तरङ्गे बहिरङ्गं, सति च बहिरङ्गेऽन्तरङ्गं, न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवधानमस्ति । असिद्धत्वात् । नानाभिनिर्वृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति । तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्ये'त्याद्युक्तम् । अत्रासिद्धत्वादित्यस्य परिभाषादृष्ट्याऽभीयान्तरङ्गस्यासिद्धत्वादित्यर्थः । नानभिनिर्वृत्त इत्यस्य तथा बुद्धिविषयत्वमप्राप्ते इत्यर्थः । अन्तरङ्गं प्राप्नोतीत्यस्यान्तरङ्गत्वेन बुद्धिविषयत्वं प्राप्नोतीत्यर्थः । एतेनाभीयेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तिः स्पष्टमेवाभिहिता । एतेनासिद्धवत्सूत्रेण जातस्यैवाभीयस्यासिद्धत्वात्प्रकृतेऽन्तरङ्गस्य जातत्वाभावात्परिभाषादृष्ट्याऽसिद्धत्वाभावेनान्तरङ्गपरिभाषाप्रवृत्तिः स्यादेवेति चिन्त्यमेतदिति केषांचिदुक्तिः परास्ता । तत्र जातत्वनिवेशे मानाभावात् । उक्तभाष्यविरोधाच्च । न च जातत्वानिवेशे तेनेदं बाध्यमुतानेन तदिति विनिगमनाविरह इति वाच्यम् । तदानीं परत्वादेरेव बाधकत्वप्रयोजकत्वेनादोषात् । ननु समानाश्रयत्वाभावान्न परिभाषादृष्ट्याऽन्तरङ्गस्यासिद्धत्वमत आह । अन्तरङ्गशास्त्रा-

अन्नन्तानामिति । अल्लोपोऽनः इत्यपकृष्यते । तत्र नकारं प्रश्लिष्य नान्तान्नन्तानामित्यर्थः । तेन मघवत इत्यादौ नाल्लोपसंप्रसारणे, धीवरीत्यादौ च नाल्लोपः । स्पष्टश्चेदं ऋत्वक्सूत्रे भाष्ये । परे तु नकारप्रश्लेषाभावेऽपि न दोषः । अलोऽन्त्यस्येत्यस्य सत्त्वेनानः स्थानित्वाभावेन स्थानिवत्सूत्रेणान्नन्तत्वालाभात् । 'सर्वे सर्वपदादेशा' इत्यनेनापि मघवन्शब्दस्यैव स्थानित्वं, नानः ।

---

श्रय एव तदाश्रय इति । उपस्थाप्यानामुपस्थापकसमाननिमित्तकत्वादन्तरङ्गशास्त्रत्वस्य परिभाषोपस्थापकलिङ्गत्वाच्चेति भावः ॥

इत्यपकृष्यत इति । इति सूत्रादन इत्यपकृष्यत इत्यर्थः । यथाश्रुतार्थे मघवत इत्यादावतिप्रसङ्गादाह । तत्रेति । अन इत्यत्रेत्यर्थः । प्रश्लिष्येति । नलोपेनेति भावः । प्रश्लेषफलं दर्शयति । तेनेति । नावश्यमिहार्थ एव प्रश्लेषोऽपि तु तत्रापि स आवश्यक इत्याह । अल्लोपेति । धीवरीत्यादाविति च । इदमिति । सूत्रद्वयेऽपि नान्तान्नन्तानामित्येवंव्याख्यानमित्यर्थः । भाष्य इति । तत्र हि राजकीयमित्यत्रैकदेशविकृतन्यायेनान्नन्तत्वादल्लोपः प्राप्नोतीत्याशङ्क्य नैष दोषः, वक्ष्यत्येतत् । श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति । तत्प्रकृतमुत्तरत्रानुवर्तिष्यते । अल्लोपोऽनः। नकारान्तस्येत्युक्तम् । एतेन सूत्रद्वयेऽपि नकारान्तग्रहणस्यावश्यकता उक्ता । तत्र पूर्वसूत्रेऽपूर्वतया नकारान्तग्रहणापेक्षया प्रश्लेषेणेष्टार्थसंपादने लाघवमभिप्रेत्य ग्रन्थकृता प्रश्लेष उक्त इति बोध्यम् । वस्तुतोऽन्नन्तत्वाभावादेवोक्तदोषवारणसंभवात्सूत्रद्वयेऽपि प्रश्लेषस्य न फलमित्याह । परे त्विति । ननु स्थानिवद्भावेनान्नन्तत्वस्य सुलभतया कुतस्तदभाव इत्याशङ्क्य श्रौतस्थानिवद्भावेन तदलाभं दर्शयति । अलोऽन्त्यस्येति । आनुमानिकेनापि तदलाभं दर्शयति । सर्व इति । नान इति । मघवन्शब्दस्याव्युत्पन्नताया वनो रचेत्यादिसूत्रस्थ-

**अर्द्धविकारे प्रत्यभिज्ञाभावान्नैकदेशविकृतन्यायावसरः। ध्वनितश्चेदं 'श्वयुव' इत्यत्र भाष्ये इत्याहुः। मघवतीति। पुंयोगेन स्त्रियां वृत्तौ 'उगितश्च' इति ङीप्। .... .... .... ....**

---

भाष्यसम्मततया तदवयवस्य वनिबन्तमघवन्शब्दावयवस्य वाऽनो निरर्थकत्वेन तत्रानुमानिकस्थानिताया वक्तुमशक्यत्वादिति भावः। न च समुदायस्य स्थानित्वेऽपि तत्रान्नन्तत्वस्य विद्यमानत्वेन तदादेशे तत्सुलभमिति वाच्यम्। सामान्यातिदेशे विशेषानतिदेश इति कैयटेन दत्तोत्तरत्वात्। मघवत इत्यादावन्नन्तत्वाभावेन तस्य सामान्यधर्मत्वाभावात्। न च तत्राप्यतिदेशेनान्नन्तत्वसत्त्वेन तस्य सामान्यधर्मत्वमेवेति वाच्यम्। अतिदेशे च सति सामान्यधर्मत्वं, सामान्यधर्मत्वे चातिदेश इत्यन्योन्याश्रयेणातिदेशाप्रवृत्तिरित्याशयात्। किञ्चानुमानिकस्थान्यादेशभावेन श्रौतस्थानिरूपावयवघटितधर्मातिदेशेऽपि तदतिरिक्तावयवघटितधर्मस्यातिदेशे मानाभावेनान्नन्तत्वं नातिदेशलभ्यमित्यपि तदाशयो वक्तुं शक्य इति गुरुचरणाः। केचित्तु आनुमानिकस्थानिवद्भावेनान्नन्तत्वातिदेशेऽपि निर्दिश्यमानस्यानोऽभावान्न दोष इति वदन्ति। नन्वेकदेशविकृतन्यायेनान्त्वातिदेशे तदन्तत्वमार्थसमाजग्रस्तामित्यत आह। **अर्धविकार इति**। अत्रार्धत्वं भागमादाय बोध्यम्। **ध्वनितमिति**। तत्र हि श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति वार्तिकप्रत्याख्यानाय श्वयुवेति सूत्रानन्तरमल्लोपः, अन इति च योगं विभज्य अन इत्युभयोश्शेष इत्युक्तम्। तेन च नकारप्रश्लेषाभावेऽपि न दोष इत्यर्थो ध्वनित इति भावः। केवलमघवन्शब्दस्य स्त्रियां वृत्तेरसंभवादाह। **पुंयोगेनेति**। **उगितश्चेति**। नान्तलक्षणस्तु अकृतव्यूहपरिभाषया न भवतीत्याशयः। नच आदेशस्याङ्गसंज्ञाद्वारा प्रत्ययनिमित्तकत्वेन तदुत्तरं सन्निपातपरिभाषया ङीब्न स्यादिति वाच्यम्। पञ्चभिः क्रोष्ट्रीभिरिति तृज्वत्सूत्रस्थभाष्यप्रयोगादङ्गसंज्ञा-

विभक्तौ लिङ्गविशिष्टाग्रहणान्नुम्न। शुन इति। ननु संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वत्वं बाधित्वा अल्लोपोऽन इति लोपे शुन इति सर्वानुदात्तं स्यात्, उदात्तनिवृत्तिस्वरेणान्तोदात्तं वा स्यात्। पूर्वरूपेणाद्युदात्तमिष्यते। तत्र हि वकारस्थानिकोकारस्य स्रंसनधर्मे हल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततयाऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात्। किञ्च लोपे स्थानि-

---

मात्राश्रयविधौ सन्निपातपरिभाषाया अप्रवृत्तिरित्याशयात्। इदं प्राचामनुरोधेन। वस्तुतस्तु अकृतव्यूहा इति परिभाषाया भाष्यानुक्तत्वादभावेन नान्तलक्षणे ङीपि वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तमिति सन्निपातपरिभाषादोषेषु भाष्ये परिगणनात्तदनित्यत्वेन त्रादेश इति बोध्यम्। लिङ्गविशिष्टाग्रहणादिति। इदमुपलक्षणं, शमी शमिनावित्यादिसिद्धये झलन्तस्यैवोगितो ग्रहणाच्चेत्यस्यापि। सर्वानुदात्तमिति। न गोश्वन्नित्यनेनोदात्तनिवृत्तिस्वरस्यापि निषेधाङ्गीकारादिति भावः। अनन्तरस्येतिन्यायेन सावेकाच इत्यस्यैव निषेध इत्यभिप्रेत्याह। अन्तोदात्तं वेति। आद्युदात्तत्वमिष्यत इति। सावेकाच इति विभक्तिस्वरस्तु न गोश्वन्निति प्रतिषिद्ध इति भावः। यत्त्विदमयुक्तम्। अल्लोपपक्षेऽप्युक्तरीत्या उदात्तनिवृत्तिस्वराप्रवृत्तौ फिष इत्यस्य पुनः प्रवृत्त्या शुन इत्यस्याद्युदात्तत्वात्। न च लक्ष्ये लक्षणस्येति न्यायावतरः, स्थानिभेदेन संप्रसारणस्येव फिष इत्यस्यापि पुनः प्रवृत्तिसंभवात्। अत एवासिद्धवत्सूत्रे भाष्येऽल्लोपेन वा निवृत्तौ पूर्वत्वेन वा निवृत्तौ स्वरे विशेषाभावप्रतिपादनं संगच्छत इत्याचार्याः। तन्न। अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्याल्लोपस्यासिद्धत्वेनोकारस्य प्रातिपदिकान्तत्वाभावेन पुनस्तत्र स्वरप्रवृत्तेरशक्यत्वात्। असिद्धवत्सूत्रस्थं भाष्यं तूदात्तनिवृत्तिस्वरकृतविशेषाभावप्रतिपादनपरमेवेति स्पष्टमुद्योते। न केवलं स्वरकृत एव विशेषोऽपि त्वन्यकृतोपीत्याह। किञ्चेति।

वत्त्वेन यणप्रसङ्गः। 'अतः शुनः' इत्यादिनिर्देशैस्तच्चारणे तु बहुश्वा बहुमघवा बहुयुवेत्यत्र 'अन उपधालोपिनः' इति ङीब्विकल्पापत्तिः। मघोन इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्च; इति चेन्न। वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात्। श्वन्शब्दे आभीयतया संप्रसारणासिद्धत्वेन 'न संयोगाद्' इति निषेधाच्च॥

न संप्रसारणे। अनुवृत्त्यैव निषेध्यसमर्पके लब्धे पुनः संप्रसारणग्रहणसामर्थ्यात्तन्मात्रनिषेध इति दूरस्थस्यास्य, 'व्यथो लिटि' इत्यस्य च निषेधः। न च व्यथिव्यद्ध्यादावस्य चारितार्थ्येन यून इत्यादौ पूर्वं सवर्णदीर्घरूपैकादेशे तस्य 'अचः परस्मिन्' इति

---

बहुश्वेति। बहवः श्वानो यस्यामिति विग्रहः। अनित्यत्वेनेति। तदनित्यत्वे मानं तु सतुक्कनिर्देशः। अन्यथा विश्न इत्यादावाङ्गत्वात्तुकः पूर्वं शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः॥

न संप्रसारण इति। नन्विदं सूत्रं मास्तु। संप्रसारणाच्चेत्यत्रैव संप्रसारणादसंप्रसारण इति लाघवात्कर्तव्यम्। संप्रसारणभिन्नेऽचि पूर्वरूपमिति तदर्थः। तेन यून इत्यत्र वकारस्य संप्रसारणे पश्चाद्यकारस्य संप्रसारणेऽपि संप्रसारणपरतया पूर्वरूपाभावाद्यणा इष्टसिद्धेरिति चेन्न। वाक्यसंस्कारपक्षे एवं यूनः पश्यतीत्यत्र यकारस्याच्स्थानिकत्वेन स्थानिवद्भावेनाच्त्वारोपादेत्तदोरिति सुलोपानापत्तेः। न पदान्तेति निषेधस्तु न, लोपस्यानवयवत्वात्। संप्रसारणाश्रयस्य प्रतिषेध इति भाष्यस्य प्रौढिवादताया उद्योते स्पष्टमुक्तत्वेन तत्प्रामाण्यादस्यानभिधानकल्पनमयुक्तमिति बोध्यम्। अनुवृत्त्येति। ह्रस्संप्रसारणमित्यतोऽनुवृत्त्येत्यर्थः। तन्मात्रेति। अनन्तरस्येति न्यायबाधेन संप्रसारणमात्रेत्यर्थः। दूरस्थस्येति। इदमुभयोर्विशेषणम्। उभयोरपि तत्त्वात्। अस्य=

स्थानिवत्त्वेन संप्रसारणत्वेऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथं निषेध इति वाच्यम्। व्यथ इति सूत्रे यग्रहणेनैव सिद्ध्या संप्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहितेऽपि प्रवृत्तेः, 'यूनस्तिः' इति निर्देशाच्च; इत्याशयेनाह—इति यकारस्येति। न च कार्यकालपक्षे 'इग्यण' इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणान्वयेन येन नाव्यवधानन्यायेन पूर्वस्य संप्रसारणाप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यम्। तत्पक्षेऽपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव संबन्धस्योक्ततया विधायकेषु यण इत्यस्याभावात्। अत्र चेदमपि ज्ञापकं बोद्धव्यम्। ननु सकृत्प्रवृत्त्यैवोभयोः संप्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह—अत एव ज्ञापकादिति। तदुक्तं भाष्ये 'इहेङ्गितेन चेष्टितेन

---

श्रयुवेत्यस्य। स्थानिवत्त्वेनेति। हल इति दीर्घारम्भसामर्थ्येनानल्विधाविति निषेधाप्रवृत्त्या पूर्वरूपनिष्पन्ने स्थानिवद्भावेन संप्रसारणत्वसत्त्वादिति भावः। एतन्निषेधकतयैवेति। वव्रश्चेत्यादौ वस्य संप्रसारणाभावाय न संप्रसारण इत्यंशस्यावश्यकत्वेऽप्यनुवृत्त्यैव सिद्धेऽत्र सूत्रे संप्रसारणग्रहणस्य दूरस्थैतन्निषेधकत्वमेवासाधारणं प्रयोजनमिति लभ्यते। यद्यत्र व्यवधानादस्या अप्रवृत्तिरित्युच्यते, तदा संप्रसारणग्रहणं व्यर्थमेव स्यादतो निर्दिष्टाङ्गविकलाया तस्मिन्निति परिभाषायाः प्रवृत्तिराश्रयणीयेति भावः। तदाह। व्यवहितेऽपीति। वाक्यभेदेनैवेति। वाक्यैकवाक्यतयैवेत्यर्थः। पदैकवाक्यतायामन्यतरसंज्ञावाचकपदवैयर्थ्यापत्तेरिति भावः। अत्र चेति। वाक्यैकवाक्यतायामित्यर्थः। इदमपीति। निषेधसूत्रमपीत्यर्थः। अपिनाऽन्यतरपदवैयर्थ्यसंग्रहः। अपिना भस्येत्युपस्थितमिदं भवति याचि भमितीत्यादिभाष्यसंग्रह इति मिश्राणां व्याख्यानं त्वयुक्तम्। ततः पदैकवाक्यताया एव लाभात्। अत एव तस्यैकदेशयुक्तित्वमप्यभिहितम्। इङ्गितेनेति। इङ्गितं=मनोव्यापारः। चेष्टितं=

निमिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति परस्य पूर्वं भविष्यति' इति । 'लक्ष्ये लक्षणस्य' इति न्यायस्य तु नायं विषयः। कार्याश्रयवर्णभेदेन लक्ष्यभेदात् ॥

अर्वणस्तृ । न तु साविति । पर्युदास एव तूचितः । प्रत्ययत्वेन च सादृश्यम्। अनञ इति बहुव्रीहिः । 'वाजमर्वत्सु' इति प्रयोगात्। तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थेऽत्र न स्यात्। सुरत्र प्रथमैकवचनम् । अनञः किमिति । अनञ इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः । उत्तरम्-अनर्वेति । यज्वन्शब्दसदृशोऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः ॥

नन्विह निरनुनासिकोच्चारणेऽपि तपरसूत्रस्यानणीव विधीयमानेऽपि विद्ध्यर्थत्वान्नस्यान्तरतम्यादनुनासिकः स्यात्, तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तावणग्रहणानुवृत्तौ च मानाभावादत आह—

---

शरीरव्यापारः । निमिषितं=नेत्रव्यापारः । एते प्रत्यक्षे आचार्ये तदभिप्रायगमकाः। प्रकृते तु तादृशसूत्रोच्चारणमेव तादृशार्थविषयकमाचार्यतात्पर्यं गमयतीति भावः । उचित इति । लाघवादिति भावः । आर्वन्तं पदमित्यादौ तद्धितेऽपि प्रवृत्तये आह । प्रत्ययत्वेनेति । बहुव्रीहिरिति । तेनाऽव्यवहितपूर्वत्वसंबन्धावच्छिन्नप्रतियोगिताकनञभाववानित्यर्थः । अत्र न स्यादिति । पदविभागेन पाठकाल इति भावः। एतेन नञ्भिन्नाद्वाजमितिपदात्परत्वमस्त्येवेत्यपास्तम् । प्रथमैकवचनमिति।अत्राप्युक्तप्रयोग एव गमक इति भावः। नन्वनञः किमिति प्रश्नेऽनर्वेति प्रत्युदाहरणमयुक्तं, सुपरत्वेन ह्यङ्गविकलत्वादत आह। अनञ इत्यस्येति । अनर्वन्शब्द इति । प्रत्युदाहरणं त्वनर्वाणावित्यादि बोध्यम् ॥

ननु प्रश्लेषेणाकारसमुदायस्य विधाने परस्मैपदानामित्यादाविवानेकाल्त्वा-

आआदिति। विशेष्यविशेषणभावेनान्वयान्न सर्वादेश इति भावः। भाष्ये त्वनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमित्युक्तम् ॥

केचित्तु इदं सर्वं 'गुणा भेदकाः' इति पक्षे। वृद्धिरादैच्-सूत्रभाष्यसंमते सिद्धान्तभूते 'गुणा अभेदकाः' इति पक्षे जाति-पक्षे च तत्प्राप्तस्यापि सवर्णग्रहणस्याप्रत्ययग्रहणेन निषेधेनादोषात्। अत एव भाष्ये 'तपरस्तत्कालस्येति प्राप्नोति' इत्युक्तम्। अप्रत्यय

---

त्सर्वादेशत्वप्रसङ्गोऽत आह। विशेष्यविशेषणभावेनेति। एवं च समुदाय-स्यादेशत्वेनाविधानान्नातिप्रसङ्ग इति भावः। अष्टन इत्यत्र वक्ष्यमाणदिशाऽत्र प्रश्लेषेण कथं चिदप्यनिर्वाह इत्याशयेन भाष्योक्तमनुनासिकवारणोपायं दर्शयति। भाष्ये त्विति। अष्टन आ विभक्ताविति सूत्रे इति शेषः। प्रतिपत्ति-लाघवायेति। तपरशास्त्रान्तरतमपरिभाषयोरननुसंधानप्रयुक्तलाघवायेत्यर्थः। तस्यैवेति। ऊँ इत्यादाविव सानुनासिकस्यैवेत्यर्थः। अत्र गुणा अभेदका इति पक्षेण सानुनासिकप्राप्तिरिति मनोरमोक्तमयुक्तमिति सूचयन् सिद्धान्तमाह। केचित्त्विति। इदं सर्वमिति। एतद्विषये सानुनासिकशङ्कासमाधानरूपं सर्वमित्यर्थः। भेदका इति पक्ष इति। तत्सहिते व्यक्तिपक्ष इत्यर्थः। तत्प्राप्तस्यापीति। पक्षद्वयप्राप्तस्यापीत्यर्थः। अपिना सूत्रप्राप्तसवर्णग्रहणसंग्रहः। अदोषादिति। अनुनासिकप्रसक्तेरभावादित्यर्थः। न च तत्पक्षेऽपि तपर-सूत्रेणानुनासिकप्रसक्तिः कुतो नेति वाच्यम्। उक्तपक्षद्वयेऽप्रत्ययग्रहणानुवृत्त्या तपरसूत्रस्य नियामकत्वेन विधेये तेन सवर्णग्रहणाप्रसक्तेः। न चाप्रत्ययग्रहणा-संबन्धेन विधेयविषये विध्यर्थत्वमेव तस्य कुतो नेति वाच्यम्। तथा सत्यतो भिस इत्यादौ गुणाभेदकत्वजातिपक्षप्राप्तसवर्णग्रहणस्य वारयितुमशक्यत्वात्। अत एवेति। गुणानां भेदकत्वमिति पक्षाभिप्रायकत्वादेवेत्यर्थः। इत्युक्तमिति।

इति च वाक्यभेदेन सर्वप्रतिषेधकम्, अण्ग्रहणस्य च तत्रासम्बन्ध इति तदाशयः । अत एव भाष्ये 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येव पठितं, न त्वणेति । एतदेवाभिप्रेत्याणुदित्सूत्रेऽनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम् । तेन च तस्या व्यापकत्वं सूचितम्, अप्रत्यय-

---

अन्यथा पक्षान्तरे तपरसूत्रस्याप्रत्ययग्रहणानुवृत्त्या नियामकतया विधेयविषये तेन सवर्णग्रहणप्राप्त्युद्भावनमसंगतं स्यादिति भावः । एतेन नियमशास्त्राणां विधिमुखेन प्रवृत्त्या तत्पक्षेऽपि प्राप्त्युद्भावनं नासंगतम् । अतोऽत एवेत्यस्य तथार्थो नोचितः । किन्तु गुणाभेदकत्वप्रयुक्तप्राप्तेरप्यनण्साधारण्येनाप्रत्यय इत्यनेन निषेधादेवेत्याशयस्तूचित, इत्याचार्योक्तमपास्तम् । किञ्चात एवेत्यस्याचार्योक्ताशयकत्वे गुणा अभेदका इति पक्षे जातिपक्षे च तपरसूत्रेण सवर्णग्रहणप्राप्तेरङ्गीकृतत्वलाभेन तत्पक्षेऽपि शङ्कासमाधानयोरावश्यकतया इदं सर्वं गुणा भेदका इति पक्ष इति प्रागुक्तार्थासंगत्यापत्तिश्चेति बोध्यम् । उक्तभाष्येण शङ्कासमाधानयोर्गुणभेदकत्वपक्षाभिप्रायकत्वस्य सूचितत्वेन पक्षान्तरे तयोरसंभवं भाष्यकारोऽभिप्रैतीत्याह । सर्वप्रतिषेधकमिति । अत एव त्यदादीनाम इत्यादौ गुणानामभेदकत्वे जातिपक्षे च नातिप्रसङ्ग इति भावः । तदाशयः= उक्तभाष्याशयः । अत एवेति । अप्रत्यय इत्यत्राण्ग्रहणासंबन्धादेवेत्यर्थः । एतदेवेति । अप्रत्यय इत्यस्य वाक्यभेदेन व्याख्यानं तत्राण्ग्रहणासंबन्धं चेत्यर्थः । ज्ञापकत्वमिति । योगेन तदर्थबोधकत्वमित्यर्थः । तेनेति । भाव्यमानेनेति परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यशङ्कासमाधानपरभाष्यग्रन्थसन्दर्भेणेत्यर्थः । तत्र शङ्काग्रन्थेन सूचितमर्थमाह। तस्या इति । परिभाषाया इत्यर्थः । व्यापकत्वमिति । अन्यथा तया वैयर्थ्यशङ्काया अयुक्तत्वादिति भावः । क्वचित्पुस्तकेषु 'तस्यावश्यकत्वं सूचित'मिति पाठः । तदा तस्येत्यस्य विधीयमानस्सवर्ण-

**ग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम्। तेन जातिग्रहण प्राप्तस्य गुणाभेदकत्वपक्षप्राप्तस्य चानयाऽणनणूसाधारण्येन निषेध इति सूचितम्। वस्तुतोऽणुदित्सूत्रस्थाप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्य एकदेशानुमतिद्वारा परिभाषा बोद्ध्यते इत्यर्थः। प्रतीयत इत्यस्य विधीयत इत्यर्थाप्रसिद्ध्या कैयटोक्तव्याख्या चिन्त्या। परिभाषायां सवर्णपदेन समानजातीयो भिन्नधर्मा उच्यते। तेन जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः। एतेन पथीयतेः क्विपि पन्था इत्यादीत्यपास्तम्। अत्र शुद्धार्थे तदनुच्चारण**

---

ग्राहको नेत्यर्थस्येत्यर्थः। **आवश्यकत्वमिति**। जातिपक्षगुणाभेदकत्वपक्षप्राप्तसवर्णग्रहणस्याणनणसाधारण्येन वारणायावश्यकत्वमित्यर्थः। अप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वप्रतिपादनपरसमाधानग्रन्थेन सूचितमर्थमाह। **मदुक्तरीत्या व्याख्यानं चेति**। वाक्यभेदेनाण्ग्रहणासंबन्धेन च व्याख्यानमित्यर्थः। अन्यथाऽप्रत्यय इत्यस्य योगेन तत्परिभाषार्थबोधकत्वस्यासंभवादिति भावः। अस्य प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वेन व्याख्यानमिति मिश्रास्तदयुक्तम्। अस्य ग्रन्थस्य कैयटाशयवर्णनपरत्वात्। अस्यैवमाशयकत्वे वस्तुतस्त्वित्याद्यग्रिमग्रन्थस्यानुत्थित्यापत्तेश्च। **तेनेति**। उक्तपरिभाषाया अप्रत्यय इत्येतदर्थानुवादकत्वेनेत्यर्थः। केचित्त्वित्यनेनांशतस्सूचितामरुचिं प्रकटयति। **वस्तुतस्त्वित्यादिना। अप्रसिद्ध्येति**। प्रतिपूर्वकेण्धातोर्विधानार्थकताया अदृष्टत्वादिति भावः। **कैयटोक्तव्याख्येति**। ज्ञापयतीति भाष्यस्य योगेन तदर्थं बोधयतीति व्याख्येत्यर्थः। ननु जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणासिद्धिः। भाव्यमानेनेति निषेधात्। तत्र चाण्ग्रहणासत्त्वादित्यत आह। **परिभाषायामिति**। तेन भिन्नधर्मणो व्यावृत्तावपि समानधर्मणो ग्रहणे बाधकाभावात्। **एतेनेति**। निरनुनासिकोच्चारणसामर्थ्येनानुनासिकवारणपराष्टन आ विभक्ता-

स्यावश्यकत्वेन भाष्यासङ्गतेः । तस्मात्तदनभिधानमेवोचितम् । न च अदित्येवास्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः, पररूपं तु न, 'पथिमथ्यृभुक्षां लोपः, भस्य टेः, इतोऽत्सर्वनामस्थाने' इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्याद्; इति वाच्यम्। ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात्॥

इतोऽत्॥ आदित्यनुवृत्त्यैव सिद्धेऽद्वचनमृभुक्षणमित्यादौ 'वा षपूर्वस्य' इति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम्। इत इति अदिति च तपरत्वं मुखसुखार्थम्। एरदित्युक्तौ ततो लाघवाभावात्। अन्यथा विधेयेऽपि तपरकरणात्कुरुत इत्यादौ गुणाभाववत् पन्थानावित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः। थो न्थः। थो नुडिति नोक्तम्। इत्संज्ञाया आद्यन्तावित्यस्य चानुसन्धाने प्रक्रियागौरवात्। भस्य टेः। भस्य किम्। पथिभ्याम्। सम्बुद्धौ नपुंसकानामिति।इदं नलु-

विति सूत्रस्थभाष्यासंगत्यापत्त्येत्यर्थः। पथीयतेः क्विपि पन्था इत्यादीनामनभिधाने दीर्घाकारविधानस्यानावश्यकतेत्याशयेन शङ्कते। नचेति। ज्ञानगौरवेति।पररूपापत्तिशङ्कायाः सामर्थ्येन वारणे गौरवमिति भावः। ननु पथिमथ्यृभुक्षामित्यस्यानुवृत्त्या तत्र ह्रस्वेकारस्यैव संभवेनोद्देश्ये तपरत्वं व्यर्थम्। तथा भाव्यमानत्वेन सवर्णग्रहणाप्रसक्त्या विधेयेऽपि तद्व्यर्थमत आह। इत इत्यादि। अन्यथेति। तपरशास्त्रप्रवृत्त्यर्थत्व इत्यर्थः॥

ननु भाड्डिदित्येव सूत्रमस्तु, भसंज्ञकात्परस्य प्रत्ययस्य ङित्त्वातिदेशे टेरित्यनेनैव लोपसिद्धेरिति चेन्न। ङित्त्वातिदेशयोग्यस्य प्रत्ययस्येहानुपस्थित्याऽतिदेशासंभवात्। भसंज्ञया तस्याक्षेपं कल्पयित्वा तस्य शाब्दान्वयित्वं स्वीकृत्यैवं कल्पनेऽपि टेरिति सूत्रान्तरानुसंधाने ज्ञानगौरवादिति मिश्राः। औत्तराहास्तु एवं न्यासे सुपथिन्शब्दादिदमर्थेऽणि टिलोपे आभीयासिद्धत्वेन

मतेतिनिषेधानित्यत्वमूलकमित्युक्तम् । यद्यपि भाष्ये वा नपुंसकानामित्येव पठितं, तथापि सूत्रे ङिग्रहणस्य प्रत्याख्यातत्वेन' हे चर्मन्, हे चर्म, इति संबुद्धावेवोदाहृतत्वेन च तावन्मात्रविषयताऽस्येति भावः ॥

ष्णान्ता । विशेष्यसाकाङ्क्षात् स्त्रीलिङ्गनिर्देशात् प्रकृतं संख्येत्याकृष्यते । संख्याशब्देन च संख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते । संख्येतिशब्दे बहुगणडतिषु च तदन्तत्वासम्भवात् तदाह—

पुनष्टिलोपाप्रवृत्तौ सौपमिति रूपासिद्धिः । सिद्धान्ते तु भस्य टेरित्यस्याभीयत्वाभावेन पूर्वं नस्तद्धित इति टिलोपे पुनरनेन टिलोपे च तत्सिद्धिः । नच सिद्धान्तेऽपि नित्यत्वात्परत्वाच्च पूर्वं भस्य टेर्लोप इत्यनेन लोपे नान्तत्वाभावेन नस्तद्धित इति टिलोपो नैव भवतीति सौपथमित्येव रूपं, न तु सौपमिति । अत एव पाथेयमित्यादिप्रयोगास्संगच्छन्त इति वाच्यम् । एवमपि सुपथिन्शब्दाण्णिचि इष्ठनि च भस्य टेर्लोप इति लोपे इष्ठेमेयस्सु टेर्लोप इत्यर्थकेन टेरित्यनेन पुनष्टिलोपे इष्टानां सुपयति सुपिष्ठ इत्यादिरूपाणामसिद्धिप्रसङ्गात् । डिद्वद्भावातिदेशेन टिलोपेऽपि आभीयासिद्धत्वेन पुनष्टिलोपानापत्तेरित्याहुस्तदसत् । सुपथिन्शब्दाण्णिचि चिकीर्षिते उपसर्गसमानाकारं पूर्वपदमित्यादिना सुशब्दस्य पृथक्कृतौ यथान्यासेऽपि टिलोपोत्तरं प्रकृत्यैकाजिति प्रकृतिभावेन पुनष्टिलोपाप्राप्त्या सुपथयतीति रूपस्यैवेष्टत्वात् । अजादी गुणवचनादेवेति नियमेन सुपथिन्शब्दादिष्ठनः कर्तुमशक्यतया तत्र फलभेदविचारस्याप्यत्यन्तमयुक्तत्वाच्चेति बोध्यम् । एवं च मिश्रोक्तमेव युक्तमित्यवधेयम् । भाष्ये इति । न ङिसंबुद्ध्योरिति सूत्र इत्यर्थः ॥

ननु पूर्वसूत्रे संख्यापदस्य स्वरूपपरतयाऽत्रापि स्वरूपपरत्वं, संज्ञिपरत्वं वा तस्य युक्तं, न त्वकृत्रिमसंख्यापरत्वमत आह । संख्येति शब्द इति ।

संख्येति । सन्निपातेति । बहिरङ्गासिद्धत्वं न । संज्ञायाः कार्यापेक्षत्वेन समत्वात् । स्पष्टश्चेदं भाष्ये । नोपधा । नलोपस्यासिद्धत्वान्नामीतिदीर्घप्राप्तेरयमारम्भः । नामीत्यस्याङ्गविशेषणतैव न्याय्या । नामः प्रत्ययत्वात् । एवञ्च पञ्चानामित्यादौ पकाराकारस्य दीर्घवारणायोपधाग्रहणम् । नेति किम् । चतुर्णाम् । नामि किम् । चर्मणाम् । नलोप इति । 'क्रुवः पञ्चानाम्' इति लिङ्गान्न सन्निपातपरिभाषाविरोधः ॥

---

बहिरङ्गासिद्धत्वमिति । षट्संज्ञादृष्ट्या नुम इति भावः । समत्वादिति । तत्पक्षे संज्ञाया विधिशास्त्रैकवाक्यतापन्नत्वेन तन्निमित्तनिमित्तकत्वादिति भावः । ननु दीर्घपदश्रुत्या अच इत्युपस्थित्या नामीत्यस्य तद्विशेषणत्वे येन नाव्यवधानमिति न्यायेनोपधाभूतस्यैवाचो दीर्घो नान्तस्येत्युपधाग्रहणं व्यर्थमत आह । नामीत्यस्येति । दीर्घवारणायेति । ननु नामीत्यस्याङ्गविशेषणत्वेऽप्यनन्त्यविकारपरिभाषया पकाराकारस्य दीर्घवारणसंभवादुपधाग्रहणं व्यर्थमेवेति चेन्न । अप्तृन्नित्यत्र, इन्हन्नित्यत्र चानुवृत्त्यर्थं तदावश्यकत्वात् । तत्राद्ये तदननुवृत्तावयं दीर्घस्तक्रन्यायेनर्तोङीति गुणस्य बाधकः स्यात् । तथाच कर्तारावित्यादिरूपासिद्धिप्रसङ्गः । अन्त्ये तदसंबन्धे स नियम उपधादीर्घस्यैवेति नियमो न सिद्ध्येत् । तथाच वृत्रहायत इत्यादावकृत्सार्वेति दीर्घोऽपि न स्यादिति बोध्यम् । ननु षट्संज्ञासन्निपातेन जातस्य नुटस्तद्विघातकनलोपनिमित्तत्वं न स्यादत आह । लिङ्गादिति । निर्देशरूपाज्ज्ञापकादित्यर्थः । तेन निर्देशेन षट्चतुर्भ्यश्चेति नुड्विषये तत्परिभाषाया अप्रवृत्तिर्बोध्यत इति भावः । इदं च नान्तसंख्यावाचकत्वरूपस्य षट्त्वस्याल्विधित्वेन तत्र स्थानिवत्त्वाप्रवृत्तिरिति प्राचीनानुसारेण । वस्तुतस्तु नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपमेव षट्त्वं, न तु नान्तसंख्यावाचकत्वरूपम् । एवं च तस्या-

अष्टन आ। अनण्त्वान्नानुनासिक इति भाष्ये स्पष्टम्। जाति-

ल्विधित्वाभावेनानल्विधावित्यस्याप्रवृत्त्या नलोपेऽपि स्थानिवत्त्वेन तस्य सुलभतया सन्निपातविघाताभावेन तत्परिभाषाया विषय एव नेति निर्देशेन तदप्रवृत्तिकल्पनमनावश्यकमिति बोध्यम्। तदेतद्वक्ष्यति 'षट्संज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम्। स्थानिवद्भावेन कृतात्वेऽपि षट्त्वसत्त्वादि'त्यादिना अष्टन् सूत्रे। यत्त्वसान्निर्देशान्न तिस्रिति धर्मिग्राहकमानाच्च त्रिपाद्यां सा न प्रवर्तत इत्याचार्यास्तन्न। त्रिपाद्यामप्रवृत्तिरित्यनुगमकल्पने मानाभावात्। नच निर्देशसाजात्यमेव मानमिति वाच्यम्। अनेनैवं सङ्कोचेन ज्ञापनेऽन्यत्रानित्यत्वे ज्ञापकान्तरस्याश्रयणीयतया गौरवप्रसङ्गेनानेन सामान्यतो ज्ञापकत्वस्यैवौचित्यात्। न चास्या न तिस्रिति निषेधेन ज्ञापितत्वात्तद्देशस्थत्वेन सापादिकपरिभाषादृष्ट्या त्रैपादिकस्य सन्निपातविघातकविधेरसिद्धत्वमेव तत्र तदप्रवृत्तौ मानमिति वाच्यम्। लोकन्यायसिद्धाया अस्या न यासयोरित्यादिनिर्देशेनात्र शास्त्रे सामान्यतोऽप्रवृत्तौ प्रसक्तायां तदुल्लङ्घनेन शास्त्रे प्रवृत्त्यभ्यनुज्ञामात्रस्यैव तेन ज्ञापकेन लाभात्तस्यास्तद्देशस्थताया वक्तुमशक्यत्वात्। अत एव तत्स्थानापन्न इति न्यायस्य स्वं रूपमिति शास्त्राविषयेऽशास्त्रीयेऽप्यतिदेशप्रापकत्वोक्तिर्ग्रन्थकृतस्संगच्छते। अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीयः। अनित्यत्वस्य परिगणितमात्रविषयकत्वं तु न युक्तम्। हलोऽनन्तरा इति सौत्रप्रयोगेण, गवाक्ष इत्यादिभाष्यप्रयोगेण च परिगणितातिरिक्ताविषयेऽप्यनित्यत्वादस्या अप्रवृत्तेर्वक्तव्यत्वादिति बोध्यम्। त्रिपाद्यां परिभाषायाः प्रवृत्तौ फलमस्ति न वेति त्वन्यदेतत्॥

ग्रहणकशास्त्रस्यात्र विषय एव नेति सूचयन्नाह। **अनण्त्वादिति**। अष्टन्जनादिपथिमथ्यात्वेष्वान्तरतम्यात्प्राप्तस्यानुनासिकस्य वारणाय भाष्योक्तं सिद्धमनण्त्वात्, उच्चारणसामर्थ्याद्वेति समाधानद्वयं विषयविशेषेण व्यवस्थित-

ग्रहणेन गुणाभेदकत्वेन तु न सः, भाव्यमानत्वात्। शुद्धोच्चारणादिति तु नात्र वक्तुं शक्यम्। रायो हलीत्युत्तरार्थन्तस्य चारितार्थ्यात्। प्रश्लेषेणापि न निर्वाहः। वाच्यवृत्त्यानुनासिकव्यावृत्तेस्तेनालाभात्। प्रत्युत तत्रापि गुणाभेदकत्वादेर्दुर्वारत्वेनाऽन्तरतम्यादनुनासिकस्यैव प्राप्तेः प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात्। एवमन्यत्रापि बोद्धव्यम्। 'रायो हलि' इत्यतो हलीत्यपकृष्यते॥

अष्टाभ्य औश्। उङिति तु नोक्तम्। सकारस्योकारे 'अष्टा अ उ' इति स्थिते 'इण्ङिशनामाद्गुणः सवर्णदीर्घत्वात्' इति न्यायेनान्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणे 'अष्टौ' इत्यस्यासिद्ध्यापत्तेः। हलीत्यपकर्षे कृताकारादित्यनुपपन्नमत आह—कृतात्वेति।

---

मि'ति सूचयन्नाह। शुद्धोच्चारणादिति त्विति। पथिमथीत्यत्र मूलोक्तदिशा वारणमपि न घटत इत्याह। प्रश्लेषेणापीति। गुणभेदकत्वेऽनिर्वाहं दर्शयति। वाच्यवृत्त्येति। अभेदकत्वेऽनुनासिकस्य साधकोऽपीत्याह। प्रत्युतेति। अन्यत्रापीति। पथिमथि, जनसनेत्यत्रापीत्यर्थः। अपकृष्यत इति। हलीत्युभयोश्शेष इति भाष्योक्तेरिति भावः। असिद्ध्यापत्तेरिति। यद्यप्युङिति न्यासेऽपि जसस्सकारस्योकारे प्रकृतिप्रत्ययसंबन्धिवर्णापेक्षदीर्घापेक्षया प्रत्ययमात्रसंबन्धिवर्णापेक्षत्वेन गुणस्याप्यन्तरङ्गत्वादुभयोरन्तरङ्गयोर्नित्यत्वात्पूर्वं गुणे अष्टाविति रूपं भवत्येव, तथापि शसि गुणे कृते अष्टा ओ इति स्थिते भसंज्ञायामातो धातोरित्याकारलोपेऽष्टाविति रूपस्यासिद्धिर्दुर्वारैव। तत्र सूत्रे धातुग्रहणस्याबन्तनिवृत्त्यर्थत्वस्य प्राक्सिद्धान्तितत्वादिति वाराणसेयाः। वस्तुतस्त्वेवंविधान्तरङ्गत्वस्य क्वाप्यदर्शनेन मूलोक्तस्यैव सामञ्जस्ये दूरतोऽनुधावनं विफलमेवेति बोध्यम्। अपकर्ष इति। अष्टन आ विभक्ताविति सूत्र इति

कृतात्वानुकरणमित्यर्थः। लक्षणवशासंपन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेदिति भावः। ज्ञापयतीति। अयं भावः। हलीत्यपकृष्यमाणं वाक्यभेदेन पुनर्विधानार्थम्। तेन 'अष्टन' इत्यस्य क्वचिदझ्वपि प्रवृत्तिरिति। आत्वमिति। आत्वमात्रमित्यर्थः। सूत्रे इति। दीर्घान्तादष्टनः परा सर्वनामस्थानविभक्तिरुदात्तेति तदर्थः। ज्ञापकादिति। तद्धि 'अष्टाभिः' इति ह्रस्वेऽन्तोदात्तव्यावृत्त्यर्थम्। एवञ्च ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम्। न चाष्टाभिरित्यत्र सावकाशस्य 'अष्टन' इति सूत्रस्याष्टभिरित्यत्र परत्वाद् 'झल्युपोत्तमम्' इत्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्, न ह्यष्टाभिरित्यत्र 'झल्युपोत्तमम्' इति प्राप्नोति, कार्यकालपक्षेऽनान्तत्वेन षट्त्वाभावात्, अल्विधित्वेन स्थानिवत्त्वाभावाच्च; इति वाच्यम्। पुनः-

---

शेषः। आत्वस्य लक्षणवशसंपन्नत्वेन तन्निर्देशमात्राज्ज्ञापकत्वं न संभवतीत्याशयेनाह। कृतात्वानुकरणमिति। तस्यानुकरणत्वे बीजमाह। लक्षणेति। लाघवादिति। मात्रालाघवादित्यर्थः। वैकल्पिकेषु मात्रानुष्ठानं धर्माधिक्यफलायेति तु लौकिकप्रयोगविषयो नतु सौत्रप्रयोगविषय इत्याशयः। कृतात्वानुकरणेनापूर्वतयाऽत्वकल्पने गौरवादाह। अयं भाव इति। क्वचिदिति। अस्य सार्वत्रिकत्वे उत्तरवाक्यवैयर्थ्यापत्तिरिति भावः। ननु मूले इदमा सन्निकृष्टस्यानुमितस्यैव परामर्शे तत्र दीर्घग्रहणस्य ज्ञापकता न संभवति। आत्वाभावे औशोऽभावेन विभक्तेर्लुकि दीर्घग्रहणस्य ज्ञापनोत्तरं चारितार्थ्याभावादत आह। आत्वमात्रमिति। श्रुतमनुमितं चेत्यर्थः। असति बाधक इति न्यायेन दीर्घग्रहणस्य सामान्यापेक्षज्ञापकत्वाश्रयणादिति भावः। सावकाशस्येति। अनान्तत्वेन षट्त्वाभावाज्झल्युपोत्तममित्यस्य तत्राप्राप्तिरिति भावः।

प्रसङ्गविज्ञानबोधनद्वारा, एतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा तद्विकल्पे ज्ञापकमित्याशयादित्यन्यत्र विस्तरः। अष्टानामिति। हलीत्युक्तेरादौ नुट्, तत आत्वम् । यत्तु 'सन्निपातपरिभाषयाऽत्र नात्वं, किन्तु 'नोपधायाः' इति दीर्घे नलोपः । अन्तोदात्तत्वन्तु 'षट्त्रि' इत्येव सिद्धम् । नलोपे तु न सन्निपातपरिभाषा, नलोपस्यासिद्धत्वात्' इति, तन्न पूर्वत्र कर्त्तव्ये नलोपासिद्धत्वेऽपि तत्र

---

झल्युपोत्तममिति तु पञ्चभिरित्यादौ चरितार्थः। यथोद्देशपक्षस्यैवेति। तत्पक्षे भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेण विभक्त्युत्पत्तेः प्रागेवान्तरङ्गत्वात्षट्संज्ञायां नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य तस्याल्धर्मत्वाभावेन कृतात्वे स्थानिवत्त्वेनातिदेष्टुं शक्यतया अष्टाभिरित्यात्रपि झल्युपोत्तममित्यस्य प्राप्त्याऽष्टन्स्वरस्य निरवकाशतया तदपवादत्वेनाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि प्राप्तस्य विभक्त्युदात्तस्य वारणाय दीर्घग्रहणमावश्यकमिति भावः । अन्यत्र=शब्दरत्ने । हल्ग्रहणापकर्षफलमाह । हलीत्युक्तेरिति । अन्यथा परत्वान्नित्यत्वाच्च पूर्वमात्वेऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति भावः । सन्निपातपरिभाषयेति । षट्संज्ञासन्निपातेन जातस्य नुटस्तदविघातकत्वादिति भावः । नन्वात्वाभावेऽष्टनो दीर्घादिति स्वरो न स्यात् । नोपधाया इति दीर्घेऽपि स्वरे कर्तव्ये नलोपस्यासिद्धत्वेन दीर्घान्तेऽष्टन्शब्दत्वाभावादत आह । अन्तोदात्तत्वमिति । नन्वेतद्विषये सन्निपातपरिभाषाश्रयणे तया परिभाषया नलोपोऽपि न स्यादत आह। नलोपे त्विति । असिद्धत्वादिति । सन्निपातलक्षणविधिदृष्ट्येति भावः । तत्र=पूर्वशास्त्रे । ननु नुड्दृष्ट्या नलोपासिद्धत्वस्य वक्तुमशक्यत्वेऽपि सन्निपातपरिभाषाया न तिस्रिति निषेधेन ज्ञापितत्वात्तद्देशस्थत्वेन तद्दृष्ट्या नलोपासिद्धत्वं सुवचमे-

कृतेऽसिद्धत्वे मानाभावात्। सन्निपातस्याशास्त्रीयत्वेन तस्य नलोपासिद्धत्वेनालाभाच्च। आरोपितासिद्धत्वेऽपि वस्तुतो नलोपे तद्विघातस्य जायमानत्वेन नलोपेऽपि तस्या दुर्वारत्वाच्च। अत एव 'गव्यिता, नाव्यिता' इत्यादौ सन्निपातपरिभाषया यलोपो न। अन्यथा 'यस्य हलः' इति यलोपस्य बहिर्भूततृज्निमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गावादेशं प्रत्यसिद्धतया निमित्तविघाताभावः स्पष्ट एव। तस्मान्नलोपस्यापि परिभाषानित्यत्वेनैव साध्यतया तस्यासिद्धत्वादात्वमेव युक्तं तदनित्यत्वेन। किञ्च षट्संज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम्। स्थानिवद्भावेन कृतात्वेऽपि षट्त्वसत्त्वात्। कार्यकालपक्षे तत्तद्विध्येकवाक्यतापन्न-

---

वेत्यत आह। सन्निपातस्येति। अलाभाच्चेति। असिद्धत्वातिदेशस्याहार्यारोपरूपतया तस्य शास्त्रबलाच्छास्त्रीयकार्यप्रवृत्तौ निवृत्तौ वोपयोगिता, नतु लौकिकसन्निपातसंपत्तौ, आहार्यज्ञानस्यार्थक्रियाकारित्वाभावादिति भावः। एतेन राजभ्यामित्यादौ नान्तत्वस्यादन्तत्वाभावस्य वाऽशास्त्रीयस्य दीर्घप्रवृत्तयेऽतिदेशदर्शनादिदमयुक्तमित्याचार्योक्तमपास्तम्। तत्राप्यशास्त्रीयसन्निपातस्यातिदेशानपेक्षणात्। कथंचिदसिद्धत्वाभ्युपगमेऽपि न त्वदिष्टसिद्धिरित्याह। आरोपितेति। तस्या इति। सन्निपातपरिभाषाया इत्यर्थः। अत एव= वास्तविकसन्निपातविघातमादाय परिभाषाप्रवृत्तेरेव। तस्यासिद्धत्वादिति। नलोपस्यासिद्धत्वादित्यर्थः। वस्तुतोऽत्र सन्निपातपरिभाषाया विषय एव नेत्याह। किंचेति। कृतात्वेऽपीति। अपिना नलोपसंग्रहः। एतेन पञ्चानामित्यादौ नलोपाय ब्रुवः पञ्चानामिति निर्देशेन परिभाषानित्यत्वाश्रयणमनावश्यकमिति सूचितम्। षट्त्वसत्त्वादिति। षट्त्वस्य नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपत्वेनालधर्मत्वाभावादिति भावः। नन्वेवं हलीत्यप-

षट्त्वस्य बहिरङ्गतयाऽऽत्वे कृतेऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति हलीत्यपकर्षः। दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्संज्ञाश्रयणे, अत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात् पूर्वं षट्त्वे नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यलूधर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा प्रतिपत्तिगौरवमिति

---

कर्षो व्यर्थः, अन्तरङ्गत्वात्पूर्वप्रवृत्तषट्त्वस्य कृतात्वेऽप्यतिदेशेन नुटा रूपसिद्धेरित्याशङ्क्यापकर्षफलं दर्शयति । कार्यकालपक्ष इति । तत्पक्षे कार्याभावात्पूर्वं संज्ञाया अप्रवृत्तिरित्याशयः । ननु तत्पक्षेऽप्यात्वात्पूर्वमन्तरङ्गत्वात्षट्संज्ञाया नुटश्च प्रवृत्तौ तदपकर्षो व्यर्थ एवेत्यत आह । तत्तद्विधीति । षट्चतुर्भ्यश्चेत्यादिविधीत्यर्थः । बहिरङ्गतयेति । प्रतिपदोक्तात्वापेक्षयेत्यर्थः । आत्वे कृते इति । शीघ्रोपस्थितिकत्वेनान्तरङ्गत्वादिति भावः । दीर्घग्रहणादिति । आकारान्ते षट्संज्ञाया अभावेऽष्टाभिरित्यत्र सावकाशमष्टन्स्वरं बाधित्वाऽष्टभिरित्यत्र परत्वाज्झल्युपोत्तममित्यस्य प्रवृत्तौ सकृद्गतिन्यायेन पुनरष्टन्स्वरस्याप्राप्त्या ज्ञापनोत्तरमपि दीर्घग्रहणं व्यर्थं सद्भूतपूर्वनकारान्तत्वमाश्रित्याकारान्तेऽपि षट्त्वं ज्ञापयतीति भावः। ज्ञापिते त्वस्मिन्नष्टन्स्वरस्य निरवकाशत्वेनाष्टाभिरित्यत्रेवाष्टभिरित्यत्रापि तदप्रवृत्तये दीर्घग्रहणमावश्यकमिति बोध्यम् । पूर्वं षट्त्व इति। भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेणेत्यर्थः। प्रतिपत्तिगौरवमिति । हल्ग्रहणापकर्षापेक्षया ज्ञानगौरवमिति भावः ॥

यत्तु वस्तुतस्तु यथोद्देशपक्षे षट्त्वस्य स्थानिवद्भावेन सुलभत्वे 'षट्संज्ञायामुपदेशवचनं कर्तव्यं, शताद्यष्टनो नुम्नुडर्थं, शतानीत्यत्र नुमि कृते षट्संज्ञा प्राप्नोति, उपदेशग्रहणान्न भविष्यति । अष्टानामित्यत्रात्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशवचनाद्भविष्यति' इति भाष्यवार्तिकयोरसङ्गतिः । तस्मात् षट्त्वस्य नान्तत्वविशिष्टसंख्यावाचकत्वेनाल्घटितत्वान्नातिदेशसाध्यत्वम् । संज्ञा-

पदस्य तद्विधावुद्देश्यतावच्छेदकरूपेणैव प्रायेण संज्ञिबोधकत्वादित्याचार्याः, तन्न। उक्तभाष्यवार्तिकयोः कार्यकालपक्षाभिप्रायकतया तद्विरोधाभावात्। अत एवाष्टनो दीर्घग्रहणमाकारान्तस्य षट्संज्ञाज्ञापकं नुडर्थमिति तत्प्रत्याख्यानपरं भाष्यं स्वरसतः संगच्छते। शङ्काग्रन्थस्य त्वदुक्ताशयकत्वे वार्तिकप्रत्याख्यानपरोत्तरभाष्यस्य ज्ञापकेनाल्विधित्वेऽपि स्थानिवत्त्वेनाकारान्ते षट्त्वमित्यर्थस्यैव वक्तव्यत्वेन शास्त्रबाधकल्पनापत्तेः। अस्मन्मते तु कार्यकालपक्षाभिप्रायेण प्रवृत्तवार्तिकस्याष्टनो दीर्घादिति दीर्घग्रहणेनात्र विषये यथोद्देशत्वस्यैवाश्रयणमित्यर्थज्ञापनाद्भूतपूर्वनकारान्तत्वमाश्रित्य कृतात्वेऽपि षट्त्वमित्यर्थज्ञापनाद्वा प्रत्याख्यानमिति न शास्त्रबाधकल्पनापेक्षा। पक्षभेदेन शङ्कासमाधानयोः करणस्य भूतपूर्वविज्ञानस्य च भाष्यकारशैलीसिद्धतया तद्भाष्यस्य मदुक्ताशयकत्वमेव युक्तमिति बोध्यम्। संज्ञावाचकपदस्य तद्विधावुद्देश्यतावच्छेदकरूपेणैव सांज्ञिबोधकत्वमित्यपि न युक्तम्। संज्ञावाचकपदानां शब्दप्रवृत्तिनिमित्तकत्वेन सङ्केतसंबन्धेन तत्तत्पदवत्त्वेनैव रूपेण संज्ञिबोधकत्वलभात्॥

यदपि 'अन्ये तु हलीत्यपकर्षे नुटि कृते नात्वम्, सन्निपातपरिभाषाविरोधात्। नलोपे तु न सा। न तिसृचतसृ इति धर्मिग्राहकमानेन सपादसप्ताध्याय्यामेव तत्प्रवृत्तेः। अत एव जग्धमित्यादौ धत्वादिसिद्धिः। अत एव दो दद्घोरिति सूत्रे भाष्ये दान्तत्वे धान्तत्वे च नत्वधत्वे। थान्तत्वेऽदोषः। तस्मात्थान्त एवेत्युक्तम्। एवं च हलीत्युभयोश्शेष इति प्रतीकमुपादाय नुटि कृते आत्वमिति कैयटग्रन्थोऽसंगत एवेत्याहुरित्याचार्याः, तन्न। असिद्धविषयेऽपि सन्निपातपरिभाषाप्रवृत्तेः क्नमेजन्त इति सूत्रे भाष्ये ध्वनितत्वात्। तत्र हि सन्निपातपरिभाषादोषनिरूपणावसरे 'पुग्घ्रस्वत्वस्यानिमित्तं स्यात्। अदीदपदित्युक्तम्। जानातेर्मित्त्वेन ज्ञापकेन ह्रस्वविषये तदप्रवृत्तिरि'ति च कैयटेन प्रतिपादितम्। अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया सन्निपातपरिभाषाया अप्राप्तौ भाष्यकैयटयोरसङ्गतिः स्पष्टैव।

**बोद्धयम् । वृत्त्याद्यनुसारेणाह—गौणत्वे त्वित्यादि । स्थानिवद्भावादिति । 'पूर्वत्रासिद्धे' इति तु 'तस्य दोष' इत्यनेन निषिद्धमिति भावः । कार्यकालपक्षे इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । प्राधान्य एवेति । बहुवचननिर्देशात् । एवञ्च गौणे आदेशाप्रवृत्तौ तज्ज्ञाप्यात्वमपि नेति भावः ॥**

---

किञ्चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्यातिव्याप्तिपरभाष्यासङ्गतिः । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि भवदभिमतं कथं लभ्येत । किञ्च लोपस्य स्थानिवत्त्वे आर्थसमाजग्रस्तसन्निपात इति न तस्य स्थानिवत्त्वेनानयनमावश्यकम् । अन्यथा हे त्रपो इत्यत्र नलोपेति निषेधानित्यत्वेऽपि गुणो दुर्लभ एव स्यात् । किंच सन्निपातपरिभाषाश्रयणे तु दान्तधान्तयोर्न दोष इति दो दद्धोरिति सूत्रस्थकैयटेन तत्सूत्रस्थकौमुदीग्रन्थेन चासिद्धविषयेऽपि तत्परिभाषाप्रवृत्तिः स्फुटमभिहिता । तत्सूत्रस्थभाष्यस्य तु जग्धमित्यादौ धत्वसिद्धये तादिकित्सन्निपातनिमित्तकस्य तद्विघातकविधिप्रवर्तकत्वाय तद्विषये तदनित्यत्वमावश्यकमित्येतत्सूत्रस्थथकारनिर्देश एव तज्ज्ञापक इति चाशय इति न तद्विरोधः । स्पष्टं चेदमुद्योते । एवं च सामान्यतोऽसिद्धविषये परिभाषाया अप्रवृत्तिरित्याचार्योक्तिर्भाष्यकैयटादिग्रन्थविरोधादुपेक्ष्या । अतिप्रसंगस्त्वनित्यत्वेन परिहरणीयः । परिगणितातिरिक्तविषयेऽप्यनित्यत्वावश्यकत्वमधस्तान्निरूपितमित्यवधेयम् ॥

वस्तुतः प्रियाष्टादीनामनभिधानस्य वक्ष्यमाणभाष्यकैयटाद्यभिमतत्वेन मूले तत्प्रयोगविचारो मतान्तररीत्यैवेत्याह । **वृत्त्याद्यनुसारेणेति । प्राचामनुरोधेनेति ।** त्रिपाद्यां सर्वथा बहिरङ्गपरिभाषाया अप्रवृत्तेराकरसम्मतत्वादिति भावः । **तज्ज्ञाप्येति** । तद्विधायकसूत्रस्थात्वनिर्देशज्ञाप्येत्यर्थः । यत्त्विद-

परे तु 'ष्णान्ता' इति सूत्रे भाष्ये 'अष्टानाम्' इत्येतत्सिद्धये हलीत्यपकर्षमुक्त्वा तत्र पक्षे 'प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति, प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति' इति शङ्किते यथा-

मयुक्तम्। प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति। प्रियाष्टानौ प्रियाष्टान इति प्राप्नोतीति ष्णान्तेतिसूत्रस्थभाष्यविरोधात्। तत्र ह्यात्वं कृत्वा औश् न कृत इत्याचार्यास्तत्तु मूलाशयापरिज्ञानमूलकम्। तथाहि मूलकारस्योभयाविधमपि रूपमनभिधानेनानिष्टमेव। परममूलग्रन्थस्तु भाष्ये दृश्यमानप्रयोगान्वाख्यानपर एव। तत्र हि भाष्ये हलीत्युभयोश्शेष, इत्युक्त्वा यद्येवं प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति। प्रियाष्टानौ प्रियाष्टान इति प्राप्नोतीत्युक्तम्। तस्यायमाशयः। अष्टन इति सूत्रे एकवचननिर्देशेन गौणेऽप्यात्वप्रवृत्तेर्निर्बाधतया औशो बहुवचननिर्देशेन गौणेऽप्रवृत्त्या तदानीं प्राप्तं प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति। अपकर्षपक्षे त्वात्वस्यानुमानैकगम्यतया तेन प्राधान्य एवात्वलाभेन तत्पक्षे प्रियाष्टानौ प्रियाष्टान इति प्राप्नोतीति। एवं चोत्तरभाष्याशयवर्णनपरस्यैतद्ग्रन्थस्य पूर्वभाष्यस्थप्रयोगानुपपत्त्या चिन्त्यत्वकथनस्याज्ञानमूलकता स्पष्टैवेति बोध्यम्। प्रियाष्टा इतीति। जस्सकारस्य रुत्वे यत्वे यलोपे च रूपम्। शब्दरत्ने त्विदानींतनपुस्तकेष्वेतत्प्रतीके 'आवादेशे वकारस्य लोपश्शाकल्यस्येति लोपोऽत्रे'ति पाठो दृश्यते। स त्वपपाठः। तत्रत्यपूर्वोत्तरग्रन्थेन गौणे औशोऽप्रवृत्तेः प्रतिपादितत्वेन तस्यालग्नकत्वापत्तेः। कैयटोद्योताभ्यामत्रौशोऽप्रवृत्तेरेव लाभेन तद्विरोधाच्च। किन्तु तत्रावादेशे वकारस्य न लोपश्शाकल्यस्येति लोपोऽत्रेति नञ्घटितः पाठो युक्तः। व्याख्यातं चैनमेव पाठमाश्रित्य प्रभाकारैः। तेन चायं पाठः प्राचीनपुस्तकेष्वासीदित्यनुमीयते। अस्मिन्पाठे चायमर्थः। यद्यत्रावादेशे वकारस्य लोप एवाभिमतस्स्यात्तदा निस्सन्दिग्धोच्चारणेन स्वाभिप्रायाविष्करणस्य भाष्यकारशैलीसिद्धतया प्रियाष्टानितीत्येव ब्रूयात्। ततो नेदमौश्घटितं रूपमिति बोध्यम्। इति प्राप्नोतीति। इत्येव प्राप्नोतीत्यर्थः।

लक्षणमप्रयुक्ते इति समाहितम् । तत्र यथालक्षणमिति प्रतीकमुपादाय 'यस्य विशिष्टः प्रयोगो न स्मर्यते, नापि प्रयोगनिषेधस्मृतिः, तद् यथालक्षणमनुगन्तव्यं, तदत्र मा भूदात्वमित्यर्थ' इत्येकमर्थमुक्त्वा 'नैव वा लक्षणमप्रयुक्ते वर्त्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात्' इति व्याख्यानान्तरमुक्तम् । तत्रान्त्यव्याख्यानमेव ज्यायः । अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः । आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषा-

---

अन्यथाऽपकर्षाभावेऽप्यात्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः । अनुमितस्याप्यात्वस्यात्र यथाऽप्रवृत्तिस्तदनुपदमेव प्रतिपादितम् । **यथालक्षणमनुगन्तव्यमिति** । अत्र व्याख्याने लक्षणमनतिक्रम्य यथालक्षणमित्यव्ययीभावः । अप्रयुक्ते विषये लक्षणानतिक्रमेण कार्यप्रवृत्तिरिति भावः । **मा भूदात्वमिति** । शुद्धलक्षणैकचक्षुष्कस्यैव पूर्वपक्षित्वमित्युत्तरमपि तदनुरोध्येवेति मत्वा एवं व्याख्यातम् । वस्तुतस्तु नायं भाष्यार्थो युक्तः । तथाहि सति प्रियाष्टान इति प्राप्नोतीत्युत्तरं जराया इत्यादाविवेष्यत एवैतत्प्रियाष्टान इतीत्येव ब्रूयात् । किंचाद्यव्याख्यायामप्रयुक्त इति वाक्यशेषोऽप्यसंगतः । प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वादित्यरुचेः प्रकारान्तरेण तद्भाष्यं कैयटो व्याचष्टे । **नैव वेति** । अत्र व्याख्याने यथालक्षणमित्यत्र लक्षणस्याभावोऽलक्षणम् । तस्य योग्यतेत्यव्ययीभावगर्भोऽव्ययीभावः । लक्षणपदस्य लक्षणप्रवृत्तिरित्यर्थः । अप्रयुक्ते विषये लक्षणप्रवृत्त्यभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरित्याशयः । एवं च तादृशप्रयोगोऽसाधुरिति भावः । अन्त्यव्याख्याया ज्यायस्त्वोपपादनाय तत्रार्थसङ्गतिं दर्शयति । **अप्रयुक्त इत्यादिना** । अर्थसङ्गतिमात्रेण साम्यलाभेऽपि ज्यायस्त्वं नोपपादितमित्याशङ्क्य पूर्वव्याख्यायां न्यूनत्वमेवास्य ज्यायस्त्वोपपादकमित्याह । **आद्यव्याख्यायामित्यादि** । नच प्रयुक्ते त्वक-

सङ्गतिः। प्रयुक्तेऽपि लक्षणानतिक्रमात्। प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च। किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता। एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च। 'न वा' इति सूत्रे भाष्ये पक्षभेदेनैकस्यैव साधुत्वासाधुत्वयोस्तिरस्काराच्च। अत एव

---

त्पिवृक इत्यादौ न बहुव्रीहाविति लक्षणातिक्रमस्य दृष्टत्वादप्रयुक्त एव लक्षणानतिक्रमनियम इति लाभायाद्यव्याख्यायामपि वाक्यशेषस्संगत इति वाच्यम्। न बहुव्रीहाविति प्रकरणपठितानां सप्तम्यन्तानां प्रथमान्तार्थतायास्सिद्धान्तसिद्धत्वेन तत्रोपसर्जनप्रतिषेधासाध्यफलासाधकत्वेनास्य सूत्रस्य प्रत्याख्यानमेव वरं, नतु चिकीर्षित इत्यध्याहारेण प्रकरणविरोधेन यथाश्रुतसप्तम्यन्तार्थं स्वीकृत्य विपरीतरूपकल्पनमिति तत्रापि लक्षणानतिक्रमस्यैव दृष्टत्वात्। एतेन प्रयुक्ते लक्षणातिक्रम इति वाराणसेयोक्तमपास्तम्। न चान्त्यव्याख्यायां लक्षणपदस्य प्रवृत्तिपर्यन्तलक्षकत्वं वाच्यमिति गौरवमिति वाच्यम्। अप्रवृत्तस्य लक्षणत्वायोगेन लक्षणाभाव इत्यनेनैव लक्षणप्रवृत्त्यभाव इत्यर्थस्यार्थाल्लाभात्। न केवलं वाक्यशेषासङ्गतिरेव, किन्तु शास्त्रप्रणालीविरोधोऽपीत्याह। **प्रयुक्तानामिति**। तद्भाष्येणाप्रयुक्ते लक्षणप्रवृत्त्यभावस्यैव लाभेन तदनुरोधादस्याप्येवमेव व्याख्यानमुचितमिति भावः। ननु नैव वा लक्षणमिति व्याख्यायां वाशब्ददर्शनेन विकल्पोऽभिमत इति भ्रमं निवारयितुमाह। **एकस्यैव प्रयोगस्येति**। प्रियाष्टान इत्यादेराद्यव्याख्यायां साधुत्वं, द्वितीयव्याख्यायां शास्त्राविषयत्वेनासाधुत्वं च प्रसज्येतेति भावः। **अनौचित्याच्चेति**। चो हेतौ। यतो व्याख्याभेदेनैकस्य साधुत्वासाधुत्वे अनुचिते, अत एकैवादरणीया। तत्र भगवतो लक्ष्यैकचक्षुष्कतया द्वितीयैव ज्यायसीति भावः। **कैयटस्याप्यन्त्यव्याख्यायामेवादरं दर्शयति। अत एवेत्यादिना**। अनभिधाने मानान्तर-

हल्ङ्यादिसूत्रादावस्याप्रयुक्ते लक्षणाभाव इत्येव व्याख्याऽहता कैयटेन । 'नाम्रेडितस्य' इति सूत्रेऽपि कैयटः 'प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्तिः' इति । एवञ्चैषामनभिधानमेवो-चितम् । अत एव 'अष्टाभ्य औश्' इति सूत्रे भाष्ये 'विभाषा आत्वं, यदयमात्वभूतस्य ग्रहणङ्करोति अष्टाभ्य इति । अन्यथा अष्टन इत्येव ब्रूयात्' इत्युक्तम् । कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकतया तदसङ्गतिः स्पष्टैव । एवञ्च तत्प्रयोग-विचारः सर्वोऽपि निष्फल एवेत्याहुः ॥

---

प्रदर्शनव्याजेन प्रियाष्टान इति प्रयोगसमर्थनप्रयासः प्राचां सर्वथा भाष्यासम्मत एवेत्याशयेनाह । अत एवेत्यादि । गौणे आत्वाप्रवृत्तौ मानभूतबहुवचन-निर्देशे अष्टन इत्येव ब्रूयादिति वदतो भाष्यकारस्य निर्भराभावलाभेन तन्निर्देश-वशाद्गौणे आत्वाभावकल्पनं सर्वथासङ्गतमेव । आत्वभूतस्येति । कृतात्वानु-करणस्येत्यर्थः । लाघवादष्टन इत्येव वक्तव्ये कृतात्वानुकरणस्येदं प्रयोजनं, कृतात्वाद्यथा स्यादकृतात्वान्माभूदिति । यदि नित्यमात्वं स्याद्व्यवच्छेद्या-भावात्कृतात्वानुकरणमनर्थकं स्यादतः कृतात्वानुकरणनिर्देश आत्वविकल्पस्य ज्ञापक इति भावः । इदं चाष्टन आ विभक्तावित्यत्र हलीत्यस्यापकर्षाभावपक्षे । अपकर्षपक्षे तु जश्शसोर्विषये आत्वस्यापीदमेव ज्ञापकमिति बोध्यम् । किंचैषाम-भिधाने गौणे बहुवचनैकवचननिर्देशयोः फलभेदस्य लाभेन तद्विषयकशङ्का-समाधानयोरकरणं भाष्यकृतो न्यूनतामावहेदिति तदनभिधान एव सर्वथा भाष्यतात्पर्यमिति भावः । कैयटरीत्येति । बहुवचननिर्देशेन षड्भ्य इत्यादीनां गौणेऽप्रवृत्तिरिति तदुक्तरीत्येत्यर्थः । गौणे=प्रियाष्टन्शब्दादौ । आहुरिति । यत्तु वस्तुतस्तु अलक्षणपदस्थलक्षणपदस्य लक्षणप्रवृत्तिपर्यन्तं लक्षणायां मानाभावे-नाद्यव्याख्याया एव समीचीनतया तत्प्रयोगविचार आवश्यक एवेति दिगिति वाराणसेयास्तदयुक्तम् । अप्रयुक्त इति वाक्यशेषासङ्गतेरेव तत्र मानत्वात् ॥

निरुपपदादिति। नुमोऽसमास एव विधानेन, सोपपदे 'चोः कुः' इति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः। कनाविति। इदमुपलक्षणमुच्चारणार्थेकारस्यापि। ककारो गुणप्रतिषेधाद्यर्थः। नकारः 'क्विन्प्रत्ययस्य' इत्यत्र विशेषणार्थ इति भाष्ये स्पष्टम्। सन्निहिते इति। तत्फलन्तु णिजादीनां संज्ञाभावः। अतिङ् किम्। रुरुदिवेत्यादौ 'नेड् वशि कृति' इति

---

मूलोक्तनिरुपपदाद्युजेः क्विनित्यर्थलाभप्रकारमाह। नुमोऽसमास एवेति। एवं च तत्रैव क्विन्प्रत्ययस्येत्यस्य प्रवृत्तिरूपं क्विन्विधानफलमिति तत्रैव निपातनात्क्विनित्याशयः। उच्चारणार्थेकारस्यापीति। विधेयविषये उच्चारणार्थानामपीत्संज्ञां विना निवृत्त्यभावस्य पूर्वमुपपादितत्वादिति भावः। गुणप्रतिषेधाद्यर्थ इति। आदिना यजेस्संप्रसारणस्य प्राचेत्यादौ नलोपस्य च संग्रहः। विशेषणार्थ इति। अन्यथा क्विपोऽपि ग्रहणापत्तिः। न च तदनुबन्धकग्रहणपरिभाषया वारणम्। एवं सत्यनुनासिकस्येत्यादावपि क्विपोऽग्रहणापत्तेः। न च तत्र क्विनि फलाभावेन सामर्थ्यात्तदनुबन्धकपरिभाषाबाध इति वाच्यम्। सामर्थ्येन पूर्वत्रासिद्धमित्यस्य बाधेन युङ्क्ङित्यादौ तत्प्रवृत्तेः फलस्य सुवचत्वात्। संज्ञाभाव इति। तेन देवदत्तेन पाचयतीत्यादौ कर्तृकर्मणोरिति न षष्ठी। चेचीयत इत्यादौ यङयकृत्सार्वेति दीर्घश्च सिद्ध इति भावः। रुरुदिवेति। ननु बाध्यसामान्यचिन्तया क्रादिनियमेनास्यापि व्यावृत्तावदोषोऽत आह। आदाविति। आदिना अरुदिवेत्यादेस्संग्रहः। अत्र हि रुदादिभ्यस्सार्वधातुक इति प्राप्तस्येटो निषेधो माभूदित्यतिङ्ग्रहणमिति भावः। चन्द्रकलायामेनं प्रतीकमुपादाय व्याख्यानेनारुदिवेति पाठ आसीदिति चानुमीयते। बभूविवेत्यस्य पुरःस्फूर्तिकत्वेन तत्त्यागे बीजाभावादयमेव युक्तः पाठ इति भाति। तिङः कृत्संज्ञाव्यावृत्तेः फलान्तरं तु पचति चिकीर्ष-

**निषेधो मा भूदिति। ज्ञापकेन निर्वाहस्तु व्याख्यानाद्वरं करणमिति न्यायाननुगृहीत इति सूत्राशयः। युजेर। 'उगिदचाम्' इत्यतः सर्वनामस्थाने इति, 'इदितो नुम्' इत्यतो नुमिति चानुवर्त्तते। क्विन्प्रत्यय। प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिः। न च तदभावे वस्य कुत्वापत्तिः। तथा सति 'क्विनो घः' इत्येव वदेत्,**

---

तीत्यादौ तुग्व्यावृत्तिरिति वाराणसेयास्तन्न। धात्वादेरित्यतो धातुग्रहणानुवृत्त्याऽग्रस्य, शबेकादेशस्य स्थानिवत्त्वेन द्वितीयस्य च भगवता निराकृतत्वात्। अत एव भाष्योक्तं तदपहायेदमुपात्तमिति बोध्यम्। ज्ञापकेनेति। अकृत्सार्वधातुकयोरिति सूत्रस्थसार्वधातुकग्रहणेन तिङश्चेति सूत्रेण चेत्यर्थः। अकृत्सार्वेत्यत्र सार्वधातुकग्रहणं चिनुयादित्यादौ दीर्घाभावाय। यदि च तिङामपि कृत्संज्ञा स्यात्तदा कृत्पर्युदासेनैव तत्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। एवं पचतितमामित्यादौ तिङन्तस्य कृदन्तत्वेन प्रातिपदिकत्वादतिशायिन इत्यनेनैव तमबादिसिद्धौ तिङश्चेत्यपि व्यर्थमेवेति बोध्यम्। वरं करणमिति। तदर्थबोधकपदोपादानं श्रेष्ठमित्यर्थः। ज्ञापकादिना तदर्थसंपादने तदर्थस्यानुमितेर्वाच्यतया तस्याश्च गुरुतरव्याप्तिज्ञानादिघटितत्वात्तदपेक्षया पदोपादानमेव युक्तमित्याशयः॥

**अतद्गुणसंविज्ञान इति**। अत एव स्पृगित्यादौ क्विप्यपि कुत्वसिद्धिः। **वस्य कुत्वापत्तिरिति**। प्रत्ययग्रहणमपनीय क्विनः कुरितिन्यासे प्रत्ययग्रहणपरिभाषया क्विन्नन्तस्येत्यर्थसंपत्त्या येन नाप्राप्तिन्यायेन, निर्दिश्यमानपरिभाषाश्रयणे त्वनवकाशत्वेन वा वलोपं बाधित्वेति भावः। **क्विनो घ इति**। एवं च वर्गग्रहणसामर्थ्यान्न वलोपबाधकत्वमस्येति प्रत्ययग्रहणाभावे नातिप्रसङ्गः। अस्यासिद्धत्वाद्वलोपेऽवशिष्टस्यानेन कुत्वलाभादिति भावः। न च घोषस्याल्पप्राणस्य च वकारस्य तादृशो गकार एव वक्तुमुचित इति वाच्यम्। वर्गाणां तृतीयचतुर्था अन्तस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृत-

'नशेर्वा' इत्यत्र घानुवृत्तावप्यदोषादिति बोद्धयम्। चोः कुः। 'स्कोः' इत्यतोऽन्ते इति, 'झलो झलि' इत्यतो झलीति चानुवर्त्तते, 'पदस्य' इति चाधिकारः। कुत्वस्यासिद्धत्वादिति। अतद्गुण-बहुव्रीह्याश्रयणात्प्राप्तिः। सुयुगिति। 'सत्सूद्विष' इति क्विप्। धातुपाठेति। व्याख्यानादिति भावः। युगिति। 'क्विप् च' इति क्विप्। इहेति। 'सृजिदृशोः' इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्काम्यच्सूत्रे भाष्ये 'उपयट्काम्यति' इति प्रयोगात् 'क्विन् प्रत्ययस्य' इति कुत्वं नेत्यर्थः। परिमृडिति। 'धातोरुच्यमानं कार्यं तत्प्रत्यये' इति परिभाषयाऽत्र सुङ्निमित्तिका मृजेर्वृद्धिर्न। क्विङ्निमित्तिका तु 'क्ङिति च' इति निषेधान्न। परौ व्रजेः। 'क्विब्वचि' इत्युणादिपठितमिति मते ततः क्विब्दीर्घावनुवर्तेते, व्याख्यानाच्च ताभ्यां पदान्त इत्यस्यासम्बन्धः, किन्तु षेणैवेत्याह—क्विबित्यादि ॥

---

कण्ठा नादानुप्रदाना अघोषा इति कस्यांचिच्छिक्षायां घकारवकारयोर्गुणसाम्य-प्रतिपादनात्तदनुसारिकैयटोत्प्रेक्षितन्यासानुरोधेनैतद्ग्रन्थप्रवृत्तेः। दन्त्योष्ठ्य-वस्यापि महाप्राणता तत्रोक्तेत्याहुरित्युद्योते स्पष्टम्। मूलोक्तरीत्या तु यदयं क्विनः कुरिति कवर्गनिर्देशं करोति। इतरथा तद्गुणमेवायं निर्दिशेदिति भाष्यस्य क्विनो ग इति न्यास एव तात्पर्यं वक्तुमुचितमिति बोध्यम्। उत्तरार्थमपि न वर्गग्रहणमित्याह। नशेर्वेति। ननु निरुपपदाद्युजेः क्विनो विधानेनास्य क्विन्नन्तत्वाभावात्कथं क्विन्प्रत्ययस्येत्यस्य प्राप्तिरत आह। अतद्गुणेति। व्याख्यानादिति। शीघ्रोपस्थितिकत्वमूलकाद्व्याख्यानादित्यर्थः। इति मते इति। एतेनेदं नापूर्वं, किन्तु प्रयोगानुसरणार्थादन्येभ्योऽपि दृश्यत इति सूत्रस्थ-दृशिग्रहणात्सिद्धमित्यर्थस्सूचितः। तदा त्वनेन षत्वमात्रं विधीयते, क्विब्दीर्घौ त्वन्येभ्योऽपि दृश्यत इत्यनेनैव सिद्धाविति बोध्यम्। व्याख्यानादिति।

विश्वस्य । 'ढ्रलोपे' इत्यतो दीर्घ इत्यनुवर्त्तते । ननु षत्वादीनामसिद्धत्वेन राट्शब्दपरत्वाभावः, अत आह—पदान्तेति । तेन विश्वराजावित्यादौ न, विश्वाराड्भ्यामित्यत्र च भवति । 'आदित्यविश्ववसवः' इत्यत्र तु न दीर्घः । 'नरे संज्ञायाम्' इत्यतः संज्ञापदापकर्षणात् ॥

स्कोः सं । 'झलो लोपः संयोगान्तलोपः' इति भाष्योक्तेरत्र झल इत्यस्यासंबन्धः । तेन झल् परयोः स्कोर्लोप .... ....

---

श्रुतानुमितयोरिति परिभाषारूपादित्यर्थः । तेनेति । उपलक्षणत्वाश्रयणेनेत्यर्थः । संज्ञापदापकर्षणादिति । एवं च यत्र पूर्वोत्तरपदघटिता संज्ञा, तत्रैव दीर्घः । कोशघटकपदानि तु प्रत्येकं संज्ञास्वरूपबोधकानि, न तूभयघटिता संज्ञा तत्रोपात्तेति भावः । संयोगान्तस्य लोप इति सूत्रे भाष्ये 'संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः, दध्यत्र मध्वत्र, संयोगादिलोपे च यणः प्रतिषेधो वक्तव्यः वाक्यर्थं वास्यर्थमि'त्युक्त्वा 'नवा झलो लोपाद्बहिरङ्गलक्षणत्वाद्वे'ति तद्वार्तिकद्वयं प्रत्याख्यातम् । तत्रोत्तरस्येव पूर्वस्यापि प्रत्याख्यानप्रकारस्योभयविषयकत्वं मन्यमानः कैयट आह 'झलो झलीत्यतस्सिंहावलोकितन्यायेन झल्ग्रहणमिहानुवर्तते । तत् षष्ठ्या विपरिणम्यत इति यणो लोपाभावः । स्कोस्संयोगाद्योरित्यत्र तु पञ्चम्यन्तमेव संबध्यते । तेन झलः पूर्वयोः स्कोर्लोपविधानाद्यणः पूर्वयोर्लोपाभाव' इति । तदयुक्तमिति ध्वनयन्नाह । झल इत्यस्यासंबन्ध इति । पूर्वं सामान्यतो नवा झलो लोपादित्युक्तावपि तद्विवरणपरेण झलो लोपस्संयोगान्तलोपो वक्तव्य इति तदुत्तरभाष्येण तस्य संयोगान्तलोपमात्रविषयकतायाः स्फुटं प्रतीत्योभयविषयकतया व्याख्यानं कैयटस्यायुक्तमिति भावः । तेन = झल इत्यस्यासंबन्धेन । झल्परयोरिति । झल्परो यस्मादिति बहुव्रीहिणा झल्परकयोरित्यर्थः । अत्र झल इत्यस्य संबन्धे पूर्वसूत्रे

**इति नार्थ इत्यन्यत्र प्रपञ्चितम्। झलीत्यनुवर्त्तमानं झलादिप्रत्ययपरम्। 'झलो झलि' इत्यत्र 'उदः स्था' इत्यारम्भेण तदर्थकतयाऽर्थाधिकारात्। तेन पृथक्स्थाता, पयःस्थितिरित्यादौ न दोषः। सङीति वार्तिकाच्च। सनस्सकारमारभ्य महिङो ङकारात्सङिति प्रत्याहारः। भूयास्तामित्यादौ 'व्यञ्जनपरस्य' इति न्यायेन लोपाभावेऽपि न क्षतिः।**

---

तस्य पञ्चम्यन्तत्वेनात्रापि तस्यैव संबन्ध उचितः, भाष्यप्रामाण्यादुत्तराङ्गविकलायास्तस्मादिति परिभाषायाः प्रवृत्त्या झलः पूर्वयोः स्कोरित्यर्थलाभादयमर्थः फलित इति बोध्यम्। नच पूर्वत्रेवात्रापि विभक्तिविपरिणामेन झलन्तो यस्संयोगस्तदाद्योः स्कोरित्येवार्थः कुतो नाश्रितः कैयटेनेति वाच्यम्। अत्र तस्मादितिपरिभाषाया आंशिकबाधकल्पनेनोपपत्तौ विभक्तिविपरिणामेन सर्वात्मना तद्बाधकल्पनमनुचितमिति तदाशयात्। अत्र झलः परयोः स्कोरिति पाठस्त्वयुक्तः। सुवृट् परिमृट् भृष्ट इत्यादीनामसंग्रहप्रसङ्गात्। यणन्तसंयोगे लोपवारणायैव 'नवा झलो लोपादि'ति भाष्यस्य प्रवृत्त्या तस्य तन्मात्राशयकत्वमेवोचितं, नतु प्रकृतलक्ष्यासंग्राहकतया तदाशयवर्णनमुचितमिति बोध्यम्। एतेनैनमेव पाठमाश्रित्यैवं व्याख्याने सूत्रस्य त्रिपथतासम्पादनाय बहुधा क्लिश्यन्श्रीधरः परास्तः। **इति नार्थ इति।** वाक्यर्थमित्यादौ लोपवारणं तु स्थानिवद्भावेन सुकरं, पूर्वत्रासिद्धे न स्थानिवदित्यस्य तस्य दोषस्संयोगादिलोपेत्यनेन निषेधादिति भावः। **तदर्थकतयेति।** झलादिप्रत्यय इत्यर्थकतयेत्यर्थः। अन्यथा लोपेनैव सिद्धे तदारम्भो व्यर्थ एव स्यादिति भावः। अत्रार्थे वार्तिकमपि मानमित्याह। **सङीति वार्तिकाच्चेति।** इदं च नापूर्वं, 'किन्तु साङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानी'ति परेश्च घाङ्कयोरिति सूत्रस्थवार्तिकैकदेशभूतमिति बोध्यम्। नन्वेवं भूयास्तामित्यादौ सलोपो न स्यात्। आगमसमवधाने तद्रहिते प्रत्ययत्वादेरभावादित्याशङ्कामिष्टापत्त्या समाधत्ते। **भूयास्तामित्यादाविति। व्यञ्जनपरस्येति।** व्यञ्जनं परं यस्मादिति

केचित्त्वप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवो-चितम्। 'सङीति वक्तव्यं काष्ठशक्स्थाता' इति वार्तिकस्य प्रत्याख्यानपरेण 'काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता' इति भाष्येण तथैव बोधनादित्याहुः। प्रत्याख्यानमेकदेशयुक्तिः। सङीति वक्तव्यमेवेति परे। "चोः कुः" इत्येतत् षत्वेनापवादत्वाद् बाध्यते, क्विन्प्रत्ययस्येत्यस्य तु क्विन्विधानसामर्थ्यादेव न बाध इत्याह—क्विन्नन्तत्वादिति। ऋत्विक्शब्दो यज्ञसम्बन्धिपुरुषविशेषे रूढः॥

त्यदादीनामित्यनुवृत्तेराह—त्यदादीनामिति। तेन 'आतपः' इत्यादौ न। तदोः किम्। यः। तोरिति तु नोक्तम्, अनेषेत्यादौ नस्याप्यापत्तेः। न च नुटो बहिरङ्गत्वेनासिद्धत्वम्। बहिर्भूतसुनि-मित्तकत्वेनास्यैव बहिरङ्गत्वात्। इदञ्च 'तस्मान्नुडचि' इति सूत्रे

---

बहुव्रीहिः। अवध्यवधिमतोस्साजात्यादवधिरपि व्यञ्जनमेव ग्राह्यम्। काष्ठ-शगेव नास्तीति। क्विप्चेत्यत्र पूर्वसूत्राद्दृशिग्रहणानुवृत्त्या प्रयोगानुसरणार्था-त्तस्मात्ककारान्तधातुभ्यः क्विपोऽभावादिति तदाशयः। केचित्त्वित्यनेनोक्तार्थे-ऽरुचिं सूचयन्स्वसिद्धान्तमाह। प्रत्याख्यानमेकदेशयुक्तिरिति। लोकसि-द्धानां पृथक्स्थाता, पयस्स्थितिरित्यादिप्रयोगाणामनभिधानकल्पनाया अनौचि-त्यात्कुञ्चेत्यादौ ञादीनां कुत्वादेर्वारणाय ज्ञापकनिपातनादेराश्रयणे गौरवा-च्चैकदेशयुक्तिरिति भावः। न बाध इति। षत्वेनेति शेषः। नस्याप्यापत्ते-रिति। तस्य निर्दिश्यमानावयवत्वादित्यर्थः। न च तस्य नुगचीति न्यासेना-दोष इति वाच्यम्। तन्न्यासस्य प्राङ्निराकृतत्वात्। बहिरङ्गत्वेनेति। पद-द्वयाश्रयत्वादिति भावः। अस्यैवेति। सत्वस्यैवेत्यर्थः। यद्यपि नुटः पूर्वोत्तर-पदसापेक्षत्वमस्ति, तथापि तादृशपदद्वयघटिताङ्गसंज्ञाया बहिर्भूतप्रत्ययस्य

भाष्ये ध्वनितम् । सौ किम् । तौ । अत्वसत्वे नेति । गणकार्यत्वादिति भावः ।

ङे प्रथ । 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यतो युष्मदस्मद्भ्यामिति वर्त्तते । ङे इति पृथक्पदम् । अत एव 'प्रथमयोरित्युच्यते । कयोः प्रथमयोः ? विभक्त्योः । वचनयोस्तु न ग्रहणं 'शसो न' इति लिङ्गादिति भाष्यं सङ्गच्छते । त्वाहौ । यद्यपि युष्मदस्त्वादेशः 'त्वमावेकवचने' इति सिद्धः, तथापि युष्मानतिक्रान्तोऽतित्वमित्यर्थमत्र विधानम् । न चैवं तत्रास्य चारितार्थ्यात्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यम् । 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः' इत्यस्य वक्ष्यमाणत्वात् । 'युष्मदस्मदोरनादेशे' इत्यतो युष्मदस्मदोरिति वर्त्तते ।

---

चापेक्षणान्नुडपेक्षया सत्वस्यैव बहिरङ्गत्वमित्याशयः । ध्वनितमिति । तत्र हि 'किमर्थं तस्मादित्युच्यते, न नुडचीत्येवोच्येत । नुडचीत्युच्यमाने नञ एव नुट्प्रसज्येत । एवं तर्हि पूर्वान्तः करिष्यते । तत्रायमप्यर्थः । तदोस्सःसावनन्त्ययोरिति तदोर्ग्रहणं न कर्तव्यं भवति । तत्र हि तवर्गनिर्देशे एतत्प्रयोजनम् । इह माभूत् । अनेषः करोतीति । यावता पूर्वान्तोऽयं न दोषो भवती'त्युक्तम् । तत्र पूर्वान्तत्वे तदोर्ग्रहणस्याकर्तव्यत्वप्रतिपादनेन सिद्धान्तभूते परादित्वपक्षे तस्यावश्यकत्वं स्पष्टमेवाभिहितम् । यदि सत्त्वापेक्षया नुटो बहिरङ्गासिद्धत्वं स्यात्तदा परादित्वेऽपि तोस्सःसाविति वर्गग्रहणे दोषाभावात्तदोर्ग्रहणस्यानावश्यकत्वेन पूर्वान्तत्व एव तस्यानावश्यकत्वप्रतिपादनमसङ्गतं स्यात् । अतस्तेनेदं ध्वनितमिति बोध्यम् ॥

अत एवेति । पृथक्पदत्वादेवेत्यर्थः । इति लिङ्गादिति । तद्धि अमादेशनिषेधार्थमेव । नादेशविधायकत्वे तु न इत्येव ब्रूयात् । युष्मानित्यादौ नत्वं

शेषे । आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह—आत्वयत्वेत्यादि । स्पष्टश्चेदं 'युष्मदस्मद्भ्यां ङसः' इत्यत्र, प्रकृतसूत्रे च भाष्ये । अत एव 'साम आकम्' इति ससुट्कनिर्देशः सङ्गच्छते । एवञ्च शेषग्रहणं स्पष्टार्थं, विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसम्भवात् । अन्त्यस्येति । अलोऽन्त्यपरिभाषयेति भावः । त्वाहादयोऽकारान्ता इति वृत्त्याद्यनुसारेणाह—अतो गुण इति । 'त्यदादीनामः' इतिसूत्रभाष्यकैयटाभ्यां हलन्ता एवादेशा इति लभ्यते, तदा पररूपस्य

---

तु द्वितीयायां चेत्यात्वे पूर्वसवर्णदीर्घे च सति तस्माच्छस इत्येव सिद्धम् । एवं च यदि वचनयोरेव ग्रहणं स्यात्तदा शसः प्राप्तेरेवाभावेन निषेधविधानं व्यर्थमिति तदाशयः । एकपदत्वे तु प्रथमयोरिति द्विवचनस्य स्वरसत एवोपपत्तिसंभवेन कयोः प्रथमयोरिति शङ्कायाः समाधानस्य चासङ्गतिः स्पष्टैवेति भावः । युष्मान् ब्राह्मणीरित्यत्र नत्वासिद्ध्या शसो नेत्यस्य निषेधार्थकताया वक्तुमशक्यत्वेन तस्य ज्ञापकत्वासंभवादुक्तार्थे ज्ञापकान्तरस्य भगवता कृतत्वेन समाधानग्रन्थे भगवदादराभावेऽपि शङ्काग्रन्थस्य प्रकृते प्रामाण्यं सुस्थमेवेति भावः । अत एवेति । शेषे लोपस्यान्त्यलोपत्वादेवेत्यर्थः । अन्यथाऽदन्तत्वाभावेन सुटोऽप्राप्त्या तदसङ्गतिः स्पष्टैवेति भावः । एवं चेति । शेषग्रहणस्य विभक्तिविशेषणतयाऽन्त्यलोपस्वीकारे इत्यर्थः । वृत्त्याद्यनुसारेणेत्युक्त्या तदर्थस्य भाष्याद्यसम्मतत्वसूचनात्तत्सम्मतमाह । त्यदादीनाम इत्यादिना । केवलं भाष्यतो हलन्तादेशत्वस्य स्पष्टमलाभादाह । भाष्यकैयटाभ्यामिति । तत्र हि भाष्ये शेषे लोप इति लोपविधानाज्ज्ञापकात् द्विपर्यन्तानामकारवचनमित्येतत्प्रत्याख्याय तदुत्तरं 'टिलोपष्टाबभावार्थ' इत्यादिना तस्य टिलोपार्थमावश्यकत्वमुक्त्वा तत्खण्डितम् । एवमपि तवाद्यादेशानामदन्तत्वे वार्णादाङ्गस्य

प्राप्तिरेव न। यद्यप्युच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्तिः कार्या तथापि 'अतो गुणे' इत्यस्याप्रवर्त्तनेन प्रक्रियालघवमत्र पक्षे। इत्संज्ञालोपयोस्तु सूत्र एव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौरवम्। 'त्वाहौ सौ' इति गुरुनिर्देशस्तु 'श्वेतवहोक्थशास्' इति वन्नार्थसाधकः। णिजन्तात्क्विपि युष्म् अस्म् इति प्रातिपदिकयोरादेशा एव नेति तदाशयः। 'मपर्यन्तस्य' इति भाष्यसंमतश्चाय-

---

बलीयस्त्वात्पररूपं बाधित्वा टिलोपे टाप्प्रसङ्गस्तदवस्थ एवेत्याशयेन तद्वारणाय तद्व्याख्यानावसरे 'तवादिषु चादेशेष्वकार उच्चारणार्थो हलन्ता एव त्वादेशा इति न क्वचिट्टाप्प्रसङ्ग' इति कैयटेनोक्तम्। एवं चैतद्भाष्यकैयटाभ्यामयमर्थः स्फुटं लभ्यत इत्याशयः। ननु हलन्तादेशत्वेऽपि तत्राद्यकारस्योच्चारणार्थकस्येत्संज्ञालोपाभ्यां निवृत्तेर्वाच्यतया नात्र पक्षे लाघवमत आह। यद्यपीत्यादिना। नन्वकारस्य विवक्षितत्वेऽतो गुण इत्येकस्यैव शास्त्रस्य प्रवृत्तिः। अविवक्षितत्वे इत्संज्ञालोपविधायकशास्त्रद्वयस्येत्युच्चारणार्थत्व एव गौरवमत आह। इत्संज्ञालोपयोस्त्विति। पररूपशास्त्रेणानन्तप्रयोगाणां साधुत्वप्रतिपादनापेक्षया सूत्रे शास्त्रद्वयप्रवृत्तौ न गौरवं, किन्तु ततो लाघवमेवेति भावः। ननु तवाद्यादेशेष्वकारस्याविवक्षितत्वे त्वाहौ साविति गुरुनिर्देशो व्यर्थः। तव ममावित्यादावुच्चारणसौकर्यार्थमकारस्यावश्यकत्वेऽप्यत्र तदनावश्यकत्वादित्यत आह। त्वाहाविति। इति वदिति। यथा मन्त्रे श्वेतवहेति सूत्रे श्वेतवहुक्थशसित्येव वाच्ये उच्चारणार्थकाकारेण गुरुनिर्देशो नार्थसाधकः, एवमयमपि नादन्तादेशत्वसाधक इति भावः। नन्वेवं ण्यन्तात्क्विपि युष्म् इति प्रातिपदिकस्य त्वाद्यादेशे सिद्धान्तभूतेऽन्त्यलोपपक्षे वकारादेर्लोपे त्वं तवेत्यादिरूपासिद्धिः। अदन्तादेशत्वे तत्सिद्धिरिति फलभेदः स्यादत आह। णिजन्तात्क्विपीति। आदेशा एव नेति। परिग्रहणेनाग्रे किंचित्सत्त्व एवादेशप्रवृत्तिरित्यर्थस्य वक्ष्यमाणत्वादिति भावः। भाष्येति। अवधिद्योतनार्थं परिग्रहणं कर्तव्यमित्यादिभाष्येत्यर्थः।

मर्थ इत्यनुपदं स्फुटीभविष्यति । अन्तरङ्गत्वादिति । परनिमित्तानपक्षत्वेन तत्त्वमिति भावः । अलिङ्गे इति । एवञ्च स्त्रियामनयोरवृत्तेर्न टाबिति भावः । इदं 'साम आकम्' इत्यत्र भाष्ये स्पष्टम् । यद्वेति । इदं 'त्यदादीनामः' इति सूत्रे भाष्ये स्पष्टम्, 'साम आकम्' इत्यत्र च । मपर्यन्ताच्छेषस्येति । इदमुपलक्षणम् । तेन त्वमित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि न क्षतिः । ननु अदन्तत्वे आदेशानां 'वार्णादाङ्गम्' इति परिभाषया पररूपात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः । अकारस्य कार्यद्वयेऽपि स्थानित्वेन समानस्थानिकत्वमस्तीति चेन्न । हलन्ता एवादेशा इति कैयटेनात्रैवोक्तत्वेनादोषात् । शेष इत्यस्य सामर्थ्यात्तन्न्यायाप्रवृत्तिरत्रेत्यन्ये । तन्न । युष्मभ्यम्, युष्मत्, युष्माकमित्यादौ टाब्निवृत्त्या चारितार्थ्यात् । तस्मादनित्यत्वादप्रवृत्तिरित्येके । तदाह—अतो गुणे कृते इति ॥

---

इदमिति । मपर्यन्ताच्छेषत्वमित्यर्थः । उपलक्षणमिति । काकवद्देवदत्तगृहमित्यादौ काकवत्त्वमिवेत्यर्थः । उपलक्षणत्वे मानं तु शेषग्रहणमेव । अन्यथा टेरित्येव वदेदिति भावः । अत्रैवेति । 'टिलोपष्टाबभावार्थ' इति त्यदादीनाम इति सूत्रस्थभाष्यव्याख्यावसर इत्यर्थः । सामर्थ्यादिति । तस्य टिलोपबोधनद्वारा टाब्वारणमेव हि फलम् । तत्सत्त्वेऽपि टापो दुर्वारत्वे तद्व्यर्थं स्यादिति भावः । युष्मभ्यमिति । अत्र शेषग्रहणमपनीयान्त्यलोपस्वीकारे टाबापत्तिरिति भावः । अत्र संयोगान्तलोपस्तु न । झल्ग्रहणसंबन्धादित्याचार्योक्तं तु प्रामादिकम् । टिलोपपक्षेऽभ्यमित्येव छेदस्य वक्तव्यत्वेन पूर्वस्य पदत्वाभावात्तदप्राप्तेः । अत्र वदन्तीति । अस्य संगच्छत इतीत्यत्रेतिना संबन्धः । अत एवेति । अर्थद्वयस्य लक्ष्यानुरोधेन व्यवस्थितत्वादेवेत्यर्थः । एवं पक्षद्वयमभ्युपेत्य तस्य लक्ष्यानुरोधेन व्यवस्थितत्वमुक्तम् । वस्तुतष्टिलोपो-

अत्र वदन्ति । तत्तद्भाष्यप्रामाण्याच्छेषग्रहणससुट्कनिर्देशाभ्याञ्चास्य सूत्रस्याऽवृत्त्यार्थद्वये तात्पर्यम् । तच्च लक्ष्यानुरोधाद् व्यवस्थितम् । तेन भ्यमि टिलोपे युष्मभ्यमिति न । अत एव 'भ्यसोभ्यम्' इति सूत्रे 'यदि भ्यमादेशः, शेषे लोपोऽन्त्यलोप इति एत्वं प्राप्नोति । अथाभ्यमादेशः, शेषे लोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोति, यथेच्छसि तथाऽस्तु' इत्येवोक्तं, न तु भ्यमादेशे टिलोपमादाय फलभेद उक्तः

वस्तुतस्तु टिलोपो व्यर्थः । अत एव 'लिङ्गाभावाट्टिलोपवचनानर्थक्यम्' इति 'साम आकम्' इत्यत्र भाष्ये उक्तम् । अत्र लिङ्गाभावादित्युपलक्षणम् । 'शिशीलुङ्नुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन' इति 'नेतराच्छन्दसि' इति सूत्रस्थ भाष्यवार्त्तिकबलेन लिङ्गवत्त्वेऽपि सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वात् । अत एव सन्निपातपरिभाषया बुद्धावित्यत्र टाबभावः कृन्मेजन्तसूत्रे भाष्ये उक्तः । शेषग्रहणं तु भाष्ये

ऽनावश्यक एवेत्याह । वस्तुतस्त्विति । व्यर्थ इति । टाबभावस्यैव तत्फलत्वेन तस्य वक्ष्यमाणरीत्या सुसाधत्वादिति भावः । ननु लिङ्गाभावादित्यनुपपन्नं, तयोरपि लिङ्गयोगस्य सत्त्वादत आह । उपलक्षणमिति । सन्निपातपरिभाषाया इति भावः । तदाह । शिशीत्यादिना । शक्यत्वादिति । शक्यत्वमिति त्वपपाठः । अनन्वयात् । ननु न यासयोरिति निर्देशेन टाब्विषये सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्त्या कथं तया टाब्वारणमत आह । अत एवेति । एवं चैतद्विरोधाट्टाब्विषये तदप्रवृत्तिरिति न वक्तुं शक्यम् । किन्तु सामान्यत एवानित्यत्वं तन्निर्देशेन ज्ञापनीयमिति भावः । ननु टिलोपस्यानावश्यकत्वे शेषग्रहणं व्यर्थमत आह । शेषग्रहणं त्विति । नन्वेवं लक्ष्यानुरोधेन व्यवस्थया

प्रत्याख्यातमेव । 'त्यदादीनाम' इति सूत्रस्थं 'टिलोपष्टाबभावार्थः' इति तु वार्त्तिकैकदेशिवचनमिति न दोषः । एतच्च भाष्यप्रदीपोद्योते निरूपितम् । अभ्यम्—सूत्रे 'यथेच्छसि' तथाऽस्तु इति प्रौढोक्त्या भ्यमितिच्छेदस्य प्रौढवादत्वं भगवतैव सूचितम् । त्वं यथेच्छसि, तथाऽस्तु । तत्र दोषोद्धारो मया सुकर इति तत्तात्पर्यात् । अभ्यमित्येव तु च्छेदो न्याय्यः । अत एव 'युष्मदस्मदोरनादेशे' इति सूत्रे 'नचादेशो हलादिरस्ति' इति भाष्योक्तिः सङ्गच्छत इति । परमत्वमिति । आङ्गत्वात्तदन्तविधिरिति भावः । गौणेऽप्रवृत्तौ बीजाभावादाह—अतित्वमिति ॥

युवावौ ॥ द्विवचनशब्दोऽत्र यौगिको, व्याख्यानात् । द्वयोर्वचनं बोधनं, तत्र समर्थयोर्युष्मदस्मदोरित्यर्थो, भाष्यप्रामाण्याच्च तद् गृह्यमाणयुष्मदस्मदोरेव विशेषणं, न तदन्तस्य । अङ्गाधिकाराद्धि तदन्तग्रहणम्; इत्याशयेनाह—द्वयोरुक्ताविति । एतत्फलं गौणोदाहरणेषु मूल एव स्फुटम् ॥

---

पक्षद्वयाभ्युपगमसूचकभ्यसोभ्यमितिसूत्रस्थभाष्यविरोधोऽत आह । अभ्यं सूत्र इति । ननु भ्यमिति छेदस्य प्रौढिवादत्वेऽभ्यमित्यस्य न्याय्यत्वे च मानाभावाद्वैपरीत्यमेव किं न स्यादित्याशङ्क्य तत्र मानमाह । अत एवेति ॥

व्याख्यानादिति । त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणमिति प्रत्ययोत्तरपदयोश्चेति सूत्रस्थभाष्यरूपादित्यर्थः । भाष्यप्रामाण्यादिति । अर्थग्रहणं शब्दविशेषणमित्युक्तभाष्येत्यर्थः । तत्र शब्दशब्देन श्रूयमाणशब्दो लक्ष्यत इत्युद्योते स्पष्टम् । द्विवचन इत्यस्य गृह्यमाणविशेषणत्वे युक्तिमप्याह । अङ्गाधिकाराद्धीति । पदाङ्गाधिकारपरिभाषया युष्मदादीनां विशेषणताया एव क्लृप्ततया गुणः कृतात्मसंस्कार इति न्यायेन प्राप्तविशेषणसंबन्धैरेव युष्मदादि

मपर्यन्तस्य किमिति। अधिकारसूत्रं किमर्थमित्यर्थः। ननु समुदायादेशत्वेऽपि 'ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्राक्' इति व्यवस्थाया युष्मदस्मद्विषये 'त्वयका' इत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद् 'युवाम्' इत्येतत्सिद्ध्युत्तरमकजिति युवकामित्यत्र न दोषः, अत आह—त्वयेति। नन्वत्रापि 'अच्ये' इति न्यासेनैकारादेशोऽयादेशे च सिद्धेराह—युवकाभ्यामिति। हलन्ता आदेशा इति पक्षे तु त्वयेत्यादेरसिद्धिरेवं, मादेशस्य सर्वादेशत्वञ्च न स्यादिति बोध्यम्।

---

भिरङ्गं विशेष्यत इति न तदन्तविशेषणत्वं द्विवचनग्रहणस्येति भावः। मपर्यन्तस्य किमिति प्रश्नस्य तत्र सूत्रे तत्संबन्धमात्रविषयकत्वे त्वया मयेत्याद्युत्तरग्रन्थासङ्गतेराह। अधिकारसूत्रमिति। वक्ष्यमाणत्वादिति। तद्धितप्रकरण इति शेषः। अन्तरङ्गत्वादिति। अज्ञाताद्यर्थानपेक्षत्वेनेति भावः। इदं च प्राचीनरीत्या। स्वमते त्वर्थकृतबहिरङ्गत्वस्यानाश्रयणेन परत्वादादेशेषु कृतेष्वकजिति बोध्यम्। नच किमः क इत्यत्रोक्तादिशाऽङ्गनिमित्तप्रत्ययानपेक्षत्वेनाकचोऽन्तरङ्गत्वमिति वाच्यम्। अत्र युष्मदस्मच्छब्दविषयकेण द्वितीयवाक्येनाकचः प्रवृत्त्या तत्र सुप इत्यस्य शब्दतो निमित्तत्वेनोपादानादादेशापेक्षयाऽन्तरङ्गत्वस्य वक्तुमशक्यत्वात्। युवकाभ्यामितीति। अत्रानोकारसकारभकारादाविति वक्तव्यमिति पर्युदासेन युष्मदस्मद्विषयकस्य द्वितीयवाक्यस्याप्रवृत्त्याऽद्यवाक्येनैवाकचः प्रवृत्त्या तत्र शब्दतस्सुप इत्यस्य निमित्तत्वेनानाश्रयणात्प्रत्ययनिमित्तकादेशापेक्षयाऽन्तरङ्गत्वात्पूर्वमकचः प्रवृत्तौ मपर्यन्तस्येत्यस्याभावेऽकजिविशिष्टस्य युवाद्यादेशापत्तिरिति भावः। निरूपितं चैतदस्माभिरुभशब्दव्याख्यानावसरे। सिद्धान्तभूते हलन्तादेशत्वपक्षे त्वयेत्यादिसिद्धिरपि मपर्यन्ताधिकारस्य फलमित्याह। हलन्ता आदेशा इति। असिद्धिरिति। अच्ये इति

नन्वेवमपि मान्तस्येत्येवोच्यतां, किं परिग्रहणेनेति चेन्न। युष्मयत्यादेः क्विपि सुप्यादेशाभावार्थं तत्सत्त्वात्। पर्यन्तशब्देन मान्तापेक्षया शेषस्य लाभात्। 'कटिपर्यन्तं वासः' इत्युक्ते 'अग्रे किञ्चिदस्ति' इति नियमेन प्रतीतेः। एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशाः। अत एव भाष्ये 'अवधिद्योतनार्थं परिग्रहणं कर्त्तव्यम्। मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः। क्व च मान्ते?, युष्मयतेरस्मयतेश्चाप्रत्यये' इत्युक्तम्। अवधिद्योतनार्थमित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः। पर्यन्तशब्दस्य लोके तथैव प्रयोगात्। अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च। तत्रैवेत्यस्य—'अनिष्टे एव'

---

न्यासेऽपि वकारस्यैकारादेशे तयेति स्यादिति भावः। ननु हलन्तादेशत्वेऽप्यच्येगिति न्यासेनागमविधाने त्वयेत्यादिसिद्धिर्भवत्येवेत्यत आह। मादेशस्येति। न स्यादिति। एवं चागमविधानेऽपि मयेत्यस्यासिद्धिरिति भावः। वस्तुतस्त्वतियुष्मयाऽत्यस्मयेति वक्ष्यमाणरूपासिद्ध्याऽगमविधानस्यायुक्तत्वेन त्वयेत्यादेरप्यसिद्धिरिति बोध्यम्। परिग्रहणसत्त्वे यथा न दोषस्तदुपपादयति। पर्यन्तशब्देनेति। अत एवेति। उक्तस्थले आदेशाभावस्येष्टत्वादेवेत्यर्थः। अवधिद्योतनार्थमिति भाष्यस्य 'यदि युष्मदस्मदी मान्ते, अथाप्यमान्ते सर्वथाऽऽदेशा यथा स्युरित्येवमर्थं परिग्रहणमि'ति कैयटोक्तार्थोऽयुक्त इति सूचयंस्तदाशयमाह। अवधिवाचकताद्योतनार्थमिति। निपातानां द्योतकतानये समभिव्याहृतपदानां तत्तदर्थे शक्तिर्निरूढलक्षणा वेत्यङ्गीकारेण निरूढलक्षणायाः शक्तितुल्यत्वाभ्युपगमेन चैवं विधेषु वाचकताव्यवहारः स्वारसिक एवेत्याशयेन वाचकताव्यवहारः कृतो ग्रन्थकृता। तथैवेति। अवधिबोधकत्वेनैवेत्यर्थः। लोके दर्शनाच्चेति। इदं तत्रैवेति भाष्यस्यानिष्ट एवेति व्याख्यानेऽपि हेतुः।

इत्यर्थः। परिग्रहणाभावे तु 'यतः पूर्वोऽस्ति, परश्च नास्ति सोऽन्त्यः' इति भाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायालैव स्यात्। क्वौ लुप्तमित्यस्य प्रवृत्तिश्च स्यात्। 'अभिव्यक्तपदार्थाः' इति न्यायश्च पदकार्यविषय इति तदाशयः। अत एव भाष्ये प्रयोगदर्शनं न कृतम्। यत्तु—परिग्रहणाभावे मान्ते, यत्र ते तत्रैव स्यात्। सामानाधिकरण्येनान्वयस्यौचित्यात्। सति तु तस्मिन् सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानाद् दान्ते, व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि च सिद्ध्यति। 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति तु प्रत्ययविधिविषयमिति, तन्न। परिग्रहणस्य वैयधिकरण्येनान्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्या-

---

परिग्रहणाभावे सामानाधिकरण्येनान्वयस्य संभवेन वैयधिकरण्यान्वयस्यायुक्ततया यत्रैव मान्ते युष्मदस्मदी तादृशेऽनिष्टस्थल एवादेशाः स्युः। तत्सत्त्वे तु तेन समभिव्याहृतस्यान्तशब्दस्यावधिवाचकताया द्योतितत्वेन सामानाधिकरण्येनान्वयासंभवाद्युष्मदस्मदोर्मावधेरित्यर्थलाभादवधित्वव्यवहारस्याग्रे किंचिद्देशकालयोस्सत्त्वे एव लोके दृष्टतया न युष्मयत्यादेः क्विपि निष्पन्नयोः मान्तयोरादेशप्रसक्तिरिति भावः। ननु णिलोपस्याचः परस्मिन्निति स्थानिवत्त्वेन नायं दोष इत्यत आह। क्वौ लुप्तमित्यस्येति। सूत्रोदाहरणसंपत्तय इत्यादिः। नन्वभिव्यक्तेतिन्यायेन नात्र दोष इत्यत आह। अभिव्यक्तेति। यत्तु सर्वनामप्रकरणे संज्ञाव्यावृत्तेरभिव्यक्तपदार्था इति न्यायेन स्वयमभिधानात्तद्विरुद्धमेतदित्याचार्याः, तन्न। संज्ञाव्यावृत्तेरुक्तत्वेऽपि तदन्यव्यावृत्त्यभावस्यानुक्तत्वेन तद्विरोधाभावात्। अत एवेति। तत्रादेशस्यानिष्टत्वादेवेत्यर्थः। णिजन्तप्रकृतिकक्विबन्तेऽप्यादेशप्रवृत्तिरिष्टैवेत्याशयेन प्रागुक्तभाष्यस्य कैयटोपवर्णितमर्थं दूषयति। यत्त्विति। सामर्थ्यादिति। परिग्रहणसामर्थ्यादित्यर्थः। उक्त-

य्यत्वात्। तत्र हि सामानाधिकरण्यासम्भवाद्वैयधिकरण्यान्वय इत्यन्यत्। किं चात्र व्याख्याने 'अवधिद्योतनार्थम्' इति भाष्याक्षरास्वारस्यम्। मपर्यन्तस्येति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक्॥

---

**स्यैवेति**। समभिव्याहृतान्तपदस्यावधिबोधकताद्योतकत्वस्यैवेत्यर्थः। तस्यैव न्याय्यत्वे हेतुमाह। **तत्र हीति**। तादृशेऽर्थे इत्यर्थः। **असंभवादिति**। एवं चात्र पक्षे परिग्रहणस्य मणिमन्त्रादिन्यायेन वैयधिकरण्यान्वयनियामकत्वं न कल्पनीयं, किंतु मावधेरित्यर्थकेन मपर्यन्तस्येत्यनेन सामानाधिकरण्यासंभवादेव वैयधिकरण्यान्वय इत्यस्यैव न्याय्यत्वमिति भावः। कैयटोक्तार्थे भाष्यविसंवादमप्याह। **किं चेति**। ननु पर्यन्तशब्दस्यावधिवाचकत्वे मपर्यन्तस्येत्यत्रातद्गुणसंविज्ञानबहुव्रीहौ मकारं परित्यज्यैवादेशः स्यादत आह। **तद्गुणसंविज्ञान इति**। अवयवस्यावधित्वे तद्गुणस्यैवाङ्गीकारः। अत एव द्विपर्यन्तानामित्यादौ न दोष इत्याशयः। यत्तु वस्तुतस्तु पर्यन्तपदस्य यतोऽग्रे किंचिदवशिष्यते, तत्र शक्तिरिति केनाप्यबोधनात्तत्रापि परिपदस्य तादृशार्थे मणिमन्त्रादिन्यायेनान्तपदशक्तेर्नियामकत्वमावश्यकम्। किञ्च तादृशार्थे नियामकत्वेऽपि वैयधिकरण्येनान्वयस्यावश्यकत्वमिति लाघवान्मदुक्तार्थ एव कल्पनीयः। ननु ममावधिद्योतनार्थमित्यक्षरास्वारस्यमिति चेत्सत्यम्। परं तु तत्रापि तत्रैवेत्यक्षरास्वारस्यं, तत्रैवेत्यस्यानिष्ट एवेत्यर्थवन्मयाप्यवधिद्योतनार्थमित्यस्य वैयधिकरण्यान्वयद्योतनार्थमित्यर्थस्य कर्तुं शक्यत्वात्। अत एव कैयटे क्वौ लुप्तमित्यस्य प्रवृत्तिफलत्वेन युष्मयतेः क्विपि निष्पन्नस्य युष्मच्छब्दस्य त्वमित्यादीनि रूपाण्युक्तानि। तस्मादनभिधाने न दृढं मानमिति वाराणसेयास्तन्न। शरैरुस्रैरिवेत्यादावुस्रादिपदानां तत्सदृशपरत्वे इवादीनामिवान्तपदस्यावधिबोधकत्वे परिग्रहणस्यान्वयव्यतिरेकाभ्यां तात्पर्यग्राहकताया वक्तुं शक्यतया मणिमन्त्रादिन्यायानावश्यकत्वात्। वैयधिकरण्यान्वयस्य मतद्वयेऽप्यावश्यकत्वेन लाघवा-

अङ्गकार्ये इति । अङ्गाधिकारस्थे इत्यर्थः । मकारान्तरमिति । 'शसो न' इत्यनेन संहितया पाठे इति शेषः ॥

परे तु शेषविभक्तिभूतामादि–युष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्याश्भावः । सुटस्त्वाकमवयवत्वान्न तेन सन्निपातविघात इति ससकारनिर्देशः 'साम आकम्' इत्यत्र । अत एव क्रुन्मेजन्तसूत्रे

---

भावेऽपि नागेशमते सामानाधिकरण्यासंभवाद्वैयधिकरण्यान्वयः । मतान्तरे मणिमन्त्रादिन्यायेन परिग्रहणस्य वैयधिकरण्यान्वयनियामकत्वमिति भेदस्य सत्त्वेन तदपेक्षयाऽस्य न्याय्यत्वमित्याशयात् । अत एव कैयटेनाप्यन्ते 'केचित्तु मान्तयोर्युष्मदस्मदोरादेशा नेच्छन्ती' त्यादिनाऽयमर्थः प्रतिपादितः । तेन पूर्वोक्तार्थस्य स्वानभिमतत्वं सूचितमित्यवधेयम् ॥

ननु यूयमित्यत्र शीभावस्याङ्गसंबन्धित्वाभावेनोक्तपरिभाषया तद्वारणासंभव इत्याशङ्क्याह । अङ्गाधिकारस्थ इति । ननु कथमत्र प्रश्लेषः । प्रश्लिष्टमकारेणामित्यस्य विशेषणसमासे तस्य पूर्वनिपातापत्तेः । असमासे संयोगान्तपदाभावेन लोपाप्रवृत्तौ मकारश्रवणापत्तेरित्याशङ्क्याह । संहितया पाठ इति । तथाच द्वयोरप्यनुस्वारयोः कृतयोर्नोच्चारणे विशेष इति भावः । निरूपितं चैतद्भाष्यसम्मतत्वेन हलन्तनपुंसकलिङ्गप्रकरणशेषे ग्रन्थकृता । प्रश्लेषे मानं तु त्यदादीनाम इति सूत्रस्थं भाष्यमेव । 'तत्र हि' टिलोपष्टाबभावार्थ, इत्यादिना टाबभावस्यैव टिलोपफलत्वमुक्तम्, न तु श्यादेशाभावस्यापीति बोध्यम् । वस्तुतो न्यायेनैव निर्वाहे भाष्यानुक्तप्रश्लेषाश्रयणमनर्थकं, वक्ष्यमाणभाष्यविरुद्धं चेत्याशयेनाह । परे त्विति । नन्वत्र सन्निपातपरिभाषाप्रवृत्तिस्वीकारे ससुट्कनिर्देशो व्यर्थः । तत्राप्यनयैव परिभाषया सुटो वारणसंभवादित्यत आह । सुटस्त्विति । अत एवेति । आगमस्यागमिसंबन्धिसन्निपातविघातकत्वा-

'ह्रस्वत्वं तुग्विधेर्ग्रामणि कुलम्' इति सन्निपातपरिभाषाप्रयोजनव्याख्यावसरे 'यदा ह्रस्वमात्रस्य तुगागमो, न तदन्तस्य तदेदं प्रयोजनम्' इति व्याख्यातं कैयटेन । मूलोक्तं तु न युक्तम् । भाष्यानुक्तेः । अत एव 'नेतराच्छन्दसि' इति सूत्रे भाष्ये 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेनेति वार्त्तिकं व्याख्याय 'तेषु कृतेषु पुनः प्रसङ्गात् शिशीलुग्विधयः कस्मान्न भवन्ति?, सकृद्गतिन्यायात्' इत्युक्तम् । त्वद्रीत्या पुनः प्रसङ्गस्यैवाभावेन तदसङ्गतिः स्पष्टैव ।

---

भावादेवेत्यर्थः । व्याख्यातमिति । अन्यथा ह्रस्वान्तस्य तुगागमेऽप्येतत्प्रयोजनत्वोपपत्त्या तथा व्याख्यानमयुक्तमेवेति भावः । कैयटेनेति । अनेनारुचिस्सूचिता । तद्बीजं तु तुकस्समुदायभक्तत्वेऽपीगन्तपूर्वपदस्योत्तरपदसान्निपातविघातः पूर्वपदस्येगन्तत्वसान्निपातविघातश्चास्त्येवेति भाष्याशयात्कैयटोक्तं व्याख्यानमयुक्तमिति । स्पष्टं चेदमुद्योते । यदागमपरिभाषा तु नात्र प्रवर्तते । अनित्यत्वादिति तदाशयः । एवमप्यागमस्यागमिसम्बन्धिसान्निपातविघातकत्वं नास्तीत्यंशस्य तेन स्फुटं प्रतीत्या तावन्मात्रे तस्योपष्टम्भकतया प्रतिपादनं नासङ्गतमिति बोध्यम् । मूलोक्तमिति । प्रश्लेषेण वारणमित्यर्थः । अत एवेति । मकारप्रश्लेषाभावादेवेत्यर्थः । नपुंसकादेशेभ्य इति । शिशीलुग्विधिभ्य इत्यर्थः । विभक्त्यादेशा इति । अमित्यर्थः । बहुवचनं त्वेकस्यापि स्थानिभेदेन भेदमारोप्य कृतमिति बोध्यम् । तदसङ्गतिरिति । भाष्यासङ्गतिरित्यर्थः । नच मकारप्रश्लेषापरिज्ञानेन तद्भाष्यं प्रवृत्तमिति नित्यानन्दोक्तदिशा न तद्भाष्यविरोध इति वाच्यम् । विना विरोधादिकं भाष्यकृतोऽपरिज्ञानकल्पनाया अनौचित्यात् । नच सकृद्गतिन्यायेन वारणपरैतद्भाष्यस्य सान्निपातन्यायापरिज्ञानमूलकत्वस्य त्वयापि वक्तव्यतयोभयोस्तौल्यमिति वाच्यम् । अस्मन्मते उभयोरपि न्यायत्वाविशेषादेकेन वारणस्य न्यायान्तरदूषकत्वाभावात् ।

प्रश्लेषेण वारणं न तादृशमिति बोध्यम् । एतेनाहुरिति प्रतीकमुपादाय 'परे तु प्राचीनमतमेव ज्यायः, नेतराच्छन्दसीति सूत्रस्थं भाष्यं तु मकारप्रश्लेषापरिज्ञानेन प्रवृत्तमिति तन्नास्माकं प्रतिकूलम् । त्वयापि सन्निपातपरिभाषामबुद्ध्वा इदं भाष्यं प्रवृत्तमित्यवश्यं वक्तव्यम् । अन्यथा तयैव निर्वाहे सकृद्गतिन्यायाश्रयणमसङ्गतमेव स्यादि'ति नित्यानन्दोक्तमपास्तम् । यदपि नित्यानन्देनोक्तं 'सन्निपातपरिभाषया नात्र निर्वाहः । ते प्राग्धातोरित्यादिनिर्देशैर्जसश्शीति सूत्रविधेये सन्निपातपरिभाषाप्रयुक्तसङ्कोच एव नेति ज्ञापनेन तस्या अत्राप्राप्तेः। नच न मया विधेये सङ्कोचः क्रियते, अपि त्वनुज्ञावाक्य एव । तथा च ते इति निर्देशेन त्यदादीनाम इत्यनुज्ञावाक्ये जसश्शीत्येतदतिरिक्तत्वेन सङ्कोचेऽन्यत्र सङ्कोचे मानाभाव इति वाच्यम् । उपजीव्यविरोधो न न्याय्य इत्यक्षरस्वारस्यभङ्गापत्तेः। नहि तेनोपजीव्यविरोधकर्तुरनुज्ञादानं पापजनकमिति बोध्यते । अपि तूपजीव्यविरोधस्य पापजनकत्वमुच्यते । अत एव लोके उपजीव्यविरोधकर्तैव निन्दितो भवति, नतु तन्मन्त्रयिता । प्रत्युत तन्मन्त्रयितुः प्रतिष्ठा जायत' इति तदप्ययुक्तम् । उपजीव्यविरोधस्यान्याय्यत्वमिति न्यायस्याक्षरमर्यादयोपजीव्यस्य नाशानुकूलो व्यापार उपजीवकेन कर्तुमयोग्य इत्यर्थस्यैव लाभेन विभक्त्युपजीवकात्वविधायके त्यदादीनाम इति वाक्ये उक्तनिर्देशैर्जसश्शीत्येतदतिरिक्तत्वेन सङ्कोचेऽपि शेषे लोप इत्यत्रापि तथा सङ्कोचे मानाभावात्। तथा हि । उपजीव्यशब्दे ण्यन्तात्कर्तरि बाहुलकाद्यत् । उपजीवयतीत्युपजीव्य इत्यर्थः । विरोधो नाशानुकूलो व्यापारः । एवं चोपजीव्यस्य नाशानुकूलो व्यापार उपजीवकेन कर्तुमयोग्य इत्यक्षरार्थः । तद्यथा शतानीत्यत्र नुमं प्रत्युपजीव्या विभक्तिः । तन्नाशो लुक् । तज्जनको व्यापारः षट्संज्ञाप्रवृत्तिरूपः । स उपजीवकेन नुमा न कर्तव्य इति न षट्संज्ञा । एवं च प्रकृते औत्सर्गिकसन्निपातपरिभाषाया अप्रवृत्तौ न मानमिति बोध्यम् । किंच 'कर्ता

अत एव च तत्र युष्मदादेर्विभक्त्यादेशस्य 'यूयं ब्राह्मणाः' इत्याद्यवकाशप्रदर्शनं कृतम्। अन्यथा तत्रापि जसःशीप्राप्त्या तदसङ्गतिः। यूयमित्यादिप्रयोगकरणेन तत्र श्यादिशङ्कासमाधाना-करणेन च भाष्यकृताऽत्र सन्निपातपरिभाषाविषयत्वं सूचितम्। अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यम्। तस्या अङ्गसम्बन्धिकार्य-विषयत्वात्। सूत्रभाष्यस्वरसोऽप्येवमेव। .... .... ....

---

कारयिता चैव प्रेरकश्चानुमोदक' इत्यभियुक्तोक्त्या तेषां सर्वेषामपि पापजनकत्वस्य स्पष्टत्वात्। प्रत्युत तन्मन्त्रयितुः प्रतिष्ठैव जायत इत्युक्तिरात्मनस्तुष्टिरेव चेत्युक्तदिशा केवलं स्वानुभवप्रमाणिकैवेति बोध्यम्। अत एवेति। सन्निपात-परिभाषया श्यादेशप्रतिबन्धादेवेत्यर्थः। समाधानेति। मकारप्रश्लेषरूप-समाधानेत्यर्थः। परिभाषाविषयत्वं सूचितमिति। अत एव तुभ्यं, मह्यं त्वत्, मत्, तव, ममेत्यादौ स्मायादयो न। अन्यथा अम्मान्त एवावशिष्यत इति व्याख्यानेन तुभ्यं मह्यमित्यनयोः सिद्धावपि त्वदित्यादेरसिद्धिः। अत-स्सन्निपातपरिभाषया वारणमेव युक्तमिति बोध्यम्। अङ्गसंबन्धिकार्य-विषयत्वादिति। अङ्गकार्यप्रवृत्त्युत्तरं पुनःप्रसक्ताङ्गकार्यस्याङ्गसंबन्धित्व एव तत्परिभाषाप्रवृत्तेरित्यर्थः। प्रकृते तु पुनःप्रसक्ताङ्गकार्याणां जसश्शीत्यादीनां प्रत्ययसंबन्धितया तत्परिभाषाया अत्राप्रवृत्तिरिति भावः। एतेन इदं न युक्तं, धर्मिग्राहकमानविरोधात्। अत एव ज्यादादीयस इति सूत्रे भाष्यं, 'किमर्थं ज्यात्परस्येयस आत्वमुच्यते? लोपः प्रकृतोऽनुवर्त्यताम्। अकृद्यकारेति दीर्घो भविष्यति। एवं तर्हि सिद्धे सति यदात्वं शास्ति। तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा, अङ्गवृत्ते पुनर्वृत्तावविधिरिति, लोपश्च प्रत्ययसंबन्धि कार्यं, न त्वङ्गसंबन्धी'त्याचार्योक्तमपास्तम्। तत्रापि पुनःप्रसक्तदीर्घस्याङ्गसंबन्धित्वेन धर्मिग्राहकमानविरोधाभावात्। सूत्रभाष्यस्वरसोऽपीति। ज्ञापकसाजात्या-

वस्तुतो नैषा लक्ष्यसंस्कारिका। 'द्व्योः' इत्यादिनिर्देशासङ्गतेः। अत एव भाष्ये "किमेतस्या ज्ञापने प्रयोजनम्" इति प्रश्ने 'पिबेर्गुणप्रतिषेधो न वक्तव्य' इत्येव प्रयोजनमुक्तं, न तु प्रयोगसिद्धिः प्रयोजनमुक्तमित्याहुः॥

त्वमाविति। अत्रापि विभक्ताविति सम्बद्ध्यते। अन्यथा 'प्रत्ययोत्तरपदयोश्च' इति व्यर्थं स्यात्। तत्फलन्तु त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहौ नादेश इति। अत्रैकवचनशब्दो यौगिको, व्याख्यानात्। तदाह—एकस्येति। अविभक्तिकमिति। व्याख्यानात्। योऽचि। अनादेश इति किम्। त्वत्, मत्। 'पञ्चम्या अत्' इत्यदादेशः। आत्वविधायके च भ्यम् व्यावर्त्यः। वस्तुत उत्तरार्थमेव तत्। 'अभ्यम्' इत्येव च्छेदादिति

---

तत्र तत्र तादृशविषय एव भाष्ये संचारितत्वाच्चेत्यर्थः। इदं चास्या लक्ष्यसंस्कारकत्वमभ्युपेत्य। वस्तुतस्तदेव नेत्याह। वस्तुत इति। अत एवेति। तस्या अनन्यथासिद्धप्रयोजनसाधकत्वाभावादेवेत्यर्थः। न तु प्रयोगसिद्धिरिति। न च पिबतीत्यत्र गुणवारणमेव तस्या अनन्यथासिद्धं प्रयोजनं, तदर्थं वचनारम्भे गौरवादिति वाच्यम्। पिबादेशस्यादन्तत्वे लघूपधत्वाभावेन गुणाप्राप्त्या फलाभावात्। व्यर्थं स्यादिति। तस्याप्येकार्थत्व एव प्रवृत्त्या तद्विषयेऽप्यनेनैव सिद्धेरिति भावः। तत्फलमिति। अत्र विभक्तावित्यस्य संबन्धफलमित्यर्थः। प्रत्ययोत्तरपदयोरित्यस्य तु नात्र प्राप्तिः, उत्तरपदपरत्वाभावात्। नादेश इति। लुका लुप्तत्वेन प्रत्ययलक्षणाभावादिति भावः। व्याख्यानादिति। त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणमिति प्रत्ययोत्तरपदयोश्चेति सूत्रस्थभाष्यरूपादित्यर्थः। व्याख्यानादिति। भाष्ये ङे प्रथमयोरिति प्राप्तामादेशनिषेधकमिदं कुतो नेति शङ्काकरणरूपादित्यर्थः।

भाष्ये स्पष्टम् । हलादाविति । परिशेषलब्धम् । हलीत्यनुवृत्तौ तु योऽचीत्यज्ग्रहणं माऽस्तु । भ्यसोभ्य । अत्र यद्वक्तव्यं तदुक्तम् । पक्षद्वयेऽपीति । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे 'एकादेश उदात्तेन' इत्यभ्यम आद्याकार उदात्तः । टिलोपेऽपि यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेन 'अनुदात्तस्य च यत्र' इत्यनेन स उदात्त एवेति न विशेष इति भावः ॥

नन्वाकमः पूर्वं लोपाभावेनादन्तत्वाभावात्सुडागमाप्रसक्तेः ससुट्कनिर्देशो व्यर्थः, सूत्रासङ्गतिश्चेत्यत आह—भाविन इति ।

---

परिशेषलब्धमिति । अजादौ यत्वेन बाधादिति भावः । नन्वनादेशग्रहणस्यात्र फलाभाव इत्यनुपदमेवोक्तत्वेन त्वमित्यत्र यत्वाप्राप्त्या हलीत्यननुवृत्तौ तत्रा-प्यात्वं प्रसज्येतेति चेन्न । तथासति द्वितीयायां चेत्यस्य वैयर्थ्येनानादेशे भवति चेद्द्वितीयायामेवेति नियमात्तत्र तदप्राप्त्या अनादेशेऽजादौ यत्वेन बाधात्परि-शेषलब्धमित्यस्य सुवचत्वात् । तदुक्तमिति । अभ्यमिति छेदस्यैव न्याय्यत्व-मुक्तमित्यर्थः ॥

लोपाभावेनेति । अनादेशभूताजादिविभक्तिपरत्वसत्त्वेन यत्वप्राप्त्या शेषविभक्तिपरत्वाभावादिति भावः । ननूपसंजनिष्यमाणन्यायेनाकृतव्यूहपरि-भाषया वा पूर्वं यत्वाप्रवृत्त्या शेषविभक्तिपरत्वेनाकमः पूर्वमन्त्यलोपेऽदन्तत्वा-त्सुटि तद्विशिष्टस्याकम्विधानार्थं ससुट्कनिर्देश आवश्यकः । सूत्रसङ्गतिश्चेति चेदत्र वाराणसेयाः । अनादेश इति निषेधसंभावनाया यत्वप्रवृत्त्यभावसंभावना-द्वाराऽन्त्यलोपसुट्प्रवृत्तिप्रयोजिकाया आकमादेशप्रवृत्तिसंभावनाप्रयोज्यत्वेन, आकमादेशप्रवृत्तिसंभावनायाश्चान्त्यलोपसुट्प्रवृत्तिप्रयोजिका या यत्वप्रवृत्त्य-भावसंभावना, तत्प्रयोजकानादेश इति निषेधसंभावनाप्रयोज्यत्वेनान्योन्याश्रय-ग्रस्ततयाऽन्त्यलोपस्यापि पूर्वमप्रवृत्त्या ससुट्कनिर्देशासङ्गतिस्तदवस्थैवेति वदन्ति ।

**आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः । अयं भावः । सामः प्रसङ्गे आकमित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोद्ध्यते । स्थान्यादेशभावविषये सर्वत्रैवमेव । यथाऽऽर्द्धधातुकविषयेऽस्तेरप्रयोगो भूप्रयोगश्च 'अस्तेर्भूः' इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः । शब्दानित्यत्वप्रसङ्गात् । किं तु प्रसक्तबुद्धेरेव निवृत्तिः । सकारबुद्धि-**

---

वस्तुतस्तूक्तन्यायेन पूर्वं यत्वाप्रवृत्तावपि विभक्तौ वस्तुतो यत्वनिमित्तताया अव्याघाताल्लोपाप्रवृत्त्या सूत्रासङ्गतिः । तत्र फलोपधानात्मकमेव निमित्तत्वं ग्राह्यमित्यत्र तु न मानमिति बोध्यम् । नन्वाकम्प्रवृत्तिकाले शेषे लोपस्याप्रवृत्तत्वेनानदन्तत्वात्सुटोऽप्रवृत्त्या कथमाकमा सुटो निवृत्तिः । कथं वा ससुट्कस्य स्थानित्वेन निर्देशः । न ह्युद्देश्यतावच्छेदकरूपेणोद्देश्यसिद्धिमन्तरा कार्यविधानं युज्यते । तदुक्तं वृद्धिसूत्रे भाष्ये 'सतो हि कार्यिणः कार्येण भवितव्य'मित्याशङ्क्य मूलकाराशयं वर्णयति । **अयं भाव** इत्यादिसकारोच्चारणसामर्थ्यादितीत्यन्तग्रन्थेन । **सामः प्रसङ्ग इति** । सुडामोः प्रसङ्ग इत्यर्थः । **अप्रयोगो बोध्यत इति** । साम इति स्थानषष्ठ्या निवर्त्यनिवर्तकभावरूपसंबन्धबोधकत्वेन साम्निवर्तक आकमित्युक्त्याऽऽकमात्मकादेशनिरूपितनिवर्त्यता द्वयोरपि सुडामोरविरुद्धा । रोपधयोरुभयोरपि रमागमनिवर्त्यतावत् । निवर्त्यता च प्रयोगाभाव एवेति युज्यत एवाकमा सुटो निवृत्तिः । साम इति सङ्घातस्याप्रसिद्धत्वेऽपि खण्डशः प्रसिद्धिमास्थाय निर्देशोऽपि सुसङ्गत एवेति भावः । न केवलमत्रैवेत्थं, किं त्वन्यत्रापीति प्रसङ्गादाह । **स्थान्यादेशेति** । **एवमेवेति** । स्थानिनोऽप्रयोग, आदेशस्य प्रयोग एवेत्यर्थः । नन्वेवं निवर्त्यनिवर्तकत्वाभावेन स्थान्यादेशव्यवहारो न स्यादत आह । **किं त्विति** । एवं च बुद्धिगतनिवर्त्यनिवर्तकभावस्य तद्विषयेष्वारोपेण स्थान्यादेशभावव्यवहार इति भावः । ननु शब्दानित्यत्ववारणाय साम आकमित्यस्य सुडामोर्बुद्धिप्रसङ्गे आकम्बुद्धिः कार्ये-

**प्रसक्तेश्च प्रकृते सांप्रतिक्या असम्भवाद्भाविन्या ग्रहणं, सकारोच्चारणसामर्थ्यादिति प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम् । तन्निवृत्तिश्चाऽमोऽभावात् । अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव, न त्वाम्त्वम् । उक्तरीत्या**

---

त्यर्थस्याङ्गीकारेऽप्येतच्छास्त्रजन्याकम्बुद्धिकाले आम्बुद्धिसत्त्वेऽपि सुड्बुद्धेरभावेन प्रसक्ताम्बुद्धेरेव निवर्तयितुं शक्यतया कथं सुड्बुद्धेर्निवृत्तिसंभवस्तत्राह । **सकारबुद्धिप्रसक्तेरित्यादि** । यथा तत्तद्वचनसामर्थ्यादन्यत्र सांप्रतिकाभावे भूतपूर्वगतिराश्रीयते, तथा प्रकृते ससुट्कस्य स्थानित्वेन निर्देशसामर्थ्याद्भाविन्या अपि सुड्बुद्धेरिदानीन्तनाकम्बुद्ध्यैव निवृत्तिः, नतु स्वप्रवृत्त्युत्तरं प्रसक्तसुड्बुद्धिनिवर्तनाय पुनराकमः प्रवृत्तिकल्पनावश्यकतेति भावः । तदेतदाह । **प्रथमप्रवृत्त्यैव सुटो निवृत्तिरिति** । नचैवंरीत्या युष्माकमित्यादेर्निर्वाहेऽपि प्रत्ययोत्तरपदयोश्चेतिसूत्रभाष्योदाहृतस्यातित्वाकमित्यस्यासिद्धिः । तत्र युष्मच्छब्दस्य सर्वनामत्वाभावात्सुड्बुद्धेर्भावित्वस्याप्यसंभवेन साम आकमित्यस्याप्रवृत्तेरिति वाच्यम् । मूले सुड्ग्रहणस्य सूत्रे सकारग्रहणस्य चागमोपलक्षकत्वेन यत्रामागमयोर्बुद्धिः प्रसक्ता, तत्राकम्बुद्धिः कार्येति सूत्रार्थस्य पर्यवसन्नत्वेनान्यत्र सुड्बुद्धेरिव प्रकृते नुडागमबुद्धेर्भाविन्यास्संभवेन सूत्रप्रवृत्तेरव्याघातात् । स्पष्टं चेदमुद्द्योते । उक्तमर्थं प्रमाणयति । **भाष्ये स्पष्टमिति** । तत्र हि ससकारग्रहणसामर्थ्याद्भाविनस्सुट आदेशो विज्ञायते इत्युक्तम् । एवं कैयटाद्याशयमुपवर्ण्य तन्मतेऽतित्वाकमित्यादिसिद्धये तत्र तत्र सुड्ग्रहणस्य सूत्रे सकारग्रहणस्य चोपलक्षणत्वे गौरवं मत्वा लघूपायमाह । **तन्निवृत्तिश्चेति** । भाष्ये स्पष्टमित्यस्य मध्यमणिन्यायेनात्रापि संबन्धः । उक्तभाष्यस्य कैयटोक्ताशयकत्वे निरुक्तरीत्या गौरवादेवमेव तदाशयो वक्तुं युक्त इत्याशयः । **साम्त्वमेवेति** । यद्यपि स्थानिवत्सूत्रेण स्थानितावच्छेदकधर्मस्यैवातिदेश इति न नियमः । तथासति

**च न स्थानिवद्भावप्रसक्तिः, सैवाप्रसक्तिः ससुट्कनिर्देशेन बोद्ध्यते**

---

बभूविवेत्यादावार्धधातुकत्वादेरनतिदेशे इडाद्यनापत्तेः। तथा क्त्वात्वस्यार्धधातुकत्वस्य ल्यप्यनतिदेशे ईत्वाप्राप्त्या न ल्यपीत्यादेर्वैयर्थ्यापत्तेश्च। तथापि संभावितमामं विहाय सामः स्थानित्वोपादानसामर्थ्येन साम्त्वमेवातिदिश्यते, न त्वाम्त्वमिति कल्पनान्न दोषः। प्रत्ययत्वसुप्त्वादीनां तु न व्यावृत्तिः। सामितिनिर्देशेन प्रसक्तस्थानितावच्छेदकभावस्याम्त्वस्यैवानतिदेशबोधनात्। एवं चातित्वाकमित्यत्र पदत्वादिकं सुलभं, युष्माकमित्यत्र विभक्तित्वातिदेशेन शेषे लोपश्च सिद्ध इति बोध्यम्। पदत्वादिकमानुमानिकस्थान्यादेशभावेन सिद्धमित्यौत्तराहोक्तं तु न युक्तम्। यत्र श्रौतस्य स्थानिनो नैरर्थक्यं तत्रैवानुमानिकस्थान्यादेशभावकल्पना, नान्यत्रेति स्थानिवत्सूत्रस्थशब्दरत्नग्रन्थेन विरोधात्। यदपि 'साश्च म्च साम्, आक् च म्चेत्याकम्। सौत्रत्वान्न जश्त्वम्। यथासंख्येन साशब्दस्य स्थाने आक् आदेशः, मकारस्य स्थानेऽमादेशः। तथाचाम्त्वस्य स्थान्यवृत्तित्वेन न तस्यातिदेशः। अत्रैव तात्पर्यग्राहकस्ससुट्कनिर्देश' इति नित्यानन्दः। तदपि न। उक्तरीत्या सर्वसामञ्जस्ये सौत्रत्वाद्याश्रयणेन यथासंख्यशास्त्रप्रवर्तनेन च गुरुभूतभाष्याक्षरस्वारस्यविरुद्धेदृशक्लृप्तकल्पनाया अयुक्तत्वात्। यदपि ससुट्कनिर्देशादाकमि ङित्त्वमारोप्य टिलोपे सुटो नुटश्चाप्राप्तिरिति केचित्, तदप्ययुक्तम्। ससुट्कनिर्देशेन शब्दमर्यादया कथंचिदपि तादृशार्थस्यालाभात्। मणिमन्त्रादिन्यायेन तादृशार्थकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात्। यदपि साम आकमित्यत्र नलोपेन सकारात्पूर्वं नकारं प्रश्लिष्य आकारात्पूर्वं सवर्णदीर्घेण निषेधार्थकाकारं प्रश्लिष्य सुड्नुटौ न भवत। आम स्थाने आकम्च भवतीत्यर्थकल्पनेन न कश्चिद्दोष इति केचित्। तदप्यसमञ्जसम्। वाक्यभेदापत्तेः। सकारग्रहणसामर्थ्याद्भाविनस्सुट आदेशो विज्ञायत इति प्रकृतसूत्रस्थभाष्याक्षरस्वारस्यभङ्गापत्तेश्चेति बोध्यम्। स्थानिवद्भावप्रसक्ति-

इति बोद्धव्यम् । अत एव 'अतित्वाकम्' इत्यादौ 'प्रत्ययोत्तरपदयोः' इति भाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव साम्त्वस्याहार्यारोपेणाऽऽदेशः । आदेशस्याम्त्वाभावाच्चात्र न नुट् । न च यत्र साम् भावी तत्रैवायम् । सामो भावित्वस्य सर्वथा दुरुपपादत्वात्, साम्त्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वादिति .... .... ....

---

रिति । स्थानिवद्भावेनाम्त्वप्रसक्तिरित्यर्थः । अत एवेति । ससुट्कनिर्देशेनेदृशार्थकल्पनादेवेत्यर्थः । आकम्नुडभावाविति । अन्यथा तत्र सुटो भावित्वस्याप्यभावेनाकम् न स्यात् । कथंचित्तत्प्रवृत्तिसंपादनेऽपि स्थानिवत्त्वेनाम्त्वमादाय प्रसक्तस्य नुटो निवृत्तिर्न स्यादिति भावः । ननु भवन्मतेऽपि कथमत्राकम् । आम उद्देश्यतावच्छेदकीभूतसाम्त्वरूपधर्मानाक्रान्तत्वादत आह । आहार्यारोपेणेति । न चैवमविद्यमानस्य साम्त्वस्यामीव भिस्यपि सुवचतया तत्राप्याकमादेशापत्तिरिति वाच्यम् । साम्त्वस्य सकारविशिष्टाम्त्वरूपतया तत्र सामर्थ्यात्सकारवैशिष्ट्यांशे आरोपाङ्गीकारेऽप्यन्यांशे तदङ्गीकारे मानाभावात् । ससकारग्रहणसामर्थ्यादिति भाष्येण सकारवैशिष्ट्यांश एवारोप इति स्पष्टं प्रतीतेः । अतित्वाकमितिरूपमनभ्युपगच्छतां मतमाशङ्क्य खण्डयति । न चेत्यादिना । साम्भावीति । सुड्विशिष्ट आम्भावीत्यर्थः । सर्वथा दुरुपपादत्वादिति । आकमः पूर्वं शेषे लोपाभावेन सुटोऽप्राप्त्या, आकम्प्रवृत्त्युत्तरं सुटः प्राप्तावपि साकम एव भावित्वेन सामो भावित्वं सर्वथा दुरुपपादमिति भावः । नन्वाकामि स्थानिवद्भावेनाम्त्वं, श्रुतं सकारं चादाय साम्त्वसंपत्तौ साम्भावित्वं सूपपादमत आह । साम्त्वस्येति । साम्भावित्वस्येत्यर्थः । अशास्त्रीयत्वेनेति । अशास्त्रीयकार्यत्वेनेत्यर्थः । अत्र हि साम्भावित्वरूपनिमित्तरूपकार्यसंपत्तये स्थानिवद्भावेनाम्त्वमानेयम् । अशास्त्रीये च कार्ये स्थानिवत्त्वस्याप्रवृत्तिरन्यत्र स्पष्टैव । एवं चाम्त्वस्य स्थानिवद्भावेन साम्भावित्वसम्पत्तयेऽतिदेष्टुमशक्यत्वेन सर्वथा तस्य दुरुपपादत्वमिति भावः । अतिदेशालभ्यत्वादिति । अतिदेशसहाये-

भाष्यविरुद्धकल्पना व्यर्थैति दिक्। ह्रस्वादिरकम् तु न कृतः। अन्त्यलोपेऽप्यकारस्यैत्वनिवृत्त्या चारितार्थ्येन पररूपापत्तौ युष्माकमित्यसिद्ध्यापत्तेः॥

द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति—द्व्येकत्वेति। द्वित्वैकत्वविशिष्टवाचिनी इत्यर्थः। समासार्थो—मुख्यविशेष्यः। अन्यसंख्यः—युष्मदाद्यर्थगतसंख्येतरसंख्यायुक्तश्चे-

---

नाप्युपपादयितुमशक्यत्वादित्यर्थः। सकारोच्चारणसामर्थ्येनाकम्याम्त्वातिदेशप्रतिबन्धेऽपि साम्त्वस्याशास्त्रीयत्वेनातिदेशालभ्यत्वादिति भावः॥

केचित्तु तन्निवृत्तिश्चेत्यादिग्रन्थं पूर्वग्रन्थशेषतया योजयन्ति, तदसमञ्जसम्। तथासति सकारबुद्धेः प्रकृते सांप्रतिक्या अभावेन भाविन्या ग्रहणमिति पूर्वग्रन्थस्य, स्थानिवद्भावेन साम्त्वमेव न त्वाम्त्वमित्युत्तरग्रन्थस्य च परस्परं विरोधापत्तेः। स्थानिवद्भावेनाम्त्वाभावेन भाविन्या अपि सकारबुद्धिप्रसक्तेरसंभवात्। किंचैवं सत्येतत्सर्वोपपादनानन्तरमेवोक्तमर्थं प्रमाणयितुं भाष्ये स्पष्टमिति वक्तव्ये तन्निवृत्तिश्चेत्यतः पूर्वं मध्ये तदुक्तेः स्वारस्यं भज्येत। किंचायं भाव इत्युपक्रमे इतिशब्देन ग्रन्थपरिसमाप्तेर्ग्रन्थकारशैलीसिद्धतया तद्ग्रन्थशेषतयोत्तरग्रन्थयोजनमयुक्तमेवेति बोध्यम्॥

कथंचिद्भाविसाम्त्वोपपादनेऽप्याह। भाष्यविरुद्धकल्पनेति। प्रत्ययोत्तरपदयोश्चेति सूत्रभाष्योदाहृतातित्वाकमिति प्रयोगासाधनेनैषा भाष्यविरुद्धेति भावः। ननु युष्मदस्मदोः केवलद्वित्वादिवाचकताया असंभवेन द्व्येकत्ववाचिनी इत्यनुपपन्नमत आह। विशिष्टवाचिनी इत्यर्थ इति। युक्तश्चेदिति। अत्रापिशब्दपूरणेन युक्तश्चेदपीत्यर्थ इति वाराणसेयानां व्याख्यानं त्वनावश्यकमेव। अर्थपरतया व्याख्यानेऽस्यैव फलत्वात्। कृत्रिमयोर्ग्रहणेऽप्यन्यत्र दोषा-

दित्यर्थः । स्त इति । अर्थपरत्वाश्रयणादिति भावः । एते इति कर्तृ-पदम् । युवावाविति कर्मपदम् । एवं त्वमावित्यपि । पूर्वविप्रतिषेधत इति । विप्रतिषेधे पूर्वमिति, सुप्सुपेति समासः । अत एव 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये त्वमाविति सूत्रे शेष इत्यनुवर्त्य सुजस्ङेङस्व्यतिरिक्तविभक्तावेताविति व्याख्यातम् । त्वमौ न चेति । अर्थपरत्वाश्रयणादेवेति भावः । इति विग्रहे इति । एवं विग्रहे

भावात् । स्पष्टप्रतिपत्तये आह । कर्तृपदमिति । त्वमावित्यपीति । कर्मपद-मिति शेषः । पूर्वपदविप्रतिषेधपदयोरसामानाधिकरण्येन विशेषणसमासायोगादाह । सुप्सुपेति समास इति । विप्रतिषेधे सति पूर्वमित्यर्थकेन विप्रतिषेधेऽपरं कार्यमित्यनेनेत्यर्थः । पूर्वपदस्य पूर्वशास्त्रप्रयोजकीभूते लक्षणां स्वीकृत्य विशेषण-समासस्तु न युक्तः, लक्षणायां गौरवात् । एतेन 'अन्ये तु पूर्वशास्त्रप्रयोजकी-भूतो विप्रतिषेधस्तुल्यबलविरोधस्तेनेत्यर्थः । तस्य क्रियाविशेषणत्वाभिप्रायेण ण्यल्लोपाविति वार्तिके पूर्वविप्रतिषेधेनेति प्रयोगः । एवं गुणवृद्ध्यौत्वेत्यत्र । नव्योक्तरीत्या समासे तु पूर्वविप्रतिषेधत इत्यस्य त्वमावपि प्रबाधन्त इत्यनेना-नन्वयापत्तिरि'त्याचार्योक्तमपास्तम् । अन्वयस्योक्तत्वात् । सुप्सुपेति समासा-पेक्षया तदुक्तसमासे विशेषाभावात् । पूर्वविप्रतिषेधे मानमाह । अत एवेति । व्याख्यातमिति । नन्वेवं भाष्योक्तव्याख्यानमपहाय पूर्वविप्रतिषेधाश्रयणे किं बीजमिति चेन्न । तथा व्याख्याने शेषग्रहणस्य मध्ये यूयवयौ जसीत्यादाव-संबन्धाय मण्डूकानुवृत्तेस्संबन्धानुवृत्तेर्वाऽऽश्रयणीयतया गौरवात्तद्भाष्येण पूर्व-विप्रतिषेधकल्पनमेवोचितमित्याशयात् । स्पष्टं चेदमुद्योते । अत एव भाष्ये तदुत्तरमथवेत्यादिना त्वमावेकवचन इत्यत्र यूयवयौ जसीत्यादिसूत्रचतुष्टयमनुवर्त्य वाक्यभेदेन त्वमयोर्विषये यूयादीनां पुनर्विधानमुक्तम् । तेन चाद्यपक्षे पूर्वोक्ता-रुचिस्सूचिता । वस्तुतस्तु द्वितीयपक्षेऽपि वाक्यभेदस्य, पुनर्विधानसामर्थ्येन त्वमादिबाधकत्वस्य चाश्रयणीयत्वेन गौरवात्तदपि पूर्वविप्रतिषेधतात्पर्यकमेवेत्या-

यादृग्रूपाणि तानि वक्ष्यन्त इति शेषः। अतित्वाकमिति। अत्र यथाऽकम्नुडभावौ, तथोक्तम्॥

पदस्य। 'अपदान्तस्य मूर्धन्यः' इत्यतः प्रागयमधिकारः। तत्फलन्तु राजानाविल्यादौ नलोपाभावः। इयं क्वचित्स्थानषष्ठी, क्वचिदवयवषष्ठी। 'हो ढः' इत्यादावाद्या। 'मादुपधाया' इत्यादावन्त्या। तेन वृक्षवन्तावित्यादौ वत्वसिद्धिः। अन्यथा मत्वन्तपदाभावान्न स्यात्। अत एव 'नलोपः' इति सूत्रेऽन्तग्रहणं चरितार्थमिति स्पष्टं

---

ग्रन्थेनैवं व्याख्यातमिति बोध्यम्। एतेन 'शेषग्रहणमनुवर्त्येति प्रतीकमुपादायानेन पूर्वविप्रतिषेधाश्रयणापेक्षया शेषग्रहणमनुवर्त्य व्याख्यानमेव युक्तं लघु चेति सूचितमि'ति मिश्रोक्तमपास्तम्। मूले इति विग्रह इत्यस्योत्तरेणानन्वयादाह। इति शेष इति। प्रागयमधिकार इति। इदं च पदान्तस्येति सूत्रारम्भपक्षे यरोऽनुनासिक इत्यत्र तदनुवृत्त्यैव सिद्धावपदान्तस्येत्यनन्तरमेतदधिकारे फलाभाव इत्याशयकपदस्येति सूत्रस्थभाष्यानुरोधेन, सिद्धान्तभूते तत्प्रत्याख्यानपक्षे तु तदुत्तरमप्यधिकार आवश्यक इति बोध्यम्। अत एव स्तोश्चुना श्चुरिति सूत्रस्थशेखरग्रन्थेन न विरोधः। तावत्पर्यन्तमधिकारे फलमाह। तत्फलं त्विति। ननु हो ढ इत्यत्र वाक्यभेदायान्तपदानुवृत्तेरावश्यकतयाऽवयवषष्ठ्येवेत्यत आह। आदाविति। आदिना मो नो धातोरित्यादेस्संग्रहः। अन्त्येति। अवयवषष्ठीत्यर्थः। तेन पदावयवस्य मवर्णावर्णात्परस्य मतोर्मस्य वकार इत्यर्थस्संपद्यते। तत्फलमाह। वृक्षवन्ताविति। न स्यादिति। किन्तु वृक्षवानित्यत्रैव स्यादिति भावः। अत एवेति। पदस्येत्यस्य क्वचिदवयवषष्ठीत्वादेवेत्यर्थः। चरितार्थमिति। अन्यथा न इत्यस्य पदविशेषणत्वेन तदन्तविधौ तद्वैयर्थ्यं स्पष्टमेवेति भावः। यदि तु प्रातिपदिकेनैव नेत्यनेनापि पदं विशेष्यते, तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्तुमिति मनो-

भाष्ये । 'त्रः संख्यायाः' इत्यत्र नलोपाभावस्तु 'झलाञ्जश् झशि' इत्यत्र जश्त्वाभाववद् बोद्धव्यः । पदात् ॥ 'कुत्सने च सुपि' इत्यतः प्रागयमधिकारः । 'अनुदात्तं सर्वम्' इत्यादिपदत्रयमापादसमाप्तेः । सर्वग्रहणन्तु 'तिङ्ङतिङः' इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेऽपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम् । 'आदेः परस्य' 'अलोऽन्त्यस्य' इत्यनयोस्तु न प्राप्तिः । पदस्येत्यस्य 'अनुदात्तं 'तिङ्' इत्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थान·

---

रमोक्तन्तु न युक्तम् । उक्तार्थज्ञापनायान्तग्रहणस्यावश्यकत्वात् । न च ज्ञापकं विनापि लक्ष्यानुसारिव्याख्यानादेव क्वचित्पदस्येत्यस्य वैयधिकरण्येनान्वय इत्यर्थस्य लाभेन न तदर्थमन्तग्रहणमिति वाच्यम् । लक्ष्यानुसरणस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वात् । तदेतन्नलोपः प्रातिपदिकान्तस्येति सूत्रस्थशब्दरत्नग्रन्थे 'अभिमान' इत्यनेन सूचितमिति बोध्यम् । एतेन प्राचीनानुसारेणान्तग्रहणस्य स्पष्टार्थत्वं वदन्तो मिश्राः परास्ताः । भाष्ये इति । एतेनान्तग्रहणसामर्थ्यान्मुख्यप्रातिपदिकान्त एव नलोपप्रवृत्तिर्न तु व्यपदेशिवद्भावलब्धान्ते । अत एव त्रस्संख्याया इति निर्देशसङ्गतिरित्यपास्तम् । अन्तग्रहणस्योक्तार्थज्ञापकत्वप्रतिपादनपरभाष्यविरोधेन तादृशार्थस्य कल्पयितुमशक्यत्वात् । नन्वेवं त्रस्संख्याया इत्यत्र नलोपः कुतो नेत्यत आह । त्रस्संख्याया इति । जश्त्वाभाववदिति । अनुकार्यस्वरूपभङ्गभियेति भावः । अतः प्रागिति । अत एव कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्त इत्यर्थक 'कुत्सने च सुप्यगोत्रादावि'ति सूत्रविहितमनुदात्तत्वं पचति पूतीत्यादावपि भवति । अन्यथा देवदत्तः पचति पूतीत्यत्रैव स्यादिति भावः । नन्वविशेषेण पदस्यानुदात्तत्वविधानेन विनिगमनाविरहात्सर्वस्याप्यनुदात्तत्वसिद्धौ सर्वग्रहणं किमर्थमित्याकाङ्क्षायामाह । सर्वग्रहणं त्विति । नन्वादेः परस्येत्यादिनिवृत्त्यर्थमेव सर्वग्रहणङ्कुतो नेत्यत आह । आदेरिति । स्थानषष्ठ्यभावादिति । अलो-

षष्ठ्यभावात्। तत्र पादशब्देन ऋक्पादः, श्लोकपादश्चाविशेषाद् गृह्यते। अपादादिशब्देन पादान्तपादमध्यस्थवद् छन्दोहीनवाक्यस्थस्यापि ग्रहणम्। 'ग्रामे कम्बलो मे स्वम्' इति भाष्यात्। षष्ठ्यादीति। सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादिदं लभ्यते इत्यन्यत्र विस्तरः। तौ चानुदात्ताविति। अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः। उक्तविभयोरिति। पदात्परयोरपादादौ स्थितयोरित्यर्थः। द्वितीयायां त्वामयोरपवादत्वादाह—षष्ठीचतुर्थ्येकेति॥

विभक्तिक्रमलब्धद्वितीयादिक्रमेणोदाहरति—श्रीश इति। दत्तादित्यनेन चतुर्थ्यन्तत्वं स्फुटीकृतम्। संवेशोऽस्मानिति। नन्वत्र सन्ध्यभावे नवाक्षरत्वेनानुष्टुप्पादत्वानापत्तिः। सन्धौ तु 'उभयत आश्रयणेऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेन्न। संवेशो

---

ऽन्त्यपरिभाषायास्तदपवादभूतादेःपरस्येति परिभाषायाश्च स्थानषष्ठीनिर्देश एव प्रवृत्तेरिति भावः। नन्वपादादाविति पर्युदासेन पादादिभिन्नस्य पादघटकस्यैव ग्रहणं स्यान्न तु वाक्यस्थस्यापीत्यत आह। अपादादिशब्देनेति। छन्दोहीनेति। जगत्यादिछन्दोहीनेत्यर्थः। अत्र मानमाह। ग्रामे कम्बल इति। सर्वस्य पदस्येति। सर्वस्य द्वे इत्यतस्सर्वस्येत्यस्यानुवृत्तिरिति भावः। यद्यप्यत्र सूत्रे सर्वस्येत्यर्थस्त्वनुदात्तं सर्वमपादादावित्यतस्सर्वपदानुवृत्त्या विभक्तिविपरिणामेन च सिद्ध इति भाष्यकैयटादयस्तथापि विभक्तिविपरिणामे गौरवादुक्तमेव युक्तमिति नागेशाशयः। अत एव सर्वग्रहणस्य स्पष्टार्थत्वप्रतिपादनपरपूर्वग्रन्थेन न विरोध इति बोध्यम्। उदाहरणे युष्मदस्मदोरिति सूत्रोपात्तक्रमत्यागे बीजमाह। विभक्तिक्रमलब्धेति। लोकप्रसिद्धविभक्तिक्रमलब्धेत्यर्थः। नन्वपादादावित्यस्य मूलोक्तं वेदैरशेषैरिति प्रत्युदाहरणं कथं घटत इत्याशयेन शङ्कते। नन्विति। अन्तादिवत्त्वाभावेनेति। इदं च मूलकृद्रीत्या। स्वसिद्धान्ते

**इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात्, स्मानित्यस्य चैकदेश-विकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वेन तत्प्राप्तिरित्याशयात् सन्धिश्चान्तरङ्गत्वादादेशात्पूर्वमेव। आदेशे सति 'नः कृष्णः सर्वदाऽवतु' इति पादादित्वापत्त्योपजीव्यविरोधान्नाऽऽदेश इत्यन्ये। उभयत आश्रयणेऽपि तस्य स्वीकार इति इणधातौ निरूपयिष्याम इति परे ॥**

---

तूभयत आश्रयणेऽन्तादिवत्त्वस्वीकारेऽपि पौर्वापर्यलक्षणस्य व्यपवर्गस्य तेनानेतुमशक्यतया पदात्परास्मच्छब्दत्वाभावेन प्रत्युदाहरणासङ्गरिति बोध्यम् । तदेतद्ध्वनयन्वक्ष्यति इणधातौ निरूपयिष्याम इति परे इति । **द्वितीयान्तास्मच्छब्दत्वेनेति** । न चास्मच्छब्दत्वस्य परिच्छिन्नपरिमाणवृत्तिधर्मत्वेन कथं तन्न्यायप्रवृत्तिरिति वाच्यम् । केवलास्मच्छब्दत्वस्य तादृशधर्मत्वेऽपि द्वितीयान्तास्मच्छब्दत्वस्य न इत्यादावपि सत्त्वेन तादृशधर्मत्वाभावात्। ननु सन्ध्युत्तरमपादादाविति निषेधप्रवृत्तावपि सन्धेः पूर्वं नवाक्षरत्वेन तदप्रवृत्तावादेशो दुर्वार इत्यत आह। **अन्तरङ्गत्वादिति** । पदद्वयसंबन्धिवर्णमात्रापेक्षत्वेन पूर्वरूपस्यान्तरङ्गत्वमित्याशयः। ननु यद्धि तु परमिति सूत्रस्थभाष्यकैयटाभ्यां पदद्वयनिमित्तककार्यात्प्रागन्तरङ्गोऽप्येकादेशो नेति कल्पनादेकादेशस्य पूर्वं प्रवृत्तिरयुक्तेत्यरुचेराह । **आदेशे सतीति** । एतेनोक्तभाष्यकैयटाभ्यां सन्धिकार्यस्य पूर्वप्रवृत्तिरयुक्तेति वदन्त आचार्याः परास्ताः। **उपजीव्यविरोधादिति** । सन्निपातपरिभाषयेति भावः । अत्रादेशे सत्यपादादिस्थत्वरूपविशेषणसन्निपातस्य विनाश इति बोध्यम्। एतेन नात्र सन्निपातपरिभाषाऽभिप्रेता, किं तु यतो नाव इत्यत्र ऋच्कतामुपजीव्य प्रवृत्तस्वरस्य ऋच्कताविघातकत्यृच्कतासंपादकता नेत्याकरोक्तदिशा न्यायान्तरमेतदित्याचार्योक्तमपास्तम् । पूर्वपक्षिण उक्तिं खण्डयति । **उभयत आश्रयणेऽपीति** । **परे इति** । सिद्धान्तिन इत्यर्थः। अस्य उभयत आश्रयणे नान्तादिवदिति प्राचीनोक्तार्थस्यायुक्तत्व-

ननूक्तरीत्या षष्ठ्याद्यन्तानामेवाऽऽदेशा भविष्यन्ति, किं स्थग्रहणेन?, अत आह—स्थेति। अद्यानौ स्थशब्द इति भावः। युष्मत्पुत्र इति। युवयोर्युष्माकं वा पुत्र इत्यर्थः। यद्यपि वृत्तौ संख्याविशेषानवगम इति भाष्ये स्पष्टं, तथापि संबोद्ध्यत्वेनैवानेकव्यक्त्यवगतिर्न तु द्वित्वादेर्भानं, नाप्येकत्वस्येति त्वमौ न

---

प्रतिपादन एव तात्पर्यं, न तूभयत आश्रयणेन पदात्परद्वितीयान्तासच्छब्दत्वलाभ इत्यत्रापीति न वक्ष्यमाणेण्धातुस्थशेखरग्रन्थविरोध इति बोध्यम्। एतेनेदमयुक्तम्। इण्धातौ वक्ष्यमाणरीत्योभयत आश्रयण इत्यस्याभावेऽप्यन्तादिवद्भावेन व्यपवर्गस्यालाभादेवैकादेशे कृते पदात्परासच्छब्दत्वाभावादित्याचार्योक्तमपास्तम्। परे इत्यस्य केचिदित्यर्थ इति श्रीधरोक्तं व्याख्यानमप्ययुक्तम्, इण्धातौ निरूपयिष्याम इति ग्रन्थस्वारस्येनास्य ग्रन्थस्य तत्र सिद्धान्तितार्थबोधकतयाऽरुचिग्रस्तमतान्तरपरतया योजनस्यानुचितत्वात्। उक्तरीत्येति। सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादित्यर्थः। एकवचनान्तेन विग्रहे प्रत्ययोत्तरपदयोश्चेति त्वादेशप्रसङ्गादाह। युवयोरिति। नन्वेवमपि विग्रहवाक्ये संख्याविशेषप्रतीत्या त्वमयोरप्राप्तावपि वृत्तावभेदैकत्वसंख्याया एव प्रतीतेर्भाष्याभिप्रेतत्वेन तत्र त्वमौ कुतो न भवत इत्याशङ्कायामाह। यद्यपीति। संख्याविशेषानवगम इति। एकार्थीभावमहिम्नेति भावः। उक्तभाष्यस्याशयमाह। तथापीति। संबोध्यत्वेनैवेति। सामान्यधर्मपुरस्कारेण विशेषधर्मपुरस्कारेण वा वृत्तौ संख्याविशेषो न प्रतीयते। किन्तु समस्यमानपदार्थतावच्छेदकरूपेणैकानेकव्यक्त्यवगतिरित्येव तद्भाष्याशयो न त्वेकत्वसंख्यैव भासत इति भावः। युष्मत्पुत्र इत्यादौ संबोध्यसंबन्धी पुत्र इत्येव बोधः। संबोध्यत्वेन रूपेणैकस्यानेकस्य वा भानमिति बोध्यम्। न तु द्वित्वादेरिति। सामान्यरूपेण विशेषरूपेण वा द्वित्वादेरभानमित्यर्थः। त्वमौ न कृताविति। प्रकृते

कृतौ। विग्रहे तु संख्याविशेषभानाद् द्विवचनादि भवत्येव। तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वम्। अत एव 'वध्वोरगारं वध्वगारं' इति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम्। वचनद्वयविषयसूत्रप्रत्युदाहरणलाभाय 'इति त्वत्पुत्रः' इति न प्रत्युदाहृतम्॥

समानवाक्ये इति। निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थके 'समानवाक्ये' इति प्रकृत्य विधेया इत्यर्थः। निघातो नामानुदात्तः। एकतिङिति बहुव्रीहिः, एकतिङन्तघटितमित्यर्थः। तेन 'पचति' इत्येतन्मात्रस्य न वाक्यत्वम्। इदं स्वशास्त्रकार्योपयोगि एकवाक्यत्वलक्षणम्। तेन 'पश्य मृगो धावति' इत्यादौ लौकिकैकवाक्यत्ववत्यपि नाव्याप्तिः। समर्थसूत्रे भाष्ये स्पष्टमेतत्। अत एव 'तिङ्ङतिङः' इत्यत्रैतदाश्रित्य 'अतिङ' इति प्रत्याख्यातं भाष्ये।

---

संबोध्यत्वेन रूपेणानेकव्यक्त्यवगतेर्न तयोः प्राप्तिरित्याशयः। ननूपसर्जनीभूतपदार्थे विशेषधर्मपुरस्कारेण संख्याविशेषस्याप्रतीतौ ततो द्विवचनाद्यभावेन स्थग्रहणाभावेऽपि न दोषोऽत आह। विग्रहे त्विति। संख्याविशेषभानादिति। तद्भानप्रयोजकैकार्थीभावस्याभावादिति भावः। द्विवचनाद्यन्तत्वमिति। एवं च स्थग्रहणाभावे आदेशो दुर्वार इति भावः। अत एवेति। विग्रहे संख्याविशेषभानादेवेत्यर्थः। प्रथमत्यागे बीजमाह। वचनद्वयेति। बहुव्रीहिरिति। एकं तिङ् यस्मिन्निति विग्रहः। पचतीत्येतन्मात्रस्येति। अस्य वाक्यत्वेऽनन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतापत्तिरिति भावः। नन्वेकपदस्य स्वसजातीयद्वितीयरहितार्थकत्वेन पश्य मृगो धावतीत्यादावेकवाक्यत्वं न स्यादत आह। स्वशास्त्रकार्योपयोगीति। लौकिकेति। लोकप्रसिद्धेत्यर्थः। उक्तैकवाक्यताया एव स्वशास्त्रकार्योपयोगित्वे मानमाह। अत एवेति। एतदिति। उक्तमेकवाक्यत्वमित्यर्थः। प्रत्याख्यातमिति। समानवाक्य

लौकिकवाक्यत्वञ्च—सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता, इत्यमरेणोक्तम्। वाशब्दश्चेदर्थे। कारकान्वितक्रिया चेद्, बोद्धव्येति शेषः। तेन निरर्थकशब्दसमुदायव्यावृत्तिः। सुप् च तिङन्तश्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तं, तेषामेकशेषः। तेन कारकान्वितक्रियाबोधकसुबन्तचय-तिङन्तचय—सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वलाभः। तत्र सुबन्तचयो—देवदत्तेन शयितव्यम्। द्वितीयं-पचति भवतीत्यादि। तृतीयं-चैत्रः पचतीत्यादि। एतत्समानार्थकमेव 'तिङ्ङतिङः' इति सूत्रे 'अतिङ' इति वदत्सूत्रकाराभिप्रेतं वाक्यलक्षणम् 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्रभाष्ये उक्तम्। तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते। तेन 'त्वया शयितव्यम्' इत्यादेः संग्रहः। सविशेषणमित्यस्य साक्षात् परम्परया वा यद्विशेषणं, तत्सहितेत्यर्थः। तेन 'नद्यास्तिष्ठति

---

एत्र निघातप्रवृत्त्या पचति भवतीत्यादीनामुक्तैकवाक्यत्वाभावादेव निघाताप्राप्तौ तद्ग्रर्थमिति तदाशयः। लौकिकस्यापि शास्त्रीयकार्योपयोगित्वे तस्य पचति भवतीत्यादावपि सत्त्वेन तत्र निघातवारणायातिङ्ग्रहणस्यावश्यकतया प्रत्याख्यानासङ्गतिरिति भावः। निरर्थकशब्दसमुदायेति। दशदाडिमानीत्यादिः। सुप्च तिङन्तं चेति। अत्र सुप्पदं सुबन्तपरं, सुप्तिङन्तयोश्चय इति समासः। द्वन्द्वान्ते श्रूयमाणमिति न्यायेन चयशब्दस्य प्रत्येकं संबन्धात्सुबन्तचयतिङन्तचयलाभः। सुप्तिङन्तचयलाभायाह। सुब्विशिष्टमिति। कारकान्वितक्रियेति। अस्य सविशेषणेत्यादिः। तेन नीलमुत्पलं पश्येत्यस्य सङ्ग्रहः। एवं च साक्षात्परंपरया वा कारकनिष्ठविषयतानिरूपिता, या क्रियानिष्ठा विषयता तच्छालिशाब्दबोधजनकतत्तत्समुदायत्वं यत्र तत्रैकवाक्यत्वमिति भावः। चैत्रः पचतीत्यादीति। यद्यप्येतदुत्तरमेतत्समानार्थकमेवेत्यादिरित्यलमित्यन्तो

कूले' इत्यादौ नद्यादेः समानवाक्यस्थत्वसिद्धिः । सविशेषणत्वेन विभागे साकाङ्क्षत्वं लब्धम् । एतदेवैकोद्देश्यकैकविधेयकत्वरूपैकार्थत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम् । 'अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति जैमिन्युक्तेः। अनेन च 'ब्रूहि ब्रूहि' इत्यस्यासङ्ग्रहो, विशेषणानुपादानेन सविशेषणत्वाभावात् । वाक्यत्वफलं त्वत्र प्रश्नोत्तरे 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यनेन वाक्यस्य टेः प्लुतसिद्धिः। अतः स्वशास्त्रपरिभाषितं लक्षणम् 'एकतिङ् वाक्यम्' इत्युक्तम् । अत एव एतदुदाहरणं 'ब्रूहि ब्रूहि' इत्येव भाष्ये दत्तम्। यत्तु अत्रोदाहरणे देवदत्तेति विशेषणं पूरणीयमिति, तन्न। पूर्वलक्षणेनैव सिद्धेः । द्विः प्रयोगस्य भाष्ये व्यर्थत्वापत्तेश्च । यद्यपि पदद्वित्वेऽवान्तरपदत्वमप्यस्ति, तथापि 'एकतिङ्' इत्यस्य एकानुपूर्वीकैकतिङन्तवदित्यर्थ इति न प्रकृते दोष इत्यलम् । ओदनं पचेत्यादि । समर्थपरिभाषा त्वत्र न प्रवर्त्तते । एकार्थीभावविषये एव तत्प्रवृत्तेरिति भावः । एते वांनावादय इति । इदञ्च 'सपूर्वाया' इत्यत्र भाष्ये स्पष्टम् ॥

---

ग्रन्थः बहुषु पुस्तकेषु न दृश्यते, बहुभिर्व्याकृतश्च । तथापि चिदस्थिमालाकृता व्याख्यातत्वेन सोऽपि पाठ आसीदित्यनुमीयते । नन्वस्य पदविधित्वेन समर्थपरिभाषोपस्थितौ निमित्तनिमित्तिनोरसामर्थ्यादेवात्र न दोषोऽत आह । समर्थपरिभाषेति । एकार्थीभावविषय एवेति । समासादिपञ्चवृत्तिष्वेवेत्यर्थः । तत्प्रवृत्तेरिति । समर्थपरिभाषाप्रवृत्तेरित्यर्थः । अस्य 'युष्मदस्मदादेशानां प्रवृत्त्यापत्तेरि'त्यर्थ इति नित्यानन्दः । तदयुक्तम् । तत्पदेन पूर्वोपात्तसमर्थपरिभाषाया एव ग्रहणस्य न्याय्यत्वात् । ननु पदोद्देश्यकविधित्वस्यैव तत्परिभाषोपस्थापकलिङ्गत्वेन तस्य समासादिविधिभिन्नत्रापि सत्त्वेनात्र तदनु-

न चवा। चादयः समुच्चयविकल्पाद्भुतखेदावधारणार्थाः, तेषामन्यतमेन योगे इत्यर्थः। ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह—युक्तग्रहणादिति। साक्षादिति। युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः। परम्परेति। स्वार्थाश्रयान्वय्यन्वयित्वादिरूपेत्यर्थः। चेतसेति। 'अनालोचनार्थैः' इत्येव पर्युदासेन सिद्धे 'पश्यार्थैः' इत्येतदिन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः। परम्परेति। स्वान्वितान्वयित्वादिरूपेत्यर्थः। तदुक्तं भाष्ये 'पश्यार्थैश्च प्रतिषेधः समानवाक्ये इति प्रकृत्य वक्तव्यः,। इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं, तत्र प्रतिषेधः स्यात्। ग्रामस्त्वां संप्रेक्ष्य गत इति। इह न स्यात्—ग्रामस्तव स्वं संप्रेक्ष्य गतः' इति। समानवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति कैयटः। एवञ्च 'न चवा' इति सूत्रे युक्तग्रहणं स्पष्टार्थमेव। तदभावेऽपि प्रकृतसूत्र-

---

पस्थितौ किं बीजमिति चेन्न। साक्षात्तत्तद्विध्युद्देश्ययोरुद्देश्यविधेययोर्वा सामर्थ्यस्य तया बोधनेऽप्यन्येन सामर्थ्यस्य तया बोधने मानाभाव इत्याशयात्। स्वार्थाश्रयेति। हरो हरिश्च मे स्वामीत्यत्र स्वं चशब्दः, तदर्थाश्रयो हरिः, तदन्वयी स्वामी, तदन्वयित्वमस्मच्छब्दार्थस्येति बोध्यम्। नन्वनालोचन इति पर्युदासेन बहिरिन्द्रियजन्यज्ञानार्थकधातुयोग एवास्य प्रवृत्तिः स्यादिति चेतसेत्याद्युदाहरणमसङ्गतमत आह। अनालोचनार्थैरित्येवेति। इन्द्रियजन्येति। इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावदित्यर्थः। इन्द्रियांशे बहिष्ट्वं पर्युदासेन न विवक्षितमिति भावः। स्वान्वितेति। भक्तस्तव रूपं ध्यायतीत्यत्र स्वं ध्यानं, तदन्वितो रूपपदार्थः। तदन्वयित्वं युष्मच्छब्दार्थस्य, परम्परासंबन्धेऽप्यस्य प्रवृत्तौ मानमाह। तदुक्तमिति। प्रकृतसूत्रस्येवेति।

स्येव तस्यापि साक्षात्सम्बन्धे एव प्रवृत्तिः स्यात् । समानवाक्ये इत्येतत्सम्बन्धात्तु अस्य युक्तयुक्तेऽपि प्रवृत्तिरित्यन्यत् । अत एव 'देवदत्तस्य पुत्राद् यज्ञदत्तः पृथक्' इत्यादौ देवदत्तशब्दान्न पञ्च-मीत्याहुः । भक्तस्तवेति । इह तवेत्यस्य रूपेण सम्बन्धो, न तु साक्षाद्ध्यायतिनेति भावः ॥

सपूर्वा । सहशब्दो विद्यमानवाची । अवधेरपि सम्बन्धित्वेन विवक्षायां षष्ठ्यर्थेऽन्यपदार्थे 'अनेकम्' इति समासो, 'वोपसर्जनस्य' इति सः, तदाह—विद्यमानपूर्वादिति । प्रत्ययग्रहणे तदन्त-ग्रहणमित्याह—प्रथमान्तादिति । ननु 'एते वांनावादयः' इत्यनेनैव विकल्पसिद्धेः किमेतेनेत्यत आह—अन्वादेशेऽपीति । अत्र नेति निवृत्तं तदाह–आदेशा वेति । तेनेति । भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थ-त्वान्न यच्छब्दोपादानापेक्षेति भावः । स्पष्टञ्चेदं सप्तमोल्लासे काव्य-प्रकाशादौ । अत्र 'तेन हरिस्त्वाम्' इत्येकमुदाहरणम् । 'स माम्' इत्यपरम् । त्रायते इत्यस्य च मध्यमणिन्यायेन तन्त्रेणोभयत्रान्वयः । तेन स इत्यस्यापि समानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोद्धव्यम् ॥

साऽमन्त्रितम् । 'सम्बोधने च' इत्यतः सम्बोधने इति वर्त्तते । 'सा' इत्यनेन प्रथमा परामृश्यते । आमन्त्रणमामन्त्रितमिति महा-सञ्ज्ञाबलात्तदन्तविधिरित्याह–तदन्तमिति । अत एव हे हे भो इत्या-दीनामपि संज्ञासिद्धिः । अन्यथा 'अन्तरङ्गानपीति न्यायेन पूर्वं

---

समानवाक्य इत्यस्यासंबन्धे भाष्योक्तदिशा षष्ठ्यार्थैरित्यस्यैवेत्यर्थः । अत एवेति । युक्तग्रहणाभावेऽपि तत्तच्छब्दयोगे विहितकार्याणां साक्षात्संबन्ध एव प्रवृत्तेरेवेत्यर्थः । तेनेति । त्रायत इत्यस्य मध्यमणिन्यायेनोभयत्रान्वयस्वीकारे-णेत्यर्थः । बलात्तदन्तविधिरिति । अन्यथा संज्ञाविधाविति निषेधान्न स्यादिति भावः । अत एव=तदन्तविधिस्वीकारादेव । अन्तरङ्गानपीतिन्यायेनेति ।

**विभक्तिलुकि प्रथमाया अभावेन 'नखनिर्भिन्नः' इत्यत्रैसभाववदत्र संज्ञा न स्यात्। यद्यप्येषां सम्बोधने शक्तेः प्रातिपदिकार्थसूत्रेणैव प्रथमा, तथापि सम्बोधनविषयप्रथमासत्त्वान्न दोषः। एतदर्थमेव 'प्रथमा' इत्यनुवर्तमाने सेति पदम्। अन्ये तु 'सम्बोधने च' इत्यस्य तत्र वर्तमानादित्यर्थे अन्यत्रेवात्रापि 'सम्बोधने च' इत्येव प्रथमा। प्रातिपदिकोक्तत्वस्याव्यावर्त्तकत्वेन विभक्त्यप्रतिबन्ध-**

---

अत्र संज्ञाया अन्तरङ्गत्वं निमित्तान्तरानपेक्षत्वेन, लुकस्त्वव्ययत्वादिरूपनिमित्तापेक्षत्वेन बहिरङ्गत्वमिति भावः। मिश्रास्तु नात्रान्तरङ्गन्यायसञ्चार उचितः। अन्तरङ्गनिमित्तविनाशकलुक एवानेन प्राबल्यबोधनात्। प्रकृते तु निघातविधायकामन्त्रितस्येति ज्ञापकेन तदन्तविधिसम्भवेन लुक्यपि प्रत्ययलक्षणेनामन्त्रितसंज्ञायाः प्राप्तिरस्त्येव। तद्धि पदात्परस्यामन्त्रितस्य निघातविधायकम्, यदि विभक्तिमात्रस्य संज्ञा स्यात्तदा पदात्परस्य संज्ञायोगस्याभावेन तद्वैयर्थ्यं स्पष्टमेव। परमगोदुहामित्यादौ त्वनुदात्तौ सुप्पितावित्येव सिद्ध इति वदन्ति। तदयुक्तम्। ज्ञापकेन महासंज्ञाबलेन वात्र तदन्तविधिस्वीकारे फलप्रदर्शनस्यैवैतद्ग्रन्थाभिप्रेतत्वेनास्यामवस्थायां तदन्तविधेरभावेन लुकोऽन्तरङ्गनिमित्तविनाशकत्वादन्तरङ्गानपीति न्यायप्रवृत्तेस्सुकरत्वात्। ननु तदन्तविधिस्वीकारेऽपि संबोधनप्रथमान्तत्वाभावात्कथमेषां संज्ञेत्याशयेनाह। **यद्यपीति। प्रातिपदिकार्थसूत्रेणैवेति।** कृष्णः, श्रीः, ज्ञानमित्यादौ लिङ्गस्येव प्रकृते संबोधनस्यापि नियतोपस्थितिकत्वेन प्रातिपदिकार्थत्वादिति भावः। **न दोष इति।** न तदन्तविध्यनापत्तिरित्यर्थः। **एतदर्थमेवेति।** संबोधनविषयप्रथमामात्रपरामर्शार्थमेवेत्यर्थः। स्वसिद्धान्तमाह। **अन्ये त्विति। अन्यत्र**=राम इत्यादौ। उक्तार्थानामितिन्यायस्य नात्र विषय इत्याह। **प्रातिपदिकेति।** ननु प्रातिपदिकार्थेति सूत्रेण प्रथमायां कर्तव्यायां प्रातिपदिकोक्तत्वस्याव्या-

कत्वात् । 'तिङ्कृत्तद्धितसमासैः' इति परिगणनाच्च । सेति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः ॥

अविद्यमानवदिति । 'गोतो णित्' इतिवत्सिद्धे वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थम् । तेन 'आम्भो देवदत्त' इत्यादौ 'आम एकान्तरमामन्त्रितमनन्तिके' इति एकान्तरत्वप्रयुक्तामन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये । न चात्र 'नामन्त्रिते समानाधिकरणे' इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम् । अस्य सम्बोधनमात्रद्योतकत्वेन विशेष्यवचनत्वाभावात् । देवदत्तस्यैव विशेष्यत्वाच्च । इहेति । 'अग्ने तव' 'देवास्मान्' इत्य-

---

वर्तकत्वेऽपि संबोधने चेत्येतत्प्रवृत्तौ व्यावर्तकत्वं स्यादेवेत्यत आह । परिगणनाच्चेति । नन्वेवं सेति व्यर्थमत आह । सेति त्विति । वत्करणमिति । न च तदभावे पूर्वस्यामन्त्रितस्य निवृत्तिरेव स्यादिति वाच्यम् । तथासति लोप इत्येव वक्तव्ये गुरूच्चारणस्य व्यर्थत्वात् । न च लोप इत्युक्तावलोन्त्यपरिभाषयाऽन्त्यस्यैव निवृत्तिः स्यादिति सर्वस्यापि निवृत्तयेऽविद्यमानग्रहणं स्यादिति वाच्यम् । लोपग्रहणेऽप्यलसमुदायोत्तरस्थानषष्ठ्यभावेनालोऽन्त्यपरिभाषाया अप्रवृत्तौ तत्फलस्य सिद्धत्वात् । लोपपदे कर्मसाधनत्वाङ्गीकारेणामन्त्रितं पूर्वमित्यनयोः प्रथमान्तताया एव युक्तत्वात् । न चामन्त्रितस्य परप्रयोग एव, न तु पूर्वं प्रयोग इत्यर्थः कुतो नेति वाच्यम् । तथासति राजदन्तादिषु परमामन्त्रितं नेत्येव वक्तव्येऽस्य न्यासस्य व्यर्थत्वात् । न च वाक्येऽपि पूर्वप्रयोगाभावायैवं न्यास इति वाच्यम् । एवमप्यामन्त्रितं परमित्येव सिद्धेऽविद्यमानग्रहणेनातिदेशतायास्सुलभत्वात् । स्वाश्रयस्यापि लाभार्थमिति । व्याख्यानाच्चेदं क्वाचित्कमिति नातिप्रसङ्ग इत्युद्योते स्पष्टम् । तेनेति । स्वाश्रयस्यापि लाभेनेत्यर्थः । विशेष्येति । द्योत्यार्थस्य विशेषणत्वेनेति भावः । निपातानां वाचकतापक्षेऽप्याह । देव-

आदेशाः, 'अग्ने नय' इत्यत्र 'तिङ्ङतिङः' इति निघातः, 'अग्न इन्द्र' इत्यत्र 'आमन्त्रितस्य च' इति निघात इति विवेकः। अत्र पूर्वमित्यनेन परस्याऽऽक्षेपात् पूर्वं परस्य कार्येऽविद्यमानवदित्यर्थः। तेन 'देवास्मान्' इत्यत्र देवेत्यस्याऽऽमन्त्रिताद्युदात्तत्वं भवत्येव। पूर्वं किम्। पाहि देव। अत्राऽऽमन्त्रितनिघातो भवत्येव। प्राचीनमिति। एवमेव 'लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि' इत्यादिसिद्धिः। 'नृसिंहाश्रम ते ख्यातिः' इत्यादौ—'गेये केन विनीतौ वाम्' इत्यादाविव विभक्त्यन्तप्रतिरूपकनिपाताङ्गीकारेणादोषः। अयं समाधिः प्रकृतेऽपि। 'नः' इत्यस्य विभक्तिप्रतिरूपकत्वात्। अन्यार्थन्तु मूलोक्तकल्पनावश्यकत्वम्, तदाह—एवमिति। सर्वेषां निघात इति। अस्य प्राप्त इति शेषः। तत्र यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति। शुतुद्रीत्यस्य तु न, पादादिस्थत्वात्। एतेन 'आदिभ्यः' 'सर्वेषाम्' इति बहुवचनमसङ्गतमित्यपास्तम्॥

अग्ने तेजस्विन्निति। अनुदात्तं सर्वमित्यनयोः संबन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणापादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्ति-

---

दत्तस्यैवेति। तस्य संज्ञाप्रवृत्तिनिमित्तकत्वादिति भावः। लक्ष्मीपत इत्यादि। अस्य विद्याबलं दैवबलं तदेवेति पूर्वार्धः। ननु नृसिंहाश्रम ते ख्यातिरित्यादौ प्राचीनस्य कस्याप्यभावेनोक्तप्रकारासंभवात्कथमादेशोऽत आह। नृसिंहेति। इत्यादाविवेति। तत्र वामित्यस्य प्रथमान्तत्वेनादेशताया वक्तुमशक्यत्वादव्ययत्वमेव स्वीकार्यमिति भावः। प्रकृतेऽपीति। सर्वदा रक्ष देव न इत्यत्रापीत्यर्थः विभक्तीति। विभक्त्यन्तेत्यर्थः। अन्यार्थमिति। स्वरार्थमित्यर्थः। एतेन=तस्योक्ताशयकत्वेन। नन्वनुदात्तं सर्वमित्यादिपदत्रयस्यापादपरिसमाप्तेरधिकारत्वाङ्गीकारेणामन्त्रितमित्यत्रापादादावित्यस्य संबन्धे अग्ने तेजस्विन्नित्यत्राग्ने इत्यस्य

**रिति भावः। आमन्त्रिते किम्। देव करोषि। सामान्यवचनं किम्। 'अघ्न्ये देवि सरस्वति इडे काव्ये' इत्यादौ पर्यायेषु परेषु निषेधो मा भूत्। सामानाधिकरण्यञ्चैकार्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ॥**

---

पादादिस्थत्वेनाविद्यमानत्वाप्राप्त्या निषेधोदाहरणत्वमसङ्गतमित्याशङ्क्य तदाशयमाह। **इति भाव इति। देव करोषीति।** अत्र देवेत्यस्याविद्यमानवद्भावनिषेधे करोषीत्यस्य निघातः स्यादिति भावः। न च भावप्रधानमाख्यातमिति सिद्धान्तादत्र करोषीत्यस्य क्रियाविशेष्यकबोधजनकतया न देवेत्यनेन सामानाधिकरण्यमिति वाच्यम्। पश्चकं धात्वर्थ इति सिद्धान्ते कारकस्यापि धात्वर्थत्वेन समनाधिकरणार्थबोधकपदपरत्वमस्तीत्याशयात्। यदि तु प्राधान्येन तद्बोधकत्व एव सामानाधिकरण्यमित्युच्यते, तदा क्रियाक्रियावतोरभेद इत्यर्थस्यान्यत्र ग्रन्थकृता प्रतिपादितत्वेन तद्रीत्या सामानाधिकरण्यं सुवचमिति बोध्यम्। न च तद्रीत्या युष्मदर्थस्य कर्तुः क्रियया सममभेदलाभेन तयोस्सामानाधिकरण्यसिद्धावपि संबुध्यन्तार्थस्य कथं क्रियया सामानाधिकरण्यमिति वाच्यम्। तस्यापि कर्तृत्वस्यान्यत्र ग्रन्थकृता सिद्धान्तितत्वात्। अत एव तिङ्समानाधिकरणे प्रथमेति वार्तिकमते ततः प्रथमासिद्धिः। तन्न्यासे हि प्रातिपदिकार्थेति सूत्रवदस्याप्यकरणमेव। अत एव कर्मादिविशिष्टे प्रथमावारणाय कृतस्य मात्रग्रहणस्य संबोधने चेति ज्ञापकेन प्रत्याख्यानं संगच्छते। अस्य सूत्रस्य तिङ्सामानाधिकरण्याभावेऽपि प्रवृत्तौ तिङ्सामानाधिकरण्यमात्रे प्रवृत्तप्रातिपदिकार्थ इत्यनेनागतार्थत्वाज्ज्ञापकत्वोक्तिरसङ्गतैव स्यादित्यादि स्पष्टमन्यत्र। ननु भिन्नप्रवृत्तिनिमित्ताभ्यां शब्दाभ्यामेकार्थस्य प्रतिपादनं सामानाधिकरण्यमिति वृद्धिसूत्रस्थकैयटोक्तदिशाऽत्र सामानाधिकरण्याभावादेवादोषोऽत आह। **सामानाधिकरण्यं चेति। न तु प्रवृत्तिनिमित्तेति।** अत एव प्रकृतसूत्रे भाष्ये

**सुपादिति । शोभनौ पादावस्येति बहुव्रीहिः । 'संख्यासुपूर्वस्य' इत्यकारलोपः समासान्तः ॥**

**अश्वः सुपीति । निपातनसाहचर्यादिति भावः ।** .... ....

---

अघ्न्ये देवि सरस्वतीत्यादौ समानाधिकरणपदपरत्वप्रयुक्तमविद्यमानवत्त्वनिषेधमाशङ्क्य सामान्यविशेषवचनत्वाभावमाश्रित्य समाहितम् । अन्यथा प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्याभावात्तदसङ्गतिः स्पष्टैव । न च कोशे शब्दानां शब्दपरत्वाङ्गीकारे प्रवृत्तिनिमित्तभेदोऽस्तीति वाच्यम् । तथासत्येकार्थबोधकत्वाभावेन सामानाधिकरण्यस्य सुतरां दुरुपपादत्वात् । उक्तभाष्यप्रामाण्यादेव कोशे शब्दानामर्थपरताया ग्रन्थकृता सिद्धान्तितत्वात् । किं च सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदगर्भत्वे युगपदधिकरणवचनतापक्षे पट्वीमृद्व्यावित्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरचार्थे द्वन्द्व इति सूत्रस्थभाष्यविरोधः । तत्पक्षे तयोः प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यस्यासत्त्वादिति बोध्यम् । यत्तु घटो घट इत्याद्यर्थे प्रवृत्तिनिमित्तभेदगर्भस्य विवक्षणेऽपि घटः कलश इत्यादौ घटत्वकलशत्वरूपप्रवृत्तिनिमित्तभेदमादाय शाब्दबोधवदत्राप्यघ्न्यादिपदानामर्थपरत्वस्य पूर्वमुक्तत्वादर्थैक्येऽपि पूर्ववद्धर्मभेदोऽस्त्येवेति नतु ग्रन्थश्चिन्त्य एवेति भट्टाः । तन्न । पर्यायपदानां प्रवृत्तिनिमित्तभेदस्य कैरप्यनङ्गीकृतत्वात् । अत एव शक्तिग्राहकवाक्यातिरिक्तस्य घटः कलश इति वाक्यस्य प्रयोगो न । तत्र प्रवृत्तिनिमित्तभेदाङ्गीकारे विधेये उद्देश्यतावच्छेदकभेदसत्त्वेन घटो घट इत्यस्येवाप्रयोगो न सिद्ध्येदिति बोध्यम् ॥

नन्वत्र सूत्रे सुपीत्यस्याननुवृत्त्या सुपीत्यधिकमत आह । **निपातनसाहचर्यादिति** । उष्णिकशब्दसाहचर्यादित्यर्थः । निपातनैस्साहचर्यादिति बहुवचनान्तपाठस्तु काशिकास्थपाठवासनयेति बोध्यम् । न च परसाहचर्येण निरुपपदादेव क्विनित्यर्थः कुतो नेति वाच्यम् । पूर्वसाहचर्यस्यान्तरङ्गत्वेन

अनिदिताम् । इत्संज्ञेकारवद्भिन्नानामित्यर्थः । अङ्गस्येत्यधिकारः । अञ्चतेर्भस्येति । 'अल्लोपोऽनः' इतिवदस्यापि प्रत्यञ्चमञ्चति तेन प्रत्यञ्चेत्यादौ पूर्वाकारे न प्रवृत्तिः । अच इत्यञ्चतेर्लुप्तनस्य ग्रहणम् । व्याख्यानात् । भस्य किम् । प्रत्यञ्चौ । लुप्तनस्येति किम् । पूजायां प्रत्यञ्चा । चौ । नेदं वर्गग्रहणं व्याख्यानात्, तदाह—लुप्तेत्यादि । अण इति । कर्तृच इत्यादीनामनभिधानमिति भावः । .... ....

---

तस्यैव ग्रहीतुमुचितत्वात् । नन्वनिदितामित्यत्र यदि नञ्समासं कृत्वा बहुव्रीहिस्तदा नन्द्यादित्यत्र नलोपापत्तिः । इकारभिन्नस्य टोरपीत्संज्ञासत्त्वादित्यत आह । इत्संज्ञकेकारवदिति । अनिदितामित्यत्र बहुव्रीहिगर्भो नञ्समास इति भावः । एतच्च इर इत्संज्ञा वाच्येति वार्तिकारम्भपक्षे । इकाररेफयोः प्रत्येकमित्त्वमाश्रित्य तत्प्रत्याख्याने तु कर्मधारयगर्भनञ्समासाश्रयणेनेत्संज्ञकेकारान्तभिन्नानामङ्गानामित्यर्थ इत्युबुन्दिर्धातौ निरूपयिष्यते । अत्र पक्षेऽमंस्तेत्यादौ नलोपवारणं तु सजादेशपक्ष इव हनस्सिजित्यनेन किर्त्त्वविधानाज्ज्ञापकाद्विकरणाघटितस्यैवाङ्गस्यात्र सूत्रे ग्रहणाद्बोध्यम् । अन्यथोपधालोपेनैव सिद्धावनुनासिकलोपार्थं कित्त्वविधानं व्यर्थमेवेत्यवधेयम् । इति वदिति । अङ्गभसंज्ञाक्षिप्तप्रत्ययेनाञ्चतेर्विशेषणादनन्त्यविकारपरिभाषया वेति भावः । व्याख्यानादिति । आतो धातोरिति लोपविधानसामर्थ्यान्न प्रत्याहारस्य, मिदचोऽन्त्यादिति निर्देशान्न तादृशशब्दसामान्यस्य वा ग्रहणम् । किन्तु द्युप्रागपागुदक्प्रतीचो यदिति निर्देशादञ्चतेरेव ग्रहणमित्येवंरूपादित्यर्थः । प्रत्यञ्चाविति । प्रथमं नलोपे ततो नुमि रूपम् । तथा च तन्मध्यपतितन्यायेन नुम्विशिष्टस्याप्यञ्चतित्वेन ग्रहणाद्दोष इति भावः । व्याख्यानादिति । अजादेर्द्वितीयस्येति निर्देशरूपादित्यर्थः । नन्वत्राण इत्यस्य संबन्धे कर्तृच इत्यादौ दीर्घो न स्यादत आह । कर्तृच इत्यादीनामिति । अनभिधान-

131

एवञ्चाण्ग्रहणमुत्तरत्र ‘सम्प्रसारणस्य’ इत्यत्र ‘तृतीयः’ इत्येतद्वृथावृत्त्यर्थमावश्यकमिहापि संबद्ध्यते, न त्वत्रास्य व्यावर्त्यमस्ति इत्याकरे स्पष्टम्। अकृतेति। तत्परिभाषाऽभावे तु ‘चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः’ इति वचनमेव भाष्योक्तं शरणम् ॥

विष्वग्देव ॥ चात् ‘आ सर्वनाम्नः’ इत्यतः सर्वनाम्न इत्याकृष्यते। सामर्थ्यादुपसर्जने प्रवृत्तिः। अप्रत्यये इति पाठेऽविद्यमानः प्रत्ययः, क्विबादिरित्यर्थः। वप्रत्यये इति पाठेऽप्यकारस्याविवक्षितत्वात्स एवार्थः। अद्र्यादेशसध्र्यादेशावन्तोदात्तौ निपातनादिति स्पष्टं भाष्ये। अदसो। ‘असेः’ इतीकार उच्चारणार्थः। अदस इत्यमिति। हल इति सूत्रे भाष्ये चावित्यत्राण्ग्रहणानुवृत्तौ कर्तृच इत्यादौ दीर्घत्वं न प्राप्नोतीत्याशङ्क्य यथालक्षणमप्रयुक्त इत्युक्तेरेषामनभिधानमिति भावः। एवं च=एषामनभिधाने च। प्रत्यङ्गस्येति। अन्तरङ्गस्येत्यर्थः ॥

आकृष्यत इति। आ सर्वनाम्न इत्यत इति भावः। अत एवादसोऽद्रेरित्यादि वार्तिकं सङ्गच्छते। नन्वेवं कथमस्योपसर्जने प्रवृत्तिरत आह। सामर्थ्यादिति। इतरविशेषणत्वेनार्थोपस्थापकत्वरूपोपसर्जनत्वस्य प्रकृतसूत्रविषये सर्वत्रैव सत्त्वादुपसर्जनेऽस्याप्रवृत्तौ सर्वनाम्न इति पदानुकर्षकचकारवैयर्थ्यापत्तिरिति भावः। यत्तु परे तु स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावात्तस्योपसर्जनत्वाभावेन सामर्थ्यवर्णनमसङ्गतमित्याहुरित्यौत्तराहाः। तन्न। उपसर्जनपदस्य लोकप्रसिद्धमर्थं विहायान्यादृशरीत्याऽर्थवर्णनस्यायुक्तत्वात्। स एवार्थ इति। वकाररूपे प्रत्यय इत्यर्थे क्विबादिरित्येवार्थः पर्यवस्यतीति भावः। निपातनादिति। न चानयोरिकारस्य यणाऽपहारेण स्वरस्याश्रवणान्निपातनं विफलमिति वाच्यम्। अञ्चत्यकारस्योदात्तस्वरितयोरिति स्वरितसिद्ध्यै तदावश्यकत्वात्। अन्यथा कृत्स्वरेणोदात्त एव

वयवषष्ठी। सग्रहणं तत्स्थनिकोकाररेफयोरप्युपलक्षणम्। तेन 'अदस्यति, अदोऽत्र, अद इत्यादौ न दोषः। दादिति किम्। अमुयोरित्यत्रान्त्यस्य मा भूदिति। समाहारद्वन्द्व इति। इदमर्वाचामनुरोधेन। वस्तुतोऽयुक्तमेतत्। उ स् ऊ स् इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन नित्यत्वाद्, अपरानिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घे उ इति रूपासिद्धेः।

---

श्रूयेतेति भावः। उपलक्षणमिति। अत्र मानमदोऽनुपदेश इति निर्देशः। अद इति। विसर्गस्यासिद्धत्वाद्रेफान्तमेतादिति भावः। इदमिति। समाहारद्वन्द्वाश्रयणमित्यर्थः। नित्यत्वादिति। सवर्णदीर्घोत्तरमपि दीर्घोकाररूपव्यक्तावेव ह्रस्वप्रवृत्त्या तस्य नित्यत्वमित्याशयः। यदि त्वेकादेशनिष्पन्नस्य शब्दान्तरत्वेनास्याप्युक्तरीत्या न नित्यत्वमित्युच्यते, तदाप्याह। अन्तरङ्गत्वाच्चेति। तस्मिन्निति परिभाषानपेक्षत्वेनापरनिमित्तकस्यान्तरङ्गत्वमित्याशयः। अत एव शदेश्शित इति सूत्रे भाष्ये 'उपसर्गपूर्वनियमेऽड्व्यवाय उपसंख्यानमि'ति वार्तिकमुपक्रम्य न्यविशतेत्यत्राडपेक्षया लादेशस्यान्तरङ्गत्वमभिहितं सिद्धान्तिना। न च लमात्रापेक्षत्वेन लादेशस्यान्तरङ्गत्वं, लकारविशेषापेक्षत्वेन चाटो बहिरङ्गत्वमिति तदाशयो वक्तुं युक्तः। तादृशान्तरङ्गबहिरङ्गभावस्यान्यत्र दूषितत्वात्। किंच चुञ्चुप्चणपोश्चकारस्येत्संज्ञापरित्राणाय तयोरुपदेशे यादित्वप्रतिपादनपरमित्संज्ञाप्रघट्टकस्थं भाष्यमप्यत एव सङ्गच्छते। अन्यथेत्संज्ञापेक्षया यलोपस्य बहिरङ्गताया वक्तुमशक्यत्वेनासिद्धत्वाभावेन यादित्वाङ्गीकारेऽपीत्संज्ञा दुर्वारैव स्यात्। अदसोऽसेर्दादु दो म इत्यत्र दीर्घस्यापि ग्रहणाय दिव उदित्यादिज्ञापकेन भाव्यमानोऽप्युकारः सवर्णान्गृह्णातीति परिभाषाश्रयणपरतित्स्वरितमितिसूत्रस्थभाष्येणाप्यस्यान्तरङ्गत्वं ध्वनितम्। अन्यथा ह्रस्वदीर्घयोस्समाहारद्वन्द्वेनैव

अत एव 'ऊकालः' इत्यत्र उकाल इति न कृतम्। तस्माद् 'दिव उत्' 'ऋत उत्' इति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वा

---

त्सिद्धौ तदसङ्गतिः स्पष्टैव। न चापरनिमित्तकस्यान्तरङ्गत्वे नामीति सूत्रस्थभाष्यविरोधः। तत्र ह्यामीतिन्यासे रामाणामित्यादौ नुडपेक्षया नित्यत्वाद्दीर्घेऽपि वचनसामर्थ्याद्भूतपूर्वह्रस्वान्तत्वमाश्रित्य नुडित्युक्तम्। अपरनिमित्तकस्यान्तरङ्गत्वे तु दीर्घापेक्षयान्तरङ्गत्वान्नुटः प्राप्त्या भूतपूर्वगत्याश्रयणं विफलमेव स्यात्। एवमृतो भारद्वाजस्येति सूत्रस्थभाष्यविरोधोऽपि। तत्र हि जहर्थेत्यत्र गुणे कृतेऽजन्तत्वाभावेऽपीण्णिषेधसिद्धयेऽचस्तास्वदित्यत्रोपदेशग्रहणसंबन्ध उक्तः। उक्तविधमन्तरङ्गत्वं यद्यभिमतं स्यात्तदा गुणात्पूर्वमिण्णिषेधप्रवृत्त्या इष्टसिद्धावुपदेशग्रहणानुवृत्तिर्व्यर्थैव स्यादिति वाच्यम्। अपूर्वनिमित्तकत्वे सत्यपरनिमित्तकस्यैवान्तरङ्गत्वाभ्युपगमेन तद्विरोधाभावात्। अपरनिमित्तकस्यान्तरङ्गत्वे तस्मिन्निति परिभाषानपेक्षत्वमेव हि मूलम्। तत्र पूर्वस्य निमित्तत्वे तस्य तस्मादिति परिभाषापेक्षत्वेनान्यस्य तस्मिन्नितिपरिभाषापेक्षत्वेन चोभयोः समत्वेनान्तरङ्गबहिरङ्गभावो वक्तुमशक्य इति बोध्यम्। नचैवं गौधेरः पचेरन्नित्यत्रैयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वप्रतिपादनपरपरिभाषेन्दुशेखरग्रन्थविरोधः। तत्रेयादेशस्य पूर्वनिमित्तकत्वादिति वाच्यम्। एयादेशस्यैव तादृशान्तरङ्गत्वप्रतिपादने तत्तात्पर्यात्। अतिप्रसङ्गस्तु सामान्यतः परिभाषानित्यत्वेन परिहरणीय इति बोध्यम्। न्यायसिद्धेऽर्थे मानमप्याह। अत एवेति। अपरनिमित्तकस्यान्तरङ्गत्वादेवेत्यर्थः। न कृतमिति। अन्यथा लाघवात्समाहारद्वन्द्वेन तथैव निर्दिशेदिति भावः। क्वचिल्लाघवानादरेऽपि सर्वत्र तदनादरे मानाभावात्। स्वसिद्धान्तेऽत्र दीर्घग्रहणोपायमाह। भाव्यमानोकारस्येति। नच फलाभावादेषाऽनावश्यकीति वाच्यम्। अत्र दीर्घविधानलाभस्यैवैतत्फलत्वेन भाष्यकृता प्रतिपादितत्वात्। धर्मिग्राहकसाजात्यादियमादेशमात्रविषयिणी। तेन सनाशंसभिक्ष

त्सिद्धमिति बोद्धव्यम् । 'ष्यङः सम्प्रसारणम्' इति सूत्रे भाष्ये 'अनन्त्यविकारेऽन्त्यसदेशस्य इति परिभाषा पठिता । अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत् प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । अनन्त्यविकार इति च लिङ्गम् । तामर्थतः पठति— अन्त्यबाधे इति । अन्त्यस्य बाधे—कार्याप्राप्तौ, अर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः । अन्यथा 'णो नः' इत्यादि 'नेता' इत्यादावेव स्यात्, न तु 'नमति' इत्यादाविति भाष्ये स्पष्टम् । 'अल्लोपोऽनः' 'अचः' 'सान्त' इत्यादावनेकाक्लिष्टकल्पनापेक्षयेयं न्याय्या । .... ....

---

उरित्यादौ न दोष इत्यादि परिभाषेन्दुटिप्पणीतोऽवसेयम् । एतेनात्र प्राचीनमतमेव ज्यायः, परनिमित्तापेक्षस्य बहिरङ्गत्वे प्रमाणाभावः । फलाभावश्च । ऊकाल इति निर्देशस्तु इतरेतरद्वन्द्वेनाप्युपपादयितुं शक्यः । भाव्यमानोऽप्युकार इति परिभाषा तु नास्त्येव, फलाभावादित्यादि वदन्त औत्तराहा अन्ये च परास्ताः। मूलोक्तानुपूर्वीरूपेण भाष्येऽस्यानुपलम्भादाह । ष्यङस्संप्रसारणमिति । परिभाषार्थं विवृणोति । अन्त्यसदेशेत्यादिना । इत्यादीति । अत्रादिना धात्वादेरित्यस्य, उत्तरत्र सोता सिञ्चतीत्यादीनां च सङ्ग्रहः । अस्याः परिभाषाया आवश्यकतां दर्शयति। अल्लोपोऽन इत्यादिना । अनेकक्लिष्टकल्पनेति । अनस्तक्ष्ण इत्यादावाद्यानोऽकारस्य लोपवारणाय संज्ञासु सर्वथा दुरुपपादस्य पदैकवाक्यत्वस्य स्वीकारः, तत्राप्युत्थिताकाङ्क्षानुरोधेन प्रत्ययस्याङ्गविशेषणताया औचित्येऽप्यनादिविशेषणत्वेनान्वय इत्येवंरूपेत्यर्थः । ननु निरुक्तक्लिष्टकल्पनां विनाप्यनस्तक्ष्ण इत्यादौ निर्दिश्यमानपरिभाषया आद्याकारस्य लोपवारणसंभवात्केयमावश्यकी परिभाषा । न चाद्यानोऽपि निर्दिश्यमानत्वमस्त्येवेति वाच्यम् । जराजरसावित्यादावाद्यजराशब्दस्येवात्राप्याद्यस्यानो निर्दिश्यमानत्वाभावस्य वक्तुं शक्यत्वात् । यान्येतस्याः परिभाषायाः प्रयोजनानि सन्तीत्यादिभाष्यं तु

**किं च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम्। परत्वेन पदसंज्ञा-**

---

प्रौढ्यैव। प्रयोजनविशेषमप्रदर्श्य सामान्येन तथोक्तेरिति चेन्न। अन्नन्तं भसंज्ञकं यदङ्गं तदवयवस्याकारस्य लोप इत्येवाल्लोपोऽन इत्यस्यार्थेनान इत्यस्य स्थानषष्ठ्यन्ततताया अवयवषष्ठ्यन्ततताया वा अभावेन निर्दिश्यमानपरिभाषाप्रवृत्तेर्वक्तुमशक्यत्वात्। अन इत्यस्यावृत्तिं स्वीकृत्यान्नन्तं भसंज्ञकं यदङ्गं तदवयवस्यानोऽकारस्य लोप इत्येवंरीत्याऽन इत्यस्य सामानाधिकरण्येन वैयधिकरण्येन चान्वयं स्वीकृत्य निर्दिश्यमानपरिभाषासञ्चारेणोक्तदोषवारणापेक्षयाऽनन्त्यविकारपरिभाषाश्रयणस्यैव युक्तत्वात्। किंच सान्तमहत इत्यत्र सान्त इत्यस्योपधाया इत्यपेक्षयाऽवयवषष्ठ्यन्ततताया वक्तुमशक्यत्वेनावृत्त्या वैयधिकरण्यान्वयाभ्युपगमेऽपि न निर्दिश्यमानपरिभाषाप्रवृत्त्यवकाश इति हंसशिरांसीत्यादावाद्याकारस्य दीर्घवारणायैषाऽवश्यकी। नच हर्युक्तदिशा प्रत्यासत्त्याश्रयणेनोक्तस्थले दोषाभाव इति वाच्यम्। सान्तसंयोगान्तं यदङ्गं तदवयवो यो नकारस्तस्योपधाया इत्येवं सामानाधिकरण्येनान्वये प्रत्यासत्तेर्दुर्वचत्वात्। यद्यपि सान्तेत्यस्यावृत्तिं स्वीकृत्य सान्तनान्तसंयोगान्तं यदङ्गं तदवयवो यस्सान्तसंयोग इत्येवंरीत्या सामानाधिकरण्येन वैयधिकरण्येन चान्वयाङ्गीकारे प्रत्यासत्तिराश्रयितुं शक्या, तथापि बहुषु स्थलेष्वावृत्तिवैयधिकरण्यान्वयप्रत्यासत्तीनामाश्रयणापेक्षया परिभाषाश्रयणमेव वरमिति नागेशाशयो बोध्यः। यान्येतस्याः परिभाषायाः प्रयोजनानि सन्तीत्यादिभाष्यमप्येवंतात्पर्यकमेव। विना बाधकं तस्य प्रौढिवादत्वकल्पनमनुचितमिति बोध्यम्। एतेनास्याः परिभाषाया अनावश्यकत्वं वदन्त आचार्या अन्ये च परास्ताः। वस्तुतस्त्वेषा कल्पनापि संज्ञानां कार्यकालत्व एव संभवति। न यथोद्देशत्वे। आकडारीयसंज्ञासु च कार्यकालत्वाश्रयणमशक्यमिति तादृशी क्लिष्टकल्पनापि दुर्घटेत्याशयेनाह। किंचेति। अशक्यत्वे हेतुमाह।

बाधकत्वानुपपत्तेः । 'राज्ञः' इत्यादौ नलोपस्यासिद्धत्वात्पूर्वम् 'अल्लोपोऽनः' इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगान्नलोपापत्तेश्च। तस्मादाकडारस्थसंज्ञासु यथोद्देशाश्रयणमेवावश्यकमिति 'यजादिस्वादिपरो योऽन्' इत्यर्थस्य न तत्र लाभः। 'ष्यङः संप्रसारणम्' इति सूत्रस्थं—'कार्यकालं सञ्ज्ञापरिभाषं, भस्येत्युपस्थितमिदं भवति यचि भमिति। तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः। अनाऽकारम्' इति भाष्यन्त्वेकदेश्युक्तिः। यजादिप्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तेनानो

---

बाधकत्वानुपपत्तेरिति। अयादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसो मादिति सूत्रस्थभाष्यप्रामाण्यात्तत्पक्षे संज्ञाशास्त्राणां विधिदेशीयत्वाभ्युपगमेनानाकडारीयत्वादिति भावः। प्रकारान्तरेणापि तदनुपपत्तिं दर्शयति। राज्ञ इत्यादाविति। एतदेकवाक्यतेति। अल्लोपोऽन इत्येतदेकवाक्यतेत्यर्थः। बाधायोगादिति। अस्य पूर्वकालप्रवृत्तिकत्वेन द्वयोर्युगपत्प्राप्त्यभावादिति भावः। यथोद्देशपक्षाश्रयणमेवेति। एवेन कार्यकालत्वव्युदासः। एवं च भविष्यति किंचिदनेन प्रयोजनमित्यभिसन्धिमात्रेण राजन् असित्यवस्थायामेव द्वयोरपि प्राप्त्या स्वदेशीयत्वेन च न बाध्यबाधकभावानुपपत्तिरिति भावः। नन्वेवं ष्यङ इति सूत्रस्थभाष्यस्य का गतिरत आह। एकदेश्युक्तिरिति। संज्ञाशास्त्राणां दुरुपपादस्य पदैकवाक्यत्वस्य तत्राभ्युपगमादिति भावः। अस्यैकदेश्युक्तित्वे युक्त्यन्तरमप्याह। यजादिप्रत्ययस्येति। वस्तुतस्तु संज्ञानां कार्यकालपक्षेऽपि विधिदेशीयत्वं नागेशानभिप्रेतमेवेति नदीसंज्ञासूत्रेऽस्माभिर्निरूपितत्वेन तत्पुरस्कारेण प्रवृत्त उक्तनियमोऽपि नागेशानभिमत एव। राज्ञ इत्यादौ राजन्+असित्यवस्थायां तत्तदेकवाक्यतापन्नयोर्भपदसंज्ञयोर्युगपत्प्राप्तौ परत्वाद्भसंज्ञायामल्लोपे सकृद्गतिन्यायेन पुनःपदत्वाप्रवृत्तौ कार्यकालपक्षेऽपि न नलोपापत्तिः।

विशेषणायोगाच्च । अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि 'तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या' इत्युपसंहृतं भाष्ये इति भावः । अन्त्यसदेशस्येति । अन्त्येन समानो देशो यस्येत्यर्थः । तत्त्वञ्चान्त्यवर्णतद्वर्णयोरितराव्यवधाने भवति । 'चलीक्लृप्यते' इत्यादौ ऋकारान्तर्गतरेफस्योत्तराज्भागेन व्यवधानान्नान्त्यसदेशत्वसम्भव इति न तत्रैतत्परिभाषाप्रवृत्तिः-

---

अल्लोपनलोपयोरसिद्धासिद्धिमङ्गत्वेऽपि तदेकवाक्यतापन्नयोर्भपदसंज्ञयोस्तदयोगात् । एवं श्वलिहा गोदुहा वाचेत्यादौ पदत्वबाधनरूपप्रयोजनाय भसंज्ञाप्रवृत्तौ न ढत्वघत्वकुत्वादीनामापत्तिः । यथोद्देशेऽपि तत्रैवमेव वक्तव्यत्वात् । एवं च परिभाषानाश्रयणे तत्रतत्र निरुक्ता क्लिष्टकल्पनैव दोष इति नागेशाशयः । किं-चेत्यादिग्रन्थस्तूक्तभाष्यप्रामाण्यात्संज्ञानां विधिदेशीयत्वमेवेति मतानुसारेणैवेति बोध्यम् । एतेन स ग्रन्थो नागेशाभिप्रेत इत्यभिप्रायेण, वस्तुतस्तु भसंज्ञायां कार्यकालपक्षोऽप्याश्रयितुं शक्यः । तत्पक्षेऽपि परिभाषाणामिव संज्ञानामपि स्वदेशप्रच्युतौ मानाभावात् । अयादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यस्य प्रगृह्य-संज्ञाप्रयुक्तः प्रकृतिभावः पर इत्यर्थ इति न दोष इत्याचार्योक्तमपास्तम् । अस्यार्थस्य प्रगृह्यसंज्ञासूत्रे नदीसंज्ञासूत्रे चोद्योते ग्रन्थकृता स्वसिद्धान्तत्वेन प्रतिपादनात्स्वोत्प्रेक्षितत्वव्यामोहनस्यायुक्तत्वात् । कार्यकालत्वाश्रयणेऽपि निरुक्तक्लिष्टकल्पनां विनाऽतिप्रसङ्गस्य वारयितुमशक्यत्वात् । अत एवेति । अल्लोपोऽन इत्याद्यर्थं परिभाषाया आवश्यकत्वादेवेत्यर्थः । नन्वेतत्परि-भाषाश्रयणे चलीक्लृप्यत इत्यादावुभयत्र लत्वं न स्यादत आह । तत्त्वं चेति । अन्त्यसदेशत्वं चेत्यर्थः । इतराव्यवधान इति । अत्रेतरपदेनान्त्यवर्णविजातीयवर्णस्यैव ग्रहणम् । वर्णश्चात्राक्षरसमाम्नायिक एवेति न नियमः । एवं च चलीक्लृप्यत इत्यत्रान्त्यवर्णविजातीयेनाज्भागेन

अत एव 'न सम्प्रसारणे' इत्युदाहरणीभूतस्य विद्ध इत्यादेर्नानया सिद्धिः । अत एव 'न सम्प्रसारण' इति सूत्रं सार्थकम् । 'नैतस्याः परिभाषायाः प्रयोजनानि' इति तत्सूत्रस्थभाष्यस्य त्वयमर्थः— एतत्सूत्रसाध्यानि विद्ध इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति अन्त्यसदेशत्वाभावादिति च तद्भावः । परस्यैवेति । द्रशब्दस्यैवेत्यर्थः । अः सेरिति । अत्र अकारेण आकारस्यापि ग्रहणं, तेनामूदृगित्यादिसिद्धिः । तत्र हि 'आ सर्वनाम्नः' इति पूर्वपदान्तस्यात्वम् । त्यदाद्यत्वेति । त्यदादीनामत्वविषय इत्यर्थः । पक्षे इति । अत्र तन्त्रेणार्थद्वयेऽपि सूत्रतात्पर्यम् । तत्र लक्ष्यानुरोधाद्व्यवस्था । अत्र प्रमाणमुपन्यस्यति—उक्तश्चेति । लत्ववादिति । चलीक्लृप्यत इत्यत्र यथा लत्वं रीगृकारयोर्भवति तथेत्यर्थः । .... .... ....

---

व्यवधानान्नैतत्परिभाषाप्रवृत्तिरिति भावः । अत एवेति । अन्त्यवर्णतद्वर्णयोरितराव्यवधान एवास्याः प्रवृत्तिरिति नियमाङ्गीकारादेवेत्यर्थः । अत एव—तदुदाहरणस्यानयाऽसिद्धेरेव । नन्वेतत्स्वीकारेऽस्या अनावश्यकत्वप्रतिपादकनसंप्रसारण इति सूत्रस्थभाष्यविरोध इत्याशङ्क्य तदाशयं प्रकटयति । नैतस्या इत्यारभ्य तद्भाव इत्यन्तेन । क्वचिद्भाष्यपुस्तके नैतान्यस्याः परिभाषायाः प्रयोजनानीत्यपि पाठ आसीदिति परिभाषेन्दुशेखरे निरूपितम् । तदानीं तद्भाष्यस्योक्तार्थः स्पष्ट एव । अन्त्यसदेशत्वाभावादिति । अन्त्यवर्णविजातीयेनाचा व्यवधानादिति भावः । आकारस्यापीति । ग्रहणकशास्त्रेणेति भावः । अत्वेति । इदमुपलक्षणमात्वस्यापि । अत्र पक्षद्वयस्यापि तत्तदृषिसम्मतत्वेनोभयत्रापि सूत्रानुकूल्यं दर्शयति । अत्रेति । असेरित्यत्रेत्यर्थः । अर्थद्वयेऽपि=न सिरसिरिति, अःसेर्यस्य सोऽसिरिति चार्थद्वये इत्यर्थः । लक्ष्यानुरोधादिति । अदमुयङ्, अदम्यङिति लक्ष्यानुरोधादित्यर्थः । तथेति । असान्तस्येत्यर्थे-

अत्र 'अदमुयङ्' इति रूपवादिमतं न्याययुतम्। लत्वे उक्तरीत्या तन्न्यायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाभावात्। अत एव भाष्ये 'अदसोऽनोस्रेः' इति वार्त्तिकप्रत्याख्यानाय 'अथवा अः सेः' इति पक्षमुक्त्वा 'यद्येवम्, 'अमुमुयङ्' इति न सिद्ध्यति, 'अदम्यङ्' इति प्राप्नोति, 'अदमुयङ्' इति भवितव्यम्, अनन्त्यविकारे इति इत्युक्तम्। अत्र 'इति प्राप्नोति' इत्युक्त्या तत्रासंमतिरुक्ता। 'इति भवितव्यम्' इत्यनेन पृथक् मुत्वमिति पक्षे संमत्यभावो दर्शितः।

---

ऽनन्त्यविकारपरिभाषानाश्रयण इत्यर्थः। अत्र=मतत्रये। न्याययुतमिति। अनन्त्यविकार इति न्यायसम्मतमित्यर्थः। लत्वापेक्षयाऽस्य भेदं दर्शयति। लत्व इति। उक्तरीत्येति। अन्त्यवर्णतद्वर्णयोरितराव्यवधान एवास्याः प्रवृत्तिरित्युक्तरीत्येत्यर्थः। अत एव=अत्रैतन्न्यायप्रवृत्तेरिष्टत्वादेव। अनोस्रेरिति। अनोऽकारान्तस्यासकारान्तस्यारेफान्तस्येति तदर्थः। इति प्राप्नोतीत्युक्त्येति। अःसेरिति व्याख्याने भगवता तद्रूपापादनादित्यर्थः। तत्रेति। अदम्यङितिरूपे तादृशव्याख्याने चेत्यर्थः। अदसोद्रेरिति श्लोकस्तूक्तपक्षद्वयप्राप्तरूपानुवादमात्रमेकदेशिन एव। अत एवाग्रे तत्र पदाधिकारादपदान्तस्य न प्राप्नोति, अमुया अमुयोरित्याशङ्क्य, सिद्धं तु सकारप्रतिषेधादित्यादिनाऽपदान्तस्यापि मुत्वं भवतीत्यर्थेऽसेरिति प्रतिषेधस्य ज्ञापकत्वमुक्तम्। एवं च तन्त्रेणार्थद्वये सूत्रतात्पर्यं भाष्यकृतोऽनभिमतमिति बोध्यम्। अमुमुयङिति न सिद्ध्यतीत्युक्त्या तदेव भगवतोऽभिप्रेतमिति भ्रमनिरासायाह। इति भवितव्यमित्यनेनेति। अःसेर्यस्येत्यर्थानाश्रयणेऽप्यनन्त्यविकारपरिभाषया एवमेव भवितव्यमिति तदर्थादिति भावः। अःसेरिति व्याख्याने सामान्यतः केचिन्मतसिद्धस्यामुमुयङित्यस्यासिद्धिमुक्त्वा सहेतुकमदमुयङिति भवितव्यमिति भगवानाह। एवं च तादृशव्याख्यानेऽभीष्टस्यादमुयङित्यस्यासिद्धिरेव

'इति भवितव्यम्' इत्युक्त्या च तत्र शब्देऽप्रयुक्तत्वं सूचितमित्याहुः। विष्वग्देवयोः किमिति। चस्याप्युपलक्षणमिदम्। ननूत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद् 'विष्वगञ्चनम्' इत्यादेर्व्यावृत्तौ व्यर्थमप्रत्ययग्रहणमत आह। अप्रत्ययेति। तेनेति। अन्यथा 'अतः कृ' इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्तसमासग्रहणेनोत्तर-

---

भगवतोऽभिप्रेतेति बोध्यम्। न केवलममुमुयङिति रूपे भगवतोऽसम्मतिरेव, अपि तु तस्य प्रयोगाभावोऽपि सूचित इत्याह। इत्युक्त्या चेति। चो भिन्नक्रमः। अप्रयुक्तत्वमित्यस्यानन्तरं योज्यः। तत्र शब्दे=अमुमुयङ्शब्दे। अप्रयुक्तत्वं च सूचितमित्यर्थः। एतेन 'अन्ये तु अत्र सूत्रवार्तिकभाष्यकृतामसेरित्यस्य प्रतिषेध एव तात्पर्यम्। वार्तिककृता अदसोद्रेरिति वचनपाठेन भाष्यकृता पदाधिकारादपदान्तस्य मुत्वं न प्राप्नोतीत्याशङ्क्य यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्योऽपदान्तस्यापि मुत्वं भवतीत्युक्तेश्च। अमुमुयङिति न सिद्ध्यतीत्युक्त्या इदमेव रूपं साधुत्वेन भाष्यकृतोऽभिप्रेतम्। अदय्र्याङिति प्राप्नोतीत्युक्त्या तत्रासम्मतेस्सूचनात्। अदमुयङिति भवितव्यमनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवतीति भाष्यन्त्वेकदेशिनः। स्वखण्डितपरिभाषाश्रयणेन रूपापादनरूपत्वात्तस्येत्याहुरि'त्याचार्योक्तमपास्तम्। ष्यङस्संप्रसारणमिति सूत्रे भाष्ये कण्ठतस्तदावश्यकताया भगवता प्रतिपादितत्वेन तदावश्यकताया अस्माभिरुपपादितत्वेन चास्य भाष्यस्यैकदेश्युक्तित्वकल्पनाया अयुक्तत्वात्। न संप्रसारण इति सूत्रस्थभाष्याशयस्य प्रागुपवर्णितत्वात्। ननु विष्वग्देवयोरित्यस्याभावेऽपि चकारसमुच्चेयस्य सर्वनाम्न इत्यस्य सत्त्वेन कथमश्वाचीत्यत्रातिप्रसङ्ग उक्तोऽत आह। चस्याप्युपलक्षणमिति। तथाचोत्तरपदेन पूर्वपदस्याक्षेपेऽप्रत्ययान्तेऽञ्चतौ परे यत्पूर्वपदं तस्याद्र्यादेश इत्यर्थापत्त्या तत्रातिप्रसङ्ग इति भावः॥

पदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थापत्तौ 'अयस्कृद्' इत्यादावेव स्यादिति भावः। उद ईत्। अत्र 'अचः' इत्यनुवर्त्तते॥

समः स॥ 'समो मिङ्' इति 'सम इक्' इति वा न कृतम्। परिभाषाज्ञानकृतगौरवापत्तेः। तिरसास्ति। 'अलोपे' इत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते। अस्य अलोपो—लोपाभावो यस्मिन्नश्चताविल्यर्थस्तदाह—अल्लुप्ताकारेति। तिरश्चेति। श्चुत्वेऽल्लोपस्य स्थानिवत्त्वं तु न। पूर्वत्रासिद्धीये तन्निषेधात्। पूजार्थस्येति।

---

गौरवापत्तेरिति। नच यथान्यासेऽप्यनेकालिति परिभाषापेक्षणेन साम्यमेवेति वाच्यम्। अत्र न्यासे इत्संज्ञालोपयोर्ङिच्चेत्यस्य चापेक्षणाद्यथान्यासेऽनेकालित्यस्यैकस्यैवापेक्षणात्तदपेक्षयाऽत्र न्यासे गौरवमित्याशयात्। नच समोऽव्ययत्वादकचि सकम्शब्दस्याञ्चतौ परे यथान्यासेऽत्र न्यासे च फलभेदस्य स्पष्टतया परिभाषाज्ञानकृतगौरवस्यैवाभिधानमयुक्तमिति वाच्यम्। बहिर्भूतकुत्सादिनिमित्तकत्वेनाकचो बहिरङ्गतयाऽदेशोत्तरमेवाकचः प्रवृत्त्या फलभेदाभावात्। वस्तुतस्तु तस्य सम्यगर्थकत्वेन तदर्थे कुत्सायोगासंभवेनाकचः प्राप्तिरेव नास्ति। किञ्चाव्ययसर्वनाम्नामित्यत्र सर्वनामसाहचर्येणाव्ययानामपि वाचकानामेव ग्रहणेन समो द्योतकत्वेन कुत्साविशिष्टवाचकत्वाभावादकच् न भवत्येवेति न तत्र फलभेदशङ्कावकाश इति बोध्यम्। एतेनेदमुपलक्षणं, साकच्के च विशेषादित्याचार्योक्तमपास्तम्। अलोप इत्यस्य मूलोक्तार्थलाभप्रकारमाह। अकारः प्रश्लिष्यत इति। तदभावे न विद्यते लोपो यस्येति व्याख्याने गतौ नलोपस्य जायमानत्वेन तिर्यादेशो न स्यादिति भावः। अस्यालोप इति। अस्य लोपोऽलोपः, न अलोपो यस्मिन्निति विग्रहे तु लुडापत्तिरिति भावः। तन्निषेधादिति। नच पदचरमावयवविधायकातिरिक्तपूर्वत्रासिद्धीयस्यैव तत्र ग्रहणमिति न पदान्तसूत्रे ग्रन्थकृता प्रतिपादितत्वेन तद्विरोधादिदमयुक्तमिति

पूजारूपार्थस्य गम्यत्वे इत्यर्थः। अत एवाऽव्याकुलं गच्छतीत्यर्थके 'अञ्चितं गच्छति' इत्यादौ नलोपो न। अव्याकुलगमनेन च पूजा गम्यते, न त्वञ्चतेरेव सोऽर्थ इति स्पष्टम् 'अञ्चोऽनपादाने' इति सूत्रे भाष्यकैयटयोः। प्राच इत्यादि चिरन्तनादिरूढस्येति बोद्धव्यम्। एतेन 'अञ्चतेर्गतौ' इति नियमेनैव सिद्धौ 'नाञ्चेः पूजायाम्' इति व्यर्थमित्यपास्तम्। नलोपाभाव इति। ञोपधत्वबोधनद्वारेत्यर्थः। स्पष्टश्चेदं 'परेश्च घ' इति सूत्रे भाष्ये। अपिना चसमवधाने 'चोः कुः' इति कुत्वाभावो, निरुपपदात् क्विन्निति च निपात्यते इति बोद्धव्यम्। 'सञ्चि' इति वचनाद्वा कुत्वाभावः। षत्वं स्कोरितीति।

---

वाच्यम्। पदसंज्ञाप्रयोज्यपदचरमावयववर्णनिमित्तककार्यविधायकातिरिक्तत्वेन सङ्कोच एव ग्रन्थकृत्तात्पर्यमिति तत्रैव गुरुचरणैर्निरूपितत्वात्। यद्वाऽयं ग्रन्थः प्राचीनरीत्यैव, स्वमते तु न पदान्त इत्यनेनैव निषेधसिद्धिरिति बोध्यम्। पूजार्थस्याञ्चतेरिति मूलस्य यथाश्रुतार्थपरत्वे वक्ष्यमाणस्थले निषेधानापत्तेराह। पूजार्थस्य गम्यत्व इति। नन्वेवं प्राच इत्यादौ नलोपानापत्तिः। तत्रापि प्रकर्षगमनेन पूजार्थस्य गम्यत्वादत आह। प्राच इत्यादीति। रूढस्येति। एवं च तत्र पूजायाः गम्यत्वाभावान्न निषेधप्रसक्तिरिति भावः। एतेनेति। चिरन्तनादिरूढे प्राच इत्यादौ लोपासम्पादनेनेत्यर्थः। अपास्तमिति। किंचैवं न्यासे क्विस्कन्दिस्यन्दोरित्युत्तरसूत्रे नञः कर्तव्यत्वेन पदलाघवाभावेनात्र नियमाश्रयणे गौरवेणेदमपास्तमित्यपि बोध्यम्। ञोपधत्वबोधनद्वारेति। अत्रेदं बोध्यम्। कुञ्चधातुरयमुपदेशे नोपध इति ञोपध इति च मतद्वयम्। तत्राद्ये कुञ्च इत्यादावनुस्वारपरसवर्णयोरसिद्धत्वान्नलोपे प्राप्ते ऋत्विगित्यादिना नलोपाभावो निपात्यते। अत्र ञकारस्य चोःकुरिति कुत्वं तु न भवति। अनुस्वारपरसवर्णयोरसिद्धत्वेन चवर्गाभावात्। एवं चात्र मते कुत्वाभावस्य

न्यायसिद्धत्वेन न तदर्थं निपातनावश्यकता । इदमेव मूलकृत्सम्मतम् । मूले नलोपाभावोऽपीत्यपिना क्विन्समुचीयते। क्विन्प्रत्ययस्तत्सान्नियोगेन नलोपाभावश्च निपात्यत इति तदाशयः । उपदेशे ञोपध इति मते तु नकाराभावेन नलोपाप्राप्त्या कुत्वाभावनिपातनायैव ऋत्विगादिसूत्रे क्रुञ्चेर्ग्रहणम् । नचात्र मते अकारोच्चारणसामर्थ्यादेव कुत्वाभावे सिद्धे निपातनं व्यर्थमिति वाच्यम् । तथासति क्रुङित्यादावपि कुत्वानापत्तेः । निपातनेन तु चकारयोगे कुत्वाभावबोधनान्न दोषः । यदि तु 'यं विधिं प्रत्युपदेशोऽनर्थकस्स विधिर्बाध्यत' इति न्यायेनोच्चारणसामर्थ्याज्झल्निमित्तककुत्वस्यैवाभावो बोध्यत इति न क्रुङित्याद्यसिद्धिरित्युच्यते, तदा ऋत्विगादिसूत्रे क्रुञ्चेर्ग्रहणमनावश्यकमेव । ञोपधत्वे क्विनि क्विपि वा विशेषाभावात् । कुत्वाभावस्योच्चारणसामर्थ्यादेव सिद्धेः । तदेतत्परेश्च घाङ्कयोरिति सूत्रे उद्योते दिगित्यनेन सूचितम् । एवं सिद्धान्तभूते सङीति वक्तव्यमिति वार्तिकारम्भपक्षेऽपि क्रुञ्चेर्ग्रहणमनावश्यकमेव । झलादिप्रत्यय एव कुत्वप्रवृत्त्या प्रकृते कुत्वाप्राप्तेः । परेश्च घाङ्कयोरिति सूत्रे भगवता क्रुञ्च इत्यादौ कुत्वशङ्काया, निपातनात्कुत्वाभावस्य च प्रतिपादनादिदमेव भाष्यकृत्सम्मतम् । नोपधत्वे ह्यनुस्वारपरसवर्णयोरसिद्धत्वात्कुत्वाप्राप्त्या तदसङ्गतिः स्पष्टैव । अत एव क्रुञ्च्यादित्यत्र अकारश्रवणं सिद्ध्यति । अन्यथाऽनुस्वारपरसवर्णयोरसिद्धत्वान्नलोपापत्तिः । नलोपाभावस्य क्विन्सान्नियोगेनैव निपातनादिति नागेशाशयः । तदनुरोधेन मूलं योजयति । ञोपधत्वबोधनद्वारेत्यर्थ इति । नच भट्टोक्तदिशोक्तभाष्यात्कुत्वविषयेऽनुस्वारपरसवर्णयोस्सिद्धत्वमेव कल्प्यताम् । आशीर्लिङि क्रुच्यादित्येव रूपमिति वाच्यम् । तद्बलेन शास्त्रबाधकल्पनापेक्षया ञोपधत्वकल्पनाया एव न्याय्यत्वमित्याशयात् । किंच कुत्वविषये तयोस्सिद्धत्वकल्पने चकाराव्यवहितपूर्वत्वविशिष्टस्य नकारस्यानुस्वारविधायके तादृशानुस्वारस्य परसवर्णविधायके चोपस्थितपूर्वत्रासिद्धशास्त्रघटकपूर्वत्रपदेन चोःकुरित्यस्याग्रहणमित्येव हि वाच्यम् । तथा सति प्राञ्च इत्यादावपि कुत्वापत्तिः ।

सलोपे षत्वस्यासिद्धत्वात्सलोपे कृते षत्वम्। व्रश्चेः क्विपि 'ग्रहिज्या' इति संप्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः। सुवृट्त्स्विति। चर्त्वस्यासिद्धत्वाद् 'डः सि' इति वा धुट्। निपात्यन्ते इति। अतिप्रत्ययान्ता इति शेषः। तत्र पृषद्बृहतोर्गुणाभावश्च, गमेर्जगादेशश्च महेः कर्मणि प्रत्ययश्च, निपातनात्। शतृवदिति। प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः। 'शतुरनुमः' इति सूत्रे 'बृह-

---

यद्यत्रापि निपातनादेव कुत्वाभाव इत्युच्यते, एवमपि क्रुञ्चौ क्रुञ्च इत्यादौ कुत्वापत्तिर्दुर्वारा। अतोऽस्यौपदेशिकञोपधत्वमेव न्याय्यमिति। अन्ये तु कुञ्च कौटिल्याल्पीभावयोरित्येक एव धातुर्नोपधः। निकुचितं निकुचितिरित्यादौ नलोपदर्शनात्। अस्यर्त्विगादिसूत्रेण नलोपाभावोऽधिको रेफश्च निपात्यते। कुत्वं तु न भवति। अनुस्वारपरसवर्णयोरासिद्धत्वादिति वदन्ति। परं त्वयमपि पक्षो भाष्याननुगृहीतत्वात्क्रुन्, क्रुञ्चौ, क्रुञ्च इत्यादिरूपासिद्धेश्चोपेक्ष्य इति नागेशाशयो बोध्यः। मतत्रयमिदमृत्विगादिसूत्रे चोःकुरिति सूत्रे च वृत्तिपदमञ्जर्योः स्पष्टम्। एतेन 'अस्य ञोपधत्वे क्रुञ्च्यादित्याशीर्लिङि नलोपाभाव एव हि फलम्। तच्च क्रुचीतीदित्पाठेनापि सिद्धमिति क्रुञ्चेति पाठो व्यर्थः स्यात्। अतोऽयं न ञोपधः। कथं तर्हि कुत्वमाशङ्कितमिति चेत्तर्हि तद्भाष्यात्कुत्वविषयेऽनुस्वारपरसवर्णयोरसिद्धत्वमेव प्रतिपाद्यताम्। आशीर्लिङि क्रुच्यादित्येव रूपमिति चिन्त्यमेतदिति भट्टोक्तमपास्तम्। ननु षत्वं, स्कोरिति सलोप इति मूलमयुक्तं, सलोपे षत्वस्यासिद्धत्वादत आह। सलोप इति। एवं च मूलकारस्यापि तादृशः क्रमो न विवक्षितः। किन्तु लक्षणयोः प्राप्तिमात्रप्रदर्शन एव तात्पर्यमिति भावः। नन्वत्र नकाराभावात्कथं सलोपप्राप्तिरत आह। श्चुत्वस्यासिद्धत्वादिति। शतृप्रत्ययान्तवदिति। अत्र, वार्तिके च तृतीयान्ताद्वतिः। तेन महतीतरेत्यत्र ह्रस्वविकल्पासिद्ध्यति। नन्वेवं शतुरनुम

न्महतोरुपसंख्यानं' इति तु पृषदादिव्यावृत्तये नियमार्थमिति बोध्यम् ॥

अत्वसन्त। चस्त्वर्थे। अतु इति लुप्तषष्ठीकं पृथक् पदम्। अधातोरिति असन्तस्यैव विशेषणं, तुशब्दात्। तदाह—धातुभिन्नेति। अत एव 'उगिदचाम्' इति सूत्रे गोमत्यतेरप्रत्यये गोमानिति प्रयोगो भाष्ये सङ्गच्छते। अङ्गविशेषणतयाऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम्। परमिति। वचनसामर्थ्यादुपधापदासम्बन्धेन चारितार्थ्यादित्यभिमानः। अयमभ्युच्चय इत्याह—नित्यमिति।

---

इति सूत्रे 'बृहन्महतोरुपसंख्यानमि'तिवार्तिकं व्यर्थमत आह। नियमार्थमिति। आतिदेशिकशत्रन्तात्पराया नद्या यदि स्यात्तदा आभ्यामेवेत्येवंरूपो नियम इति भावः ॥

एकपदत्वेऽधातोरित्यस्यात्वन्तेऽपि सम्बन्धः स्यात्। एकदेशान्वये तु क्लेश इत्याशयेनाह। पृथकपदमिति। तुशब्दादिति। त्वर्थकचशब्दादित्यर्थः। अत्वन्ते तदसम्बन्धे मानमाह। अत एवेति। ननु परमित्यसङ्गतं, दीर्घस्य निरवकाशत्वेनातुल्यबलत्वादत आह। वचनसामर्थ्यादिति। अत्राश्रुतस्योपधापदस्यानुवृत्तिमाश्रित्य वचनसामर्थ्याच्छास्त्रान्तरबाधकल्पनापेक्षया तत्सामर्थ्यादुपधापदासम्बन्धकल्पनमेव वरमित्याशयः। एवं च नुमि कृते दीर्घस्य सावकाशत्वेन नुम्दीर्घयोस्तुल्यबलत्वाद्युक्तो विप्रतिषेध इति भावः। नन्वेवं दीर्घस्य नित्यत्वान्नुमः परत्वोक्तिरयुक्तेत्यत आह। मूले नित्यं चेति। एवं च नुमोऽपि नित्यत्वादुभयोर्नित्ययोः परत्वान्नुम्प्राप्त इति भावः। वस्तुतोऽत्र परत्वमेव बलवत्त्वप्रयोजकं, न नित्यत्वमित्याशयेनाह। अभ्युच्चय इत्याहेति। अभ्युच्चयेनाहेत्यर्थः। ननु शब्दान्तरप्राप्त्या नुमो न नित्यत्वमत आह।

**कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः। सामर्थ्यादिति। वाक्यार्थबोधकाले विरोधाभावेनोपधापदासम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यत इति भावः। धीमानिति। न चैकानुबन्धकपरिभाषया मतुपोऽत्राग्रहणम्, सूत्रं तु सर्वादिपठितेऽनुनासिकोकारविशिष्टे भवतुशब्दे चरितार्थमिति वाच्यम्। पकारादेः समुदायानुबन्धत्वेऽप्यतोऽनुबन्धकत्वाभावात्। अवयवानां नान्तरीयकतया समुदायोपदेश एव ऋषितात्पर्यमित्यर्थस्य 'आदेच उपदेशे' इति सूत्रस्थभाष्यसंमतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धताया**

---

**प्रसङ्गित्वमात्रेणेति।** अभिमान इत्यनेन सूचितापरुचिं प्रकटयन् समाधान ग्रन्थाशयमाह। **विरोधाभावेनेति।** पदार्थान्वयबोधकाले लक्ष्यपर्यालोचनकालोपस्थितिकस्य वचनवैयर्थ्यरूपविरोधस्यानुपस्थितत्वेनेत्यर्थः। **उपधापदासम्बन्ध इति।** अयं भावः। सौ च, अनुनासिकस्य क्विझलोरिति पूर्वोत्तरसूत्रयोरुपधापदसंबन्धस्यावश्यकत्वेन मध्येऽत्रापि तत्संबन्धस्य न्याय्यतया प्रतिबन्धकाभावेन च तद्घटितवाक्यार्थबोधे जाते पश्चाल्लक्ष्यपर्यालोचनवेलायामुपस्थितस्य शास्त्रवैयर्थ्यस्य शास्त्रान्तरबाधकत्वकल्पनयैव परिहार उचितः। आरम्भसामर्थ्याच्छास्त्रान्तरबाधस्यान्यत्र क्लृप्तत्वात्। न तूपधापदार्थाघटितलक्ष्यसंस्कारकवाक्यान्तरकल्पनया। एवमपि पूर्ववाक्यवैयर्थ्यस्य तदवस्थत्वात्। आरम्भसामर्थ्यात्तादृशवाक्यमेव नेति तु वक्तुमशक्यम्, वाक्यार्थबोधकाले प्रतिबन्धकाभावेन तदर्थघटितवाक्यार्थबोधस्य दुर्वारत्वादिति। **एकानुबन्धकपरिभाषयेति।** तदनुबन्धकपरिभाषयेत्यर्थः। **अग्रहणमिति।** तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेति तदर्थादिति भावः। नन्वेवं सूत्रस्य निरवकाशत्वं स्यादत आह। **सूत्रं त्विति।** ननु समुदायस्य अनुबन्धकत्वेऽवयवस्यापि कुतो न तत्त्वमत आह। **यदुपदेशेति।**

एव स्वीकारात्। न चोकारलोपेऽत्वन्तत्वस्याप्यभावः। उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात्। एतेन तदाश्रयणे अतुबन्तमेतन्नात्वन्तमित्यपास्तम्। तदाश्रयणाभावात्। तस्मादनुनासिकोकारविशिष्टो य उपदेशोऽत् तदन्तस्य प्रयोगस्थस्य दीर्घ इति सूत्रार्थ इति न दोषः। नियमार्थमिति। धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेति नियम इति भावः। तेन 'उखास्रत् ब्राह्मणी' इत्यादौ नुम्ङीपौ न। न्यायप्राप्ताल्लोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः। यद्यपि अञ्चतेश्चेन्नलोपिन एवेति नियमेऽप्यञ्चतिग्रहणं चरितार्थं, तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमो युक्त इति बोध्यम्। नन्वत्र धातुत्वात्कथं नुम्, अत आह। अधातोरिति। न चौपदेशिकधातुविषयक एव नियमोऽस्तु,

---

आश्रयणेनेति। सूत्रे आश्रयणसामर्थ्येनेत्यर्थः। तदंशे=उकारांशे। एतेनेति। आश्रयणसामर्थ्यात्तन्मात्रांशे भूतपूर्वगतिस्वीकारेणेत्यर्थः। तदाश्रयणे=भूतपूर्वगत्याश्रयणे। तदाश्रयणाभावादिति। पकारस्य सूत्रेऽनाश्रयणादिति भावः। अनुनासिकोकारविशिष्ट इति। अस्य तदुपलक्षित इत्यर्थ इति मिश्राः। वस्तुतस्तूपदेशे उकारवैशिष्ट्यस्य सुवचत्वेन तथा व्याख्यानमनावश्यकमेवेति बोध्यम्। नलोपिनोऽञ्चतेरेवेति। तेन प्राङ् सुमुखीत्यादौ पूजायामुगितश्चेति न ङीबिति बोध्यम्। नियमफलं दर्शयति। तेनेति। उक्तनियमलाभे बीजमाह। न्यायप्राप्तेति। सामान्यापेक्ष इति। अत एव गोमन्तमिच्छतीत्यर्थकगोमानित्यत्र नुम् ङीबभावश्च सिद्धः। अन्यथा पर्णध्वदित्यादौ नुम्वारणायाधातोरित्यस्यावश्यकत्वेन तत्सामर्थ्याद्भूतपूर्वगतेराश्रयितुमशक्यतया नुम्न स्यात्। एवमस्योक्तनियमेन ङीपो वारयितुमशक्यतया ङीप् स्यादिति बोध्यम्। कथं नुमिति। नियमेन व्यावृत्तेरिति भावः। अधातोरितीति। नन्वधातु-

किमनेनेति वाच्यम्। औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षनियमज्ञापनार्थत्वात्। तत्फलं पर्णध्वदित्यादाविव गोमानित्यादिनामधातौ 'उगितश्च' इति ङीबभाव इति दिक्। क्यचपक्षेऽल्लोपो न स्थानिवत्। क्वौ लुप्तत्वात्। अत्राऽचारक्विब् अर्वाचीनमतेन। वस्तुतो हलन्तेभ्यस्तदभाव इति 'ह्रस्वनद्यापः' इत्यत्र भाष्ये स्पष्टम्॥

उभे अभ्य। लक्ष्यानुसारेण गर्गदण्डनन्यायादत्र समुदाये वाक्यपरिसमाप्तिरित्याह—उभे समुदिते इति। द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम्। यत्तु उभेग्रहणं सामर्थ्यात्सहभावोपसर्जन-

---

ग्रहणेन भूतपूर्वाधातोर्ग्रहणेऽपि तदानीं तस्य धातुत्वाभावस्य वक्तुमशक्यतया नियमेन कुतो न व्यावृत्तिरिति चेन्न। एवंसति पुनरधातुग्रहणवैयर्थ्यस्य तदवस्थत्वेन तत्सामर्थ्यात्तादृशस्थले नियमेनोगिल्लक्षणस्य नुमोऽव्यावृत्तिरित्यर्थस्य लाभेनादोषात्। अनेनेति। अधातुग्रहणेनेत्यर्थः। ज्ञापनार्थत्वादिति। अधातुग्रहणस्येति भावः। तत्फलमिति। औपदेशिकत्वानन्तर्भावेण नियामकत्वाश्रयणफलमित्यर्थः। क्वौ लुप्तत्वादिति। लुप्तमित्यत्र भावे क्तः। क्वौ लोप इत्यर्थः। गोमत्यतेरप्रत्यये गोमानिति भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकार इति प्रागुक्तमनुसन्धेयम्॥

वृद्धिगुणसंज्ञयोरिवास्या अपि प्रत्येकपरिसमाप्तिः कुतो नेति शङ्कानिवारणायाह। लक्ष्यानुसारेणेति। स्पष्टार्थमिति। नचैकाचो द्व इत्यत्र द्व इत्यस्य विधेयसमर्पकत्वेनात्रानुवाद्यतायां वक्तुमशक्यतया कथमुभेग्रहणस्य स्पष्टार्थत्वमिति वाच्यम्। पूर्वोऽभ्यास इत्यत्रानुवृत्तस्य तस्य विधेयतात्यागस्य क्लृप्ततयाऽत्रापि तत्त्यागे बाधकाभाव इत्याशयात्। सहभावोपसर्जनेति। साहित्योपसर्जनेत्यर्थः। तेन=सामर्थ्यादुभेग्रहणस्य सहिते द्वे इत्यर्थेन।

**द्वित्वविशिष्टार्थकं ; तेन समुदिते इत्यर्थलाभ इति, तन्न । अशब्दार्थत्वात् । शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतोपहसितत्वाच्च । ध्वनितश्चेदं 'तदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते' इति ग्रन्थेन भाष्ये । अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य 'सहग्रहणं कर्त्तव्यम्' इति वार्तिकं प्रत्याख्यातम् ।**

---

**अशब्दार्थत्वादिति** । उभेग्रहणेन शब्दशक्त्या तादृशार्थालाभादित्यर्थः । नन्वेको गुणवृद्धी इत्यत्रेव लक्षणया तादृशार्थलाभ इति वाच्यम् । अत्र लक्षणां विना न्यायेनैवोक्तार्थलाभसंभवे लक्षणाश्रयणमयुक्तमित्याशयात् । अत एव भाष्ये 'तदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यत' इत्युक्त्वानन्तरं गर्गदण्डनन्यायेन तादृशार्थसिद्धिमाश्रित्य तत्प्रत्याख्यातमिति बोध्यम् । एतेन 'केचित्तु यथेको गुणवृद्धी इति सूत्रे गुणवृद्धिग्रहणानुवृत्तौ पुनर्गुणवृद्धिग्रहणादाश्रितशब्दव्यापारयोर्गुणवृद्ध्योर्बोधः, एवं द्वे इत्यनुवृत्त्यैव सिद्धे पुनरुभेग्रहणाद्वित्वपर्याप्त्याश्रयसमुदायबोधः । गर्गदण्डनन्यायेनोक्तार्थलाभस्तु पाक्षिकः । देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्यत्र प्रयोजकव्यापारस्य समुदायविषयत्वेऽपि प्रयोज्यव्यापारान्नफलतृप्तेः प्रत्येकवृत्तित्वेन भाष्यकैयटाभ्यां प्रदर्शितत्वात् । तस्मादुभेग्रहणं सहार्थमिति कैयटोक्तमपि युक्तमेवेत्याहु'रित्याचार्योक्तमपास्तम् । कैयटस्यापि वार्तिकोक्तार्थस्य सूत्राक्षरैरेव कथंचिल्लाभसंभवे वार्तिकमनारम्भणीयमित्याशयकस्य 'उभेग्रहणं क्रियते तत्सहार्थं विज्ञास्यत' इति भाष्यस्याशयवर्णनमात्रपरत्वेन तादृशार्थे निर्भराभावात् । गर्गदण्डनन्यायब्राह्मणभोजनन्याययोर्लक्ष्यानुरोधेन व्यवस्थाया भगवदभिप्रेतत्वेन न्यायेन तादृशार्थलाभस्य पाक्षिकत्वकथनस्यायुक्तत्वात् । **इदमिति** । अशब्दार्थत्वमित्यर्थः । **विज्ञास्यत इति** । अनेन तस्य तादृशार्थकत्वं न लोकसिद्धमिति सूचितमिति भावः । **अत एवेति** । 'अस्यार्थस्यासम्मतत्वादेवेत्यर्थः । **प्रत्याख्यातमिति** । तदसति

तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्यातमेवेति सुधियो विभावयन्तु । तत्र ह्यादिशब्दानामेकापायेऽप्रवृत्तेः 'एत्र्सन्' इत्यादावभ्यासलोपे कार्यकालपक्षे न संज्ञेति न जुस् । एकादेशात्पूर्वमायन्नादिषूपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशोऽपि 'सर्वे सर्वपदादेशाः' इति न्यायेन स्थानिवद्भावात् झित्वेन जुसापत्तिः । किं चैकादेशे जुसोऽपवादविषयस्य जायमानत्वेन 'प्रकल्प्य चापवादविषयम्' इति न्यायेन पूर्वमन्तिभावाप्रवृत्तावेकादेशे जुसापत्तिः ।

---

प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यत इति ग्रन्थेन वार्तिकस्याकर्तव्यतां प्रतिपाद्यापि पुनरनेन न्यायेन तद्वार्तिकं प्रत्याख्यातमिति भावः । तेन चोभेग्रहणेन तत्प्रत्याख्यानं न भाष्याभिप्रेतमिति स्पष्टमेव प्रतीयते । अन्यथा पूर्वमुभेग्रहणेन सहग्रहणस्य प्रत्याख्यातत्वेन सूत्रशेषे न्यायेनोभेग्रहणप्रत्याख्यानमेव कुर्यादिति बोध्यम् । नन्वेवमुभेग्रहणस्याप्रत्याख्यातत्वेन कथमस्य स्पष्टार्थत्वोक्तिरत आह । तुल्यन्यायादिति । समुदितस्य संज्ञासिद्धये कृतस्य वार्तिकस्य प्रत्याख्याने तेनैव न्यायेन तदर्थकत्वेन पराभिमतमुभेग्रहणमपि प्रत्याख्यातप्रायमेवेति भावः । यत्तूभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसंज्ञार्थं, तेनैत्र्सन्नित्यत्र जुस्, ईत्र्सन्नित्यत्र जुन्निषेधश्च नेति केचिन्मतं विकल्प्य दूषयति । तत्रेति । एकापायेऽप्रवृत्तेरिति । एकस्य नाशे तद्गतैकत्वस्यापि नाशेनैकत्वद्वयाभावात्, तद्बुद्धेरभावाद्वा द्वित्वोपजनाभावेन तत्सत्ताकाले द्वित्वोपजनेऽपि तन्नाशे द्वित्वनाशाभ्युपगमेन च द्वित्वापायादिति भावः । एकादेशादिति । अस्यान्यथेत्यादिः । सन्नकारशन्नकारयोरेकादेशादित्यर्थः । स्थानिवद्भावादिति । झेर्जुसित्यादौ प्रक्रियालाघवाय विशिष्ट एव स्थानीति भावः । वस्तुतोऽत्र पूर्वमन्तिभाव एव नेत्याह । किञ्चेति । एतेन झेर्जुसित्यत्रेकारस्योच्चारणार्थत्वमाश्रित्य

यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाभ्यासलोपे सत्त्वेऽपि पञ्चमीसमासेनैकादेशस्य स्थानिवत्त्वान्न तत्प्रवृत्तिः। अत एव 'प्रत्यैषिषन्' इत्यादौ न दोष इत्यलम्। नाभ्यस्ता। बहुयोगव्यवच्छिन्नोऽपि नुमिहानुवर्त्तते सामर्थ्यात्। तदाह—नुम्नेति। दाञः शतरि शपः श्लौ 'श्लौ' इति द्वित्वेऽभ्यासह्रस्वत्वे 'श्नाभ्यस्तयोः' इत्यालोपे 'ददत्' इति।

त्यदादिषु॥ आलोचनमिह ज्ञानमात्रम्। आ स। 'दृग्दृशवतुषु' इति सूत्रमनुवर्त्तते। षत्वापवादत्वादिति। 'कुः क्विन्यतः' इति न्यासेन दृष्ट इत्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषयं लक्षणमचरितार्थमिति भावः। खकार इति। अघोषमहाप्राणशकारतुल्यत्वादिति भावः। कैयटेति। 'क्विन्प्रत्ययस्य' इति

---

जुसापत्तिमाक्षिपन्तः परास्ताः। यथोद्देशेऽपि न तत्प्रयोजनमित्याह। यथोद्देश इति। पूर्वमिति। अभ्यासलोपात्पूर्वं भविष्यति किंचिदनेन प्रयोजनमित्यभिसन्धिमात्रेणेति भावः। स्थानिवद्भावेनेति। एकदेशविकृतन्यायेनेत्यर्थः। उभेग्रहणेनोक्तार्थस्वीकारेऽप्यत्रास्यावश्यकतां दर्शयति। अत एवेति। न दोष इति। अन्यथात्राभ्यासलोपाभावेनाभ्यस्तसंज्ञाया दुर्वारतया एकादेशोत्तरं जुसापत्तिरिति भावः। सामर्थ्यादिति। सूत्रारम्भसामर्थ्यादित्यर्थः। द्वित्व इति। अन्तरङ्गत्वात् श्नाभ्यस्तयोरित्यालोपं बाधित्वेति भावः॥

ज्ञानमात्रमिति। ननु पश्यार्थैरित्यत्रेव चाक्षुषज्ञानमित्यर्थः। ननु षत्वापवादत्वादित्यसङ्गतम्। कुत्वस्य षत्वाप्राप्तियोग्ये युङित्यादौ चारितार्थ्यादित्याशङ्क्य तदाशयमाह। कुः क्विन्यत इत्यादिना। बहुव्रीहिफल इति। अतद्गुणसंविज्ञानबहुव्रीहिफल इत्यर्थः। वीप्सागर्भबहुव्रीहिणेति। क्विन्प्रत्ययो

सूत्रस्थेत्यादिः । असिद्धत्वादिति । यद्यपि जश्त्वापवादोऽपि कुत्वं, तथापि शस्थानिकजश्त्वस्यैव न तु खस्थानिकस्यापीति भावः । वस्तुत इदं चिन्त्यम्, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः । तस्माद्दधृक् अञ्चुयुजि क्रुञ्चु—अस्य चारितार्थ्येन जश्त्वषत्वापवादता न युक्तेति । तदेतद् 'मते' इति वदता सूचितमिति दिक् । नगिति । षडगकाः प्राग्वत् । नड्भ्यामिति । 'मस्जिनशोः' इति नुम् तु न । धातुप्रत्यये तद्विधानात् । स्पृशोऽनु ।

---

यस्माद्यस्माद्दृष्ट इत्येवंरूपेणेत्यर्थः । ननु तादृशादिक्विन्नन्तविषयकलक्षणस्य षत्वस्येव जश्त्वस्याप्यपवादत्वात्कथमसिद्धत्वमत आह । यद्यपीत्यादिना । जश्त्वापवादोऽपीति । अत एव षत्वाद्यपवादत्वात्कुत्वस्येति कैयटः । खस्थानिकस्यापीति । एवं च क्विन्प्रत्ययस्येति सूत्रैकवाक्यतापन्नपूर्वत्रासिद्धसूत्रघटकपूर्वपदेन शस्थानिकजश्त्वविधायकस्याग्रहणेऽपि खस्थानिकजश्त्वविधायकस्याग्रहणे मानाभाव इत्याशयः । इदं च कुत्वोत्तरं जश्त्वाप्रवृत्तेरुपायान्तरपरम् । दिगादिभ्यो यदिति निर्देशान्नासिद्धत्वमिति वा बोध्यमित्यपि मूलमेतदनुरोध्येव । वस्तुतस्त्वत्र पक्षे कुत्वस्य तक्रन्यायेन जश्त्वापवादतया न तत्प्रवृत्त्युत्तरं जश्त्वप्रवृत्तिः । यद्वा ष्णान्ता षडिति निर्देशाज्जश्त्वचर्त्वयोरिव दिगादिभ्यो यदिति निर्देशात्कुत्वजश्त्वयोरपवाद्यापवादकभावो नेति वा बोध्यम् । इदमिति । कुत्वस्य षत्वजश्त्वापवादत्वमित्यर्थः । नन्वेवं क्विन्प्रत्ययस्य कुरिति सूत्रे प्रत्ययग्रहणमतद्गुणसंविज्ञानबहुव्रीहिविज्ञानार्थं, तेन संप्रति क्विनोऽभावेपि कुत्वम् । मानो अस्राक् मानो अद्रागिति भाष्ये उक्तम्, तद्विरुध्येत । कुत्वस्य षत्वापवादत्वाभावे रज्जुसृड्भ्यामित्यादाविव कुत्वमपवादत्वाद्बाधित्वा षत्वापत्तेरिति चेन्न । तत्प्रयोगद्वयस्यापि छान्दसत्वेन छन्दसि सर्वविधीनां वैकल्पिकतया तत्रेडभावाडागमयोरिव षत्वाप्रवृत्तेरपि सुवचतया तदनुरोधेन भाष्यानुक्त-

अनुदके किम् । उदकस्पर्शः । अन्तोदात्तत्वमिति । नित्त्वादाद्युदात्तत्वं प्राप्तम् । कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादाह—कुत्वात्पूर्वमिति ॥

---

वीप्सागर्भबहुव्रीहिणाऽपवादत्वकल्पनाया अयुक्तत्वात् । किञ्च षत्वस्य कुत्वापवादत्वं न नागेशाभिमतं, कुत्वाप्राप्तियोग्ये सृष्टमित्यादौ षत्वस्य चारितार्थ्यात् । नच पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनात्तस्य निरवकाशत्वमिति वाच्यम् । साहचर्यस्यासार्वत्रिकत्वात् । तत्र चैतद्भाष्यप्रयोगस्यैव मानत्वात् । विश्वसृडित्यादि तु रज्जुसृड्भ्यामुपयट्काम्यतीत्यादिभाष्यप्रयोगात्सपूर्वपदे कुत्वाभावकल्पनेनैव साधनीयम् । असृक्शब्दस्त्वस्यतेरौणादिके ऋज्प्रत्यये बोध्यः । अत एव नपुंसकलिङ्गप्रकरणेऽस्यैव न्याय्यत्वमभिहितं ग्रन्थकृता । सृजियज्योः पदान्ते षत्वस्य कुत्वापवादत्वाङ्गीकारे तदनङ्गीकारे वा असृक्शब्दस्यैवङ्गैव व्युत्पत्तिरुचितेत्येव तदाशयो बोध्यः । एतेन केचित्तु क्विन्प्रत्ययस्य कुरिति सूत्रे भाष्ये प्रत्ययग्रहणमतद्गुणसंविज्ञानबहुव्रीहिविज्ञानार्थम् । तेन संप्रति क्विनोऽभावेऽपि कुत्वं, मानो अस्राक्, मानो अद्रागित्युक्तम् । तदेतत्कुत्वस्य षत्वापवादत्वाभावे न संगच्छते । रज्जुसृड्भ्यामित्यादाविव कुत्वमपवादत्वाद्बाधित्वा षत्वापत्तेः । न चोपयट्काम्यति रज्जुसृड्भ्यामिति भाष्यप्रयोगौ कथं संगच्छेतामिति वाच्यम् । क्विन्प्रत्ययो यस्मादिति बहुव्रीह्यवधित्वस्य सृजौ निरुपपदलक्षणस्य यजावनुपसर्गोपपदलक्षणस्यैवाश्रयणेनादोषादित्याचार्योक्तं भट्टोक्तं चापास्तम् । अत्र केचित्त्विति वदतामाचार्याणामप्यस्यार्थस्यानभिमतत्वसूचनात् । उदकस्पर्श इति । इत्येव यथा स्यादित्येतदर्थमनुदकग्रहणमिति भावः । अन्यथा वासरूपन्यायेनाणि अस्य सिद्धत्वेऽपि पक्षे क्विना उदकस्पृगित्यपि स्यादित्याशयः । एतेनोदकस्पृडिति प्रत्युदाहरणमुचितम् । उदकस्पर्श इति तु न युक्तम् । वासरूपन्यायेन कर्मण्यण इष्टत्वादित्याचार्योक्तमपास्तम् ॥

र्वोरु ॥ 'सिपि धातोः' इत्यतो धातोरिति वर्त्तते, तच्च र्वाभ्यां विशेष्यते । पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वेऽल्लोपो न स्थानिवत् । पूर्वत्रासिद्धे तन्निषेधात् । नुम्वि । 'इण्कोः' इति वर्तते । व्यवधानेऽप्राप्तेरिदम् । अयमप्यधिकारः । अत एव 'निंस्स्व' इत्यत्र धातोः सस्य नानेन षत्वम् । व्यवायशब्दस्य प्रत्येकं सम्बन्धो व्याख्यानात् । तदाह—प्रत्येकमिति । अपिनाऽव्यधानेऽपि । नुम्स्थानिकेति । प्रकृतसूत्रस्थं हयवरट्सूत्रस्थञ्च भाष्यमत्र मानम् । नश्चेति ष इति । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यता-

---

विशेष्यत इति । तेन प्रियग्रामणिरित्यादौ न दीर्घ इति भावः । तन्निषेधादिति । अत्रत्यं तत्त्वं न पदान्तसूत्रस्थगुरुप्रसादादवसेयम् । अप्राप्तेरिति । तस्मादिति परिभाषोपस्थित्येति भावः । अयमपीति । अपिना इण्कोरित्यस्य समुच्चयः । अत एवेति । अधिकारत्वादेवेत्यर्थः । नानेन षत्वमिति । अन्यथा नुमा व्यवहितस्येणः परस्य धातुसकारस्याप्यनेन षत्वापत्तिः । अधिकारत्वे त्वेतदेकवाक्यतयाऽऽदेशप्रत्यययोरिति सूत्रमेव षत्वविधायकमिति न धातुसकारस्य षत्वापत्तिरिति भावः। प्रत्येकं संबन्ध इति । द्वन्द्वान्ते श्रूयमाणत्वादिति भावः । व्याख्यानादिति। प्रकृतसूत्रस्थभाष्यरूपादित्यर्थः। तत्र हि निंस्स्व, निंस्से इत्यत्र प्रत्ययसकारस्य षत्ववारणाय कृतं 'नुम्व्यवाये निसेः प्रतिषेध' इति वार्तिकं व्यवाय इत्यस्य प्रत्येकं संबन्धमाश्रित्य प्रत्याख्यातम् । अत्रेति । विशिष्टोपलक्षणत्व इत्यर्थः । तत्र विशेष्यांशे आद्यं, विशेषणांशेऽन्त्यं चेति विवेकः। तत्राद्ये निंस्स्वेत्यत्र प्रत्ययसकारस्य षत्ववारणाय कृतं 'नुम्व्यवाये निसेः प्रतिषेध' इति वार्तिकं व्यवाय इत्यस्य प्रत्येकं संबन्धमाश्रित्य प्रत्याख्यातम्। नुम्ग्रहणस्यानुस्वारोपलक्षणत्वानङ्गीकारे नुमा व्यवाया-

यान्त्रिपादीस्थस्याप्रवृत्तेर्हल्ङ्यादिलोपोत्तरं विविश् स् इत्यवस्थायां षत्वस्यासिद्धत्वात्संयोगान्तलोपे ष इत्यर्थः। कलोप इति। पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वादिति भावः। तडिति।

---

भावेन षत्वाप्राप्तौ वार्तिकारम्भस्तत्प्रत्याख्यानं चासङ्गतं स्यात्। अन्त्येऽवश्यं नुमो ग्रहणं कर्तव्यमनुस्वारविशेषणं नुम्ग्रहणं, नुमो योऽनुस्वारस्तत्र यथा स्यात्। इह माभूत्। पुंस्वित्युक्तम्। तेन विशेषणांशः स्पष्टमेवोक्त इति बोध्यम्। एतेन प्रकृतसूत्रस्थं भाष्यं व्यवाय इत्यस्य प्रत्येकं संबन्धे मानमित्याचार्योक्तमपास्तम्। नुम्स्थानिकेतीति प्रतीकमुपादाय प्रवृत्तेऽत्रेत्यनेन व्यवहितपरामर्शस्यास्वारासिकत्वात्। तत्रापीदं मानमिति त्वन्यदेतत्। ननु षत्वस्यासिद्धत्वात्संयोगान्तलोप इति मूलमयुक्तं, षत्वप्रवृत्तिवेलायां संयोगान्तलोपस्य प्राप्त्यभावात्। जातस्य तस्यासिद्धत्वप्रतिपादनानुपयोगादित्याशङ्क्य तयोर्यौगपद्यं दर्शयति। सपादसप्ताध्यायीस्थेति। इदं च पूर्वमात्रोपलक्षकम्। वाचिक्रादिसिद्धये पूर्वत्रेत्यस्य विषयसप्तमीत्वादिति भावः। यद्यप्यत्र षत्वस्य पूर्वप्रवृत्तौ परप्रवृत्तौ वा न फले विशेषः, तथापि शिष्यबुद्धिवैशद्याय न्याय्यः क्रमः प्रदर्शित इति बोध्यम्। ननु संयोगादिलोपस्यासिद्धत्वात्संयोगान्तलोपः कुतो नेत्यत आह। अपवादत्वादिति। तक्रन्यायेनेति भावः। एतेन संयोगादिलोपोत्तरं तस्यासिद्धत्वात्पुनस्संयोगान्तलोपः कुतो नेति शङ्का निरस्ता। न च संयोगान्तलोपोत्तरमस्य चारितार्थ्याभावात्कथं तक्रन्यायविषयतेति वाच्यम्। संयोगादित्वस्योपलक्षणत्वेन कृते चारितार्थ्यस्य सुवचत्वात्। किञ्च संयोगान्तलोपोत्तरं चारितार्थ्याभावेऽपि तत्प्रवृत्तिसमकालमस्यापि प्रवृत्तौ बाधकाभावेन सर्वथा निरवकाशत्वाभावात्तक्रन्यायेनैव बाधकत्वं वाच्यम्। त्रिपाद्यामपि तक्रन्यायप्रवृत्ताविदमेव मूर्धाभिषिक्तमुदाहरणमिति बोध्यम्। ननु परेश्च घाङ्कयोरिति सूत्रस्थभाष्यरीत्या एभ्यः क्विपोऽनभिधानावश्यकत्वेनेदमसङ्गतमत आह।

तक्ष्णोतेः क्विप् । ण्यन्तात्भ्यामिति । णिलोपस्य स्थानिवत्त्वात् 'तक्स्थाता' इत्यादौ संयोगादिलोपाप्राप्तेः 'काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता' इति 'परेश्च घाङ्कयोः' इति सूत्रस्थभाष्येण न विरोधः । तत्र झल्परसंयोगादिलोपमाशङ्क्य तथोक्तम् । तस्य दोष इति । 'क्वौ लुप्तम्' इति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः । कुत्वस्यासिद्धत्वादिति । पिपच् स् इत्यवस्थायाङ्कुत्वस्यासिद्धत्वात् तदभावे 'स्कोः' इत्यस्याप्राप्तेः संयोगान्तलोप इति भावः । दिधगिति । 'दादेः' इति घः । 'एकाचः' इति भष्भावः ॥

विद्वानिति । विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्त्वाद् गुणाभावे उगित्त्वान्नुमि 'सान्त' इति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न । वसोः । प्रत्ययग्रहणे तदन्तग्रहणं, भस्येत्यधिकारः, तदाह—वस्वन्तस्येत्यादि । न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैव ग्रहणं स्यात् न लिडादेशक्वसोरिति वाच्यम् ।

---

णिलोपस्येति । न विरोध इति । तेन संयोगादिलोपप्राप्तियोग्योदाहरणानामेवानभिधानलाभादण्यन्तविषय एवानभिधानं, नतु ण्यन्तविषयेऽपीति भावः । नन्वेवमपि क्वौ लुप्तमिति निषेधः कुतो नेत्यत आह । असार्वत्रिकमिति । सति गमके क्वचित्प्रवर्तत एव । क्वौ विधिं प्रतीत्येव तु सार्वत्रिकमित्यन्यत्र निरूपितम् । कुत्वस्यासिद्धत्वादिति मूलाशयमाह । इत्यवस्थायामिति । कुत्वस्यासिद्धत्वादिति । संयोगान्तलोपदृष्ट्येति भावः । मूले स्कोरिति कलोपं प्रतीतित्वपपाठः । अप्राप्तेरिति । एतेन कुत्वस्यासिद्धत्वादित्यपपाठः । सनोऽल्लोपस्य स्थानिवद्भावेनापि संयोगादिलोपवारणसंभवादिति केषां चिदुक्तिः परास्ता । उक्तरीत्या तस्य प्राप्तेरेवाभावेन स्थानिवद्भावपर्यन्तानुधावनस्य व्यर्थत्वात् ॥

वसुसादेशेन तस्यापि अनुबन्धकत्वादिति भाष्ये स्पष्टम्। विदुष इति। सम्प्रसारणपूर्वत्वस्य 'षत्वतुकोः' इत्यसिद्धत्वं तु न। पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वात्। सेदिवानिति। षद्लृधातोः 'भाषायां सद' इति लिटः क्वसौ द्वित्वे 'अत एक' इत्येत्वाभ्यासलोपयोः 'वस्वेकाजाद्' इतीट्। अक्रूनेति। परे तु पदावधिकेऽन्वाख्याने सेद् वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति सेदुष इत्यादिसिद्धिरित्यक्रूनव्यूहपरिभाषा

---

अनुबन्धकत्वादिति। एवं च द्वयोरपि अनुबन्धकत्वादेकानुबन्धकस्याभावेन न तत्परिभाषाप्रवृत्तिरिति भावः। नचैवमपि वसु स्तम्भ इति धातोरेकानुबन्धकत्वात्तस्यैव ग्रहणं स्यादिति वाच्यम्। एवं सति सामान्यग्रहणार्थस्य वसुमस्सकारस्य वैयर्थ्यापत्तेः। नच धातोरपि ग्रहणं स्यादिति वाच्यम्। शत्रादेशवसोः स्थानिवद्भावेनैवोगित्त्वे लब्धेऽत्र सामान्यग्रहणार्थं कृतेनोकारानुबन्धेन अनुबन्धकयोः क्वसुवसोरेवात्र सामान्यग्रहणं, न त्वेकानुबन्धकस्य धातोरपीति ज्ञापनेन सकलेष्टसिद्धिरित्याशयात्। पदान्तपदाद्योरेकादेशस्यैवेति। अत एव वृक्षेच्छत्रमित्यादौ ह्रस्वत्वप्रयुक्तश्छे चेति नित्यस्तुङ्न। किन्तु दीर्घत्वप्रयुक्तः पदान्ताद्वेति वैकल्पिक एवेति भाष्ये स्पष्टम्। मूलं दूषयन्स्वसिद्धान्तमाह। परे त्विति। प्रतिपदविधित्वेनेति। ननु नियमशास्त्राणां विधिमुखेन प्रवृत्तेः स्वसिद्धान्तत्वेन वस्वेकाजाद्घसामितीटोऽपि प्रतिपदविधित्वमिति चेन्न। आर्धधातुकस्येति सूत्रविहितस्येटोऽनुवादरूपत्वेन प्रतिपदविधित्वाभाव इत्याशयात्। किंचैवं सति नित्यत्वात्संप्रसारणे रूपसिद्धिरव्याहतैवेत्यन्यत्र विस्तरः। ननु क्रमिकान्वाख्याने परिभाषा

निष्फला । लक्ष्यानुरोधादत्र पदावधिकमेवान्वाख्यानमित्याहुः । साहचर्यादिति । न च महत्यतेः क्विपि महतोऽपि धातुत्वसम्भव इति वाच्यम् । औपदेशिकधातुत्वासम्भवेन तत्साहचर्येणौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । सुहिनिति । नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न । हिंसीत्यस्येदित्त्वात् 'अनिदिताम्' इति नलोपो न । ध्वदिति । ध्वंसु अवस्रंसने, क्विप् । अनिदित्त्वान्नलोपः । 'वसु' इति दत्वम् ॥

विवक्षिते इति । भाष्ये 'असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात्' इत्युक्तेरिति भावः । वस्तुतो वचनमेव ज्यायः । विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं परमपुमानित्यादौ स्वरप्रवृत्तौ दोषात् । बहुपुंसीति । विभक्तौ

---

आवश्यिक्येवेत्यत आह । लक्ष्यानुरोधादिति । धातुभिन्नसान्तेति । धातुभिन्नसम्बन्धिसान्तेत्यर्थः ।

सर्वनामस्थान इत्यस्य विषयसप्तमीत्वेन व्याख्याने बीजमाह । भाष्ये इति । एवं चोपदेशिवद्वचनेन सर्वनामस्थान इत्यस्य विषयसप्तमीत्वेन व्याख्या बोध्यत इति तदाशयः । स्वरसिद्ध्यर्थमिति । परमपुमानित्यत्रासुङोऽकारस्य समासान्तोदात्तत्वसिद्ध्यर्थमिति भावः । अन्यथा अन्तरङ्गत्वादादौ पुंशब्दोकारस्य समासान्तोदात्तत्वे सकारस्य स्रंसनधर्मिणो हलः स्थाने जायमान आदेश आन्तरतम्यादनुदात्त एव स्यादिति भावः । स्वसिद्धान्तमाह । वस्तुत इति । वचनमेवेति । उपदेशिवद्वचनमेवेत्यर्थः । ज्यायस्त्वे हेतुमाह । विवक्षितसप्तम्यामपीति । ततः पूर्वमिति । विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गादसुङः पूर्वमित्यर्थः । स्वरप्रवृत्तौ=समासान्तोदात्तत्वप्रवृत्तौ । नन्वत्र लिङ्गविशिष्टपरिभाषया असुङ् कुतो नात आह । विभक्ताविति । ननु मूलमते सर्वनाम-

लिङ्गविशिष्टाग्रहणान्नासुङ्। विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः। पूज इति। पातेरिति पाठान्तरम्'। 'स्त्रियाम्' इति सूत्रे भाष्ये तु 'सूतेः सस्य पः, ह्रस्वः, म्सुन्प्रत्ययः' इत्युक्तम्। वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला। पुमानिति। 'सान्त' इति दीर्घः। उशनेति। वशेः कनसि 'ग्रहिज्या' इति संप्रसारणम्। अस्य संबुद्धाविति। एतच्च वृत्तौ वाचनिकं पठितम्। वशधातौ माधवस्तु—'सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्' इति श्लोकवार्त्तिकमित्याह। भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रामाणिकाः। उशना—शुक्रः। अनेहा—कालः। 'नञि हन एह च' इत्यसुन्, हन एहादेशश्च। सुव इति। अधातोरित्यस्य धात्ववयवभिन्नासन्तस्येत्यर्थ इति भावः। अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम्॥

अदस औ। अदस इति षष्ठी। 'तदोः सः' इत्यतः साविति वर्त्तते। औत्वं त्यदाद्यत्वापवादः। ननु 'सोडौ' इत्येवास्तु इति चेन्न। असावित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे

---

स्थान इत्यस्य विषयसप्तमीत्वेन परत्वादन्तरङ्गत्वाच्च ङीपं बाधित्वाऽसुङि रूपासिद्धिरत आह। विभक्तिविवक्षाया इति। मूलं खण्डयति। वस्तुत इति। उच्चारणार्थानामिति। अस्य विधेयविषय इत्यादिः। इयमुक्तिः= उकारस्योच्चारणार्थत्वोक्तिः। निष्फलेति। लाघवाभावादिति भावः॥

त्यदाद्यत्वापवाद इति। तक्रन्यायेनेति भावः। इत्येवास्त्विति। अदसस्सोर्डावित्येवास्त्वित्यर्थः। सत्वं बाधित्वेति। नचैतद्विषयकत्वेनोपप्लुतं तदोस्सस्साविति सूत्रं निरवकाशमिति वाच्यम्। असुक इत्यत्र तच्चारिताध्र्यात्।

'असौ' इत्यसिद्धेः । असुक इति । अमुक इत्यादौ त्वव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्द इत्याहुः । एत ईत् । बहुवचनशब्दो यौगिक इत्याह—बह्वर्थेति । तेन अमी इति सिद्धम् । पश्चादुत्वेति । उत्वेत्युपलक्षणमीत्वस्यापि । ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह—न मु ने इति । कर्त्तव्ये कृते चेति । एवञ्च ने इति विषयसप्तमीति भावः । भाष्ये तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोऽप्याक्षिप्त इति व्याख्यातम् । मु इति समाहारद्वन्द्वः । कृते चेत्युक्तेर्मुत्वे 'सुपि च' इति दीर्घो न । अमीभिरिति । 'नेदमदसोः' इत्यैस् न ॥

इति हलन्ताः पुँल्लिङ्गाः ॥

---

तेनेति । अन्यथा एकारस्य बहुवचनपरत्वाभावादसिद्धिरिति भावः । उपलक्षणमिति । एवं च विभक्तिकार्यं प्रागिति मूलग्रन्थस्य मध्यमणिन्यायेन पूर्वान्वयित्वमपीति बोध्यम् । न इत्यस्यावृत्तिरिति कैश्चिदुक्तमयुक्तमिति सूचयन्नाह । विषयसप्तमीति । अत्र शास्त्रे परसप्तमीत्वस्य न्याय्यत्वादिदमयुक्तमिति सूचयन् सिद्धान्तमाह । भाष्ये त्विति । आक्षिप्त इति । नाभावेऽपि मुभावस्य सिद्धत्वमाचार्यः स्मरतीत्यनुमीयत इति भावः । एकवचनोपपत्तये आह । समाहारद्वन्द्व इति । मकारोकारयोरिति भावः । दीर्घो नेति । यद्यपि सन्निपातपरिभाषयाप्यत्र दीर्घो वारयितुं शक्यः, तथापि तदनित्यत्वे इदमपि ज्ञापकमिति भावः ॥

॥ इति हलन्ताः पुंलिङ्गाः ॥

नहो धः ॥ 'झलो झलि' इत्यतो झलीति, पदस्येति, 'स्कोः' इत्यतोऽन्त इति चानुवर्त्तते। झलि परे पदान्ते विद्यमानस्येत्यर्थः। 'अलोऽन्त्यस्य' इत्येतल्लब्धं हस्येति। उपपूर्वात् णह बन्धने इत्यतः क्विप्। 'नहिवृति' इति पूर्वपदस्य दीर्घः। सोर्हल्ङ्यादिलोपे धत्व-जश्त्वचर्त्वादि। दलोपषत्वे इति। पूर्वपदान्तस्य लोपो, धातोः सस्य षत्वम्। 'आदेशप्रत्यययोः' इति तु न षत्वम्। पदादू आदि-रिति पक्षे 'सात्पदाद्योः' इति निषेधात्। हस्य घ इति। कैयटादि-मते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः। 'उष्णिगञ्चु' इति निर्देशात्कुत्वस्य जश्त्वे नासिद्धत्वम्। स्वरीत्या तु ढडगका इति बोद्ध्यम्। द्यौरिति। 'दिव औत्' इत्यौत्वं, यण्। चतस्र इति। परत्वादामं बाधित्वा चतस्रादेशो सकृद्गतिन्यायात्पुनराम् नेति स्थानिवत्सूत्रे भाष्ये। चतसृणामिति। 'न तिसृ' इति दीर्घनिषेधः। सर्वावदिति। सर्वाशब्दवदित्यर्थः। अत एव 'सर्वनाम्नो वृत्तिमात्रे'

---

पदान्ते विद्यमानस्येति। विद्यमानस्य चेत्यर्थः। पदान्तवृत्तित्वं तादात्म्येनैव ग्राह्यमित्यधस्तान्निरूपितम्। हो ढ इत्यतो ह इत्यस्यानुवृत्तिरिति भ्रमनिरासायाह। अलोऽन्त्यस्येति। क्विबिति। बाहुलकात्कर्मणि संपदा-दित्वात्क्विबिति भावः। गतिकारकोपपदानामिति कृदन्तेन समासे पदस्यादिरिति पक्षे निषेधाप्राप्तेराह। इति पक्ष इति। सिद्धान्तभूते इत्यर्थः। एवं च षत्वांशे निपाताश्रयणं सिद्धान्तरीत्येति बोध्यम्। ननु कुत्वेन हस्य घ इति मूलमयुक्तं, कुत्वस्यासिद्धत्वात्पूर्वं ढत्वस्य न्याय्यत्वादत आह। कैयटादीति। प्रत्ययग्रहणसामर्थ्याद्धीप्सागर्भबहुव्रीह्याश्रयणपराक्विन्प्रत्ययस्य कुरिति सूत्रस्थ-कैयटादीत्यर्थः। नन्वेवं कुत्वस्यासिद्धत्वाज्जश्त्वं न स्यादत आह। निर्देशादिति। यणिति। 'नाजानन्तर्यं इति निषेधाद्यण्यौत्वस्यासिद्धत्वं नेति भावः। अत

इति न पुंवत्त्वम् । शब्दपरस्य कदाऽपि सर्वनामत्वाभावादिति भावः । यः सौ । पुंस्यया बाधात्, क्लीबे सोर्लुका लोपात्, स्त्रियामिदम् । वागिति । वचेः 'क्विब् वचि' इत्यादिना क्विप्, दीर्घोऽसम्प्रसारणञ्च । अपो भि । 'अच उपसर्गात्तः' इत्यनुवर्त्तते । अबिति न प्रत्ययो व्याख्यानात् । दिगिति । दिश अतिसर्जने, क्विप् । षडगकाः प्राग्वत् । त्विष गतौ, अस्मात् क्विप्, जश्त्वचर्त्वे, जुषी प्रीतीत्यतः क्विप् । सहस्य सभावे सजूः । अमूभिरिति । अदन्तत्वाभावादेत्वाभावेन 'एत ईत्' इत्यस्याभावे मूत्वमेव ॥

इति हलन्ताः स्त्रीलिङ्गाः ॥

---

दत्वमिति । 'वसुस्रंसु' इत्यस्य पदाधिकारस्थत्वात्तदन्तेऽपि दत्वम् । एवमाङ्गत्वादामपि । पूर्वपदस्येवेति । प्रत्ययलक्षणेनेति भावः । अत एव राजपुरुषादौ नलोपादिसिद्धिः । उत्तरपदत्वे चेति । उत्तरशब्देनोत्तरपदं लक्ष्यते । उत्तरपदशब्दश्च समासचरमावयवे

---

एवेत्यस्यार्थमाह । शब्देति । सर्वनामत्वाभावादिति । शब्दपरस्य प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वाभावादिति भावः । व्याख्यानादिति । अद्भिस्संस्कृतमिति निर्देशदर्शनमूलकादित्यर्थः । मूत्वमेवेति । सर्वत्र स्त्रियामिति भावः ॥

॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

---

आमपीति । स्वनडुांहीत्यादौ तदन्तेऽपि प्रवर्तत इत्यर्थः । अत एवेति । पूर्वस्य पदत्वादेवेत्यर्थः । समासचरमावयव इति । अत्र समासग्रहणं वृत्तिमात्रोपलक्षणम् । समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवदित्यादौ समासपदस्य वृत्तिमात्रोपलक्षकताया दृष्टत्वात् । अत एवात्रय इत्यादिसिद्धिः । अन्यथा

**रूढः। तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्तव्ये लुमता लुप्ते प्रत्यय-लक्षणं न। पदादिविधौ त्वयं निषेधो नेत्यर्थः। तेन परमवाचेत्यादौ न कुत्वं, दधिसेचावित्यादौ 'सात्पदाद्योः' इति षत्वनिषेधश्च।**

---

अत्रिशब्दप्रकृतिकषष्ठ्यन्तादपत्येऽर्थे इतश्चानिञ इति ढकि तस्यात्रिभृगुकुत्सेत्या-दिना लुकि जसि गुणेऽन्तर्वर्तिनं सुपमादाय पदत्वादेङः पदान्तादतीति पूर्वरूपे तदसिद्धिः स्पष्टैव। एवं काश्यपशब्दात्काश्यपकौशिकाभ्यामृषिभ्यां णिनिरिति णिनिप्रत्यये ततोऽध्येत्रणि तस्य प्रोक्ताल्लुगिति लुकि काश्यपिनावित्यादौ नलोपो न। अन्यथाऽस्य समासचरमावयवत्वाभावेन प्रकृतनिषेधाप्रवृत्तौ प्रत्ययलक्षणेन सुबन्तत्वात्पदत्वे नलोपापत्तिः। एवं जम्ब्वाः फले जम्ब्वा-वित्यादौ फले लुबिति लुपीकोऽसवर्ण इति प्रकृतिभावोऽपि न भवति। एवं च बहुसेचावित्यादावप्यनेनैव प्रत्ययलक्षणप्रतिषेधस्य सिद्धतया बहुच्पूर्वस्य चापदा-दिविधाविति वार्तिकमपि नापूर्वं, किन्तु तत्रैव तात्पर्यग्राहकमिति बोध्यम्। एतेन प्रत्याख्यानप्रकार एव युक्तः। उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षण-प्रतिषेधः, बहुच्पूर्वस्य चापदादिविधाविति वचनद्वयापेक्षया प्रत्याख्यानस्य लघुत्वात्। किञ्च वचनारम्भे काश्यपेन प्रोक्तमधीयते काश्यपिन इत्यादौ नलोपापत्तिः। किंच जम्ब्वाः फले जम्ब्वावित्यत्रेकोऽसवर्ण इति प्रकृतिभावा-पत्तिरित्याचार्योक्तमपास्तम्। तस्येति। वृत्तिचरमावयवस्येत्यर्थः। उत्तरशब्दस्य पदत्व इत्यनेन षष्ठीसमास इति भावः। तत्प्रयुक्तेति। पदत्वपदं तत्प्रयुक्तकार्ये लाक्षणिकमिति भावः। पदत्वेति विशेषणस्य फलन्तु बहुपरिव्राजकेत्यादावसुप इति निषेधस्य प्रत्ययलक्षणेन सिद्धिः। इत्यर्थ इति। फलितार्थ इत्यर्थः। लाघवात्पर्युदासस्यौचित्यात्। उत्तरपदत्वे चेति निषेधस्यापदादिविधावित्यस्य च क्रमेण फलं दर्शयति। तेनेति। उभयेनेत्यर्थः। ननु सोपपदाद्विचि गति-कारकोपपदानामिति सुबुत्पत्तेः प्राक्समासे सिच्छब्दस्य कथं पदत्वमत आह।

**निरुपपदादेव क्विचि षष्ठीसमासोऽत्र । सोपपदात्क्विचोऽनभिधानमिति कैयटः । सेचयतेः क्विबित्यन्ये । पदादिविधिश्च प्रतिपदोक्तत्वात् 'सात्पदाद्योः' इत्येव । तेन परमबुधावित्यादौ भष्भावो न । उत्तरपदादिः, कर्णो वर्णलक्षणात्' इत्यादौ तूत्तरपदशब्दस्य समासचरमावयवमात्रे रूढेर्न दोषः । अयञ्च निषेध उत्तरपदस्य कार्यित्व**

---

**निरुपपदादेवेति** । सिञ्चत इति सेचौ क्विप्, गुणः, दध्नः सेचाविति समास इति भावः । नन्वेवमपि सोपपदात्क्विपि दधिषेचाविति स्यादेव । न चेष्टापत्तिः । पदादादिरिति पक्षे तस्य दुर्लभत्वादत आह । **सोपपदादिति । अनभिधानमिति** । तस्य छान्दसत्वादिति भावः । **कैयट** इत्यनेन सूचितामरुचिं प्रकटयन्नाह । **सेचयतेरिति** । क्विचोऽसार्वत्रिकत्वादिदमेव न्याय्यमित्याशयः । **भष्भावो नेति** । तस्य वस्तुतः पदादेः कार्यविधायकत्वेऽपि पदादिशब्दानुवादेन विधायकत्वाभावादपदादावित्यस्याप्रवृत्तावुत्तरपदत्वे चेति प्रत्ययलक्षणप्रतिषेधाद्भष्भावो नेति भावः । ननूत्तरपदत्वे चेतिवार्तिकारम्भे शुक्लकर्ण इत्यादावुत्तरपदादिरित्यधिकृत्य विहितः 'कर्णो वर्णलक्षणादि'ति स्वरो न स्यात् । कर्णशब्दस्य पदत्वाभावादत आह । **उत्तरपदशब्दस्येति । मात्र इति** । अनेन पदत्वव्यवच्छेदः । तत्र पदपदं पदत्वयोग्यपरमिति भावः । यत्तु ननु सात्पदाद्योरित्येवेत्यसङ्गतम् । उत्तरपदादिः, कर्णो वर्णलक्षणादिति विध्यन्तरस्यापि सद्भावादित्याशङ्क्याह । उत्तरपदादिरितीत्याचार्या, अन्ये चावतारयन्ति । तदसत् । सामान्यतः पदादिविधेर्ग्रहणेऽपि शुक्लकर्ण इत्यादौ ककारस्यैव पदादित्वेन स्वरस्य पदादिविधित्वाभावादपदादिविधावित्यस्याप्राप्तेः । स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावेऽप्यादिव्यपदेशेऽविद्यमानत्वाभावात् । स्पष्टं चेदं कैयटोद्योतयोः । माषकुम्भवापेनेत्यादौ पदव्यवायेऽपीति निषेधसिद्धये आह । **अयं च निषेध इति । कार्यित्व एवेति** । इदं चापदादिविधाविति

एवेति ङमुट्सूत्रे उक्तम् । बहुच्पूर्वके 'बहुवाचौ' 'बहुसेचौ' इत्यादावपि न दोषः। 'बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणम्' इति वचनान्तरात् । पूर्ववार्त्तिकमपि 'उत्तरपदत्वे च पदादिविधौ' इत्येवमेव पठितम् । एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितं, प्रत्याख्यानोत्तरं पुनर्नञ्घटितैतद्वचनपाठेनेति

---

पर्युदासाल्लभ्यते । पदादिविधेरुत्तरपदसम्बन्धित्वेन तद्भिन्नस्यापि प्रत्यासत्त्या तत्सम्बन्धिन एव ग्रहीतुमुचितत्वात् । अत्रत्यं तत्त्वं ङमुट्सूत्रे प्रपञ्चितम् । उत्तरपदशब्दस्य वृत्तिचरमावयवपरत्वाज्ञानेन प्रवृत्तैकदेशिभाष्यानुरोधेन बहुच्पूर्वेऽतिप्रसङ्गं वारयति । वचनान्तरादिति । अत्र पदादिविधिरिति नापूर्वं, किन्त्वनुवृत्तिलभ्यमिति सूचयितुमाह । पूर्ववार्तिकमपीति । पठितमिति । विधिसूत्रे इति भावः । नन्वेतावता वार्तिकारम्भपक्ष एव समर्थितो न भाष्योक्तः प्रत्याख्यानपक्ष इत्यत आह । एतदिति । गुरुतर इति । तृतीयवाक्ये भिन्नावधिकया भसंज्ञयाऽवयवसुबन्तस्य पदत्ववारणार्थं सुप्तिङन्तमित्यतस्सुबित्यस्य मण्डूकानुवृत्तौ वाक्यभेदाङ्गीकारे च गौरवम् । तथा द्वितीयवाक्येऽपि प्रत्ययग्रहणपरिभाषया तदादेरित्यस्योपस्थित्या तदादेः स्वादिष्विति प्राप्तपदसंज्ञानिषेधेऽप्यवयवस्य सुप्तिङन्तमिति प्राप्तपदसंज्ञानिषेधस्य दुर्वचत्वेन तदर्थं तत्रापि सुबित्यस्यानुवृत्त्या वाक्यभेदेनावयवसुबन्तस्यापि पदसंज्ञानिषेधे गौरवम् । किंचात्र पक्षे दधिसेचावित्यादौ सात्पदाद्योरिति षत्वनिषेधसिद्धये पदादादिः पदादिरिति पञ्चमीसमासस्याश्रयणीयत्वेन तत्पक्षे कुमारीष्वित्यादौ षत्वनिषेधवारणाय सात्प्रतिषेधस्य स्वादिष्विति या पदसंज्ञा तामादाय निषेधाप्रवृत्तिरित्यर्थज्ञापकत्वे च गौरवम् । एवमपि बहुसेचावित्यादौ निषेधासिद्ध्या तदर्थं सात्पदाद्योरित्यत्र बहुच्पूर्वस्य चेति वचनान्तरकरणे चात्यन्तं गौरवमिति भावः । नन्वेवमपि पूर्वदण्डिप्रिय इत्यादाववान्तरतत्पुरुषे दण्डिशब्दस्योत्तर-

**न स लिखितः । उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं, व्याख्यानात् । तेन 'पूर्वदण्डिप्रियः' इत्यादाववान्तरतत्पुरुषोत्तरपदेऽपि नलोपादिसिद्धिः । कादेशो नेति । इदंशब्दे 'यः सौ' इति च नेत्यपि बोध्यम् ॥**

---

पदत्वेन प्रत्ययलक्षणनिषेधात्पदत्वाभावे नलोपो न स्यादत आह । **उत्तरपदशब्देनेति** ॥

**मध्यमत्वानाक्रान्तेति** । तत्त्वं च यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता, तद्वृत्तिविशिष्टत्वम् । वैशिष्ट्यं च स्वघटकत्वस्वघटकार्थवदव्यवहितोत्तरत्वस्वघटकार्थवदव्यवहितपूर्वत्वैतत्त्रितयसंबन्धेनेत्यन्यत्र निरूपितम् । यद्यपि यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता, तादृशवृत्तिघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वमेव वृत्तिचरमावयवत्वमिति विवक्षणाद्दण्डिन्नित्यस्य वृत्तिचरमावयवत्वाभावादिदं विशेषणमनावश्यकमेव, तथापि तत्रैव तात्पर्यग्राहकमिदमिति बोध्यम् । एतेन वचनारम्भे पूर्वदण्डिप्रिय इत्याद्यर्थं मध्यमत्वानाक्रान्तेति विशेषणेऽतिगौरवमित्याचार्योक्तमपास्तम् । यदपि बहुचर्मिकेत्यत्र वचनारम्भे नलोपानापत्तिः । प्रत्ययलक्षणप्रतिषेधेन पदत्वाभावात् । कप्रत्ययनिमित्तं पदत्वं तु समुदायस्य, ततश्च यत्प्रातिपदिकं चर्मन्निति, न तत्पदम् । यच्च पदं बहुचर्मन्निति, न तत्प्रातिपदिकमिति नलोपो दुर्लभ इति प्रत्याख्यानप्रकार एव युक्त इत्याचार्यास्तन्न । यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता, तद्वृत्तिविशिष्टत्वमुत्तरपदत्वं, वैशिष्ट्यं च स्वघटकत्वस्वघटकपदसंज्ञाप्रयोजकप्रत्ययाव्यवहितपूर्वत्वाभाववत्त्वमित्येतदुभयसंबन्धेनेति विवक्षणेन चर्मन्नित्यस्योत्तरपदत्वाभावेन प्रत्ययलक्षणनिषेधाप्रवृत्त्या दोषाभावात् । पूर्वदण्डिप्रिय इत्यादौ दण्डिन्नित्यस्य निरुक्तोत्तरपदत्वस्य सत्त्वेऽपि मध्यमत्वाक्रान्तत्वेन न निषेधप्रसक्तिः । अस्तु वा वाराणसेयोक्तदिशा स्वघटकत्वस्वघटकार्थवदव्यवहितपूर्व-

त्वाभाववत्त्वैतदुभयसंबन्धेन वृत्तिविशिष्टत्वमेवोत्तरपदत्वम्। एवमपि बहुचर्मि-केत्यादावदोषः। स्वादिष्विति पदत्वमाश्रित्य नलोपस्य सुलभत्वात्। न च तेन समुदायस्य पदत्वेऽपि चर्मन्नित्यस्य पदत्वाभावात्समुदायस्य चाप्राति-पदिकत्वात्कथं नलोप इति वाच्यम्। समासान्तेषु ङ्याप्प्रातिपदिकादित्यस्या-संबन्धस्यान्यत्र निरूपितत्वेन तद्विषयकत्वेनोपप्लुते स्वादिष्विति सूत्रे तदादि-पदेन चर्मन्नित्यस्यापि ग्रहीतुं शक्यतया तस्यापि तेन पदत्वसम्भवात्। समासान्तविधौ तत्पुरुषादिपदानां तदर्थालौकिकविग्रहवाक्यपरताया एव ग्रन्थकृता सिद्धान्तितत्वेन तत्पुरुषादिसंज्ञासमकालमेव समासान्तानां प्रवृत्त्या च न तेषामपि तदादित्वं वक्तुं शक्यम्। तत्र तदाद्यंशोपस्थितौ फलाभावेन तदनुपस्थितेश्च। अपि च स्वादिष्वित्यनेन विशिष्टस्य पदत्वेऽप्यत्र न दोषः। नलोपः प्रातिपदिकान्तस्येत्यत्र प्रातिपदिकान्तस्य सतः पदान्तस्येति व्या-ख्यानेन नलोपस्य सुलभत्वात्। यदि त्वन्तग्रहणस्यावृत्तिप्रसङ्गेन व्यधिकरण-षष्ठीद्वयापत्तेश्च तद्व्याख्यानं गौरवग्रस्तमिति मन्यते, तदा प्रातिपदिकेत्यस्य पदविशेषणत्वेन तदन्तविधेन्र्याय्यतया प्रातिपदिकान्तं यत्पदं तदन्तस्य नस्य लोप इत्यर्थेन बहुचर्मिकेत्यादौ नलोपसिद्धिः। विशिष्टस्य स्वादिष्वित्यनेन पदत्वात्प्रातिपदिकान्तत्वाच्च। राजभ्यामित्यादौ तु प्रातिपदिकान्तत्वं व्यप-देशिवद्भावेनेति बोध्यम्। समासान्तानां सुपः पुरस्तादुत्पत्तिरिति पक्षे बहु-चर्मिका बहुदण्डिकेत्यादौ नलोपस्य स्वादिष्विति पदत्वमाश्रित्यैव सर्वथा वक्त-व्यत्वात्। पुरस्तादिति पक्षे बहुचर्मिकेत्यादाविस्त्वानापत्तिरूपदोषस्यैव ङ्याप्सूत्रे शब्दरत्नकृता प्रतिपादितत्वेनेदृशेषु पदत्वप्रयुक्तकार्यस्य नलोपादेः स्वादिष्विति पदत्वमाश्रित्यैव निर्वाह इत्यर्थस्य द्योतितत्वाच्चेत्यवधेयम्। क्रोडपत्रकारास्तू-त्तरपदशब्दो वृत्तिचरमावयवपरः। बहुसेचावित्यादौ चकारस्य वृत्तिचरमावयव-त्वेऽपि सकारस्य वृत्तिचरमावयवत्वाभावेन तस्य पदत्वप्रयोज्ये सात्पदाद्यो-

**वक्तव्य इति। 'द्वितीयाटौस्सु' इति अत्र सम्बद्ध्यते। अयश्च सामर्थ्याल्लुका लुप्तेऽपि भवति। एनादेशोऽपि एनमित्यादिसिद्ध्यर्थं वक्तव्यः। येन नाप्राप्तिन्यायेनैनतस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेः। अत एव भाष्ये 'नपुंसकैकवचने एनद्वक्तव्यः, कुण्डमानय प्रक्षालयैनत्' इत्युक्तम्। अत्र नपुंसकैकवचने इत्युक्त्या ऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना।**

---

रिति षत्वनिषेधे कर्तव्ये प्रत्ययलक्षणनिषेधस्यैवाप्राप्त्या वार्तिकेऽपदादिविधाविति न कार्यमित्यपरं लाघवमिति वदन्ति। तदसत्। वर्णमात्रस्यैव वृत्तिचरमावयवत्वेन ग्रहणे परमबुधावित्यादौ धकारस्य पदत्वप्रयोज्यकार्याभावेन निषेधाप्रवृत्तौ प्रत्ययलक्षणेन पदत्वाद्भष्भावापत्तेः। अत उत्तरपदशब्देन वृत्तिचरमावयवस्य पदत्वयोग्यस्यैव ग्रहणमुचितम्। एवं च दधिसेचावित्यादौ षत्वनिषेधसिद्धयेऽपदादिविधावित्यप्यावश्यकमेवेति बोध्यम्॥

**संबध्यत इति**। तत्र सूत्रेऽस्य पाठादिति भावः। **सामर्थ्यादिति**। द्वितीयापदोपस्थितेऽमि एनदादेशविधानसामर्थ्यादित्यर्थः। **एनादेशोऽपीति**। ननु सूत्र एवैनद्वक्तव्यः। एनमित्यादि तु त्यदाद्यत्वेन सिद्धम्। तकारोच्चारणसामर्थ्याच्च लुका लुप्तेऽपि भवति। नच तत्सामर्थ्यात्त्यदाद्यत्वस्यैव बाधः कुतो नेति वाच्यम्। अक्लृप्तबाधस्य प्रधानकार्यस्य बाधकल्पनापेक्षया क्लृप्तबाधस्याप्रधानातिदेशनिषेधबाधकल्पनाया न्याय्यत्वादत आह। **येन नेति**। अत्रार्थे वार्तिकसम्मतिं दर्शयति। **अत एवेति**। एनादेशस्यावश्यकत्वादेवेत्यर्थः। **अन्यत्रेति**। नपुंसकैकवचनातिरिक्त इत्यर्थः। नन्वेनतः त्यदाद्यत्वापवादत्वे 'यद्येनत्क्रियते, एनो न वक्तव्यः, का रूपसिद्धिः? अथो एनम्। अथो एने इति, त्यदाद्यत्वेन सिद्धमित्येनादेशप्रत्याख्यानपरं तदुत्तरं भाष्यं विरुद्ध्येतेत्यत आह।

अपवादत्वमजानत एकदेशिनो यद्येनदित्यादिरुक्तिः। यदिगर्भवाक्ये पूर्वपक्षयुक्तित्वस्यैवौचित्यात्। भाष्यकृता तु फल्गुत्वान्नात्रोत्तरमुक्तम्। सिद्धान्ती तु 'किमुच्यते नपुंसकैकवचने इति, सर्वत्र एनदेव वक्तव्यः' इत्येवंशब्दैः प्रत्याख्यानं कुर्यात्। अनयोरप्यादेशयोः 'एतदस्त्रतसोः' इत्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः, त्यदाद्यत्वेन

---

अपवादत्वमजानत इति। नन्वेवमपवादत्वज्ञापनेनैनादेशस्यावश्यकत्वं कुतो नोक्तं भाष्येऽत आह। फल्गुत्वादिति। अपवादत्वस्य सुस्पष्टत्वेनातिहेयत्वादित्यर्थः। अत्र=एकदेश्युक्तौ। ननूपसर्जने एनदादेशस्य चारितार्थ्यात्कथं त्यदाद्यत्वापवादत्वमित्यत आह। अनयोरपीति। एनैनतोरपीत्यर्थः। अपिनात्वस्य परिग्रहः। साहचर्येणेति। नच सूत्रान्तरसाहचर्यस्याव्यवस्थापकताया अन्यत्र प्रतिपादितत्वादयुक्तमिदमिति वाच्यम्। त्रतसोरसर्वनामसंज्ञानिमित्तकत्वादुपसर्जने प्रवृत्त्यभावेन तयोः परत एतदोऽनुपसर्जनस्यैव संभवेनार्थाधिकारानुरोधाद्द्वितीयाटौस्स्वेन इत्यत्राप्यनुवृत्तस्यैतदोऽनुपसर्जनस्यैव ग्रहीतुमौचित्येन तत्साहचर्यात्तत्रानुवृत्तस्येदमोऽप्यनुपसर्जनस्यैव ग्रहीतव्यतया एनस्य तत्सूत्रपठितवार्तिकविधेयस्यैनदादेशस्य चोभयत्राप्यनुपसर्जन एव प्रवृत्तिरित्याशयात्। अनयोरुपसर्जनेऽप्रवृत्तौ भाष्यमपि साधकमित्याह। त्यदाद्यत्वेनेति। अन्यथोपसर्जनेऽत्वाप्राप्त्या तेनासिद्धत्वात्तदसङ्गतिः स्पष्टैवेति भावः। सूत्रान्तरसाहचर्यस्य नियामकत्वमनभ्युपगच्छतामस्य ग्रन्थस्य हेत्वन्तरपरतयैवाशयवर्णनमुचितम्। यदि तु यथाश्रुतमूलाक्षरानुरोधेनैतदस्त्रतसोरिति सूत्रसाहचर्यं साक्षादेवैनस्योपसर्जनेऽप्रवृत्तौ नियामकमिति विभाव्यते, तदा सूत्रान्तरसाहचर्यस्यात्र नियामकत्वे भाष्यासाङ्गत्यापत्तेर्हेतुत्वामित्येकहेतुपरतयाऽप्ययं ग्रन्थो योजयितुं शक्यः। चकारो हेत्वर्थकः। अत एवैतत्समानार्थके शब्दरत्नग्रन्थे चशब्दरहित एव पाठ इति बोध्यम्। यद्येनत्कथ्यते, एनो न

**सिद्धमिति भाष्यासङ्गतेश्च। एनतमादायैनादेशप्रत्याख्यानपरं 'यद्येन-त्क्रियते' इत्यादि भाष्यं त्वेकदेश्युक्तिरिति भाष्यप्रदीपोद्योते निरूपितम् । अन्वादेशविषये इदमेतदोः समासस्यानभिधानमेव । 'यद्येनत्क्रियते, एनो न वक्तव्यः । कथमेनमित्यादि? त्यदाद्यत्वेन सिद्धम्। यद्येवमेतच्छ्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोति; यथालक्षणमप्रयुक्ते' इति भाष्यात् ।**

---

वक्तव्य इत्याद्यग्रिमभाष्यस्य न सर्वस्यैकदेश्युक्तित्वं, किन्त्वंशस्येति विशेषं विवक्षुरुक्तमेवार्थं पुनराह । **एनतमादायेति** । तान्त एवायमादेशः । तकारोच्चारणसामर्थ्यादिति मनोरमोद्योतादिग्रन्थैस्तान्तत्वस्यैव प्रतीतेः । क्वचिदेनदोऽपीत्यादिना दान्तपाठस्तु लेखकप्रमादः । तान्तदान्तयोः फले विशेषाभावाद्वा तथोक्तमिति बोध्यम् । अग्रिमभाष्येऽनभिधानांशस्तु सिद्धान्त एवेत्याशयेनाह । **अन्वादेशविषय इति** । **अनभिधानमेवेति** । यथालक्षणमप्रयुक्त इत्यनेन तेषामप्रयुक्तत्वलाभादिति भावः । **एतच्छ्रितक इति** । अत्रेदानींतनभाष्य-पुस्तकेषु' यद्येवमेनाश्रितको न सिद्ध्यति, एनाच्छ्रितक इति प्राप्नोतीति पाठ उपलभ्यते । भावप्रकाशकृता मिश्रैराचार्यैश्चायमेव पाठो धृतः । शेखरशब्दरत्न-योस्तु 'यद्येवमेतच्छ्रितको न सिद्ध्यति । एनच्छ्रितक इति प्राप्नोतीति पाठो-पलम्भेन तदानींतनभाष्यपुस्तकेषु क्वचित्तथापि पाठ आसीदित्यनुमीयते । तत्राद्यपाठस्येत्थमुपपत्तिः । यदि सर्वत्रैनदादेशं विधायैनमित्यादिरूपाणां त्यदाद्यत्वेन सिद्धिरित्युच्यते, तदा तकारोच्चारणसामर्थ्यादेतत्सूत्रविषये न लुमतेति निषेधस्यानित्यत्वादप्रवृत्तौ नपुंसकलुकीव सामासिकलुक्यप्येनदादेशप्रवृत्तौ न लुमतेति निषेधादत्वाभावे एनश्रितक इति न सिद्ध्यति । पृथगादेशद्वयारम्भे तु न लुमतेत्यत्राङ्गाधिकारप्रतिनिर्देशपक्षे एनादेशविषये न लुमतेति निषेधाप्रवृत्त्या प्रत्ययलक्षणेनैनादेशे तत्सिद्धिरिति । नागेशधृतद्वितीयपाठस्य त्वित्थमुपपत्तिः ।

सर्वत्रैनदादेशविधाने तकारोच्चारणसामर्थ्यादेतत्सूत्रविषये न लुमतेति निषेधस्यानित्यत्वादप्रवृत्तेर्वक्तव्यतया नपुंसकलुकीव सामासिकलुक्यप्येनदादेशप्रवृत्तावेनच्छ्रितक इति प्राप्नोति, एतच्छ्रितक इति च न सिद्ध्यति । पृथगादेशद्वयारम्भे तु सिद्धान्तभूतेऽङ्गाधिकाराप्रतिनिर्देशपक्षे, न लुमता तस्मिन्निति वार्तिकमते च न लुमतेति निषेधेनैनादेशस्याप्रवृत्तावेतच्छ्रितक इति सिद्ध्यतीति । एवं चाङ्गाधिकारप्रतिनिर्देशपक्षाश्रयणेनाद्यपाठस्योपपत्तिः । सिद्धान्तभूताङ्गाधिकाराप्रतिनिर्देशपक्षेण न लुमता तस्मिन्निति वार्तिकनयेन च नागेशधृतपाठस्योपपत्तिरित्यवधेयम् ॥

यत्तु अन्ये तु यश्चेनत्क्रियते, एनो न वक्तव्य इत्यादिभाष्यस्वारस्येन द्वितीयाटौस्स्वेन इत्यत्रैवैनद्वक्तव्य इति लभ्यते । नच येन नाप्राप्तिन्यायेनैनतस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेर्यश्चेनदित्याद्येकदेशयुक्तिरिति वाच्यम् । न लुमतेति निषेधानित्यत्वेन कुण्डमानय, प्रक्षालयैनदित्यत्राप्येनतः प्रवृत्त्या तत्र च त्यदाद्यत्वाप्रवृत्त्या येन नाप्राप्तिन्यायाप्रवृत्तेः । सत्वस्य त्यदाद्यत्वानपवादत्वस्यैव तक्रकौण्डिन्यन्यायानित्यत्वेनैनतोऽपि तदनपवादत्वस्योपपत्तेश्च । यद्येवमेनाश्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोतीत्याग्रिमभाष्यं त्वेकदेशयुक्तिः । उपसर्जनत्वेनैनदादेशस्य तत्राप्रवृत्तेः । न लुमतेति निषेधाच्च । न लुमतेति निषेधानित्यत्वं तु धर्मिग्राहकमानादेकपदाश्रितलुक्येव । तथाचैतेन कृतमेतत्कृतमित्यादौ नैनदादेशप्रवृत्तिरित्याचार्याः । तदसत् । नपुंसकैकवचने एनदादेशस्य चारितार्थ्येऽपि द्वितीयादिग्रहणेनौशसादिष्वप्येनदादेशविधानलाभेन तत्रैनदादेशस्यात्वबाधकताया दुर्वारत्वेन तदुत्तरमत्त्वाप्रवृत्तौ रूपासिद्धेः । तक्रन्यायस्यानित्यत्वादप्रवृत्तिरिति तु न युक्तम् । अनित्यत्वमाश्रित्य सिद्धवचनप्रत्याख्यानस्यानुचितत्वात् । नचेदोऽय् पुंसि, यस्सावित्यनयोस्तक्रन्यायेनात्वबाधकतया तदुत्तरमत्वाप्रवृत्त्या इष्टसिद्धावत्वबाधनार्थमारब्धेनेदमो म

इति मकारादेशविधानेन त्यदादिकार्येषु तक्रन्यायस्यानित्यत्वादप्रवृत्तिरित्यर्थ-ज्ञापनस्य स इत्याद्यर्थमावश्यकतया प्रकृते तन्न्यायाप्रवृत्तिरिति वाच्यम्। एतास्योस्त्विवादिबाधकत्वाभावायोक्तज्ञापकेन सामान्यतस्तदनित्यत्वकल्पनस्या-वश्यकत्वेन तेनैव स इत्यादिसिद्धौ निरुक्तरीत्या विशेषकल्पनस्य निष्फलत्वात्। यदि तु नासूया कर्तव्येति पङ्क्तिविंशतीतिसूत्रस्थभाष्येणानुगमाभिलाषस्तदा ज्ञापक-साजात्याद्बाध्यबाधकयोरुभयोरपि त्यदादित्वनिमित्तकत्व एव तक्रन्यायस्या-नित्यत्वादप्रवृत्तिरित्यर्थकल्पनयापि निरुक्तोदाहरणनिर्वाहे तदन्यतरस्य त्यादा-दित्वनिमित्तकत्वमात्रेण तदप्रवृत्तिकल्पनायां मानाभावः। यद्वा तक्रन्यायेन बाधस्थले न्यायानुरोधेनापवादत्वेनाभिमतशास्त्रस्य पूर्वं प्रवृत्तिरिति बाधक-प्रवृत्त्युत्तरमुत्सर्गस्य प्रवृत्तियोग्यतासत्त्वेऽपि तक्रदानोत्तरं दधिदानस्येव तस्य पुनरप्रवृत्तिरिति चांशद्वयं लभ्यते। तत्रोक्तज्ञापकेन त्यदादिकार्येषु सर्वात्मना तदप्रवृत्तिकल्पनायां मादेशस्यापि प्रकारान्तरेणैव त्यदाद्यत्वबाधकताया वक्तव्यत्वेन तत्र कृते पुनस्त्यदाद्यत्वस्य दुर्वारतया यावद्वैयर्थ्यमिति न्यायेन पुनर्मकारादेशविधानसामर्थ्यादत्वं वारणीयम्। अतो निरुक्तज्ञापकेन ज्ञापक-साजात्याद्यत्रोत्सर्गापवादयोर्युगपत्प्रवृत्तावविरोधस्तादृशे त्यदादिकार्येऽपवाद-त्वेनाभिमतशास्त्रप्रवृत्त्युत्तरमुत्सर्गस्य प्रवृत्तिर्भवत्येव। यत्र तु विरोधस्तत्र तु नेत्येवमांशिकतद्बाधकल्पनमेव युक्तम्। न तु सर्वात्मना न्यायबाधः। एवं चात्वायादेशयोर्युगपत्प्रवृत्तौ विरोधाभावेन तदुत्तरमत्वप्रसक्तौ तद्वारणाय मकार-विधानं सार्थकं, मादेशत्यदाद्यत्वयोस्त्वेकस्थानिसंबन्धासंभवरूपविरोधस्य सत्त्वेन तदुत्तरमुत्सर्गप्रवृत्तेर्न्यायसिद्धतया यावद्वैयर्थ्यमिति न्यायाश्रयणेन पुनर्म-कारविधानसामर्थ्येन त्यादाद्यत्वाप्रवृत्तिकल्पनं नावश्यकमिति लाघवम्। अत एव तदोस्सस्साविति सूत्रेऽनन्त्ययोरिति च चरितार्थम्। तद्धि हे स इत्यादा-वन्त्यदकारस्य सत्ववारणाय कृतम्। त्वदुक्तरीत्या त्यदादिकार्येषु सर्वात्मना

**ब्रह्मणी इति।** 'न संयोगात्' इति निषेधादल्लोपो न। **रोऽसुपि। अहर्भातीति।** 'अहन्' इति रुत्वे 'अहो भाति' इति स्यादिति भावः। **नलोपे प्राप्त इति।** न च नलोपेऽकारस्य रौ रे वा विशेषाभावे- नान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम्। संबुद्धौ नलोपनिषेधेन 'अहर्गच्छ इत्यादावुत्वाभावेन, 'दीर्घाहो

---

तक्रन्यायस्यानित्यत्वादप्रवृत्तावन्तरङ्गत्वेनैव सत्वस्यात्वबाधकताया वक्तव्यत्वे नान्त्यदकारस्य सत्वे कृतेऽपि तदुत्तरमत्वप्रवृत्त्या इष्टसिद्धौ तद्वैयर्थ्यं स्पष्टमेव। मदुक्तरीत्या सङ्कोचकरणे त्वत्वसत्वयोर्युगपदेकस्थानिसंबन्धासंभवरूपविरोधस्य सत्त्वेनापवादभूतसत्वप्रवृत्त्युत्तरमत्वाप्रवृत्तौ हे स इत्याद्यसिद्धिरतोऽनन्त्ययो- रितीति तत्सार्थक्यं स्पष्टमेव। तथाच प्रकृते त्यदाद्यत्वैनतोर्युगपदेकस्थानि- संबन्धासंभवरूपविरोधस्य सत्त्वेन तक्रन्यायस्य निस्सङ्कोचं प्रवृत्त्या एनदादे- शोत्तरं सर्वथा अत्वाप्राप्त्या एनादेशः पृथग्वक्तव्य एवेति नागेशगूढाशय- मुद्भावयन्ति गुरुचरणाः ॥

यदपि यद्येवमेनाश्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोतीत्यग्रिम- भाष्यं त्वेकदेश्युक्तिः। उपसर्जनत्वेनैनदादेशस्य तत्राप्रवृत्तेरित्याचार्यास्तदप्य- युक्तम्। एतद्भाष्यस्य व्यपेक्षावादानुरोधेन प्रवृत्ततया तत्पक्षे इतरविशेषणत्वे- नार्थोपस्थापकत्वरूपोपसर्जनत्वाभावेनैनदादेशप्रवृत्तेस्सुवचत्वात्। शङ्काग्रन्थ- स्यैकदेश्युक्तित्वेऽपि सर्वस्याप्येकदेश्युक्तित्वे मानाभावाद्यथालक्षणमप्रयुक्त इति भाष्यादन्वादेशविषय इदमेतदोस्समासस्यानभिधानकथनं युक्तमेव। एतत्कृत- मित्यादि त्वनन्वादेशविषयैतच्छब्देन समासे बोध्यमित्यलम् ॥

रुत्वविधानस्यावश्यकतां दर्शयितुमाह। **अहन्नित्यादि। अहर्गच्छेति।** अत्र नपुंसकलुकि प्रत्ययलक्षणाभावेनासुपीति निषेधाप्रवृत्त्या रुत्व इति भावः। **दीर्घाहो निदाघेति।** अत्र निदाघरूपस्य पुंलिङ्गस्यान्यपदार्थत्वान्न लुक्, किन्तु

निदाघ' इत्यादावुत्वसम्पादनेन च चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुरणेन नान्तस्याहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ सम्बुद्धौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः । आवर्त्यैति ॥ आवृत्तौ मानं च 'रूपरात्रि' इति वार्त्तिकमेव । अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । भाष्यप्रामाण्याच्च तस्य संबुद्धावप्रवृत्ति । तज्ज्ञापक-

---

हल्ङ्याबिति सुलोपः । सामर्थ्यलब्धेनेति । अह्न इति वक्तव्ये विभक्तिलोपं कृत्वा शास्त्रप्राप्तनलोपाकरणसामर्थ्येन नान्तानुकरणत्वं लब्धमिति भावः । नलोपो नेति । सर्वत्र रुत्वरुत्वयोरसिद्धत्वान्नलोपे सूत्रयोर्निर्विषयत्वापत्तेरिति भावः । ननु संबुद्धौ नलोपाभावेनागच्छाहो रूपं दर्शयिष्यामः, आगच्छाहो रात्रिरेषा गतेत्यादौ रुत्वकृतो विशेषः स्पष्ट एवेत्यत आह । भाष्यप्रामाण्याच्चेति । रूपरात्रीति वार्तिकस्य ज्ञापकतापरं यद्भाष्यं तत्प्रामाण्यादित्यर्थः । तथाहि । नलोपः प्रातिपदिकान्तस्येति सूत्रे भाष्ये 'अह्नो नलोपप्रतिषेधो वक्तव्यः । अहोभ्यामिति । न वक्तव्यः । रुरत्र बाधको भविष्यति । अनवकाशो रुर्नलोपं बाधिष्यते । सावकाशो रुः । कोऽवकाशः? अनन्त्य अकारः । नान्तनिर्देशसामर्थ्यान्न नलोप इत्यपि न । संबुद्ध्यर्थं हि वचनम् । हे दीर्घाहो निदाघेति । यत्तर्हि रूपरात्रिरथन्तरेषूपसंख्यानं करोति । तज्ज्ञापयत्याचार्यो नानन्त्यस्य रुर्भवतीति । नह्यस्ति विशेषः, रूपरात्रिरथन्तरेष्वनन्त्यस्य रौ रे वा, इति वार्तिकस्य ज्ञापकत्वमुक्तम् । एतद्भाष्यप्रामाण्यादस्य वार्तिकस्य संबुद्धावप्रवृत्तिः । अन्यथा संबुद्धौ नलोपाभावेन वार्तिकस्य सार्थक्याज्ज्ञापकोपन्यासोऽसंगतः स्यादिति बोध्यम् । ननु तद्भाष्येणानन्त्यस्य रुत्वाभावज्ञापने तत्र रुत्वसावकाशत्वस्य वक्तुमशक्यतया सर्वथा निरवकाशत्वेन रुत्वस्य नलोपापवादत्वादावृत्तिर्व्यर्थेत्यत आह । वचनकल्पनापेक्षयेति । उक्तज्ञापकेनान-

सिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः। आवृत्तस्य पदान्ते अहन् इति निपात्यते इत्यर्थः। इदमसंभव एवापवादत्वमिति वार्त्तिकमते 'अहन्' इत्यस्य नलोपोत्तरश्चारितार्थ्याभिमानेन। वस्तुतः सत्यपि संभवे बाधनं भवतीति भाष्यसिद्धान्तात् रुत्व-रत्वे नलोपापवादभूते एव। निषेधविषयेऽपि प्राप्तिमात्रेण येन ना-प्राप्तिन्यायविषयसत्त्वात्। निषेधेनापि तस्य बाध इत्यन्यत्। एतेन संबुद्धौ चारितार्थ्यमित्यपास्तम्। ध्वनितश्चेदम् 'अपवादो रुर्नलोपं बाधिष्यते' इत्यर्थकभाष्येण। एतदग्रे नलोपे कृतेऽकारे सावकाशत्व-शङ्कातत्समाधानादि वार्तिकानुसारिणोरित्यलम्। तदन्तस्यापीति।

---

न्त्यस्य रुत्वं नेत्यक्लृप्तवचनकल्पनेन नलोपशास्त्रबाधकल्पनापेक्षया क्लृप्तवचन-स्यावृत्त्या तद्बाधकल्पना लघीयसीति भावः। आवृत्तसूत्रेण यथा नलोपाभाव-लाभस्तत्प्रकारमाह। आवृत्तस्येति। इदमिति। मूलोक्तं शङ्कासमाधानरूप-मित्यर्थः। ननु संबुद्धौ नलोपाप्राप्तिविषये तयोश्चारितार्थ्यात्कथमपवादत्वमत आह। निषेधविषयेऽपीति। अत एव ब्राह्मणेभ्यो दधि दीयतां, न रात्रौ तद्दीयतां, तक्रं कौण्डिन्यायेत्यत्रापि तक्रदानं दधिदानस्य बाधकं भवतीति बोध्यम्। निषेधेनापीति। अपिना तक्रन्यायसमुच्चयः। संबुद्धौ निषेधे-नान्यत्र तक्रन्यायेन च नलोपबाध इति भावः। इदमिति। अस्य येन नाप्राप्तिन्यायविषयत्वमित्यर्थः। भाष्ये तथा पाठाभावादाह। इत्यर्थकेति। रुत्वस्य सर्वथा निरवकाशत्वाभावादनवकाशो रुर्नलोपं बाधिष्यत इति भाष्य-स्यापवादो रुरित्यर्थो वाच्य इति भावः। नन्वग्रिमभाष्येण मूलोक्तार्थस्यैव भाष्यसम्मतत्वावगमादिदमयुक्तमत आह। एतदग्र इति। वार्तिकानुसा-रिणोरिति। असंभव एव बाधकत्वमिति वार्तिकमतानुसारिणोरित्यर्थः। यत्तु अन्ये तु सावकाशः। कोऽवकाशः। अनन्त्य इत्यादि नलोपः प्रातिपदिकेति

सूत्रस्थभाष्यप्रामाण्येन त्रिपाद्यां न तक्रकौण्डिन्यन्यायः । स्कोस्संयोगाद्योरिति तु निरवकाशत्वेन संयोगान्तलोपबाधकम् । अत एव रथीतरसिद्धिः । अन्यथा नलोपं बाधित्वा नस्येत्त्वे तस्यासिद्धत्वात्सवर्णदीर्घानापत्तिः । अत एव धुक् सुवृडित्यादौ भष्भावघत्वादिषु कृतेषु जश्त्वादिसिद्धिः । अन्यथाऽपवादत्वा-त्तैर्जश्त्वापवादत्वापत्तिः । रहाभ्यामिति निमित्तत्वेन कार्थित्वबाधस्तु हयवर-डिति सूत्रस्थभाष्यबलादेव । अस्तु वा त्रिपाद्यामितरविधिषु यथा तथा । नलोपविषये तु ईत् रथिनः रथीतरः, भूरिदाव्नस्तुट् । भूरिदावत्तर इति भाष्य-प्रयोगबलेन नोत्सर्गापवादभावः । अत एव नलोपः प्रातिपदिकेति सूत्रे भाष्ये-ऽप्यनवकाशो रुर्नलोपं बाधिष्यत इत्युक्तम् । न त्वपवादो रुरित्याहुरित्याचार्या-स्तदयुक्तम् । अनवकाशो रुर्नलोपं बाधिष्यत इत्यस्यैव सिद्धान्त्युक्तित्वेनान-न्त्याकारे सावकाशत्वप्रतिपादनपरतदुत्तरभाष्यस्यासंभव एव बाधकत्वमिति वार्तिकानुसारेण प्रवृत्ततया स्वानभिप्रेतत्वेन तद्बलेन तक्रन्यायस्य त्रिपाद्याम-प्रवृत्तेर्वक्तुमशक्यत्वात् । किंच तस्य त्रिपाद्यामप्रवृत्तौ संयोगादिलोपस्य संयो-गान्तलोपबाधकत्वं न सिद्ध्येत् । तत्र निरवकाशत्वेन बाधकत्वं तु न युक्तम् । संयोगान्तलोपोत्तरं संयोगादिलोपस्य चारितार्थ्याभावेऽपि तत्प्रवृत्तिसमकालम-स्यापि प्रवृत्तौ बाधकाभावेन सर्वथा निरवकाशत्वाभावात् । संयोगादित्वस्योपल-क्षणत्वेन कृते चारितार्थ्यस्यापि सत्त्वाच्च । अत एव तडित्यादिसिद्धिः । अन्यथा संयोगादिलोपोत्तरं तस्यासिद्धत्वात्पुनस्संयोगान्तलोपो दुर्वार एव स्यात् । अपवादस्य यं प्रत्यपवादत्वं तद्दृष्ट्याऽसिद्धत्वं नेत्यपि तक्रन्याय-मूलकमेव । शास्त्रसामर्थ्यमूलकत्वं तु तस्य न युक्तम् । संयोगादिलोपोत्तरं संयोगान्तलोपप्रवृत्तावपि संयोगादिलोपस्य वैयर्थ्याभावेन तदुत्तरं तस्या-सिद्धत्वबाधकल्पनायां मानाभावात् । किंच रहाभ्यामिति निमित्तत्वेन कार्यित्वबाधस्यापूर्वतया हयवरडितिसूत्रस्थभाष्यबलात्कल्पनापेक्षया तक्रन्या-

पदाधिकारस्थत्वात्। 'ग्रहणवता' इति निषेधस्तु प्रत्ययविधिविषय इति 'असमासे निष्कादिभ्यः इति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः। तस्यासिद्धत्वादिति। अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम्। दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोद्धव्यः। सम्बुद्धौ त्विति। सुपोऽत्र हल्ङ्यादिलोपादसम्बुद्धावित्युक्तेर्दीर्घाभावे रुत्वे 'हशि च' इत्युत्वे आद्गुणः। स्रग्वीणीति। इन्ग्रहणेऽनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः। बहुवृत्रहाणीति। अत्र यद्वक्तव्यं तदुक्तम्।

पदान्ते कुत्वमिति। 'क्विन्प्रत्ययस्य' इत्यस्यासिद्धत्वाद् ग्रश्चेति

---

यस्य त्रिपाद्यामपि प्रवृत्तिरेवोचिता। ईत्वतुटोर्नलोपापवादत्वाभावस्तु रथीतरः भूरिदावत्तर इति भाष्यप्रयोगबलेन क्वचित्तक्रन्यायस्यानित्यत्वादप्रवृत्त्या उपपाद्यः। तद्बलेन नलोपविषये तक्रन्यायस्याप्रवृत्तिरिति कल्पनं तु न युक्तम्। विनिगमनाविरहादीत्वविषये तुड्विषये च तक्रन्यायस्याप्रवृत्तिरित्यर्थस्यापि कल्पयितुं शक्यतया तयोराकरसम्मतस्य नुड्बाधकत्वस्यासिद्ध्यापत्तेः। किंचेद्रथिन इतिवद्भूरिदाव्नस्त इत्येवं तादृशविधानेनैव सिद्धे तुड्विधानसामर्थ्येन नाद्ध स्येति सूत्रविषये तक्रन्यायस्याप्रवृत्तिरित्यर्थज्ञापनेनैवोक्तप्रयोगनिर्वाहे नलोपविषये तदप्रवृत्तिकल्पनायां मानाभावःफलाभावश्चेति सुधियो विभावयन्तु ॥

प्रत्ययविधिविषय इति। ज्ञापकसाजात्यादिति भावः। ननु हल्ङ्यादिलोपात्प्रागेव परत्वाद्दीर्घः कुतो नेत्यत आह। अकृतेति। अभिमानेनेत्यनेनात्रारुचिं सूचयन्स्वसिद्धान्तमाह। दीर्घस्त्विति। अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः। ननु हन्तेरत्पूर्वस्येति नियमात्कथमत्र णत्वमत आह। अत्रेति। उक्तमिति। वृत्रहन्शब्द इति भावः ॥

ननु सृजियज्योःषत्वस्य कुत्वापवादतया कथं तदुत्तरं कुत्वप्रवृत्तिरित्यत

षत्वे कुत्वमित्यर्थः । षत्वन्तु स्रष्टमित्यादौ सावकाशमिति भावः । भाष्यप्रयोगादिति । अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे

---

आह । षत्वं त्विति । न च सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनेन तत्सामर्थ्यात्कुत्वापवादत्वं सुस्थमेवेति वाच्यम् । साहचर्यस्यासार्वत्रिकत्वेन तस्यात्रानाश्रयणात् । अत एव क्विन्प्रत्ययस्येति सूत्रभाष्योदाहृते मानो अस्राागित्यादौ कुत्वसिद्धिः । न च क्विन्प्रत्ययस्येत्यत्र वीप्सागर्भबहुव्रीह्याश्रयणेन कुत्वस्य षत्वापवादत्वकल्पनया तदुदाहरणसिद्धिरिति वाच्यम् । प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकतया एव भाष्यकृतोक्तत्वेन भाष्यानुक्तवीप्सागर्भबहुव्रीह्याश्रयणेन कुत्वस्य षत्वापवादत्वकल्पनापेक्षया उक्तरीत्या साहचर्यानाश्रयणेन षत्वस्य कुत्वापवादत्वाभावकल्पनस्यैव युक्तत्वात् । किं च वीप्सागर्भबहुव्रीहिणा कुत्वस्य षत्वापवादत्वाङ्गीकारे रज्जुसृड्भ्यामुपयट्काम्यतीत्यादिभाष्यप्रयोगासङ्गतिः । तद्बलेनोक्तरीत्या षत्वस्य कुत्वापवादत्वाङ्गीकारे मानो अस्राागिति भाष्यप्रयोगासङ्गतिः । सृजियज्योर्विषये साहचर्यस्य क्विन्प्रत्ययस्येत्यत्र वीप्सागर्भबहुव्रीहेश्चाश्रयणे तूभयोरपि निरवकाशत्वेन कुत्वस्य षत्वापवादत्वं वा षत्वस्य कुत्वापवादत्वं वेत्यत्र विनिगमकाभावेन परस्परमपवादत्वस्य सत्प्रतिपक्षन्यायेन तदभावस्य वा लाभान्मूलोक्तप्रथमरीत्यैव तत्तच्छास्त्रप्रवृत्तिक्रमस्य वक्तव्यतया मानो अस्राागित्यत्र षत्वोत्तरं कुत्वप्रवृत्त्या इष्टसिद्धावपि विश्वसृडित्याद्यसिद्ध्या तदर्थं रज्जुसृड्भ्यामिति भाष्यप्रयोगबलेन किंचिदर्थान्तरकल्पनमावश्यकमेव । अत ईदृशक्लिष्टकल्पनया परस्परमपवादत्वाङ्गीकारेऽपि विश्वसृडादिसिद्ध्यै किञ्चिदर्थान्तरकल्पनस्यावश्यकतया साहचर्यस्य वीप्सागर्भबहुव्रीहेश्चानाश्रयणेन परस्परमपवादत्वाभावकथनमेव न्याय्यम् । विश्वसृडित्यादि तु रज्जुसृड्भ्यामिति भाष्यप्रयोगात्सपूर्वपदे कुत्वं नेत्यर्थकल्पनया सिद्धमिति नागेशगूढाशयमुन्नावयन्ति गुरुचरणाः ॥

**कुत्वाभावो बोद्ध्यते। तेनासृगित्यत्र न दोषः। कुत्वापवाद इति। सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः। अत एवोपयद्काम्यतीति काम्यच्सूत्रस्थो भाष्यप्रयोगः सङ्गच्छते। निपातनादेवेति। निपातनेन ह्यनयोरपवादाप्रवृत्तिमात्रबोधनं, कुत्वन्तु स्वशास्त्रेणैव। एतेन निपातनादपदान्तेऽपि कुत्वापत्तिरिति निरस्तम्। असृक्शब्दस्त्विति। इदमेव न्याय्यम्। ऊर्गिति। अयं पुंलिङ्गोऽपि। 'नपुंसकस्य' इति सूत्रे बह्व ऊर्ज इति कैयटात्। नरजानामिति।**

---

तेनेति। अनव्ययपूर्वपदे कुत्वाभावज्ञापनेनेत्यर्थः। सामान्यतस्सपूर्वपदे कुत्वं नेति ज्ञापने त्वत्र कुत्वं न स्यादिति भावः। ननु षत्वस्य सृष्टमित्यादौ सावकाशत्वेन पदान्ते विशिष्य षत्वविधानाभावेन कथं षत्वस्य कुत्वापवादत्वमत आह। **साहचर्येणेति।** अत एव=पदान्ते षत्वस्य कुत्वापवादत्वादेव। **सङ्गच्छत इति।** अन्यथोक्तभाष्यप्रयोगादनव्ययपूर्वपद एव कुत्वाभावज्ञापनेनासृगित्यत्रेवात्रापि कुत्वापत्तिरित्याशयः। इदं च मूलकाराशयवर्णनपरम्। वस्तुतस्त्वत्राद्यपक्ष एव नागेशाभिमतः। रज्जुसृड्भ्यामुपयद्काम्यतीत्यादिभाष्यप्रयोगात्सपूर्वपदे कुत्वं नेत्येव कल्प्यते। अतो विश्वसृडादौ न दोषः। असृक्शब्दस्त्वस्यतेरौणादिके ऋज्प्रत्यये साधुरिति बोध्यम्। **इदमेव न्याय्यमिति।** षत्वस्य कुत्वापवादत्वाङ्गीकारे तदनङ्गीकारे चासृक्शब्दस्यैवमेव व्युत्पादनं न्याय्यमित्यर्थप्रतिपादन एवास्य ग्रन्थस्य तात्पर्यम्, न तु मूलोक्तयद्वेतिपक्षस्य न्याय्यत्वप्रतिपादन इत्यवधेयम्। एतेन अन्येतु क्विन्प्रत्ययस्य कुरिति सूत्रे इदं तर्हि प्रयोजनं, येभ्यः क्विन्विधीयते तेषामन्यप्रत्ययान्तानामपि कुत्वं यथा स्यात्। मानो अस्राक्, मानो अद्राग्गिति भाष्यात्कुत्वस्यासिद्धत्वात्षत्वे क्विन्प्रत्ययस्येति कुत्वं भवत्येव। षत्वस्य कुत्वापवादत्वं

'बहूर्जि नुम्प्रतिषेधः' इति वार्त्तिकरीत्येदम् । अचः परो यो झल् तदन्तस्य नुमिति तत्प्रत्याख्यातृभाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोद्धव्यम् । नचैवं कुण्डानीत्यासिद्धिः । 'इकोऽचि' इति सूत्रेऽचः सर्वनामस्थाने इत्यनुवर्त्त्य अनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च सर्वनामस्थाने इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टम् । काष्ठतक्षीत्यादौ 'दिव औत्' इति सुत्रभाष्योदाहृतेऽचः परझल्त्वजाते-

---

तु न । त्रिपाद्यां तक्रन्यायाप्रवृत्तेः । पदान्ते विशिष्य षत्वविधिकल्पकाभावाच्चे-त्याहुरित्याचार्योक्तमपास्तम् । षत्वस्य कुत्वापवादताया नागेशानभिप्रेतत्वात् ॥

वार्तिकरीत्येति । तेन वार्तिकेन नपुंसकस्य झलच इत्यत्र झलन्तस्या-जन्तस्य च क्लीबस्य नुमित्यर्थस्यैव लाभादिति भावः । भाष्यनये त्वत्र नुमः प्राप्तिरेव नेत्याह । अचः पर इति । अचः परो यो झलिति व्याख्याने ऽतिप्रसङ्गमाशङ्क्य परिहरति । नचैवमित्यादिना । अनुवर्त्येति । अस्य वाक्यभेदेनेत्यनेनान्वयः । नन्वच इत्यस्य पूर्वत्र पञ्चम्यन्तत्वेन कथमत्राजन्तस्य क्लीबस्य नुमित्यर्थलाभः । न च सर्वनामस्थान इति सप्तम्या अच इत्यस्य षष्ठ्यन्तत्वकल्पनया तल्लाभ इति वाच्यम् । नपुंसकस्य झलच इत्यत्र पञ्चम्या उगिदचामित्यत्र सर्वनामस्थान इति सप्तम्याश्च कृतार्थत्वेनोभयनिर्देशे पञ्चमी-निर्देशो बलीयानिति न्यायेन पञ्चम्या एव प्रकल्पकत्वप्रसक्तेरत आह । अनुवृत्तिसामर्थ्यादिति । तत्सामर्थ्यादिष्टवाचिनः परशब्दस्य ग्रहणादत्र सप्तम्यपि प्रकल्पिका भवतीति भावः । सामर्थ्यात्पूर्वविप्रतिषेधाश्रयणे गौरवा-दाह । साहचर्याच्चेति । नन्वेवं काष्ठतक्षीत्यादावचः परो यो झल् न तदन्त-मङ्गं, यश्चाङ्गान्त्यो झल् नायमचः पर इति नुमागमानुपपत्तिरत आह । काष्ठेति । झल्त्वजातेरिति । अचः परत्वमङ्गान्त्यत्वं च तस्या आश्रयद्वारकं बोध्यम् ।

राश्रयणान्न दोषः। अन्त्यादिति। इदं वाचनिकमेव बहूर्जूशब्दमात्र-विषयकम्। बहूर्ञ्जीति। श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोद्ध्यः। स्थानिवत्त्वादिति। 'कौ लुप्तं न' इति त्वसार्वत्रिकमिति भावः। स्पष्टश्चेदं 'दीधीवेवीटाम्' इति सूत्रे कैयटे॥

> जायन्ते नव सौ तथाऽमि च नव भ्याम्भिस्भ्यसां सङ्गमे
> षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि।
> चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तद्
> जानन्तु प्रतिभाऽस्तिचेन्निगदितुं षाण्मासिकोऽत्रावधिः॥

इति प्राचीनस्य शुष्कप्रक्रियातार्किकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह—गवाक्शब्दस्येति। शब्दपरत्वेनापूजार्थकत्वा-न्नस्य लोपः। भेदत इति। आद्यादित्वात्तसिः। भेदेनेत्यर्थः। नवेति। द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः। अग्रेऽपि प्रत्येकमेव संख्या-

---

बहूर्जूशब्दमात्रेति। बहूर्जि नुम्प्रतिषेध इति वार्तिकानन्तरमस्य पाठादिति भावः॥

ननु गवाक्शब्दस्य रूपाणीति मूलग्रन्थोऽसङ्गतः। क्लीबेऽर्चागतिभेदत इत्यु-त्तरग्रन्थानुरोधेन पूजार्थस्याप्यनुकरणावश्यकत्वेन तत्र नलोपनिषेधेन गवागिति रूपाभावादित्याशङ्क्याह। शब्दपरत्वेनेति। गवाचित्यस्यानुकरणे प्रकृति-वदनुकरणमितिन्यायेन नलोप इति भावः। द्वन्द्वान्ते श्रूयमाणत्वादिति। ननु द्वन्द्वान्ते श्रूयमाणस्य द्वन्द्वघटितसमासघटकस्यैव प्रत्येकं संबन्धस्यान्यत्र दृष्टत्वेन कथमत्र तन्न्यायप्रवृत्तिरिति चेदत्रोच्यते। नेदं द्वन्द्वान्त इत्यपूर्वं वचनं, किन्तु परस्परसाहित्यविशिष्टानां द्वन्द्वविधानात्साहित्यस्य चैकधर्मावच्छि-न्नान्वयित्वरूपतया द्वन्द्वघटकपदार्थानामेकत्रैवान्वयस्य वक्तव्यत्वान्न्यायमूलक-मेव। एवं चान्वयितावच्छेदकावच्छिन्नत्वस्य च समासघटकपदोपस्थापितस्येव

ऽन्वयः । गवागिति । सोर्लुका लुप्तत्वान्नुम् न । षण्णामिति । कुक्पक्षे त्रयाणां, गतौ त्रयाणामित्यर्थः । चत्वर्थस्येति । तेन गतौ त्रयाणामाधिक्यं नेत्यर्थः । कुक्पक्ष इति । पूजायामित्यर्थः । अष्वाक्षीति । सप्तविंशत्यधिका पञ्चशतीत्यर्थः ॥

यः शतेति । शतृप्रत्यय इत्यर्थः । आच्छीन । वेति वर्त्तते, उत्तरसूत्रे नित्यग्रहणात् । 'नाभ्यस्तात्' इत्यतो नेति तु नानुवर्त्तते । निषेधस्य प्राप्तिपूर्वकत्वात् । अत्र च प्राप्त्यभावात् । नुम्ग्रहणन्तु स्पष्टार्थम् । शतुरवयव इति । परो यः शतेति तु नोक्तम् । तुदन्ती-

---

समासाघटकपदोपस्थापितस्यापि धवखदिरौ छिन्धीत्यादौ दर्शनात्प्रकृतेऽपि स्वादीनां त्रयाणां प्रत्येकं नवपदार्थेऽन्वयो न्याय्य एवेति । प्रत्येकमेवेति । प्रत्येकान्वितनवपदसाहचर्यादिति भावः । लुका लुप्तत्वादिति । नन्वनपुंसकस्येति पर्युदासेन सोस्सर्वनामस्थानत्वाभावात्प्रत्ययलक्षणसत्त्वेऽपि नुमोऽप्राप्त्या इदमयुक्तमिति चेदत्र केचित् । लुका लोपो नपुंसके भवतीति पञ्चम्यन्तेनास्य नपुंसकत्वं स्मारितम् । न तु लुका लोप एव नुमभावे हेतुत्वेनोपात्तः । एवं च नपुंसकत्वान्नपुंसके च सर्वनामस्थानत्वाभावादिति शेषो बोध्य इत्याहुः । मिश्रास्तु सर्वनामस्थानसंज्ञापरत्वोभयविशिष्टस्यैव प्रत्ययस्य नुमागमनिमित्तत्वेन तत्रान्यतरविशेषणाभावे च विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य संभव इति परत्वात्मकविशेषणाभावप्रयुक्तो यः कारणतावच्छेदकावच्छिन्नाभावः सोऽत्र लुका लुप्तत्वादित्यनेन दर्शितः । सर्वनामस्थानसंज्ञाभावश्च न दर्शितः । संज्ञिसत्त्वे हि संज्ञया भवितव्यम् । संज्ञी च लुका लुप्तत्वान्नास्तीति न काचिदेवमुक्तौ क्षतिरिति वदन्ति ॥

उत्तरसूत्रवदत्रानुवृत्तस्य शतुरित्यस्यावयवपरता नेति सूचनायाह । इत्यर्थ इति । स्पष्टार्थमिति । इदितो नुमित्यतो नुम्ग्रहणानुवृत्तेः पूर्वसूत्रे आवश्यक-

त्यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन व्यपवर्गालाभेन च नुमभावापत्तेः। अवर्णश्च शतृभिन्नावयव एव गृह्यते, शत्रकारेणाव्यभिचारात्। शप्श्यनो। आदिति भातीत्यादौ नित्यनुमभावाय। अन्यथा प्रत्ययलक्षणेन स्यात्। आदित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम्। नलुमतेति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्ये एवेति भावः। पचन्तीत्यादिबहुवचने 'नपुंसकस्य झलचः' इति नुम्। निरवकाशत्वामिति। इदं 'छदिरुपधिबलेर्ढञ्' इति सूत्रे 'शेषाद्विभाषा' इति सूत्रे च भाष्ये स्पष्टम्। परे तु निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकताप्रयोजकत्वम्। प्रकृते तदभावेनाबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो

---

तयात्रापि तदनुवृत्तेस्सुवचत्वादिति भावः। मूलकृद्रीत्याह। उभयत इति। स्वसिद्धान्तरीत्याह। व्यपवर्गेति। स्थानिवद्भावस्तु नात्र, अपूर्वविधित्वात्। पञ्चमीसमासेनापि स्वविधौ स्थानिवद्भावस्यानिष्टत्वात्। शतृभिन्नेति। अत एव कुर्वतीत्यादौ नुम्नेति भावः। भातीति। क्वचिद्भान्तीति पाठः। सतु युक्तः। वैकल्पिकेषु भावानुष्ठानस्य न्याय्यत्वात्। नन्वादित्यस्याननुवृत्तावप्यत्र शपो लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न दोषोऽत आह। न लुमतेति। इति सूत्र इति। छदिरुपधीति सूत्रविषये, उगवादिभ्यो यदिति सूत्रे छदिषे हितं चर्मेत्यर्थे छदिरुपधिबलेर्ढञिति ढञः, चर्मणोऽञित्यञश्च प्राप्तौ ढञः पूर्वविप्रतिषेधेनाञ्बाधकत्वमुक्तम्। सावकाशस्यापि प्रतिपदविधेर्बाधकत्वे तु छादिषेयं तृणमित्यादौ सावकाशेन छदिरुपधीति ढञा प्रतिपदविधित्वादेवाञो बाधे सिद्धे पूर्वविप्रतिषेधाश्रयणं व्यर्थं स्यात्। तस्मात्प्रतिपदविधेर्निरवकाशत्वे सत्येव बाधकत्वं लभ्यत इति भावः। शेषाद्विभाषेति। तत्र हि शेषग्रहणं किमर्थं, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति। अनवकाशा हि विधयो बाधका भवन्ति।

नुमि स्वाम्पीत्येवेत्याहुः । धनुरिति । 'र्वोः' इति दीर्घस्तु न । रेफान्तस्याधातुत्वात् । 'श्रेयांसि' इत्यादौ युगपद् द्वयोरन्त्यादचः परत्वागोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न । सकृद्गतिन्यायात् । किं च अन्त्यादचः परो मित्प्रयोक्तव्य इति 'मिदचः' इत्यस्यार्थेन द्वयोर्मिलितयोरन्त्यादचः परप्रयोगासम्भवेन नात्र नुम्द्वयप्रसक्तिः पुनःप्रसङ्गविज्ञानेऽपि । किं च सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात् पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति 'नपुंसकस्य' इति सूत्रे भाष्ये स्पष्टम् ॥

इति हलन्ता नपुंसकलिङ्गाः

---

स्वरादि । स्वरादीनामपि निपातसंज्ञैव तु न कृता । स्वरादौ 'नि-

---

समासान्ताश्च कबभावे सावकाशा इत्युक्तम् । अनेन प्रतिपदविधेर्निरवकाशत्वे सत्येव बाधकत्वमिति स्पष्टमेवाभिहितम् । पुनः प्रसङ्गविज्ञानपक्षेऽप्याह । किंचेति । विधानकालिकानन्तर्याश्रयणेऽप्याह । किंचेति । सर्वमिदं बहूर्जि नुम्प्रतिषेध इति वार्तिकमतानुरोधेन । अचः परो यो झलित्यर्थाश्रयणेन तत्प्रत्याख्यातृभाष्यमते तु नित्यत्वादुगिल्लक्षणे नुमि ततो नपुंसकस्येत्यस्य प्राप्तिरेव नेति बोध्यम् ॥

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

निपातसंज्ञैवेति । प्राग्रीश्वरान्निपाता इत्यनन्तरं स्वरादीनीत्याद्यव्ययीभावश्चेत्यन्तं पठित्वा ततश्चादयोऽसत्त्व इति पठनीयम् । यत्राव्ययग्रहणं, तत्र निपातग्रहणमेवास्त्वित्याशयः । गणपाठमाश्रित्य तद्धितश्चेत्याद्यष्टाध्यायीसूत्रपाठप्रत्याख्याने तु स्वरादीनीत्येकमेव सूत्रं पठनीयमिति बोध्यम् । चादिष्वेव स्वरादीनामपि पाठस्तु न युक्तः । स्वरादिषु केषांचित्सत्त्ववाचित्वात्तेषां निपातसंज्ञानापत्तेः । स्पष्टं चेदं भाष्ये । स्वरादाविति । अत्रादिपदग्राह्ये

पाता आद्युदात्ता.' इत्यापत्तेः। एतेन चादीनामप्यव्ययसञ्ज्ञैव कार्ये-त्यपास्तमित्यन्यत्र विस्तरः। स्वरित्यादि। अनुकरणान्येतानि। तत्रैत एव निर्देशान्न स्वाद्युत्पत्तिः, तेन विसर्गादिकं न। स्वरादीनामनेक-शक्तिप्रधानता। स्वरागतः, स्वः स्थितः, स्वः पश्येत्यादिदर्शनात्। गणे च तन्त्रेण सर्वेषामुच्चारणम्। उच्चैरित्यादीन्यधिकरणशक्तिप्रधा-नानि, शब्दशक्तिस्वभावात्। हिरुगादीनि क्रियाप्रधानानि। क्रिया-प्राधान्यञ्चैषां क्रियायामेव विशेषणत्वेन। स्पष्टञ्चेदं 'तद्धितश्च' इति सूत्रे कैयटे। सायं, चिरं मान्ते अव्यये। 'सायंचिरम्' इति सूत्रस्थ-

---

प्रातरादावाद्युदात्तत्वापत्तिः। स्वरित्यत्र तु न दोषः। तस्य न्यङ्स्वरौ स्वरितात्रिति विशिष्य स्वरितत्वविधानात्तेनास्य बाधात्। इत्यापत्तेरिति। नच तत्रापि चादय आद्युदात्ता इति पाठान्नातिप्रसङ्ग इति वाच्यम्। तथा सत्यूर्यादीनामा-द्युदात्तत्वानापत्तेः। चादय इत्यादिपदेन तेषामपि ग्रहणे तु साक्षात्प्रभृतीनां केषां चित्कृञो योग एव निपातसंज्ञाविधानेन विकल्पेन संज्ञाविधानेन च निपातसंज्ञाया अभावेऽपि स्वरापत्तेः। एतेनेति। इष्टव्यवस्थाया अला-भेनेत्यर्थः। अव्ययसंज्ञैवेति। प्राग्रीश्वरादव्ययम्। स्वरादीनि, चादयो-ऽसत्त्व इत्येवंरीत्या पाठेनेति भावः। अनुकरणानीति। प्रयोगस्थाना-मिति भावः। ननु सिद्धान्तभूतभेदविवक्षायामर्थवत्त्वेन प्रातिपदिकत्वस्य सुवचतया कुतो न स्वाद्युत्पत्तिरित्यत आह। निर्देशादिति। रेफान्तेन निर्देशादित्यर्थः। ननु हिरुगाद्यर्थे कारकान्वयाभावात्कथं तस्य क्रियात्वमत आह। क्रियाप्राधान्यं चेति। क्रियायामेवेति। क्त्वान्ततुमुन्नन्तादिवदेषां क्रियायामेव विशेषणत्वाद्भाष्यकृत्कृतः क्रियाप्रधानत्वव्यवहारो, नतु क्रियामु-ख्यविशेष्यकबोधजनकत्वेनेति भावः। एवशब्देन नामार्थव्यवच्छेदः। तेन स्वरा दीनां घटादीनां च क्वचित्क्रियाविशेषणत्वेऽपि स्वर्पतिर्घटोदकमित्यादौ नामार्थे ऽप्यन्वयदर्शनान्न तेषां क्रियाप्राधान्यम्। पृथग्देवदत्त इत्यादिप्रयोगस्त्वस्ति-

भाष्यप्रामाण्याच्चिरमित्यव्ययत्वमप्रामाणिकमिति परे। वदिति। 'तेन तुल्यम्' 'तत्र तस्येव' 'तदर्हम्' इति विहितः। 'उपसर्गाच्छन्दसि' इति विहितस्य च्छान्दसत्वादेव न संज्ञा। वस्तुतः 'तद्धितश्च' इत्येव सिद्धेर्वद्ग्रहणं व्यर्थम्। अन्तराऽन्तरेणेति। अन्तरान्तरेण युक्ते' इति सूत्रे भाष्येऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्तः। अस्तीति। धनवानित्यर्थके अस्तिमानित्यादौ धनवाच्चिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः। विनि-

---

क्रियाक्षेपादुपपाद्यः। स्पष्टं चेदं कैयटोद्योतयोः। भाष्यप्रामाण्यादिति। तत्रहि भाष्ये 'अथ सायं चिरयोः किं निपात्यते? प्रत्ययसन्नियोगेन मान्तत्वं, नैतदस्ति प्रयोजनं, मकारान्तस्सायंशब्द' इत्युक्तम्। कैयटश्चानेन सायंशब्दः प्रत्याख्यायते। अव्ययत्वादेव ट्युट्युलोस्सिद्धत्वात्। चिरमित्यस्य तु मान्तत्वं निपात्यते इत्याह। चिरमित्यव्ययसत्त्वे तु सायंशब्दवच्चिरंशब्दादप्यव्ययत्वादेव ट्युट्युलोस्सिद्धत्वात्तस्यापि प्रत्याख्यानं कुर्यात्। तथाकरणेन च चिरमित्यस्याव्ययत्वमाकरासम्मतमिति भावः। इति विहित इति। विनिगमनाविरहात्सर्वेषां ग्रहणमिति भावः। नन्वेवं यदुद्गतो निवत इत्यादौ विभक्तिश्रवणानापत्तिः। तस्याप्यव्ययत्वादित्यत आह। उपसर्गेति। निपातत्वोक्तेरिति। तत्र हि परस्परसाहचर्येण निपातयोरेव ग्रहणमित्युक्तम्। ननु विभक्त्यन्तप्रतिरूपकत्वेन निपातत्वादव्ययत्वे सिद्धे स्वरादिष्वस्य पाठो व्यर्थोऽत आह। सत्त्ववचनस्येति। एतेनास्ति नास्ति दिष्टमिति सूत्रनिर्दिष्टस्य तेन सिद्धिस्सूचिता। न सिद्धिरिति। अर्थतो विभक्तिप्रतिरूपकत्वाभावात्। तथा चाप्रातिपदिकत्वान्मतुन्न स्यादिति भावः। ननु विभक्तिप्रतिरूपकत्वस्य शब्दत एवाश्रयणान्निपातत्वं भवत्येवेत्यत आह। विनिगमनाविरहेणेति। सिद्धा-

**गमनाविरहेण विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात्। तेनैव सिद्धिरिति तु मतुप्सूत्रे भाष्यकैयटयोः। सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भावः। एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम्। नमसिति। 'महसां नमसाम्' इति प्रयोगस्तु सत्त्ववाचकत्वे बोद्धव्यः। प्रताम् प्रशामिति। प्रतानिति नान्ताव्य-**

---

न्तमाह। तेनैवेति। विभक्तिप्रतिरूपकत्वेनैवेत्यर्थः। भाष्येति। तत्र हि 'अस्तिग्रहणं प्रत्ययविध्यर्थं, नोपाध्यर्थम्। अस्तिमानिति मतुब्यथा स्यात्। किं च कारणं न स्यात्। अप्रातिपदिकत्वात्। नैष दोषः। अव्ययमेषोऽस्तिशब्दः। कथमव्ययत्वं, विभक्तिस्वरप्रतिरूपकाश्चेति निपातसंज्ञा। निपातोऽव्ययमित्यव्ययसंज्ञा' इत्युक्तम्। ननूक्तरीत्यार्थतो विभक्तिप्रतिरूपकत्वाभावात्कथं निपातत्वमित्याशङ्क्य तदाशयमाह। सत्तेति। कथं चिदिति। विभक्त्यन्तस्य कर्तृविशिष्टसत्ताबोधकत्वेन वृत्तिघटकास्तिशब्दस्य सत्ताकर्तृविशेषबोधकत्वेन च विशेषणविशेष्यभावव्यत्यासेऽपि सत्ताद्यर्थबोधकताया उभयत्र तुल्यत्वेनार्थतस्सारूप्यमस्ति। विशेषणविशेष्यभावविषयेऽपि सारूप्यं नापेक्षितमिति तद्भाष्याशय इति भावः। न चैवमप्यसत्त्व इति पर्युदासादस्य निपातत्वं वक्तुमशक्यमिति वाच्यम्। अभिधानस्वाभाव्याद्वृत्तिघटकस्यैवास्तिशब्दस्य सत्ताकर्तृविशेषधनवाचकत्वेन धनवाचिनः केवलस्य तस्य क्वाप्यप्रयोगाद्धनादिपदैरुपस्थापितस्यैवास्यार्थस्य लिङ्गसंख्याविशेष्यत्वेनाविवक्षितत्वाल्लिङ्गसंख्याविशेष्यत्वेन विवक्षितत्वरूपसत्त्ववचनताया अभावात्। तदुक्तं 'वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते, द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षित इति यत्र लिङ्गसंख्याकारकरूपं वस्तूपलक्षणं व्यावर्तकं, यत्रार्थे सर्वनाम प्रयुज्यते, यश्च भेद्यत्वेन, लिङ्गसंख्याविशेष्यत्वेन विवक्षितः, सोऽर्थो द्रव्यमित्युच्यत इति तदर्थः। उपक्रमेऽस्य सत्त्ववचनत्वोक्तिस्तु विभक्तिप्रतिरूपकत्वाभावसूचनाय मतान्तररीत्या वेति न तद्विरोध इत्यवधेयम्। बोध्य इति। अव्ययमिति

**यस्य पृथक् पाठसामर्थ्यादपदान्तत्वाच्चास्य नत्वाभावः । प्रशानिति नान्तपाठोऽसांप्रदायिकः । मान्तानुकरणे नत्वाप्राप्तेः, स्वरादौ स्त्वादिवत् । कृन्मेजन्तसूत्रस्थभाष्यस्वरसोऽप्येवमेव । नञः स्वरा-**

---

महासंज्ञया असत्त्ववचनानामेव संज्ञाया न्याय्यत्वादिति भावः । क्वचित्सत्त्व-वचनानामपि स्वरादीनामव्ययत्वं तु भाष्यप्रामाण्यात्प्रामाणिकप्रयोगानुरोधेनान्वर्थत्वानाश्रयणादुपपाद्यमिति बोध्यम् । नन्वनयोः प्रपूर्वात्ताम्यतेश्शाम्यतेश्च क्विपि निष्पन्नत्वेन मकारस्य धात्ववयवत्वान्नत्वापत्तिरत आह । **सामर्थ्या-दिति** । ननु प्रपूर्वात्तनोतेः क्विपि निष्पन्नस्य विस्तारार्थकस्य प्रतानित्यस्यार्थभेदेन सार्थक्यसंभवात्कथं सामर्थ्यमत आह । **अपदान्तत्वाच्चेति** । अनयोरनुकरणत्वेनानुकार्यानुकरणयोरभेदविवक्षायां न पदत्वमिति भावः । सिद्धान्तभूतभेदविवक्षायां तु स्वरित्यादाविव न स्वाद्युत्पत्तिरिति बोध्यम् । कृतनत्वस्य प्रशानित्यस्य गणे पाठ इति कैयटाद्यभिमतमयुक्तमिति सूचयन्नाह । **असां-प्रदायिक इति** । तत्र हेतुं दर्शयति । **नत्वाप्राप्तेरिति** । ननु प्रपूर्वात् शान तेजन इत्यस्मात्क्विपि निष्पन्नस्यैवात्र पाठान्नोक्तदोषावकाश इत्यत आह । **भाष्यस्वरसोऽपीति** । तत्र हि कृदन्तं यन्मान्तमित्यर्थे प्रतामौ प्रताम इत्यादौ प्रत्ययलक्षणेन कृदन्तत्वस्य स्वतो मान्तत्वस्य च सत्त्वादव्ययत्वं स्यादित्याशङ्क्य आचार्यप्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवतीति । यदयं प्रशान्शब्दं स्वरादिषु पठतीत्युक्तम् । यदि शानधातोः क्विपि निष्पन्नस्य प्रशानित्यस्यैव गणे पाठः स्यात्तदा तस्य मान्तत्वाभावेनाव्ययत्वाप्राप्त्या स्वरादिपाठस्यावश्यकत्वाज्ज्ञापकत्वोपवर्णनमसङ्गतं स्यादिति भावः । ननु कृतनत्वस्य मान्तस्य गणे पाठ इत्यङ्गीकारेऽपि नत्वस्यासिद्धत्वादव्ययत्वप्राप्त्या ज्ञापकत्वप्रतिपादनं युज्यत एव । कैयटेनापि तद्भाष्यं तथैव व्याख्यातम् । एवं च नान्तपाठस्यासांप्रदायिकत्वं कथं ततो लभ्यत इति चेत्सत्यम् ।

**दित्वप्रामाणिकः पाठः। 'अव्यये नञ्कुनिपातानाम्' इत्यत्र पृथक् नञ्ग्रहणं तु अकरणिरित्यादौ परस्यापि कृत्स्वरस्य बाधनार्थमित्याकरः। एवं माङोऽपि स्वरादौ प्रक्षिप्तः पाठः। यावत्तावच्छब्दावव्युत्पन्नौ। उपसर्गविभक्ति। अत्र प्रतिरूपकत्वं त्रिनिगमनाविरहादर्थतः शब्दतश्च गृह्यते। 'गेये केन विनीतौ वाम्' इत्यत्रापि वामित्यस्य युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव। स्वरांशे**

---

नान्तपाठे प्रपूर्वाच्छानधातोः क्विपि निष्पन्नस्य प्रशानित्यस्याप्राप्ताव्ययसंज्ञासंपादनाय पाठस्य कृतार्थत्वाज्ज्ञापकत्वासङ्गतिः। अतो ज्ञापनपरभाष्यप्रामाण्यात्प्रपूर्वाच्छानधातोः क्विपोऽनभिधानकल्पनमावश्यकम्। मान्तपाठे तु स्वरादिविषये क्लृप्तस्य विकाराभावस्यात्रापि कल्पनेनोपपत्तावक्लृप्तकल्पनमत्र पक्षेऽनावश्यकमिति मान्तपाठ एव सांप्रदायिक इति बोध्यम्। यदयं प्रशान्शब्दं स्वरादिषु पठतीति भाष्यस्यापि गणे मान्तस्यैव पाठः। अन्यत्र प्रयोग एव तु नत्वं, यथा स्वरादीनां गणे रेफान्तपाठः। प्रयोगे तु विसर्गादीत्येवाशयो न तु गणेऽपि नान्तस्यैव पाठ इत्यवधेयम्। स्पष्टं चेदमुद्योते। **अप्रामाणिक इति**। निपातत्वादेव सिद्धेरिति भावः। नन्वस्य निपातत्वेऽव्यये नञ्कुनिपातानामित्यत्र पृथग्ग्रहणं व्यर्थं स्यादत आह। **बाधनार्थमिति**। **प्रक्षिप्त इति**। निपातत्वादेव सिद्धेः। **अव्युत्पन्नाविति**। वतुबन्तयोरसत्त्वार्थकतया निपातसंज्ञाया अप्राप्तेरिति भावः। **अत्र** = उपसर्गविभक्तिविषये। **प्रतिरूपकत्वमिति**। सादृश्यमित्यर्थः। नन्वर्थतोऽपि सारूप्यग्रहणे गेये केन विनीतौ वामित्यत्र वामित्यस्याव्ययत्वं न स्यात्। अत्र कर्मक्तान्तसमभिव्याहारेणोद्भूतकर्मत्वशक्तिकत्वेन बोधस्य वक्तुमशक्यतयाऽर्थतस्तद्बोधकवामित्येतद्विभक्त्यन्तप्रतिरूपकत्वस्य दुर्वचत्वादत आह। **गेये केनेति**। **विभक्त्यन्तसमानार्थत्वमिति**। युवामिति प्रथमाद्विवचनान्तमादायार्थतस्सा-

तु नाऽर्थतोऽसम्भवात् । एतेन युगं पततीत्यादिव्युत्पत्त्याश्रयणेन युगपदित्यादीनां विभक्तिप्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम् । एवन्तदित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपक-

---

रूप्यं, वामिति द्वितीयाद्विवचनान्तमादाय शब्दतस्सारूप्यं चास्तीति भावः । तदेतद्युष्मत्प्रकृतिकविभक्त्यन्तेत्यनेन ग्रन्थकृता सूचितमिति बोध्यम् । नन्वेवं स्वरप्रतिरूपकत्वमप्युभयतो विलक्षणीयं स्यादित्याशङ्क्याह । स्वरांशे त्विति । यत्तु अन्ये तु स्वराद्यैकरूप्याय सर्वत्र शब्दत एव सारूप्यं, नार्थतः । तेन तस्मादित्यर्थकतदित्यस्य प्रथमान्तार्थकत्वावित्यस्य चाव्ययत्वसिद्धिः । अत एव धनवाचिनोऽस्तिशब्दस्य विभक्तिप्रतिरूपकत्वेनाव्ययत्वसिद्धिरिति मतुप्सूत्रे भाष्यकैयटोक्तं संगच्छते । विभक्त्यन्तं च पदद्वयाघटितमेवेति न युगपदित्यादीनां पाठवैयर्थ्यमित्याहुरित्याचार्यास्तत्र । स्वरांशेऽसंभवादर्थतस्सारूप्यस्य परित्यागेऽप्यन्यत्र तत्त्यागे मानाभावात् । तस्मादित्यर्थे तदिति यदि प्रामाणिकः प्रयोगः, तदा लुप्तपञ्चम्यन्ततदित्यनेनार्थतस्सारूप्यं बोध्यम् । वस्तुतस्तु हेत्वादिशब्दप्रयोगस्थले षष्ठ्यन्तस्यापि हेतुबोधकतायाः प्रसिद्धत्वेन तादृशलुप्तषष्ठ्यन्तविभक्तिप्रतिरूपकत्वमेवेति न पृथग्लुप्तपञ्चम्यन्तविभक्तिप्रतिरूपकाव्ययस्याप्यावश्यकतेत्यवधेयम् । वामित्यस्य सिद्धिरुक्तैव । मतुप्सूत्रस्थभाष्याशयस्यापि प्रागुपवर्णितत्वेन न तद्विरोध इति सुधीभिर्विभावनीयम् । एतेनेति । अर्थतोऽपि सारूप्यस्य विवक्षणेनेत्यर्थः । अपास्तमिति । नच वामित्यस्येवास्याप्येककाले इति विभक्त्यन्तमादायार्थतस्सारूप्यं, युगं पततीत्यर्थकयुगपच्छब्दमादाय शब्दतस्सारूप्यं चास्तीति कुतो न विभक्तिप्रतिरूपकत्वेन सिद्धिरिति वाच्यम् । प्रत्यासत्त्या यच्छब्दप्रकृतिकविभक्त्यन्तमादाय शब्दतस्सारूप्यं, तच्छब्दप्रकृतिकविभक्त्यन्तमादायैवार्थतस्सारूप्यस्यापि विवक्षणेनादोषात् । लुप्तषष्ठीकेति । अत्र सानुस्वारपाठोऽपपाठः । तदित्यव्ययस्य लुप्तषष्ठ्यन्त-

मव्ययम्। अत एव 'अविद्या तच्चितोर्योगः' 'तत्तदर्थविभाग इत्यादौ 'त्यदादीनि' इति नैकशेषः। अवदत्तमिति। अत्र क्रियायोगेऽपि—

अवदत्तं विदत्तश्च प्रदत्तश्चादिकर्मणि।
सुदत्तमनुदत्तश्च निदत्तमिति चेष्यते ॥

इति भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोद्ध्यत इत्याशयः। आकृतीति। 'अहः' इत्यहनीत्यर्थे। ओमिति

---

विभक्तिप्रतिरूपकत्वाङ्गीकारेणोक्तप्रयोगनिर्वाहे लुप्तषष्ठ्यन्तत्वस्वीकारे फलाभावात्। एतेन लुप्तषष्ठीकमिति प्रतीकमुपादाय इदमयुक्तम्। प्रथमान्तानामेव द्वन्द्वविधानेन तच्चितोरिति द्वन्द्वे षष्ठ्यन्तस्य प्रवेशानर्हत्वादित्याचार्योक्तमपास्तम्। अत एवेति। तदित्यस्याव्ययत्वाङ्गीकारादेवेत्यर्थः। तच्चितोर्योग इति। 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगष्षडस्माकमनादय' इति पद्ये तदित्यस्याव्ययत्वमावश्यकमिति भावः। नैकशेष इति। त्यदादिषु साहचर्येणानव्ययस्यैव ग्रहणादिति भावः। यद्यपि तत्तदर्थविभाग इति प्रयोगः तस्य तस्येति कृतद्विर्वचनस्यार्थशब्देनार्थविभागशब्देन वा षष्ठीसमासे ससोऽर्थविभाग इति समानाधिकरणसमासे वा सिद्धस्तथाप्येकतच्छब्दस्य प्रकृतिपरत्वेनान्यस्य प्रत्ययपरत्वेन च वीप्साया अभावाद्विर्वचनासंभव इत्याशयः। लुप्तषष्ठ्यन्तप्रतिरूपकस्य तदित्यव्ययस्याङ्गीकारे तु प्रकृतिप्रत्ययबोधकयोरन्तर्भूतषष्ठ्यर्थयोर्द्वन्द्वं कृत्वा तस्यार्थशब्देन समानाधिकरणसमासे न काप्यनुपपत्तिः। यदि तु तच्छब्देन पूर्वत्र द्वन्द्वनिर्दिष्टप्रकृतिप्रत्ययसमुदायं परामृश्यावयववीप्सामादाय द्विर्वचनेन साधुत्वाङ्गीकारे नेदं फलमस्य विभक्तिप्रतिरूपकाव्ययत्वे एकशेषाप्रसक्तेरिति विभाव्यते, तदा पूर्वोक्तमेवासाधारणं फलमिति बोध्यम्। अत एवैतत्प्रयोगस्य तथैव साधुत्वमभिहितमर्थवत्सूत्रे शब्दरत्ने। क्रियायोगे

च स्वरादिषु। तच्च—अश्च उश्च म् चेति व्युत्पत्त्या शिवादिवाचकम्, 'अवतेष्टिलोपश्च' इति सिद्धं ब्रह्मण्यङ्गीकारे च । उभयोरपि स्वरादित्वं, व्याख्यानात्। अन्त्ये 'कृन्मेजन्तः' इति तु न सिद्ध्यति । 'च्विरव्ययम्' इत्युणादिपठितेन नियमादप्राप्तेः। उणादिव्युत्पन्नानाञ्चेचादिस्वराद्यपठितानां भवति, तर्हि च्व्यन्ताना-मेवेति तदर्थः। अन्यथा च्व्यन्तानां (ऊर्यादिच्विडाचश्चेत्यनेन) निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। 'स्वरादिनिपातम्' इत्यत्र

---

ऽपीति। अस्योपसर्गत्वाभावबोधनद्वारेत्यनेनान्वयः। उपसर्गत्वे त्वच उपसर्गात्त इति तादेशस्स्यात्तथा च भाष्यप्रयोगासङ्गतिरिति भावः । नच तद्बलेन तत्त्वाभावकल्पनमेव किं न स्यादिति वाच्यम्। गुणप्रधानसन्निधौ प्रधानबाध-कल्पनापेक्षया गुणशास्त्रबाधकल्पनस्यौचित्यात् । इति सिद्धमिति। तेनावते-र्मन्प्रत्यये प्रत्ययस्य टेर्लोपे ज्वरत्वरेत्यादिनोपधावकारयोरूठि गुणे सति निष्पन्नमित्यर्थः। लाक्षणिकत्वादस्य स्वरादित्वं न स्यादित्याशङ्कायामाह । उभयोरपीति। व्याख्यानादिति। लक्ष्यानुरोधरूपादित्यर्थः। अप्राप्तेरिति। ननु तत्र ग्लानुदिभ्यां डौरिति पूर्वसूत्राड्डौरित्यस्यानुवृत्त्या डौप्रत्ययान्तस्य चेदव्ययसंज्ञा तर्हि च्व्यन्तस्यैवेति नियमलाभात्कथं तेनात्राप्राप्तिरिति चेन्न। तथा नियमाङ्गीकारे रातेर्डैर्गमेर्डोरिति सूत्रनिष्पन्नयोः रैगोशब्दयोः कृन्मेजन्त इति सूत्रप्राप्ताव्ययसंज्ञाया व्यावृत्त्यलाभेन तदर्थं डौरित्यस्याननुवृत्त्या सामान्यतो नियमस्य स्वीकार्यत्वात्। तदेतदभिप्रेत्याह। उणादीति। चादिस्वराद्यपठि-तानामिति । एतेनौणादिकडैस्प्रत्ययान्तयोरुच्चैर्नीचैरित्यनयोरवतेर्मन् टिलो-पश्चेति सूत्रनिष्पन्नस्य ओमित्यस्य च स्वरादिनिपातमित्यव्ययत्वासिद्धिः । अन्यथा तस्याऽपि नियमेन व्यावृत्तिः स्यादिति भावः। नच तेषां स्वरादि-पाठसामर्थ्यादेवाव्ययत्वासिद्ध्येदं विशेषणं व्यर्थमिति वाच्यम्। सामर्थ्यादव्य

निपातपदे गौणमुख्यन्यायाप्रवृत्तिः, अनित्यत्वात्। अन्यथा 'ओत्' इति प्रगृह्यत्वमिवेदमपि न स्यात्। एवमतिशयेन साधुरित्यर्थे साधीय इत्यपि ॥

सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवद् अवयवकार्त्स्न्ये इत्याशयेनाह—यस्मात्सर्वेति। वचनत्रयात्मिकेत्यर्थः। नेति। किन्त्वेकवचनमेवेत्यर्थः। ननु 'संख्याकारकबोधकैरेकवाक्यतया सुपां

---

यत्वस्वीकारापेक्षया नियमसङ्कोचस्यैव न्याय्यत्वात्। शिवादिवाचकस्यौमित्यस्याव्ययत्वसंपादनेन तत्पाठस्य चरितार्थतया तद्विषये सामर्थ्याभावाच्च। एतेनास्य विशेषणस्य वैयर्थ्यं वदन्त आचार्याः परास्ताः। ननु च्व्यन्तार्थस्य गौणत्वेन तस्य गौणमुख्यन्यायेन निपातत्वाभावादव्ययत्वाप्राप्त्या विध्यर्थत्वमेवास्य, न नियमार्थत्वमत आह। न्यायाप्रवृत्तिरिति। अनित्यत्वादिति। इणष्षीध्वमिति सूत्रस्याङ्ग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्तदनित्यत्वेनैवास्याप्यनित्यत्वमिति भावः। साधीय इति। अत एव तत्र तत्र कश्च साधीय इति भाष्यप्रयोगसङ्गतिः। ईयसुन्नन्तत्वे हि साधीयानिति स्यादिति भावः ॥

अवयवकार्त्स्न्ये इति। न सर्वा विभक्तिर्यस्मादित्येकवचनान्तेन विग्रहेऽभिधानस्वाभाव्यात्तत्रैव सर्वशब्दस्य वृत्तेरौचित्यादिति भावः। एवं च विनिगमनाविरहात्खलेकपोतन्यायेन सर्वविभक्त्येकवचनमव्ययेभ्य उत्पद्यत इति सिद्धान्तेऽपि नानुपपत्तिः। यदि तु बहुवचनान्तेन विग्रहं स्वीकृत्य सर्वान्नीनो भिक्षुरित्यादाविव प्रकारकार्त्स्न्यवाचकस्य सर्वशब्दस्य ग्रहणं, तदा निरुक्तसिद्धान्तेऽव्ययेभ्यस्सर्वविभक्त्येकवचनोत्पत्त्या सूत्रस्यासंभवदुक्तिकत्वं स्यादिति बोध्यम्। अवयवकार्त्स्न्यवाचिनस्सर्वशब्दस्य ग्रहणेन फलितमर्थमाह। वचनत्रयात्मिकेति। नन्वेवं स्वीकारेऽपि कथमुक्तिसंभव इति शङ्कते। नन्वित्यादिना।

विधानम्' इति पक्षेऽव्ययार्थे संख्याकारकयोरभावात्कथं विभक्तिः। 'अव्ययादाप्सुपः' इति ज्ञापकाश्रयणे च सर्वाऽपि। किं च विहितानां नियमपक्षेऽपि नास्योपपत्तिः, तत्पक्षे सर्वेष्वर्थेषु विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनेव जातस्य निवृत्तिः। तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते। नियमश्च द्विविधः—अर्थनियमः, प्रत्ययनियमो वा। अन्त्योऽपि द्विविधः—प्रकृतार्थापेक्षः, सामान्यापेक्षो वा। तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव। कर्मा-

---

एकवाक्यतयेति। कर्मगतैकत्वविवक्षायां प्रातिपदिकाद्द्वितीयैकवचनमित्यादिरूपेणेत्यर्थः। सुपां विधानमिति। स्वादिसूत्रेणेति भावः। सर्वापीति। विनिगमनाविरहादिति भावः। ननु विहितानां नियम इति पक्षेऽस्य सूत्रस्योपपत्तिरत आह। किंचेति। सर्वेष्वर्थेष्विति। अस्य सर्वविभक्त्युत्पत्तावित्युत्तरेणान्वयः। विधेयतयेति। इदं च प्रत्ययस्य प्राधान्ये हेतुः। ननु प्रत्ययविधौ निर्दिष्टपरिभाषया अव्यवहितत्वांशोपस्थितौ कथमेकस्मात्सर्वविभक्त्युत्पत्तिरत आह। प्रकृतिभेदकल्पनेनेति। निवर्तत इति। तस्य काल्पनिकत्वादिति भावः। अर्थनियम इति। कर्मणि द्वितीयैव, प्रातिपदिकार्थे प्रथमैवेत्यादिनियमो ह्यर्थे नियम इति व्युत्पत्त्यार्थनियम इत्युच्यते। कर्माद्यर्थे द्वितीयादीनां नियमनात्। अत एव यत एवकारस्ततोऽन्यत्र नियम इति प्रवादः। एवं प्रत्ययनियम इत्यत्रापि बोध्यम्। तत्रेति। उक्तनियमेष्वित्यर्थः। कर्माद्यर्थयोग्येति। प्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैवेत्याद्यर्थनियमेन हि प्रत्यासत्त्या यत्र कर्मादिसंभवस्तत्रैवान्यासां निवृत्तेर्न्याय्यत्वादीदृशविशेषणलाभ इति भावः। प्रातिपदिकार्थेति सूत्रविषये नियमस्वरूपं दर्शयति। कर्मादिरहित इति। मात्रपदेन प्रातिपदिकार्थातिरिक्तस्य कर्मादेर्व्यवच्छेदादीदृशार्थ-

दिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवेत्यादिरर्थ-नियमः। अत्र पक्षे सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यो, विभक्ती-नामनियतत्वात्। कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, न करणादौ; कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा, न कर्मादौ; संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवच-नादि, न द्वित्वादावित्यादिः प्रकृतार्थापेक्षप्रत्ययनियमः। अत्रापि पक्षे सर्वाः सप्तापि विभक्तयोऽव्ययेभ्यो लभ्यन्ते। अथ प्रातिपदिका-च्चेद् द्वितीया तदा कर्मण्येव, नान्यत्र; प्रातिपदिकाच्चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवेत्यादिः सामान्यापेक्षः प्रत्ययनियमः, तदाऽव्ययेभ्यो विभक्ति-प्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव सा, इति सर्वाऽपि। यद्यपि सुपां

---

लाभः। तद्योग्येति। पर्युदासन्यायेन तद्रहितस्य तद्योग्यस्यैव ग्रहीतुमौ-चित्यादिति भावः। इत्यादिरिति। आदिना संख्यावदर्थयोग्यप्रातिपदि-काच्चेदेकत्वादौ विभक्तिस्तदैकवचनमेवेत्यादिनियमसंग्रहः। विभक्तय इति। स्वादिसूत्रेणेति भावः। तत्र हेतुमाह। अनियतत्वादिति। अव्ययानां कर्माद्यर्थयोग्यत्वाभावेन नियम्यकोटावप्रवेशे ततो विभक्तीनामनियमनादिति भावः। अथ प्रकृतार्थापेक्षप्रत्ययानियमस्वरूपमाह। कर्माद्यर्थयोग्येति। प्रकृतार्थापेक्ष इति। तुल्यजातीयस्यैव नियमेन व्यावृत्तेर्न्याय्यतया प्रकृता-न्कर्मत्वादीनर्थान्प्रातिपदिकविशेषणतयापेक्षत इति भावः। लभ्यन्त इति। कर्माद्यर्थयोग्यप्रातिपदिकस्यैव नियम्यकोटिप्रवेशादिति भावः। सामान्यापेक्ष-प्रत्ययनियमस्वरूपमाह। अथेति। प्राप्तिरेव नेति। अव्ययार्थे कर्मत्वादेस्तद्यो-ग्यत्वस्य वाभावादिति भावः। सर्वापीति विनिगमनाविरहादिति भावः।

तिङां संख्याकर्मोभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्यं, तथापि 'कर्मण्येव, न तु तदभावे' इत्याकारो वक्तुं शक्यः। स्पष्टश्चेदं सर्वं 'बहुषु' इत्यादिसूत्रेषु भाष्ये। तत्र हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्तयः संपूर्णा उक्ताः। सामान्यापेक्षप्रत्ययनियमे च सुपोऽप्राप्तिरेवोक्ता। 'अव्ययादाप्सुपः' इति सूत्रे भाष्येऽपि स्फुटमिदमिति चेत्—अत्र 'तद्धितश्च' इति सूत्रे भाष्यकृतः—'एकवचनम्' इत्येव सूत्रं कार्यम्। एकग्रहणञ्च न कार्यम्। विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गः। तस्य द्वित्वबहुत्वयोरितरे बाधके भविष्यतः। एवञ्चैकत्ववत्यपि भविष्यति, अलिङ्गासंख्येभ्योऽव्ययेभ्यश्चैकवचनम्। द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोद्ध्यैकत्वाभावेऽपि तत्प्रवृत्तेः। द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तावर्थात् एकवचनस्य 'एकवचनम्' इत्येतद्वचनं विनाऽपि द्वित्वाद्यभावे

---

सुप्तिङ्साधारण्येनास्य प्रवृत्तिं बोधयितुमाह। विभक्तिविधाविति। अपिसमुच्चेयमाह। अलिङ्गेति। नन्वेकस्य वचनमेकवचनमित्यन्वर्थसंज्ञाबलात्कथमेकवचनमिति सामान्यसूत्रेणाप्यव्ययेभ्य एकवचनोत्पत्तिरत आह। द्विबहुग्रहणसामर्थ्यादिति। तेन योगरूढिस्थले क्वचित्स्थलपङ्कजादाविव योगार्थस्य परित्यागोऽपि बोध्यत इति भावः। तेन यत्रासंभवस्तत्र तत्त्यागेऽपि यत्र संभवस्तत्र तद्बोध इष्ट एव। अत एव घटो भवतीत्यादौ तत एकत्वप्रतीतिः। अव्ययभावाख्यातस्थले तदप्रतीतिरिति च व्यवस्था सिद्ध्यति। एवं विधविशेषलाभायैवैकवचनमिति महासंज्ञाकरणमिति बोध्यम्। नन्वेवमप्यव्ययार्थे कर्माद्यभावात्कथमव्ययेभ्य एकवचनस्यापि प्राप्तिरत आह। द्वित्वबहुत्वयो-

कर्मादौ सिद्धत्वेन सामर्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेऽप्येतत्प्रवर्त्तेत इति विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन। अत एव 'अव्ययादाप्सुप' इति प्रत्याहारग्रहणं चारितार्थं, 'तृतीयासप्तम्योः' इति च। प्रथमाऽपि मात्रग्रहणाद् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसंभावना तत्रैवेति तस्या अप्यप्राप्तिरव्ययेभ्यः। पचतिकल्पमित्यादौ तु नानेन सर्वैकवचनम्। सर्वथाऽप्राप्तावेव तस्य विध्यर्थत्वात्। अत्र च न तथा, कर्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोद्ध्यम्। यत्तु—कैयटेन प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोद्ध्यत इति तद्धितश्चेति सूत्रे रूपप्सूत्रे चोक्तम्, तन्न। स्वादिसूत्रे प्रथमायाः

---

रित्यादिना। सिद्धत्वेनेति। कर्मणि द्वितीयेत्यादिभिरिति भावः। अप्राप्तप्रापणार्थमिति। अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव, न तु प्रातिपदिकत्वाभावप्रयुक्तापि। अस्य सुब्विध्येकवाक्यत्वात्। तेन तिङन्तेभ्यो नापत्तिरिति बोध्यम्। एतदिति। एकवचनमिति सामान्यसूत्रमित्यर्थः। सर्वविभक्त्येकवचनमिति। तावत्प्रकृतिकल्पनयेति भावः। अत्रार्थे सूत्रसम्मतिं दर्शयति। अत एवेति। चरितार्थमिति। अन्यथा सोरित्येव वदेदिति भावः। नन्वव्ययार्थे कर्मत्वाद्यभावाद्द्वितीयैकवचनादीनामप्राप्तावपि प्रातिपदिकार्थमात्रे विहितायाः प्रथमायाः प्राप्तस्सुवचतया कथमेकवचनमित्यस्याप्राप्तप्रापणार्थत्वमत आह। प्रथमापीति। अनेनेति। एकवचनमित्युत्सर्गसूत्रेणेत्यर्थः। कर्तृत्वकर्मत्वसत्त्वेनेति। एतेन कर्तृकरणयोस्तृतीया, कर्मणि द्वितीयेत्यादिभिरेव ततस्तदुत्पत्तिस्सूचिता। एकत्वसत्त्वेनेति। एका क्रियेति रूपप्सूत्रस्थभाष्येण तत्रैकत्वस्याङ्गीकारादिति भावः। ननु नियमस्य विधिमूलकत्वेनाभ्यर्हितत्वमेव

प्राथम्येऽपि नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वेन तस्याविनिगमकत्वात् । 'णिजां त्रयाणाम्' इत्यत्र त्रयाणाङ्ग्रहणेन 'आद्युदात्तश्च' इति सूत्रे आदिग्रहणेन च पाणिनिना स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च । अत्र प्रथमा संपूर्णाऽव्ययेभ्यः, प्रथमाया एवैकवचनमित्यादिपक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते, तान्यसङ्गतानि । उक्तरीत्या तेषामुक्तिसम्भवाभावात् । घट इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन द्वित्वाद्यप्रतीतौ संख्यावदर्थत्वेन सत्त्वभूतत्वात्, प्रकरणाच्च । 'बहुषु' इत्यादिसूत्रभाष्योक्त-

---

तदपेक्षस्य प्राथम्यस्य ग्रहणे विनिगमकं स्यादत आह । त्रयाणां ग्रहणेनेति । बहुत्वसंख्यायां त्रित्वस्य प्राथम्याद्बहुवचनेनैव त्रयाणामित्यर्थलाभादिति भावः। नन्वनेनात्र शास्त्रे बहुवचनलभ्यबहुत्वविषय एवैतन्न्यायाप्रवृत्तेर्ज्ञापनात्म प्रकृते दोषोऽत आह । आदिग्रहणेन चेति । चेनाव्ययादाप्सुप इति सूत्रे प्रत्याहारग्रहणस्य तृतीयासप्तम्योरिरिति सूत्रे तृतीयासप्तम्योर्ग्रहणस्य च संग्रहः । नन्वेकत्वे एकवचनस्याविधानेन घट इत्युक्ते कथमेकत्वनिश्चय इत्याशङ्कयाह । घट इत्युक्त इति । सत्त्वभूतत्वादिति । सत्त्वरूपत्वेनाखिलसंख्योपस्थितौ द्विवचनाद्यभावेन द्वित्वाद्यभावनिश्चये सति पारिशेष्यादेकत्वप्रकारकबोधो भवतीति भावः । ननु द्वित्वादिबोधतात्पर्यग्राहकाभावे प्रकृत्यर्थस्य सत्त्वभूतत्वेन संख्यासामान्यभानसंभवेऽप्येकत्वत्वेन तद्बोधासंभवः । तथाच घट इत्यादिजन्यबोधस्य द्वौ वा त्रयो वेति संशयाप्रतिबन्धकतया तादृशसंशयापत्तिः । अनुभूयते च तत्र संशयानुत्पत्तिरित्यत आह । प्रकरणाच्चेति । कर्मणि द्वितीयेत्यादिप्रकरणैकवाक्यतापन्नस्वादिसूत्रविधेययोर्द्विवचनबहुवचनयोर्बहुष्वित्याद्येकवाक्यताबलेन संख्याविशेषप्रत्यायकत्वस्य दर्शनेन तत्प्रकरणैकवाक्यतापन्नस्वादिसूत्रविहितस्यैकवचनस्यापि प्रकरणमहिम्नान्वर्थसंज्ञाबललभ्यसंख्या-

पक्षास्त्वेकदेशिनो, न सिद्धान्तिन इति तत्त्वम्। असर्वविभक्ति-रितिबहुव्रीहिलभ्यो विशेष्य इत्याह—तद्धितान्त इति। केवलस्य तद्धितस्य प्रयोगाभावेन फलाभावात्संज्ञाविधावपि तदन्तविधि-रिति भावः। नन्वेवमपि पचतिकल्पमित्यादावतिव्याप्तिः, उक्त-रीत्या तेषामसर्वविभक्तित्वात्, उभयशब्दे चातिव्याप्तिः, ततो द्विवचनानुत्पादाद्; अत आह—परिगणनमिति। एवञ्च सूत्रं न कार्य्यमिति भावः। तसिलादय इति। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्ता इत्यर्थः। शस्प्रभृतय इति। 'बह्व-ल्पार्थाच्छस्' इत्यारभ्य 'अव्यक्तानुकरणाद्' इति डाजन्ताः। यस्तु—'इवे प्रतिकृतौ' इत्यधिकारे 'प्रत्नपूर्वविश्वेमात्थाल्छन्दसि' इति थाल्, तस्य स्वरादौ 'आस्थालौ' इति पाठेनाव्ययत्वम्। तत्र 'इण आसिः' इत्युणादिसूत्रविहित आसिः। अया इत्युदा-

---

विशेषबोधकत्वस्य न्याय्यतया विशेषरूपेण संख्याबोधोपपत्तिरिति भावः। पक्षास्त्विति। तत्तत्पक्षैरव्ययेभ्यस्सर्वासां विभक्तीनां सर्वाणि वचनानि भवन्तीत्युपपादनमेकदेशिनः। योगविभागेनैकवचनमात्रोपपादकतद्धितश्चेति सूत्रस्थभाष्यविरोधादिति भावः। ननु विशेष्यासन्निधानात्कथं तदन्त-विधिरत आह। बहुव्रीहिलभ्य इति। नन्वेवमपि संज्ञाविधाविति निषेधान्न तल्लाभोऽत आह। फलाभावादिति। असर्वविभक्तित्वादिति। क्रियायां स्वत एकत्वसत्त्वेऽपि द्वित्वादेरभावेन द्विवचनबहुवचनयोरनुत्पादादिति भावः। सूत्रमिति। सूत्रारम्भेऽप्युक्तातिव्याप्तिपरिहाराय प्रतिपदपाठस्यावश्यकत्वेन तेषां स्वरादिगणपाठेनैवेष्टसिद्धौ प्रपञ्चार्थस्सूत्रारम्भ इति भावः। इदमुपलक्षणं, कृतामव्ययसंज्ञाविधायकयोरव्ययीभावश्चेत्यस्यापि। तेषामपि स्वरादिगणपाठे-नैवाव्ययत्वसिद्धेः। स्पष्टं चेदमाकरे। नन्वनेन प्रकरणान्तरस्थस्य थालोऽसंग्रहो-ऽत आह। यस्त्विति। तत्रेति। आस्थालाविति गणपाठ इत्यर्थः। आसिरिति।

हरणम्। आसिविधायके छन्दसीति नानुवर्त्तते। एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम्। अत्र च स्वरादावासिपाठ एव लिङ्गम्। 'अयासावयसा' इति तु च्छान्दसम्। अम् आमिति। 'अमु च च्छन्दसि' 'किमेत्तिङ्' इति विहितौ। कृत्वोर्था इति। कृत्वसुच्सुज्धाः। तसिवती इति। 'तेनैकदिक् तसिश्च' 'तेन तुल्यम्' इत्यादिविहितौ। एवञ्च स्वरादिषु वदिति पाठे फलं चिन्त्यम्। नानाञाविति। 'विनञ्भ्यां नानाञौ न सह' इति विहितौ॥

कृन्मेजन्तः॥ कृद् यो मान्त इति। 'कारयाम्' इत्यामन्ते 'आमः' इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः। .... ....

---

गृह्यत इति शेषः। नन्विण आसिरित्युणादिसूत्रे 'वहिहाधाभ्यश्छन्दसीति पूर्वसूत्राच्छन्दसीत्यनुवृत्त्या तस्य छान्दसत्वेन तत्र सुपां सुलुगित्यनेनैव लुक्सिद्धौ स्वरादिपाठो व्यर्थोऽत आह। नानुवर्त्तत इति। अननुवृत्तौ मानमाह। अत्र चेति। एतेन छन्दोमात्रविषयके थालि सुपां सुलुगित्यनेनापि सिद्धिरिति सूचितम्। नन्वेवमयासावित्यादिप्रयोगासङ्गतिरत आह। छान्दसमिति। छन्दसि सर्वविधीनां वैकल्पिकत्वादव्ययत्वेऽपि लुगभाव इति भावः। अम् आमितीति। यद्यपि भाष्ये मान्त इत्येव पठितम्, तथापि धमुञ स्थमोश्च तसिलादय इत्यनेनैव सिद्धया अर्थादमामावेव संभवत इत्याशयेन मूलेऽम् आमित्युक्तम्। तदनुरोधेनेदं प्रतीकमिति बोध्यम्। अम्च छन्दसीति। अमश्छन्दोमात्रविषयत्वबोधनेन तस्यापि पूर्ववत्सिद्धिरपि सूचिता॥

ननु मेजन्त इत्यस्य कृद्विशेषणत्वे कारयामित्यादौ सुपो लुङ्न स्यात्। मान्तस्य कृतोऽभावेनानव्ययत्वादत आह। आम इति। इष्टसिद्धिरिति। नचैवमप्यकजर्थमव्ययत्वमावश्यकमिति वाच्यम्। स्वार्थे परिपूर्णस्यैवार्थान्तर-

**कृदन्तस्य तु नैतद् विशेषणं, गणे प्रशाम्शब्दपाठात्। अन्यथा श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव। तेन प्रतामौ, लवमाचक्षाणो लौः इत्यादौ नातिप्रसङ्गः। न च—आधये, हे आधे, कुम्भकारेभ्य इत्यादौ गुणे एत्वे च कृते कृत एजन्तत्वेन सञ्ज्ञापत्तिः। .... .... ....**

---

संबन्धादामन्तार्थस्य संख्याकारकादिविषयकोत्थिताकाङ्क्षत्वेन परिसमाप्तार्थत्वात्तत्र बहिर्भूतकुत्सादियोगस्य वक्तुमशक्यतया अकचोऽप्राप्तेः। ननु प्राधान्यात्कृदन्तविशेषणत्वमेव कुतो नेत्यत आह। **कृदन्तस्य त्विति**। ननु मास्तु गणे पाठोऽनेनैवाव्ययत्वसिद्धेरत आह। **तेनेति**। कृदन्तविशेषणत्वाभावेनेत्यर्थः। **लौरिति**। ऋदोरबित्यप्रत्ययान्ताल्लवशब्दाण्णिचि क्विप्यल्लोपणिलोपयोरूठि वृद्ध्या सिद्ध इत्यर्थः। **नातिप्रसङ्ग इति**। अन्यथा सत्त्ववचनत्वेऽप्यव्ययीभावादाविव वचनसामर्थ्यादनेनाव्ययत्वप्रसङ्ग इति भावः। न च स्मारं स्मारं जीवसे इत्यादौ वचनस्य चारितार्थ्यात्कथं सामर्थ्यमिति वाच्यम्। अस्यामवस्थायां प्रत्याहारजन्यबोधविषयीभूते औकारान्तेऽसत्त्वभूतस्यासंभवेनैतत्सूत्रेऽनुवृत्ताव्ययपदस्याव्ययीभावश्चेत्यादाविव योगार्थपरिहारेण रूढ्यर्थस्यैवाश्रयणीयतया दोषस्य दुर्वारत्वात्। न च प्रतामित्यस्य स्वरादिगणे पाठात्कुतो नाव्ययत्वमिति वाच्यम्। स्वभावतो लिङ्गाद्यनन्वय्यर्थकस्य ग्लानिवाचकस्यैव तत्र पाठेन ग्लानिमद्वाचकस्य सत्त्ववचनस्य तेनाव्ययत्वस्य वक्तुमशक्यत्वात्। एवं शान्तिवाचकस्यैव प्रशामित्यस्य गणे पाठेन शान्तिमद्वाचकस्य सत्त्ववचनस्य न तेनाव्ययत्वम्। अत एव प्रशामावित्यस्य सिद्धिः। स्पष्टं चेदमुद्योत इति बोध्यम्। **संज्ञापत्तिरिति**। पञ्चमीसमासेन स्थानिवद्भावात्कृत्त्वस्य व्यपदेशिवद्भावेनैजन्तत्वस्य च सत्त्वादिति भावः। नचायादेशे कृते न तत्प्राप्तिरिति वाच्यम्। अन्तरङ्गानपीति न्यायेन लुक इव तत्प्रयोजकानामपि

न च बहिरङ्गत्वं गुणादेः, सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात्; लिङ्गसंख्याद्यनन्वयित्वेऽप्यव्ययी-भावादाविवात्राप्यापत्तेः—इति वाच्यम् । सन्निपातपरिभाषया बाधात् । न च तया सन्निपातविघातकत्वको बाधेऽपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम् । एज्विषयसन्निपातनिमित्तकाऽत्वीय-

---

प्राबल्यबोधनेन गुणे कृतेऽयादीन्बाधित्वाव्ययसंज्ञापत्तेः । यथोद्देशाभिप्रायेण शङ्कते । नचेति । लुग्विध्येकवाक्यतया संज्ञाशास्त्रस्य कार्यकालपक्षे प्रवृत्त्यङ्गीकारादुभयोस्समत्वमित्याह । कार्यार्थत्वादिति। संज्ञाकार्यस्य । लुकः । तत्त्वेन =सुप्संबन्धितया बहिरङ्गत्वेन । तत्त्वात्=बहिरङ्गत्वात् । नन्वव्ययमिति महासंज्ञया लिङ्गाद्यनन्वय्यर्थबोधक एवास्याः प्रवृत्तेः कथमत्र तत्प्राप्तिरत आह । अव्ययीभावादाविवेति । यथा तत्र लिङ्गविशेषयोगेऽपि वचनसामर्थ्यान्महासंज्ञाबललब्धयोगार्थपरित्यागेन रूढ्यर्थमात्रस्य ग्रहणं, तद्वदिहाप्येचपदघोध्यौकारान्तस्थले मुमुक्षवे इत्यादावन्वर्थसंज्ञाबलब्धलिङ्गसंख्यान्वयाभावरूपविशेषस्यासंभवेन तत्परित्यागेन केवलरूढ्यर्थस्यैव सामान्यतोऽत्र ग्रहीतुमौचित्यमिति भावः । एतेन वस्तुतस्त्वव्ययीभावस्य लिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् । आधय इत्यादेरन्वर्थसंज्ञाबलेनाव्ययत्ववारणसंभवेऽपि सन्निपातपरिभाषाप्रयोजनकथनार्थं भाष्यकृता एतदुपेक्षितमित्याचार्योक्तं, वस्तुतोऽव्ययीभावश्चेत्यत्र सामर्थ्यान्महासंज्ञायास्त्यागेऽप्येतद्विषये तत्त्यागे मानाभाव इति भट्टोक्तं चापास्तम् । बाधादिति । अव्ययसंज्ञाया इत्यादिः । मानाभाव इति । साक्षात्स्वसन्निपातविघातकस्य बाधेऽपि परम्परया तद्विघातकस्य बाधे मानाभाव इति भावः। उपादास्तेत्यत्र किन्त्वाभावस्य सन्निपातपरिभाषाफलत्वेन भगवता प्रतिपादनात्तादृशफलप्रदर्शनव्याजेन परम्परया सन्निपातविघातेऽपि परिभाषाप्रवृत्तौ मानमपि दर्शयति । एज्विषयेत्यादिना । एज्विषयत्वरूपसन्निपातनिमित्तकं

**सन्निपातविघातकस्य 'क्ङिति च' इति निषेधस्य तया निवृत्तावपि उपादास्तेत्यत्र कित्त्वापत्तेः। कित्त्वफलन्तु तत्सन्नियोगशिष्टेत्त्वसिद्धिः। एवञ्चोपादेस्तेति स्यात्। तत्र हि किदिति व्यपदेशाति-**

---

यदात्वं तत्संबन्धिसन्निपातविघातकस्य निषेधस्येत्यादि तदर्थः। नन्वतिदेशस्य कार्यार्थत्वात्कित्त्वकार्यस्य गुणनिषेधस्यानयाऽप्रवृत्तावतिदेशोऽपि न भवत्येवेत्यत आह। **कित्त्वफलं त्विति। उपादेस्तेति।** अत्र गुणघटित एव पाठः। उद्योते तथा दर्शनात्। सन्निपातपरिभाषया क्ङिति चेति गुणनिषेधस्याप्रवृत्त्या इत्त्वोत्तरं गुणस्य दुर्वारत्वाच्च। यद्यपि गुणोत्तरं मूर्धन्यादेशेनोपादेष्टेति भाव्यं, तथाप्यापाद्यमाने रूपे विशेषानादरेण मूर्धन्यादेशो न कृतः। किंच तत्तच्छास्त्रबोधितसाधुत्ववत्येव तदुत्तरशास्त्रप्रवृत्तिरिति नये सन्निपातपरिभाषायाः परम्परायामपि प्रवृत्तिरिति सिद्धान्ते गुणघटितेऽसाधुत्वस्यैव सत्त्वेन तत्र षत्वप्रवृत्तिर्नैव भवतीति ध्वनयितुं दन्त्यघटितः पाठः प्रदर्शितः। नचैवं सतीत्त्वघटितस्यापि तथात्वेन तत्र गुणशास्त्रमपि न प्रवर्तेतेति कथं गुणघटितपाठोपपत्तिरिति वाच्यम्। तत्र कित्त्वस्य तत्सन्नियोगशिष्टेत्त्वमात्रप्रवर्तकत्वमेव, नतु गुणनिवर्तकत्वमिति सूचयितुं तथा पाठादित्यपि बोध्यम्। एतेनात्र भिन्नभिन्नपाठप्रदर्शनमपास्तम्। यत्त्वात्वप्रवृत्तिकालिकमेज्विषयत्वमात्वस्योपजीव्यं, तच्च न क्ङिति चेति निषेधविनाश्यम्। यच्च निषेधेन विनाश्यमित्त्वोत्तरकालिकं न तदात्वस्योपजीव्यम्। तस्मादेज्विषयेत्त्वात्वविधानादकित्त्वसन्निपातनिमित्तमात्वं स्थाघ्वोरिति कित्त्वस्यानिमित्तम्। किन्त्वसन्नियुक्तं चेत्त्वमिति कित्त्वाभावे न भवतीति कैयटोक्तरीत्यैव सान्निपातपरिभाषाविरोध उपपादनीयः। तत्र चात्वोपजीव्याकित्त्वस्य साक्षादेव कित्त्वेन विनाशः। भावाभावयोर्विरोधादिति नैषा प्रतिबन्दी युक्ता। तस्माद्व्याख्यानाद्भाष्यप्रामाण्याच्च सन्निपातविघातकत्वं परंपरयाप्याश्रीयत इत्येव युक्तम्। तादृश-

देश एव । इत्त्वप्रवृत्तिकाले कित्कार्यस्यातिदेश्यस्याभावात् । तस्मादनया संनिपातविघातकशास्त्रस्येव तच्छास्त्रप्रवृत्तिनिमित्तातिदेशसञ्ज्ञानामपि निवृत्तिरवश्यं वाच्या । साक्षात्परम्परया वा स्वसन्नि-

---

महासंज्ञाकरणात्समुदायस्य नाव्ययत्वमित्येव वक्तुं युक्तमित्याचार्याः । तन्न । तत्र शब्दतोऽकित्त्वस्य निमित्तत्वेनानाश्रयणात्तथा तद्विरोधोपपादनस्यायुक्तत्वात् । मीनातिमिनोतीत्यत्रादेच उपदेश इति सूत्रादेचः, उपदेश इत्यनयोरनुवृत्त्या मीनात्यादीनामुपदेशे एजन्तत्वस्यासंभवादुपदेशे एजन्तानामित्यर्थस्य वक्तुमशक्यतया सामर्थ्याद्विषयपदाध्याहारेणैचो विषये सत्युपदेशोत्तरकालमेषामात्वमित्यर्थस्यैव भाष्यकृता तस्य सिद्धान्तितत्वात् । सामान्यत एज्विषयत्वस्यैवात्वनिमित्तत्वेन तदुक्तविशेषस्य शब्दतोऽलाभेनेत्त्वोत्तरकालिकगुणनिषेधस्याप्यनया वारयितुं शक्यतया नागेशोक्तदिशैव तद्विरोधोपपादनस्य न्याय्यत्वात् । अशितीत्यनुवृत्त्या एज्विषय इत्यर्थलाभस्तु न युक्तः । भाष्यानुक्तत्वात् । मध्ये फलाभावात्तन्निवृत्त्यात्र मण्डूकानुवृत्तौ गौरवात् । श्यन्नादिष्वेज्विषयत्वाभावेनैज्विषयत्वेन शित्सादृश्यस्य ग्रहीतुमशक्यत्वाच्च । अकित्त्वेन सादृश्यग्रहणादकित्त्वस्य तत्र शब्दतो निमित्तत्वसंपादने तु मीनातीत्यादावप्यात्वप्रसङ्गात् । महासंज्ञाकरणात्समुदायस्य नाव्ययत्वमित्येव वक्तुं युक्तमिति तदुक्तिरपि न युक्ता । अव्ययीभावादाविव वचनसामर्थ्यात्संज्ञाप्रवृत्तेर्दुर्वारत्वादिति बोध्यम् । ननु किदित्यनेन प्राधान्यात्कार्यातिदेशस्य न्याय्यतया प्रकृते सन्निपातपरिभाषया कित्त्वकार्यस्य गुणनिषेधस्यातिदेष्टुमशक्यतया तत्साभियुक्तमित्त्वमपि न भविष्यतीत्यत आह । व्यपदेशातिदेश इति । व्यवहारातिदेश इत्यर्थः । न्याय्यस्यापि कार्यातिदेशस्यात्र त्यागे हेतुं दर्शयति । इत्त्वप्रवृत्तिकाल इति । तस्मादिति । अत्र कित्त्वाभावस्य प्रकृतपरिभाषाफलत्वप्रतिपादनपरप्रकृतसूत्रस्थभाष्यप्रामाण्यादित्यर्थः । तच्छास्त्रेति । सन्निपातविघातकशास्त्रेत्यर्थः । संज्ञानामिति ।

पातविघातकस्य स्वयमनिमित्तमिति परिभाषार्थः। एतेनात्राक-जादि स्यादित्यपास्तम्। अकजाद्येकवाक्यतापन्नाव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च। लुगेकवाक्यतापन्ना तु न गुणादितोऽन्तरङ्गा। उभयोरपि शब्दतः सुबाश्रयत्वात्॥

अव्ययादा। 'ण्यक्षत्रिय' इत्यतो लुगनुवर्त्तते। विहितेति। अङ्गसञ्ज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्ग विशेषणादित्यर्थः। आप्सुब्भ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः। तेन कुम्भकारेभ्य इत्यादौ सन्निपात-परिभाषयाऽव्ययसंज्ञानिवृत्तिद्वारा लुङ्निवृत्तिपरभाष्येण न विरोधः। अत्युच्चैसाविति। अत्राधिकरणशक्तिप्रधानस्यापि उच्चैस्-

---

बहुवचनमत्र लक्ष्यभेदाभिप्रायकम्। एतेनेति। परम्परया स्वसान्निपातविघा-तकसंज्ञाया अप्यनयाऽप्रवृत्तिकल्पनेनेत्यर्थः। ननु लुग्विध्येकवाक्यतापन्नाव्यय-संज्ञायाः परंपरया गुणादिनिमित्तसन्निपातविघातकत्वेऽप्यकजेकवाक्यतापन्नाया-स्तस्यास्तदविघातकत्वात्कुतो नाकजित्यत आह। अकजादीति। असिद्धत्वा-दिति। शब्दतस्सुबाश्रयत्वेन बहिरङ्गत्वादिति भावः। अकचो वस्तुतस्सुबन्ता-दुत्पत्तावपि न शब्दतस्सुबाश्रयत्वमित्याशयः। उभयोर्वैषम्यप्रदर्शनायोक्तमेवार्थं पुनराह। लुगेकेति॥

मूले विहितविशेषणादित्यनुपपन्नं, कुम्भकारेभ्य इत्यादावपि तेनैव लुग्वारणसंभवात्तत्र सन्निपातपरिभाषया लुग्वारणपरभाष्यविरोधादतो मूलाशयं विवृणोति। अङ्गसंज्ञायामित्यादिना। नन्वत्र सूत्रेऽङ्गपदाभावादीदृशार्था-लाभोऽत आह। आप्सुब्भ्यामिति। अङ्गस्येति। तदादेरित्यर्थः। नन्वत्या-दयः क्रान्ताद्यर्थे द्वितीययेत्युक्तेः कथमुच्चैश्शब्देनाधिकरणशक्तिप्रधानेनाद्विती-यान्तेन समास इत्यत आह। अत्रेति। ननु विशेष्यस्याप्रक्रान्तत्वात्कथमत्र

शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद् द्वितीयान्तनया 'अत्यादयः क्रान्ताद्यर्थे' इति समासे अवयवभूतोच्चैः शब्दादव्ययात्परत्वेन लुक् स्यात्। समुदायस्य तु नाव्ययत्वं, लिङ्गाद्यन्वयित्वादित्यभिमानः। समुदायस्यापि तत्त्वमाशङ्क्य समाधत्ते—यद्यपीति। तदन्तेति। शब्दस्य विशेष्यत्वात् प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्' इति वाचनिकस्तदन्तविधिरिति भावः। न गौणे इति। अयं भावः। सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदवत्त्वेन हि अव्ययपदं बोधकमिति तादृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणेऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति। वस्तुतोऽत्रार्थस्य

---

तदन्तविधिरित्यत आह। शब्दस्वरूपस्येति। सर्वनामसंज्ञावदत्र ज्ञापकानुपलम्भादाह। वाचनिक इति। मूलकृदाशयं वर्णयति। अयं भाव इति। अत्र तादृशमहासंज्ञाकरणात्समुदायस्य नाव्ययत्वमित्येव युक्तः पाठः। तादृशार्थानामित्यारभ्य मानाभावेनेत्यन्तो ग्रन्थोऽधिकः। समुदायस्य संज्ञावारणायैवैतद्ग्रन्थप्रवृत्तेः। एतेन वस्तुतः कल्पेनास्य वैलक्षण्यसंपादनाय क्लिश्यन्तो भट्टाः परास्ताः। वस्तुतः कल्पे समुदायावयवयोरुभयोरपि संज्ञावारणमत्र पक्षे समुदायस्यैवेति वैलक्षण्यस्य स्पष्टत्वात्। भाष्यसम्मतं स्वसिद्धान्तमाह। वस्तुत इति। अत्र = अव्ययपदे। अर्थस्य = महासंज्ञाबललब्धस्य। ननु प्रधानाप्रधानन्यायस्य पुमान् स्त्रियेत्यादिवदर्थनिर्देशविषय एव प्रवृत्त्या प्रकृतेऽर्थनिर्देशाभावान्न तन्न्यायविषयता। तत्र ह्यनेन न्यायेन प्रधानस्त्रीपुंसमात्रकृतविशेष एव प्रवृत्त्यङ्गीकाराद्ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादावप्रधानस्त्रीपुंसकृतविशेषस्यापि

प्रधानाप्रधानन्यायेन सर्वनामसञ्ज्ञासाहचर्येण च प्रसिद्धान्तरङ्ग-पदान्तरानपेक्षानुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन न समुदायस्य, नाप्यवयवस्य सञ्ज्ञा। अत एव भाष्ये सर्वनामसञ्ज्ञा-सूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्या 'अत्युच्चैसौ' इत्यादावव्ययत्वा-भावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम्। एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव। अव्ययात्परत्वस्याप्य-भावात्। उच्चैरौ उच्चैराभ्यामित्यादेरभिधाने तु न मानम्। अत एव भाष्ये एतन्नोक्तम्। अलिङ्गत्वादिति। नन्विदं 'सदृशं त्रिषु' इति विरुद्धमत आह—लिङ्गेत्यादि। अयं भावः—यथोपक्रमोप-

---

सत्त्वान्नैकशेष इत्यत आह। सर्वनामेति। एतेन प्रधानन्यायोपन्यासस्तु चिन्त्यः। वृद्धो यूनेत्यादिगमक एव तत्प्रवृत्तेरिति भट्टोक्तमपास्तम्। तत्रारुचेरेव हेत्वन्तरोक्तेः। साहचर्येणेति। सादृश्येनेत्यर्थः। तत्र यथा महासंज्ञाकरणेन विलक्षणोऽर्थः क्लृप्तः, तथात्राप्यव्ययमिति महासंज्ञाकरणेनैतादृशोऽर्थः कल्प्यत इति भावः। प्रसिद्धेति। अत्र प्रसिद्धपदस्यान्तरङ्गपदान्तरानपेक्षानुपसर्जनी-भूतेत्यस्य च समाहारद्वन्द्वः। प्रसिद्धेत्यनेन संज्ञाव्यावृत्तिः। अनुपसर्जनीभूतस्या-न्तरङ्गत्वोपपादकं पदान्तरानपेक्षेति। तस्यैव विवरणमनुपसर्जनीभूतेति। एतेन प्रसिद्धान्तरङ्गपदान्तरानपेक्षेति विशेषणं व्यर्थम्। अनुपसर्जनीभूतलिङ्गाद्यनन्व-यिन इत्येतावता पूर्तेरित्याचार्योक्तमपास्तम्। संज्ञाव्यावृत्तये प्रसिद्धेत्यस्यावश्य-कत्वात्। समुदायावयवयोरुभयोरप्यव्ययत्वाभावे मानमाह। अत एवेति। एतदिति। उपसर्जनप्रतिषेधेत्यर्थः। नन्वेवमप्युच्चैरावित्यादौ लुग्वारणायाव्यया-द्विहितस्येत्यर्थ आवश्यक इत्यत आह। उच्चैराविति। अत्र वासुदेववाचका-शब्दादौप्रत्यये वृद्धौ परादिवद्भावेन सुप्त्वाल्लुगापत्तिः। द्वितीये स्त्रीलिङ्ग-दम्शब्दाद्भ्यामि त्यदाद्यत्वे पररूपे टापि हलि लोपे परादिवद्भावेनाप्त्वाल्लुगा-पत्तिः। अत एव=तदनभिधानादेव। एतदिति। अङ्गाक्षेपलब्धविहित-विशेषणत्वमित्यर्थः। इदम्=अलिङ्गत्वम्। विरुद्धमिति। तेनाव्ययानामपि

संहाराभ्यां ब्रह्मपराया अप्यस्याः श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारः, तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरताऽपीति । विभक्तिवचनशब्दौ कारकसंख्यापरौ । प्रत्ययपरत्वेऽन्यतरवैयर्थ्यापत्तेः । लिङ्गेषु इत्यादि विषयसप्तमी । तत्तद्विषये सादृश्यञ्च लिङ्गाद्यभावाश्रयत्वेन । लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषये । तस्य लिङ्गयोगसत्त्वात् । संख्याभावस्तु सर्वसाधारणः । तदभावादिसादृश्यादेव, यद् विविधं रूपं तन्न प्राप्नोतीत्यर्थः ॥ प्रसङ्गादाह— वष्टीति । वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः । भागुरिः—अचार्यः । अपिसाहचर्यादवेऽप्यादेरकारस्यैव लोपः । इदं भाष्ये न दृश्यते । निशदिशोरिगुपधलक्षणे केऽदन्तत्वादेव टाप् । क्विनि दिगित्यपि । अत एव 'ङ्याप्प्रातिपदिकात्' इति सूत्रे 'आब्ग्रहणं न कार्यम्, अकारान्ताट्टाप् तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धम्; यस्तर्ह्य-

---

लिङ्गसत्त्वबोधनादिति भावः । प्रत्ययपरत्व इति । विभक्तिवचनसंज्ञकप्रत्ययपरत्व इत्यर्थः । वैयर्थ्यापत्तेरिति । अत्र विभक्तिपदेन सुप्तिङ्रूपविभक्तेरेव ग्राह्यतया विभक्तिवचनयोस्समनियतत्वादिति भावः । अव्ययीभावस्य विशिष्य नपुंसकत्वविधानात्तत्र लिङ्गाभाववत्त्वेन सादृश्यस्यासंभवादाह । अव्ययीभावातिरिक्तेति । लिङ्गविशेषयोगेऽप्यव्ययीभावस्य वचनसामर्थ्यादव्ययत्वं, यथाऽन्वर्थसंज्ञाबलात्क्रियाहेतुकसंबन्धविशेषद्योतकयोः कर्मप्रवचनीयसंज्ञात्वेऽप्यतादृशयोः स्वत्योर्वचनसामर्थ्यात्कर्मप्रवचनीयसंज्ञा तथेति बोध्यम् । विविधं रूपमिति । लिङ्गादिसंबन्धकृतमिति भावः । प्रसङ्गादाहेति । अव्ययनिरूपणप्रसङ्गात्तद्विशेषे कैश्चिदुक्तं विशेषमाहेत्यर्थः । इह=लोके । इदमिति । वष्टीत्यादिवचनमित्यर्थः । ननु भाष्यमते कथं निशेत्यादिसिद्धिरत आह । निशादिशयोरिति । अत एवेति । हलन्ताट्टापोऽभावादेवेत्यर्थः । ननु

नकारान्तात् कुश्वा उष्णिहा देवविशेति, अत्राप्यकारान्तादेव कुश्वा, नालभेत, उष्णिहककुभौ, देवविशमिति, अन्त्ये 'कप्रत्यय एवं विषयः' इत्युक्त्वा बहुराजेति 'डाबन्तार्थमाङ्ग्रहणम्' इति भाष्ये उक्तं सङ्गच्छते। तस्माद्वाचेत्यसाध्वेवेति शिवम् ॥

इत्यव्ययानि ॥

---

स्त्रियाम् ॥ अचेतनत्वट्वावृक्षादिसाधारणं लिङ्गन्तु सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यमे-

---

द्वितीयैकवचने हलन्तादन्तयो रूपे विशेषाभावेन देवविशमिति प्रयोगस्य हलन्तत्वेऽप्युपपत्त्या कथं तदकारान्तदेवविशशब्दसत्त्वे मानमत आह। अन्त्ये इति। एवंविषय इति। स्वरविशेषविषय इत्यर्थः। देवविशमित्यत्र रूपे विशेषाभावेऽपि स्वरे विशेषः। अदन्तत्वे हि कप्रत्ययान्तत्वात्थाथादिस्वरेणान्तोदात्तत्वेऽम्विभक्तेरनुदात्तत्वेऽप्येकादेश उदात्तेनोदात्त इत्यनेनैकादेशस्योदात्तत्वाद्देवविशमित्यन्तोदात्तं श्रूयते। हलन्तत्वे तु क्विबन्तत्वाद्गतिकारकोपपदात्कृदिति कृदुत्तरपदस्वरेणान्तोदात्तत्वे विभक्तेरनुदात्तत्वे उदात्तादनुदात्तस्य स्वरित इति स्वरितत्वे च देवविशमिति स्वरितान्तं प्रसज्येत। तस्मात्स्वरविशेषश्रवणादेवं विषयः स्वरविशेषविषयः देवविशमित्यत्र श्रूयमाणोऽकारः कप्रत्यय इति तद्भाष्याशयः। तस्मादिति। उक्तभाष्यप्रामाण्याद्धलन्तप्रकृतिकटाबन्ताभावस्य लाभादित्यर्थः ॥

॥ इत्यव्ययानि ॥

---

## ॥ अथ स्त्रीप्रत्ययप्रकरणम् ॥

ननु स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृत इत्यादिलौकिकलिङ्गस्याप्राणिष्वसंभवात्कथं खट्वादिशब्देभ्यष्टाबादिरत आह। सत्त्वादीनामिति।

कार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमिति भाष्योक्तेरर्थनिष्ठं केवलान्वयि । इयं व्यक्तिः, इदं वस्तु, अयं पदार्थ इति त्रिविध-व्यवहारस्य पदार्थमात्रे सत्त्वात् । केनचिच्छब्देन किञ्चिद्वस्तु एकैकविशिष्टमेव, केनचित्पर्यायेण लिङ्गद्वयविशिष्टं, केन चिल्लिङ्ग-

सत्त्वरजस्तमसां वृद्धिः पुंस्त्वमपचयः स्त्रीत्वं साम्यावस्थारूपस्थितिमात्रं नपुंसकत्वमिति भावः । अत एव सामान्ये नपुंसकमित्युद्घोषस्संगच्छते । उपचयापचयसत्त्वेऽपि साम्यावस्थारूपस्थितिमात्रविवक्षायां नपुंसकत्वमिति तदर्थात् । उपचयापचयावपि साम्येनैव स्त इति भावः । लिङ्गस्य शब्दनिष्ठत्वं भूषणकारोक्तं भाष्यासम्मतमिति सूचयन्नाह । अर्थनिष्ठमिति । अत एव रूपरसस्पर्शशब्दानां संस्त्यानप्रसवौ लिङ्गमित्युपक्रमभाष्यमपि सङ्गच्छते । शब्दनिष्ठत्वे तु रूपादीनां शब्दगतत्वासंभवेन तदसङ्गतिः स्पष्टैव । किंच पशुना यजेतेत्यादौ छाग्या यागाङ्गत्ववारणाय लिङ्गस्यार्थपरिच्छेदकत्वेनैवान्वयस्य वक्तव्यतया तस्य शब्दनिष्ठत्वे स्वाश्रयवाच्यत्वसंबन्धेनान्वयो वाच्य इति संबन्धगौरवं च स्यात् । किंच लौकिके लिङ्गेऽर्थनिष्ठताया एव क्लृप्तत्वेन शास्त्रीयस्यापि तस्यार्थनिष्ठत्वमेव युक्तम् । नहि नपुंसकं नाम शब्दोऽस्तीति स्वमोर्नपुंसकादिति भाष्याच्चायमेव भाष्यसम्मतो न्याय्यश्चेति बोध्यम् । पुंलिङ्गश्शब्द इत्यादिव्यवहारस्तु वाच्यवाचकयोरभेदोपचारादुपपाद्यः । तत्र शब्दशब्दस्यार्श आद्यजन्तत्वाङ्गीकारेणार्थपरत्वं वा बोध्यम् । न चाविकारिण्यात्मनि गुणोपचयादिरूपस्य लिङ्गविशेषस्यासंभवादात्मा ब्रह्मेत्यादिव्यवहारानुपपत्तिरिति वाच्यम् । आत्मनि सर्वस्याध्यस्तत्वेन परंपरया तत्रापि गुणोपचयादेः सत्त्वेन तदुपपत्तेः । केवलान्वयीति । गुणोपचयापचयादिरूपावस्थात्रयस्य पदार्थमात्रे सत्त्वादिति भावः । तस्य पदार्थमात्रे सत्त्वे मानं दर्शयति । इयं व्यक्तिरित्यादिना । नन्वस्य केवलान्वयित्वे दारशब्देन स्त्रीत्वस्याप्शब्देन पुंस्त्वस्य ज्ञानशब्देन स्त्रीत्वस्यापि प्रतिपादनापत्तिरत आह । केन चिच्छब्देनेति । गुणोपचयादिरूपलिङ्गत्रयस्य पदार्थ-

**त्रयविशिष्टमिति लिङ्गानुशासनादितो निर्णेयम्। तत्र "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः' इत्यादिलौकिकलिङ्गासम्भवे शास्त्रीयं कार्यं शास्त्रीये उक्त एव। तत्संभवे तु शास्त्रीयविशिष्टे लौकिके। शास्त्रीयमपि शब्दतो बुद्ध्यते, तथाऽनुभवात्। उप-**

---

मात्रे सत्त्वेऽपि तद्विवक्षाया एव व्यवहारनिमित्तत्वेन न निरुक्तातिप्रसङ्ग इति भावः। **लिङ्गानुशासनादिन इति।** तदेव च तत्तदर्थेषूपचयापचयादिविवक्षायां तात्पर्यग्राहकमिति भावः। अत्रादिशब्देन शिष्टव्यवहारपरिग्रहः। 'भावतत्त्वविदश्शिष्टाश्शब्दार्थेषु व्यवस्थिताः। यद्यद्धर्मं गतमिति तत्तल्लिङ्गं प्रचक्षत' इति हर्युक्त्या तस्यापि तन्निर्णयहेतुत्वप्रतीतेः। **स्तनकेशवतीति।** अत्र प्रशंसायां मतुप्। तथा लोमश इत्यत्र भूम्नि मतुप्। अत्र स्तनकेशत्वं प्रसिद्धत्वादन्यस्यापि स्त्रीप्रतिपत्तिनिमित्तस्य कुमार्यादिगतस्योपलक्षणमिति कैयटः। यत्त्वत्र केशशब्दस्य भगवाचकत्वाद्भगवत्त्वं स्त्रीत्वम्। लोमन्शब्दस्य शिश्नवाचित्वाच्छिश्नवत्त्वं पुंस्त्वम्। तत्तदाकारमात्रधारकत्वं च नपुंसकत्वमित्यौत्तराहाः। तदयुक्तम्। तयोस्तादृशार्थस्य क्वाप्यदृष्टचरत्वात्। लौकिकलिङ्गग्रहणे स्त्रीवेषधारिनटवाचिनि भ्रुकुंसशब्दे टापो, नापितगृहवाचकखरकुटीशब्दे खरकुटीः पश्येत्यत्र नत्वस्य चापादनपरप्रकृतसूत्रस्थभाष्यतो भवदुक्तार्थस्यात्रासम्मतत्वलाभाच्च। **तत्संभवे त्विति।** यथा पशुना यजेतेत्यादौ। **शास्त्रीयविशिष्ट इति।** सामानाधिकरण्यसंबन्धेनेति भावः। **लौकिके इति।** एतदुत्तरं शास्त्रीयं कार्यं भवतीति शेषः। 'एषु च पुंसादिशब्दानां वृद्ध्यादिवच्छास्त्रीयस्सङ्केतोऽवश्यं स्वकृतान्त आस्थेय' इति भाष्येणैषां संज्ञात्वबोधनेन तत्र टिघुभादिवल्लघोस्संज्ञाया युक्तत्वेऽपि गुरुसंज्ञाकरणात्संख्याप्रदेश इव लोकप्रसिद्धार्थस्याप्यवगमान्नत्वादिशास्त्रप्रवृत्तौ लौकिकमपि लिङ्गं निमित्तत्वेनाश्रीयत इत्याशयः। ननु शास्त्रीयलिङ्गस्य शब्दानिष्ठत्वाङ्गीकारे

चयापचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां 'सामान्ये नपुंसकम्' इति प्रवाद इत्यन्यत्र विस्तरः॥

अत इति वर्णग्रहणात्तदन्तविधिस्तदाह—अकारान्तस्य चेति।

---

घटानित्यादौ नत्वादिकं स्वरसत उपपद्यते। अर्थनिष्ठत्वाङ्गीकारे तु तस्मादित्यत्र पुंसीत्यस्य पुंस्त्वे वाच्ये इत्यर्थस्यावश्यकतया घटानित्यादौ पुंस्त्वविशिष्टवाचकत्वस्य तत्र शक्तिमन्तराऽसंभवेन शक्तेश्च लोकव्यवहारतोऽवगन्तव्यतया लोकव्यवहारे शास्त्रीयलिङ्गभाने भवदीयानुभवातिरिक्तप्रमाणाभावेन नत्वाद्यनापत्तिरित्यत आह। शास्त्रीयमपीति। अपिना सति संभवे लौकिकपरिग्रहः। बुध्यत इति। बोधविषयो भवतीत्यर्थः। लिङ्गस्यापि प्रातिपदिकार्थत्वमिति सिद्धान्ते घटादिप्रातिपदिकानां लौकिकलिङ्गासंभवेन शास्त्रीयलिङ्गस्यैव तदर्थत्वस्य वक्तव्यतया प्रातिपदिकादुपस्थितस्य तस्य बोधे भानाभावे मानाभाव इति भावः। अत एवोदीचामातस्थाने यकपूर्वाया इत्यत्र यकपूर्वाया इति विशेषणसामानाधिकरण्यानुरोधेन आत इत्यस्य स्त्रीप्रत्ययाकारबोधकत्वं संगच्छते। एवं चर्ष्यनुभवसिद्धमेव शास्त्रीयलिङ्गस्य शाब्दबोधविषयत्वमिति बोध्यम्। ननु व्यापकत्वाच्छास्त्रीयस्यैव बोधविषयत्वमस्तु। मास्तु लौकिकलिङ्गपरिग्रहः। एवं च तत्संग्राहकमपिग्रहणं व्यर्थमिति चेन्न। पशुना यजेतेत्यादौ पशुस्त्रिया यागाभावस्य तस्यापि बोधविषयत्वमन्तरा दुरुपपादत्वेन तस्यापि बोधविषयताया अङ्गीकार्यत्वात्। अन्यत्र=मञ्जूषायाम्॥

वर्णग्रहणादिति। उगिद्वर्णग्रहणमित्युक्तेस्समासप्रत्ययविधावित्यस्याप्रवृत्त्या प्रातिपदिकविशेषणत्वेन तदन्तविधिरिति भावः। मूलेऽकारान्तस्य चेति। इदं च फलितार्थकथनम्। अदन्तात्प्रातिपदिकात्स्त्रीत्वे द्योत्ये टाबित्यर्थे प्रत्यासत्त्या स्त्रीत्वस्यादन्तप्रातिपदिकवाच्यस्यैव ग्रहीतुमौचित्यात्। अत इत्यस्य षष्ठ्यन्तत्वं तु न युक्तम्। प्रत्ययविधौ पञ्चम्यन्तताया न्याय्यत्वात्।

वाच्यं यत् स्त्रीत्वमिति। तद्वाच्यार्थगतं यत्तद्वाच्यं स्त्रीत्वमित्यर्थः। एवं व्याख्याने फलमग्रे स्फुटम्। तत्र द्योत्ये इति। प्रत्ययार्थत्वे हि तस्य विशेष्यतापत्तिः। द्योत्यस्य तु विशेषणत्वमेवेति स्पष्टमाकरे। वागादिषु विनाऽपि टाबादिकं तस्य बोधाच्च। अत एव 'व्यावक्रोशी' इत्यादौ 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णचि 'णचः स्त्रियाम्' इत्यञि च ङीप्सिद्धिः। 'व्यतिलुनीते' इत्यादौ 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन समुच्चयस्य दृष्टत्वात्। टाप्स्यादिति। स चाधिकारा-

---

षष्ठ्यन्तत्वे प्रातिपदिकादित्यनेन सामानाधिकरण्यासंभवात्तदन्तविधेरप्राप्तेश्च। अजादीति तु लुप्तषष्ठ्यन्तं पृथक्पदम्। पञ्चम्यन्तत्वे त्वमहत्पूर्वग्रहणेन स्त्रीप्रत्यये तदन्तविधिज्ञापनाद्वनो र चेत्यादाविवात्रापि तदन्तविधौ स्त्रियां वर्तमानादज-शब्दान्तात्प्रातिपदिकादित्यर्थे पञ्चाजीत्यत्रापि टाप्प्रसज्येतेति बोध्यम्। मूले वाच्यमित्यनेन प्रातिपदिकार्थविशेषणलिङ्गभूतं वाच्यं विवक्षितम्। नतु प्राति-पदिकजन्योपस्थितिविशेष्यं स्त्रीत्वादिशब्दबोध्यम्। प्रत्ययद्योत्यस्य विशेषणतायाः क्लृप्तत्वेन तस्य तत्त्वासंभवादित्याशयेन विवृणोति। तद्वाच्यार्थगतमिति। एतेन व्यावर्त्याभावादिदं विशेषणं व्यर्थमित्याचार्योक्तमपास्तम्। अग्रे=मूले। विशेष्यत्वापत्तिरिति। प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति व्युत्पत्तेरिति भावः। तिङन्तस्थले उक्तव्युत्पत्ते र्व्यभिचारादाह। वागादिष्विति। स्त्रीत्वस्यात्र प्रकृत्यर्थताया एवाभ्युपेयतयान्वयव्यतिरेकाभ्यां सर्वत्र प्रकृत्य-र्थत्वमेव तस्य युक्तमिति भावः। वस्तुतस्तु तिङन्तस्थलेपि पञ्चकं धात्वर्थ इति सिद्धान्तात्तिङां द्योतकत्वमेवेति नोक्तन्यायस्य तत्रापि व्यभिचार इति बोध्यम्। अत एवेति। स्त्रीत्वस्य द्योत्यत्वादेवेत्यर्थः। ङीप्सिद्धिरिति। अन्यथोक्तार्थानामिति न्यायेन तन्न स्यादिति भावः। ननु द्योतकविषयेऽपि तन्न्यायप्रवृत्त्या कथं तत्सिद्धिरत आह। समुच्चयस्येति। द्योतकसमुच्चयस्येत्यर्थः।

त्प्रातिपदिकादेव, तच्च सन्निधानादजादिरूपमेव। नन्वजादिष्वका-रान्तपाठो व्यर्थोऽत इत्येव सिद्धेरत आह—अजाद्युक्तिरिति। येन नाप्राप्तिन्यायादिति भावः। एतेन ङीपि कृतेऽपि लिङ्गविशिष्ट-परिभाषया टाप् चरितार्थ इत्यपास्तम्। ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप् स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः। स्त्रीत्वञ्च

---

एतेन द्योतकविषये नायं न्याय इति सूचितम्। अजादिरूपमेवेति। अजादि-वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप्प्रत्ययसंज्ञकस्तत्परो भवतीत्यर्थेऽवध्याकाङ्क्षाया अधिकृतप्रातिपदिकादित्यनेनैव वारणीयतया तच्च प्रातिपदिकं सन्निधानादजादि-रूपमेव ग्रहीतुमुचितमिति भावः। अकारान्तपाठ इति। नन्वजादिषु हलन्त-पाठस्य ङ्याप्सूत्रस्थभाष्यप्रामाण्येनाव्ययप्रकरणे ग्रन्थकृता निराकृतत्वात्सामा-न्यतोऽजादिपाठस्यैव वैयर्थ्याद्विशिष्यादन्तपाठस्य वैयर्थ्यशङ्का न युक्तेति चेदिदं प्राचामनुरोधेनेति केचित्। अन्ये तु टायामादेशः कृायामिडित्यादिप्र-योगदर्शनादनदन्तानामपि टादिशब्दानां गणे पाठस्यावश्यकतया न सामान्यतो गणपाठवैयर्थ्यम्, किन्त्वदन्तपाठस्यैव। अत एवोत्तरत्र शेखरेऽजादिराकृति-गणः, तेन न मु न इति सूत्रे टायामादेश इति भाष्यप्रयोगस्सिद्ध इति स्पष्ट-मेवोक्तमिति वदन्ति। अजाद्युक्तिरितीति। अत्र कर्मणि क्तिन्। तेन कर्मण उक्तत्वात्षष्ठ्यप्राप्तौ सप्तमीतत्पुरुष इति नित्यानन्दः। तदाजादिषूच्यमानानामद-न्तानां पाठ इत्यर्थः। वस्तुतस्तु कर्मणि क्तिनि विभक्तिविपरिणामं विनान्वयासं-भवाद्भाव एव प्रत्यय उचितः। कर्मषष्ठ्यन्तेन च समासः। अजादिगणेऽजादि-रूपादन्तप्रातिपदिककर्मकमुच्चारणमिति तदर्थ इति बोध्यम्। येन नेति। कृते चारितार्थ्यविषयकेण तक्रन्यायेनेत्यर्थः। यत्तु तक्रन्यायस्य तु नात्र प्राप्तिः। अपवादोत्तरमुत्सर्गप्राप्तावेव तत्प्रवृत्त्यात्र टाबुत्तरमदन्तत्वाभावान्ङीषो ङीपो वाप्राप्तेरित्यौत्तराहाः। तन्न। तत्र तादृशसङ्कोचे फलाभावात्। किंचैवं सति

**प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह—अजादिभिरिति। व्याख्यानादेतत् षष्ठ्यन्तमिति भावः। अन्यत्र तु स्त्रियामिति तदन्तस्यापि विशेषणं व्याख्यानादेव। एवञ्च पञ्च सुत्वानो यस्यां सा पञ्च-**

---

चिन्मतोर्लुकष्टिलोपबाधकत्वानुपपत्तिः। स्रजिष्ठ इत्यादावपवादभूतलुगुत्तरमपवादभूतप्रकृतिभावविषयतया टिलोपाप्राप्तेः। अपवादत्वेनाभिमतशास्त्रविषयातिरिक्तत्वेनोत्सर्गशास्त्रे सङ्कोचस्य सर्वसम्मतत्वात्। किंच नागेशाभिमतं रत्वरुत्वयोर्नलोपापवादत्वमप्यसङ्गतं स्यात्। तत्रापवादप्रवृत्त्युत्तरं नकाराभावेनोत्सर्गस्य प्राप्त्यभावात्। किंच यशांसीत्यादावनेन न्यायेन झलन्तलक्षणस्य नुमोऽन्त्यादचः परत्वेन स्थाने योगत्वस्य बाधकत्वप्रतिपादनं भगवतोऽसङ्गतं स्यात्। तत्र षष्ठी स्थानेयोगा, मिदचोऽन्त्यात्पर इत्यनयोः पदैकवाक्यतयैव नियामकत्वेन विधिवाक्यार्थबोधकाल एवोभयोरपि प्रवृत्त्या एकेन पदैकवाक्यतायां तत्र वाक्यार्थस्य शृङ्खलोपनिबद्धतयाऽखण्डतया वान्येन पदैकवाक्यताया वक्तुमशक्यतयापवादप्रवृत्त्युत्तरमुत्सर्गप्रवृत्तियोग्यताया दुरुपपादत्वात्। एवं द्वीपमित्यादावादेः परत्वस्यालोऽन्त्यापवादत्वमपि न युज्येत। अपवादप्रवृत्त्युत्तरं नियतस्थानिलाभेनानियमे नियमकारिण्या अलोन्त्यपरिभाषायाः प्रवृत्तियोग्यताया अभावादिति बोध्यम्। व्याख्यानादिति। अजादिभिः स्त्रियं विशेषयिष्यामः, अजादीनां या स्त्रीति भाष्यरूपादित्यर्थः। एतत्=अजादीत्येतत्। **षष्ठ्यन्तमिति**। लुप्तषष्ठ्यन्तमित्यर्थः। **तदन्तस्यापीति**। अपिरवधारणे। तदन्तस्यैवेत्यर्थः। **व्याख्यानादिति**। प्राधान्यादनुपसर्जनाधिकारसामर्थ्याच्चेत्यर्थः। अन्यथा ज्ञापितेऽपि तदन्तविधौ बहुकुरुचरेत्यत्र गृह्यमाणस्य टितः स्त्रियामवर्तनान्ङीपोऽप्राप्त्या व्यावर्त्यालाभेन तद्वैयर्थ्यं स्पष्टमेव। **पञ्चसुत्वरीति**। सुयजोर्ङ्वनिबिति ङ्वनिप्। इदं च वनो रचेति सूत्रविहितयोर्ङीब्रयोर्विकल्पेन विधायकं बहुव्रीहौ वेति वार्तिकमिति केषां चिन्मतेन। वनो र च, बहुव्रीहौ

सुत्वरीत्येव । पञ्चाजीति । पञ्चानामजानां समाहार इति द्विगौ 'अकारान्तोत्तरपद' इति स्त्रीत्वे 'द्विगोः' इति ङीप् । अजादिभ्य इति व्याख्यानेऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च 'वनो र च' इत्यत्रेवात्रापि तदन्तविधिसम्भव इति भावः। न च तदन्तविधावपि श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम् । अनुपसर्जनाधिकारेण तदन्तग्रहणस्येव स्त्रियामित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात् । अत्र हीति । समासेऽजशब्दसत्त्वेऽपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाजशब्दमात्रवाच्यम् । सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः । चटकेति । क्षिपकादित्वादित्त्वं न । ह्रस्व इति । असंज्ञायान्तु भस्त्राफलेत्येव । 'संभस्त्रा,

---

वेत्यनयोः ऋन्नेभ्य इत्यन उपधेति च सूत्रप्रापितङीबनुवादेन रेफादेशमात्रविधायकत्वमिति सिद्धान्ते त्वनो बहुव्रीहेरिति निषेधेन ऋन्नेभ्य इत्यस्योपधालोपित्वेनान उपधेत्यस्य चात्राप्राप्त्या इदमतिसुत्वरी, अतिधीवरीत्यादेरुपलक्षणमिति बोध्यम् । एतेन चिन्त्यमेतत् । अनो बहुव्रीहेरिति निषेधान्ङीपोऽप्राप्तेरिति वाराणसेयोक्तमपास्तम् । अजानामिति । पुमजानामित्यर्थः । नन्वजादीत्यस्य पञ्चम्यन्तत्वेऽपि पञ्चाजीत्यत्र न टाप् । समासप्रत्ययविधाविति ग्रहणवतेति परिभाषया वा तदन्तविधिनिषेधादत आह । **अजादिभ्य इति ।** **तदन्तविधिसंभव इति ।** अमहत्पूर्वग्रहणेन गृह्यमाणप्रातिपदिकविषयेऽपि स्त्रीप्रत्ययविधौ तदन्तविधिज्ञापनादिति भावः । ननु स्त्रीत्वविशिष्टसमाहारे समासशक्तेरङ्गीकारेऽपि तच्छक्तेरवयवशक्तिसहकारिणैव तदर्थबोधकतया तत्रापि स्त्रीत्वमजपदशक्यमेवेति षष्ठ्यन्तत्वेन व्याख्यानेऽप्यत्र दोषो दुर्वार इत्यत आह । **नाजशब्दमात्रेति ।** अजशब्दनिष्ठशक्तिप्रयोज्यत्वं स्त्रीत्वे विवक्षितमिति भावः । ननु तन्मात्रवाच्यस्त्रीत्वस्य ग्रहणे किं मानमत आह । **सामर्थ्येनेति ।**

इति 'सदच्' इति, 'मूलान्नञः' इति च 'पाककर्ण' इति प्राप्तस्य ङीषो बाधनार्थम्। एवञ्च श्वेतफला त्रिफलेत्यप्यत्र बोद्धयम्॥

शूद्रा चेति। जातिलक्षणङीषोऽपवादः। जातिश्चेद्वाच्येत्यर्थः। पञ्चशूद्रीति समाहारे जातिवाचकत्वाभावात् शूद्रशब्दार्थगतस्त्रीत्वाभावाच्च न दोषः। जातिश्चेदित्यस्य कृत्यमाह–पुंयोगे त्विति।

---

अजादीत्यस्य लुप्तषष्ठ्यन्तत्वाश्रयणसामर्थ्येनेत्यर्थः। अत्रेति। अजादिगण इत्यर्थः॥

ननु शूद्रस्य स्त्रीत्यर्थे शूद्रशब्दात्पुंयोगलक्षणस्यापि ङीषः प्राप्त्या जातिलक्षणङीषोऽपवाद इत्ययुक्तमत आह। जातिश्चेदिति। अनारोपिता जातिश्चेद्वाच्येत्यर्थः। जातिवाचिमहत्पूर्वभिन्नशूद्रशब्दवाच्यस्त्रीत्वे द्योत्ये टाबित्यर्थे पर्युदासन्यायेन तद्भिन्नस्य तत्सदृशस्यैव ग्रहीतुमौचित्यादनारोपितजातिवाचिन एव शूद्रशब्दस्यात्र ग्रहणमिति भावः। नन्वेवमपि पञ्चशूद्रीति समाहारे तदन्तविधिना टाब्दुर्वारः। पञ्चत्वसंख्याविशिष्टशूद्रत्वजात्यवच्छिन्नसमुदायस्य समासेनाभिधाने जातिवाचकत्वस्य समुदायेऽक्षतत्वादत आह। जातिवाचकत्वाभावादिति। समुदाये जातौ शक्तेरभावादित्यर्थः। न च समुदायस्य विशिष्टे शक्तेरभ्युपगमेन तद्घटकजातौ शक्तिर्नास्तीति वक्तुमशक्यतयेदसनुचितमिति वाच्यम्। विशिष्टे शक्त्यङ्गीकारेऽप्यनन्यलभ्यश्शब्दार्थ इति न्यायेनावयवालभ्यार्थमात्र एव समुदायशक्तेर्विश्रान्त्या तत्रावयवतो जातिलाभेन विशिष्टशक्तेर्जातावप्रसरात्। नन्ववयवशक्तेरपि विशिष्टशक्त्या बोधे सहकारितयावयवशक्तेर्जातौ सत्त्वेन तद्बोधकत्वं समुदायेऽक्षतमित्याशङ्क्याह। शूद्रशब्दार्थगतेति। जातिमच्छूद्रशब्दगतशक्तिप्रयोज्योपस्थितिविशेष्यगततच्छक्तिप्रयोज्यस्त्रीत्वस्यात्र विवक्षितत्वेन तदभावादित्यर्थः। जातिश्चेदित्यस्येति। विधिवाक्यस्थस्येत्यर्थः। विधिवाक्ये जातिग्रहणसंबन्धस्य न फल-

नचात्र गौणत्वम् । सदृशलाक्षणिकस्यैव गौणत्वात् । गौणमुख्य न्यायस्य पदकार्यविषयत्वाच्चेति भावः । अमहत्पूर्वेत्यत्रापि जातिश्चे·

---

मिति कैयटोक्तं शङ्कापूर्वकं निरस्यति । नचेति । सदृशलाक्षणिकस्यैवेति । गुणादागतो गौण इत्यक्षरमर्यादया तस्यैव तत्र ग्रहणमुचितमिति भावः । अत्र गौणशब्देन सर्वेषामपि लाक्षणिकानां ग्रहणमिति दीक्षितादिमतेऽप्यत्र तदप्रवृत्ति-रित्याह । पदकार्यविषयत्वाच्चेति । नन्वेतत्परिभाषाप्रवृत्तिप्रयोजकगौणार्थ-प्रतीतेः प्रातिपदिकसंस्कारवेलायामभाव एव ह्यस्य प्रातिपदिककार्येष्वप्रवृत्तौ बीजम् । प्रकृते तु प्रातिपदिकसंस्कारकाल एव गौणार्थप्रतीत्या तदप्रवृत्ति-साधकहेतोरभावेन कुतस्तदप्रवृत्तिरिति चेन्न । अत्रापि प्रातिपदिकसंस्कारकाले प्रयोक्तुर्गौणत्वग्रहेऽप्यपदस्याप्रयोगेण बोद्धुस्सर्वत्र पदस्यैव गौणत्वग्रहात्तदीय गौणत्वग्रहस्यैव प्रयोगनियामकत्वात्प्रातिपदिककार्येष्वस्याप्रवृत्तेः । अत एवात्वं त्वं संपद्यते अमहान्महान्भूतस्त्वङ्कवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणं संगच्छते । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः । स्पष्टं चेदं परि-भाषेन्दुशेखर इति बोध्यम् । यत्तु भाष्यकैयटयोस्तु जातिरित्यस्य न शूद्रेत्यंशे संबन्धः । किन्त्वमहत्पूर्वेत्यंशे । शूद्रस्य स्त्री शूद्रीत्यत्र गौणमुख्यन्यायेन टाब्ने-त्युक्तम् । प्रातिपदिककार्येऽपि स्त्रीप्रत्यये गौणमुख्यन्यायः प्रवर्तत इति तद्भावः । एवं त्वजस्य स्त्री अजीत्येव । गौणमुख्यन्यायेन टापोऽप्रवृत्तेः । यद्वा मुख्यार्थ-केष्वजादिषु जातिलक्षणङीषं बाधित्वा चरितार्थस्य टापः पुंयोगे परत्वान्ङीषा बाधः । अयजे इन्द्रमित्यादौ सवर्णदीर्घस्य गुणेनेवेत्याहुः । तदयुक्तम् । भाष्ये-ऽस्यार्थस्यानुक्तत्वात् । भाष्येऽमहत्पूर्वेत्यंशे जातिग्रहणसंबन्धस्य कण्ठत उक्तत्वेन पर्युदासन्यायेन विध्यंशेऽपि तदर्थस्य सुलभत्वात् । उक्तरीत्या गौणमुख्यन्याय-स्याप्रवृत्त्या पुंयोगे तेन न्यायेन टाब्वारणपरकैयटग्रन्थस्य चिन्त्यत्वात् । अजस्य स्त्री अजीत्येवेत्यपि न युक्तम् । येषां शब्दानामर्थस्य स्वत एव स्त्रीत्वं तत्र

**दिति सम्बद्धयते । महत्पूर्वो न टापं लभते जातिश्चेद्वाच्येति तदर्थः । तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वञ्जातिमात्रविवक्षया**

---

पुंयोगाद्वृत्तेरभावात् । यद्वेत्यादितदुक्तिरपि न युक्ता । इग्डिशीनामाद्गुणस्मत्वर्णदीर्घत्वादिति कात्यायनोक्तवचनानुरोधेनानुमीयमानस्यापवादोऽपीति न्यायस्य पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गविषयकत्वस्यैव कल्पयितुमुचितत्वात् । किं चोक्तवार्तिकानुरोधेनानुमीयमानस्य तस्येडादिस्थानिकाद्गुणमात्रविषयकत्वमेव युक्तम् । किञ्च यत्र भगवता फलानि परिगणितानि तत्रास्मदादीनां फलकल्पनाभिनिवेशोऽयुक्तः । अत एव न लोकेति सूत्रे भाष्यकारोक्त उकारप्रश्लेषस्संगच्छते । अन्यथानेन न्यायेन पूर्वं गुणे तदसङ्गतिः स्पष्टैवेति बोध्यम् । **न टापं लभत इति ।** इदं च फलितार्थाभिप्रायकं, प्रसज्यप्रतिषेधाश्रयणे गौरवात् । उद्योते पर्युदासपरतयैव व्याख्यानाच्च । नन्वमहत्पूर्वेत्यत्र जातिग्रहणासंबन्धेऽपि न दोषः । महती शूद्रेत्यर्थेऽन्तरङ्गत्वात्सुबुत्पत्तेः पूर्वं टापि ततस्समासे जातस्य टापो निवृत्त्ययोगान्निषेधस्य जातावेव पर्यवसानादित्याशङ्क्य तत्र तत्संबन्धफलं दर्शयति । **तत्फलं त्विति ।** अमहत्पूर्वेत्यत्र जातिग्रहणसंबन्धफलमित्यर्थः । अत्र तुशब्देन कैयटोक्तफलेऽरुचिस्सूचिता । तेन हि महाशूद्रशब्दस्समुदायो यदा जातिवाची, तदा टापः प्रतिषेधः । यदा तु महत्त्वविशिष्टा शूद्रा प्रतिपिपादयिषिता, तदा महाशूद्रेत्येव भवति । असति तु जातिग्रहणेऽमहत्पूर्वेतिप्रतिषेधसामर्थ्यादन्तरङ्गोऽपि टाप् बाध्येत । ततश्चात्रापि ङीष्प्रसज्येतेति तत्फलमुक्तम् । तदयुक्तम् । आभीरजातिवाचिमहाशूद्रशब्दे प्रतिषेधस्य सावकाशत्वेन तत्सामर्थ्यादन्तरङ्गटाब्बाधकत्वस्यानुपपन्नत्वात् । एतेन जातिग्रहणासंबन्धे समासोत्तरं प्रतिषेधसंभावनयोपसंजनिष्यमाणन्यायेन पूर्वं टापोऽप्रवृत्तिः स्यादिति वाराणसेयोक्तमपास्तम् । **पूर्वमिति ।** समासप्रवृत्तिप्राक्काल इत्यर्थः । **जातिमात्रेति ।** अत्र मात्रपदेन शूद्रशब्दानिष्ठशक्त्योपस्थितस्य स्त्रीत्वस्य व्यवच्छेदः । पूर्वं

**महच्छब्दस्य शूद्रशब्देन मृगक्षीरकुक्कुटाण्डवत्समासे ततः स्त्रीत्वविवक्षायां महतीशूद्रेत्यर्थे महाशूद्रेति टाबेव । अमहत्पूर्वेत्यत्र जातिरित्यस्यासम्बन्धेऽनुपसर्जनाधिकारेण प्रधानेन तदन्तविधिसत्त्वात् 'जातेः' इति ङीप् स्यात् । शूद्रशब्दे जातिवाचकत्वस्य, स्त्रीत्वे शूद्रशब्दार्थसमवेतत्वस्यापि सत्त्वेनात्र टाप् निर्बाध इति भाष्यप्रदीपोद्योते निरूपितम् । महाशूद्रीति । 'आभीरी तु महाशूद्री' इत्यमरः । ब्राह्मणादुग्रकन्यायामाभीरः । नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या । अत्रानुलोमसङ्कराणां मातृ-**

---

जातिमात्रविवक्षया समासे दृष्टान्तमाह । **मृगक्षीरकुक्कुटाण्डवदिति** । यथा कुक्कुटाण्डमित्यादौ पूर्वं जातिमात्रविवक्षया समासं कृत्वा कुक्कुट्यादीनामण्डादिष्विति वचनं भगवता प्रत्याख्यातं, तद्वदिहापि समास इति भावः । अत्र च मानममहत्पूर्वेत्यत्र जातिग्रहणसंबन्धपरं प्रकृतसूत्रस्थं भाष्यमिति बोध्यम् । **ततः स्त्रीत्वेति** । समासप्रवृत्त्युत्तरकालं पूर्वमविवक्षितस्यैव स्त्रीत्वस्य बुबोधयिषायामित्यर्थः । एतेन समासात्प्रागन्तरङ्गत्वाज्जातस्य टापो निवृत्त्ययोग इति शङ्का निरस्ता । तदानीं स्त्रीत्वस्याविवक्षितत्वेन टापोऽप्राप्तेः । **टाबेवेति** । टाप्प्रवृत्तिरेवेत्यर्थः । **जातिरित्यस्यासंबन्ध इति** । एतच्चापवादभूतस्य टापो निषेधविषयतयाऽप्राप्तिबोधनाय । ननु समुदायस्य जातिवाचकत्वाभावान्ङीपोऽप्राप्तावदन्तलक्षणष्टाप् सुलभ एवेत्यत आह । **अनुपसर्जनेत्यादि** । तत्र जातिग्रहणसंबन्धे तु विशिष्टस्य जातिवाचकत्वाभावेन निषेधाप्राप्तौ टान्निर्बाध इत्याह । **शूद्रशब्द इत्यादिना** । महाशूद्रेति समुदायस्य जातिवाचकत्वं व्युत्पादयति । **आभीरी त्विति** । ननु समुदायस्य जातिविशेषवाचकत्वेऽवयवस्य शूद्रशब्दस्य सुतरामर्थाभावेन तदर्थसमवेतस्त्रीत्वस्याभावाट्टापोऽप्राप्त्या निषेधोऽनर्थक इत्याशङ्क्य तत्प्राप्तिं दर्शयति । **अत्रेत्यादिना** । **मातृजातिवृत्तित्वादिति** । मातृजातेः स्मृति-

जातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्र-शब्दोऽर्थवानेवेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति। तदर्थे-

---

प्रसिद्धा या वृत्तयस्तादृशवृत्तिमत्त्वेन स्मृतिबोधितत्वादित्यर्थः। तथा चोक्तं मनुना। 'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्। ताननन्तरनाम्नस्तु मातृदोषात्प्रचक्षत, इति। व्याख्यातं चेदं कुल्लूकभट्टेन। मातृदोषादिति हेतूपन्यासादनन्तरग्रहणमनन्तरस्यैकान्तरद्व्यन्तरप्रदर्शनार्थम्। ये द्विजातीनामनन्तरैकान्तरद्व्यन्तरजातिस्त्रीष्वानुलोम्येनोत्पन्नाः पूर्वमुक्ताः पुत्रास्तान् हीनजातिमातृदोषान्मातृजातिव्यपदेश्यानाचक्षते। मातापितृव्यतिरिक्तसङ्कीर्णजातित्वेऽप्येषां मातृजातिव्यपदेशकथनं मातृजातिसंस्काराादिधर्मप्राप्त्यर्थमिति। एवं ब्राह्मणक्षत्रियवैश्यैश्शूद्रायामुत्पादितानां पारशवोग्रकरणानामुशनसा द्विजातिशुश्रूषारूपा शूद्रजातिवृत्तिरभिहिता। एवं च नृपाच्छूद्रायामुत्पन्नाया उग्रजातिकन्यायाश्शूद्रजातिवृत्तित्वे ब्राह्मणादुग्रकन्यायामुत्पन्नास्याभीरस्यापि तादृशवृत्तिमत्त्वं फलितमिति बोध्यम्। शब्दरत्ने मातृजातिवृत्तिमत्त्वादिति पाठस्यैव सत्त्वेनास्यैवमेवात्रार्थ उचितः। एतेनैतत्प्रतीकमुपादाय प्रतिपादकतासंबन्धेनेत्यादिः। तेन शूद्रत्वावच्छिन्नविषयताशालिबोधजनकत्वादिति फलितमिति मिश्रोक्तं, मातृजातेर्वृत्तिरावरणं येषां तेषां भावादित्यर्थ इति श्रीधरोक्तं, मातृजातिमत्त्वेन स्मृतिबोधितत्वादित्याचार्योक्तं चापास्तम्। अस्य ग्रन्थस्य तज्जातिमत्त्वस्य स्मृतिबोधितत्वतात्पर्यकत्वे तां जातिमारोप्येत्युत्तरग्रन्थस्यास्वारसिकत्वाच्च। **तत्रेति**। आभीर इत्यर्थः। **तां जातिमारोप्येति**। शूद्रजातिवृत्तिमत्वेन तत्सादृश्यात्तत्र तज्जात्यारोप इति भावः। **अर्थवानेवेति**। एवं च महाशूद्रशब्दः पङ्कजादिवद्योगरूढो, नतु केवलरूढ इति भावः। **स्त्रीत्वमपीति**। अपिना विशिष्टार्थसमवेतस्त्रीत्वपरिग्रहः। **अत्रास्तीति**। अनेन टापः प्रसङ्गो दर्शितः। **नचैवमपि पुंयोगे टाब्वारणाय जातिश्चेदित्यस्यानारोपिता जातिश्चेद्वाच्येत्यर्थ-**

समवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप् स्यान्न तदन्तात्, 'ग्रहणवता' इति निषेधादिति तदन्तविधिज्ञापकता नासङ्गता। अत एव शङ्खस्मृतौ 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ति' इत्युक्तमिति भावः। यत्तु शूद्राभीरमित्यादौ सामान्यविशेषवाचित्वाद् द्वन्द्वाभावमाशङ्क्य 'आभीरा जात्यन्तराणि' इति 'त्यदादीनि' इति सूत्रे भाष्ये उक्तं, तत्तु अनारोपाभिप्रायेणेति न तद्विरोधः। अजादिराकृतिगणः - तेन 'न मु ने' इति सूत्रे 'टायामादेशः' इति भाष्यप्रयोगः सिद्धः। प्रथमाध्यायचतुर्थपादे 'चमसवदविशेषात्' इति सूत्रे शाङ्करभाष्यवाचस्पत्ययोरजायां 'छागा' इति टाबन्तप्रयोगो दृश्यते। ऽतश्छागशब्दोऽप्यजादिष्विति केचित् ॥

---

स्यावश्यकतयाऽभीर्यां शूद्रत्वारोपेण टापोऽप्रसक्तेरमहत्पूर्वेति निषेधो व्यर्थ इति वाच्यम्। अत्रारोपस्य स्मृतिसिद्धत्वेन पुरुषेच्छानधीनत्वेन तत्रत्यारोपतो वैलक्षण्यात्। एतेनामहत्पूर्वेति प्रतिषेधोऽनर्थकः। आभीरजातिवाचिनि महाशूद्रशब्दे शूद्रशब्दस्य निरर्थकत्वेन तदर्थसमवेतस्त्रीत्वाभावेन टापोऽप्रसक्तेरिति कैयटोक्तमपास्तम्। नन्वेवं सति वृक्षप्रचलनन्यायेन समुदायात्प्राप्तटाब्वारणायामहत्पूर्वेत्यस्यावश्यकतया कथं तदन्तविधिज्ञापकत्वमत आह। तदर्थसमवेतेत्यादि। शूद्रशब्दार्थसमवेतेत्यर्थः। अनुलोमसङ्कराणां मातृजात्यारोपे मानमाह। अत एवेति। अत्रार्थे प्रसक्तं भाष्यविरोधमुद्धरति। यत्त्विति। द्वन्द्वाभावमाशङ्क्येति। सामान्यविशेषवाचिनोश्च द्वन्द्वो न भवतीति वचनकरणेऽत्र द्वन्द्वो न स्यादित्याशङ्क्येत्यर्थः। केचिदिति। भाष्यतत्त्वविद इत्यर्थः। अजादिगणेऽन्यगणसूत्रवच्छागादेति पठनीयमिति तदाशयमौत्तराहा आविश्चक्रुः। एतेन बहुशो दृष्टस्य छागीति प्रयोगस्य, निरुक्तटाबन्तप्रयोगस्य चोपपत्तिः। अजायां

**उगितश्च ।** उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः । प्रत्ययविधावितिं निषेधस्तु न । 'उगिद्वर्णग्रहणवर्जम्' इत्युक्तेः । तदाह—उगिदन्तादिति । भवतीति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषय एवेति

---

छागेति प्रयुञ्जानः बोधायनसूत्रकारोऽप्यत्रैवानुकूल इति बोध्यम् । एतेनैतत्प्रतीकमुपादायात्रारुचिर्बीजं तु बहुशो दृष्टस्य छागीति प्रयोगस्यासिद्धिरिति वदन्त आचार्या, अन्ये च परस्ताः ॥

**इत्युक्तेरिति ।** इदं च यथाश्रुतवार्तिकानुरोधेन । वस्तुतस्तु प्रत्ययविधौ प्रतिषेधस्य प्रत्ययविधिविषयेण ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीत्यनेनैकवाक्यत्वाय गृह्यमाणप्रातिपदिकविषयत्वस्य येन विधिरित्यत्र ग्रन्थकृता प्रतिपादितत्वेनात्र निषेधस्य विषय एव न । उगिद्वर्णेति त्वेकदेशानुवाद इति बोध्यम् । ननु येन विधिस्तदन्तस्येत्यत्र स्वस्य चेत्यर्थस्य व्यपदेशिवद्भावलब्धार्थानुवादकत्वेन प्रकृते व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधाद्व्यपदेशिवद्भावाप्रवृत्त्या कथं भवतीत्यत्र डीबत आह । **सूत्रोपात्तान्तादिशब्दविषय एवेति ।** अत्रादिशब्देन पूर्वशब्दपरिग्रहः । अत एवैतत्परिभाषावतरणे एकगोपूर्वादित्यस्याप्युपादानं ग्रन्थकृतस्संगच्छते । धर्मिग्राहकसाजात्यात्सूत्रान्ताट्ठक्, दशान्ताड्ड इत्यनयोरेव प्रकृतपरिभाषाप्रयोजनत्वेन प्रतिपादनपरयेन विधिरिति सूत्रस्थभाष्यस्वारस्येन चास्याः परिभाषाया व्यपदेशिवद्भावेनातिदिदिक्षितधर्मस्य सूत्रगृहीतत्व एव प्रवृत्तिरित्याशयः । स्पष्टं चेदं येन विधिरितिसूत्रे कैयटोद्योतयोः परिमाणान्तस्यासंज्ञाशाणयोरिति सूत्रशेखरे च । तेन रोणीति सूत्रविहितस्याणः केवलादपि प्रवृत्तिस्सिद्धा । न च तत्र तदन्तविधिरेव दुर्लभः । ग्रहणवतेति निषेधादिति वाच्यम् । येन विधिरिति सूत्रे भाष्यकृता तत्र वाचनिकतदन्तविधेरभ्युपगमात् । एवं रथसीताहलेभ्यो

भावः । भवतु इति उगितः प्रातिपदिकस्यापि सत्त्वात् प्रत्ययमात्र-ग्रहणाभावेन 'प्रत्ययग्रहणे' इति परिभाषाया अप्रवृत्त्या निर्यवमतीत्यादौ न दोषः । अञ्चतेस्त्विति । नलोपिनोऽञ्चतेरित्यर्थः । नियमोऽपि नलोप्यञ्चतिविषय एवेति निरूपितम् । व्यपदेशिवद्भावलब्धमर्थं स्पष्टप्रतिपत्तये आह—वन्नन्तादिति । नन्वेवं प्रत्ययग्रहणपरिभाषया बहुधीवरी न सिद्ध्येदत आह—तदन्ताच्चेति । तत्परिभाषालब्धवन्नन्तेन प्रातिपदिकस्य विशेषणादिति भावः । सामान्येति ।

---

यद्विधावसमासे निष्कादिभ्य इत्यसमासग्रहणेन ज्ञापिततदन्तविधिना रथाद्यन्ताज्जायमानस्य यत्प्रत्ययस्य केवलादपि प्रवृत्तिसिद्धा । अन्यथा तत्रानेन निषेधाद्व्यपदेशिवद्भावाप्रवृत्तौ तदर्थं येन विधिरित्यत्र तस्य चेति पाठ्यमिति गौरवम् । इदानीं तु व्यपदेशिवद्भावलब्धार्थानुवादकमेव तदिति लाघवमिति बोध्यम् । इयं प्रातिपदिकग्रहण एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे । तेनोगितश्चेत्यत्र न दोष इति परिभाषेन्दुशेखरग्रन्थस्तु प्रकृतसूत्रस्थभाष्यानुरोधेन प्रवृत्त उपायान्तरप्रदर्शनपरः । तादृशनियमाश्रयणेनात्र तदप्रवृत्तिसिद्धावपि रोणीत्याद्यर्थमुक्तनियम आवश्यक इत्याशयेन त्वत्रैवमुक्तिरिति नानयोर्विरोधः । स्वं रूपमित्यस्य प्रत्याख्याने तु तस्य चेति पाठ्यमिति येन विधिरिति सूत्रस्थशेखरग्रन्थश्च वार्तिकमतानुसारेण प्रवृत्त इति न तद्विरोध इत्यवधेयम् । एतेन वस्तुतस्तु एतत्सर्वं कैयटमतेन । नागेशमते तु नायं नियमः । अत एव तत्परिभाषावतरणे एकगोपूर्वादित्यस्योपादानं सङ्गच्छते । तन्मते समाधिस्तु प्रातिपदिकग्रहण एव तत्परिभाषाप्रवृत्तिस्वीकार इति । तत्त्वं चोगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वमिति वाराणसेयोक्तमपास्तम् । नन्वेवमपि प्रत्ययग्रहणपरिभाषया निर्यमतीत्यत्र न स्यादत आह । भवत्विति । नलोपिनोऽञ्चतेरिति । तेन पूजायां प्राञ्चत्य-

सूत्रेऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषाया विषयो नेति भावः। इदं 'मतुवसोः' 'जाग्रो वि' इति सूत्रेषु भाष्यकैयटयोः स्पष्टम्। इदं सूत्रं न ङीब्विधायकं, किं तु 'ऋन्नेभ्यः' इति प्राप्तङीबनुवादेन तत्संनियोगशिष्टरभावमात्रविधायकम्। उभयविधौ गौरवात्। शर्वरीति। शॄधातोः 'अन्येभ्योऽपि दृश्यते' इति वनिप्। एतत्सिद्ध्यर्थमाह—हशन्ताद्विहित इति। अर्थवतो ग्रहणान्नेह—मघोनी। कनिप्रत्ययान्तनिपातितस्येदम्। बहुव्रीहौ वा। 'अनो बहुव्रीहेः' इति प्रतिषेधे प्राप्ते इदम्। एतच्च वार्त्तिकम् 'अन उपधा' इति सिद्धङीबनुवादेन रादेशविधायकम्। अत एवेदमनुपधालोपिनि सुपर्वेत्यादौ नेति विकल्पोऽर्थसिद्धः। 'वनो र च' इत्येतत्तु ऋन्नेभ्य इत्येतन्ङीब्विषयमेवेत्युक्तम्। पक्षे डाबिति। तेन द्विवचने रूपत्रयम्। कृतसमासान्त इति। उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवेनार्थाधिकारानुरोधादिति भावः। तेन पादयतेः

---

साध्वेवेति भावः। ननु तदनुबन्धकपरिभाषया वनिप एव ग्रहणमुचितमत आह। अनुबन्धानुच्चारणादिति। अन्यतरानुबन्धोच्चारण एव तत्परिभाषाप्रवृत्तेरिति भावः। एतत्सिद्ध्यर्थमिति। एतस्यापि सिद्ध्यर्थमित्यर्थः। तेनावावेत्यपि सिद्धमिति भावः। मघोनीत्यत्र वनो निरर्थकत्वं दर्शयितुमाह। कनिप्रत्ययान्तेति। वनिबन्तमघवन्शब्दे वनोऽर्थवत्त्वेऽपि तस्य छान्दसत्वान्नातिप्रसङ्ग इति भावः। प्रतिषेधे प्राप्त इति। तेन ङीपि प्रतिषिद्धे तत्सन्नियोगशिष्टो रभावो न स्यादित्ययमारम्भ इति भावः। ननु वनो रचेति सूत्रभाष्ये 'रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वादि'त्येवोक्तमिति वेत्येतदनुपपन्नमत आह। एतच्चेति। नन्वेतद्विपर्ययेऽपि वनो रचेत्यनेनैव कुतो न सिद्धमत आह। ऋन्नेभ्य इत्येतदिति। अनन्तरत्वादिति भावः॥

क्विबन्तस्य ग्रहणं न। द्विपदीति। द्वौ पादावस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य' इति पादशब्दान्तलोपस्ततो ङीपि पादः पत्॥

टाबृचि॥ पूर्वसूत्रप्राप्तङीपोऽपवाद इति प्राञ्चः, तच्चिन्त्यम्। 'शेषाद्विभाषा' इति सूत्रस्थभाष्यविरोधात्। तत्र हि प्रतिपदविहितसमासान्तानां कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तं, तद्रीत्याऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात्। 'बहुव्रीहेरूधसः' इत्यत्रापि भाष्ये स्पष्टमेतत्। अत एव 'ङ्याप्प्रातिपदिकात्' इति सूत्रे पादशब्दसमानार्थमकारान्तं पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यातम्, 'श्रूयते च छन्दसि तस्याः सप्ताक्षरमेकं पदम्, एकः पाद इत्यर्थः' इति च भाष्योक्तं सङ्गच्छते। तदा

---

तदभावे सावकाशत्वादिति। न चाभावपर्यन्तमप्यस्य तात्पर्येणेदमयुक्तमिति वाच्यम्। पादोऽन्यतरस्यामित्यस्याप्राप्तविभाषात्वेनाभावस्य सिद्धतया तावत्पर्यन्तं तात्पर्यकल्पनाया अनावश्यकत्वात्। ननूक्तभाष्यविरोधादपवादत्वानङ्गीकारेऽपि परत्वाद्बाधकः कुतो नेत्यत आह। अत एवेति। टापोऽबाधकत्वादेवेत्यर्थः। प्रत्याख्यातमिति। भावे क्तः, प्रत्याख्यानमित्यर्थः। कर्मक्तान्तत्वे तु सङ्गच्छत इत्यनेनानन्वयापत्तेः। पादशब्दसमानार्थकपदशब्दसत्त्वे मानमाह। श्रूयते चेत्यादि। तत्र पदशब्दस्य शास्त्रसङ्केतितार्थभ्रमवारणाय तदर्थं भाष्यकार आह। एकः पाद इत्यर्थ इति। छन्दसि दृष्टस्य क्वचिल्लोकेऽपि प्रयोगाङ्गीकारे बाधकाभाव इति तदाशयः। इति च भाष्योक्तमिति। चो भिन्नक्रमः। इति भाष्योक्तं चेत्यर्थः। सङ्गच्छत इति। अन्यथा सूत्रमते ऋचि वाच्यायां ङीपं बाधित्वा परत्वाट्टाप्येकपदेत्येकमेव रूपं, प्रत्याख्याने त्वकारान्तपदशब्दाट्टाप्येकपदेति कृतसमासान्तपाच्छब्दात्पादोऽन्यतरस्यामित्यनेन ङीप्येकपदीति च रूपद्वयमिति फलभेदसत्त्वेन तद-

**हि ऋच्यपि एकपदी एकपात् इतीष्यत एव। एवञ्च एकपाद् ऋक् इत्यस्य सूत्रमते सिद्धये 'टाबृचि' इत्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम्। पादन्तस्य ऋच्यनभिधानमिति तु न भाष्याशयः। ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्यासिद्ध्यापत्तेरिति बोद्धव्यम्। केवलपाच्छब्दस्य स्त्रियाम् ऋचि वाऽसम्भवेनात्र तदन्तविधिः।**

---

सङ्गतिः। अतस्तद्भाष्यबलात्पूर्वविप्रतिषेधेन ङीप एव पूर्वं प्रवृत्तिरङ्गीकार्या। तथा च तस्य वैकल्पिकत्वेन तदभावपक्षे टापि सूत्रमतेऽपि रूपद्वयसिद्ध्या न फलभेद इति भावः। नन्वेवमपि प्रत्याख्यानपक्षे इष्टस्यैकपादित्यस्य सूत्रमतेऽसिद्ध्या फलभेदो दुर्निवार एवेत्यत आह। **अन्यतरस्यां ग्रहणमिति**। एवं च शास्त्रद्वयविकल्पेनारम्भपक्षेऽपि रूपत्रयसिद्ध्या न फलभेद इति भावः। ननु प्राचोक्तदिशा कृतसमासान्तपाच्छब्दस्य ऋच्यनभिधानकल्पनेनापि फलभेदवारणसंभवे तदनुवृत्तिर्व्यर्थेत्यत आह। **पादन्तस्येति**। तस्य तादृशाशयकत्वेऽनुपपत्तिं दर्शयति। **सूत्ररीत्येष्टस्येति**। प्रत्याख्यानपरभाष्येण सह फलैक्याय पूर्वविप्रतिषेधेन टापं बाधित्वा ङीपः प्रवृत्तेर्वक्तव्यत्वेन सूत्रमते ङीबन्तरूपस्येष्टत्वमिति भावः। ननु तद्भाष्यबलेन प्राचोक्तदिशा पादन्तस्य ऋच्यनभिधानमेव कल्प्यतां, किं पूर्वविप्रतिषेधकल्पनया। तावतापि फलभेदस्य सुवारत्वादिति चेन्न। अन्यत्र क्लृप्तपूर्वविप्रतिषेधाश्रयणेनैव फलैक्यसंभवेऽनभिधानपर्यन्तानुधावने मानाभावात्। किंच शेषाद्विभाषेति सूत्रस्थभाष्यप्रामाण्याट्टापोऽपवादत्वस्य वक्तुमशक्यतया प्राचीनमतेऽर्थविशेषापेक्षत्वेन टापो बहिरङ्गत्वात्ततः पूर्वं ङीपः प्रवृत्तावेकपदीत्यस्य, तदभावे टाबन्तस्य च सिद्ध्या पादन्तस्य ऋच्यनभिधानकल्पने तद्रीत्या सूत्रकृत्सम्मतङीबन्त-

असिद्धत्वादिति । आपः परिगणितेष्वभावान्न तत्र नलोपासिद्धत्वम् । इदञ्च कार्यकालपक्षे । अयं निषेधः प्रियपञ्चा द्रौपदी इत्यादौ तदन्तेऽपि । 'स्त्रियां यत्प्राप्नोति तन्न' इत्यर्थात् 'अन

---

रूपस्यासिद्धिरित्यपि बोध्यम् । एतेन "परेतु परत्वाद्बाधात्सूत्रसत्त्वे एकपदेत्येवेत्येकपदीति ङीबन्तरूपं न सूत्रमतेऽपीष्टमिति नेयं प्रतिबन्दी प्राचां बाधिकेति पादन्तस्यानभिधानमेव युक्तमिति श्रीगुरुचरणा व्याचक्षत इति वरवर्णिनीकारोक्तं, केचित्तु पञ्चेत्यादौ टाब्ङीपोरुभयोर्निषेधाय न षडितिसूत्रे ङीपोऽनुवृत्तेरावश्यकतया मण्डूकप्लुतौ मानाभावेन टाबृचीत्यनेन ङीपो विधानं सूत्रकृत्सम्मतमित्याहुरित्याचार्योक्तं" चापास्तम् । न षडित्यत्र ङीब्ग्रहणानुवृत्तावपि प्रियपञ्चा द्रौपदीत्यादौ डापोऽपि निषेधाय सामान्यतः स्त्रियां यत्प्राप्नोति तन्नेत्यर्थस्यावश्यकतया तेनैव ङीपोऽपि निषेधे सिद्धे तदर्थं तत्र ङीब्ग्रहणानुवृत्तेरनावश्यकत्वात् । अत्र केचित्त्विति वदत आचार्यस्यापि तत्रादराभावसूचनात् ॥

ननु पूर्वत्रेत्यनेन नलोपस्यासिद्धत्वादापः प्राप्तिरेव नेत्यसिद्धत्वोपवर्णनेन निषेधपर्यन्तानुधावनं विफलमेवेत्यत आह । आप इति । परिगणितेष्विति । सुबादिष्वित्यर्थः । कार्यकालपक्ष इति । यथोद्देशे तु जसो लुगर्थं पूर्वं प्रवृत्तस्य नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्याल्धर्मत्वाभावेन स्थानिवद्भावेनापि सिद्धिरिति भावः । तदन्तेऽपीति । अहमत्पूर्वग्रहणेन स्त्रियामित्यधिकारस्थविधिनिषेधसाधारण्येन तदन्तविधिज्ञापनादिति भावः । तन्नेत्यर्थादिति । अनन्तरस्य ऋन्नेभ्य इति सूत्रविहितङीप एवानेन निषेधे ऋन्नेभ्यो ङीबषट्स्वस्रादिभ्य इत्येकयोग एव कर्तव्ये पृथग्योगकरणमनर्थकमतस्तत्सामर्थ्याद्बाध्यसामान्याचिन्तया स्ववि-

उपधा' इति ङीबपि नेति बोद्धयम्। ध्वनितश्चेदं भाष्ये। परे त्वत्र बहिरङ्गासिद्धत्वाप्राप्तिः। नलोपस्य तत्त्वाभावात्। संज्ञाकृत-

---

पये प्राप्तस्य सर्वस्यापि निषेध इति भावः। ङीबपीति। अपिना टाप्डापोः समुच्चयः। नन्वत्र सूत्रे ङीपोऽनुवृत्त्या पृथग्योगकरणसामर्थ्याद्भाष्यसामान्यचिन्तया ङीप्सामान्यस्य निषेधेऽप्यन्यानिषेधे मानाभावोऽत आह। ध्वनितं चेदमिति। अत्र सूत्रे स्त्रियामित्यनुवृत्त्या स्त्रीत्वरूपार्थाश्रयकार्यमात्रनिषेधकत्वमस्य प्रकृतसूत्रे भाष्ये ध्वनितमिति भावः। तत्र हि कस्यायं प्रतिषेधः। इत्याशङ्क्य ङीबनन्तरस्तस्य प्रतिषेध इति समाधायाथेदानीं ङीपि प्रतिषिद्धे पञ्चेत्यादौ नलोपोत्तरं टाप् कस्मान्नेत्याशङ्क्य नलोपस्यासिद्धत्वात्स न भवतीति समाधाय परिगणितेष्वेव नलोपस्यासिद्धत्वादापः परिगणितेष्वभावान्न तत्र नलोपासिद्धत्वमिति पुनराशङ्क्य इदमपि तत्र परिगण्यते। कथं? सुबिति नेदं प्रत्ययग्रहणं, किं तर्हि, प्रत्याहारग्रहणं, क्व सन्निविष्टानां प्रत्याहारः। प्रथमैकवचनात्प्रभृत्याचापः पकारादिति समाहितम्। तदनु प्रत्याहारग्रहणे सुब्विधिशब्दे सर्वविभक्त्यन्तावयवकसमासाश्रयणाट्टापि परतो विहिते इत्त्वेऽपि नलोपोऽसिद्धः स्यात्तथा च बहुचर्मिकेत्यादाविन्त्वं न स्यादित्याशङ्क्य स्त्रियामिति वर्तते। स्त्रियां यत्प्राप्नोति तस्य प्रतिषेध इति सिद्धान्तिना समाहितम्। अर्थाश्रयप्राप्तिमात्रापेक्षोऽयं निषेध इत्यर्थ इति तदाशयं कैयट आह। एवं चोपक्रमोपसंहाराभ्यामस्य सूत्रस्य स्त्रीत्वरूपार्थाश्रयकार्यमात्रनिषेधकत्वं स्पष्टमेव लभ्यत इति बोध्यम्। मूलं दूषयति। परे त्विति। अनेन मूले नलोपस्यासिद्धत्वादित्येव पाठो नतु नलोपः सुप्स्वरेति नलोपस्यासिद्धत्वादितीत्यवगम्यते। "संज्ञाविधौ पञ्चेत्यत्र नलोपे कृतेऽपीत्यादिना स्त्रीप्रत्ययेषु वक्ष्यती"ति नलोपस्सुबिति सूत्रस्थमनोरमाग्रन्थेन त्वन्त्यपाठ एव मूलकृत्सम्मत इति प्रतीयते। तत्त्वेति। बहिरङ्गत्वेत्यर्थः। ननु नलोपस्य संज्ञासापेक्षत्वेन बहिरङ्गत्वमस्त्येवेत्यत आह।

बहिरङ्गत्वानाश्रयणात् । पञ्चेत्यत्र तु स्त्रियां यत्प्राप्नोति तन्नेत्यर्था-श्रयणबलाद् भूतपूर्वषट्त्वाश्रयो निषेधः । अत एव षट्संज्ञायां नलोपासिद्धत्वस्य न फलमिति 'नलोपः सुप्' इत्यत्र भाष्ये उक्तमित्याहुः । मनः । न ङीबिति । अयम्, 'अन' इति च उक्तरीत्या

---

संज्ञाकृतेति । नन्वेवमिष्टासिद्धिरत आह । पञ्चेति । अर्थाश्रयणबलादिति । न षडित्यनेनानन्तरस्य ङीप एव निषेधे पञ्चेत्यत्र नलोपोत्तरमदन्तत्वात्प्राप्तस्य टापो निषेधो न स्यादित्याशङ्क्य तस्यापि निषेधाय स्त्रियामित्यनुवृत्त्या स्त्रीत्वरूपार्था-श्रयकार्यमात्रनिषेधकताया भगवतोक्तत्वेन तद्बलादित्यर्थः । भूतपूर्वषट्त्वेति । अत्र षट्त्वशब्देन तत्प्रयोजकीभूतनान्तत्वस्य परिग्रहः । षट्संज्ञाप्रयोजकनान्त-संख्यावाचकत्वविशेषणीभूतनान्तत्वांश एव भूतपूर्वगतिः । विशेष्यांशस्तु स्वत एव सिद्ध इति भावः । पूर्वं प्रवृत्तषट्त्वस्यैव भूतपूर्वगत्या नलोपोत्तरमानयनामिति तु न सम्यक् । अस्य ग्रन्थस्य कार्यकालपक्षेऽपि दोषवारणपरतया तत्पक्षे कार्य-प्रवृत्तिकाल एव संज्ञाप्रवृत्तेरावश्यकत्वात् । एतेन ङीब्निषेधाय भूतं जातं यत् षट्त्वं स्थानिवद्भावेनैकदेशविकृतन्यायेन वा नलोपे आश्रयो यस्य स निषेध इत्यर्थ इति श्रीधराद्युक्तमपास्तम् । अत एवेति । अत्रोक्तरीत्या निषेधस्य सिद्धत्वादेवेत्यर्थः । यत्तु बाध्यसामान्यचिन्ताश्रयणस्यान उपधेति ङीबभावस्य फलत्वेनानुपदमेव कीर्तनाच्चिन्त्यमेतदित्याचार्यास्तन्न । तत्रापिशब्देन टाब्डापो-रुभयोरपि समुच्चयात्स्वविषये प्राप्तस्य स्त्रीप्रत्ययमात्रस्य निषेधप्रतिपादन एव तद्ग्रन्थतात्पर्यात् । बाध्यसामान्यचिन्तया ङीब्मात्रनिषेधकत्वे उपक्रमभाष्या-सङ्गतेः । ङीब्ग्रहणानुवृत्त्या ङीपो निषेधेऽप्येकयोगेन पर्युदासेनैव सिद्धौ पृथग्योग-करणसामर्थ्यान्ङीब्मात्रनिषेधकत्वे सिद्धे स्त्रियामित्यनुवृत्त्या स्त्रीत्वरूपार्थाश्रय-मात्रनिषेधकत्वकथनस्य भगवतोऽसङ्गतेश्चेति बोध्यम् । उक्तरीत्येति । स्त्रियां

टाब्ङीपोरुभयोरपि निषेधः। एतेन सीमभ्यां बहुयज्वभ्यां बहुधीवभ्यामित्यत्र डाब्ङीपोरभावे नलोपे टाब् दुर्वार इत्यपास्तम्॥

डाबुभा॥ उभाभ्यांग्रहणाभावे संनिहितस्यान एवानुवृत्तिः सम्भाव्येत। वचनसामर्थ्याद् डाब्निषेधयोः पर्याये सिद्धेऽन्यतरस्यामिति स्पष्टार्थम्। भाष्ये त्वन्यतरस्याङ्ग्रहणं वाक्यभेदेन 'अनो बहुव्रीहेः' इत्यनुवर्त्य ततः पक्षे 'ऋन्नेभ्यः' इति ङीबर्थम्।

---

यत्प्राप्नोति तन्नेत्यर्थाश्रयणेनेत्यर्थः। एतेन = उभयोरपि निषेधेन। बहुयज्वभ्यामिति। नन्वत्र नलोपोत्तरमन्नन्तत्वाभावेन कथं निषेध इति चेन्न। स्त्रियां यत्प्राप्नोति तन्नेत्यर्थाश्रयणबलेन भूतपूर्वान्नन्तत्वमाश्रित्य निषेधप्रवृत्तेस्सुलभात्। एतेन श्वयुवेति सूत्रस्थशेखरोक्तदिशा अन्नन्तत्वाभावेनानो बहुव्रीहेरित्यस्याप्राप्तेरिदं चिन्त्यमित्याचार्योक्तमपास्तम्॥

बहुव्रीहौ वेतिवार्तिककारमतेनाह। वचनसामर्थ्यादिति। निषेधडापोर्वचनसामर्थ्यादित्यर्थः। यदि नित्यो डाप् स्यात्तदा मनो डाप्, अनो बहुव्रीहेरित्येवं ङीब्बाधकतया डापमेव विदध्यान्न तु निषेधमपीति भावः। बहुव्रीहौ वेति वार्तिकप्रत्याख्यातृभाष्यमतेनाह। वाक्यभेदेनेति। योगविभागेन वाक्यभेद इति भावः। अन्नन्ताद्बहुव्रीहेर्वा ङीबिति तदर्थः। ङीबभावपक्षे तु निषेधडापोर्वचनसामर्थ्यात्तयोः पर्यायेण प्रवृत्तिरिति भावः। अयं च ङीब्नापूर्वः। नान्तत्वात्प्राप्तस्यान इत्यनेन निषिद्धस्यैव विकल्पेन पुनरुज्जीवनादित्यभिप्रेत्याह। ऋन्नेभ्य इति ङीबर्थमिति। नियमार्थमिति। अन्नन्ताद्बहुव्रीहेर्यदि ङीब्वा स्यात्तदोपधालोपिन एवेति नियमाकारः। ननु नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे तत्प्रत्याख्यानसंभवेऽपि विधिमुखेनप्रवृत्तिरिति सिद्धान्ते, बहुधीवरीत्यत्र प्रकरणान्तरस्थ एव ङीबिति कथं

एवञ्च 'अन उपधा' इति सूत्रं नियमार्थमिति बहुधीवरीत्यत्र 'ऋन्नेभ्यः' इति ङीबिति तत्सन्नियोगेन रेफादेशः सिद्ध्यतीति बहुव्रीहौ वेति वचनं प्रत्याख्यातम् । 'अन उपधा' इति 'ऋन्नेभ्य' इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः ॥

अन उ । 'बहुव्रीहेरूधस' इत्यतो बहुव्रीहेरिति 'संख्याऽव्ययादेः' इत्यतो ङीबिति चानुवर्त्तते । अनुपसर्जनादित्यनुवृत्तमप्यत्र न सम्बद्ध्यते । तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चान्नन्तबहुव्रीहावनुपसर्जनस्यासम्भवात् । ध्वनितञ्चेदं 'वनो र च इति सूत्रे भाष्ये । तत्र हि 'अनो बहुव्रीहेः' इत्यनन्तरम् 'उपधालोपिनो वा' इति न्यासो दर्शितः । .... .... .... ....

---

तत्प्रत्याख्यानसंभवोऽत आह । अन उपधेतीति । इत्यस्यैवेति । इति प्रकरणस्थस्यैवेत्यर्थः ॥

गृह्यमाणस्येति । अन इत्यर्थः । ननु गृह्यमाणस्यानोऽन्नन्तबहुव्रीहावनुपसर्जनस्यासंभवेऽप्यस्यान्नन्तबहुव्रीह्यन्तादुपधालोपिनः प्रातिपदिकादित्यर्थ इत्यतिबहुदामा ब्राह्मणीत्यादावनो बहुव्रीहेरिति निषेधवदनेन ङीब्वारणाय तदन्तविशेषणमेवानुपसर्जनादिति किं न स्यादत आह । ध्वनितं चेदमिति । तत्प्रकारमेवाह । न्यासो दर्शित इति । अयं भावः । तत्र हि भाष्ये रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात्, बहुधीवरी, बहुपीवरी, किं पुनः कारणं न सिद्ध्यति, प्रतिषिद्धत्वात् । अनो बहुव्रीहेरिति प्रतिषेधः प्राप्नोतीत्युक्त्वा तत अनो बहुव्रीहेः प्रतिषेधे उपधालोपिनो वा वचनमिति पक्षान्तरमुक्तं वार्तिककृता । एवं चान उपधालोपिनोऽन्यतरस्यामित्येतन्न वक्तव्यं भवतीति तदाशयः । तदनु भगवता बहुव्रीहेरुपसंख्यानमित्याद्यपक्षे बहुधीवरीत्यादौ नित्यं ङीब्रभावौ स्याताम् । पक्षान्तरे तु विकल्पेनेति विशेषमुद्भाव्य

**विध्यर्थमिदम्। अन्यतरस्याङ्ग्रहणं तु अनुपधालोपिसुपर्वेत्यादौ**

---

बहुव्रीहेरुपसंख्यानमित्यस्यान उपधालोपिन इति सूत्रप्राप्तङीबनुवादेन रेफादेशमात्रविधायकतया पक्षद्वयेऽपि विकल्पसिद्ध्या न विशेष इत्युक्तम्। पक्षद्वयेऽनुपसर्जनाधिकारसंबन्धासंबन्धप्रयुक्तविशेषस्तु नोद्भावितः। यदि तु यथाश्रुतेऽन उपधालोपिन इत्यत्रानुपसर्जनादित्यस्य संबन्धः स्यात्तदाऽद्यपक्षेऽतिबहुधीवरीत्याद्यसिद्ध्या पक्षान्तरे तत्सिद्ध्या च पक्षयोर्विशेषस्य स्पष्टतया तादृशविशेषानुद्भावनं भगवतोऽसंगतं स्यादतो यथाश्रुतेऽप्यन उपधेत्यत्रानुपसर्जनाधिकारासंबन्ध एव भगवदाकूतमिति। यत्तु अनो बहुव्रीहेरित्यस्यानन्तरमुपधालोपिनो वेति सूत्रमस्त्विति मनोरमाग्रन्थव्याख्यानावसरेऽनन्तरमिति प्रतीकमुपादायानो बहुव्रीहेः डाबुभाभ्याम्, अनुपसर्जनात्, उपधालोपिनो वेति पाठ्यमिति भावः। यथाश्रुतेऽनुपसर्जनादित्यस्य संबन्धो दुर्घटः। अत एव बहुदामानि पुराण्यतिक्रान्ता नगरीत्यत्र ङीप् नेति शब्दरत्नकृतोक्तं, तत्तु यथाश्रुतसूत्रानुरोधिमूलकाराशयवर्णनमात्रपरमिति न तद्विरोधः। बहुदामानि पुराण्यतिक्रान्ता नगरीत्याद्यर्थकप्रयोगेषु सत्यभिधाने ङीब्भवत्येव। उक्तभाष्यबलात्तस्यानभिधानमेव वा कल्प्यम्। अत एव बहुदामानि पुराण्यतिक्रान्ता नगरीति वाक्यमेव प्रदर्शितमुपाध्यायैर्न तु समास इति बोध्यम्। एतेन शब्दरत्नकृता तत्रानुपसर्जनाधिकारसंबन्धस्य तत्फलस्य च प्रदर्शितत्वेनात्र तत्संबन्ध एवोचित इत्यौत्तराहोक्तम्, अन्ये तु गृह्यमाणस्यान्नन्तबहुव्रीहेर्बहुधीवेत्यादावनुपसर्जनस्य संभवेनातिबहुदामा नगरीत्यादावन्नन्तबहुव्रीहेरुपसर्जनस्य च सत्त्वेनानुपसर्जनादित्यन उपधेति सूत्रे संबध्यत एव। अनो बहुव्रीहिप्रतिषेधे, उपधालोपिनो वेति वक्तव्यमिति वनो रचेति सूत्रस्थं भाष्यन्तु डाबुभाभ्यामनुपसर्जनादित्युत्तरं तद्वक्तव्यमित्येवंपरमित्याहुरित्याचार्योक्तं चापास्तम्। रविधौ बहुव्रीहेरुपसंख्यानमिति वार्तिकमतानुसंधेनाह। विध्यर्थमिदमिति। नन्वत्रापि विधानसामर्थ्यान्ङीन्निषेध-

**सावकाशयोर्ङीप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति। अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ॥**

ककारादिति । अनेन वर्णमात्रं विवक्षितम्, अकार उच्चारणार्थ इति सूचयति । न च कारिकेत्यत्राकारेण व्यवधानादाप्परककाराभावेनेत्वानापत्तिः, एकादेशेऽपि 'अचः परस्मिन्' इति स्थानिवत्त्वाद् व्यवधानमेव । आपि परतोऽकारस्य कात्पूर्वस्येत्यर्थे-

---

डापां पर्यायसिद्धावन्यतरस्यामिति व्यर्थमत आह । **अन्यतरस्यां ग्रहणं त्विति** । **अन्यथेति** । बाधकत्वानङ्गीकार इत्यर्थः । अन्यतरस्यां ग्रहणं त्वित्यस्योपधालोपिनो वेत्यत्र वाग्रहणं त्वित्यर्थ इति श्रीधरोक्तं तु न युक्तम् । तन्न्यासे तस्य निषेधविकल्पत्वेन ङीपा बाधो माभूदिति वक्ष्यमाणग्रन्थासङ्गतेः। तदानीं तत्र वाग्रहणाभावे तस्य नित्यनिषेधकत्वापत्तौ सूत्रस्यैव वैयर्थ्यापत्तेश्च ॥

**अनेनेति** । कारप्रत्ययकरणेनेत्यर्थः । **वर्णमात्रं विवक्षितमिति** । अन्यथा वर्णात्कार इति वर्णवाचिन एव कारप्रत्ययप्रवृत्त्या तदसङ्गतिरिति भावः। अत्र पक्षेऽतिप्रसङ्गमाशङ्क्य समाधत्ते । **न चेत्यादिना**। वर्णग्रहणं चेद्व्यवहितत्वान्न प्राप्नोति, कारिका, हारिका, अकारेण व्यवहितत्वान्न प्राप्नोतीति प्रकृतसूत्रस्थभाष्यस्य यथाश्रुताभिप्रायेणापीति ककारविशेषणमिति कस्य चिन्मतानुरोधेनाह। **आप्परककाराभावेनेति**। नन्वेकादेशे कृते व्यवधानाभावोऽत आह । **एकादेशेऽपीति** । सन्निहितत्वात्साक्षाद्विध्युद्देश्यत्वेन प्राधान्याच्चापीत्यकारविशेषणमिति स्वसिद्धान्तरीत्याह । **आपि परतोऽकारस्येति**। अकारेण व्यवहितत्वान्न प्राप्नोतीति प्रागुक्तभाष्यस्य ककारेण व्यवधानं तु कात्पूर्वस्येति वचनसामर्थ्यात्सोढव्यमेवेति भाव इत्युद्योतग्रन्थेन प्रकृतसूत्रस्थशब्दरत्नग्रन्थेन

ऽपि निर्दिष्टपरिभाषोपस्थितेर्व्यवहिते न प्राप्नोतीति वाच्यम्। आनन्तर्यांशोपस्थितावपि 'येन नाव्यवधानम्' इति न्यायेनाकारव्यवधानेऽपि प्रवृत्तेः। रथकट्यादौ च नातिप्रसङ्गः। क इति सङ्घातग्रहणे तु एतिका इत्याद्यसिद्धिः। अकच्यकारस्योच्चारणार्थतया कशब्दाभावात्। 'न यासयोः' इति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते। अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम्। तावताऽपि प्रत्ययस्थत्वांशानुपपत्तेश्च। न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधाना-

---

चेदमेव ग्रन्थकृत्संमतमिति बोध्यम्। निर्दिष्टेति। नच वचनसामर्थ्यात्तत्परिभाषाबाध इति वाच्यम्। तथासति रथकट्येत्यादावतिप्रसङ्गात्। आनन्तर्यांशेति। विधौ परिभाषोपतिष्ठत इति परिभाषा तु सूत्रद्वयविषयिकेति भावः। अकारव्यवधानेऽपीति। आपीत्यकारविशेषणमेवेति स्वसिद्धान्ते त्विदमुपलक्षणं,ककारव्यवधानस्यापीति बोध्यम्। सामर्थ्यात्ककाराकाराभ्यां व्यवधानेऽपि भवतीति भावः। एतेनानेनापीति ककारविशेषणमिति सूचितमिति मिश्रोक्तमपास्तम्। उद्योतेन शब्दरत्नग्रन्थेन च तदर्थस्य स्वानभिमतत्वलाभात्। नातिप्रसङ्ग इति। ककाराकारातिरिक्तवर्णव्यवायसत्त्वेन नेत्त्वापत्तिरिति भावः। ननूक्तन्यायाद्यसंचारजलाघवानुरोधेन केत्यनेन सङ्घातग्रहणमापीत्यस्य तद्विशेषणत्वं च कुतो नेत्यत आह। सङ्घातग्रहणे त्विति। पचतकीत्यादिसिद्धये आह। अकचीति। कशब्दाभावादिति। एतिकेत्यादौ लक्ष्ये इति भावः। ननु न यासयोरिति ज्ञापकादकज्विधायकसूत्रस्थमकारवैशिष्ट्यमादाय तत्रेत्वप्रवृत्तिस्सुलभेत्यत आह। न यासयोरिति। इत्येव ज्ञाप्यत इति। अपूर्ववचनकल्पनापेक्षया लाघवादिदमेव युक्तमिति भावः। गौरवमभ्युपेत्य निरुक्तार्थज्ञापनेऽपि न निस्तार इत्याह। तावतापीति। इत्संज्ञाद्युत्तरमेव

दित्वाप्राप्तिः। द्वयोरकारयोरेकादेशो टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात्। पुनः स्थानिवत्त्वन्तु न। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम्। तस्य टाबेकादेशेनापहारेणादर्शनात्। अत एव 'न यासयोः' इति निषेधसार्थक्यम्।

---

प्रत्ययसंज्ञाप्रवृत्तेरिति भावः। इत्वाप्राप्तिरिति। कारिकेत्यादावेकेनाकारेण ककारेण च व्यवधाने इत्वसंपादनेन सूत्रस्य कृतार्थत्वादकारद्वयव्यवधाने तत्प्रवृत्तौ मानाभाव इति भावः। एकादेश इति। अतो गुण इत्यनेनेति भावः। पुनः स्थानिवत्त्वमिति। स्थानिवद्भावलब्धस्य पररूपनिष्पन्नस्येति भावः। विकारकृतलक्ष्यभेदानाश्रयणादाह। लक्ष्ये लक्षणस्येति। अतिदेशस्य कार्यार्थत्वेनेत्वाभावरूपकार्यसंपादकतया प्रथमतोऽतिदेशप्रवृत्त्या पुनस्तत्रैव तादृशकार्यार्थमतिदेशाप्रवृत्तिरित्याशयः। नन्वेकस्य पररूपनिष्पन्नस्यैव स्थानिवत्त्वं, न टापा सहैकादेशस्यापीति नैतन्न्यायविषयतेत्यत आह। टापा सहेति। न्यायसिद्धेऽर्थे मानमप्याह। अत एवेति। पुनः स्थानिवत्त्वाप्रवृत्तेरेवेत्यर्थः। सार्थक्यमिति। अन्यथेत्वस्य प्राप्तेरेवाभावेन निषेधासङ्गतिरिति भावः। नच लक्ष्ये लक्षणस्येति न्यायस्य संस्कारकविधिविषयताया अन्यत्र प्रतिपादितत्वेनातिदेशविषये तदप्रवृत्त्या इदमसंगतमिति वाच्यम्। अतिदेशस्यापि परम्परया लक्ष्यसंस्कारकत्वेन तद्विषये तदप्रवृत्तौ मानाभावात्। तत्तद्विध्यनुमितप्रयोगविधिविषये तदप्रवृत्तिप्रतिपादन एव तत्तात्पर्यात्। नचैवं सुनयिकेत्यादौ धात्वन्तयकोरितीत्वानापत्तिः। ने इत्यस्मिन्स्थानिवत्त्वेन धातुत्वातिदेशेऽप्ययादेशघटिते लक्ष्ये लक्षणस्येति न्यायेन पुनस्तदभावादिति वाच्यम्। अतिदिश्यमानकार्यभेदेनातिदेशशास्त्रस्य भिन्नत्वाद्गुणघटिते धातुत्वव्यपदेशमात्रसंपादकतयाऽतिदेशप्रवृत्तावप्ययादेशघटिते धात्वन्तयकोरितीत्वरूपकार्यार्थे

स्थग्रहणन्तु स्पष्टार्थम्। केवलककारस्य प्रत्ययस्याभावात्। असुप इति बहुव्रीहिणा नाङ्गविशेषणम्। बहुचर्मिकेत्यादावित्वानापत्तेः। प्रत्ययलक्षणेनाङ्गस्य सुब्वत्त्वात्। 'न लुमता' इति तु नात्र। लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये तन्निषेधप्रवृत्तेः। इदन्तु टाप्यङ्गमिति दिक्। सर्विकेति। 'अव्ययसर्वनाम्नाम्' इत्यकच्। कारिकेति। करोतेर्ण्वुल्। नौशब्दात्स्वार्थे कः। सुपः परो नेति प्रसज्यप्रतिषेधेन व्याख्याने फलमाह—बहुपरिव्राजकेति। पर्युदासे हि समु-

---

पुनरतिदेशप्रवृत्तौ बाधकाभावात्। लक्ष्यभेद इव लक्षणभेदेऽपि तन्न्यायाप्रवृत्तेः। वस्तुतस्त्वेतिकेत्यादौ टावेकादेशे स्थानिवत्त्वेन अ आ बुद्धावपि पररूपनिष्पन्नस्याकारस्यानयनाभावेन निरधिष्ठानारोपस्यासंभवात्पुनः स्थानिवत्त्वाप्रवृत्त्या एकेनैवाकारेण व्यवधानमिति नातिप्रसङ्गः। किंच न यासयोरिति ज्ञापकाच्चानुमानिकव्यवधानेऽपि इत्वविधायके कात्पूर्वस्येति वचनबलात्ककारातिरिक्तश्रौताव्यवधानमादायेत्वप्रवृत्तिरिति नायं दोषः। मूलं तु प्रकृतसूत्रस्थकैयटानुरोधेन प्रवृत्तमुपायान्तरपरमित्यवधेयम्। एतेनेदं सर्वमयुक्तम्। स्थानिवत्त्वस्यातिदेशत्वेन लक्ष्ये लक्षणस्येति न्यायाप्रवृत्तेः। पुनः स्थानिवत्त्वं तु भवत्येव। अत एव सुनयिका, सुपाकिकेत्यादौ धात्वन्तयकोरितीत्वं सिद्ध्यतीत्यादि वाराणसेयोक्तमपास्तम्। स्पष्टार्थमिति। प्रत्ययात्कात्पूर्वस्येत्येव सिद्धेरिति भावः। नच कान्तात्प्रत्ययादित्यर्थवारणाय स्थग्रहणमिति वाच्यम्। क्षिपकादीनां चेति निषेधेन कादित्यस्य प्रत्ययविशेषणत्वाभावज्ञापनेनादोषात्। नन्वेवमपि प्रत्ययरूपात्ककारादित्यर्थे कारिकेत्याद्यसिद्धिरत आह। केवलककारस्येति। तथाच सामर्थ्यात्प्रत्ययपदं प्रत्ययस्थत्वपरमिति भावः। बहुव्रीहिणेति। न विद्यते सुब्यस्येति बहुव्रीहिणेत्यर्थः। इदमिति। इत्वमित्यर्थः। टाप्यङ्गमिति। टाब्निरूपितं यदङ्गं तस्य कार्यमित्यर्थः। समुदायस्य=बहुपरिव्राजकेत्यस्य।

दागस्य सुङ्भिन्नत्वेन सुबन्तभिन्नत्वेन च ततः परत्वादित्वं दुर्वारमिति भावः। परिपूर्वाद् व्रजेण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वं बोद्धयम् । कटुकेति। आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्चान्त्यककारादुत्तरस्याकारस्येत्वं स्यादिति भावः। मामकेति। कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्याम्' इत्यणि 'तवकममकावेकवचने' इति ममकादेशे आदि-

---

सुबन्तात्=परिव्राजकेत्यस्मात् । अपवादविषये तेनैव बाधकत्वस्य न्याय्यतयोक्तपरिभाषासंचारो निष्फल इत्याशयेनाह। अपवादत्वाच्चेति। ककारादुत्तरस्येति। पूर्वग्रहणाभावे तस्मादिति परिभाषयोत्तरत्वांशोपस्थितेर्दुर्निवारत्वादिति भावः। नचैवं सर्विकेत्यत्रैवोक्तप्रकारेणेत्वापत्तिसत्त्वेन कुटुकेत्येतत्पर्यन्तानुधावनं व्यर्थमिति वाच्यम् । मनोरमायां सर्विकेत्यस्यैव प्रत्युदाहृतत्वेनात्र विशेषाभावसूचनात्। किंच सूतकापुत्रकेति वार्तिके प्रश्लेषेणाकारविधानसामर्थ्येन कादित्यंशे तस्मादिति परिभाषाया अप्रवृत्तिज्ञापनात्पश्चाभ्युपपत्तये कस्य चिद्दिग्वाचकपदस्याध्याहारे प्रसक्ते परस्येति पदस्याध्याहारे सवर्णदीर्घबाधकल्पनं, पूर्वस्येत्यध्याहारे तु नेति सूत्रबाधपरिहारलाघवानुरोधेन सर्विकेत्यादिलक्ष्यविषयकतयोपप्लुते लक्षणे पूर्वस्येत्यस्यैवाध्याहारेण तत्र दोषाभावः। कटुकेत्यादौ तु कात्पूर्वस्यातोऽसंभवेन तद्विषयके लक्षणे पूर्वशब्दाध्याहारस्य कर्तुमशक्यतयाऽगत्या परस्येत्यस्यैवाध्याहारे उक्तरीत्या दोष इति कटुकेत्येतत्पर्यन्तमनुधावतो मूलकारस्याशय उन्नेतुं शक्य इत्यपि बोध्यम् । वस्तुतस्तु प्रत्यये कीत्येव सिद्धे पूर्वग्रहणं सुत्यजम् । कादौ प्रत्यय इति तु नार्थः । न यासयोरिति ज्ञापकात् । एवं चाप्परस्य प्रत्ययस्थककारपरस्य चात इदित्यर्थः। तत्र सामर्थ्यादाप्परत्वांशे ककारव्यवधानं सोढव्यमेवेत्यन्यत्र निरूपितमिति बोध्यम् ॥

वृद्धिः। नरानिति। कै शब्दे इत्यस्य 'आदेच उपदेशे' इत्यात्वे 'आतोऽनुपसर्गे' इति के 'आतो लोप इटि च' इत्यालोपः॥

न यासयोः॥ प्रत्ययस्थादिति प्राप्ते निषेधोऽयम्। यकेति। यत्तदोरकच्, त्यदाद्यत्वे टाप्। सन्निपातपरिभाषाऽस्मादेव निषेधान्निर्देशाच्चानित्येति तद्विरोधात्कथं टाबिति न शङ्क्यम्। त्यकनश्चेति। 'मृदस्तिकन्' इति इत्वभूतनिर्देशेन ज्ञापकेनास्येत्वं वारयितुं शक्यमिति भाष्यकृतः। पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे पञ्चमृत्तिक इत्यस्यानभिधानमिति तदाशयः। अत्र त्यिकनि कर्त्तव्येऽकारोच्चारणादित्वं नेति न वक्तुं शक्यम्। पञ्चोपत्यको ग्राम

---

इत्वभूतनिर्देशेनेति। कण्ठव्यापारमात्रेणाकारोच्चारणे कर्तव्ये कण्ठतालूभयव्यापारेण कृतेऽत्त्वघटितनिर्देशेनेति भावः। यद्यप्यकारोच्चारणे प्रक्रियागौरवमस्ति, तथापि तदपेक्षया व्यापाराधिक्येनोच्चारणेऽधिकं गौरवमिति तदाशयः। ज्ञापकेनेति। तेन ह्यनेकाचो व्यञ्जनादेस्संज्ञाविषयस्य प्रत्ययस्यावयवो यः ककारस्ततः पूर्वस्येत्वं नेत्यर्थो ज्ञाप्यत इति तदाशयं कैयटः। ननु पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे आर्हीये ठकि, अध्यर्धेति लुकि, लुक्तद्धितेति टापो लुकि निमित्ताभावादित्वाप्राप्त्या तत्रेकारश्रवणार्थमित्वघटितनिर्देशस्यावश्यकतया कथं तेन निरुक्तार्थज्ञापकता। न चान्तरङ्गत्वाल्लुकः पूर्वमित्वेन सिद्धिरिति वाच्यम्। अन्तरङ्गानपीति न्यायेन लुक एव पूर्वं प्रवृत्तेरित्यत आह। पञ्चभिरिति। अनभिधानमिति। अत्र चास्माज्ज्ञापकात्त्यकनश्च निषेध इति वार्तिकप्रत्याख्यानपरं प्रकृतसूत्रस्थं भाष्यमेव मानमिति बोध्यम्। प्राचोक्तं वार्तिकप्रत्याख्यानप्रकारं दूषयति। त्यिकनि कर्तव्य इति। प्रक्रियालाघवानुरोधेनेति भावः। नन्वकारोच्चारणेऽपि प्रत्ययलक्षणेन स्थानिवत्त्वेन वा टाप्परत्वमाश्रि-

इत्यादावकारश्रवणानापत्तेः । टापो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न । उभयोरपि 'न लुमता' इत्यनेन निषेधात् । अत एव कतीत्यादौ वार्त्तिकमतेऽपि न गुण इत्यन्यत्र विस्तरः । आशिषि वु । आशिषि विहितस्य वुनोऽस्येत्वं नेत्यर्थः । जीवतादित्यर्थे 'आशिषि च' इति वुन् । देवदत्तशब्दादनुकम्पायां कनि 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दस्य लोपः । देवदत्तिकेत्युपन्यासस्तु दत्तलोपमभिव्यङ्क्तुम् । ध्रुवकेति । ध्रु स्थैर्ये पचाद्यचि कुटादित्वाद् गुणाभावे उवङ्, ततष्टाप्यज्ञाताद्यर्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप् । चटे संज्ञायां क्वुन् । वार्त्तिकोक्ता गणा आकृतिगणाः । तेन कन्यकाध्रुवकाऽलकेष्टकादयः साधवः । उदीचामित्विति । अत्रापि शकुनाविति संबद्ध्यते । तेनान्यत्र नित्यमेवेत्वम् । सूतका पुत्रि । पुत्रकेत्यकारसहितः पाठोऽपपाठः, कैयटाद्यसंमतेः । सूतशब्दात् स्वार्थे कन् । वृन्दशब्दात् 'शृङ्गवृन्दाभ्यामारकन्' इति मत्वर्थीय आरकन् । वृन्दारकशब्दो मुख्यवाची त्रिलिङ्ग इति भावः । ङीन इति । शार्ङ्गरवादित्वाज्जातस्येति भावः । अन्यत्र—सूतकादौ ॥

उदीचाम् । यकपूर्वत्वञ्चाव्यवहितमेव । एवं 'प्रत्ययस्थात्'

---

स्येत्वप्राप्त्या कथमकारश्रवणमत आह । टापो लुकीति । अत एवेति । स्थानिवत्त्वप्रत्ययलक्षणयोरुभयोरपि निषेधादेवेत्यर्थः । न गुण इति । अन्यथा वार्तिकमते न लुमतेति निषेधात्प्रत्ययलक्षणाप्रवृत्तावपि स्थानिवत्त्वेन जस्परत्वमाश्रित्य जसि चेति गुणापत्तिरिति भावः । ननु वृन्दारका दैवतानीति कोशाद्वृन्दारकशब्दस्य नित्यपुंलिङ्गतया टापोऽभावेन कथं तस्यैतदुदाहरणत्वमत आह । वृन्दारकशब्द इति ॥

इति सूत्रे कात्पूर्वत्वमपि। 'उदात्तस्वरितयोः' इत्यादाविवानुवादेऽपि निर्दिष्टपरिभाषाप्रवृत्तेः। तेन कुशाराशब्दात्के ह्रस्वे इत्वविकल्पो न। नेत्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह—इद्वेति। आतः किमिति। 'उदीचां यकपूर्वायाः' इत्येवास्तु। य—क—पूर्वस्त्रीबोधकाकारस्येत्यर्थः। सांकाश्यके च नातिप्रसङ्गः। प्रत्ययावयवत्वेनाकारस्य स्त्रीबोधकत्वाभावादिति प्रश्नः। 'बहुलक्ष्यसंस्कारानुरोधादवयवषष्ठ्येव स्यात्। न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवात्र ग्रहणम्। विशिष्य तदनुपादानात्' इत्युत्तरम्। स्त्रीप्रत्ययस्य किमिति। यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः। धात्वन्तेति। धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थः। इत्वमिति शेषः॥

भस्त्रैषा। अयमपि निषेधविकल्प इत्याह—अत इति। अत्राप्यातः स्थान इत्यनुवर्त्तते। तदन्तेति। 'येन विधिः' इति सूत्रे 'त्यदादि-

---

निर्दिष्टपरिभाषेति। उत्तरांशविकलतस्मादिति परिभाषाप्रवृत्तेरित्यर्थः। स्त्रीबोधकत्वाभावादिति। सङ्काशशब्दाद्वुञ्छणित्यादिना चातुरर्थिके ण्यप्रत्यये ततो भवार्थे धन्वयोपधाद्वुञिति वुञि, अकादेशे तस्य स्त्रीबोधकत्वेऽपि तदवयवस्याकारस्य न तद्बोधकत्वमिति भावः। अवयवषष्ठ्येवेति। यकपूर्वाया इत्येतदिति भावः। एवं च यकपूर्वस्य स्त्रीबोधकावयवस्याकारस्येत्वमित्यर्थ इति साङ्काश्यकेत्यत्रेत्वापत्तिरित्याशयः। ननु सूत्रे स्त्रीप्रत्ययस्येति पदाभावात्स्त्रीप्रत्ययस्य किमिति प्रश्नोऽसङ्गत इत्याशङ्क्य तदाशयमाह। स्त्रीलिङ्गनिर्देश इति। यकपूर्वाया इति स्त्रीलिङ्गनिर्देशमहिम्नैव तदर्थलाभात्तद्विषयक एव प्रश्न इति भावः॥

विधिभक्त्यादिग्रहणञ्च प्रयोजनम्' इति भाष्यात्। अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः। अत्र नञ्पूर्वाणामपीति स्पष्टार्थम्। 'पदाङ्गाधिकारे तस्य च' इति सिद्धेः। उपसर्जनार्थमिति। एवञ्चानुपसर्जने 'आदाचार्याणाम्' इत्यात्वं भवत्येव, उपसर्जनेऽस्य चारितार्थ्येन बाधे मानाभावात्। अन्यस्य—अनुपसर्जनस्य। उत्तरसूत्रम्—'अभाषितपुंस्काच्च' इति। अन्तर्वर्त्तिनीमिति। न एतद् सु इति स्थिते अकचि कृते अकृते वा नञा तत्पुरुषे 'अन्तरङ्गानपि' इति न्यायेन त्यदाद्यत्वात्प्राक् सुपो लुकि ततोऽकचि वा पुनर्विशिष्टात्सुपि त्यदाद्यत्वे टापि समासात्पूर्वोत्पन्नसुपः पर एव टाबिति भावः। बहुव्रीहौ तु प्रियैतत्का प्रियैतकत्का वा, कबभावे प्रियैतकदित्येव। सर्वथा नेत्वप्राप्तिः। अनेषकेति। अज्ञाता एषा एषका, न एषकेति विग्रहः। पूर्वं नञ्समासे अज्ञाता अनेषेति। असम्भवादिति। 'एषाद्वा' इति निर्देशात्संज्ञोपसर्जनयोरप्राप्तेरिति भावः। अकजर्ह इति। एवञ्च तदकारस्याऽतःस्थानिकत्वाभाव इति भावः। अर्थान्तरे त्विति। आत्मज्ञातिधनेष्वित्यर्थः। स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने इति कोशादिति भावः। कप्रत्ययान्तत्वादिति। तत्र च नान्तर्वर्त्तिविभक्त्या सुपः परत्वं, केन

---

भाष्यादिति। एतेनात्र तदन्तविधिर्भाष्यसम्मत इति सूचितम्। उक्तभाष्येण सह फलैक्यायाह। अपिनेति। अकचि कृत इति। अवयवगतकुत्साविवक्षायामिति भावः। तदविवक्षायामाह। अकृत इति। ततोऽकचीति। समुदायकुत्साविवक्षायामिति भावः। अप्राप्तेरिति। इत्वस्याप्राप्तेरित्यर्थः। अनुपसर्जने त्वकच्यातस्थानिकाकारासंभव इति भावः। ननु संज्ञाभूतस्यैतत्सूत्रोदाहरणत्वमयुक्तम्। उत्तरसूत्रेण तत्रेत्वसिद्धेरित्यत आह।

व्यवधानादिति भावः। 'संज्ञापूरण्योश्च' इति निषेधेन संज्ञाया अपि भाषितपुंस्कत्वबोधनेन संज्ञाभूते न 'अभाषितपुंस्काच्च' इत्यनेन सिद्धिः। आत्मीयत्वपुरस्कारेणैव संज्ञाकरणादिति बोद्धव्यम्। नित्यमेवेति। तत्र ह्यकचि कृते आतःस्थानिकत्वाभाव इति भावः। एवमत्यन्तस्वार्थिककान्तेऽपि नित्यमेवेत्वम्। अकचोऽत्यन्तस्वार्थिकापवादत्वाभावात्। निःस्वकेति। स्वस्या निष्क्रान्तेति विग्रहः। उपसर्जनह्रस्वः, टाप्, अज्ञातादौ कः। अभाषित। 'स्त्रीविषयाच्च' इति नोक्तम्। स्त्रीनपुंसकदामशब्दाद्धापि अज्ञाता दामा दामिका दामाका दामकेत्यसिद्ध्यापत्तेः। विहितस्येति व्याख्याने फलमाह—बहुव्रीहेरिति। अविद्यमाना खट्वा यस्या इति विग्रहे पाक्षिककबभावे 'गोस्त्रियोः' इत्युपसर्जनह्रस्वेऽखट्वशब्दादापि सुप्यज्ञातादौ के सुब्लुकि 'केऽणः' इति ह्रस्वे पुनष्टाप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनैतद्विकल्पाप्राप्तावुत्सर्गेण नित्यमेवेत्वं, परविशेषणत्वे तु तादृशाखट्वशब्दात्परत्वेन दोषः स्यादेवेति भावः। शैषिके कपीति। न खट्वा सु इत्यवस्थायां कपि सुब्लुकि

---

संज्ञापूरण्योरिति। भाषितपुंस्कत्वेति। अन्यथा पुंवद्भावाप्राप्त्या निषेधासङ्गतिरिति भावः। संज्ञाभूतस्यापि भाषितपुंस्कत्वे युक्तिमाह। आत्मीयत्वेति। कान्तेऽपीति। तेषामन्तरङ्गत्वात्स्त्रीप्रत्ययात्प्रागेवोत्पत्तेरातस्थानिकाकाराभावादिति भावः। नन्वकचः कबाधकतया कथं सर्वनाम्नस्तदुत्पत्तिरत आह। अकच्च इति। पदलाघवमूलिकामाशङ्कां निरस्यति। स्त्रीविषयाच्चेति। तादृशेति। अभाषितपुंस्केत्यर्थः। इत्यवस्थायामिति। समासान्ता इत्यत्र समासशब्दस्य समासार्थालौकिकविग्रहवाक्यपरत्वेन समासात्प्रागेव कपः प्रवृत्तिरिति भावः। सुब्लुकीति। विशिष्टस्य तद्धितान्तत्वेन प्रातिपदिकत्वादिति भावः॥

प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां 'समासान्ताः' इति शास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तान्तसमासरूपप्रातिपदिकाभावाद् 'गोस्त्रियोः' इति ह्रस्वाभावे 'केऽणः' इति ह्रस्वे 'न कपि' इति निषिद्धे 'आपोऽन्यतरस्याम्' इति ह्रस्वे कपः प्राग्वर्त्तिनः खट्वशब्दात्परस्यापोऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः, ह्रस्वाभावे तु 'अखट्वाका' इति भावः ॥

अयमेवेति । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानामनभिधानमेव स्त्रियाम्, एतद्भाष्यप्रामाण्यात् । .... .... ....

---

नन्वनडुह्शब्दादाचारक्विबन्तात्कर्तृक्विपि गौरादिलक्षणङीष्वारणायानुपसर्जनाधिकारस्यावश्यकतया कथं तदन्तविधिज्ञापकता । न च हलन्तेभ्य आचारक्विपोऽनभिधानान्न तत्र चारितार्थ्यमिति वाच्यम् । एवमपि सख्यशिश्विशब्दाभ्यामाचारक्विबन्ताभ्यां कर्तृक्विपि सख्यशिश्वीति भाषायामिति ङीष्वारणाय तदावश्यकत्वात् । एवमलाबूशब्दादाचारक्विबन्तात्कर्तृक्विप्यप्राणिजातेश्चारज्वादीनामुपसंख्यानमित्यूङ्वारणाय, बहुशब्दादाचारक्विबन्तात्कर्तृक्विपि बह्वादिभ्यश्चेति ङीष्वारणाय च तदावश्यकत्वाच्चेत्यत आह । आचारक्विबन्तेति । एतद्भाष्येति । अस्य सूत्रस्य तदन्तविधिज्ञापकत्वप्रतिपादनपरप्रकृतसूत्रस्थभाष्येत्यर्थः । यत्त्वनभिधानवादी शेखरोऽयं चिन्त्य एव । 'द्वीयतेरप्रत्यये द्व इति प्राप्नोति, स्व इति चेष्यत' इति तदोस्सस्साविति सूत्रस्थभाष्यप्रामाण्येनाचारक्विबन्तात्कर्तरि क्विप्युपसर्जनत्वस्याभावादित्यौत्तराहास्तन्न । "पूर्वसूत्रनिर्देशो वा पुनरयं द्रष्टव्यः । पूर्वसूत्रेऽप्रधानस्योपसर्जनमिति संज्ञा क्रियते । यावद्ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति तावदनुपसर्जनादिती"ति प्रकृतसूत्रस्थभाष्येणेतरविशेषणत्वेनार्थोपस्थापकत्वरूपलौकिकोपसर्जनत्वस्यैवात्र

**पञ्च स्त्रीगोव्यक्तयो धनं यस्य स पञ्चगवधन इत्यत्रार्थवत्सूत्रोक्तार्थवत्त्वाभावाट्टजन्तस्य प्रातिपदिकत्वाभावेन न ङीप्। आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणीत्यत्र तु न ङीप्। प्रोक्ताणः स्त्रियामवर्त्तनात्। अध्येत्रणतु लुप्तः। अण् योऽकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात्। अद्ध्येत्रर्थगतस्त्रीत्वमादाय तदण्णिमित्तकस्य न प्राप्तिः। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात्तदण एतत्स्त्रीत्वे-**

---

ग्रहणलाभात्तस्य चाचारक्विबन्तप्रकृतिककर्तृक्विबन्तेऽपि सत्त्वेन तदनभिधानस्यावश्यकत्वात्। भाष्ये पूर्वसूत्रशब्देन पूर्वाचार्याणां व्याकरणमुच्यत इति कैयटः। तदोस्सस्साविति सूत्रस्थं भाष्यन्तु तत्सूत्रनञ्सूत्रादिस्थानेकभाष्यविरोधादेकदेश्युक्तिरिति सर्वादिप्रकरणे निरूपितमिति बोध्यम्। ननु पञ्चगवधन इत्यत्र टजन्तस्य द्विगोरिति टिड्ढेति वा प्राप्तङीब्वारणाय तदावश्यकम्। टित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्तावपि वक्ष्यमाणरीत्यावयवे टित्त्वस्याचारितार्थ्येन समुदायोपकारकत्वावश्यंभावादित्यत आह। **पञ्चेति।** नन्वापिशलिशब्दात्प्रोक्तार्थेऽणि ततोऽध्येत्रणि तस्य प्रोक्ताल्लुगिति लुक्यापिशला ब्राह्मणीत्यत्राणन्तत्वप्रयुक्तङीब्वारणायानुपसर्जनाधिकारस्यावश्यकतया कथं ज्ञापकतेत्याशङ्क्य तत्रापि तदनावश्यकतां दर्शयति। **आपिशलिनेत्यादिना।** नन्वत्र प्रोक्ताणमादाय ङीबापादनमुताध्येत्रणमादाय? नाद्य इत्याह। **प्रोक्ताण इति।** नान्त्य इत्याह। **अध्येत्रिति।** ननु प्रत्ययलक्षणेन सोऽत आह। **अण्योऽकार इति।** ननु प्रोक्ताणः स्त्रियामवर्तनेऽप्यध्येत्रर्थगतस्त्रीत्वमादायप्रोक्ताणन्तात्कुतो न ङीबित्यत आह। **अध्येत्रर्थगतेति। तदण्णिमित्तकस्येति।** प्रोक्ताण्णिमित्तकस्य ङीप इत्यर्थः। **गृह्यमाणेति।** श्रुतत्वादिति भावः। **तदणः = प्रोक्ताणः। एतत्स्त्रीत्वे = अध्येत्रर्थगतस्त्रीत्वे।**

ऽवर्त्तनात् । अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यत्रापि न ङीप् । प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप् । लक्ष्ये लक्षणस्येति न्यायात् । तस्माद् बहुकुरुचरेत्येव तद्व्यावर्त्यम् । तत्र च तदन्तविधिं विना प्राप्तिरेव न । ज्ञापिते तु तदन्तविधौ प्राधान्यादेतदारम्भाच्च स्त्रियामिति ङीप्प्रकृतिविशेषणमेव । अत एव धीवानमतिक्रान्ता 'अतिधीवरी' इति

---

अत एवेति । वर्णाश्रये प्रत्ययलक्षणाभावादेव, स्त्रियामित्यस्य गृह्यमाणविशेषणत्वादेवेति चार्थः । काशकृत्स्नेति । काशकृत्स्निशब्दात्प्रोक्तार्थेऽणि ततो ङीपि ततोऽध्येत्रणि तस्य प्रोक्ताल्लुगिति लुकि, लुक्तद्धितलुकीति स्त्रीप्रत्ययलुकि ततोऽध्येत्रर्थगतस्त्रीत्वमादाय टापि रूपम् । बहुकुरुचरेति । बहवः कुरुचरा यस्यां नगर्यामिति बहुव्रीहिः । बहूनां कुरूणां समाहारो बहुकुरु, तत्र चरतीत्यर्थे तु ङीब्भवत्येवेति बोध्यम् । प्राप्तिरेव नेति । तदन्तविध्यभावे स्त्रियां वर्तमानं टिद्यत्प्रातिपदिकं ततो ङीबित्येवार्थलाभाट्टित्त्वस्यावयवेऽचारितार्थ्येन समुदायोपकारकत्वाच्चरेत्यस्य कुरुचरेत्यस्य वा टित्त्वेऽपि तस्य स्त्रियामवर्तनान्ङीपोऽप्राप्तिरिति भावः । न चावयवटित्त्वद्वारेण समुदायस्यापि टित्त्वे बहुकुरुचरेत्यस्यापि टित्त्वात्सिद्धान्तेऽप्यत्र ङीप् दुर्वार एवेति वाच्यम् । तत्र यं समुदायं योऽवयवो न व्यभिचरति तदवयवस्य तादृशसमुदायोपकारकत्वेऽप्यन्योपकारकत्वे मानाभावात् । ननु स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात्तस्य च स्त्रियामवर्तनादेवोक्तस्थले ङीपोऽप्राप्त्या ज्ञापनोत्तरमपि व्यावर्त्यालाभोऽत आह । ज्ञापिते त्विति । प्राधान्यादिति । साक्षाद्विध्युद्देश्यत्वेनोपात्तनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वेन वा तस्य तत्त्वमिति भावः । न्यायसिद्ध एवार्थे मानमाह । एतदिति । अनुपसर्जनादित्यस्येत्यर्थः । नन्वेवमापिशला ब्राह्मणीत्यत्र ङीप्प्रकृतेः स्त्रियां वर्तमानत्वान्ङीब्दुर्वारोऽत आह ।

सिद्धम् । एवञ्चापिशलेत्याद्यण्ग्रस्यैव व्यावर्त्यम् । अनुपसर्जनादिति च सामर्थ्याद् गृह्यमाणविशेषणमेवेति भावः । तदन्तविधिमिति । अण्णन्तादेः प्रातिपदिकविशेषणत्वेनाणन्तान्त इत्येवंरूपमित्यर्थः । अन्यथा प्रत्ययविधौ प्रतिषेधात्स दुर्लभः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः । प्रातिपदिकादित्यनेन सह्वानन्वयापत्तेः । तत्फलं कौम्भकारेयसिद्धिः । अन्यथा कुम्भकारेय इत्यापद्येत । कुम्भेन समासे ङीपि कुम्भविशिष्टस्या-

---

एवं चेति । बहुकुरुचरेत्याद्यर्थमस्यावश्यकत्वे चेत्यर्थः । अस्यैवेति । अनुपसर्जनादित्यस्यैवेत्यर्थः । अध्येत्रणो लुप्तत्वात्प्रोक्ताण उपसर्जनत्वाच्चेति भावः । नन्वनुपसर्जनादित्यस्याप्युक्तदिशा ङीप्प्रत्ययप्रकृतिविशेषणत्वेऽणो योऽकारस्तदन्तादनुपसर्जनादित्यर्थलाभात्कथमस्य तद्व्यावर्त्यत्वमत आह । अनुपसर्जनादिति चेति । चस्त्वर्थे । गृह्यमाणेति । अन्यथा ज्ञापनोत्तरमपि स्वांशे चारितार्थ्याभावात्तद्वैयर्थ्यं स्पष्टमेवेति भावः । अन्यथेति । अस्य ज्ञापकत्वाभाव इत्यर्थः । नन्वाद्यतदन्तविधेरपि प्रत्ययविधौ प्रतिषेधात्सोऽपि ज्ञाप्योऽत आह । प्रत्ययग्रहणेति । नायं निषेधः=समासप्रत्ययविधाविति निषेधः । तत्फलमिति । तदन्तविधिज्ञापनफलमित्यर्थः । कौम्भकारेयसिद्धिरिति । तन्मात्रसिद्धिरित्यर्थः । इत्यापद्येतेति । इत्यप्यापद्येतेत्यर्थः । प्रत्ययग्रहणपरिभाषया कारशब्दस्यैवाणन्तत्वात्ततो ङीप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन विशिष्टस्यापि स्त्रीप्रत्ययान्तत्वात्ततो ढकीष्टसिद्धावपि कारीत्यस्यापि स्त्रीप्रत्ययान्ततया कदाचित्ततोऽपि ढकि तन्निरूपिताङ्गत्वस्य विशिष्टेऽभावेन ककारोकारस्य वृद्ध्यभावे कुम्भकारेय इत्यनिष्टमपि स्यादिति भावः । ननु कारीत्यस्य स्त्रीप्रत्ययान्तत्वेऽपि तस्यासुबन्तत्वात्तदर्थस्यापत्येनानन्वयाद्वाक्यबाद्ढकोऽप्राप्त्या कथमिदं फलमत आह । कुम्भे-

पत्येन योगे कार्यर्थे तदयोगस्य वक्तुमशक्यत्वात् कदाचित्ततोऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः । निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यम् । 'तद्धितार्थे' इत्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या न तया विशिष्टादेव

---

नेत्यादि । तदयोगस्येति । अपत्यासंबन्धस्येत्यर्थः । वक्तुमशक्यत्वादिति । विशिष्टसंबन्ध्यपत्ये विशेष्यसंबन्धस्याव्याहतत्वादिति भावः । सुबन्तत्वं तु न तत्र शब्दतो निमित्तत्वेनाश्रितम् । प्रातिपदिकादित्यनेनानन्वयापत्तेः । किन्तु स्वार्थे परिपूर्णं पदमिति न्यायात्सुपा व्यवहितस्सन् भवतीत्यर्थस्यैव लाभेन तदन्तविध्यभावे केवलकारशिब्दाड्ढगापत्तिः सुस्थैवेति बोध्यम् । ननु निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येन तदभावान्न कारीशब्दात्कदापि ढक्प्रसङ्गोऽत आह । निष्कृष्यैकार्थीभाव इति । ययोर्वृत्तिस्तन्मात्रवृत्त्येकार्थीभाव इत्यर्थः । समासविधानादिति । अन्यथा तुल्ययुक्त्या समासेऽपि तथात्वापत्तावुत्तरपदे परतः समासविधानमनुपपन्नं स्यात् । तत्रावयवेषु पृथगेकार्थीभावस्यानङ्गीकारादिति भावः । ननु कृद्ग्रहणपरिभाषया विशिष्टस्यैवाणन्तत्वाद्विशिष्टादेव ङीपि न पाक्षिकातिप्रसङ्गोऽपीत्यत आह । कृद्ग्रहणपरिभाषाया इति । अणस्तद्धितस्यापि सत्त्वेन नेदं कृन्मात्रग्रहणमिति भावः । ननु केवलकारशब्दस्य सूत्रद्वयसाधारणपारिष्कृतार्थवत्त्वाभावेनाप्रातिपदिकत्वात्ततो ङीबभावे पाक्षिकानिष्टस्याप्यभावेन कथमस्य तदन्तविधिज्ञापनफलत्वमिति चेन्न । यावता विनानुपपत्तिरिति न्यायेन तादृशार्थवत्त्वस्याप्यनेनैव ज्ञापयिष्यमाणतयास्यामवस्थायां तस्यासिद्धत्वेनैकार्थीभावेन लौकिके प्रयोगे प्रसिद्धस्वरूपमनोरमोक्तार्थवत्त्वस्यैव कृत्तद्धितेति सूत्रे स्वीकार्यतया तस्य चाणन्तेऽपि सत्त्वेन तत्फलस्य सुवचत्वात् । वृत्तिद्वयस्य

भिन्नत्वेन तद्धेतुभूतैकार्थीभावस्यापि भिन्नत्वादणन्ते तादृशमर्थवत्त्वमस्त्येव। पञ्चगवधन इत्यादौ पूर्वं त्रयाणां बहुव्रीहौ व्यापकेन तदेकार्थीभावेनावयवकार्ये सिद्धे पृथक्तदनङ्गीकारेऽप्यत्र पूर्वं कृद्वृत्तौ प्रकृतिप्रत्ययमात्रवृत्त्येकार्थीभावेन व्याप्येन समासासिद्ध्या समुदायपर्याप्तस्यातिरिक्तस्य तस्यावश्यकत्वात्। अत एव 'इदं तर्हि प्रयोजनं' प्रधानेन तदन्तविधिर्यथा स्यात्। कुम्भकारी, नगरकारीत्यतोऽग्रिमं तदुपपादनपरम् 'अत्र हि प्रत्ययग्रहणे यस्मात्स तदादेरिति तदादिनियमादवयवादुत्पत्तिः प्राप्नोति, अवयवादुत्पत्तौ सत्यां को दोषः? कौम्भकारेयो न सिद्ध्यति। अवयवस्य वृद्धिस्वरौ स्यातामिति प्रकृतसूत्रस्थं भाष्यं संगच्छते। अन्यथावयवस्यानर्थकत्वेन ततो ङीपोऽप्राप्त्या तदसङ्गतिः स्पष्टैव। तेन च निरुक्तमेवार्थवत्त्वमिदानीं ग्राह्यमिति स्फुटं प्रतीयते। स्पष्टं चैतद्भावप्रकाश इत्यवधेयम्॥

यत्तु केचित्समासे च कृतेऽवयवादुत्पत्तिः प्राप्नोति, अवयवादुत्पत्तौ सत्यां को दोषः? कौम्भकारेयो न सिद्ध्यति। अवयवस्य वृद्धिस्वरौ स्यातामिति प्रकृतसूत्रस्थैकदेशिभाष्यानुरोधेनायं ग्रन्थः। अत एवावयवादुत्पत्तिः प्राप्नोतीति भाष्यव्याख्यावसरे कृत्तद्धितसमासाश्चेत्यत्र कृद्ग्रहणपरिभाषोपस्थित्या कुम्भकारशब्दस्य प्रातिपदिकत्वात्तत एव ङीब्भविष्यतीति कैयटेन शङ्किते, तत एव स्यादिति कैयटप्रतीकमुपादाय 'वस्तुतोऽवयवस्याप्रातिपदिकत्वात्समुदायस्य चानणन्तत्वान्ङीपोऽप्राप्तिरेवेति शङ्कितुमुचितमित्युद्योतोक्तिः संगच्छते। एवं च कुम्भकारीत्यादौ ङीप्सिद्धिरेव मुख्यं तदन्तविधेः प्रयोजनम्। अत एव 'इदं तर्हि प्रयोजनं, प्रधानेन तदन्तविधिर्यथा स्यात्। कुम्भकारी नगरकारीति भाष्यं संगच्छत इत्याहुः। तन्न। एतदुपपादनपरस्य 'अत्र हि समासे कृतेऽवयवादुत्पत्तिः प्राप्नोती' त्यग्रिमभाष्यस्योक्तरीत्या सामञ्जस्ये एकदेश्युक्तित्वकल्पनाया अयुक्तत्वात्। प्रागुक्तोद्योतग्रन्थोऽपि कृत्तद्धितेति सूत्रे कृद्ग्रहणपरिभाषां

ङीबुत्पत्तिं प्रत्याशा । न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाणन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि कुम्भकारेयो दुर्वारः । किं च समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि स दुर्वार इति वाच्यम् । एतदधिकारादेव ज्ञापकादसहाय एव व्यपदेशिवद्भावप्रवृत्तेः । अर्थवत्सूत्रोक्तार्थ-

---

संचारयता त्वया गतिकारकसमभिव्याहारे केवलस्य कृदन्तत्वाभावेन कारेत्यस्याप्रातिपदिकत्वात्समुदायस्य चानणन्तत्वान्ङीपोऽप्राप्तिरेवेति शङ्कितुमुचितमित्येवमाशयक एव, न तु कारेत्यस्यार्थवत्त्वाभावेन प्रातिपदिकत्वाभावप्रतिपादनपरः । अवयवादुत्पत्तिः प्राप्नोतीति भाष्येण तस्याप्यर्थवत्त्वप्रतीतेरिति न तद्ग्रन्थोऽपि त्वदुक्तार्थसाधक इत्यवधेयम् ॥

अनुपसर्जनाधिकारज्ञाप्यमन्यमप्यर्थं विशदयितुं शङ्कते । नचेत्यादिना । तत्राद्यशङ्कां समाधत्ते । असहाय एवेति । अत्रैतदधिकारादेव ज्ञापकादित्यस्य हेतुत्रयेऽन्वयः । अत एव सर्वान्तेऽन्यथेत्युक्तिः संगच्छते । ससहायेऽपि व्यपदेशिवद्भावप्रवृत्तिमभ्युपेत्याह । अर्थवत्त्वाभावेनेति । एतदधिकारादेव ज्ञापकात्सूत्रद्वयेऽपि, चिकीर्षितप्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययेतरप्रत्ययानपेक्षया लोकेऽर्थविषयकबोधजनकत्वरूपार्थवत्त्वस्यैव ग्रहणात्तादृशार्थवत्त्वाभावेनेत्यर्थः । कुम्भकार इत्यत्र कारशब्दस्य चिकीर्षितप्रातिपदिकसंज्ञाप्रयोज्यप्रत्ययेतरसमुदायोत्तरजायमानसुबपेक्षयैव बोधकत्वं, न तदपेक्षयेति न निरुक्तार्थवत्त्वमिति भावः । नचैवं तन्निभ इत्यादौ निभादीनामपि समुदायोत्तरजायमानसुबपेक्षयैव लोकेऽर्थबोधकत्वादर्थवत्त्वानापत्तिरिति वाच्यम् । तत्र सुबन्तेनैव समासात्समाससंज्ञाप्रयोज्यप्रातिपदिकत्वनिमित्तकसमुदायोत्तरजायमानस्य सुपः परम्परया निभशब्दनिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वेन तादृशप्रत्ययेतरप्रत्ययत्वाभावात्तदपेक्षयाऽर्थबोधकत्वेऽपि तेषामर्थवत्त्वस्य सुवचत्वात् । अत्र तु कृदन्तेन समासात्समु-

**वत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्च। तदादिनियमाभावेनाधिकस्य कार्यं बोद्ध्यते, न तु न्यूनस्येत्यदोषाच्च। अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव। एतदेवाभिप्रेत्यात्र भाष्ये उक्तं 'समासे च कृतेऽवयवादुत्पत्तावक्यवस्य वृद्धिः स्यात्' इति। 'येन विधिः' इति सूत्रे च प्रत्ययग्रहणे तदादितदन्तविधेः प्रयोजनं**

---

दायोत्तरजायमानस्य सुपो न कथंचिदपि कारशब्दनिष्ठप्रातिपदिकसंज्ञाप्रयोज्यत्वमिति नात्राणन्तस्य पारिष्कृतमर्थवत्त्वमित्यनयोर्भेद इत्यवधेयम्। नच कारेत्यस्यार्थवत्त्वाभावादप्रातिपदिकत्वे गतिकारकेत्यत्रोपपदग्रहणानर्थक्यापत्तिः। तत्र कृदन्तात्सुप एवानुत्पत्तेरिति वाच्यम्। तत्रोपपदग्रहणाभावे सुबन्तेनैव समासस्य वक्तव्यतया तदा तन्निभ इत्यादौ निभादेरिव कारेत्यस्याप्यर्थवत्त्वेन सुबुत्पत्तौ सुबन्तेन समासः स्यादिति तद्वारणाय तदावश्यकत्वात्। सति तु तस्मिन्नर्थवत्त्वं नास्तीत्यन्यदेतत्। एतेन 'इदमेतत्संज्ञाफलभूतेत्यस्य यथाश्रुतार्थाभिप्रायेण। एतत्संज्ञाफलभूतविभक्तिभिन्नस्योपपदस्यापेक्षासत्त्वेऽपि न पूर्वोक्तरीत्यानुपपत्तिरित्यत आह। तदादिनियमाभावेनेतीत्यवतारयन्तो मिश्राः परास्ताः। द्वितीयशङ्कां समाधत्ते। **तदादिनियमाभावेनेति। न तु न्यूनस्येति।** प्रत्ययग्रहण इति नियमेनाधिकस्यैव व्यावृत्तिर्न तु न्यूनस्य। अत एवास्यापत्यं युवेत्यर्थेऽशब्दादिञि यस्येति लोपे इञन्तत्वात्फक्सिद्धिः। इयदेवेयन्मात्रमित्यादौ वत्वन्तात्स्वार्थे मात्रजादिसिद्धिः। एवं च तन्निषेधेन तद्व्यावर्त्यस्यैव संग्रहो न्याय्यो, न त्वतद्व्यावर्त्यस्य न्यूनस्य। अत्र चेदमपि सूत्रं मानमिति भावः। यदुक्तं निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यमिति, तत्र मानं दर्शयति। **एतदेवाभिप्रेत्येति।** समुदायेनैकार्थीभावेऽवयवेनापि तस्य सत्त्वमस्त्येव। निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमित्यत्र न मानमित्येतदभिप्रेत्येत्यर्थः। तत्रैव मानान्तरमाह। **येन विधिरितीति। उक्तन्यायादिति।**

गार्ग्यायणः परमगार्ग्यायण इत्युक्तं भाष्ये । तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गार्ग्यायण इति तदर्थो वाच्यः । तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात् । मम तु परमगार्ग्यस्यापत्यमित्यर्थेऽप्युक्तन्यायाद् गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्, तथा सति 'पारमगार्ग्यायण इति स्यात्' इति तत्प्रयोजनत्वोक्तिसङ्गतिः । कैयटोऽपि 'तदादिनियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायण इत्युपन्यासः' इत्युक्तवान् । यत्तु सर्वादिसूत्रे भाष्ये 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इत्युक्तं, तत्त्वत्र वार्त्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति भाष्यप्रदीपोद्द्योते विस्तरः ॥

---

प्रत्ययग्रहणे यस्मादिति न्यायादित्यर्थः । कैयटोक्तमपि स्वमत एव सङ्गतं, नान्यत्रेत्याह । कैयटोऽपीति । अनुपसर्जनादित्यस्य तदन्तविधिज्ञापकतया सार्थक्यप्रतिपादनपरप्रकृतसूत्रस्थभाष्यस्य सर्वादिसूत्रस्थभाष्यविरोधं परिहरति । यत्त्विति । अत्र=अनुपसर्जनादिति सूत्रे । तस्येति । अनुपसर्जनादित्यस्येत्यर्थः । तदभिप्रायकमिति । वार्तिकमताभिप्रायकमित्यर्थः ॥

अयमत्र प्राचीनानामाशयः । अनुपसर्जनादित्येष योगः प्रत्याख्यायत इति सर्वादिसूत्रस्थं भाष्यमेव सिद्धान्त्युक्तिः । प्रकृतसूत्रस्थं भाष्यं त्वेकदेश्युक्तिः । नच तदन्तविधिज्ञापनार्थमिदमावश्यकम् । अत एव कौम्भकारेयसिद्धिरिति वाच्यम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन कारशब्दान्ङीप्यपि कुम्भकारीशब्दात्स्त्रीभ्यो ढगिति ढकीष्टसिद्धेः । नच कदाचित्कारीशब्दादपि ढगापत्तिरिति वाच्यम् । कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येनान्वयाभावेनादोषात् । नन्वेवं कुम्भकारीत्यत्र ङीबेव न स्यात् । कुम्भेनैकार्थीभूतस्याणन्तस्य केवलस्य स्त्रीत्वेनायोगात् । यस्य च विशिष्टस्य स्त्रीत्वेन योगो न तदणन्तमिति चेन्न ।

अमहत्पूर्वग्रहणेन तदन्तविधिज्ञापनेनादोषात्। नचैवं बहुकुरुचरेत्यादावतिप्रसङ्गवारणायायं निषेधोऽपि सार्थक इति वाच्यम्। टिड्ढाणञित्यादावुपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनोक्तदोषवारणसंभवात्। पूर्वत्रोपात्तं तदन्तं च स्त्रीत्वेन विशेष्यते। उत्तरत्र चोपात्तमेवेत्यत्र व्याख्यानमेव शरणमिति ॥

उपाध्यायास्तु सर्वादिसूत्रस्थस्य प्रत्याख्यायत इत्यस्य वार्तिककृतेति शेषः। प्रकृतसूत्रे'ऽनुपसर्जनग्रहणमनर्थकं, प्रातिपदिकेन तदन्तविधिप्रतिषेधा'दिति वार्तिककृतास्य सूत्रस्य प्रत्याख्यानात्। उक्तवार्तिकस्य अनुपसर्जनादिति किमर्थं, बहुकुरुचरा। नैतदस्ति प्रयोजनं, कुरुचरशब्दात्प्रत्ययो विधीयते। तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्दात्स्यात्। नैव प्राप्नोति, नार्थः प्रतिषेधेन। तदन्तविधिना प्राप्नोति, अत उत्तरं पठति। 'अनुपसर्जनग्रहणमनर्थक'मिति तत्र भाष्यकृदुक्तावतरणे पठतीति प्रथमपुरुषस्वारस्येन सर्वादिसूत्रे 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते, तमेवमभिसंभन्त्स्याम' इत्युत्तमपुरुषस्वारस्येन च प्रत्याख्यानस्य वार्तिककृत्सिद्धान्तत्वप्रतीतेः। वार्तिककारीयसंज्ञोपसर्जनप्रतिषेधप्रत्याख्यानाय हि सर्वादिसूत्रे तदुक्तम्। त्वत्प्रत्याख्यातसूत्रेणैवात्रोपसर्जनप्रतिषेधव्याख्यानसंभवादत्र तदर्थमिति तदाशयः। यत्तु अनुपसर्जनग्रहणमनर्थकमित्याद्यनुपसर्जनाधिकारप्रत्याख्यानपरवार्त्तिकोत्तरं 'ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य, अतिधीवरी, पूर्वसूत्रनिर्देशो वा, आपिशला ब्राह्मणी'ति तत्सार्थक्यप्रदर्शनपरं वचनद्वयं, तत्त्वाचार्यदेशीयस्य। तत्राद्यस्य पूर्वत्र तदन्ताप्रतिषेधेऽप्युत्तरत्र तदन्तविध्यभावेन बहुकुरुचरेत्यादौ ङीपोऽप्राप्त्यास्य सार्थक्यानुपपादनात्तदुक्तित्वं स्पष्टमेव। अन्त्यं तु स्त्रियामित्यस्याण्विशेषणत्वात्स्त्रियां योऽण्विहित इत्यादिना भाष्य एव दूषितम्। एवं च प्रत्याख्यानपरस्याद्यवार्तिकस्यैव वार्तिककृत्सिद्धान्तत्वं स्फुटं प्रतीयते। इदं तर्हि प्रयोजनं, प्रधानेन तदन्तविधिर्यथा स्यादिति तदुत्तरग्रन्थस्तु भाष्यकृतः। स च सूत्रप्रयोजनप्रदर्शनेनाद्यवार्तिकप्रत्याख्यान-

परः । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेन कौम्भकारेयसिद्धावपि कदाचित्कारीशब्दादपि ढकि कुम्भकारेयोऽप्यापद्येत । अतस्तदन्तविधिज्ञापनायायमधिकार आवश्यक इति तदाशयः । कुम्भेनैकार्थीभूतस्येत्यादि कैयटोक्तं तु न युक्तम् । निष्कृष्यापत्येनैकार्थीभावाभावेऽपि समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात्सामर्थ्याक्षतेः । विशिष्टसंबन्ध्यपत्ये विशेष्यसंबन्धस्याव्याहतेश्च । अत एव येन विधिरिति सूत्रस्थं भाष्यमपि संगच्छते । न चामहत्पूर्वग्रहणेनैव तदन्तविधिज्ञापनसिद्धाविदमनावश्यकम् । बहुकुरुचरेत्यादौ ङीबभावस्तु स्त्रियामित्यस्य गृह्यमाणविशेषणत्वादुपपाद्य इति वाच्यम् । वार्तिकेन सूत्रप्रत्याख्यानापेक्षया सूत्रेणैव तदर्थसंपादनस्यौचित्यमिति तद्भाष्याशयात् । शूद्रा चामहत्पूर्वेति तु वार्तिकम् । अत एव शूद्रा चामहत्पूर्वेति वक्तव्यमिति तत्रोक्तम् । तस्य गणसूत्रत्वे तु गणस्यापि सूत्रकृदुक्तत्वाद्वक्तव्यमिति पदप्रयोगासङ्गतिरिति वदन्ति । स्पष्टं चेदं प्रकृतसूत्रे सर्वादिसूत्रे चोद्योते । तदाह । भाष्येत्यादि । एतेन 'अतिधीवरी प्रियपञ्चेत्यादावुगितश्च, वनो र च, न षडित्यादि विधिप्रतिषेधप्रवृत्तयेऽमहत्पूर्वग्रहणेन स्त्रियामित्यधिकारे तदन्तविधेर्ज्ञापितत्वान्न तदर्थमनुपसर्जनाधिकार' इत्याचार्योक्तमपास्तम् ॥

यत्त्वनुपसर्जनाधिकारात्प्रागप्यणन्तात्प्रातिपदिकादित्यर्थस्य त्वयाप्यङ्गीकृतत्वेनापिशला ब्राह्मणीत्यत्र प्रोक्ताणमादाय ङीब्वारणायानुपसर्जनाधिकार आवश्यक इति न तदन्तविधिज्ञापकता । अतिमहतीत्याद्यर्थे स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृतिविशेषणत्वनिर्णयेन प्रोक्ताणः स्त्रियामवृत्तावपि तदन्तस्य स्त्रियां वृत्तेः । ननु स्त्रियामित्यस्य प्रकृतिविशेषणत्वमप्यनुपसर्जनाधिकारज्ञाप्यमेवेति चेन्न । तदन्तविधिज्ञापकत्वमिच्छताऽप्येतज्ज्ञापनं विना वैयर्थ्यानुद्धारेणावश्यकत्वात्स्त्रियामित्यस्य प्रकृतिविशेषणत्वे ज्ञापिते उक्तस्थले ङीब्वारणायानुपसर्जनादित्यस्य चारितार्थ्येन तदन्तविधिज्ञापकत्वासंभवः । अनुपसर्जनाधिकारस्थेषु

तदन्तविधेरुपयोगाभावश्च । ननु तत्प्रयोजनं कुम्भकारेय इत्यस्य पाक्षिकस्य वारणमिति चेन्न । अनुपसर्जनस्त्रीप्रत्यये तदादिविधिप्रतिषेधेन तत्रापि पाक्षिकानिष्टप्रसङ्गस्य दुर्वारत्वात् । अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनेति दूषणं तवापि समम् । तदादिनियमाभावेनाधिकस्य कार्यं बोध्यते, न तु न्यूनस्येत्यपि निर्मूलम् । किंच शीलिकामीति ज्ञापकाश्रयेण कथंचिदुक्तप्रतिबन्दीवारणेऽपि काष्ठश्रिताया अपत्यं काष्ठश्रैतेय इति प्रयोगवारणाय निष्कृष्यैकार्थीभाव एव प्रायेण वृत्तिनिमित्तम् । भाष्यप्रामाण्यात्तु क्वचित्तदभावेऽपि तद्धितादिः । किंच स्त्रीभ्यो ढगित्यत्र स्त्रीवाचकानां ग्रहणमिति त्वदुक्तदिशा सर्वमिदं गजस्नानसमम् । तस्मादापिशलेत्यादौ ङीब्वारणमेवानुपसर्जनाधिकारप्रयोजनम् । तदुक्तमत्र सूत्रे भाष्ये । आपिशला ब्राह्मणीत्यत्र ङीब्मा भूदित्ययमधिकार इति । इदं तर्हि प्रयोजनं, प्रधानेन तदन्तविधिर्यथा स्यात् । कुम्भकारी, अत्र हि प्रत्ययग्रहणपरिभाषयाऽवयवादुत्पत्तिः प्राप्नोतीत्येतत्सूत्रस्थं भाष्यमनुपसर्जनादित्येष योगः प्रत्याख्यायत इति सर्वादिसूत्रस्थं भाष्यं चैकदेश्युक्तिः, उक्तबाधकबलादित्याचार्याः । तदप्ययुक्तम् । वनो र चेत्याद्यर्थं स्त्रियामित्यधिकारे तदन्तविधिज्ञापनस्य तवाप्यावश्यकतया सूत्रेणैवार्थद्वयज्ञापनसंभवे वार्तिकस्थामहत्पूर्वग्रहणेन तदन्तविधिज्ञापकत्वमनेन स्त्रियामित्यस्य स्त्रीप्रत्ययप्रकृतिविशेषणत्वमिति कल्पने विशेषाभावात् । अनुपसर्जनाधिकारे तदन्तविध्यभावे कुम्भकारेय इत्यापत्तेर्दुर्वारतया तत्र तदन्तविधेर्नोपयोग इत्युक्तेरयुक्तत्वात् । तदादिनियमाभावेनाधिकस्यैव कार्यं बोध्यते, न तु न्यूनस्येत्यत्र बीजस्य प्रदर्शितत्वेन तस्य निर्मूलत्वोक्तेरयुक्तत्वात् । स्त्रीभ्यो ढगित्यत्र स्त्रीवाचकानां ग्रहणस्य नागेश सिद्धान्तत्वेन सर्वमिदं गजस्नानसममित्यप्ययुक्तम् । विशिष्टस्य स्त्रीवाचकत्वे विशेष्येऽपि तदनपायात्कारीशब्दाद्ढगापत्तेस्सुवचत्वात् । आपिशलेत्यादौ ङीब्वारणमेवानुपसर्जनाधिकारप्रयोजनमित्यप्ययुक्तम् । स्त्रियामित्यस्य श्रुतानुमित-

टिड्ढा । ठेत्येव सिद्धे टक्ठञोरुपादानं ठन्ञिठञोर्व्यावृत्त्यर्थम् । अदन्तमिति । प्रत्यासत्त्या टिदाद्यवयवाकारान्तमित्यर्थः । तेन पञ्चाश्वेत्यादौ ठञ्निमित्तोऽपि न ङीप् । कुरुचरीति । कुरुषु चरतीत्यधिकरणे उपपदे चरेष्टः । टितोऽप्रत्ययस्यापि सत्त्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्याऽत्र टिदन्तत्वं कुरुचरशब्दस्येति बोद्ध्यम् । वक्ष्यमाणेति । वचेर्लृटः शानच् । टित्त्वादिति । स्थानिवत्त्वेनेत्यादिः । 'न ल्यपि' इति लिङ्गाट्टित्त्वादेरशास्त्रीयस्याप्यतिदेशः, अनुबन्धकार्ये अनल्विधाविति निषेधाप्रवृत्तिश्चेति भावः । ङित्त्वेनेति ।

---

न्यायप्राप्तगृह्यमाणविशेषणत्वाङ्गीकारेऽपि तत्र ङीब्वारणस्य सुकरतया तस्य तदसाधारणप्रयोजनकथनासङ्गतेः । भाष्ये वार्तिककृदुक्तस्यास्य प्रयोजनस्य स्त्रियामित्यस्य गृह्यमाणविशेषणत्वाभ्युपगमेन कण्ठतो निराकृतत्वाच्च । प्रकृतसूत्रस्थोपक्रमोपसंहारभाष्येण बहुकुरुचरेत्यस्यैवैतदसाधारणप्रयोजनत्वस्य स्पष्टत्वात् । सिद्धान्तेऽस्त्वापिशलेत्यप्येतत्प्रयोजनमित्यन्यदेतत् । इदं तर्हि प्रयोजनं, प्रधानेन तदन्तविधिर्यथा स्यादित्यादिप्रकृतसूत्रस्थ भाष्यस्य सत्रादिसूत्रस्थभाष्यस्य चोक्तरीत्या सामञ्जस्ये तयोरेकदेश्युक्तित्वकथनस्य सुतरामयुक्तत्वादित्यवधेयम् ॥

व्यावृत्त्यर्थमिति । अन्यथा वनो र चेत्यत्रेव चतुर्णां सामान्यग्रहणं स्यादिति भावः । यथाश्रुतार्थे वक्ष्यमाणदोषादाह । प्रत्यासत्त्येति । अनुपसर्जनं यट्टिदादि, तदन्तं यददन्तमित्यर्थे प्रत्यासत्त्या अकारष्टिदाद्यवयवो ग्राह्य इति भावः । न ङीबिति । अन्यथा प्रत्ययलक्षणेन ठगन्तत्वात्स्वतोऽदन्तत्वाच्च ङीप् स्यादिति भावः । ननु कुरुचरशब्दो न टित्, नापि टिदन्त इति कथं ततो ङीबत आह । टितोऽप्रत्ययस्यापीति । नन्वित्संज्ञकटकारविशिष्टत्वरूपस्य टित्त्वस्याशास्त्रीयत्वात्कथमतिदेशः ? किंच तस्य विशेषणतयाऽलाश्रयत्वेनानल्विधाविति निषेधोऽपीत्यत आह । न ल्यपीति । लिङ्गादिति । अस्यो-

लिङादेशानां स्थानिवत्त्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । तद्धि अवयवेऽचरितार्थतया समुदायोपकारकम् । न चेदं ङित्त्वं स्तुयादित्यादावनिग्लक्षणवृद्धिनिषेधार्थमिति वाच्यम्। विनिगमनाविरहात्। उत औदिति वक्तव्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपीकपरिभाषोपस्थित्या तस्या अपि इग्लक्षणत्वाच्च । नन्वेवं 'ब्रूतात्' इत्यत्र ब्रुव ईट् प्राप्नोति । लाश्रयानुबन्धकार्यस्य तदादेशेष्वभावेऽपि तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने मानाभावादत आह—क्व इति । क्वचिदिति । लक्ष्यानुरोधेन च व्यवस्था । परे तु यासुटो ङित्त्वं न ज्ञापकम् । 'पिदर्थं ङित्त्वम्' इति भाष्यात् । 'सार्वधातुकम्' इति सूत्रेऽपिदित्यावर्त्यं प्रसज्यप्रतिषेधसिद्धेन .... ....

---

अयत्रान्वयः । तद्वैयर्थ्यमिति । यासुटो ङित्त्वविधानवैयर्थ्यमित्यर्थः । ननु स्थानिवदित्यतिदेशेन लिङादेशानां, यदागमन्यायेन यासुड्विशिष्टस्य च ङित्त्वलाभेऽपि यासुण्मात्रस्य तदलाभात्कथं वैयर्थ्यमत आह । तद्धीति । अचरितार्थतयेति । तन्मात्रनिमित्तकविधिप्रतिषेधयोरभावादिति भावः । समुदायोपकारकमिति । एवं चोक्तदिशा समुदायस्य तत्त्वलाभात्तद्वैयर्थ्यं स्पष्टमेवेति भावः । वृद्धीति । उतो वृद्धिरिति सूत्रविहितेत्यर्थः । तत्र स्थानिनिर्देशादनियमाभावेनेकपरिभाषाया अप्रवृत्तिरित्याशयः । विनिगमनाविरहादिति । ङित्त्वविधानस्योभयथापि सार्थक्यसंभवान्मूलोक्तरीतिमपहायैकमेव सार्थक्यप्रतिपादने विनिगमकाभाव इति भावः । ननु प्रथमोपस्थितत्वरूपमन्तरङ्गत्वमेव विनिगमकमत आह । उत इति । इग्लक्षणत्वाच्चेति । एवं च तथा कल्पनेऽपि न तद्व्यावृत्तिरिति भावः । एवमिति । लाश्रयानुबन्धकार्यस्यैव तदादेशेऽभावकल्पन इत्यर्थः । नन्वेवमव्यवस्थापत्तिरत आह । लक्ष्यानुरोधेनेति । मूलोक्तं दूषयति । परे त्विति । प्रसज्येति । इदमुपलक्षणं, वाक्यभेदस्यापि । तावन्मात्रेण वक्ष्यमाणार्थद्वयासिद्धेः । सिद्धेनेति । पित्सार्वधातुकं

'ङिच्च पिन्न, पिच्च ङिन्न' इत्यनेन 'हलः श्नः' इति सूत्रभाष्योक्तेन पित्सु ङित्त्वाप्रसक्तेः । शानचः शित्त्वमपि तत्सूत्रे एव भाष्ये प्रत्याख्यातम् । ह्रेरपित्त्वस्य तातङो ङित्त्वस्य वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं भाष्ये । तस्माद्वक्ष्यमाणेत्यादौ सत्यभिधानेऽजादिपाठाट्टाप् । यत्तु 'क्ङिति च' इति सूत्रभाष्ये यासुटो ङिद्वचनस्य न ङिदादेशानां ङित्त्वमित्यर्थे ज्ञापकतोक्ता, तत्तु वार्तिकमतम् । ङिच्च पिन्नेत्यादेस्तेनानुक्तेः । यदपि 'गाङ् लिटि' इति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशेऽनुबन्धास्थानिवत्त्वस्य ज्ञापकमुक्तं वार्तिककृता, तदपि 'प्रयोजनाभावात्' इत्यादिना भाष्ये दूषितमित्याहुः ।

---

ङिन्न भवति । ङित्सार्वधातुकं पिन्न भवतीति प्रसज्यप्रतिषेधवाक्यभेदाभ्यां व्याख्यानात्सिद्धेनेत्यर्थः । ङिच्च पिन्नेति । ङिति पित्त्वस्य पिति ङित्त्वस्य च स्वतोऽसत्त्वेन निषेधासंभवादातिदेशिकयोस्तयोर्निषेध इति बोध्यम् । ङित्त्वाप्रसक्तेरिति । अतिदेशेन ङित्त्वाप्रसक्तेरित्यर्थः । मूलोक्तं द्वितीयमपि न ज्ञापकमित्याह । शानच इति । तत्सूत्र इति । हलःश्न इति सूत्र इत्यर्थः । ननु तावतापि सूत्रमते तस्य तत्संभवोऽत आह । ह्रेरपित्त्वस्येति । वैयर्थ्यापत्तिश्चेति । चो भिन्नक्रमः । ङित्त्वस्येत्यनन्तरं योज्यः । अनलित्त्वाविति निषेधेन तातङि पित्त्वानतिदेशे सार्वधातुकमपिदित्यनेनैव ङित्त्वस्य सिद्धतया तत्र तद्व्यर्थमित्याशयः । सत्यभिधान इति । अनेन वस्तुतोऽस्य स्त्रियामनभिधानमेवेति सूचितम् । भाष्यद्वयविरोधमस्य परिहरति । यत्त्विति । तेन= वार्तिककृता । अनुबन्धास्थानिवत्त्वस्येति । अत्र सानुबन्धकादेशे स्थानिवत्त्वेनेत्कार्याभावस्येति पाठश्चिदस्थिमालासम्मतः सरलश्चेति बोध्यम् । इत्यादिनेति । आदिना तिबाद्यादेशेषु पित्त्वाद्यसिद्धिरूपदोषपरिग्रहः । ननु निरनुबन्धकपरिभाषया ढग्रहणे ढकोऽग्रहणान्मूलोक्तोदाहरणासङ्गतिरत आह ।

निरनुबन्धकस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्य ढको ग्रहण-मित्याह—सौपर्णेयीति। सुपर्णाशब्दादपत्ये 'स्त्रीभ्यो ढक्' इति ढक्। स्पष्टञ्चेदं भाष्ये। ऐन्द्रीति। साऽस्य देवता' इत्यण्। ऊरु-दघ्नीत्यादि। प्रमाणे द्वयसज्दघ्नञ्मात्रचः। संख्याया अवयवे तयप्। मात्रजिति मात्रशब्दादारभ्यायचश्चकारेण प्रत्याहार इति 'उभयी' इति सिद्धिः। तत्र ह्ययच् प्रत्ययान्तरम्। अत एवोभय-शब्दस्य जसि सर्वनामत्वविकल्पो नेति 'नवेति' इत्यत्र भाष्ये स्पष्टम्। आक्षिकीति। 'तेन दीव्यति' इति ठक्। 'तदस्य पण्यम्' इत्यधिकारे लवणाट्ठञ्। यादृश्यां 'त्यदादिषु दृशः' इति कञ्। इत्वरीति। 'इण्नशजि' इति क्वरप्। अनुबन्धद्वयोपादानं स्पष्टार्थम्।

---

निरनुबन्धकस्येति। शिलाया ढः, सभाया यः, ढश्छन्दसीति सूत्रविहितस्य ढस्येत्यर्थः। असंभवादिति। शिलाशब्दात्स्वार्थे विहितस्य ढस्य स्वभावतो नपुंसकत्व एव वृत्तेः। एवं सभाशब्दात्तत्र साधुरित्यर्थे ढश्छन्दसीति छन्दसि विहितस्य ढस्य योग्यतया पुंलिङ्ग एव वृत्तेरिति भावः। न हि यज्ञसभायां प्रायश्चित्तादिविमर्शे याजनादौ वा स्त्रियाः साधुत्वेनाधिकारः, विदुषामेव तत्राधिकारात्। वैदुष्यं चोपनयनादिसंस्कारवतां पुंसामेवेति बोध्यम्। यद्यपि सभायां साधुरियं ब्राह्मणपङ्क्तिः, परिषद्वेति विवक्षायां संभवति स्त्रिया अपि सभायां साधुत्वं, तथापि छन्दस्येवंविधस्य सभेयशब्दस्य प्रयोगाभावः प्रकृत-सूत्रस्थभाष्याल्लभ्यत इति बोध्यम्। तदेतदाह। स्पष्टं चेदमिति। नन्वय-चस्तयबादेशत्वेन स्थानिवत्त्वेनैव ङीप् सिद्ध इत्यत आह। तत्रेति। उभयशब्द इत्यर्थः। अत एव=प्रत्ययान्तरत्वादेव। चौरीति यद्यप्यत्र छत्रादिभ्यो ण इति णः, तथापि ताच्छीलिके णेऽप्यण्कृतानि भवन्तीति परिभाषया अण्कार्यातिदे-शान्ङीबिति भावः। तरुणतलुनशब्दयोः प्रथमवयोवाचित्वाभावात्सूत्रे-

वरुङ्व्यावृत्तेरन्यतरेणापि सिद्धेः । चौरीति । चुरा शीलमस्या इत्यर्थः । नञ्स्न । तरुणतलुनयोः 'वयस्यचरम' इति ङीपि सिद्धेऽपि गौरादिपाठात्परत्वात्प्राप्तेन ङीषा बाधाभावाय पुनरत्र ग्रहणम् । तयोश्च स्वरे विशेषः । एतौ हि 'त्रो रश्च लो वा' इत्युनन्नन्तत्वादाद्युदात्तौ । स्त्रीपुंसाभ्यां नञ्स्नञौ । 'प्रहरणम्' इत्यधिकारे शक्तियष्ट्योरीकक् । आढ्यसुभग' इति ख्युन् ॥

यञश्च ॥ 'प्राचां ष्फ' इत्यत्र यञ एवानुवृत्तये योगविभागः ।

---

णाप्राप्तेराह । वयस्यचरम इति । सिद्धेऽपीति । ननु वयसः प्राणिधर्मत्वेनावयसि तरुणी सुरेत्यादौ कथं तेन सिद्धिरिति चेन्न । तत्रापि वयस आरोपेण सिद्धिरित्याशयात् । अत एव कैयटे 'तरुणतलुनशब्दयोरवयोर्थे ग्रहणं, तरुणी सुरा, प्राणिधर्मो हि वय' इत्युक्त्वा, अथवा वयोवाचिभ्यामपि गौरादिपाठात्परत्वान्ङीषेव स्यादिति वयोवचनावपि तरुणतलुनशब्दावुपसंख्यानं प्रयोजयत इति पक्षान्तरमुक्तम् । उद्योते च 'तरुणी सुरेत्याद्यपि वयस आरोपेण प्रयोगः स्यादत आहेत्यर्थवेत्यादिकैयटग्रन्थ अवतारित इति बोध्यम् । नन्वनयोर्गौरादिपाठो, वार्तिके ग्रहणं च मास्तु । किन्तु बह्वादिष्वनयोः पाठः कार्यः । तेन बह्वादिभ्यश्चेति ङीष्यन्तोदात्तस्य तदभावे वयस्यचरम इति वार्तिकेन ङीप्याद्युदात्तस्य च सिद्धिरिति चेन्न । क्वचिदारोपेण प्रयोगे सर्वत्र तथैव प्रयोग इति नियमाभावेनानारोपेण प्रयोगे प्रसक्तस्य टाबन्तप्रयोगस्य वारणाय वार्तिके ग्रहणस्यावश्यकत्वात् । तावताप्यन्तोदात्तस्य तस्यासिद्ध्या गणेऽपि पाठ आवश्यकः । एवं च तदर्थं बह्वादिषु गौरादिषु वा पाठे फलतो विशेषाभावाद्गौरादिष्वनयोः पाठ इति बोध्यम् । तयोरिति । ङीप्ङीषोरित्यर्थः ॥

ननु टिड्ढाणञित्यत्रैव यञोऽपि ग्रहणमस्तु, किं पृथक्सूत्रेणेत्यत आह । यञ एवानुवृत्तय इति । ननु यस्येति लोपे यकारस्येतिपरत्वसंभवादुपधा-

**हलस्त** । हल इति पञ्चमी, यस्येति सूत्राद् 'ईति' इत्यनुवर्त्तते, 'सूर्यतिष्य' इत्यतो 'य उपधायाः' इति च। यलोपेऽल्लोपस्या-भीयासिद्धत्वाद्यस्य ईकारपरत्वाभावाद्वचनसार्थक्यायोपधाग्रह-णानुवृत्तिः। अनपत्याधिकारस्थादिति । अपत्याधिकारस्थभिन्नादित्यर्थः। यञ्शब्देन व्याख्यानादपत्याधिकारस्थस्यैव ग्रहणमिति भावः। **प्राचां ष्फ** । यञ इति वर्त्तते, अत इति च । यञो योऽकार इति

---

ग्रहणानुवृत्तिर्व्यर्था । न चाल्लोपः स्थानिवत्, यलोपे तन्निषेधादत आह । **आभीयासिद्धत्वादिति** । नन्वनपत्याधिकाराभावादनपत्याधिकारस्थादि-त्यनुपपन्नमत आह । **अपत्याधिकारेति** । **व्याख्यानादिति** । आपत्यग्रहणं कर्तव्यमिति वार्तिकमूलकादित्यर्थः । नच तेनापत्यार्थकस्य यञो ग्रहणमित्यर्थ-लाभेऽप्यपत्याधिकारस्थस्यैव तस्य ग्रहणमित्यर्थलाभः कथमिति वाच्यम् । तद्वार्तिकप्रत्याख्यानपरप्रकृतसूत्रस्थभाष्येण सह फलैक्याय वार्तिकेऽपत्यपदस्या-पत्याधिकारविहितपरत्वावश्यकत्वेन तादृशार्थलाभात् । तथाहि । द्वीपे भवा द्वैप्येत्यादौ ङीब्वारणायात्र सूत्रे 'आपत्यग्रहणं कर्तव्यमिति, वार्तिकमारब्धम् । तच 'कञ्करपोऽयञश्चेति संहितापाठेऽकारं प्रश्लिष्यायञश्चेति छित्वाऽयञन्ता-न्ङीब्विधानाद्वैप्येत्यत्र ङीपः प्रसक्तिरेव नेति भगवता प्रत्याख्यातम् । गर्गादि-भ्योयञित्यत्राप्यकारप्रश्लेषेणायञ एव विधानमकारस्त्वनुनासिकोऽत्र सूत्रे विशेषणार्थः । एवं यस्कादिभ्यो गोत्रे यञञोश्चेत्यत्राप्यकारप्रश्लेषेणायञो लुग्वि-धानाद्गर्गा इत्यादिसिद्धिरिति तदाशयः । एवं च तत्पक्षे देवाद्यञञावित्यत्राकार-प्रश्लेषस्याशक्यत्वेन ङीपोऽप्राप्त्या वार्तिकमते तत्प्राप्त्या च फलभेदापत्त्या तद्वारणाय वार्तिकेऽप्यपत्यपदमपत्याधिकारस्थपरं लक्षणयेति न फलभेदः । दैव्येत्यत्र यञोऽपत्यार्थकत्वेऽपि तदधिकारस्थत्वाभावादिति बोध्यम् । **प्रत्या-सत्त्याऽह** । **यञो योऽकार इति** । **एवं व्याख्याने फलमाह** । **तेनेति** ।

चार्थः । तेन वतण्डीत्यत्रोदीचां मते सावकाशं शार्ङ्गरवादिङीनं बाधित्वा आवट्यायनीत्यादाविव सर्वत्रग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न । अत्र हि 'वतण्डाच्च' इति यञो लुक्, वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम् । षः प्र । 'आदिर्ञिटुडवः' इति सूत्रादादिरित्यनु-

---

वतण्डीत्यत्रेति । अस्य ष्फो नेत्यनेनान्वयः । ननु यञो योऽकार इति व्याख्यानाभावेऽपि नात्र दोषः । वतण्डशब्दस्य शार्ङ्गरवादिपाठेन तत्सामर्थ्या-त्ष्फं बाधित्वा ङीनः प्रवृत्तेरित्यत आह । सावकाशमिति । ननूदीचां मते ङीनः सावकाशत्वेऽपि परत्वात्ष्फबाधकत्वं कुतो नेत्यत आह । सर्वत्र ग्रहणादिति । अयं भावः । सर्वत्र लोहितादीति सूत्रे सर्वत्रग्रहणं न प्राचां-ग्रहणनिवृत्त्यर्थं, तद्भावेऽप्यारम्भसामर्थ्यादेव तत्सिद्धेः । किन्तु पूर्वसूत्रेऽपकृष्य यञन्तात्प्राचां मते बाधकविषयेऽपि ष्फविधानार्थम् । सर्वत्रेत्यस्य बाधकविषये-ऽपीत्यर्थः । एवं च यथा आवट्यायनीत्यादावुदीचां मते सावकाशं परत्वात्प्राप्तमपि चापं बाधित्वा प्राचां मते ष्फप्रत्ययस्य प्रवृत्तिरेवं वतण्डीत्यत्रापि प्रत्ययलक्षणेन यञन्तत्वात्प्राचां मते परमपि ङीनं बाधित्वा ष्फप्रत्ययः स्यादिति । स्पष्टं चेदं सर्वत्रेति सूत्रे आकरे । नन्वत्र सूत्रे तद्धितग्रहणमनर्थकम् । नच प्रातिपदि-कसंज्ञाद्वारा ङीष्संपादनार्थं तत् । षित्त्वसामर्थ्यादप्रातिपदिकत्वेऽपि तत्प्रवृत्ति-सिद्धेः । नच ङीषः सिद्धावपि तस्य प्रातिपदिकप्रकृतिकत्वाभावेन तद्विशिष्टस्य लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वातिदेशस्याशक्यतया ततः सुबाद्यना-पत्तिरिति वाच्यम् । सिद्धान्ते ङ्याब्ग्रहणसत्त्वेन तत एव सुबादिसिद्धेः । नापि यस्येति लोपार्थं तत् । सवर्णदीर्घेणापि रूपसिद्धेरिति चेन्न । क्वचिदञन्तादपि ष्फो भवतीत्यर्थज्ञापनाय तदावश्यकत्वात् । तेनासुरेरुपसंख्यानमित्येतदेत-ल्लब्धार्थानुवादकमेव, नापूर्वमिति बोध्यम् । यद्यपि प्राचां ष्फडित्युक्तावपि डित्त्वसामर्थ्यान्निरुक्तार्थसिद्धिः, तथापि संहितापाठे टित्त्वमपि संभाव्येत ।

वर्त्तते। प्रत्ययस्येति किम्। षोडश। 'षष उत्वम्' इत्यत्र षष्शब्दस्य निपातनादुपदेशस्थोऽयं षकारः। वस्तुत उपदेशे इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपितम्। आदिरिति तूत्तरत्रावश्यकमुपरञ्जकतयाऽत्रापि सम्बन्धितम्। आयने। आयनो नस्य नेत्त्वं, फिनो नित्करणात्। तत्साहचर्यादीनोऽपि नस्य नेत्त्वम्। आदिग्रहणं किम्। ऊरुदघ्नम्। प्रत्ययेति किम्। फक्कति, खनति। खच्घञादौ 'घिण्ण्यतोः' 'खित्यनव्ययस्य' इत्यादिलिङ्गादित्संज्ञैव, नादेशाः। उणादीनां बहुलवचनान्नादेशाः। घचश्चित्त्वसामर्थ्यादेते प्रत्ययसम्बन्ध्यादेशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव।

---

किंच संज्ञावाचकानामर्थमात्रकत्वेन विशेषाभाव इत्याशयेनैवमुक्तमिति बोध्यम्। ननूपदेशग्रहणानुवृत्त्या नात्र दोषोऽत आह। षष इति। इदं प्राचामनुरोधेन। स्वसिद्धान्तरीत्याह। वस्तुत इति। उत्तरत्र=चुटू इत्यादौ। उपरञ्जकतयेति। संभवमात्रेणेत्यर्थः। न त्वस्य व्यावर्त्यमिति भावः। न चान्त्यस्येत्त्ववारणायात्रापि तत्संबन्ध आवश्यक इति वाच्यम्। हलन्त्यमित्यनेन तस्येत्संज्ञाया इष्टत्वात्। न चेष्ठनि मध्यगतस्य तस्येत्त्ववारणाय तदावश्यकमिति वाच्यम्। सकारमध्यग एव सः, षकारस्त्वादेशप्रत्यय इत्यनेन निष्पन्न इति कल्पनया षत्वस्यासिद्धत्वादित्त्वाप्रवृत्तेर्वक्तुं शक्यत्वात्। न चाविषो महिष इत्यादावविमहोष्टिषजिति सूत्रविहितटिषजः षस्येत्त्ववारणार्थं तदावश्यकमिति वाच्यम्। फलाभावात्तत्र नेत्त्वमिति वक्तुं शक्यत्वात्। अविषमहिषशब्दयोश्चित्स्वरेणान्तोदात्ततया ततष्टित्त्वान्ङीप्यप्युदात्तनिवृत्तिस्वरेणान्तोदात्तस्यैव सिद्ध्या ङीन्ङीषोः स्वरे विशेषाभावात्। साहचर्यादिति। तच्चात्रैकसूत्रपठितत्वरूपमिति भावः। प्रत्ययग्रहणसत्त्वेऽपि प्रसक्तमतिप्रसङ्गं वारयति। खच्घञादाविति। नन्वेवमपि शङ्खः शण्ढ इत्यादौ फलाभावादित्त्वाप्रवृत्त्याऽदेशो दुर्वार इत्यत आह। उणादीति। बहुलवचनादिति। क्वचिदन्यदेवेत्यर्थकादित्यर्थः। पूर्वमेवेति।

तेनान्तोदात्तत्वाय चित्त्वं सफलम् । अन्यथाऽनुदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । ननु स्त्रियामेव ष्फविधानाद् 'उक्तार्थानामप्रयोगः' इति ङीप् न स्यादत आह—षित्त्वसामर्थ्यादिति । ष्फेणोक्तेऽपीति । द्योतितेऽपीत्यर्थः । 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन क्वचित्समुच्चयस्य दृष्टत्वात् । षित्त्वमपि तदाश्रयणे ज्ञापकम् । सर्वत्र । सर्वेषां मते इत्यर्थस्तदाह—नित्यमिति । प्राचामित्यस्य निवृत्त्या नित्यत्वे सिद्धेऽपि 'प्राचां ष्फ' इत्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषयेऽपि प्रवृत्त्यर्थं तत् । तेन 'आवट्यायनी' इत्यत्र 'आवट्याच्च' इति चापं बाधित्वा प्राचां मते ष्फ एव । अवटो गर्गादिः । चाप्तु उदीचां मते प्राप्तङीब्बाधनेन चरितार्थः । सर्वत्रग्रहणात्तद्बाधकत्वमेव चापो न त्वनन्तरष्फबाधकत्वम् । चापि कृते तु न ष्फप्राप्तिरत इत्यधिकारात् । लोहितादिर्गर्गाद्यन्त-

---

भवन्तीति शेषः। एतेनायन्नादिषूपदेशिवद्वचनवार्तिकमनावश्यकमिति सूचितम् । वाचकतापक्षस्य दूषितत्वादाह । द्योतितेऽपीति । क्वचिदिति । द्वौ ब्राह्मणौ, व्यतिलुनीत इत्यादावित्यर्थः । तदाश्रयणे=उक्तन्यायाश्रयणे। प्रकृतसूत्रस्य नित्यत्वार्थं सर्वत्र ग्रहणं न कार्यमित्याह । प्राचामित्यस्येति। तदिति । सर्वत्रग्रहणमित्यर्थः । ननु निरवकाशश्चाब्विधिरत आह । उदीचां मत इति । ननु चाब्विषये उदीचां मते ङीपः प्राचां मते ष्फस्य च प्राप्तत्वेन तस्य बाध्यसामान्यचिन्तयोभयबाधकत्वमनन्तरस्येति न्यायाश्रयणेन ष्फबाधकत्वं वा स्यान्न तु ङीब्बाधकत्वमत आह । सर्वत्रग्रहणादिति । तेन प्राचां मते बाधकविषयेऽपि ष्फप्रत्ययबोधनादिति भावः । तद्बाधकत्वमेवेति । ङीब्बाधकत्वमेवेत्यर्थः । ननु चापि कृतेऽप्येकादेशस्य पूर्वान्तत्वेन ग्रहणात्ततः ष्फसिद्ध्या तद्बाधनार्थं सर्वत्रग्रहणमनर्थकमत आह । चापीति । अत्र सूत्रे सर्वत्रग्रहणस्य सुतरां फलाभावेऽपीह करणं तु वैचित्र्यार्थ-

र्गणः। यद्यपि तत्र कतशाकलकण्वेति पाठात् शाकलस्य लोहितादि-कण्वादिबहिर्भूतत्वात् ष्फाणौ न ततः प्राप्नुतस्तथापि कतन्तेभ्यः कण्वादिभ्य इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण न दोषः। कतन्तशब्दे शकन्ध्वादित्वात्पररूपम्। तेन शाकल्यायनी, शाकल्यस्य छात्राः शाकला इति च सिद्धम्। टाप्ङीषोरिति। कौरव्यशब्दे योपधप्रतिषेधाट्टाप्, माण्डूकशब्दे जातित्वान् ङीषिति भावः। टाब्ङीपोरपवाद इति पाठस्तु प्रामादिकः॥

वयसि॥ प्राणिनां कालकृतावस्थाविशेषो वयः। वयसीत्यस्य वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थस्तदाह—प्रथमवयोवाचिन इति। तेनोत्तानशयेत्यादौ न। प्रकरणादिना वयःप्रतीतावपि नायं

---

मेवेति बोध्यम्। तत्पुरुषबहुव्रीह्योरेकशेषेणेति। कतस्यान्तः कतन्तः, कतोऽन्ते येषां ते कतन्ताः, कतन्तश्च कतन्ताश्च कतन्ता इत्यादिरूपेणेत्यर्थः। अत्राद्यन्त शब्दौ पूर्वपरसमीपवाचकौ। बहुव्रीहिश्च तद्गुणसंविज्ञानः। तेनेति। उक्तरीत्या व्याख्यानेनेत्यर्थः। शकलशब्दस्य कतशब्दात्पूर्वं पाठे उक्तव्याख्यान-मन्तरा शाकल्यायनीत्यस्य सिद्धावपि शाकला इत्यस्यासिद्धिः। कण्वशब्दोत्तरं पाठे तु शाकल्यायनीत्यस्यासिद्धिरिति रूपद्वयसिद्धये मध्ये पाठं कृत्वा सूत्रद्वये उक्तरीत्या व्याख्यानमावश्यकमिति भावः। जातित्वादिति। कौरव्यशब्दसाहचर्येण माण्डूकशब्दस्याप्यपत्यप्रत्ययान्तस्यैव ग्रहणात्तस्य च गोत्रं च चरणैस्सहेति जातित्वादिति भावः। प्रामादिक इति। उक्तरीत्या-ऽपत्याणन्तस्यैव ग्रहणेन तत्र ङीषो ङीबपवादत्वादिति भावः। यत्तु मण्डूक-स्येयं भार्येति शैषिकाणन्तत्ततो ङीब्भवत्येव। तेन 'यद्यसौ कूपमाण्डूकितवैता-वतिकः सय' इति भट्टिप्रयोगस्सिद्धः॥

उक्तरीत्या व्याख्याने फलमाह। तेनेति। वयसि गम्यमान इत्यर्थे

तद्वाचकः। याऽपि व्याध्यादिवशादुत्ताना शेते तस्या अपि प्रतीतेः। द्विवर्षेत्यादिरपि न वयोवाची। शालादावपि प्रयोगात्। कौमारयौवनवृद्धत्वभेदात् त्रीणि वयांसि, आयुषश्चतुर्भिर्भागैश्चत्वारि वा। त्र्यनीका। समाहारे 'तद्धितार्थ' इति द्विगुः। अकारान्तोत्तरपदत्वात् स्त्रीत्वम्॥

अपरिमाण॥ अत्र परिमाणशब्देन 'परिमाणन्तु सर्वतः' इति पारिभाषिकमेव गृह्यते। 'सुवर्णबिस्तौ हेम्नोऽक्षे कम्बल्यमूर्णापलशतम्' इति कोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणन्तु

---

त्वत्रापि स्यादिति भावः। तद्वाचकः=वयोवाचकः। तत्र हेतुमाह। यापीति। त्रीणि वयांसीति। तदुक्तमभियुक्तैः। पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति, इति। चत्वारि वेति। तदप्युक्तम्, आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तपस्तप्तं चतुर्थे किं करिष्यतीति। सर्वथापि यौवनस्याप्रथमत्वाद्वयस्यचरम इति वार्तिकमावश्यकमेव। बालकशब्दस्याजादिषु पाठाट्टाबेवेति बोध्यम्। उपचयापचयलक्षणे द्वे एव वयसी इति मते तु वार्तिकं नावश्यकमिति कैयटः। वार्तिकसम्मतत्वादाद्यमेव युक्तमित्युद्योते स्पष्टम्॥

सर्वत इति। आरोहतः परिणाहतश्चेत्यर्थः। आरोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन प्रस्थादिना धान्यादिर्मीयते, तदेवात्र परिमाणपदेन गृह्यते, न तु परिच्छेदकमात्रं, वक्ष्यमाणलक्ष्यानुरोधादिति भावः। नन्वेवं बिस्तकम्बल्ययोरपरिमाणत्वादेव सिद्धे सूत्रे पृथक्तयोरुपादानं व्यर्थमत आह। सुवर्णेत्यादि। बिस्तकम्बल्यग्रहणं त्विति। आचितशब्दस्याचितस्त्रशाकटो भर इति कोशात्परिमाणवाचिनोऽपि सत्त्वात्तस्य विध्यर्थत्वं

**उन्मानस्य चेद्विस्तकम्बल्ययोरेवेति नियमार्थम् । तेन द्विनिष्की सिद्धः । द्वे वर्षे भूता, द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा द्विशता, तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः । 'काण्डान्तात्' इति तु क्षेत्रे एवेति नियमार्थम् । तेन द्विकाण्डी रज्जुरित्यत्र न ।**

---

संभवतीत्याशयेन तदनुपादानमिति बोध्यम् । **उन्मानस्य चेदिति** । उन्मानान्तस्य चेदित्यर्थः । **बिस्तकम्बल्ययोरेवेति** । तदन्तयोरेवेत्यर्थः । यद्वा उन्मानस्य चेदित्यनन्तरमपरिमाणपदेन ग्रहणमिति शेषः । नियमफलं दर्शयति । **तेनेति** । उक्तनियमाश्रयणेनेत्यर्थः । **सिद्धेति** । अन्यथाऽपरिमाणान्तत्वान्निषेधः स्यादिति भावः । सूत्रे परिमाणपदेन पारिभाषिकग्रहणे फलमाह । **द्वे वर्षे भूतेत्यादिना** । **निषेधस्सिद्ध इति** । अन्यथैषां परिमाणान्तत्वात्तदसिद्धिरिति भावः । नन्वेवं षोडशहस्तप्रमाणदण्डवाचकस्य काण्डशब्दस्य तिर्यङ्मानत्वेनापरिमाणेत्येव सिद्धे काण्डान्तादिति सूत्रं व्यर्थमत आह । **काण्डान्तादिति** ॥

अत्रायं निष्कर्षः । अत्र शास्त्रे लक्ष्यानुसाराद्व्याख्यानाच्च प्रमाणपरिमाणशब्दौ क्वचित्परिच्छेदकमात्रपरत्वेन क्वचिदार्हादिति सूत्रभाष्योक्तपारिभाषिकपरत्वेन च व्यवह्रियेते । तथाहि । प्रमाणे द्वयसजिति सूत्रे प्रमाणशब्दः संख्यातिरिक्तपरिच्छेदकमात्रपरः । अत एव द्रोणाढकेभ्यः कर्षनिष्कादिभ्यश्च प्रत्ययविधानमुपपद्यते । द्वयसज्दघ्नचौ तु प्रथमश्च द्वितीयश्चोर्ध्वमाने मतौ ममेति भाष्यकृन्नियमादूर्ध्वमानवाचकेभ्य एवेति केचित् । उपाध्यायास्तु आयामपरिच्छेदकमेवात्र प्रमाणम् । अत एव यत्तदेतेभ्य इति सूत्रे प्रमाणपरिमाणशब्दयोरेकार्थत्वं मन्यमानस्य, किमर्थं परिमाण इत्युच्यते, न प्रमाण इति वर्तत इति शङ्कायां तत्र परिमाणग्रहणसामर्थ्यात्प्रमाणपरिमाणशब्दयोर्भिन्नार्थत्वं ज्ञापयित्वा ततो नैतज्ज्ञापकसाध्यम् । उक्तोऽत्र विशेष इति समाहितम् । तेनार्हादिति सूत्रभाष्योक्तविशेषवाचकावत्र प्रकरणे प्रमाणपरिमाणशब्दाविति सूचितम् ।

एवं च प्रस्थमात्रमित्यसाध्वेव । मात्रचस्त्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणादिति कैयटस्तु चिन्त्य एवेत्याहुः । अत्र मते ऊर्ध्वमानेऽप्राप्तौ द्वयसज्दघ्नचौ प्रमाणादपकृष्य विधेयौ । तेनोरुद्वयसमूरुदघ्नमित्यादिप्रयोगसिद्धिः । एवं प्रमाणे चेति णमुल्विधायके, द्विगौ प्रमाण इति स्वरविधायके च तिर्यगायाममात्रपर इति स्पष्टमाकरे । प्रमाणे ल इति श्लोकवार्तिकेऽपि तिर्यगायामपरिच्छेदकशमादिमात्रपर एव । तेनोरुद्वयसमित्यादिसिद्धिः । शमादीनामपि यदोर्ध्वाधरादिगवस्थितवस्तुपरिच्छेदकत्वं, तदोन्मानत्वात्ततो विहितस्य द्वयसचो न लुक् । पुरुषात्प्रमाण इत्यत्र तु परिच्छेदकमात्रपरः । ऊर्ध्वमानवाचिना पुरुषशब्देनान्वयानुरोधात् । वर्षप्रमाण इत्यत्रापि परिच्छेदकमात्रपर एव । गोष्पदप्रं मूषिकाबिलप्रमित्यादिलक्ष्यानुरोधात् । एवं परिमाणशब्दोऽपि तदस्य परिमाणमिति सूत्रे परिच्छेदकमात्रपरः । संख्यायाः संज्ञासङ्घेत्याद्युत्तरसूत्रघटकसंख्याया इत्यनेनान्वयानुरोधादिति स्पष्टमाकरे । परिमाणान्तस्यासंज्ञाशाणयोरिति वृद्धिविधायकेऽपि परिच्छेदकमात्रपर एव । उन्मानविशेषवाचकशाणपर्युदासात् । आर्हादिति सूत्रे पर्युदस्यमानसमर्पकपरिमाणशब्दस्तून्मानसर्वतःपरिच्छेदवाचकयोर्द्वयोर्बोधकः । असमासे निष्कादिभ्य इत्युत्तरसूत्रस्थभाष्यस्वरसात् । तत्र हि 'असमास इति किमर्थं? परमनिष्केण क्रीतं परमनैष्किकं, नैतदस्ति प्रयोजनं निष्कशब्दात्प्रत्ययो विधीयते, तत्र कः प्रसङ्गो यत्परमनिष्कशब्दात्स्यादि'त्युक्तम् । यदि पूर्वसूत्रे परिमाणपदेन पारिभाषिकस्यैव ग्रहणं स्यात्तदा निष्कस्योन्मानत्वेनापरिमाणत्वात्पूर्वेणैव ठकि सिद्धेऽस्य नियमार्थत्वेन निष्कशब्दात्प्रत्ययो विधीयत इत्यादिभाष्यमसङ्गतमेव स्यात् । प्रमाणं तु न गृह्यते, मानाभावादिति तद्धितशेखरे निरूपितम् । यद्वा योगाद्रूढेर्बलीयस्त्वादुभयत्रापि परिमाणपदेन पारिभाषिकमेव गृह्यते । शाणशब्दः परिमाणविशेषवाचकोऽपीति तत्पर्युदासः सार्थकः । न चार्हादित्यत्र पारिभाषिकपरिमाणग्रहणे प्रागुक्तमसमासे निष्कादिभ्य

इति सूत्रस्थं भाष्यमसङ्गतं स्यादिति वाच्यम् । तद्भाष्यप्रामाण्येन परिमाणविशेषवाचकानामेव निष्कादीनां तत्र ग्रहणेनादोषात् । तेषां तद्वाच्यित्वेऽपीदमेव भाष्यं मानम् । असमासग्रहणस्य तदन्तविधिज्ञापकतापरं भाष्यं च मानम् । अन्यथा पणपादादिविषये पूर्वसूत्रप्राप्तठको निवृत्त्या तच्चारितार्थ्येन तदसङ्गतिः स्पष्टैव । स्पष्टं चेदमसमासे निष्कादिभ्य इति सूत्रे उद्योते । अत्रान्त्यपक्ष एव युक्तः । योगाद्रूढेर्बलीयस्त्वेन तदर्थपरित्यागस्यायुक्तत्वात् । किंचार्हादिति सूत्रे भाष्ये तत्रत्यपरिमाणपदस्य पारिभाषिकपरताया भगवता कण्ठत उक्तत्वेनासमासे निष्कादिभ्य इति सूत्रस्थभाष्यस्योक्तदिशा उपपन्नत्वेन च तत्परित्यागस्यायुक्तत्वात् । अत एव द्वौ बिस्तौ पचतीति प्रतीकमुपादाय 'अत्रोन्मानत्वाट्ठको लुगिति प्रकृतसूत्रे शेखरे उक्तम् । आर्हादित्यत्रोन्मानस्यापि ग्रहणे तु परिमाणपर्युदासेन ठकोऽप्राप्त्या ठञो लुगित्येव वदेत् । अनेन चान्त्यपक्ष एव नागेशसम्मत इति स्पष्टं लभ्यते । उक्तसूत्रद्वये परिमाणपदेनोन्मानस्यापि ग्रहणप्रतिपादकतद्धितप्रकरणस्थशेखरग्रन्थ उद्योतग्रन्थश्च मतान्तरपरतयैव प्रवृत्त इत्यवधेयम् । यत्तदेतेभ्य इति वतुब्विधायके परिमाणपदेन पारिभाषिकमेव गृह्यते । उक्तोऽत्र विशेष इति प्रागुक्ततत्सूत्रस्थभाष्यप्रामाण्यात् । यावानध्वा, यावती रज्जुः, अधिकरणैतावत्त्वे चेत्यादयस्तु सादृश्याद्गौण्या इत्युद्योते स्पष्टम् । एतेन तत्र परिमाणशब्दः परिच्छेदकमात्रपरः । द्विस्तावा त्रिस्तावा वेदिरित्याकरस्वरसादिति हर्युक्तमपास्तम् । सूत्रार्थप्रतिपिपादयिषया प्रवृत्तेन तत्सूत्रस्थभाष्येणैव तदर्थनिर्णयस्य कर्तुं युक्तत्वात् । परिमाणाख्यायां सर्वेभ्य इति घञ्विधायकेऽपि पारिभाषिकस्यैव ग्रहणमिति स्पष्टमाकरे । एवं प्रकृतसूत्रेऽपि पर्युदस्यमानसमर्पकपरिमाणपदेन पारिभाषिकस्यैव ग्रहणं, न तु परिच्छेदकमात्रस्य । द्विवर्षा, द्विबिस्ता, द्विशमेत्यादिलक्ष्यानुरोधादसति बाधके रूढ्यर्थपरित्यागस्यायुक्तत्वाच्च । न चोन्मानभूतबिस्तकम्बल्यग्रहणसाम-

र्थ्यादेवात्र तत्परित्याग इति वाच्यम् । तस्य नियामकतयापि सार्थक्यसंभवात् । नन्वेवं प्रकृतसूत्रस्थं भाष्यं विरुध्येत, तत्र हि 'इमौ द्वौ प्रतिषेधावुच्येते, तत्रैकश्शक्योऽवक्तुम् । कथम्? एवं वक्ष्यामि । परिमाणान्तात्तद्धितलुकि ङीब्भवतीति । द्विगोरित्येव सिद्धे तन्नियमार्थं भविष्यति । परिमाणान्तादेव तद्धितलुकि नान्यत इति । तद्धितलुक्येवेति तु विपरीतनियमो न भवति । लक्ष्यानुसारित्वाच्छास्त्रस्य । ततो बिस्ताचितकम्बल्येभ्यो न, तद्धितलुकीत्येव' इत्युक्तम् । यद्यत्र परिमाणपदेन परिमाणं तु सर्वत इति पारिभाषिकस्यैव ग्रहणं स्यात्तदा बिस्तादीनां परिमाणत्वाभावेन परिमाणान्तादेवेति नियमादेव ङीपो व्यावृत्तेस्सिद्धौ बिस्ताचितेति द्वितीयो योगो निष्फल एव स्यात् । एवं कम्बल्याच्च संज्ञायामिति सूत्रस्थभाष्यविरोधोऽपि । तत्र हि अयं योगःशक्योऽवक्तुम् । कथं कम्बल्यमिति । निपातनादेतत्सिद्धम् । किं निपातनम्, अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकीति । इदं तर्हि प्रयोजनं, संज्ञायामिति वक्ष्यामि, इह मा भूत् । कम्बलीयोर्णेति । नैतदस्ति प्रयोजनं, परिमाणपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते । परिमाणार्थं, परिमाणं च संज्ञैवेत्युक्तम् । यदि चात्र परिमाणपदेन पारिभाषिकस्यैव ग्रहणं, तदा कम्बल्ये परिमाणत्वाभावेन परिमाणपर्युदासस्य प्राप्त्यभावात्परिमाणपर्युदासेन पर्युदासे प्राप्ते, इत्युक्तिरसङ्गता स्यादिति चेन्न । बिस्तादीनां पृथग्ग्रहणादेवापरिमाणसूत्रे परिमाणपदेनोन्मानमपि गृह्यत इत्याशयेन बिस्तादयः परिमाणविशेषा अपीत्याशयेन वा बिस्ताचितकम्बल्येभ्यो नेति द्वितीययोगप्रवृत्तेस्तद्विरोधाभावात् । स्पष्टं चेदमुद्योते । वस्तुतो नैषा सिद्धान्त्युक्तिः । यथान्यासापेक्षयात्र न्यासे लाघवाभावात् । प्रत्युत गौरवाच्च नञ्द्वयकरणापेक्षया योगविभागकरणस्य पदगौरवाद्योगविभागो गरीयानिति न्यायेन गुरुतरत्वात् । नियमाश्रयणं तूभयोस्समिति बोध्यम् । एवं कम्बल्याच्च संज्ञायामिति सूत्रस्थभाष्यस्यापि कम्बल्य-

**द्वौ बिस्तौ पचतीति । पचेर्द्रवीभावानुकूलो व्यापारोऽर्थः । अत्रोन्मानत्वाट्ठको लुक् । 'आचितः शाकटो भारः' इत्यु-**

---

शब्दः परिमाणविशेषवाचकोऽपीत्याशयेन प्रवृत्तेर्न तद्विरोधोऽपीति बोध्यम् । नन्वेवमपि संख्यायाः संवत्सरसंख्यस्य चेति सूत्रस्थभाष्यविरोधः । तत्र हि परिमाणान्तस्यासंज्ञाशाणयोरिति सिद्धे संवत्सरग्रहणमनर्थकम् । एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति । किं प्रयोजनं, अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि । द्विवर्षा, त्रिवर्षा, परिमाणपर्युदासेन पर्युदासो न भवतीत्युक्तम् । यद्यत्र परिमाणपदेन पारिभाषिकपरिमाणस्यैव ग्रहणं स्यात्तदोक्तोदाहरणे प्राप्त्यभावात्संवत्सरग्रहणानर्थक्यशङ्कायाः कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति ज्ञापनफलस्य चासङ्गतिः स्पष्टैवेति चेन्न । परिमाणान्तस्यासंज्ञाशाणयोरिति सूत्रे परिमाणशब्दस्योन्मानभूतशाणपर्युदासेन परिच्छेदकमात्रपरताया वक्तव्यत्वेन संवत्सरस्यापि परिच्छेदकत्वात्परिमाणग्रहणेन ग्रहणं स्यादित्याशयेन तदानर्थक्यशङ्काया उपपत्तेः । एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवतीति तदुत्तरभाष्यस्यापि परिमाणं तु सर्वत इति पारिभाषिकपरिमाणग्रहणज्ञापनद्वारेत्यर्थ इति न तद्विरोधोऽपीति । एतेनोक्तभाष्यत्रयविरोधादत्र परिमाणपदेन परिच्छेदकमात्रस्यैव ग्रहणम् । अत्र सूत्रे बिस्तकम्बल्यग्रहणं, काण्डान्तादिति च विध्यर्थमेव । तिर्यङ्माने द्विहस्तीत्येव रूपम् । द्विहस्तेति तूत्तरपदलोपेऽर्श आद्यचा कथं चित्साधनीयमिति वाराणसेयोक्तमपास्तम् । असति बाधके रूढ्यर्थपरित्यागस्यायुक्तत्वात् ।

अक्षपरिमितसुवर्णस्य बिस्तशब्दवाच्यत्वेन तस्य प्रसिद्धपाकासंभवादाह । **पचेरिति । ठको लुगिति ।** आर्हादिति सूत्रे पर्युदस्यमानसमर्पकपरिमाणपदेन भाष्यप्रामाण्यात्सर्वतः परिच्छेदकानां द्रोणाढकादीनामेव ग्रहणेनात्र

राक्केचितः परिमाणमित्येके । 'आचितो दश भाराः स्युः' इत्युक्तेरुन्मानमेतदित्येतदपि नियमार्थमित्यन्ये । प्रमाणे इति । षोडशहस्तप्रमाणदण्डवाचककाण्डशब्दस्या ऽयाममात्रपरिच्छेदक-त्वेन प्रमाणत्वमिति भावः । पुरुषात्प्रमाणे । पुरुषस्योर्ध्वाधरदिग-वस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वादुन्मानस्य चेद् बिस्ता-देरेवेति नियमान्निषेधाप्राप्त्या नित्यं ङीपि प्राप्ते विकल्पार्थमिदम् । अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची । अत एव तस्य पुरुषविशेषणता नासङ्गता । जातिवचनस्यापि पुरुष-शब्दस्य 'पञ्चारत्निः पुरुषः' इति शुल्बसूत्रादत्र प्रमाणे इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकवाचित्वमपि । द्विपुरुषीति । द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे 'तदस्य परिमाणम्' इति प्रत्ययस्य 'अद्ध्यर्द्ध' इति लुकि उदाहरणम् । तत्र हि परिमाणशब्देन उत्तरसूत्रानुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्तः ॥

---

पर्युदासाप्राप्त्या ठकि तस्यैवात्र लुक्, न तु ठञ इति भावः । आयाम-मात्रेति । तिर्यगायाममात्रेत्यर्थः । तत्सूत्रे प्रमाणपदेन तस्यैव ग्रहणं, न तूर्ध्वाधरादिगवस्थितवस्तुपरिच्छेदकस्यापि । ऊर्ध्वमानं किलोन्मानमिति तस्यो-न्मानत्वोक्तेः । तत्रोन्मानपदेन भारपरिच्छित्तिसाधनमूर्ध्वदैर्ध्यपरिच्छित्तिसाधनं चेत्युभयमपि गृह्यते । तदन्यतरमात्रबोधकप्रमाणानुपलम्भादिति भावः । नित्यं ङीपीति । द्विगोरित्यनेनेति भावः । नन्वेवं पुरुषस्य कदापि तिर्यगव-स्थितवस्त्वपरिच्छेदकत्वेनाप्रमाणत्वात्प्रमाण इति विशेषणासङ्गतिरत आह । परिच्छेदकमात्रेति । उन्मानवाचिना पुरुषशब्देनान्वयानुरोधादिति भावः । ननु पुरुषशब्दस्य जातिवाचकतायाः प्रसिद्धत्वेनेदं दुर्वचमत आह । जाति-वचनस्यापीति । प्रत्ययस्येति । ठक इति भावः । ननु परिमाणग्रहणात्कथं तत्प्राप्तिरत आह । तत्र हीति । उत्तरसूत्रानुरोधादिति । संख्यायाः

ऊधसो ॥ **समासान्तोऽयम्। तत्र स्त्रियामित्युपसंख्यानादाह– स्त्रियामिति। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवर्त्तते। ङित्त्वाच्चास्याऽदेशत्वम्। डाब्ङीब्निषेधेष्विति। समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या पूर्वमनङ्येषां प्राप्तिः। 'अन उपधालोपिन' इत्यत्रास्यानुवृत्त्या ङीपोऽपि बाधः। एतेन मद्ध्येऽपवादन्यायाड्डाब्निषेधयोरिदं बाधकमित्यपास्तमिति भावः। ङीषिति। ङीपि तु कुण्डोधन्शब्दे पूर्वपदप्रकृतिस्वरेण धकाराकार-**

---

संज्ञासङ्घेत्याद्युत्तरसूत्रघटकसंख्याया इत्यनेनान्वयानुरोधादिति भावः। संख्या हि न पारिभाषिकं प्रमाणम् ॥

**समासान्त इति**। तेनास्य कबपवादत्वादत्र विषये स नेति भावः। अस्य स्त्र्यधिकारस्थत्वाभावादाह। **तत्रेति**। अनङ्विधावित्यर्थः। **आदेशत्वमिति**। समासान्तप्रकरणस्थत्वेऽप्यस्य न प्रत्ययत्वं, किन्तु ङित्त्वसामर्थ्यादादेशत्वमेव। लोपस्येवास्यापि स्थानिद्वारेण समासान्तत्वमिति भावः। एतेनास्य प्रत्ययत्वप्रतिपादनं चिदस्थिमालाकाराणां नादरणीयमिति बोध्यम्। नन्वनङ्ङीषोः समानविषयकत्वेन विधानसामर्थ्यात्तयोः पर्यायेण प्रवृत्तौ ङीष्पक्षेऽनङोऽभावात्कथं तद्विषये डाब्ङीब्निषेधानां प्राप्तिरत आह। **समासान्तानामिति**। तथा चानयोस्समानविषयकत्वेपि कालभेदेन प्रवृत्त्या ङीब्विषये तेषां प्राप्तिः सुवचैवेति भावः। ननु मध्येऽपवादन्यायेनेदं डाब्निषेधयोरेव बाधकं, न त्वन उपधेति ङीपः, तस्य परत्वादत आह। **अन उपधेति**। तत्रास्यानुवृत्त्या वाक्यभेदेन व्याख्यानात्तस्याप्यनेन बाध इति भावः। एतेन=उक्तरीत्या ङीपोऽपि बाधकत्वेन। नन्वत्र ङीब्ङीषोः को विशेषः? ङीप्यप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वस्यैव सत्त्वादित्याशङ्क्य तदप्राप्तिं दर्शयति। **ङीपि त्विति**। **पूर्वपदेति**। बहुव्रीहित्वप्रयुक्तेत्यादिः। नन्वत्रानोऽनर्थकत्वात्कथं तत्प्राप्तिरत

स्यानुदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्याऽन्तोदात्तत्वन्न सिद्ध्येत । कुण्डमिवोधो यस्या इति विग्रहः । बहुव्रीहेः किम् । ऊधः प्राप्ता प्राप्तोधाः 'प्राप्तापन्ने च' इति समासः । अव्ययग्रहणाननुवृत्तेरिति । अस्वरितत्वादिति भावः । निषेधावपीति । अपिना 'अन उपधा' इति ङीप् । अन्ग्रहणेऽनर्थकस्यापि ग्रहणात् । द्विहायनी बालेति । 'द्विहायनी द्विवर्षा गौः' इति प्रायोवाद इत्येके । बालेत्यस्य गौरित्यर्थ इत्यन्ये ॥

नित्यं सञ्ज्ञा । ननु सञ्ज्ञाशब्दा नियतानुपूर्वीका अनादयः, छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवाद् 'अन उपधा' इत्येव सिद्धे इदं व्यर्थमिति चेदुत्तरार्थत्वात् । योगविभागस्तु व्यर्थ एव । तद् ध्वनयन् लक्षणान्तरसिद्धमुदाहरति—वेदे पञ्चदाम्नीति । क्व चित्तु शतमूर्ध्नीति पाठः । केवलमामक । अस्मच्छब्दादणि 'तवकममकावेकवचने' इति ममकादेशः । भागशब्दात्पुंलिङ्गात्स्वार्थेऽभिधेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्त्वात्स्त्रीत्वम् । पापशब्दोऽर्शआद्यचा तद्वति वर्त्तमानः स्त्रियाम् । अपरः पवर्गमध्यो घृतादित्वादन्तोदात्तः । 'उतापरं

---

आह । अन्ग्रहण इति । यथाश्रुतमूलानुरोधेन कोशस्यान्यथा नयनं नोचितमित्याशयेनाह । बालेत्यस्येति ॥

लक्षणान्तरेति । दामहायनान्ताच्चेतीत्यर्थः । एतेनायमपपाठः, दामेत्यनेन सिद्धत्वादिति वदन्तः परास्ताः । इदानींतनपुस्तकेषु शतमूर्ध्नीति पाठ एव प्रायः परिदृश्यते । अस्मच्छब्दादणीति । अणन्तयोर्मामकभेषजशब्दयोरत्रोपादानं तु संज्ञाछन्दसोरेवेति नियमार्थं, तेनान्यत्र टाबेवेति बोध्यम् । ननु पापशब्दस्य नित्यनपुंसकत्वेन कथं स्त्रियां वृत्तिरत आह । अर्श आद्यचेति ।

यक्षिदेवान्' इत्यादौ 'उतापरीभ्यो मघवा' इत्यादौ चान्तोदात्त-पाठात्। पूर्वमनयन्नापरमित्यादौ पठ्यमानमाद्युदात्तत्वमपि, वृषादित्वात्। अपराः पूर्वामध्येतीत्यादावजादिपाठाट्टाबपि। आर्येण कृतेति प्राक् सुबुत्पत्तेः समासेऽदन्तत्वम्। भेषजशब्दोऽव्युत्पन्न औषधे रूढः। भिषज इदमित्याणि भैषजशब्दोऽपि तत्र। सुमङ्गलीरियं वधूरिति तु मत्वर्थीये ईप्रत्यये बोद्धव्यम्॥

प्रकृतिभागाविति। नुक्सन्नियोगेनेति भावः। मतुबिति। वत्वन्तु 'मादुपधाया' इति सिद्धम्। यज्ञेन संबन्ध इति। क्रिया इत्यर्थः। संयोगपदं संबन्धोपलक्षणम्। संबन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वं, तदाह—तत्कर्तृकेति। विभाषा। सहशब्दो विद्यमानवाची, पूर्वशब्दोऽवयववाची, व्याख्यानात्। तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवादव्यभिचाराच्च पतिशब्देन तदन्तं

---

तत्रेति। औषधे रूढ इत्यर्थः। ननु सुमङ्गलीशब्दस्य ङ्यन्तत्वात्सुमङ्गलीरियमित्यत्र सुलोपेन भाव्यमत आह। ईप्रत्यये इति। छन्दसीवनिपावित्यनेनेत्यर्थः॥

यज्ञसंयोग इत्यस्य पत्यावन्वयभ्रमवारणायाह। क्रिया इति। ननु यज्ञसंयोग इत्यनुपपन्नं, यज्ञस्य क्रियारूपतया तत्प्रतियोगिकसंयोगाप्रसिद्धेरत आह। संयोगपदमिति। ऐश्वर्यवत्त्वमिति। स्वामित्ववत्त्वमित्यर्थः। विद्यमानवाचीति। न तु तुल्ययोगवाची, तथा सति पूर्वस्यापि नकारादेशप्रसङ्गादिति भावः। अवयववाचीति। न तु व्यवस्थावाची। तथासति वाक्येऽतिप्रसङ्गादिति भावः। एवं च सह = विद्यमानः पूर्वावयवो यस्येत्यर्थः। तत्रेति। तथाऽर्थे सतीत्यर्थः। ननु परूपावयवस्यैव पूर्वशब्देन ग्रहणे केवलपतिशब्दस्यापि तत्संभवोऽत आह। अव्यभिचाराच्चेति। तथाच सपूर्वस्येति

गृह्यत इत्याह—पतिशब्दान्तस्येत्यादि। न पत्युरिति। सपूर्वस्येत्यनेन पत्यन्तस्य गृह्यमाणत्वादिति भावः। बह्वो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थोऽप्यनुपसर्जनपदसम्बन्ध इत्यन्ये, बहुव्रीहावित्युपसर्जनोपलक्षणम्। तेन पतिमतिक्रान्ताऽतिपत्नीत्यपि। व्यस्ते इति। 'विभाषा सपूर्वस्य' इत्यत्र यज्ञसंयोग इति न सम्बद्ध्यते, भाष्ये 'कथं तुषजकस्य पत्नी' इति व्यस्ते एव

---

विशेषणसामर्थ्यात्तदन्तविधिरिति भावः। यद्यप्यमहत्पूर्वग्रहणेनात्र प्रकरणे तदन्तविधिज्ञापनेन, ग्रहणवतेति निषेधस्य प्रत्ययविधिविषयत्वेन प्रकृते तदप्रवृत्त्या च सपूर्वस्येति विशेषणाभावेऽपि वृषलपत्नीत्यादौ नत्वं सिद्ध्यति, तथाप्यसति तस्मिन्ननुपसर्जनादिति पत्युरेव विशेषणं स्यान्न तदन्तस्य, तस्य गृह्यमाणविशेषणत्वानियमात्। तथाच दृढपत्नीत्यादिबहुव्रीहौ न स्यादतः सपूर्वग्रहणम्। सपूर्वस्येत्युक्तौ तु तदन्तस्यैव विशेषणं, तस्य गृह्यमाणत्वादिति बोध्यम्। तदेतद्ध्वनयन्नाह। सपूर्वस्येत्यनेनेत्यादिना। उत्तरार्थमनुवृत्तमपीति मूलमयुक्तमिति सूचयंस्तस्यात्रापि फलं दर्शयति। बह्व इत्यादिना। नच विशिष्टस्यापि पत्यन्तत्वात्तस्य चानुपसर्जनत्वात्तदनुवृत्तावप्यत्र नत्वं दुर्वारमेवेति वाच्यम्। सपूर्वस्येत्यनेन विद्यमानपूर्वावयवपतिशब्दस्यैव गृह्यमाणत्वात्तत्रैव तत्संबन्धेन तादृशस्य वृषलपतिशब्दस्यात्रोपसर्जनत्वेन नत्वस्य सुवारत्वात्। बहुवृषलशब्दस्य पतिशब्देन समासाभावेन विशिष्टस्य तादृशपतिशब्दत्वाभावात्। एतेन वस्तुतस्तु बहुवृषलपतिरिति बहुव्रीहेरपि पत्यन्तत्वात्तस्य चानुपसर्जनत्वादत्रापि नकारो भवत्येवेत्याचार्योक्तमपास्तम्। मूलस्य न्यूनतां परिहरति। बहुव्रीहाविति। नन्वत्रापि यज्ञसंयोग इत्यस्यानुवृत्त्या वृषलपत्नीति षष्ठीतत्पुरुषेऽप्यनुपपत्तिसत्त्वाद्व्यस्ते इति विशिष्योपादानं व्यर्थमत आह। विभाषेति। व्यस्ते एव प्रश्नादिति। अनेन समस्ते विभाषेत्यनेन सिद्धिः सूचिता। तत्रापि

प्रश्नात् । वृषलत्वेन यज्ञसंयोगाभावात्पूर्वेणाप्राप्तेः, सपूर्वत्वाभावा-च्चैतदप्राप्तेरिति भावः । उपचारादिति । पाणिग्रहणाश्रयणादिति भावः । यद्वेति । इदं प्रौढ्या । तत्प्रकृतिककर्तृक्विपि दृढमानाभावात् । पूर्वसूत्रे यज्ञसंयोग इति तु 'वृषलस्य पतिः स्त्री' इति प्रयोगसाधनार्थम् । सपूर्वस्य किमिति । अवयववाची पूर्वशब्दः किमर्थ इति प्रश्नः । गवां पतिरिति । स्वामिनीत्यर्थः । निपात्यत इति । तेन

---

यज्ञसंयोग इत्यस्य संबन्धे तु तदसङ्गतिरिति भावः । मूले उपचारादिति । सादृश्यादित्यर्थः । सादृश्यप्रयोजकं धर्मं दर्शयति । पाणिग्रहणाश्रयणादिति । अग्निसाक्षिकं यत्पाणिग्रहणं तन्निमित्तात्सादृश्यादित्यर्थः । वृषलादीनामप्यग्निसाक्षिकं तदस्तीति तन्निमित्तात्सादृश्यात्प्रसिद्धपत्नीशब्दस्यात्र प्रयोग इति भावः । येषां तदपि नास्ति, तत्र धर्मान्तरेण सादृश्यं ग्राह्यमित्युद्योते स्पष्टम् । इदं च तस्याप्युपलक्षणमिति बोध्यम् । दृढमानाभावादिति । अन्येभ्योऽपीति धातुसामान्यात्कर्तृक्विपो विधानेऽपि भाष्ये कथं तुषजकस्य पत्नीत्याशङ्क्य 'उपमानात्सिद्धं, पत्नीव पत्नी'ति समाधानस्यैवोक्तत्वादिति भावः । नन्वन्यत्रापि कथंचित्पत्नीशब्दप्रयोगस्य प्रामाणिकत्वे सिद्धे पूर्वत्र यज्ञसंयोग इति व्यर्थमत आह । वृषलस्य पतिरिति । वृषलकर्तृकसुकृतस्वामिनीत्यर्थः । ननु सपूर्वस्य किं? गवां पतिरिति मूलमसङ्गतं, सपूर्वस्येत्युक्तावप्येतद्दोषतादवस्थ्यात् । गवामित्यस्य पूर्वोच्चारितस्य सत्त्वादित्याशङ्क्य तदाशयं दर्शयति । अवयववाचीति । सपूर्वाया इत्यादाविव पूर्ववृत्तिवाच्येवास्त्विति भावः । गवां पतिरितीति । विद्यमानपूर्ववृत्तिकपतिशब्दस्यानुपसर्जनस्य सादेश इत्यर्थेऽत्रापि गवामित्यस्य पूर्वस्य सत्त्वान्नादेशप्रसङ्ग इति भावः । नन्वेवमपि तस्योदात्तत्वे मानाभावादिष्टस्वरासिद्धिरत आह । तेनेति । निपातनेनेत्यर्थः । नन्वर्धमात्रालाघवानुरोधेन

च्चोदात्तसादेशस्यैव प्रवृत्त्या सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम् । किं च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीन्नकार-विशिष्टोच्चारणम् । अत एव समानस्वामिकदासीभूम्यादौ सपतिरित्येव । समानत्वं चैकस्यैव तत्तत्पत्नीसम्बन्धेन भेदमारोप्य बोद्धव्यम् । मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोग इष्यते । त्रिसूत्रीति । व्याख्यानादिति भावः । सन्नियोगशिष्ट इति । तेन तदभावे ङीषपि नेति भावः । नितान्तानामित्यत्राकार उच्चारणार्थः । नितन्तानामिति पाठे जश्त्वाभावः सौत्रः ॥

त्रीण्येतानीति । अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तमनुपसर्जनमेव । अनुपसर्जनादिति चात्र तदन्तविशेषणम् । अत एव गृह्यवृत्तिकृता नारायणेनात्र बहुव्रीहिं कृत्वाऽनेन ङीबित्युक्तं, तदनुसारेण चेदम् । परे तु 'उपमानानि' इति सूत्रस्थभाष्यस्वरसात्

---

नित्यं सपत्न्यादिष्वित्येव वक्तव्ये ङीन्नकारविशिष्टोच्चारणं व्यर्थमत आह । किंचेति । अत एव = सपत्नीशब्दस्य स्त्रीविशेषे रूढिस्वीकारादेव । ननु समानः पतिर्यस्येत्यर्थोऽत्रानुपपन्नः । सादृश्यस्य भेदघटितत्वेनैकस्मिंस्तदसंभवादत आह । समानत्वं चेति । भेदमारोप्येति । पत्नीगतस्य परस्परप्रतियोगिकभेदस्य तत्तत्संबन्धात्तत्रारोप इति भावः । न तथा प्रयोग इष्यत इति । विशिष्टोच्चारणेन स्त्रीविशेष एव सपत्नीशब्दस्य साधुत्वबोधनादिति भावः । व्याख्यानादिति । पूतक्रत्वादीनां पुंयोगप्रकरणे वचनमिति वार्तिकमूलकादित्यर्थः ॥

तदनुसारेणेति । गृह्यवृत्तिकारानुसारेणेत्यर्थः । सिद्धान्तमाह । परे त्विति । अत्रापीति । वर्णादनुदात्त इत्यत्रापीत्यर्थः । अत्र गृह्यमाणविशेष-

**'टिड्ढाणञ्' इत्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्तत्वाच्चात्रापि तथैवोचितम्। तत्र हि शस्त्रीश्यामेत्यादौ श्यामाशब्दः शस्त्र्यामेव, उपमेयन्तु समासवाच्यमिति पक्षे 'शस्त्रीश्यामो देवदत्त इत्यत्र ह्रस्वत्वन्न सिद्ध्यति। यद्युपसर्जनस्येति ह्रस्वत्वं, तदा कुम्भकपाल-**

---

णत्वे भाष्यस्वारस्यं दर्शयति। तत्र हीत्यादिना। **श्यामाशब्दः शस्त्र्यामेवेति**। अन्यथा वैयधिकरण्यात्समासाप्रसङ्गः। वचनसामर्थ्यात्समासाश्रयणे तु मृगीव चपला मृगचपलेत्यादौ पुंवद्भावो न स्यादिति भावः। ननु पूर्वोत्तरपदयोरुपमानवृत्तित्वे तदतिरिक्तशब्दान्तराभावात्केन तदुपमेयमुच्यत इत्यत आह। **समासवाच्यमिति**। अर्थाभिधानस्य स्वाभाविकत्वादन्यपदार्थग्रहणमन्तरेणापि शस्त्रीश्यामादिकः समास उपमेयस्य वाचकः। यथाश्वकर्णादयः शब्दा जातिविशेषस्येति भावः। **इति पक्षे इति**। अत्र पक्षे शस्त्री श्यामेवेयमिति लौकिकविग्रहः। **ह्रस्वत्वं न सिद्ध्यतीति**। गुणवचनस्याश्रयलिङ्गानुविधायित्वात्स्त्रीलिङ्गेन श्यामाशब्देन समासे ह्रस्वघटितरूपासिद्धिरिति भावः। एतेन पुंलिङ्गश्यामशब्देन समासे रूपसिद्धिरिति शङ्का निरस्ता। उपमानवृत्तेः श्यामाशब्दस्यात्र पुंलिङ्गताया वक्तुमशक्यत्वात्। **ह्रस्वत्वमिति**। उपमानभूतश्यामाशब्दार्थस्य समासार्थोपमेयं प्रत्यप्रधानत्वादुपसर्जनत्वमित्याशयः। गोस्त्रियोरित्यत्र केवललौकिकमेवोपसर्जनं गृह्यत इत्याशयेनेयमुक्तिः। यदि तु लौकिकोपसर्जनत्वसमानाधिकरणशास्त्रीयोपसर्जनत्वस्यैव तत्र ग्रहणमिति सिद्धान्तस्तदा श्यामाशब्दस्य समासशास्त्रीयप्रथमानिर्दिष्टत्वरूपस्य, विग्रहे नियतविभक्तिकत्वरूपस्य वा शास्त्रीयोपसर्जनत्वस्याऽभावात्तत्रापि दोषो दुर्वार एवेति बोध्यम्। ह्रस्वविधौ केवललौकिकोपसर्जनग्रहणमभ्युपेत्य भाष्ये दोषान्तरमाह। **कुम्भकपालेति**। कुम्भकपालं लोहितमिवेयमिति लौकिकविग्रहः। अत्रोपमानभूतस्य कुम्भक-

लोहिनीत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोति' इत्युक्तम् । त्र्येण्येत्यस्य त्रिषु स्थानेषु एन्येत्यर्थो बोद्धव्य इत्याहुः । आर्षमत्र णत्वम् । वर्णात्किम्, प्रकृता । 'गतिरनन्तरः' इत्याद्युदात्तः । अन्तोदात्त इति । 'श्वेतो वाजी जायते' इत्यादौ तथा पाठादिति भावः । 'छन्दसि क्नम्' इति नादेशापवादः । तेन 'उत्सर्गसमानदेशा अपवादा' इति न्यायात्तस्थानिकत्वं ङीप्संनियोगशिष्टत्वञ्चास्य बोद्धव्यम् । विशुद्धिवाचीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः ॥

---

पालस्य नपुंसकवृत्तित्वात्तत्समानाधिकरणस्य लोहितशब्दस्य स्त्रियामप्रवृत्तेः समासात्प्राक् स्त्रीप्रत्ययो न भवति । समासे कृते त्वनुपसर्जनादिति प्रतिषेधान्ङीपोऽप्राप्तिरित्याशयः । यदि त्वनुपसर्जनादिति तदन्तविशेषणमेव स्यात्तदा विशिष्टस्यानुपसर्जनत्वेन तदसङ्गतिः स्पष्टैवेति भावः । नन्वेवं गृह्यसूत्रप्रयोगस्य का गतिरत आह । त्रिषु स्थानेष्विति । सुप्सुपेति समासः । विधतिक्रियाध्याहारेण सामर्थ्यमत्र बोध्यम् । आर्षमत्र णत्वमिति । समानपदत्वाभावादट्कुप्वाङित्यस्य, संज्ञात्वाभावात्पूर्वपदादित्यस्य चाप्राप्तेरिति भावः । श्वेतशब्दस्य घृतादिपाठे मानमाह । श्वेतो वाजीति । क्नादेशस्यानेकाल्त्वात्सर्वादेशत्वशङ्कायामाह । नादेशापवाद इति । तस्थानिकत्वमिति । तकारस्थानिकत्वमित्यर्थः । इदमसंभव एव बाधकत्वमिति वार्तिकमतानुसारेण । विषयभेदेऽपि बाधकत्वमिति भाष्यनये तूत्सर्गसमानदेशा इति न्यायस्याभावेन वर्णादनुदात्तादित्यतस्त इत्यस्यानुवृत्त्या तकारस्थानिकत्वमत्र बोध्यम् । तत्प्रवृत्तीति । विशुद्धिप्रवृत्तिनिमित्तक इत्यर्थः । त्रीणि यस्यावदातानि विद्या योनिश्च कर्म चेत्यादौ तथैव प्रतीतेः । दैप् शोधन इति स्मरणाच्चेति भावः । नचैवमवदातस्सितो गौर इति कोशानुपपत्तिः । विशुद्धत्वसाधर्म्यात्तत्रापि तत्प्रवृत्तिसंभवात् ॥

अन्यतो ॥ सन्निधानाद् व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनान्वय इत्याह—तोपधभिन्नादिति । वर्णातिक्रम् । खट्वा । आद्युदात्तः । नर्त्तकीति । शिल्पिनि ष्वुन् । गौरशब्दो वर्णवाच्यप्यन्तोदात्त इतीह पाठः । अनड्वाहीति । 'आमनडुहः स्त्रियां वा' इति वचनात्पक्षे आम् । सूर्येति । स चेद्य इति । सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु सौरी बलाकेति न सिद्ध्येत् । सूर्येणैकदिगित्यणन्तात् ङीपि अणन्तमङ्गं न सूर्यशब्द इति तदसिद्धिः । वचनन्तु सूरी कुन्तीत्यत्र चरितार्थम् । अणो लोपेऽप्याभीयत्वेन सोऽसिद्धः, अण्निमित्तकाल्लोपस्तु व्याश्रयत्वान्नासिद्ध इति यस्यो-

---

पूर्वसूत्रे वर्णादित्यस्य विशेष्यत्वेनार्थसन्निधानस्य तत्रापि सत्त्वादाह । व्याख्यानादिति । तित्तिरिकल्माषीत्युपमानानीति सूत्रस्थभाष्यप्रयोगदर्शनमूलकादित्यर्थः । पूर्वसूत्रे विशेष्यभूतवर्णवाचकस्यैवात्र भेदप्रतियोगित्वेनान्वये तदनुपपत्तिः स्पष्टैव । कल्माषशब्दस्य वर्णवाचित्वादिति बोध्यम् । अप्यङ्गविकलत्वायाह । आद्युदात्त इति । ष्वुनिति । इति सूत्रेण ष्वुनित्यर्थः । षित्त्वस्यावयवेऽचारितार्थ्यात्तदन्ते तत्कार्यमिति भावः । गौरशब्दस्य पूर्वसूत्राविषयत्वं दर्शयति । अन्तोदात्त इति । प्रातिपदिकस्वरेणेति भावः । स चेत्सूर्याद्यवयव इति व्याख्याने फलमाह । सूर्यादीनामिति । अत्राङ्गत्वं प्रत्यासत्त्या ङीनिरूपितमेव ग्राह्यमिति बोध्यम् । अणन्तमङ्गमिति । ङीनिरूपितमङ्गमित्यर्थः । ननु वचनसामर्थ्यात्स्यादत आह । वचनं त्विति । सूरीति । सूर्यशब्दात्पुंयोगलक्षणोऽत्र ङीष् । नन्वणोऽकारस्य यस्येति लोपे एकदेशविकृतन्यायेनास्त्येव सूर्यादिरूपमङ्गमत आह । अणो लोपेऽपीति । नन्वेवमण्णिमित्तकाल्लोपस्यापि तेनैवासिद्धत्वाद्यस्योपधात्वाभावेन मूलोक्तव्याख्यानेऽपि तत्र लोपो दुर्लभ इत्यत आह । अण्णिमित्तकेति । नन्वसिद्धवदिति सूत्रे

पधात्वम्, उपधाग्रहणादेव भाधिकारमभिव्याप्याभीयासिद्धत्व-मिति बोध्यम् । यग्रहणन्तूत्तरार्थम् । ङ्यामिति निर्देशात्सप्तम्येक-वचनस्याग्रहणम् । नक्षत्राणीति । नक्षत्रवाचकाद् योऽण् तत्रेत्यर्थः । तेन तिष्येण युक्तं तैषमहः, तिष्ये भवस्तैष इत्यादि सिद्धम् ।

आङो मर्यादार्थकत्वे नात्र तत्प्राप्तिरत आह । उपधाग्रहणादेवेति । अन्यथा यान्तानां सूर्यादीनां लोपो ङ्यादावित्यर्थेनैवैकदेशविकृतन्यायेन सौरीत्यादि-सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । उपधाग्रहणेनोक्तार्थज्ञापनादेव शुन इत्यादौ संप्रसारण-स्यासिद्धत्वान्न संयोगादिति निषेधेनाल्लोपोऽन इति लोपो न । अल्लोपेऽपि तस्य स्थानिवत्त्वेन यणापत्तिः । बहुश्वेत्यादावन उपधेति ङीबापत्तिश्च । एवं भूया-नित्यादौ बहोर्लोप इत्यस्यासिद्धत्वादोर्गुणो न । एवं तिर्यञ्चमाचष्टे तिराययती-त्यादावचष्टिलोपेनापहारे चिणो लुङ्न्यायेन तस्यासिद्धत्वात्पुनष्टिलोपो नेति बोध्यम् । ननूपधापदसत्त्वे सूर्यादीनामुपधाभूतो य एव संभवतीति यग्रहणं व्यर्थमत आह । उत्तरार्थमिति । हलस्तद्धितस्येत्यर्थमित्यर्थः । नक्षत्राणीत्य-नेन नक्षत्रेण युक्तः काल इति सूत्रविहितस्यैवाणः प्रथममुपस्थित्या तस्यैव ग्रहणमिति शङ्कावारणायाह । नक्षत्रवाचकादिति । वार्तिके नक्षत्राणीत्यस्य नक्षत्रसंबन्धिन्यणीत्यर्थः । तत्संबन्धित्वं च तद्वाचकाद्विहितत्वमेव । तेन नक्षत्रेण युक्तः कालः, सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणिति सूत्रविहितयोरुभयोरपि ग्रहणम् । उभयोरपि नक्षत्रवाचकाद्विहितत्वात् । तैषं, पौष इति लिङ्गभेदेनो-दाहरता भगवताप्ययमर्थो ध्वनितः । तत्राद्यस्य तिष्येण युक्तमहरित्यर्थः । अन्त्यस्य पुष्ये भव इत्यर्थः । देवताद्यर्थकस्याणस्तु नेह ग्रहणम् । लक्षणप्रति-पदोक्तपरिभाषया प्रतिपदोक्तस्यैवात्र ग्रहणौचित्यात् । अत एवोद्योतेऽस्यार्थस्य तिष्ये पुष्ये च भवः, तैषः पौष इति भवार्थकाणन्त एव लोपसिद्धिः फलत्वेन प्रदर्शिता । व्यावर्त्यन्तु तिष्यसंज्ञकपुरुषस्येदं तैष्यमित्यादौ बोध्यम् । तत्रेति । तस्मिन्परत इत्यर्थः । तेनेति । सर्वस्यापि ग्रहणेनेत्यर्थः । इत्यादीति ।

मातरि षिच्चेति। पितामहीसिद्ध्यर्थमिदम्। दंष्ट्रेति। दंशेः 'दाम्नीशस' इति करणे ष्ट्रन्। अयमजादिषु पठ्यते। गौरादिषु मातामहीशब्दपाठोऽनार्ष इत्यन्ये॥

जानपदीति। जनपदे भवेत्यर्थः। उत्सादित्वादञ्। ङीप्याद्युदात्तत्वे प्राप्तेऽन्तोदात्तार्थं वचनम्। वृत्तिः-अनुच्छेद्या जीविका। अप्रत्यय इति। तथा च क्रियाशब्दोऽयमिति भावः। अमत्रे—कमण्डलुरूपे। कुण्डीकमण्डलौ जारात् पतिवत्नीसुते पुमान्, इति मेदिनीकोशात्स तत्र नित्यस्त्रीलिङ्ग इति भावः। यदि तु 'पिठरं तु न ना कुण्डम्' इति विश्वकोशे तस्य नपुंसकत्वमप्युक्तं, पिठरा-

---

आदिना पुष्येण युक्तं पौषमहः, पुष्ये भवः पौष इत्यनयोः संग्रहः। अत्रादिपदेन तिष्यस्येदं तैषम्। तिष्यो देवता अस्य तैषमित्यादेः संग्रह इति चिदस्थिमालाकारोक्तं तु न समञ्जसम्। प्रतिपदोक्तपरिभाषाया अप्रवृत्तौ मानाभावेन तयोरत्राग्रहणात्। अत एवोद्योते 'नक्षत्रवाचकाद्योऽण् स सर्वोऽपि गृह्यते, अत एव तिष्ये पुष्ये च भवस्तैषः पौष इत्यत्रापि लोप इत्येवोक्तं, न तु तत्रादिपदमुपात्तम्। आदिपदग्राह्यस्य तदतिरिक्तस्याभावात्। ननु मातामहशब्दस्य गौरादिपाठादेव ङीषि सिद्धे पितृव्यमातुलेति सूत्रस्थमिदं वार्तिकं व्यर्थमत आह। पितामहीति। अन्ये इति। सिद्धान्तिन इत्यर्थः॥

क्रियाशब्द इति। क्रियाप्रवृत्तिनिमित्तक इत्यर्थः। एतेन जातिलक्षणस्य ङीषोऽप्राप्तिः सूचिता। मेदिनीकोशादिति। इदमुपलक्षणम्, अस्त्री कमण्डलुः कुण्डीत्यमरकोशस्यापि। सः=कुण्डशब्दः। तत्र=अमत्रार्थे। ननु विश्वकोशादमत्रार्थे तस्य नपुंसकत्वस्यापि लाभाज्जातिसूत्रेणैव ङीषः प्राप्तेः कथमस्य विधित्वमत आह। यदि त्विति। विश्वकोशस्यामरकोशविरोधं परिहरति।

मत्रशब्दौ च पर्यायौ 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरे नपुंसकत्वमात्रोक्तिस्त्ववयुत्याऽनुवाद इत्युच्यते, तदाऽनेकविधसंस्थानेष्वमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तो ङीषिति बोध्यम्। स्त्रीविषयत्वादित्युपलक्षणमिति बहवः। कमण्डलुसंस्थानस्यानुगतत्वात्तद्रूपामत्रवाचिनो जातित्वमप्यस्ति। सूत्रन्तु नियमार्थमेव। अमृते जारजायां कुण्डेत्येवेत्यपरे। आवपने च नित्यस्त्रीत्वादप्राप्तस्य ङीषो विधिः। आवपनमिति सामान्ये नपुंसकम्। गुणयोगादिति। गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः। विधित्वानुरोधाद् गौण

---

पिठरमिति। जातित्वाभावादिति। अनुगतावयवसंस्थानव्यङ्ग्यत्वाभावादिति भावः। नन्वेवं मूलासङ्गतिरत आह। उपलक्षणमिति। जातित्वाभावादित्यस्येति भावः। मूलोक्तं दूषयन्स्वसिद्धान्तमाह। कमण्डल्विति। नन्वेवं जातिसूत्रेणैव ङीषि सिद्धे किमर्थमत्र सूत्रेऽमत्रग्रहणमत आह। सूत्रं त्विति। सूत्रेऽमत्रग्रहणं त्वित्यर्थः। नियमार्थमिति। कुण्डशब्दाद्यदि ङीष् स्यात्तदा अमत्र एवेति नियमार्थमिति भावः। तत्फलमाह। अमृत इति। ननु मूले आवपनं चेदित्युक्तं, तस्य ल्युडन्तत्वेन टित्त्वान्ङीपः प्राप्तेरत आह। आवपनमिति। अपदकार्यत्वादिति। गौणमुख्यन्यायस्य पदकार्य एव प्रवृत्तेरिति भावः। ननु मुख्ये एवास्य प्रवृत्तिः कुतो नेत्यत आह। विधित्वानुरोधादिति। अत्र नागशब्दस्य गौणस्य ग्रहणे विधायकत्वस्य, मुख्यस्य ग्रहणे जातिसूत्रेण प्राप्तस्य ङीषो नियामकतायाश्च वक्तव्यत्वेन विधिनियमसंभवे विधिरेव ज्यायानिति न्यायेन विधित्वानुरोधाद्गौणस्यैवात्र ग्रहणमिति भावः। नच नागेशमते सर्वत्र प्रवृत्तिनिमित्तारोपस्यैव लक्षणात्वेन गौणस्यापि तस्य जातिवाचकत्वाज्जातिसूत्रेण ङीषः प्राप्त्या कथमस्य विधित्वसंभव इति वाच्यम्। अस्त्रीविषयादिति विशेषणस्वारस्येन पुंयोगादाख्यायामिति सूत्रारम्भ-

एवास्य प्रवृत्तिः। वर्णश्चेदिति। तद्विशिष्टश्चेत्यर्थः। अन्यथा 'गुणे शुक्लादयः पुंसि' इत्युक्त्याऽसंगतं स्यादिति बोध्यम्। सूत्रे वर्णशब्दोऽर्शआद्यजन्तः। कालाऽन्येति। क्रौर्यगुणयुक्तेत्यर्थः। नील्या अनिति। वृत्त्यनुसारेणेदम्। प्रतिपदोक्तत्वादन्प्रकृतिर्ङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं, न त्वस्य। लाक्षणिकत्वात्। अनाच्छादने इति नीलवर्णवती शाटीत्यर्थे नीलीति वारणाय चरितार्थम्। नील्या रक्ता गौरित्यर्थे नीलेत्येवोचितमिति परे। मैथुनेच्छाशब्दोऽर्शआद्यजन्तस्तद्वतीत्यर्थः। अन्येति। मैथुनादन्यद् या इच्छति। कमेः 'लषपद' इत्युकञ्। शोणशब्दो वर्णवाची 'वर्णानां तण' इत्याद्युदात्तः। अन्यत इति सिद्धे विकल्पार्थमिदम्॥

---

सामर्थ्येन चानारोपितजातिवाचकस्यैव जातिसूत्रे ग्रहणेन गौणे तदप्रवृत्त्या तत्संभवात्। असङ्गतं स्यादिति। कालशब्दस्य वर्णवाचकत्वे स्त्रीत्वमसङ्गतं स्यादित्यर्थः। ननु नीलया अनिति वार्तिकनिष्पन्नस्य लाक्षणिकत्वेन सूत्रेऽग्रहणात्कथमिदं प्रत्युदाहरणमत आह। वृत्त्यनुसारेणेति। तदनाश्रयणेन प्रवृत्तवृत्त्यनुसारेणेत्यर्थः। सिद्धान्तमाह। प्रतिपदोक्तत्वादिति। परिभाषानाश्रयणे मानाभाव इति भावः। नन्वेवमनाच्छादन इत्यस्य किं व्यावर्त्यमत आह। अनाच्छादन इति। नन्वेवं नीलया रक्ता गौरित्यर्थे नीलीति न स्यादत आह। नीलेत्येवोचितमिति। लक्षणप्रतिपदोक्तपरिभाषया अन्नन्तस्याग्रहणादिति भावः। अस्मादेव सूत्रनिर्देशाद्व्याधिकरणोऽपि बहुव्रीहिस्साधुरिति हरदत्तग्रन्थोऽयुक्त इति सूचयन्नाह। अर्श आद्यजिति। अन्यदिति। धनादिकमित्यर्थः॥

नन्वत्र गुणशब्देन न कृत्रिमग्रहणम्, उत इति विशेषणाद्वचनग्रहणाच्च। नापि विशेषणस्य। आखुर्द्रव्यमित्यादावतिप्रसङ्गात्। नापि नैयायिकाभिमतो

वार्तो ॥ अत्र गुणवचनशब्देन समस्त-कृदन्त-तद्धितान्त-सर्वनाम-जाति-संख्या-सञ्ज्ञाशब्दातिरिक्तशब्दो गृह्यते । आकडारसूत्रभाष्यपर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् । तत्र हि प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाऽग्रे तद्बाधकत्वेनैताः

---

गुणः, मृद्वी, पट्वीत्यादेरसिद्ध्यापत्तेरित्यत आह । गुणवचनशब्देनेति । अत्र गुणवचनशब्देन समासाद्यतिरिक्तस्य ग्रहणे मानमाह । आकडारेति । तद्बाधकत्वेनेति । गुणवचनसंज्ञाबाधकत्वेनेत्यर्थः । तत्र हि भाष्ये 'अर्थवत्प्रातिपदिकमित्यर्थवतः प्रातिपदिकसंज्ञामुक्त्वा ततस्तस्यैव गुणवचनं चेति गुणवचनसंज्ञा विहिता । ततश्च समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः। संख्या, डुच, एकद्रव्योपनिवेशिनी संज्ञेति समासादिसंज्ञाः क्रमेण तद्बाधकत्वेनोक्ताः । डुशब्देन च षट्संज्ञोच्यते । अत्र गुणवचनं चेति प्रतीकमुपादायैकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशः । उत्तरासु च संज्ञासु प्रातिपदिकमित्यनुवर्तनात्ताभिः प्रातिपदिकसंज्ञा समाविशति । गुणवचनसंज्ञा तु ताभिर्बाध्यत इति कैयट आह । भाष्यकारोऽपि सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः । अपि चैतेनानुपूर्व्येण सन्निविष्टानां बाधनं यथा स्यात् । गुणवचनसंज्ञायाश्चैताभिर्बाधनं यथा स्यादित्याह । एवं चोक्तभाष्यकैयटाभ्यां समासादिसंज्ञानां गुणवचनसंज्ञाबाधकत्वस्य स्पष्टतया तदतिरिक्तप्रातिपदिकमात्रं गुणवचनशब्देन ग्राह्यमिति स्पष्टमेव लभ्यते । अत एव द्वारवतीत्वमित्यादौ न पुंवद्भावः । चित्रगुत्वमौपगवत्वमित्यादौ च न ष्यञ् । ऐकयं राजपौरुष्यमित्यादौ तु ब्राह्मणादित्वात् ष्यञ् बोध्यः । अत्र कृत्तद्धितसंज्ञे तदन्तस्य बोध्ये, प्रातिपदिकसंज्ञासामानाधिकरण्यात् । नचैवं गुणिपरशुक्लादीनां गुणवचनत्वानापत्तिः । तत्र मतुब्लोपेन प्रत्ययलक्षणेन तद्धितान्तत्वादिति वाच्यम् । श्रूयमाणतद्धितान्तस्यैव तत्संज्ञाविधानेनादोषात् । गुणगुणिनोरभेदविवक्षायां गुणवाच-

एवास्य प्रवृत्तिः। वर्णश्चेदिति। तद्विशिष्टश्चेत्यर्थः। अन्यथा 'गुणे शुक्लादयः पुंसि' इत्युक्त्याऽसंगतं स्यादिति बोध्यम्। सूत्रे वर्णशब्दोऽर्शआद्यजन्तः। कालाऽन्येति। क्रौर्यगुणयुक्तेत्यर्थः। नील्या अनिति। वृत्त्यनुसारेणेदम्। प्रतिपदोक्तत्वादन्प्रकृतिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं, न त्वस्य। लाक्षणिकत्वात्। अनाच्छादने इति नीलवर्णवती शाटीत्यर्थे नीलीति वारणाय चरितार्थम्। नील्या रक्ता गौरित्यर्थे नीलेत्येवोचितमिति परे। मैथुनेच्छाशब्दोऽर्शआद्यजन्तस्तद्वतीत्यर्थः। अन्येति। मैथुनादन्यद् या इच्छति। कमेः 'लषपद' इत्युकञ्। शोणशब्दो वर्णवाची 'वर्णानां तण' इत्याद्युदात्तः। अन्यत इति सिद्धे विकल्पार्थमिदम्॥

---

सामर्थ्येन चानारोपितजातिवाचकस्यैव जातिसूत्रे ग्रहणेन गौणे तदप्रवृत्त्या तत्संभवात्। असङ्गतं स्यादिति। कालशब्दस्य वर्णवाचकत्वे स्त्रीत्वमसङ्गतं स्यादित्यर्थः। ननु नीलया अनिति वार्तिकनिष्पन्नस्य लाक्षणिकत्वेन सूत्रेऽग्रहणात्कथमिदं प्रत्युदाहरणमत आह। वृत्त्यनुसारेणेति। तदनाश्रयणेन प्रवृत्तवृत्त्यनुसारेणेत्यर्थः। सिद्धान्तमाह। प्रतिपदोक्तत्वादिति। परिभाषानाश्रयणे मानाभाव इति भावः। नन्वेवमनाच्छादन इत्यस्य किं व्यावर्त्यमत आह। अनाच्छादन इति। नन्वेवं नीलया रक्ता गौरित्यर्थे नीलीति न स्यादत आह। नीलेत्येवोचितमिति। लक्षणप्रतिपदोक्तपरिभाषया अन्नन्तस्याग्रहणादिति भावः। अस्मादेव सूत्रनिर्देशाद्व्याधिकरणोऽपि बहुव्रीहिस्साधुरिति हरदत्तग्रन्थोऽयुक्त इति सूचयन्नाह। अर्श आद्यजिति। अन्यदिति। धनादिकमित्यर्थः॥

नन्वत्र गुणशब्देन न कृत्रिमग्रहणम्, उत इति विशेषणाद्वचनग्रहणाच्च। नापि विशेषणस्य। आखुर्द्रव्यमित्यादावतिप्रसङ्गात्। नापि नैयायिकाभिमतो

वोतो ॥ अत्र गुणवचनशब्देन समस्त-कृदन्त-तद्धितान्त-सर्वनाम-जाति-संख्या-सञ्ज्ञाशब्दातिरिक्तशब्दो गृह्यते । आकडारसूत्रभाष्यपर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् । तत्र हि प्रातिपदिकमात्रस्य गुणवचनसञ्ज्ञामुक्त्वाऽग्रे तद्बाधकत्वेनैताः

---

गुणः, मृद्वी, पट्वीत्यादेरसिद्ध्यापत्तेरित्यत आह । गुणवचनशब्देनेति । अत्र गुणवचनशब्देन समासाद्यतिरिक्तस्य ग्रहणे मानमाह । आकडारेति । तद्बाधकत्वेनेति । गुणवचनसंज्ञाबाधकत्वेनेत्यर्थः । तत्र हि भाष्ये 'अर्थवत्प्रातिपदिकमित्यर्थवतः प्रातिपदिकसंज्ञामुक्त्वा ततस्तस्यैव गुणवचनं चेति गुणवचनसंज्ञा विहिता । ततश्च समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः। संख्या, डुच, एकद्रव्योपनिवेशिनी संज्ञेति समासादिसंज्ञाः क्रमेण तद्बाधकत्वेनोक्ताः । डुशब्देन च षट्संज्ञोच्यते । अत्र गुणवचनं चेति प्रतीकमुपादायैकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशः । उत्तरासु च संज्ञासु प्रातिपदिकमित्यनुवर्तनात्ताभिः प्रातिपदिकसंज्ञा समाविशति । गुणवचनसंज्ञा तु ताभिर्बाध्यत इति कैयट आह । भाष्यकारोऽपि सन्ति चैवात्र काश्चिदपूर्वाः संज्ञाः । अपि चैतेनानुपूर्व्येण सन्निविष्टानां बाधनं यथा स्यात् । गुणवचनसंज्ञायाश्चैताभिर्बाधनं यथा स्यादित्याह । एवं चोक्तभाष्यकैयटाभ्यां समासादिसंज्ञानां गुणवचनसंज्ञाबाधकत्वस्य स्पष्टतया तदतिरिक्तप्रातिपदिकमात्रं गुणवचनशब्देन ग्राह्यमिति स्पष्टमेव लभ्यते । अत एव द्वारवतीत्वमित्यादौ न पुंवद्भावः । चित्रगुत्वमौपगवत्वमित्यादौ च न ष्यञ् । ऐक्यं राजपौरुष्यमित्यादौ तु ब्राह्मणादित्वात् ष्यञ् बोध्यः । अत्र कृत्तद्धितसंज्ञे तदन्तस्य बोध्ये, प्रातिपदिकसंज्ञासामानाधिकरण्यात् । नचैवं गुणिपरशुक्लादीनां गुणवचनत्वानापत्तिः । तत्र मतुब्लोपेन प्रत्ययलक्षणेन तद्धितान्तत्वादिति वाच्यम् । श्रूयमाणतद्धितान्तस्यैव तत्संज्ञाविधानेनादोषात् । गुणगुणिनोरभेदविवक्षायां गुणवाच-

**क्रमेण पठिताः। गुणवचनेत्यन्वर्थसञ्ज्ञया गुणोपसर्जनगुणिवाचकानामेव तादृशानां सा सञ्ज्ञेति न रूपादीनां ग्रहणम्। जातिपदेनाऽऽकृतिग्रहणद्रव्यवृत्तिजातिवाचकानामेव तत्र ग्रहणात्। कठादिशाखातदध्येतॄणाञ्च तद्धितान्तत्वादेव व्यावृत्तिः। एतत्सूत्रभाष्योक्तं—**

---

कानामेव तेषां गुणिनि प्रवृत्तिसंभवेन तत्र मतुप एवानुत्पत्तेश्च। मतुब्लोपस्तु भेदविवक्षायां शुक्लवानित्यादेरसाधुत्वायेति बोध्यम्। नन्वेवं रूपादीनामपि गुणवचनसंज्ञाप्रसङ्ग इत्यत आह। **अन्वर्थसंज्ञयेति।** गुणसंज्ञायामेव लाघवात्कर्तव्यायां गुणवचनेति महासंज्ञाकरणसामर्थ्यादिति भावः। **तादृशानामिति।** समासाद्यतिरिक्तानामित्यर्थः। ननु जातित्वेनैव तेषां निरासोऽस्त्वित्यत आह। **जातिपदेनेति। आकृतिग्रहणेति।** आकृतिपदमुपदेशोपलक्षणम्। आकृतिद्वारा साक्षाद्वा उपदेशेन ग्राह्येत्यर्थः। **द्रव्यवृत्तीति।** आकृतिद्वारकोपदेशग्राह्यजातेर्द्रव्यवृत्तित्वेन साक्षादुपदेशग्राह्याया अपि तस्या द्रव्यवृत्तेरेव ग्रहणम्। तेन रूपत्वादीनां साक्षादुपदेशग्राह्यत्वेऽपि द्रव्यवृत्तित्वाभावान्न तत्त्वमिति भावः। **तत्रेति।** आकडारसूत्र इत्यर्थः। नन्वसर्वलिङ्गा जातिरिति भाष्यस्य 'लिङ्गानां च न सर्वभागिति लक्षणलक्षितां जातिमाश्रयती'त्यर्थस्य कैयटोक्तत्वेन तस्य पृथग्लक्षणत्वप्रतीत्या तेनात्र जातित्वस्य सुलभतयाऽन्वर्थत्वाश्रयणं विफलमेवेति चेन्न। अस्य पृथग्लक्षणत्वाभावस्योत्तरत्र वक्ष्यमाणत्वात्। रूपादयो जातिशब्दाः, असर्वलिङ्गत्वादित्युद्योतग्रन्थस्तूक्तकैयटानुरोधीत्यवधेयम्। रूपादिशब्दानां तु न गुणवचनसंज्ञा, जातिसंज्ञया बाधात्। तेन तेभ्यः ष्यञ् न। जातिसंज्ञा त्वसर्वलिङ्गत्वात्प्रवर्तते। रूपादिशब्दानां गुणवचनसंज्ञां प्रकारान्तरेण वारयति। गुणवचनेत्यन्वर्थेतीति मिश्रोक्तं तु कैयटानुरोधेनेति बोध्यम्। ननु गुणवचनसंज्ञाबाधके निरुक्तजातिमात्रग्रहणे कठादीनामतादृशत्वेन तेषां गुणवचनसंज्ञानिरासो न स्यादत आह। **कठा-**

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

---

दीति । शाखातदध्येतॄणामिति । शाखाश्च तदध्येतारश्चेति द्वन्द्वः । यद्यपि छन्दोब्राह्मणानि च तद्विषयाणीति नियमेन केवलशाखावाचितद्धितान्तस्य प्रयोगाभावादिदं निरर्थकं, दुरर्थकं च, तथापि कठी शाखेति प्रयोगनिर्वाहाय तत्र सूत्रे विषयशब्दस्यानन्यभावार्थकत्वमनङ्गीकृत्य केवलशाखावाचिनोऽपि प्रयोगमभ्युपेत्य तस्यापि गोत्रं च चरणैस्सहेत्यनेन जातित्वं वदतां केषांचिन्मतानुरोधेनायं ग्रन्थ इति बोध्यम् । वस्तुतस्तत्रानन्यभावे विषयशब्द इति केवलशाखावाचिनः प्रयोग एव न । कठीशाखीति त्वसाधुरेव । कठशाखेत्यत्र तु षष्ठीसमासो बोध्यः । स्पष्टं चेदमुद्योते । सत्त्वे इति । सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वं, सदेरौणादिको वप्रत्ययः । सत्त्वे = द्रव्ये निविशते = संबध्यते । द्रव्यमाश्रयतीत्यर्थः । अपैति = तत एव द्रव्यान्निवर्तते । पृथगिति भिन्नं पदं, पृथग्भूतास्वित्यर्थः । जातिषु = जात्याधारेषु । अर्थाद्भिन्नजातीयेषु दृश्यते च यस्स गुण इत्यर्थः । यथा शुक्लादिः, स हि यस्मिन्घटादौ संबध्यते, तत एव पाकादिना निवर्तते । भिन्नजातीयेषु पयश्शङ्खादिषु दृश्यते च । अनेन जातेर्गुणत्वनिरासः । घटत्वादिजातिर्हि घटादौ संबध्यते, न कदाचित्तं जहाति । नापि भिन्नजातीयेषु पटादिषु दृश्यते । नन्वेवं सति क्रियायां गुणत्वं प्रसज्येत, तस्या अपि घटादिषु कदाचिदुपलम्भात् । कदाचित्ततो निवृत्तेः । भिन्नजातीयेषु घटपटादिषु दर्शनाच्चेत्यतो विशेषणान्तरमाह । आधेय इति । उत्पाद्य इत्यर्थः । यथा घटादेः पाकजो रूपादिः । अक्रियाज इति । अनुत्पाद्य इत्यर्थः । यथाऽऽकाशादेर्महत्त्वादिः । क्रिया तूत्पाद्यैव न नित्येति तस्या द्वैविध्याभावाद्गुणत्वाभाव इति भावः । एवं च नित्यानित्यवृत्ति जातिमत्त्वं फलितम् । गुणत्वस्य पाकजरूपादिष्व-

**इति गुणलक्षणं त्वेकदेशयुक्तिर्बहुविशेषणानां वैयर्थ्यात्। भाष्यकृताऽव्याख्यानाच्च। तस्मादाकडारसूत्रोक्तमेव भाष्यसंमतमिंति भाष्य-**

---

नित्येष्वाकाशमहत्त्वादिषु नित्येषु च सत्त्वात्तद्वत्सु शुक्लादिषु लक्षणसमन्वयः। क्रियात्वस्य नित्यावृत्तित्वात्तद्वत्यां क्रियायां नातिप्रसङ्गः। नन्वेवमप्यवयवि-द्रव्येऽतिव्याप्तिः। तस्या अवयवेषु संबध्यमानत्वात्। असमवायिकारणसंयोग-नाशे ततो निवर्तनात्। भिन्नजातीयेषु हस्तपादादिषु दृश्यमानत्वात्। नित्या-नित्यवृत्तिद्रव्यत्वरूपजातिमत्वाच्चेत्यत आह। **असत्त्वप्रकृतिरिति।** अद्रव्य-स्वभाव इत्यर्थः। द्रव्यभिन्नमिति यावत्। तेन तत्र नातिप्रसङ्गः। **बहुविशेष-णानां वैयर्थ्यादिति।** पृथग्जातिषु दृश्यत इत्यनेन, सत्त्वे निविशत इत्या-दिना वा जातेर्वारणसंभवेऽन्यतरवैयर्थ्यम्। किं च क्रियावारकेणैव जातेर्वारणे सिद्धे उभयोरपि वैयर्थ्यम्। किं च पृथग्जातिष्वित्यनेन जातेर्वारणमशक्यम्। भिन्नजातीयेषु घटपटादिषु द्रव्यत्वादिदर्शनादित्युद्योते स्पष्टम्॥

अत्र केचित्। सर्वेषामपि सफलत्वाच्चिन्त्यमिदम्। तथा हि। सत्त्वे निविशते, अपैतीत्यनेन द्रव्याधिकरणकोत्पादविनाशशालित्वमिति प्रथमविशेषणं फलितम्। जातिष्विति पञ्चम्यर्थे सप्तमी, जातिभ्यः पृथगित्यर्थः। तथा च जातिभिन्नत्वमिति द्वितीयं फलितम्। आधेयश्चाक्रियाजश्च पूर्ववन्नित्यानित्यवृत्तिधर्मवत्त्वमिति तृतीयम्। असत्त्वप्रकृतिः=द्रव्यभिन्न इत्यर्थः। तेन द्रव्यभिन्नत्वं चतुर्थम्। तत्राद्यविशेषणानुक्तावभावे गुणत्वापत्तिः। प्रथमविशेषणे उत्पादमात्रोक्तौ ध्वंसेऽतिव्याप्तिः। नाशमात्रोक्तौ प्रागभावेऽतिव्याप्तिः। द्वितीयविशेषणानुक्तावुत्पा-दविनाशशालिन्या विशिष्टाधिकारप्रयोजकत्वेन लाघवात्क्लृप्ताया ब्राह्मणत्वादि-सामान्यव्याप्याया विशिष्टब्राह्मणत्वादिजातेरपि गुणत्वापत्तिः। उत्पादविनाशौ चास्याः संस्कारपातित्यादिना तत्तद्व्यक्तिवृत्तित्वविशिष्टब्राह्मणत्वादिजातेरुत्पाद-विनाशयोः सकलानुभवसिद्धत्वेन बोध्यौ। तृतीयानुक्तौ क्रियायां गुणत्वा-

पत्तिः । चतुर्थानुक्तावव्ययविद्रव्ये गुणत्वापत्तिः । एवं च सर्वविशेषणानां सार्थक्यान्नैकदेशयुक्तिरियमित्याहुः । तन्न । प्रथमविशेषणस्यैवं व्याख्याने गुणोत्पत्तेराद्यक्षणसंबन्धरूपस्य क्षणगुणोभयमात्रवृत्तितया तस्य घटाद्यधिकरणकत्वाभावेनासंभवस्य लक्षणदोषस्यापातात् । किं चाभावव्यावृत्त्यर्थमेतद्विशेषणमित्यपि सामान्यतो वक्तुमशक्यम् । भूतले घटाद्यभावस्योत्पादविनाशशालित्वेन चतुर्थसंसर्गाभावत्वस्वीकर्तॄणां मतेऽनेन तद्व्यावृत्तिः कर्तुमशक्या । अपि च सोऽसत्त्वप्रकृतिरित्यनेन द्रव्यभिन्नत्वस्य भवद्भिरप्यङ्गीकृतत्वेन पर्युदासन्यायेनोद्योतोक्तदिशा द्रव्यभिन्नभावत्वस्य लाभेन तेनैव सर्वमतसाधारण्येनाभावव्यावृत्तावेकदेशिसाधारण्येन तद्व्यावर्तकस्यैतद्विशेषणस्य नैरर्थक्यं दुर्वारमेव । किं चाधिकरणात्मक एवाभावो न पदार्थान्तरमिति वदतां मते एतद्विशेषणव्यावर्त्यं दुर्लभम् । किं च ब्राह्मणत्वादिव्याप्यविशिष्टब्राह्मणत्वं जातिरित्युक्तिरपि न सम्यक् । विशिष्टब्राह्मणत्वस्य नीलघटत्ववत्सखण्डत्वेन जातित्वाभावात् । संस्कारपातित्यादिना विशिष्टब्राह्मणत्वजातेरुत्पादविनाशौ सकलानुभवसिद्धावित्यपि न युक्तम् । उपनयनादिसंस्कारेण ब्राह्मणोदितकर्माधिकार एव संपद्यते, न ब्राह्मणत्वम् । अन्यथा अष्टवर्षं ब्राह्मणमुपनयीतेत्यादौ संस्कारमन्तरा ब्राह्मणत्वस्यैवासिद्ध्या तदवच्छिन्नानुवादेन संस्कारविधानानुपपत्तेः । न च तत्र सूत्रशाटकन्यायेन व्यवहार इति वाच्यम् । अनेनैव संस्कारेण ब्राह्मणत्वोत्पादे शूद्रादावपि तेन संस्कारेण तदुत्पादप्रसङ्गात् । पातित्यादिना द्विजातिकर्माधिकारनिवृत्तिरेव द्विजातिकर्मभ्यो हानिः पतनमित्यनेनोच्यते, न तु ब्राह्मणत्वनिवृत्तिः । प्रायश्चित्तादिना तदधिकारसंपत्तिश्च । पतितोत्पन्नानां ब्राह्मणत्वासंग्रहप्रतिपादकमप्येवमेव संगच्छते । नित्यानित्यवृत्तिजातिमत्त्वमिति तृतीयविशेषणेनैव जातिव्यावृत्तिसंभवे द्वितीयविशेषणवैयर्थ्यस्य तादवस्थ्यम् । तत्सार्थक्यसंपादनाय तृतीयदले जातिस्थाने पदार्थविभाजकधर्मनिवेशनमतिफल्गु । जातित्वापेक्षया पदार्थविभाजकधर्मत्वस्यातिगुरुत्वात् । किं च तन्नि-

**प्रदीपोद्योते निरूपितम् । शुचिरिति । शुचेरौणादिकः किदिन् । उत इत्यस्याभावेऽपि 'खरुसंयोगोपधान्न' इत्येतत्सामर्थ्येनात इत्यस्यात्रासम्बन्धः । उणादीनामव्युत्पन्नत्वात्कृदिकारादित्यस्यात्राप्रवृत्तिरित्यभिमानः । शुक्लेति तु प्रत्युदाहरणमुचितम् । तपरः किम् । वधूः, कासूः । 'वधूः स्नुषा नवोढा स्त्री', 'कासूर्विकलवाचि स्याद्' इति कोशबलेन नवोढात्वस्य, विकलवाक्त्वस्य च प्रवृत्तिनिमित्तत्वेन खरुशब्दवद् गुणवचनत्वात् । पतिंवरेति । पतिलाभोत्कण्ठावतीत्यर्थः ॥**

---

वेशे वैयाकरणनयेऽनित्यद्रव्यवृत्तिसमवायस्यानित्यत्वाङ्गीकारेण समवायत्वस्य नित्यानित्यवृत्तितया तद्वति समवायेऽतिव्याप्तिः । तद्वारणाय जातिमत्त्वनिवेशे द्वितीयदलवैयर्थ्यमिति दिगिति गुरुचारणाः ॥

**औणादिकः किदिनिति** । एतेनोणादीनामव्युत्पन्नत्वात्कृदन्तत्वाभावेनास्य गुणवचनत्वमस्तीति सूचितम् । ननूत इत्यस्याभावेऽप्यत इत्यस्याधिकारात्कथमत्रातिप्रसङ्गोऽत आह । **उत इत्यस्येति** । नन्वत्र कृदिकारादित्यनेन ङीषो दुर्वारतया कथमिदं प्रत्युदाहरणमत आह । **उणादीनामिति** । **अभिमान इति** । अनेनारुचिः सूचिता । तद्बीजं तूणादीनामव्युत्पन्नत्वेन कृदिकारादित्यस्याप्रवृत्तावपि 'सर्वतोऽक्तिन्नर्थादित्येके' इत्यनेन ङीषो दुर्वारतया नेदं प्रत्युदाहरणमिति । तदेतत्सूचयन्नाह । **शुक्लेति त्विति** । न चात्रापि संयोगोपधत्वेन निषेध इति वाच्यम् । खरुशब्दसाहचर्येण संयोगोपधेति निषेधोऽप्युकारान्तस्यैवेत्याशयात् । एतेनेदमयुक्तम् खरुसंयोगेति निषेधात् । पीतेत्युचितमित्याचार्योक्तमपास्तम् । ननु गुणवचनशब्देन गुणोपसर्जनगुणिवाचकानामेव ग्रहणादनयोस्तत्त्वाभावादेव व्यावृत्तिरित्याशङ्क्य तयोस्तत्त्वं दर्शयति । **इति कोशबलेनेत्यादिना** ॥

बह्वादि । बहुशब्दस्योक्तरीत्या गुणवचनत्वाभावेन ग्रहणम् । 'कृदिकारात्' इति 'सर्वत' इति च गणसूत्रे । अकृतोऽपीत्यर्थः । 'व्यवस्थितविभाषाश्रयणात्क्वचिन्न । सुगन्धिः, प्रियकतिर्वैश्येत्यादि' इति वृत्तिः । पुराणशब्दोऽत्र पठ्यते । स यद्यपि 'अयं पन्था अनुचितः पुराण' इत्यादावन्तोदात्तदर्शनेन घृतादिपाठादन्तोदात्त इत्युदात्तनिवृत्तिस्वरेण ततो ङीब्ङीषोः स्वरे विशेषाभावस्तथाप्यत्र पाठसामर्थ्यात्पक्षे टाबेवेति बोद्धव्यम् । अजननिरिति । 'आक्रोशे नञ्यनिः' इति जनेरनिः । अहन्शब्दोऽत्र पठ्यते । सामर्थ्यादनुपसर्जनाधिकारबाधः । दीर्घाह्नी प्रावृडिति ङीष्यन्तोदात्तम् । बह्वादिराकृतिगण इति गणरत्नकृत् ॥

---

उक्तरीत्येति । आकडारसूत्रोक्तरीत्येत्यर्थः । गुणवचनत्वाभावेनेति । संख्यासंज्ञया बाधात्तदभाव इति भावः । सर्वत इत्यस्यार्थमाह । अकृतोऽपीति । अपिना कृतः । शोणात्प्राचामिति सूत्रात्प्राचामित्यनुवृत्त्यैव सिद्धे वोत इति सूत्रे वाशब्दोपादानं व्यवस्थितविभाषात्वसूचनाय, तदाह । व्यवस्थितेति । वृत्तिरिति । भाष्यानुक्तत्वादस्याप्रामाणिकत्वमत्रारुचिः । सुगन्धिरित्यादौ त्वनभिधानान्न ङीष् । वाग्रहणं तु सर्वमते विकल्पार्थमिति बोध्यम् । ङीप्ङीषोरिति । अयं हि ट्युलन्तः । पुराणप्रोक्तेति निपातनात्तुडभावः । एवं च टित्त्वान्ङीपः प्राप्तिरिति भावः । सामर्थ्यादिति । केवलाहन्शब्दस्य स्त्रियां वृत्तेरभावेन सामर्थ्यादुपसर्जन एव तत्प्रवृत्तेर्वक्तव्यतयाऽनुपसर्जनाधिकारबाध इति भावः । ननु नान्तलक्षणङीपैव दीर्घाह्नीति रूपसिद्धावत्र तत्पाठो व्यर्थोऽत आह । ङीष्यन्तोदात्तमिति । एवंच स्वरार्थमत्र पाठ इति भावः ॥

**पुंयोगादा ॥** हेतौ पञ्चमी। आख्यायामिति पञ्चम्यर्थे सप्तमी। अख्याशब्दो बोधकपरः। आख्या चोपस्थितत्वात्पुंस एव न स्त्रियाः। स्त्रियां वर्त्तमानस्य स्त्र्याख्यत्वाव्यभिचारादाख्यापदवैयर्थ्यापत्तेः। पुंस्येव यः प्रसिद्धः शब्द इत्यर्थः। पुंयोगाद्धेतोः प्रवृत्तिनिमित्तारोपेण स्त्रियां वर्त्तमानात्पुंबोधकाच्छब्दान्ङीषित्यर्थः। योगः सम्बन्धः। पुंयोगात्किम्, देवदत्ता। आख्यायां किम्, प्रसूता। तदभावे हि स्त्रियां वर्त्तमानं यत्प्रातिपदिकं पुंयोगहेतुकप्रवृत्ति-

---

पुंयोगादित्यत्र परपञ्चम्या असंभवादाह। हेताविति। नन्वेवं कस्मादनेन प्रत्ययविधानमित्यत आह। आख्यायामिति। आख्याशब्दस्य ससंबन्धिकत्वादाह। आख्या चेति। असति बाधके सर्वं वाक्यं सावधारणमिति न्यायलब्धमाह। पुंस्येवेति। यत्तु 'परे तु तथासति गोपस्य स्त्री गोपी, शूद्रस्य स्त्री शूद्रीत्यादौ सूत्रं न प्रवर्तेत। गोपशूद्रादिशब्दानां स्त्रियामपि प्रसिद्धत्वात्। सूत्रं तु चैत्रस्य स्त्री चैत्रीत्यादौ चरितार्थमित्ययुक्त एवायं ग्रन्थ इत्याहुः, तन्न। अत्रैवशब्दस्य भिन्नक्रमतया पुंयोगाद्धेतोः स्त्रियां वर्तमानात्पुंबोधकादेव शब्दान्ङीषित्यर्थेन शूद्रीत्यत्रादोषात्। ग्रामनयनादिवद्गोपत्वस्योत्सर्गतः पुंधर्मतया यथाश्रुतेऽपि तत्रादोषाच्च। एवं च यत्राशूद्रायां शूद्रत्वरूपप्रवृत्तिनिमित्तारोपेण पुंबोधकशूद्रशब्दस्य प्रयोगस्तत्रैवास्य प्रवृत्तिर्न तु वस्तुतश्शूद्रत्वजातिविशिष्टस्त्रीबोधके शूद्रशब्दे इत्यवधेयम्। अथ पदार्थं निरूप्य वाक्यार्थं दर्शयति। पुंयोगादिति। पुंसि प्रसिद्धस्य शब्दस्य स्त्रियां वृत्तौ प्रवृत्तिनिमित्तारोपस्तत्र च पुंयोगो हेतुरिति बोध्यम्। योगशब्दस्य संयोगपरत्वभ्रमनिरासायाह। संबन्ध इति। देवदत्तेति। अयं हि संज्ञाशब्दः स्वभावत एव स्त्रियां वर्तते, न तु पुंयोगस्तत्र निमित्तमिति भावः। नन्वाख्याग्रहणाभावेऽपि कथमत्रातिप्रसङ्गः, तस्योक्तसूत्रार्थाविषयत्वादत आह। तदभावे हीति। इत्यर्थोऽपीति।

निमित्तकमित्यर्थोऽपि सम्भाव्येत। अस्ति हि तत्प्रवृत्तिनिमित्ते प्रसवे पुंयोगहेतुकत्वम्। उक्तपुमाख्या तु नैषेति भावः। पुंयोगोऽत्र दाम्पत्यरूप एवेति भाष्यस्वरसः। 'यथेयं भर्तृपापकृतान् बन्धादीन् लभते, एवं तच्छब्दमपि' इति भाष्योक्तेः। देवकीत्यादि तु गौरादिषु बोद्ध्यमिति केचित्। गोपालिकेति। गाः पालयतीति गोपालः स एव गोपालकस्तस्य स्त्रीत्यर्थः। ण्वुलन्तस्य तु कारकषष्ठ्या समासनिषेधाच्छेषषष्ठ्या समासे आपः सुपः परत्वादित्वं दुर्लभम्। वस्तुतः शेषषष्ठ्या अप्यत्र कारकत्वात्सुबुत्पत्तेः पूर्वमेव तत्रापि समासः। यथाकथंचित्कारकग्रहणेऽपि कथंचित्कारकत्वमादाय 'गतिकारकोपपदानाम्' इत्यस्य प्रवृत्तेरत्रत्यभाष्यात् ........

---

अपिनोक्तार्थसमुच्चयः। तत्प्रवृत्तीति। प्रसूताशब्दप्रवृत्तीत्यर्थः। प्राचां मतं कटाक्षयन्नाह। पुंयोगोऽत्रेति। एवेन जन्यजनकभावनिरासः। नन्वेवं देवकीत्यादिप्रयोगाणां का गतिरत आह। देवकीत्यादीति। ननु गवां पालक इति ण्वुलन्तेनैव समासोऽस्तु। वृत्तित्रयानाश्रयणप्रयुक्तलाघवादत आह। ण्वुलन्तस्येति। समासनिषेधादिति। तृजकाभ्यां कर्तरीत्यनेनेति भावः। सुपः परत्वादिति। शेषषष्ठ्या समासे गतिकारकोपपदानामित्यस्याप्रवृत्त्या सुबन्तेन समासे समुदायाज्जातस्य टापः सुपः परत्वमिति भावः। इदं प्राचामनुरोधेन। वस्तुतस्तादृशविग्रहेऽपि न क्षतिरित्याह। वस्तुत इति। कारकत्वादिति। कर्मण एव शेषत्वविवक्षणाद्वस्तुतस्तस्यापि कारकत्वमिति भावः। नन्वयुक्तमेतत्। परिभाषायां प्रतिपदोक्तपरिभाषया कारकसंज्ञासमानाधिकरणसंज्ञानिमित्तकविभक्त्यन्तस्यैव ग्रहणेन शेषषष्ठ्या समासे तदप्राप्तेरत आह। यथाकथंचिदिति। शेषत्वेनापि वस्तुतः कर्मण एव ग्रहणादिति भावः। अत्रत्यभाष्यादिति। एवं हि भाष्यम्। गोपालिकादीनां प्रतिषेधो वक्तव्यः

**'उपपदमतिङ्, इति सूत्रभाष्याच्च लाभात्। यद्वा तन्निषेधस्यानित्यत्वादप्रवृत्तौ कारकषष्ठ्या सुबुत्पत्तेः पूर्वं समासेन तत्रापीत्त्वं सुलभम्। सूर्येति। सर्त्तेः क्यप्यद्युदात्तसूर्यशब्दाच्चाप्यन्तोदात्तमिदम्। एतेन ङीष्निषेधेन टापैव सिद्धिरित्यपास्तम्। सूरीति। सूर्यस्य स्त्री या कुन्ती इयं मानुषी, न देवतेत्यर्थः। महत्त्वे इति। तद्योगे एवैषां**

---

गोपालिका पशुपालिकेत्युक्तम्। तत्र तृजकाभ्यामिति निषेधेन कर्मषष्ठ्या समासस्यासंभवाच्छेषषष्ठ्यैव समासस्य वक्तव्यतया तत्र यदि गतिकारकोपपदानामित्यस्य प्रवृत्तिर्न स्यात्तदा आपः सुपः परत्वादित्त्वं दुर्लभमिति भाष्योक्तस्येत्त्वघटितप्रयोगस्यासिद्धिः। अतस्तत्प्रामाण्याद्गतिकारकोपपदानामित्यत्र प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरिति भावः। नन्वस्य भाष्यस्य स्वार्थिकक-प्रत्ययान्तेनापि सिद्धिरिति न तन्निरुक्तार्थसाधकमत आह। उपपदमिति। तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्तिकखण्डनाय 'अथवा विभाषा षष्ठीसमासः, यदा न षष्ठीसमासस्तदोपपदसमासो भविष्यती' त्युक्तम्। युगपदुभयविहिततत्पुरुषसंज्ञयोः प्रवृत्तिसंभवेनासंभवरूपविरोधाभावाद्विप्रतिषेधाप्रवृत्तिरिति तदाशयः। अनेन च विप्रतिषेधविचारेण षष्ठीसमसस्यापि सुबुत्पत्तेः पूर्वमेवोत्पत्तिरिति लभ्यते। अन्यथोपपदसमासस्य सुबुत्पत्तेः प्राक्प्राप्तिः। षष्ठीसमासस्य तु तदनन्तरमिति युगपत्प्राप्त्यभावात्तदसङ्गतिः स्पष्टैवेति भावः। गतिकारकेत्यत्र प्रतिपदोक्तपरिभाषाप्रवृत्तिमभ्युपेत्य समाधानान्तरमाह। यद्वेति। तन्निषेधस्य = तृजकाभ्यामिति निषेधस्य। अनित्यत्वादिति। अत्र मानं तु तत्प्रयोजको हेतुश्च, जनिकर्तुः प्रकृतिरित्यादिनिर्देशा इति बोध्यम्। तत्रापीति। ण्वुलन्तपक्षेऽपीत्यर्थः। आद्युदात्तेति। धातुस्वरेणेति भावः। एतेनेति। अन्तोदात्तस्य सूर्याशब्दस्यासाधनेनेत्यर्थः। ननु कुन्तीत्यनेनैव स्त्रीत्वाभिव्यक्तिसंभवे इयमित्यधिकमिति शङ्कानिवारणायाह। सूर्यस्येति। तद्योग एवेति। महत्वादियोग एवेत्यर्थः। अत एवैषामिति

स्त्रीत्वमिति भावः। यवनाल्लिप्यामिति। लिप्यर्थकोऽत्र ङीष् 'तस्येदम्' इत्यण्बाधक इति बहवः। लिपिः—अक्षरविन्यासः। मातुलेति। मातुलान्नित्ये प्राप्ते उपाध्यायादप्राप्ते विभाषेयम्। या तु स्वयमेवेति। 'अपादाने स्त्रियां घञ उपसंख्यानं, तदन्ताच्च वा ङीष्' इति तृतीये 'इङश्च' इति सूत्रे वार्तिकादिति भावः। उपेत्याधीयते यस्या इति विग्रहः। अर्येति ह्रस्वादिस्तदाह—स्वामिनीति। 'अर्यः स्वामिवैश्ययोः' इत्युक्तेः। आर्येति पाठस्तु कैयटाद्यसंमतः। स्वार्थ इति। अत एव भाष्ये 'अर्याणी, अर्या' इत्येवोक्तम्। पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवद् अर्यीति पक्षे ङीषमेवो-

---

बहुवचनोपपत्तिः। एवेनान्यत्रैषां स्त्रियामप्रवृत्तिः सूचिता। तेन महत्त्वादियोगे ङीष्, अन्यत्र टाबिति न भ्रमितव्यम्। अण्बाधक इति। हिमादिसाहचर्यादस्मादपि मुख्यार्थादेव प्रत्यय इति भावः। एवं च यावनीति प्रयोगो लिपावसाधुः। भाषायां तु साधुरिति बोध्यम्। बहवः=कैयटहरदत्तादयः। एतेन तस्येदमित्यण्बाधको ङीष् विधीयत इति कैयटाद्युक्तमपास्तम्। प्रकरणविरोधात्। इन्द्रादिसाहचर्येण गौणार्थकग्रहणस्यैव युक्तत्वाच्च। एवं च लिपौ वर्तमानाद्यवनशब्दात्पूर्वेण ङीष्सिद्धेरानुग्मात्रं विधीयत इति महल्लाघवम्। पूर्वसूत्रे दाम्पत्यरूपस्यैव पुंयोगस्य ग्रहणमिति न नियमः। अत एव गोपस्य भगिनी गोपीत्यपि भवति। तथा च जन्यजनकभावस्येवेदृशपुंयोगस्यापि ग्रहीतुं शक्यतया पूर्वेणात्र ङीष् सुलभः। मुख्यार्थवाचकाद्यवनशब्दाल्लिपावित्यर्थे तस्येदमित्यणि यावनीति भवत्येवेति कैश्चिदुक्तमयुक्तमिति सूचितमिति बोध्यम्। इति पाठस्त्विति। क्वचिद्भाष्यपुस्तके दृश्यमान इत्यादिः। यद्यप्यर्यक्षत्रियाभ्यां वेति वक्तव्यमित्येव भाष्ये दृश्यते, तथापि स्वार्थ एवास्य प्रवृत्तिर्भाष्याभिमतेत्याह। अत एवेति। पक्षे इति। आनुगभावपक्ष इत्यर्थः।

वाहरेत् । कर्मण्यणिति । सूत्रं तु इन्द्रीत्यादिव्यावृत्त्यर्थमिति भावः ॥

क्रीतात् । करणादिति वक्तव्ये पूर्वग्रहणादनुवृत्तप्रातिपदिकरूपान्यपदार्थेऽवयववाचिपूर्वशब्देन बहुव्रीहिः । तेन वस्त्रेण क्रीतेति वाक्ये न । अत इति चानुवर्त्तते । करणे किम्, सुक्रीता । धनक्रीतेति । 'कर्तृकरणे' इत्यत्र बहुलग्रहणेन 'गतिकारकोपपदानाम्' इत्यस्यानित्यत्वादत्र सुबुत्पत्त्यनन्तरमेव समास इति भावः । इदम् 'उपपदमतिङ्' इति सूत्रे कैयटे स्पष्टम् । अयमजादिष्वित्यन्ये । एवञ्च गतीत्यादेरनित्यत्वे न मानमिति तदाशयः । अत एवैतत् 'कर्तृकरणे' इति सूत्रे बहुलग्रहणफलत्वेन भाष्ये नोक्तम् ।

---

ननु ब्रह्माणीतिवदिन्द्राणीत्यादेरपि सिद्धौ सूत्रे इन्द्रादीनां ग्रहणं व्यर्थमत आह । सूत्रं त्विति । सूत्रे इन्द्रादीनां षण्णां मातुलाचार्ययोश्च ग्रहणमित्यर्थः । व्यावृत्त्यर्थमिति । पुंयोग इति भावः ।

करणं पूर्वमस्मादिति व्यवस्थावाचिपूर्वशब्देन क्रीतशब्देऽन्यपदार्थे यदि बहुव्रीहिः स्यात्तदा पूर्वग्रहणमनर्थकं, क्रीतात्करणादित्युक्तावपि तस्मादिति परिभाषया तदर्थलाभसंभवात् । अतोऽवयववाचिपूर्वशब्देन प्रातिपदिकरूपेऽन्यपदार्थे बहुव्रीहिरित्याह । करणादिति वक्तव्ये इति । तेनेति । उक्तबहुव्रीह्याश्रयणेनेत्यर्थः । अनन्तरमेवेति । तथाच ततः पूर्वमेवान्तरङ्गत्वाट्टाप्यदन्तत्वाभावान्न ङीषिति भावः । कैयट इत्यनेन सूचितामरुचिं प्रकटयन्नाह । अयमिति । अत एवेति । तस्याः परिभाषाया अनित्यत्वस्यानभिमतत्वादेवेत्यर्थः । एतदिति । परिभाषानित्यत्वमित्यर्थः । नन्वम्बाम्बेति सूत्रे गवादिग्रहणमेव तदनित्यत्वे मानम्, अन्यथा गोष्ठ इत्यादौ सुपि स्थ इति केऽनया परिभाषया सुबुत्पत्तेः प्राक्समासे सात्पदाद्योरिति निषेधाप्राप्तावादेशप्रत्यय-

'अम्बाम्ब' इति सूत्रे गवादिग्रहणन्तु नियमार्थम् । तेन 'हृदिस्थः' इत्यादौ षत्वं नेति दिक् । अभ्रलिप्तीति । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति विशिष्टस्य क्तान्तत्वम् । अल्पाख्यायामिति समुदायोपाधिः । अल्पत्वं करणगतं, क्रियागतं वा । क्तान्तादिति । क्तान्तान्तादित्यर्थः । प्रत्ययग्रहणपरिभाषालब्धक्तान्तेन प्रातिपदिकस्य

---

ययोरित्यनेनैव षत्वस्य सिद्धतया तद्वैयर्थ्यं स्पष्टमेवेत्याशङ्क्य तत्सार्थक्यं दर्शयति । गवादिग्रहणं त्विति । नियमार्थमिति । उत्तरपदभूतस्य स्थस्सकारस्य यदि षत्वं स्यात्तदा एभ्य एवेति नियमः । एवं च नियमपरतया सार्थक्यसंभवाच्च तदनित्यत्वे मानमिति भावः । नियमफलं दर्शयति । तेनेति । इदं च पदस्यादिः पदादिरिति षष्ठीसमासाभिप्रायेण । पदादादिरिति पञ्चमीसमासे तु न तद्वैयर्थ्यशङ्कापीति बोध्यम् । मिश्रास्तु न पदान्तसूत्रस्थपदान्तपदस्य पदेऽन्तः पदान्त इति समासप्रदर्शनेन पदे परे योऽन्तस्तस्य कार्ये कर्तव्य एव निषेध इति गोचेत्यादिसिद्ध्यर्थमनित्यत्वं परिभाषायाः स्वीकार्यम् । अन्यथाऽच इति सूत्रनिष्पन्नलोपस्य स्थानिवद्भावादवङादेशस्याप्यापत्तिः । पदपदस्य पदत्वयोग्योपलक्षणत्वमिति त्वन्येषामाशय इति वदन्ति । तत्तु न सम्यक् । अनित्यत्वाभावस्यैव बहुशो ग्रन्थकृता सिद्धान्तितत्वेन स्वसिद्धान्ते गोचेत्यादिसिद्ध्यर्थमेव पदपदस्य पदत्वयोग्योपलक्षणताया न पदान्तसूत्रे उक्तत्वात् । नन्वत्रापि करणपूर्वादित्यस्य संबन्धात्करणवाचिपूर्वावयवकप्रातिपदिकस्य कथं क्तान्तत्वमत आह । कृद्ग्रहण इति । यद्यपि क्तान्तादित्यस्य वक्ष्यमाणरीत्या क्तान्तान्तादित्यर्थः संभवति, तथापि संभवात्प्रकारान्तरं दर्शितमिति बोध्यम् । समुदायोपाधिरिति । समुदायविशेषणमित्यर्थः । ङीषेवास्य द्योतकः। नन्वल्पत्वस्य करणगतत्वे कथं तस्य समुदायोपाधित्वमत आह । क्रियागतं वेति । तदल्पत्वे सति तद्विलेपनस्याप्यल्पत्वस्यावश्यंभावित्वेन समुदायोपाधित्वमक्षतमिति भावः ।

विशेषणात्। ऊरुभिन्नीति। 'जातिकालसुखादिभ्यः परा निष्ठा' इति भिन्नशब्दस्य परनिपातः। पाणिगृहीतीति। अग्निसाक्षिकतया गृहीतपाणिकेत्यर्थः। भाष्ये तु 'पाणिगृहीत्यादीनां विशेष, इत्युक्तम्॥

अस्वाङ्गपूर्वं॥ न स्वाङ्गमस्वाङ्गं, पूर्वञ्च तत्पदं च पूर्वपदं, पुनः कर्मधारयः। अस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेरित्यर्थः। उत्तरसूत्रे भाष्ये कल्याणपाणिपादेत्यादौ तत्प्रवृत्तिवारणाय तत्रैतदनुवर्त्य कर्मधारयस्याश्रयणेनात्रापि तथैवौचित्यात्। तत्र 'यदुपसर्जनं पाणिपादमिति समुदायो, न स स्वाङ्गम्। स्वाङ्गसमुदायश्च न स्वाङ्गशब्देन गृह्यते। यच्च स्वाङ्गं पादेति, न तद्स्वाङ्गरूपपूर्वपदात्परम्' इत्युक्तम्। एवञ्च 'करमुखी' इत्याद्यसाध्वेव। जातिपूर्वादितीहापि संबद्धयते। अन्यथा बहुनञादीनामस्वाङ्गत्वेन विकल्पस्य तत्पूर्वके दुर्वारत्वात्, तदाह—नित्ये प्राप्ते इति। वस्त्रच्छन्नेति। बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरे शेषनिघातेनानुदात्तान्तोऽयम्। पुत्रादिनीत्यादौ 'सुप्यजातौ' इति णिनिदर्शने-

ईषदभ्रेण लिप्तेत्यर्थः। निष्ठेति पूर्वनिपाताभावायाह। जातीति। इत्युक्तमिति। सच विशेषो भार्यारूप एवेति पाणिगृहीती भार्या चेदिति तद्विवरणेन लाभादत्रैवमुक्तमिति बोध्यम्॥

अस्वाङ्गपूर्वपदादित्यत्र कर्मधारयसमासाश्रयणे बीजमाह। उत्तरसूत्र इति। औचित्यादिति। अर्थाधिकारानुरोधादिति भावः। एवं चेति। उत्तरसूत्रे तदनुवृत्तौ चेत्यर्थः। पूर्वेण नित्ये प्राप्ते विकल्पोऽयमिति मूलस्याशयमाह। जातिपूर्वादितीति। दुर्वारत्वादिति। एवं च तत्र पूर्वसूत्रस्याप्राप्त्या तदसङ्गतिः स्यादिति भावः। नन्वेवं पुत्रहतीत्यस्यासिद्धिः। पुत्रशब्दस्य

नाऽकृतिग्रहणत्वाद्यभावेन च पुत्रशब्दस्य जातिवचनत्वाभावेऽपि पुत्रहतीत्यादौ गौरादिङीषिति बोद्धव्यम्। अस्वाङ्गादित्येव सिद्धे पूर्वपदग्रहणं स्पष्टार्थम्। किञ्च तदभावेऽस्वाङ्गादिति प्राधान्याद् बहुव्रीहिविशेषणं स्यादिति ॥

स्वाङ्गाच्चो। तदन्तादित्युपसर्जनग्रहणलब्धम्। बहुव्रीहेरित्यनुवर्त्तमाने उपसर्जनग्रहणफलमाह—अतिकेशीति। 'एकविभक्ति' इति केशानामुपसर्जनत्वमप्रधानत्वञ्च। शिखेति। इदमेव प्रत्युदा-

---

जातिवाचकत्वाभावादनेन ङीषोऽप्राप्तेरत आह। पुत्रहतीति। स्पष्टार्थमिति। प्रकृतसूत्रे विवक्षितार्थस्य स्पष्टं प्रतिपत्त्यर्थमित्यर्थः। उत्तरार्थं तु तदावश्यकमेवेति बोध्यम्। प्रकृतसूत्रेऽपि तस्य फलं दर्शयति। किंचेति। बहुव्रीहिविशेषणं स्यादिति। तथा सति साध्वी ऊरुभिन्नीत्यादावप्यनेन विकल्पापत्तिरिति भावः। एवं सति 'साध्वी कल्याणपाणिपादेत्यादावतिप्रसङ्ग' इति मिश्रोक्तं तु न युक्तम्। तस्य क्तान्तत्वाभावेन प्रकृतसूत्राविषयत्वात् ॥

उपसर्जनग्रहणलब्धमिति। केवले स्वाङ्गवाचकस्योपसर्जनत्वासंभवादिति भावः। कृत्रिमाकृत्रिमन्यायबाधे मानाभावादुपसर्जनं पूर्वमित्यत्रेवात्रापि लौकिकोपसर्जनत्वसमानाधिकरणशास्त्रीयोपसर्जनस्यैव ग्रहणमित्याशयेनाह। एकविभक्तीति, अप्रधानत्वं चेति च। शिखेति। अत्र टापं बाधित्वा पक्षे ङीष् स्यादिति भावः। ननु कल्याणपाणिपादेत्यादौ ङीष्वारणायात्र सूत्रेऽस्वाङ्गपूर्वपदादित्यनुवर्त्यास्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्तात्प्रातिपदिकादित्यर्थस्य भाष्यसम्मतत्वेन पूर्वसूत्रे स्वेनैवोक्ततया प्रकृतेऽस्वाङ्गपूर्वपदात्परत्वाभावादेव ङीषोऽप्राप्तेः कथमिदमुपसर्जनग्रहणव्यावर्त्यमिति चेन्न। स्वाङ्गाच्चोपसर्जनादिति यथाश्रुतन्यासेऽस्वाङ्गपूर्वपदादित्यनुवृत्तेः प्रकृतसूत्रस्थभाष्यादलाभेन तेनात्र ङीषो वारयितुमशक्यतया तद्व्यावर्त्यतायाः सुवचत्वात्। तत्र हि भाष्ये

उपसर्जनग्रहणस्य शिखेति प्रत्युदाहरणमुक्त्वा ततो बहुव्रीहेश्चान्तोदात्तादिति सूत्राद्बहुव्रीहिग्रहणानुवृत्त्यैवात्र ङीषो व्यावृत्तावुपसर्जनग्रहणमनर्थकमित्याशङ्क्य तदुत्तरं कल्याणपाणिपादेत्यादौ ङीष्वारणाय तदावश्यकमित्युक्तम्। तस्यायं भावः। बहुव्रीहिग्रहणानुवृत्तौ स्वाङ्गान्ताद्बहुव्रीहेरित्यर्थलाभात्पादशब्दस्य स्वाङ्गवाचकत्वेन विशिष्टस्य स्वाङ्गान्तबहुव्रीहित्वान्ङीषापत्तिः। उपसर्जनग्रहणसत्त्वे तु लौकिकोपसर्जनत्वसमानाधिकरणशास्त्रीयोपसर्जनस्यैवात्र ग्रहणात्पादशब्दस्य तादृशोपसर्जनत्वाभावात्पाणिपादेति समुदायस्यान्यपदार्थं प्रति विशेषणतया समासशास्त्रीयप्रथमानिर्दिष्टत्वेन चोपसर्जनत्वेऽपि स्वाङ्गसमुदायस्य तस्य स्वाङ्गत्वाभावाच्च दोष इति। तदुत्तरमस्वाङ्गपूर्वपदादित्यनुवर्त्यास्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद्बहुव्रीहेरित्यर्थाश्रयणादेव तत्र दोषवारणादुपसर्जनग्रहणमनर्थकमित्याशङ्क्य बहुव्रीहेरिति वर्तमाने उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात्। निष्केशी यूका, अतिकेशी मालेति समाहितम्। अनेन च भाष्यग्रन्थसंदर्भेणोपसर्जनग्रहणानर्थक्यशङ्कापक्ष एव कल्याणपाणिपादेत्यादौ दोषवारणाय भगवता तदनुवृत्तिराश्रितेति स्पष्टमेव लभ्यत इति न निरुक्तशङ्कावकाश इति बोध्यम्। नच यथान्यासेऽप्यस्वाङ्गपूर्वपदादित्यस्यानुवृत्तिरवश्यमभ्युपेया। अन्यथा कल्याणपाणिपादेत्यादौ पादार्थस्य समाहारं प्रत्यप्रधानत्वेन पादशब्दस्य द्वन्द्वसमासशास्त्रीयप्रथमानिर्दिष्टत्वेन विग्रहे नियतविभक्तिकत्वेन च निरुक्तोपसर्जनत्वसत्त्वाद्दोषो दुर्वार एव स्यादिति वाच्यम्। उपसर्जनग्रहणसत्त्वे प्रत्यासत्त्या यदर्थस्य स्त्रीत्वं तदर्थं प्रत्युपसर्जनं यत्स्वाङ्गं तदन्तात्प्रातिपदिकादित्यर्थलाभेन पादार्थस्य समाहारं प्रत्यप्रधानत्वेऽपि तस्य स्त्रियामवृत्तेरन्यपदार्थस्य स्त्रियां वृत्तावपि तदर्थं प्रति समाहारस्यैवोपसर्जनत्वात्तद्वाचकस्य पाणिपादेत्यस्य स्वाङ्गत्वाभावेन च ङीषोऽप्राप्त्या तदनुवृत्तेरनावश्यकत्वात्। स्पष्टं चेदमुद्योते। नन्वेवमर्थकरणे कल्याणं घटपादं यस्या इति बहुव्रीहौ कल्याणघटपादीत्यादौ ङीषोऽनापत्तिः, स्वाङ्गवाचकत्वपर्याप्त्यधिकरणे पादशब्दे स्त्रीप्रत्ययप्रकृतिभूत-

हरणम् । शोभनेत्यादि सुशिखान्तं प्रक्षिप्तम् । विशिष्टेऽदन्तत्वा-

---

प्रातिपदिकनिरूपितोपसर्जनत्वपर्याप्तेरभावात् । बहुव्रीहिपदानुवृत्तिकल्पे तु स्वाङ्गभिन्नघटशब्दरूपपूर्वपदात्परस्वाङ्गान्तबहुव्रीहेस्सत्त्वेन ङीष्सिद्धिरिति फलभेदस्य सत्त्वेन सिद्धान्तेऽप्युक्तप्रत्यासत्तिमनाश्रित्यास्वाङ्गपूर्वपदादित्यस्यानुवृत्त्यैव कल्याणपाणिपादेत्यादौ ङीष्वारणीय इति शिखेति प्रत्युदाहरणं चिन्त्यमेवेति चेदत्रोत्तराहाः । बहुव्रीहिपदानुवृत्तिकल्पेऽस्वाङ्गपूर्वपदादित्यनुवृत्त्यैवोपसर्जनग्रहणव्यावर्त्यकल्याणपाणिपादेत्यादिसिद्धावुपसर्जनग्रहणं बहुव्रीह्यधिकारनिवृत्त्यर्थमिति भाष्यविरोधात्तादृशानामनभिधानमेव । सत्युपसर्जनग्रहणे उक्तरीत्या प्रत्यासत्तिमाश्रित्यार्थकरणे कल्याणघटपादीत्यादौ ङीषोऽप्राप्तिः । अस्वाङ्गपूर्वपदादित्यनुवृत्तौ तत्सिद्धिरिति फलभेदस्य स्पष्टत्वादिति । वस्तुतस्त्वेषामनभिधानमनावश्यकमेव । बहुव्रीहिपदानुवृत्तिकल्पेऽपि स्वाङ्गभिन्नपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद्बहुव्रीहेरित्यर्थे प्रत्यासत्त्या बहुव्रीहिसमासनिरूपितस्वाङ्गभिन्नपूर्वपदात्परस्वाङ्गान्तबहुव्रीहेरेव ग्रहणेन घटशब्दस्य बहुव्रीहिसमासनिरूपितपूर्वपदत्वाभावेन ङीषोऽप्राप्तेरिति बोध्यम् । एवव्यावर्त्यमाह । **शोभनेत्यादीति** । तस्य प्रक्षिप्तत्वे हेतुमाह । **अदन्तत्वाभावेनाप्राप्तेरिति** । समासात्प्रागन्तरङ्गत्वाट्टापि ततः समासे विशिष्टस्य तत्त्वाभाव इति भावः । न चोपसंजनिष्यमाणन्यायेन पूर्वं टापोऽप्रवृत्तौ विशिष्टेऽदन्तत्वं सुवचमेवेति वाच्यम् । तेन न्यायेनोत्सर्गशास्त्रे भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचलाभेऽपि भविष्यदपवादविषयघटकातिरिक्तत्वेन सङ्कोचालाभात्तेन न्यायेनात्र समासात्प्राक् टापो वारयितुमशक्यत्वात् । अत एव व्याघ्रीत्यादेर्गतिकारकेतिपरिभाषाफलत्वं भाष्योक्तं संगच्छते । अन्यथा घ्रशब्दस्य भविष्यदपवादविषयसमुदायघटकत्वेन ततष्टापोऽप्रवृत्त्या सुबुत्पत्त्यनन्तरं समासेऽपि बाधकाभावेन तत्परिभाषाफलत्वकथनमसङ्गतमेव स्यात् । अत एवायजे इन्द्र-

भावेनाप्राप्तेः। यद्यपि भाष्ये अशिखेति प्रत्युदाहृतं, तस्याप्येकदेश एव तात्पर्यम्। नञ्पूर्वे 'सहनञ्' इति निषेधेन प्राप्त्यभावात्। एतेन क्रोडादिषु शिखाशब्दपाठ इत्यपास्तम्। ननु स्वमङ्गं स्वाङ्गश्चेत् सुमुखा शालेत्यत्रापि स्यात्, मुखस्य शालाङ्गत्वात्। सुकेशी रथ्येत्यत्र च न स्यात्, केशानां तदङ्गत्वाभावात्, अत आह–अद्रवमिति। स्पर्शवद्द्रव्यपरिमाणं मूर्तिः। रथ्येति। इदानीं प्राणिस्थत्वा-

---

मित्यादौ पूर्वं गुणः। खट्वाक्रीतीत्यादौ टाप् च सिद्ध्यति। न च कुक्कुटाण्डमित्यादाविव समासात्प्राक् स्त्रीत्वाविवक्षया पूर्वं टापोऽप्रवृत्तौ विशिष्टेऽदन्तत्वं सुवचमेवेति वाच्यम्। कुक्कुट्यादीनामण्डादिष्विति वार्तिकप्रत्याख्यानपरभाष्यप्रामाण्यात्तत्र पूर्वं स्त्रीत्वाविवक्षया समासाङ्गीकारेऽप्यत्र तथाऽविवक्षायां मानाभावेन पूर्वं टापो दुर्वारत्वात्। न च शिखाशब्दस्य शीङो ह्रस्वश्चेत्युणादिनिष्पन्नत्वेन सुबुत्पत्तेः प्रागेव समासेऽदन्तत्वं सुलभमेवेति वाच्यम्। उणादीनामव्युत्पन्नताया एव सिद्धान्तत्वेन गतिकारकेतिपरिभाषया सुबुत्पत्तेः प्राक् समासस्य वक्तुमशक्यत्वादित्यत्रधेयम्। नन्वेवमशिखेति प्रत्युदाहरणपरं भाष्यमसङ्गतं स्यादत आह। यद्यपीति। एकदेश एव तात्पर्यमिति। यद्यपीदानीन्तनभाष्यपुस्तकेषु शिखेत्येव प्रत्युदाहरणं दृश्यते। उद्योतेऽपि क्वचिच्छिखेत्येव पाठ इत्यप्युक्तं, तथापि क्वाचित्कस्य तस्य तात्पर्यं वर्णितमिति बोध्यम्। अशिखेत्यत्र वासुदेववाचकाशब्दस्य शिखेत्यनेन षष्ठीसमासस्वीकारे तस्य सुशिखेत्यादितुल्यत्वम्। नञ्समासत्वे तु निषेधविषयतापीत्याह। नञ्पूर्वे इति। एतेनान्यस्य सुशिखेत्यादितुल्यत्वं सूचितम्। एतेनेति। भाष्ये उपसर्जनग्रहणस्य शिखेति प्रत्युदाहरणदानेनेत्यर्थः। शिखाशब्दस्य क्रोडादिपाठे तस्य निषेधविषयत्वेन तदसङ्गतिरिति भावः। सूत्रे स्वाङ्गशब्दस्य केवलयौगिकत्वेऽतिप्रसङ्गसत्त्वाद्वार्तिककारीयपरिभाषाविषयस्य तस्य ग्रहणमिति प्रदर्शयितुमाशङ्कते। नन्विति। स्पर्शवद्द्रव्येति। स्पर्शवन्ति यानि द्रव्याणि पृथिव्यसे-

भावात्पूर्वलक्षणेनासिद्धिः । एवञ्चेदं 'पूर्वलक्षणे प्राणिस्थत्वमुपलक्षणम्' इत्यत्र तात्पर्यग्राहकमिति भावः । प्रतिमादिगतस्तनस्य प्राणिनि कदाप्यदृष्टत्वादाह—तेन चेदिति । अप्राणिनोऽपि स्वाङ्गं (यदि) तेन तज्जातीयेन वस्तुना प्राणी यथा सम्बद्धस्तथाऽप्राणी सम्बद्धश्चेदित्यर्थः । अत एव 'तस्य चेत्तत्तथा युतम्' इत्यस्य 'अप्राणिनोऽपि स्वाङ्गम्' इति शेषो भाष्ये दर्शितः । पुरस्तादिति । स ह्यनन्तरस्यैव

---

जोवायत्रः, तेषां परिमाणं ह्रस्वत्वादि, सा मूर्तिः । सा यस्यास्ति तन्मूर्तिमदित्यर्थः । अनेनाकाशादेर्व्यावृत्तिः । प्रथमलक्षणेनैव द्वितीयलक्षणसंग्राह्यस्य संग्रहसंभवे लक्षणान्तरस्वीकारस्य गौरवपराहतत्वमित्याशयेनाह । एवं चेति । प्राणिनि कदाप्यदृष्टत्वादिति । एतेन तस्य पूर्वलक्षणाविषयत्वमुक्तम् । इदं लक्षणं न प्राणिसंबद्धविषयकमित्यर्थं स्पष्टयितुं शेषपूरणेनाह । अप्राणिनोऽपि स्वाङ्गमिति । अप्राणिनोऽपि मुखादि स्वाङ्गमित्यर्थः। यद्वा अतत्स्थमित्यस्यात्रानुषङ्गः । अप्राणिस्थमपि स्वाङ्गमित्यर्थः । यद्यपि भाष्ये तस्य चेत्तत्तथा युतमिति पाठो दृश्यते, तथापि तस्याप्ययमेवार्थः । तत्र करणस्य शेषत्वविवक्षया षष्ठीस्वीकारादित्याशयेनाह । तेनेति । तज्जातीयेन=प्राण्यङ्गसजातीयेन मुखादिना । तदित्यस्याप्राणिद्रव्यमित्यर्थः । मुखादिना प्राणिद्रव्यं यथा संबद्धं तथा तत्सजातीयेन मुखादिनाऽप्राणिद्रव्यमपि संबद्धं चेदप्राणिनोऽपि मुखादि स्वाङ्गमिति वाच्यार्थः । उद्योते तु तेनेत्यस्याप्राणिनेत्यर्थ उक्तः, तदा तेन अप्राणिना, तत् मुखादि, तथायुतं चेत्, प्राणी यथा संबद्धस्तथा संबद्धश्चेदप्राणिस्थमपि मुखादि स्वाङ्गमिति वाच्यार्थः । उभयोरप्यर्थयोरविशेषादत्र हरदत्ताद्यनुरोधेनैवमुक्तमिति बोध्यम् । तृतीयवाक्यस्याप्राणिसंबद्धविषयकत्वे मानमाह । अत एवेति । अनन्तरस्यैव बाधक इति । अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य

बाधकः । मद्बये इति । स हि पूर्वस्यैव बाधकः । प्रामाणिका इति । एवञ्च सुगात्रीत्यादयोऽपप्रयोगा एवेति भावः । उरः क्रोडेति । टाबन्तोऽयं स्वभावतो विशेषविषयः । शूर्पणखेति । 'पूर्वपदात्संज्ञायाम्' इति णत्वम् । केवलयौगिकत्वे तु शूर्पनखीत्येव । न ङीषिति । अस्वरितत्वादिति भावः । इतिशब्द इति । एवञ्च भाषायामिति व्यर्थम् । छन्दसीत्यस्य 'दिक्पूर्वपदात्' इत्यत्रासम्बन्धेनास्वरितत्वादसम्बन्धसिद्धेः । परे तु दिगिति सूत्रे, वाह इत्यत्र च छन्दसीति वर्त्तते । लोके त्वन्तोदात्तमेव प्राङ्मुखीति । एवञ्च तन्निवृत्तिबोधनाय भाषाग्रहणम् । इतिश्चार्थे, तेन छन्दस्यपि । अत एव

---

बाधे मानाभावः । आकाङ्क्षानिवृत्तेः, विप्रतिषेधशास्त्रबाधे मानाभावाच्चेति भावः । पूर्वस्यैव बाधक इति । पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमत्र बीजम् । टाबन्तोऽयमिति । तेन समासे उपसर्जनह्रस्वत्वेऽदन्तत्वात्प्राप्तिः । विशेषविषय इति । अश्वसंबन्ध्युरोविषय इत्यर्थः । क्रोडादौ टाबन्तमात्रस्य पाठाद्भुजान्तरवचनपुन्नपुंसकक्रोडशब्देन बहुव्रीहौ स्वाङ्गलक्षणो ङीष्विकल्पो भवत्येव । कल्याणक्रोडी, कल्याणक्रोडा मयूरीति हरदत्तस्वरसोऽप्येवमेवेति बोध्यम् । केवलयौगिकत्व इति । राक्षस्यन्तरसाधारणयोगार्थमात्रविवक्षायामित्यर्थः । शूर्प न खीत्येवेति । णत्वं ङीष्प्रतिषेधश्च न भवतीति भावः । रावणभगिन्यां तु तस्य योगरूढत्वेन तदुभयमपि सिद्ध्यति । नान्दीमुख्यो मातर इत्यत्र तु नास्य प्रवृत्तिः । नान्दी = कर्मसमृद्धिर्मुखं = प्रदेयं यस्या इत्यर्थेन तस्य केवलयौगिकत्वादिति बोध्यम् । एवं चेति । अस्य लोकवेदोभयसाधारणत्व इत्यर्थः । ननु भाषायामित्यस्याभावे दीर्घजिह्वी च छन्दसीत्यतश्छन्दोग्रहणानुवृत्तावस्य छन्दोमात्रविषयकता स्यादत आह । छन्दसीत्यस्येति । अन्तोदात्तमेवेति । ङीषन्तत्वादिति भावः । अत एव = इतिशब्दस्य चार्थत्वादेव ॥

'ङेराम्' इति सूत्रे कैयटे—'सख्यशिश्वी च भाषायाम्' इति पाठो दृश्यते इत्याहुः। क्वचिदिति। सर्वविधीनां छन्दसि वैकल्पिकत्वेन 'सखा सप्तपदी भव' इति सिद्धम्। न विद्यते शिशुरस्या इत्यशिश्वी। क्वचिदस्याद्युदात्तत्वन्तु छान्दसत्वात्॥

जातिशब्देन अर्थे कार्यासम्भवात्तद्वाचकग्रहणमित्याह—जातिवाचीति। अनन्यभावे विषयशब्द इत्याह—न च स्त्रियां नियतमिति। भिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिः, नित्यमेकमनेकानुगतं सामान्यमित्यस्य च शुक्लादिगुणस्यैकत्वनित्यत्वपक्षे तत्रातिव्याप्तिः। 'जननेन प्राप्यते सा जातिः' इति च युवत्वादावव्याप्तमत आह—आकृतीति। ग्रहणमिति करणे ल्युट्। सामान्ये

---

अस्त्रीविषयादित्युक्त्या स्वरूपग्रहणनिरासादाह। जातिशब्देनेति। अभिन्नाभिधानप्रत्ययनिमित्तमिति। अभिधीयतेऽनेनेत्यभिधानं = शब्दः। तेन तत्प्रयोगो लक्ष्यते। व्यवहार इति यावत्। प्रत्ययो=ज्ञानम्। एवं च भिन्नेषु पदार्थेष्वभिन्नयोः समानाकारयोरभिधानप्रत्यययोर्ज्ञानव्यवहारयोर्यन्निमित्तं सा जातिरित्यर्थः। लक्षणान्तरमाह। नित्यमेकमनेकानुगतमिति। नित्यत्वे सति एकत्वे सति समवायेनानेकवृत्तित्वमित्यर्थः। नित्यत्वेन संयोगनिरासः। एकमिति स्वरूपकथनपरं, न विशेषनिवृत्त्यर्थम्। तेषां प्रतिस्वं भिन्नत्वात्। अनेन च सामान्यसद्भावे प्रत्यभिज्ञाप्रत्यक्षरूपं प्रमाणं दर्शितम्। गगनपरिमाणादावतिव्याप्तिवारणायानेकेति। अत्यन्ताभावेऽतिव्याप्तिवारणाय समवायेति। शुक्लादीति। हिमपयश्शङ्खादिषु सर्वत्र शुक्लश्शुक्ल इति समानाकारप्रतीत्या समानशब्दप्रयोगेण तेषामपि घटादिवन्नित्यत्वमेकत्वं च सिद्ध्यतीति भावः। उक्तलक्षणद्वयेऽतिव्याप्तिं प्रदर्श्य तृतीयेऽव्याप्तिं दर्शयति। जननेनेत्यादिना। आकृतिशब्दसामानाधिकरण्येन स्त्रीत्वौचित्यादाह। सामान्ये इति। ननु

नपुंसकम्। आकृतिरवयवसन्निवेशः। आकृतिर्ग्रहणं यस्या इति विग्रहस्तदाह—अनुगतेति। ईदृशाकारो गौरित्याकृत्युपदेशादिव्यङ्ग्या इत्यर्थः। न च बाल्याद्यवस्थाभेदभिन्नानेकदेहवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन तत्रातिव्याप्तमिदमिति वाच्यम्। समानकालिकानेकव्यक्तिवृत्त्यनुगतसंस्थानव्यङ्ग्येत्यर्थाद्, अवस्थाभेदेऽपि तद्भेदाप्रतीतेश्च, स एवायमिति प्रतीतेश्च, तज्जातीयोऽयमित्यप्रतीतेश्च। अत एवेन्द्रत्वादिकं न जातिः। पञ्चेन्द्रोपाख्यानादिभिरनेकेषां समकालिकत्वेऽपि सर्वेषां संस्थानस्यैकत्वे मानाभावात्। दुर्गाऽपर्णेत्यादौ स्त्रीविषयत्वादपि न ङीष्। तटीनि। अनुगतसंस्थानव्यङ्ग्यमेतत्। जलसमीपदेशविशेषो हि तटम्। नन्वेवं वृषलत्वादीनां जातित्वं न स्यात्। अवयवसंस्थानस्य ब्राह्मणादिसाधारण्येन तस्या आकृतिग्रहणत्वाभावात्' किं तु साक्षादुपदेशगम्या सेत्यत

---

शाले आकृतिपदस्य जातौ प्रसिद्धेर्जातिग्राह्या जतिरित्ययुक्तमत आह। अवयवसन्निवेश इति। जात्याकृतिव्यक्तयः पदार्थ इत्यादावाकृतिपदस्यावयवसंस्थानार्थकताया अपि दृष्टत्वादत्र तस्यैव ग्रहणमिति भावः। समानकालिकेति। समानकालिका या अनेकव्यक्तयस्तद्वृत्ति यदनुगतं संस्थानमवयवसन्निवेशस्तद्व्यङ्ग्या तज्जन्यज्ञानविषयीभूता जातिरित्यर्थः। इदं चावस्थाभेदेन देहस्य भेदमभ्युपेत्योक्तम्। वस्तुतस्स एव नेत्याह। अवस्थाभेदेऽपीति। तदिति। देहेत्यर्थः। न केवलं भेदाप्रतीतिः, प्रत्युताभेदप्रतीतिरपीत्याह। स एवायमिति। अत एवेति। अनुगतावयवसंस्थानव्यङ्ग्यत्वनिवेशादेवेत्यर्थः। स्त्रीविषयत्वादपीति। अपिना कल्पभेदेन दुर्गादिशरीराणां भिन्नत्वेऽपि तेषां समानकालिकत्वाभावेनाजातित्वसमुच्चयः। तटस्वरूपजातौ लक्षणं ग्राहयति। अनुगतेति। एवमिति। उक्तलक्षणमात्राङ्गीकारे इत्यर्थः। अत आहेति। अतो

आह—लिङ्गानामिति । इयमपि जातिरित्यर्थः । लिङ्गानामिति कर्मणि षष्ठी । सर्वाणि लिङ्गानि न भजतीति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि भाष्यप्रामाण्याद् भजो ण्विः, समासश्च । आख्यातम्—आख्यानम्, उपदेशः । कथनात्—उपदेशात् । एकत्रेन्द्र इत्युपदिष्टे अन्यत्र तद्ग्रहे मानाभावान्नेन्द्रत्वादि तथा । ब्राह्मणत्वन्तु एकत्रोपदिष्टे तत्तत्पित्रादिषु सुग्रहम् । वृषलत्वं तदपत्यतत्सहोदरादौ सुग्रहम् । अत्राकृतिग्रहणेति नित्यानित्यसाधारणमिति युवत्वादिकमपि जातिरेतन्मते । अपर आहेत्यादिना यावद्द्रव्यभावित्वमित्यनित्यव्यावृत्तं लक्षणान्तरं भाष्ये दर्शितम् । एवञ्च

---

लक्षणान्तरमप्याहेत्यर्थः । लक्षणे चो भिन्नक्रम इति सूचयंस्तदर्थघटितमाह । इयमपीति । आख्यातशब्दो भावक्तान्त इत्याह । आख्यानमिति । अनुवादनिरासाय तदर्थमाह । उपदेश इति । स चायं ब्राह्मण इत्यादिरूप इत्यर्थः । अस्यापि लक्षणस्येन्द्रत्वादौ नातिप्रसङ्ग इत्याह । एकत्रेति । तत्पित्रादिष्विति । ब्राह्मणाद्ब्राह्मण्यामुत्पन्नस्यैव ब्राह्मणत्वादिति भावः । अत्र तदपत्यादिष्विति नोक्तम् । ब्राह्मणेन क्षत्रियादिषूत्पन्नस्यान्यजातीयत्वसंभवात् । तदपत्येति । अत्र तत्पित्रादिष्विति नोक्तम् । वृषलपितुरन्यजातीयत्वस्यापि संभवात् । तत्सहोदरेति । तेन सहैकस्मिन्नुदरे जात इत्यर्थः । तेन भिन्नोदरभ्रातुरन्यजातीयत्वेऽपि न क्षतिः । अपर आहेत्यादिना भाष्योक्तलक्षणान्तरादत्र वैलक्षण्यं दर्शयति । नित्यानित्यसाधारणमिति । नित्यं गोत्वादिः। अनित्यं युवत्वादिः। द्वयोरप्यनुगतावयवसंस्थानव्यङ्ग्यत्वादिति भावः । मृदुसंस्थानव्यङ्ग्यं कुमारत्वं, कठिनसंस्थानव्यङ्ग्यं युवत्वं, शिथिलसंस्थानव्यङ्ग्यं च वृद्धत्वमिति बोद्धव्यम् । यावद्द्रव्यभावित्वमिति । स्वाधिकरणद्रव्यसत्ताव्यापकसत्ताकत्वमित्यर्थः । युवत्वादीनां स्वाधिकरणीभूताया

भिन्नऋषिकर्तृकलक्षणद्वयप्रामाण्येन कुमारादिशब्दे जातिकार्य-विकल्पः। अत एव युवजानिरित्यत्र पुंवत्त्वं, युवतितरेत्यत्र तदभावश्च भाष्ये उदाहृतः। नन्वेताभ्यामप्यौपगवी कठीत्यादेरसङ्ग्रहोऽनुगत-संस्थानव्यङ्ग्यत्वाभावात्सर्वलिङ्गत्वाच्चेत्यत आह—गोत्रश्चेति। शास्त्री-यमत्र गोत्रम्। अत एव 'गोत्राद्यूनि प्रत्ययो भवति, स्त्रियां लुक्' इति न्यासे 'औपगवी माणविकेत्यत्राण् योऽनुपसर्जनमित्यनुप-सर्जनलक्षणईकारो न प्राप्नोति, मा भूदेवम् अणन्तादनुपसर्ज-नादित्येवं भविष्यति' इति प्रौढ्या पूर्वपक्षिणोक्ते, तदङ्गीकृत्यैव 'इह तर्ह्यौपगवीभार्य्यः जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति, मा भूदेवं वृद्धिनिमित्तस्येत्येवं भविष्यति। एवन्तर्हि ग्लुचुकायनीभार्ये दोषः' इति 'एको गोत्रे इति सूत्रस्थभाष्ये युवापत्यस्य जातित्वा-

---

व्यक्तेर्या सत्ता तद्व्यापकसत्ताकत्वाभावान्न जातित्वमत्र पक्षे इति बोध्यम्। अत एवेति। वयोवाचकानामुक्तरीत्या जातिकार्यस्य वैकल्पिकत्वादेवेत्यर्थः। गोत्रं च चरणैस्सहेत्यत्र गोत्रपदेनापत्यमात्रं गृह्यते। अपत्याधिकारादन्यत्र लौकिकस्यैव ग्रहणादिति प्राचीनोक्तमयुक्तमिति सूचयन्नाह। शास्त्रीयमिति। अपत्यं पौत्रेतिसूत्रोक्तमित्यर्थः। शास्त्रीयग्रहणे मानमाह। अत एवेति। न प्राप्नो-तीति। युवापत्यप्रत्ययार्थं प्रति गोत्रापत्यप्रत्ययार्थस्य विशेषणत्वादिति भावः। प्रौढ्येति। अनुपसर्जनादित्यस्य सामर्थ्याद्गृह्यमाणविशेषणताया एवाकरसम्मत-त्वेन तदन्तविशेषणत्वप्रतिपादनपरस्यास्य प्रौढिवादत्वमिति भावः। औपगवी-भार्य इति। उपगोर्युवापत्यं स्त्री, औपगवी, सा भार्या यस्येति विग्रहः। अत्र न्यासेऽणन्तादिञ्, तस्य लुक्। ग्लुचुकायनीभार्य इति। ग्लुचुकशब्दा-द्गोत्रापत्ये प्राचामवृद्धादिति फिनि ततोऽत्र न्यासे युवापत्ये स्त्रियामणि तस्य लुगिति भावः। ननु कथमस्माद्भाष्याद्युवापत्यस्य जातित्वाभावो लभ्यते,

भावकथनं सङ्गच्छते । अन्यथा जातिलक्षणङीष एव परत्वाद्वक्तुं युक्तत्वं, पुंवत्त्वप्रतिषेधो न प्राप्नोतीत्यसङ्गतिश्च । ग्लुचुकायनीभार्ये दोषस्तु ङीष्पुंवत्त्वप्रतिषेधयोरसिद्धिरूपो बोद्धव्यः । 'सर्वतोऽक्तिन्नर्थात्' इति ङीषि तु पुंवत्त्वप्रतिषेधासिद्धिरेव दोषः । अत एव 'ब्राह्मोऽजातौ' इति सूत्रेऽपत्ये जातौ नेत्यर्थः सङ्गच्छते । तव त्वपत्यस्य जातित्वाव्यभिचारात्तदसङ्गतिः, ब्राह्मो नारद इत्यसिद्धिः । अतः सामर्थ्येनात्र शास्त्रीयगोत्रस्यैव ग्रहीतुमौचित्यम् । अनन्तरापत्यप्रत्ययान्ते अवन्ती इत्यत्र जातिप्रयुक्तो ङीषित्यनुपसर्जनादिति

---

इत्यत आह । अन्यथेति । अपत्यसामान्यस्य जातित्व इत्यर्थः । वक्तुं युक्तत्वमिति। अणन्तादनुपसर्जनादित्येवं भविष्यतीत्यनुक्त्वा जातिलक्षणो ङीष् भविष्यतीत्येव वक्तुं युक्तम् । तदपेक्षयाऽस्य परत्वात्तथाऽनुक्तया च तस्य जातित्वं नेति भाष्याशयः प्रतीयत इति भावः । 'एवं तर्हि ग्लुचुकायनीभार्ये दोष' इत्यनेनाप्ययमर्थः स्फुटं लभ्यत इति वक्तुं तत्र भाष्याभिप्रेतं दोषं दर्शयति । ङीष्प्रतिषेधयोरसिद्धिरूप इति । इतो मनुष्यजातेरिति ङीषोऽसिद्धिः । वक्ष्यमाणरीत्या ङीष्संपादनेऽपि जातेश्चेति पुंवत्त्वप्रतिषेधासिद्धिरिति भावः । अपत्यसामान्यस्य जातित्वे तदसङ्गतिः स्पष्टैव । गोत्रापत्यस्यैव जातित्वे त्वत्र न्यासेऽस्य युवापत्यप्रत्ययान्तत्वेन जातित्वाभावादुभयं सङ्गतमिति बोध्यम् । अत एवेति । गोत्रापत्यस्य जातित्वादेवेत्यर्थः । तव त्विति । अपत्यमात्रस्य जातित्वाङ्गीकर्तुस्तवेत्यर्थः । तन्मते भाष्यासङ्गतिमर्थासङ्गतिं च प्रदर्श्य रूपासिद्धिं दर्शयति । ब्राह्म इति । तव मतेऽनन्तरापत्यस्यापि जातित्वेनाजाताविति निषेधाद्विलोपो न स्यादिति भावः । सामर्थ्येनेति । अपत्यस्य जाताविति विशेषणसामर्थ्येनेत्यर्थः नन्वेवमनुपसर्जनादिति सूत्रस्थभाष्यविरोधोऽत आह। अनन्तरेति। नन्वेवंरीत्या प्रागुक्तमेको गोत्र इति सूत्रस्थं भाष्यमपि सुयोजमत आह ।

सूत्रभाष्यन्त्वनन्तरेऽस्वत्थाम्नि द्रौणायनिवद्गोत्रत्वारोप इत्यभिप्रायेण। यूनि तु न शास्त्रीयगोत्रत्वारोपः, तत्र युवैव न गोत्रमिति नियमेन तत्संज्ञानिषेधात्—तदाह—अपत्यप्रत्ययान्त इति। 'अपत्यं पौत्रप्रभृति' इति परिभाषित इति शेषः। शाखाध्येत्रिति षष्ठीतत्पुरुषः। शाखायामस्त्रीविषयत्वाभावात्। जातिकार्यं लभते इति। अनेनास्यातिदेशत्वं बोधयति। कठेन प्रोक्तमधीते इति वैशम्पायनान्तेवासित्वात्प्रोक्तार्थणिनेः 'कठचरकात्' इति लुक्। अध्येत्रणः प्रोक्ताल्लुक्। बह्वय ऋचोऽध्येतव्या यस्या इति विग्रहे 'ऋक्पूः' इत्यप् समासान्तः। स्त्रिया अध्ययनाभावेऽपि तद्गृह्यत्वात्ताच्छब्द्यम्, यथाऽनधीयाने माणवके। ब्राह्मणीत्यत्रापत्येऽणि

---

यूनि त्विति। तत्संज्ञानिषेधादिति। नियमेनारोपितगोत्रत्वस्यापि निषेधादित्यर्थः। चरणशब्दः कठादिषु शाखाभेदेषु मुख्यः। तदध्यायिषु च पुरुषेषु गौणः। प्रकृते उभयोरपि ग्रहणमित्यनुवादे चरणानामिति सूत्रस्थकौस्तुभपदमञ्जरीग्रन्थानुरोधेनात्र प्राप्तद्वन्द्वसमासशङ्कानिरासायाह। षष्ठीतत्पुरुष इति। अस्त्रीविषयत्वाभावादिति। एवं च केवलशाखावाचिनो नित्यस्त्रीत्वान्ङीषोऽप्राप्त्या तस्य जातित्वकथनं निष्फलमिति भावः। इदं च केवलशाखावाचिनोऽपि प्रयोगमभ्युपेत्य। वस्तुतश्छन्दो ब्राह्मणानि च तद्विषयाणीति नियमेन केवलशाखावाचिनः प्रयोग एव नेति तस्य जातित्वकथनं निरर्थकमेवेति बोध्यम्। कठीत्यत्र प्रक्रियां दर्शयति। कठेनेति। बह्वृचीत्यत्र तामाह। बह्वय इति। ननु पुरा कल्पेषु नारीणां मौञ्जीबन्धनमिष्यते, अध्यापनं च वेदानां सावित्रीवचनं तथे, तिमनुवचनात्पुराकल्पे स्त्रीणामध्ययनाधिकारसत्त्वेऽपीदानीं तदभावादिदमसङ्गतमत आह। स्त्रिया इति। आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् सकृदाख्यातनिर्ग्राह्येति समख्या एकमेव लक्षणमिति

'ब्राह्मोऽजातौ' इत्युक्तेष्टिलोपाभावः। परे तु आकृतिग्रहणेत्येव लक्षणम्। आकृतिपदमुपदेशोपलक्षणम्। आकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरित्यर्थः। तत्रेदृशाकारो गौरित्याकृत्युपदेशग्राह्या गोत्वादिजातिः। अयं ब्राह्मण इतिसाक्षादुपदेशग्राह्या ब्राह्मणत्वादिजातिः। यद्वा आकृतिग्रहणं जातिग्राहकोपदेशस्याप्युपलक्षणम्।

---

भाष्यानुगृहीतं स्वसिद्धान्तमाह। परेत्विति। उपदेशोपलक्षणमिति। एवं चोपदेशग्राह्या जातिरित्येव लक्षणं सिद्धम्। उपदेशश्च द्वेधा। साक्षादाकृतिद्वारा वेति। तत्र साक्षादुपदेशो जातिग्राहक एव ग्राह्यः। तेन शुक्लादिगुणानामयं शुक्ल इत्याद्युपदेशग्राह्यत्वेऽपि तादृशोपदेशस्य गुणग्राहकत्वेन जातिग्राहकत्वाभावान्नातिप्रसङ्गः। नच गुणिपरशुक्लादिशब्दानां सर्वलिङ्गत्वेन लिङ्गानां च न सर्वभागिति विशेषणेनैव जातित्वव्यावृत्तावियं विवक्षा निष्फलेति वाच्यम्। तस्यानुवादकताया एवोद्योतेऽत्र च ग्रन्थकृता प्रतिपादितत्वेन तेन वारयितुमशक्यत्वात्। अत्र पक्षे यत्र तूपदेशमन्तराप्याकृतिदर्शनमात्रेणैव जातिग्रहणं तत्र जातिकार्यासिद्धिरित्याशयेन पक्षान्तरमाह। यद्वेति। आकृतिग्रहणमिति। आकृतिपदमित्यर्थः। एवं चात्र पक्षे आकृत्युपदेशान्यतरग्राह्या जातिरिति लक्षणं सिद्धम्। अत्र जातिग्राहकेत्युपलक्षणं, न तु विशेषणमिति नात्माश्रयः॥

औचराहास्त्वत्रात्माश्रयवारणाय स्वयोजकेच्छीयज्ञाननिष्ठोद्देश्यतानिरूपितावच्छेदकतासमानाधिकरणा या विशेष्यत्वासमानाधिकरणप्रकारता, तादृशप्रकारताकज्ञानजनकत्वस्वतादात्म्योभयसंबन्धेनोपदेशविशिष्टस्यैवात्र जातिग्राहकोपदेशपदेन ग्रहणम्। अयं ब्राह्मण, ईदृशाकारो गौरित्याद्याकारको य उपदेशः, तत्प्रयोजिका या, अस्य गोत्वज्ञानं भवत्वित्याद्याकारिका इच्छा तदुद्देश्यता गोत्वज्ञाने, तन्निरूपितावच्छेदकता विषयित्वसंबन्धावच्छिन्ना गोत्वे, तत्समानाधिकरणा, तादृशोपदेशजन्याऽयं गौरित्याद्याकारकज्ञानीयप्रकारता गोत्व-

'लिङ्गानाञ्च न सर्वभाक्' इति तत्स्वरूपानुवादकम्। तेन शुक्लादिगुणानामेकत्वेऽपि जातित्वाभावो बोधितः। अत एव 'विशेषणानाञ्च' इति सूत्रे जातेराविष्टलिङ्गत्वं भाष्ये उक्तम्। आविष्टलिङ्गत्वं नियतलिङ्गत्वमिति कैयटः। तच्च प्रायिकमिति केचित्। 'भाष्यप्रामाण्याज्जातेरेकशब्दवाच्यायाया न त्रिलिङ्गता। 'तटं त्रिषु' इत्यादिकोशकृतां प्रमाद' इत्यन्ये। 'सकृदाख्यातनिर्ग्राह्या' इत्यनेनैक-

---

निष्ठा, सा च विशेष्यत्वासमानाधिकरणापि, जातेः स्वरूपणैव भानादिति तन्निरूपकज्ञानजनकस्योक्तोपदेशस्य ग्रहणम्। अयं शुक्ल इत्याद्याकारकोपदेशजन्यज्ञानीया शुक्लादिनिष्ठा तादृशोपदेशप्रयोजकेच्छीयोद्देश्यतावच्छेदकतासमानाधिकरणा, प्रकारता, न विशेष्यत्वासमानाधिकरणा, अपि तु गुणत्वव्याप्यशुक्लत्वनिष्ठप्रकारतानिरूपितविशेष्यतासमानाधिकरणैवेति नात्र तादृशोपदेशस्य जातिग्राहकोपदेशपदेन ग्रहणम्। न चायमभाव इत्याकारकोपदेशजन्यज्ञानीयाभावत्वनिष्ठप्रकारतायास्तादृशत्वात्तन्निरूपकज्ञानजनकस्यायमभाव इत्याकारकोपदेशस्यापि ग्रहणापत्तिरिति वाच्यम्। अभावस्यानुयोगिताविशेषरूपत्वेन तन्निष्ठप्रकारताया विशेष्यत्वासमानाधिकरणत्वादित्याहुः। जातिग्राहकत्वस्योपलक्षणत्वकथनेनापि तद्दोषवारणसंभवेऽयं क्लेशो निष्फल इति बोध्यम्॥

नन्वेवं लिङ्गानां च न सर्वभागित्यग्रिमवैयर्थ्यमत आह। लिङ्गानां चेति। तत्स्वरूपेति। जातिस्वरूपेत्यर्थः। उत्तरलक्षणेऽसर्वलिङ्गानामित्यस्य तावन्मात्रफलकत्वादिति भावः। तेनेति। उपदेशपदेन जातिग्राहकोपदेशस्यैव ग्रहणेनेत्यर्थः। ननु तेषामनेकत्वादेव निरासोऽस्त्वित्यत आह। एकत्वेऽपीति। एकत्वमिति मतेऽपीत्यर्थः। अत एवेति। जातेरसर्वलिङ्गत्वादेवेत्यर्थः। तटादौ सर्वलिङ्गत्वादाह। तच्चेति। केचित्=प्राञ्चः। सिद्धान्तमाह। भाष्येति। नन्वेवं कोशस्य का गतिरत आह। कोशकृतामिति।

त्वमनेकानुगतत्वञ्च बोधितम् । सकृदेकवारं कचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्येति तदर्थः । गोत्रञ्चेत्यादि प्राग्वदेव । अत एव

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥

इति लक्षणान्तरं भाष्ये उक्तम् । सत्त्वस्य—द्रव्यस्य प्रादुर्भावविनाशाभ्यां या तौ प्राप्नोति सा जातिरिति लक्षणम् । यावद्द्रव्यभाविनीति तदर्थः । अनेन गोत्वब्राह्मणत्वाद्योरुभयोरपि सङ्ग्रहः । गुणैर्युगपद् द्रव्येण सम्बध्यते । यथा निर्गुणस्य द्रव्यस्य नोपलम्भस्तथा जातिरहितस्यापीत्यर्थ इति कैयटः । इदं स्वरूपकथनमेव । अत्र लक्षणे असर्वलिङ्गामित्येतत् मदुक्तार्थकमेव,

---

सकृदित्याद्यंशान्तरप्रयोजनमाह । सकृदिति । बोधितमिति । उत्तरलक्षणे बह्वर्थामित्यनेन तस्यैवोक्तत्वादिति भावः । प्राग्वदेवेति । अतिदेश एवेत्यर्थः । आकृतिग्रहणेत्यादेरेकलक्षणत्वेन व्याख्याने उत्तरलक्षणसंवादं दर्शयति । अत एवेति । ताविति । प्रादुर्भावविनाशावित्यर्थः । इति लक्षणमिति । एतावन्मात्रमेव लक्षणमित्यर्थः । नन्वेवमात्मनः प्रादुर्भावविनाशाभावेनात्मत्वादेर्जातित्वं न स्यादत आह । यावदिति । एतदर्थोपलक्षणं तदित्याशयः । गुणैर्युगपदित्युक्तौ केनेत्याकाङ्क्षायामाह । द्रव्येणेति । युगपदित्यस्यैककाले इत्यर्थः । गुणैरिति प्रकृत्यादित्वात्तृतीया । द्रव्येणेति सहयुक्ते तृतीया । गुणैरेककाले द्रव्येण सह संबध्यत इत्यर्थः । अस्य कैयटोक्तं तात्पर्यमाह । यथेति । इदं = गुणैर्युगपदित्येतत् । स्वरूपकथनमेवेति । जातिस्वरूपकथनमेव, न तु लक्षणघटकमिति भावः । मदुक्तार्थकमेवेति । अनु-

**न तु लक्षणान्तरम्। अनुपयोगात्। बह्वर्थाम्—सर्वव्यक्तिव्यापिनीमित्यर्थः। एतदेकवाक्यतया पूर्वलक्षणेऽपि मदुक्तव्याख्यैवोचिता। अत एव 'कः पुनरेतयोर्जातिलक्षणयोर्विशेषः यथा पूर्वलक्षणं तथा कुमारीभार्य इति भवितव्यं, यथोत्तरं तथा कुमारभार्यः' इति भाष्ये लक्षणमित्येकवचनमेव प्रयुक्तम्। अत एवाकडारसूत्रशेषे 'आकृतिग्रहणा जातिः' इत्येवोक्तं भाष्ये इत्याहुः। बलाकेति। अयश्च**

---

वादकमेवेत्यर्थः। शुक्लादिगुणानामयावद्द्रव्यभावित्वेन जातित्वाप्रसक्त्या तद्व्यावर्तकताया वक्तुमशक्यत्वादिति भावः। लक्षणान्तरत्वमपि तस्य नेत्याह। **न त्विति। अनुपयोगादिति।** वृषलत्वादीनामपि यावद्द्रव्यभावित्वात्पूर्वेणैव जातित्वस्य सिद्धत्वादिति भावः। **बह्वर्थामि**त्यत्रार्थशब्दो विषयवाची, न प्रयोजनवाची। तेन बहुव्यक्तिवर्तिनीमित्यर्थस्तदाह। **सर्वेति।** समानकालिकबहुव्यक्तिव्यापिनीमित्यर्थः। तेनावस्थाभेदेन द्रव्यभेदाङ्गीकारेऽपि देवदत्तत्वादीनां न जातित्वमिति बोध्यम्। **मदुक्तव्याख्येति।** एकलक्षणत्वेन व्याख्येत्यर्थः। **अत एवेति।** उक्तरीत्या पूर्वत्रैकलक्षणत्वादेवेत्यर्थः। **एकवचनमेवेति।** पूर्वस्य लक्षणद्वयत्वे तु यथा पूर्वं लक्षणमित्येकवचनासङ्गतिः। तस्य जात्यभिप्रायकत्वं त्वगतिकगतिरिति भावः। तत्रैव मानान्तरमाह। **अत एवेति। इत्येवोक्तमिति।** यद्यपि तत्रासर्वलिङ्गा जातिरित्येव भाष्ये दृश्यते, न त्वाकृतिग्रहणेति, तथाप्येकमेव जातिलक्षणं प्रतिपादितं, न तु लक्षणद्वयमित्युक्तावेव तात्पर्यमिति बोध्यम्। उद्योते तु परे त्वित्यादिना एतत्सर्वमुक्त्वा वस्तुतो भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नमिति पस्पशास्थभाष्यबोधितं नित्यत्वे एकत्वे च सत्यनेकानुगतत्वमेव जातिलक्षणं भाष्यसम्मतं ब्राह्मणत्वघटत्वादिसाधारणम्। शुक्लादीनां नित्यत्वैकत्वमतेऽप्यौपाधिकभेदेनानेकत्वव्यवहाराच्च न जातित्वम्। अत एव जात्याख्यायामिति

बिसकण्ठिकापदवाच्यजातिविशेषवाची । स च बकत्वव्याप्योऽन्यो वेत्यन्यदेतत् । अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तर-रहितभिन्नादित्यर्थः। एतेन बलां कायतीति यौगिकस्य सर्वलिङ्गत्वात्

बलाका बकपङ्क्तिः स्याद् बलाका बिसकण्ठिका ।
बलाका कामुकी प्रोक्ता बलाकश्च बको मतः ॥

इति कोशे पुंलिङ्गस्याप्यभिधानाच्च नेदं युक्तमित्यपास्तम् । अत एव 'पाककर्ण' इति सूत्रं चरितार्थम् । तद्धि स्त्रीविषयार्थम् । अन्यथा तेषामपि यौगिकेऽर्थे लिङ्गान्तरसम्भवेन पूर्वेण सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥

सूत्रे यत्तद्व्रीहौ व्रीहित्वं गार्ग्ये गार्ग्यत्वं, तस्यैकत्वादेकवचनमिति भाष्ये अनेन तत्र जातित्वारोपो दर्शितः । गोत्रं च चरणैस्सहेत्यत्रत्यमपि तयोस्तत्त्वारोपबोधकमेव । डित्थत्वादौ तु न तत्त्वारोपः । जातिकार्यादर्शनात् । वयस्यपि जातित्वारोपः कार्यानुसारेण व्यवस्थित इति तद्विषयरूपद्वयसिद्धिः । अवन्तीत्यादौ तव गोत्रत्वारोपवत् । अत एवैतयोर्लक्षणयोर्व्याख्यालेशोऽपि भगवता नाकारीति साम्प्रदायिका इत्युक्तम् । अनेनास्यैव स्वाभिप्रेतत्वं सूचितमिति बोध्यम् । ननु बलाकाशब्दस्य बिसकण्ठिकायां नित्यस्त्रीत्वेऽपि बलां कायतीत्यर्थे सर्वलिङ्गत्वात्कथमिदमस्त्रीविषयादित्यस्य प्रत्युदाहरणमत आह । अस्त्रीविषयादित्यस्येति । एवं च बलाकाशब्दस्य क्रियारूपे प्रवृत्तिनिमित्ते सर्वलिङ्गत्वेऽप्युक्तजातिरूपे प्रवृत्तिनिमित्ते तदभावान्नानुपपत्तिः । बलाकश्च बको मत इति कोशोक्तजातिप्रवृत्तिनिमित्तकबलाकशब्दस्य पुंलिङ्गत्वेपि तस्य बकत्वरूपव्यापकजातिप्रवृत्तिनिमित्तकत्वेन स्त्रीलिङ्गबलाकाशब्दस्य व्याप्यजातिप्रवृत्तिनिमित्तकत्वेन च प्रवृत्तिनिमित्तभेदान्नानुपपत्तिः । बिसकण्ठिकात्वमन्यदेव, न तु बकत्वव्याप्यमिति मते तु नानुपपत्तिशङ्कापीति बोध्यम् । अत एवेति । अस्त्रीविषयादित्यस्य निरुक्तार्थकत्वादेवेत्यर्थः । तेषामपीति । पाकाद्युत्तरपदानामपीत्यर्थः ॥

पाककर्ण। जातिवाचिनः किम्। बहुपुष्पा शाखा। स्त्रीवि-षयादपीति। अजात्यर्थन्तु न। प्राक्पुष्पादिषु जातिवचनेषु नित्य-स्त्रीलिङ्गेषु 'सदच्काण्ड' इत्यादिनिषेधात्। योपधादपीति। पुनर्जा-तिग्रहणादिति भावः। अस्त्रीविषयादिति तु पूर्वसूत्रेण विच्छिन्नम्। तित्तिरिरिति। स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः इत्यमरा-दयं स्त्रियामपीति भावः। इतः किम्। दरत्। 'द्वयञ्मगध' इत्यणो 'अतश्च' इति लुक्॥

ऊङुतः। ङकारो 'नोङ्धात्वोः' इति विशेषणार्थः। अन्यथा यवाग्वेत्यादावपि निषेधः स्यात्। दीर्घोच्चारणं प्रश्लेषेणोकारद्वय-विधानद्वारा ब्रह्मबन्धूरित्यादिबहुव्रीहौ परकन्निवृत्त्यर्थं, रूपाणां सवर्णदीर्घेण सिद्धेरिति भाष्ये स्पष्टम्। श्वश्रूरिति तु 'श्वशुरः

---

नन्वजात्यर्थमेव किं न स्यादत आह। अजात्यर्थं त्विति। निषेधा-दिति। अस्याजात्यर्थत्वेऽस्त्रीविषयादित्यस्यात्रापि संबन्धात्पूर्वसूत्रस्यास्य चा-प्राप्त्या निषेधो व्यर्थ एव स्यादिति भावः। इदं च सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेध इति प्रकृतसूत्रस्थभाष्यानुरोधेन, तस्याजादिगणे पाठे तत्पाठ-वैयर्थ्यं, सूत्रद्वयेनापि ङीषोऽप्राप्त्यादन्तत्वादेव टाप्सिद्धेरिति बोध्यम्। पुनर्जातिग्रहणादिति। जातिग्रहणेऽनुवर्तमाने पुनर्जातिग्रहणस्यायोपधादिति पदासंबन्धार्थत्वादिति भावः। ननु तित्तिरिः कुक्कुभो लाव इति साहचर्या-त्पुंस्त्वेनास्य स्त्रीत्वासंभवोऽत आह। स्त्रीपुंसयोरिति। इदमुपलक्षणम्, नपुंसकस्यापि। नाडायनं नपुंसकमिति कोशस्यौपगवं कुलमिति प्रयोगस्य च दर्शनात्॥

भाष्ये स्पष्टमिति। तत्र हि अथ दीर्घोच्चारणं किमर्थं, ब्रह्मबन्धूः, वीरबन्धूः, नपूतश्चेति कप्प्रसज्येत। नैष दोषः, नद्यन्तानां यो बहुव्रीहिरित्येवं

श्वश्र्वा' इति निर्देशात्सिद्धम्। कुरूरिति। एकादेशस्य पूर्वान्तवत्त्वा-त्स्वादयः। अध्वर्युरिति। अध्वर्युशाखाध्यायिवंशोद्भवेत्यर्थः। रज्ज्वा-दीति। उत इति तु नेह सम्बध्यते। अलाबूरिति भाष्योदाहरणा-दिति भावः। कृकवाकुरित्यत्र मनुष्यजातित्वाभावात्पूर्वेणापि न। पङ्गोश्च। पङ्गुशब्दो गुणवाचीति पूर्वेणाप्राप्तिः। श्वशुरस्येति। 'श्वश्रा' इति निर्देशादन्त्याकारस्य लोपः। तन्निर्देशासिद्धमेवैतत्। भाष्ये त्विदं न दृश्यते। 'ङ्याप्' इति सूत्रस्थभाष्यस्वरसस्त्वयमनूङन्तो-ऽव्युत्पन्नं प्रातिपदिकमिति। ऊरूत्त। उपमीयतेऽनयेत्युपमा—उप-

---

तत्। नचैष नद्यन्तानां बहुव्रीहिः। शेषलक्षणस्तर्हि प्राप्नोति। तस्माद्दीर्घोच्चारणं कर्तव्यमित्युक्तम्। उकारद्वयं दीर्घेण निर्दिष्टम्। तत्र द्वितीय उकारः परत्वा-द्बाधकस्य शेषलक्षणस्य कपो बाधनायेति तदाशयं कैयट आह। नन्वेतत्सूत्रस्थ-वार्तिकनिष्पन्नश्वश्रूशब्दे दीर्घश्रवणायात्र दीर्घोच्चारणस्य कृतार्थतया कथं तेन प्रश्लेषलाभोऽत आह। निर्देशात्सिद्धमिति। तथा च तादृशनिर्देश एव तत्साधको, न तु तदर्थं वचनान्तरमिति भावः। स्त्रिया अध्ययनाधिकाराभावा-न्मूलेऽध्वर्युरिति प्रत्युदाहरणमसङ्गतमत आह। अध्वर्युशाखेति। ननु सूत्रत एवोत इत्यस्य संबन्धे पर्युदासेन तल्लाभो व्यर्थोऽत आह। उत इति। भाष्योदाहरणादिति। दीर्घान्तालाबूशब्दस्य प्रकृतवार्तिकोदाहरणादित्यर्थः। श्वशुरशब्दावयवाद्याकारस्य लोपशङ्कानिरासायाह। श्वश्रेति। भाष्यस्वर-सस्त्विति। तत्र हि ङ्याब्ग्रहणं किमर्थं, न प्रातिपदिकादित्येव सिद्धमिति प्रश्नेऽप्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधः प्राप्नोतीति समाधायैवं तर्हि त्यूङ्ग्रहणं कर्तव्यमिति पुनः प्रश्ने तिप्रत्ययस्य तद्धितत्वात्सिद्धम्। ऊङन्तादपि पूर्वान्त-वद्भावेन सिद्धमित्युक्तम्। श्वश्रूशब्दो यद्यूङन्तः स्यात्तदा तदर्थमूङ्ग्रहणस्या-वश्यकतया भाष्ये तस्यानुक्तत्वेन न्यूनतापत्तिरतोऽस्याव्युत्पन्नत्वं भाष्याभि-

मानं, तद्भाव औपम्यम्—उपमानत्वम्। एवं च तद्बोधकोरूत्तरपदादित्यर्थः। उत्तरपदाक्षिप्तं पूर्वपदं प्रत्यासत्त्योपमानवाच्येव। अतः 'करभोपमोरूः' इत्यत्र न, तदाह—उपमानवाचीति। करभेति। मणिबन्धादाकनिष्ठं करबहिर्भागः करभस्तद्वदूरू यस्या इत्यर्थः। उपचारादिति। शफशब्दप्रवृत्तिनिमित्तस्योरुपदार्थे आरोपादित्यर्थः। एवञ्च समासस्योपमानोपमेयभावाबोधकत्वेन न पूर्वसूत्रप्राप्तिः। तदारोपे च स निमित्तमित्यन्यदिति भावः। ननु सहशब्दग्रहणं व्यर्थं, सर्वस्योरुमत्त्वेन सहशब्दप्रयोगस्य तत्सभिव्याहारे व्यर्थत्वेन सहोरूरिति प्रयोगस्यैवाभावादत आह—सहेते इति। रतिश्रममिति शेषः। सह विद्यमानावूरू यस्या इत्यर्थ इति कैयटः। अतिरमणीया-

---

प्रेतमिति लभ्यत इति बोध्यम्। तद्बोधकेति। उपमानोपमेयभावबोधकेत्यर्थः। करभोपमोरूरित्यत्रेति। करभोपमे ऊरू यस्या इति विग्रहः। ननु शफाविवोरू यस्या इति विग्रहे पूर्वेणैव सिद्धेऽत्र शफग्रहणं व्यर्थमत आह। मूले उपचारादिति। एवं च तत्र शफौ ऊरू यस्या इत्येव विग्रह इति भावः। प्रवृत्तिनिमित्तस्य=शफत्वस्य। सादृश्यमूलकारोपो, न तु सादृश्यप्रतीतिरत्र। तदाह। एवं चेति। तदारोपे=प्रवृत्तिनिमित्तारोपे। सः=उपमानोपमेयभावः। एवं च करभोरुशब्देऽप्यारोपविवक्षायामूङ् न भवत्येव। एतेन विचकरेण करेण करोरुभिरिति माघो व्याख्यातः। पीवरोरु पिबतीह बर्हिण इति कुमारप्रयोगस्तु चिन्त्य एव। संज्ञापूर्वकविधेरनित्यत्वाद्गुणाप्रवृत्त्या तत्सिद्धिरिति तु न युक्तं, तस्याप्रामाणिकत्वादिति स्पष्टं शब्दरत्ने। हरदत्तस्तु कथं विचकरेण करेण करोरुभिरित्याशङ्क्य निरङ्कुशाः कवयः। करेण वरोरुभिरित्येव पाठ इत्याह। अत्राद्यमेव युक्तम्। यथाकथंचित्साधुत्वसंभवेऽसाधुत्वकथनस्यायुक्तत्वात्। सर्वस्याप्यूरुमत्त्वेन विशेषणवैयर्थ्यशङ्कानिरासायाह। अतिरम-

वित्यर्थ इति तदाशयः । कमलानि कमलानीतिवत् । कद्रूरिति । नागमातुः संज्ञा । अच्छन्दोर्थमिति । छन्दसि 'कद्रुकमण्डल्वोश्छन्दसि' इत्यनेनैव सिद्धिरिति भावः ॥

अञो य इति । शार्ङ्गरवादीति लुप्तपञ्चम्यन्तम्, अञ इति च षष्ठी । अनुपसर्जनादिति विभक्तिविपरिणामेनास्य विशेषणम् । एवं 'टिड्ढा' इत्यत्रापि सुवचम् । तद्वदत्र पञ्चम्यन्तत्वमपि सुवचम् । अञ्योऽकार इत्यपि पाठः क्वचित् । शार्ङ्गरव्यां जातिलक्षणे ङीषि प्राप्ते वचनम् । अणि आदिवृद्ध्योर्गुणौ । पुत्रशब्दोऽत्र पठ्यते, तस्य पाठसामर्थ्याज्जातित्वाभावेऽपि ङीन् । नृनरयोरिति । यद्यपि 'नारी' इति नृशब्देन सिद्धं, 'नरी' इति तु पुंयोगे ङीषा दुर्वारं, जातिग्रहणा-

---

णीयाविति । तत्र दृष्टान्तमाह । कमलानीति । अत्र शुद्धकमलत्वमुद्देश्यतावच्छेदकं, शोभनादिगुणयुक्तकमलत्वं च विधेयतावच्छेदकमिति नोद्देश्यतावच्छेदकविधेयतावच्छेदकयोरेकत्वाच्छाब्दबोधानुपपत्तिः ॥

अञ इत्यस्याकारविशेषणत्वं, शार्ङ्गरवादेस्तु नेति द्वन्द्वानुपपत्तिरत आह । शार्ङ्गरवादीति । अस्य = अञः । विशेषणं = समानाधिकरणविशेषणम् । विनिगमनाविरहादाह । तद्वदिति । तदर्थकोऽपि पाठः क्वचिदित्याह । अञ् योऽकारेति । अञोऽकारविशेषणत्वे फलं तु शूरसेनीति । जनपदशब्दादित्यञोऽतश्चेति लुकि जातिलक्षणो ङीष् । तेनान्तोदात्तं पदम् । ङीषि प्राप्त इति । तस्य गोत्राणन्तत्वादिति भावः । ननु नृशब्देन नारीति सिद्धावपि नरशब्दाज्जातिलक्षणे ङीषि नरीति व्यावृत्त्यर्थमेव नरग्रहणं स्यादत आह । नरीति त्विति । दुर्वारमिति । सिद्धान्तेऽपीति भावः । ननु सिद्धान्ते पुंयोगलक्षणस्याप्यनेन बाधः कुतो नेत्यत आह । जातिग्रहणानुवृत्त्येति ।

नुवृत्त्या तत्रास्याप्रवृत्तेरिति नरग्रहणं व्यर्थं, तथाऽपि नरत्वजातिमात्रप्रतिपिपादयिषायां नरीति व्यावृत्त्यर्थं तद्ग्रहणम्। अत्राद्याकारस्यैव वृद्धिर्लक्ष्यानुसारिव्याख्यानात्। वस्तुत इदं गणसूत्रमनार्षम्। 'नुर्नरस्य च धर्म्या नारी' इति 'ऋतोऽञ्' इति सूत्रेण 'नरस्य चेति वक्तव्यम्' इति वार्तिकेन चाद्युदात्तनार्याः सिद्धेः। रूढ्या योग्यतया तद्धर्म्या नरत्वजातिविशिष्टैव बुद्ध्यते। अत एव 'वसेस्तव्यत् कर्त्तरि णिच्च' इति वचनं–वस्तुनि भवो वास्तव्य इति दिगादित्वात्संसाध्य प्रत्याख्यातं भाष्ये। नित्यानां शब्दानां यथाकथञ्चिदन्वाख्यानं कार्यमिति कैयटः। रूढ्या सर्वदोषपरिहार इति तदाशयः। यङश्चाप्॥ पकारो 'याडाप' इत्यत्र सामान्यग्रहणार्थः। चकारस्य ह्यनुबन्धकत्वसम्पादनद्वारा सामान्यग्रहणाविघातकत्वेन चारितार्थ्येऽपि 'आम्बष्ठ्या, आवट्या' इत्यादौ परत्वाच्चित्स्वरः पित्स्वरं बाधत इति बोध्यम्। षाद्यञ इति। एवञ्च गौकक्ष्यशब्दस्य गर्गादियञन्तस्योदीचां मतेऽनेनैव चापः सिद्धेः स क्रौड्यादिषु न पाठ्यः'

---

तत्र = पुंयोगे। व्यावृत्त्यर्थमिति। जातिलक्षणङीषेति भावः। व्याख्यानादिति। नरस्य अः = नरः, शकन्ध्वादिवत्पररूपम्। ना च नरश्चेति द्वन्द्वः। नरस्य च प्रथम एवाकारो गृह्यते, न तु द्वितीयः प्रश्लेषसामर्थ्यादिति व्याख्यानादित्यर्थः। अत्र नृनरयोरित्यस्यावृत्तिः। एकत्र पञ्चम्यर्थे षष्ठी। ताभ्यां ङीन्। नुर्नरोऽकारस्य च वृद्धिरिति बोध्यम्। नरशब्दस्यर्दन्तत्वाभावादाह। इति वार्तिकेन चेति। अर्थभेदोऽपि नेत्याह। रूढ्येति। अत एवेति। रूढ्याऽर्थभेदाभावादेवेत्यर्थः। यङश्चाबित्यत्र पठितस्य षाद्यञ इति वार्तिकस्य भाष्यकृदुक्तं फलान्तरमाह। एवं चेति। प्राचां मते ष्फस्य सत्त्वादाह। उदीचां मत इति। सः = गौकक्ष्यशब्दः। ननु चापस्सिद्धावपि

संप्रसारणन्तु तस्य नेष्टमिति स्पष्टं भाष्ये ॥ यूनस्तिः । 'जातेभ्य इति ङीपोऽपवादः । उत्तरार्थं इति । इह करणं तदनित्यत्वज्ञापनार्थमिति केचित् ॥

॥ इति स्त्रीप्रत्ययाः ॥

---

## ॥ अथ कारकप्रकरणम् ॥

स्वौजसमौडिति विहितस्वादीनामर्थविशेषव्यवस्थां दर्शयितुमाह—प्रातिपदिकार्थेति । इदमपि सूत्रं क्रियायोग एव प्रवर्त्तते ।

---

गौकक्षीपुत्र इत्यत्र संप्रसारणाय तत्र तत्पाठ आवश्यकोऽत आह । संप्रसारणं त्विति । स्पष्टं भाष्य इति । तत्र हि 'इष्टमेवैतद्गौकक्ष्यापुत्र इत्येव भवितव्य, मित्युक्तम् । तदनित्यत्वेति । लिङ्गविशिष्टपरिभाषानित्यत्वेत्यर्थः । केचिदिति । अत्रारुचिबीजं तु घटीग्रहणादेव तज्ज्ञापनसिद्ध्या नास्येदं फलमिति शिवम् ॥

॥ इति स्त्रीप्रत्ययप्रकरणम् ॥

अव्यवहितप्रकरणेनास्य सङ्गत्यभावाद्व्यवहितसङ्गतिं दर्शयति । स्वौजसमौडिति । प्रथमायाः कारकाधिकारविहितसंज्ञानिमित्तकत्वाभावान्न कारकविभक्तित्वमिति प्राचीनोक्तमयुक्तमिति सूचयन्नाह । इदमपीति । अपिना कारकाधिकारविहितसंज्ञानिमित्तकद्वितीयादिसंग्रहः । कर्मणि द्वितीयेत्यादिसाहचर्यात्तिङ्समानाधिकरणे प्रथमेति वार्तिकाच्चास्यापि क्रियायोग एव प्रवृत्तिरिति भावः । नन्वेवं घट इत्यादौ क्रियायोगाभावात्तदनुपपत्तिरत आह ।

**अन्ततोऽस्तिक्रियायाः सर्वत्र सत्त्वात्। आख्यातार्थकर्त्रादिना-ऽभेदान्वयेन तद्द्वारकः क्रियायोगो बोद्धव्यः। प्रथमान्तार्थस्यापि क्रियाजनकत्वादस्याः कारकविभक्तित्वेन भाष्ये व्यवहारः। ननु कृष्णादिशब्देषु लिङ्गस्यापि प्रातिपदिकार्थत्वाल्लिङ्गग्रहणमनर्थकमत आह—नियतेति। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः। अन्वयानुपपत्तिपूर्विका लक्षणा पदे**

---

अन्तत इति। अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्तीति भाष्याद्यत्र क्रिया-वाचकं पदं न श्रूयते, तत्रास्तिक्रियाध्याहारस्य लाभेनाध्याहृतक्रियामादाय तत्रापि क्रियायोगोऽस्त्येवेति भावः। ननु प्रथमान्तार्थस्याख्यातार्थकर्तृकर्मणोरेव सर्वत्रान्वयात्क्रियायोगो दुर्वचोऽत आह। **आख्यातार्थकर्त्रादिनेति।** **तद्द्वारक इति।** अधिकरणकारकवदस्यापि परम्परया क्रियायोगो, न साक्षादिति भावः। साक्षात्क्रियायोग एव कारकत्वप्रयोजक इति तु वक्तुमशक्यं, तथा सति अधिकरणस्य तत्त्वानापत्तेः। परम्परा चात्राख्यातार्थद्वारिकैव, नान्यद्वारिका। अतो राज्ञः पुरुषोऽस्तीत्यादौ पुरुषद्वारकपरम्परया राज्ञः क्रियान्वयित्वेऽपि न कारकत्वप्रसक्तिरिति बोध्यम्। **प्रथमान्तार्थस्यापीति।** अस्यात एवेत्यादिः। अस्यापि सूत्रस्य क्रियायोगे प्रवृत्तेरेवेति तदर्थः। **अस्याः**=प्रथमायाः। **भाष्ये**=अनभिहितसूत्रे। **प्रातिपदिकार्थत्वादिति।** प्रातिपदिकजन्योपस्थितिविषयत्वं हि प्रातिपदिकार्थत्वं, तच्च लिङ्गस्याप्यस्तीति भावः। **नियमेनोपस्थितिरिति।** एवं च प्रातिपदिकजन्यनियतोपस्थितिकत्वं प्रातिपदिकार्थत्वमिति भावः। नन्वेवं गौर्वाहीक इत्यादौ लक्ष्यार्थस्य वाहीकादेर्नियतोपस्थितिकत्वाभावेनाप्रातिपदिकार्थत्वात्प्रथमायाः साधुत्वं न स्यादत आह। **अन्वयानुपपत्तीति।** **पदे एवेति।** सुबन्त एवेत्यर्थः। प्रातिपदिकमात्रस्य काप्यप्रयोगेण लक्षणाबीजभूतान्वयानुपपत्तेस्तत्र दुर्वचतया न

एव । प्रत्ययोत्पत्तिः सर्वत्र शक्यार्थे एव । शक्यतावच्छेदकारोप एव च लक्षणेति न लक्ष्यासङ्ग्रहो दोषः । तटादिशब्दानां तत्तत्प्रत्यय-समभिव्याहारे सकललिङ्गबोधकतया न किमपि लिङ्गं ततो नियतोपस्थितिकमिति न तद्बोध्यलिङ्गस्यात्र प्रातिपदिकार्थशब्देन ग्रहणमिति लिङ्गग्रहणमिति भावः । लिङ्गमात्रेति । लिङ्गस्यैवाधिक्ये इति क्रमेणार्थः । यद्यपि विशेष्यविशेषणभावोऽप्यधिको भासते तथापि तस्य वाक्यार्थत्वेन बहिरङ्गतया न स्वार्थमात्रनिमित्तक-प्रथमप्रवृत्तसंस्कारबाधकत्वमिति बोद्धव्यम् । अभेदेन संसर्गेणेति । इतरसम्बन्धानवच्छिन्नविशेषणविशेष्यभावसंसर्गेणेत्यर्थः । अभेदस्तु

---

प्रातिपदिकमात्रे लक्षणा, किन्तु सुबन्त एवेति भावः । शक्यार्थ एवेति । एवं च स्वशक्यार्थ एव तेषां साधुत्वं, पश्चात्पदान्तरसंबन्धवेलायामन्वयाद्यनुप-पत्तिप्रतिसंधानं, ततश्च लक्षणया तदर्थोपस्थितिः । अत्र च सर्वत्र लक्ष्यानु-रोधात्पदसंस्कार एवाश्रीयत इति न तत्साधुत्वानुपपत्तिः । अत एव गङ्गायां घोष इत्यादिसिद्धिः । अन्यथा सुबुत्पत्तेः प्राक् प्रातिपदिकस्यैव लक्षणायां नपुंसकह्रस्वत्वापत्त्या तदसिद्धिरिति भावः । प्रातिपदिकलक्षणाभ्युपगमेऽपि सिद्धान्ते न दोष इत्याह । शक्यतावच्छेदकारोप एवेति । एवं च प्राति-पदिकलक्षणायामपि लक्ष्यार्थस्य नियतोपस्थितिकत्वं सुलभमिति भावः । सूत्रे-ऽवधारणार्थकस्य मात्रपदस्य प्रत्येकं संबन्ध इत्याशयेनाह । लिङ्गस्यैवेति । प्रातिपदिकार्थस्य सर्वत्राव्यभिचरितत्वादाह । आधिक्ये इति । प्रातिपदि-कार्थाल्लिङ्गमात्रस्यैवाधिक्य इत्यर्थः । ननु सूत्रे मात्रपदेन प्रातिपदिकार्थाद्यति-रिक्तस्य व्यवच्छेदान्नीलो घट इत्यादौ प्रातिपदिकार्थातिरिक्तस्य विशेषण-विशेष्यभावस्यापि भानान्नीलपदात्प्रथमा न स्यादत आह । यद्यपीति । संस्कारेति । प्रथमारूपेत्यर्थः । मूलस्यैवं व्याख्याने हेतुमाह । अभेदस्तु

**न संसर्ग इत्यन्यत्र प्रपञ्चितम्। इहोक्तार्थत्वादिति। उक्तार्थानामप्रयोगात् प्रातिपदिकप्रतिपादितसंख्याविशिष्टे संख्यान्तराभावाच्च**

---

**न संसर्ग इति।** नातिरिक्तः संसर्गः, किन्तु विशेषणविशेष्यभावरूप एव स इत्यर्थः। संबन्धस्य संबन्धिभेदानियतत्वेन तस्य संबन्धत्वे मानाभावात्। अतिरिक्ततत्संबन्धकल्पने गौरवात्। फलाभावाच्च। किञ्च तस्यातिरिक्तसंबन्धत्वे तुल्ययुक्त्या भेदसंसर्गस्याप्यतिरिक्तत्वापत्तिः। निर्हेतुकवैषम्यस्य निर्बीजत्वात्। तथा बोधाबोधाभ्यां तदङ्गीकारानङ्गीकाराविति तु स्ववासनामात्रकल्पितत्वादुर्वचौ। अत एवाद्यन्तवत्सूत्रे राहोः शिर इत्यादौ षष्ठ्युपपादनाय व्यपदेशिवद्भाव आदृतो भाष्ये। अत एव नीलो घट इत्यादौ न षष्ठी। भेदमूलकसंबन्ध एव षष्ठीत्यर्थस्तु सूत्रतो न वाच्यवृत्त्या लभ्य इत्यादि मञ्जूषायां विस्तरेण निरूपितम्। न च विशेषणविशेष्यभावस्य संसर्गत्वे उक्तभाष्यविरोधः, नीलो घट इत्यादौ षष्ठ्यापत्तिश्च दुर्वारावेति वाच्यम्। विषयताविशेषरूपयोर्विशेषणत्वविशेष्यत्वयोरपि शब्दशक्यताया अन्यत्र ग्रन्थकृता सिद्धान्तितत्वेन तयोः प्रातिपदिकार्थत्वात्कारकप्रातिपदिकार्थातिरिक्तस्यैव शेषत्वेन तदप्रवृत्तेः। न च विशेषणविशेष्यभावस्यापि भेदाश्रयत्वादभेदे तदनुपपत्तिरिति वाच्यम्। धर्मभेदेन द्रव्यभेदात्। अत एव कर्मधारयविषये भाष्योक्तं द्वन्द्वापादनं संगच्छते। अन्यथा द्वन्द्वस्य भेदनिबन्धनत्वात्तदसंगतिः स्पष्टैवेति बोध्यम्। **उक्तार्थानामप्रयोगादिति।** प्रातिपदिकार्थसूत्रेऽधिकृतस्यानभिहित इत्यस्य प्रातिपदिकार्थविशेषणताया असंभवात्संख्याविशेषणताया एव वक्तव्यतया तस्याश्च प्रकृत्या अभिधानात्प्रथमा न स्यादतो वचनग्रहणं, परिगणनं तु प्रत्याख्यातमिति भावः। एतेनोक्तार्थानामिति न्यायस्य द्वौ ब्राह्मणावित्यादौ व्यभिचरितत्वादिदमयुक्तमिति शङ्का निरस्ता। अनभिहिताधिकारप्रत्याख्यानपक्षेऽपि वचनग्रहणफलं दर्शयति। **प्रातिपदिकेति। संख्यान्तराभावादिति।**

तदप्राप्तिः। अनन्वितार्थकविभक्त्यपेक्षयाऽनुवादकविभक्तेरेव न्याय्यत्वान्न द्व्यादिभ्यः सर्वविभक्त्यापत्तिरिति भावः। लिङ्गविशिष्टपरिभाषया इन्द्राणीत्यादौ प्रथमासिद्धिः। परिमाणशब्दश्च परिच्छेदकपर इत्युन्मानादिष्वपि प्रथमासिद्धिरिति बोद्धव्यम् ॥

परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदा-

---

प्रातिपदिकार्थसूत्रस्य द्व्येकयोरित्यादिसूत्रैकवाक्यतया प्रातिपदिकार्थगतैकत्वादिषु प्रथमाविधायकतया प्रकृते प्रकृत्यर्थतावच्छेदकातिरिक्तसंख्यान्तराभावात्प्रथमा न स्यादिति भावः। ननु वचनग्रहणेन संख्यामात्रे प्रथमाविधानाद्व्यादिशब्देभ्यः सर्वविभक्त्यापत्तिरत आह। अनन्वितेति। एकशब्दादौत्सर्गिकैकवचनेन निर्वाहादाह। द्व्यादीति। सर्वविभक्तीति। वचनत्रयात्मकप्रथमाविभक्तीत्यर्थः। ननु हिमानी, इन्द्राणीत्यादौ कथं प्रथमा। महत्त्वपुंयोगयोराधिक्यादत आह। लिङ्गविशिष्टेति। प्रातिपदिकार्थमात्र इत्यत्र प्रातिपदिकपदेनानया परिभाषया प्रातिपदिकप्रकृतिकलिङ्गबोधकप्रत्ययविशिष्टस्यापि ग्रहणात्तज्जन्यनियतोपस्थितिविषयस्यापि प्रातिपदिकार्थत्वेन महत्त्वपुंयोगयोरपि तत्त्वमक्षतमिति नानुपपत्तिरिति भावः। ननु परिमाणपदेनात्र पारिभाषिकस्यैव ग्रहणे द्रोणाढकादिभ्य एव स्यान्न तु पलादिशब्देभ्योऽत आह। परिमाणशब्दश्चेति। उन्मानादिष्वपीति। पलं सुवर्णमित्यादौ। न च प्रातिपदिकेन परिमाणस्योक्तत्वात्कथं तत्र प्रथमेति वाच्यम्। तस्य विशेषरूपेणोक्तत्वेऽपि सामान्यरूपेणानुक्तत्वादुक्तार्थानामिति न्यायस्याप्रवृत्तेः। सामान्यरूपेणोक्तिफलं तु भेदसंबन्धेनान्वयलाभ इति बोध्यम्। स्वसिद्धान्तमाह ॥

परे त्विति। अत्र सूत्रे इति। एतेनान्यत्र न तथेति सूचितम्। प्रवृत्तिनिमित्तमिति। यस्मात्प्रथमाविधानं तत्तच्छब्दप्रवृत्तिनिमित्तमित्यर्थः।

श्रयश्च। स च मुख्य इवाऽऽरोपिततदाश्रयोऽपि। अत एव गोपीत्यादौ स्वादिप्रकृतेर्लाक्षणिकत्वेऽपि न दोषः। अत एव लिङ्गग्रहणं सार्थकम्। अन्यथा स्वमोर्नपुंसकादित्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तद्वैयर्थ्यं स्पष्टमेव। अत एव स्त्रियामिति सूत्रे स्त्रीत्वे द्योत्ये इत्यर्थ इति भाष्ये सिद्धान्तितम्। तस्माच्छसः इत्यत्र पुंसीत्यस्य पुंशब्दस्य प्रकृतित्वे इत्येवार्थः। अभिहिते प्रथमेति वार्त्तिकस्य तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमेत्यर्थ इति न तद्विरोधः। एतेन तन्नये कारकस्य प्रत्ययार्थत्वं, तत्र तु तन्नेति विरोध इत्यपास्तम्।

---

अत एवेति। आरोपिततदाश्रयस्यापि ग्रहणादेवेत्यर्थः। लाक्षणिकत्वेऽपीति। लक्षणया गोपत्वप्रकारकारोपविशेष्यार्थबोधकत्वेऽपीत्यर्थः। अत एवेति। प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणादेवेत्यर्थः। अन्यथा = प्रातिपदिकार्थपदेन प्रातिपदिकजन्योपस्थितिविषयस्य ग्रहणे। अत एवेति। लिङ्गस्यापि प्रातिपदिकार्थत्वादेवेत्यर्थः। सिद्धान्तितमिति। स्त्रीत्वस्य प्रातिपदिकार्थत्वे हि स्त्रीप्रत्ययस्य तद्द्योतकत्वं युज्यते, नान्यथेति भावः। नन्वेवं तस्माच्छस इति सूत्रविरोधः। तत्र पुंसि विद्यमानस्य शस इत्यर्थाल्लिङ्गस्य तेन प्रत्ययार्थत्वावगमादत आह। तस्मादिति। पुंशब्दस्य = पुंस्त्वविशिष्टार्थबोधकशब्दस्य। नन्वभिहिते प्रथमेति वार्तिकेन कर्त्रादीनां प्रथमार्थत्वावगमात्स्वन्मते मात्रग्रहणेन प्रवृत्तिनिमित्ततदाश्रययोरेव तदर्थत्वावगमात्तद्विरोधोऽत आह। अभिहिते इति। एतेन = वार्तिकस्योक्तार्थकत्वेन। तन्नये = वार्तिकनये। तत्रेति। प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थत्वं वदतस्तवेत्यर्थः। ननु प्रातिपदिकार्थपदेन प्रातिपदिकजन्योपस्थितिविषयस्य ग्रहणेऽपि न लिङ्गग्रहणानर्थक्यम्। केवलतटादिरूपप्रातिपदिकमात्राल्लिङ्गस्यानुपस्थित्या तत्र प्रथमाविधानाय

तटादिशब्दानामपि लिङ्गं वाच्यमेव । द्योतकास्तु विसर्गादयः । पूर्वं तत्तल्लिङ्गं बुद्धिस्थीकृत्यैव तस्य तस्य विसर्गादेः साधुत्वान्वाख्यानम् । नियमांशनिवेशो तु न मानम् । इदमेवाभिप्रेत्य वृत्तौ 'प्रातिपदिकार्थः सत्ता' इत्युक्तम् । सत्तेति प्रवृत्तिनिमित्तोपलक्षणम् । आश्रयस्तु तदाक्षिप्तत्वान्न पृथगुक्तः । एवञ्च प्रातिपदिकार्थ इत्यस्यालिङ्गा लिङ्गप्रवृत्तिनिमित्तकाव्ययपुमादाय उदाहरणम् । लिङ्ग-

---

तत्सार्थक्यादत आह । तटादिशब्दानामपीति । नन्वेवमपि सति विभक्तिसमभिव्याहारे लिङ्गप्रतीतिः । तस्यां च सत्यां विभक्त्युत्पत्तिरित्यन्योन्याश्रयात्ततः प्रथमा न स्यादत आह । पूर्वमिति । विभक्तेः पूर्वमित्यर्थः । नन्वेवमपि तटादिशब्देभ्यो लिङ्गस्य नियतोपस्थितिकत्वाभावेन नियतोपस्थितिकः प्रातिपदिकार्थ इति प्राचीननयेऽपि लिङ्गग्रहणस्य सार्थकतया तत्परित्यागे बीजाभावोऽत आह । नियमांशनिवेशो त्विति । न मानमिति । उक्तरीत्या लिङ्गग्रहणसार्थक्यसंभवात्तन्निवेशे मानाभाव इति भावः । ननु तवेव ममापि लिङ्गग्रहणमेव तत्र मानमस्त्वित्याशङ्क्य स्वोक्तार्थे वृद्धसम्मतिं दर्शयति । वृत्ताविति । सत्तेति । योऽर्थस्सन्नेव केवलं न जात्यादिरूपो न लिङ्गसंख्याकारकशक्तियोगी स इह प्रातिपदिकार्थत्वेन विवक्षितो यथाऽव्ययार्थ इत्यर्थः । अव्ययार्थो हि केवलमस्तीति शक्यते वक्तुं, न पुनरीदृशस्तादृश इतीति तदर्थे हरदत्तः । नन्वेतावता त्वदुक्तार्थालाभोऽत आह । प्रवृत्तिनिमित्तोपलक्षणमिति । ननु तथाप्याश्रयस्य ततोऽलाभान्न्यूनतैवेत्यत आह । आश्रयस्त्विति । सिद्धान्ते पर्यवसितमाह । एवं चेति । प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रहणे चेत्यर्थः । क्रमेण तयोः स्वरूपमाह । अव्ययेति । ननु स्त्रीशब्दस्याप्रातिपदिकत्वात्तत्र लिङ्गाधिक्यस्याप्यभावात्कथं तत्र प्रथमेत्यत आह । लिङ्गविशिष्टेति । अनया परिभाषया प्रातिपदिकपदेन लिङ्गबोधक-

**विशिष्टपरिभाषया स्त्रीशब्दोऽप्यस्यैवोदाहरणम्। अन्ये सर्वे लिङ्गाधिक्य इत्यस्य। द्रोणत्वादिप्रवृत्तिनिमित्तकानां द्रोणादिशब्दानां परिमाणत्वेन परिमाणमपि लिङ्गवद्विशेष्यान्वय्यर्थः। एवञ्च तस्य लिङ्गवत्प्रातिपदिकार्थत्वाभावात्परिमाणग्रहणम्। द्रोणः परिमाण-**

---

प्रत्ययविशिष्टस्यापि ग्रहणे तत्संबन्धिप्रवृत्तिनिमित्ततदाश्रययोरपि प्रातिपदिकार्थपदेन ग्रहणलाभात्प्रातिपदिकार्थमात्र इत्येव तत्र प्रथमासिद्धिरित्याशयः। अत एव प्रातिपदिकार्थे किमुदाहरणमिति प्रश्ने स्त्री पुमान्नपुंसकमिति भाष्ये उक्तमिति बोध्यम्। अन्ये सर्वे इति। कृष्णः, श्रीः, ज्ञानम्, तटः, तटी, तटमित्यादय इत्यर्थः। एवं खट्वादिशब्दानामपि लिङ्गप्रवृत्तिनिमित्तकत्वाभावेन लिङ्गाधिक्य इत्येतदुदाहरणत्वमेव। एवं मृडानी, हिमानीत्याद्यपि लिङ्गाधिक्य इत्यस्यैवोदाहरणम्। नच तत्र महत्त्वपुंयोगयोरपि भानान्न लिङ्गमात्राधिक्यमिति वाच्यम्। आद्ये आरोपितमृडत्वस्यैव भानेन मृडसंबन्धस्याभानेनादोषात्। अन्त्ये महत्त्वविशिष्टहिमत्वस्यैव प्रवृत्तिनिमित्तत्वेन लिङ्गमात्राधिक्यसत्त्वादिति बोध्यम्। द्रोणादिशब्देभ्यः प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये वा प्रथमासिद्धौ परिमाणग्रहणं व्यर्थमित्याशङ्क्य तत्फलं दर्शयति। द्रोणत्वादीति। द्रोणादिशब्दानां द्रोणत्वं, द्रोणः, परिमाणत्वेन परिमाणं चार्थः। द्रोणपदप्रवृत्तिनिमित्तं तु द्रोणत्वमेव। तच्चेयत्ताविशेषावच्छिन्नपलादिपरिच्छिन्नधान्यादिपरिच्छेदकत्वसमानाधिकरणोऽखण्डोपाधिरूपो धर्मः, जातिरूपो वा। सूत्रभाष्यप्रामाण्येन तथैवानुभवेन लाघवेन च तस्यैव प्रवृत्तिनिमित्तत्वम्। परिमाणत्वेन परिमाणं तु लिङ्गवद्विशेष्यान्वयि। परं तु तत्रैतावान्विशेषः। लिङ्गस्य प्रकारतया भेदेनान्वयः। परिमाणस्य त्वभेदेनेति भावः। तथा सति यत्फलितं तदाह। **एवं चेति**। तस्येति। परिमाणत्वेन परिमाणस्येत्यर्थः। **प्रातिपदिकार्थत्वाभावादिति**। प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्ततदाश्रययोरेव ग्रहणान्मात्र-

मित्येव तु द्वौ ब्राह्मणाविति वत्प्रयोगः, द्रोणशब्दस्यानेकार्थत्वाद्वा। मूलोक्तं तु न युक्तम्। 'द्रोणो व्रीहिमानये'त्यस्यापत्तेः। किंच 'तिङ्समानाधिकरणे प्रथमे'तिवार्त्तिकैकवाक्यतया भेदान्वये 'द्रोणो व्रीहिरि'त्यनिष्टम्। न च—'यदा मेये द्रोणादीनां वृत्तिस्तदा

---

पदेनाधिक्यव्यवच्छेदान्न प्रातिपदिकार्थमात्रे द्रोणादिशब्देभ्यः प्रथमासिद्धिः। लिङ्गग्रहणांशेऽपि मात्रपदसंबन्धात्प्रातिपदिकार्थापेक्षया लिङ्गमात्राधिक्ये प्रथमेत्यर्थलाभेन परिमाणव्यक्तेः प्रवृत्तिनिमित्ताश्रयत्वेन संग्रहेऽपि परिमाणत्वस्य लिङ्गप्रातिपदिकार्थातिरिक्तस्यापि भानान्न तेनापि प्रथमासिद्धिरतः परिमाणग्रहणम्, तत्सत्त्वे तु परिमाणे वर्तमानात्प्रातिपदिकात्प्रथमेत्यर्थात्तत्सिद्धिरिति भावः। नन्वेवं द्रोणः परिमाणमित्यादिप्रयोगो न स्यादत आह। द्वौ ब्राह्मणाविति। यथा ब्राह्मणपदोत्तरद्विवचनप्रतिपाद्यद्वित्वानुवादकत्वेन द्विशब्दस्य सहप्रयोगस्तथा द्रोणादिशब्दप्रतिपाद्यपरिमाणरूपार्थानुवादकतया परिमाणशब्दप्रयोग इति भावः। वस्तुतोऽत्र सन्देहनिवृत्त्यर्थं परिमाणपदप्रयोग इत्याह। द्रोणशब्दस्येति। मूलोक्तं परिमाणग्रहणसार्थक्यं खण्डयति। मूलोक्तमिति। इत्यस्यापत्तेरिति। द्रोणाभिन्नं यत्परिमाणं तत्परिच्छिन्नं व्रीहिमानयेत्यर्थस्याबाधितत्वादिति भावः। नच प्रातिपदिकार्थसाहचर्यान्नाम्नोः संबन्धे समानविभक्तिकनामान्तरार्थेऽन्वये एव परिमाणे प्रथमायाः साधुत्वबोधनाभावं दोष इति वाच्यम्। आनुमानिकसाधुत्वबोधकवचनकल्पने गौरवात्। प्रातिपदिकार्थलिङ्गसाहचर्येण परिमाणस्यापि प्रातिपदिकार्थत्वस्यैवौचित्याच्च। अत एव द्वन्द्वोपपत्तिः। अन्यथा सदृशानामेव सहविवक्षास्वीकारात्तन्न स्यादिति बोध्यम्। एवं मूलकृन्मतेऽतिप्रसङ्गमुक्त्वा तदुक्तं परिमाणग्रहणोदाहरणमप्ययुक्तमित्याह। किञ्चेति। तिङ्सामानाधिकरण्यं हि तिङ्वाच्यार्थाभिधायकत्वं, तच्च मूलोक्तरीत्यनुसरणेऽत्र नास्तीति भावः। कैयटोक्तं परिमाणग्रहणसार्थक्यं खण्डयति। नचेति। मेये द्रोणादीनां वृत्तिरिति। मानमेयसंबन्धा-

**तस्यानेकत्वेन परिमाणमात्रपरत्वे तदबोधेन च व्यभिचारान्मेयस्य नियतोपस्थितिकत्वाभावेनाप्रातिपदिकार्थत्वादसिद्धौ कर्मव्युत्पत्त्या प्रमेयार्थकं परिमाणग्रहणमिति कैयटोक्तं युक्तमिति वाच्यम् । सिंहो माणवक इत्यस्यासिद्ध्यापत्तेः । तद्वदस्यापि सिद्धेश्च । नियमांशनिवेशो मानाभावाच्च । 'एको' 'द्वावि'त्यादिसिद्धये तु वचनग्रहणम् । अन्यथैतत्सूत्रोपस्थितानभिहित इत्यस्यात्र फलाभावादेतदेकवाक्यतापन्नसंख्यावाक्यान्वयित्वेन तदप्राप्तेः । रामावित्यादौ**

---

त्प्रवृत्तिनिमित्तारोपेण व्रीह्यादौ द्रोणादिपदानां वृत्तिरित्यर्थः । **तस्येति** । मेयस्य व्रीह्यादेरित्यर्थः । **परिमाणमात्रपरत्व इति** । द्रोणादिशब्दानामिति भावः । मात्रपदेन मेयव्यवच्छेदः । **तदबोधेन**=मेयस्याबोधेन । **कर्मव्युत्पत्त्या**=परिमीयतेऽयमिति व्युत्पत्त्या । **असिद्ध्यापत्तेरिति** । सिंहसदृशार्थस्य व्यभिचारेणाप्रातिपदिकार्थत्वादिति भावः । **तद्वदिति** । अन्वयानुपपत्तिपूर्विका लक्षणा पदे एव । प्रत्ययोत्पत्तिस्सर्वत्र शक्यार्थ एव । शक्यतावच्छेदकारोप एव च लक्षणेति प्रागुक्तरीत्या यदि तत्र साधुत्वमुच्यते, तदेहापि तथैव सिद्धिरिति न तदर्थं परिमाणग्रहणमिति भावः । नियतोपस्थितिकः प्रातिपदिकार्थ इत्यभ्युपेत्येदम् । वस्तुतस्तदेव नेत्याह । **नियमांशेति** । नन्वेको द्वावित्यादौ प्रातिपदिकार्थ इत्यनेनैव प्रथमा भविष्यतीति वचनग्रहणमनर्थकम्, लिङ्गप्रवृत्तिनिमित्तकानामिव संख्याप्रवृत्तिनिमित्तकानामपि तदुदाहरणत्वे बाधकाभावात् । प्रवृत्तिनिमित्ततदाश्रयवाचकत्वस्यात्रापि सत्त्वादत आह । **अन्यथेति** । वचनग्रहणाभावे इत्यर्थः । अत्र=प्रातिपदिकार्थसूत्रे । **फलाभावादिति** । प्रातिपदिकार्थेऽनभिहितत्वस्यासंभवेन तत्र तद्विशेषणत्वे फलाभावादिति भावः । **संख्यावाक्येति** । द्व्येकयोरित्यादिवाक्येत्यर्थः । **तदप्राप्तेरिति** । प्रातिपदिकार्थमात्रे प्रथमाया अप्राप्तेरित्यर्थः । ननु पञ्चकं

संख्याधिक्ये प्रथमा तु 'द्व्येकयोरि' त्याद्येकवाक्यतयेति बोद्ध्यम् । मात्रग्रहणाभावे तु यथा 'कर्मणि द्वितीये'ति नियमेन कर्मत्वाज्ञान-

---

प्रातिपदिकार्थ इति पक्षे सर्वत्र संख्याया अपि प्रातिपदिकेनाभिहितत्वात्तत्राप्यनभिहितपदसंबन्धस्य कर्तुमशक्यत्वेन सर्वथा तस्यात्रासंबन्धे प्रातिपदिकार्थ इत्यनेनैवात्र प्रथमा सिद्ध्यतीति चेन्न । पञ्चकं प्रातिपदिकार्थ इति पक्षे सर्वत्र संख्यायाः प्रातिपदिकेनाभिधानेऽपि घट इत्यादौ द्योतकसापेक्षत्वरूपस्य एक इत्यादौ तन्निरपेक्षत्वरूपस्य च विशेषस्य निर्विवादतयाऽत्र संख्यायामनभिहितत्वस्य द्योतकसापेक्षत्वरूपस्य ग्रहणेन तत्र तत्संबन्धोपपत्तौ सर्वथा तदसंबन्धकल्पने मानाभावात् । नन्वेवमपि रामावित्यादौ प्रथमा न स्यात् । लिङ्गाधिक्येऽपि तन्मात्राधिक्याभावात्, संख्याधिक्यस्यापि सत्त्वात् । वचनग्रहणस्यैक इत्याद्यर्थे चारितार्थ्यादत आह । रामावित्यादाविति । संख्याधिक्ये प्रथमेति । संख्याधिक्येऽपि लिङ्गमात्र इत्यनेन प्रथमेत्यर्थः । एकवाक्यतयेति । प्रातिपदिकार्थसूत्रस्य द्व्येकयोरित्यादिसूत्रैकवाक्यतया कर्मत्वादियोग्यतद्रहितैकत्वादिविशिष्टे स्वार्थ एव प्रथमेत्येवं नियमस्वीकाराल्लिङ्गमात्र इत्यत्र मात्रपदेन संख्याधिक्यस्य वारयितुमशक्यतया तेनात्र प्रथमा निर्बाधेति भावः । नचैकवचनान्तस्य पुर स्स्फूर्तिकत्वात्तत्रैव कुतो न शङ्का कृतेति वाच्यम् । सिद्धान्ते द्व्येकयोरित्यत्रैकग्रहणस्य प्रत्याख्यातत्वेनैकवचनस्यैकत्वसंख्याविवक्षानपेक्षत्वेनैकत्वस्य संस्कारकालेऽविवक्षायां संख्याधिक्यस्याभावात् । नन्वत्र सूत्रे मात्रग्रहणमनर्थकं, कर्मण्येव द्वितीया, प्रातिपदिकार्थ एव प्रथमेत्येवं प्रत्ययनियमपक्षे नियमशरीरेणैव मात्रशब्दार्थलाभात् । अर्थनियमपक्षेऽपि कर्मणि द्वितीयैवेत्यादिनियमेन कर्मत्वाद्याधिक्ये प्रथमाया व्यावृत्तिसिद्धेरित्याशङ्क्य प्रत्ययनियमपक्षे तत्सार्थक्यं दर्शयति । मात्रग्रहणाभावे त्विति । अस्य नियमः स्यादित्यनेनान्वयः । मात्रग्रहणं त्विति त्वपपाठः । अनन्वयात् । कर्मत्वाज्ञानसमानकालिकेति । कर्मत्वाज्ञानकाले भानयोग्येत्यर्थः ।

समानकालिकार्थान्तरस्यैव व्यावृत्तिः, न तु तज्ज्ञानसमानकालिकार्थान्तरस्य। अत एव गां दोग्धि पयः' इत्यादावपादानत्वादिबोधेऽपि द्वितीया। एवञ्च कर्मणि सत्येव द्वितीया न तु तदसत्त्वे इति नियमाकारः। तथाऽनेनापि 'प्रातिपदिकार्थसत्त्वे एव प्रथमा, न तु तदसत्त्वे' इत्येव नियमः स्यात्। एवञ्चानर्थकनिपातेभ्यः प्रथमा नैव स्यात्। एवञ्च तत्समभिव्याहारे सपूर्वायाः प्रथमाया इत्यादिशास्त्र-

---

तज्ज्ञानसमानकालिकस्येति। तद्बोधेऽनुद्भूततया विषयभूतस्येत्यर्थः। यत्तूद्योते कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिरित्याद्युक्तं, तत्तु द्वयोरप्यर्थयोर्विषयितया ज्ञाने सामानाधिकरण्यतदभावावित्याशयकमित्येकार्थकत्वमेव शेखरोद्योतग्रन्थयोरिति बोध्यम्। एवं विवक्षायां फलमाह। अत एवेति। कर्मत्वाज्ञानसमानकालिकार्थान्तरस्यैव नियमेन व्यावृत्तेरेवेत्यर्थः। अपादानत्वादिबोधेऽपीति। अनुद्भूततया तद्बोधेऽपीत्यर्थः। एवं चेति। निरुक्तार्थान्तरस्यैव नियमेन व्यावृत्तेरुक्तलक्ष्यानुरोधेन वक्तव्यत्वे चेत्यर्थः। दृष्टान्तमुक्त्वा प्रकृतेऽपि तद्योजयति। तथेति। इष्टापत्तावाह। एवं चेति। अनर्थकनिपातेभ्यः= पादपूरणार्थकचवै इत्यादिभ्यः। नच निपातस्यानर्थकस्येति वार्तिकेन प्रातिपदिकसंज्ञाविधानसामर्थ्यात्तत्सिद्धिरिति वाच्यम्। स्वरार्थं तस्य चारितार्थ्यात्। नच तादृशेषु निपातस्वरेण पित्स्वरेण वा न विशेष इति वाच्यम्। अचकेष्वनर्थकेष्वन्यादिषु विशेषसंभवात्। अव्ययेभ्यस्सप्तानामपि विभक्तीनामेकवचनानीति सिद्धान्ते तेभ्यो द्वितीयाद्यर्थं तस्यावश्यकत्वाच्च। नचैवं सति तद्रीत्या प्रथमैकवचनमपि सिद्ध्यतीति शङ्क्यम्। प्रातिपदिकार्थे सत्येव प्रथमेति नियमेन स्वादिसूत्रप्राप्तस्यैवौत्सर्गिकैकवचनस्यापि व्यावृत्त्यापत्तेः। वार्तिकं तु द्वितीयैकवचनादिसंपत्त्या चरितार्थम्। कर्मणि द्वितीयेत्यादिनियमैस्तद्व्यावृत्तेरसंभवादिति दिक्। तेभ्यः प्रथमाया अनुत्पत्तौ दोषमाह। एवं चेति। तत्समभिव्याहारे इति।

प्रवृत्तिर्न स्यात् । तत्सत्त्वे कर्मादियोग्यार्थकप्रातिपदिकाद्वेत्तद्रहित-स्वार्थे इत्यर्थान्न दोषः । इदमेव मात्रग्रहणं कर्मणि द्वितीयेत्यादेर्म-दुक्ताकारनियमत्वे मानम् । मात्रग्रहणाच्च सूत्रकारस्य प्रत्ययनियम-पक्ष एवाभिमत इति गम्यते । तदकरणलाघवेन तु कर्माणि द्विती-येवेत्यर्थनियम उक्तो भाष्यादौ । स्पष्टश्चेदं सर्वं भाष्ये इति भाष्य-प्रदीपोद्द्योते निरूपितमित्याहुः ॥

सम्बोधने च । तत्र वर्त्तमानादित्यर्थः । सम्बोधनमभिमुखी-

---

अनर्थकनिपातसमभिव्याहार इत्यर्थः । यथा घटः पटो वै मे स्वमित्यादौ । ननु मात्रग्रहणे कृतेऽपि प्रातिपदिकार्थमात्रे सत्येव प्रथमेति नियमाकारपर्यवसाने-नोक्तदोषस्तदवस्थ एवेत्याशङ्क्य तत्र दोषं परिहरति । तत्सत्त्वे इति । कर्मादीति । कर्मत्वादीत्यर्थः । इत्यर्थादिति । मात्रपदेन प्रातिपदिकार्थाति-रिक्तस्य कर्मत्वादेर्व्यवच्छेदात्कर्मत्वादिरहितस्वार्थ इत्यर्थलाभः । पर्युदासन्यायेन तद्रहितस्य तद्योग्यस्यैव ग्रहीतुमौचित्यात्कर्मादियोग्येत्यर्थलाभ इति भावः । ननु कर्मणि द्वितीयेत्यादेर्भवदुक्तनियमे मानाभावात्तद्दृष्टान्तेनात्र तथा नियमो नोचित इत्याशङ्क्याह । इदमेवेति । मदुक्ताकारनियमत्वे = कर्मणि सत्येव द्वितीयेत्येवं नियमत्वे । मानमिति। अन्यथा उक्तरीत्या तस्य वैयर्थ्यं स्पष्टमेवेति भावः । ननूक्तरीत्या प्रत्ययनियमपक्षे तत्सार्थक्यसंभवेऽपि कर्मणि द्वितीयै-वेत्याद्यर्थनियमपक्षे तदनर्थकमेव । अनेनैव नियमेन कर्मत्वाद्याधिक्ये प्रथमाया व्यावृत्तिसिद्धेरत आह । मात्रग्रहणाच्चेति । चस्त्वर्थे । सूत्रकारस्येति । एतेन लाघवानुरोधेनार्थनियमपक्ष एव भाष्यकृत आदर इति सूचितं, तदाह । तदकरणेति । एवं च मात्रग्रहणवत्संबोधने चेति सूत्रं लिङ्गादिग्रहणं च भाष्यमते न कार्यमिति बोध्यम् । तदाह । स्पष्टं चेदमिति ॥

तत्र वर्तमानादिति । संबोधनाधिक्ये प्रातिपदिकार्थे वर्तमानात्प्राति-

**करणम्। तत्फलं प्रवृत्तिनिवृत्ती। सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिं विना तत्त्वासम्भवादनुवाद्ये एवैषा विभक्तिः। अत एव विधेयभूतक्रियायामेवैतदर्थान्वय उद्देश्यतया। अत एव राजा**

---

पदिकादित्यर्थः। **अभिमुखीकरणमिति**। अभिमुखीभवनानुकूलो व्यापार इत्यर्थः। स च संबोधनविभक्त्यन्तपदघटितवाक्यप्रयोगरूपः प्रयोक्तृनिष्ठः। तस्य च श्रोतुः स्वीयश्रावणज्ञानान्यथानुपपत्त्याऽऽक्षेपलभ्यत्वेनानन्यलभ्यश्शब्दार्थ इति न्यायेन तत्फलभूतमभिमुखीभवनमेव संबोधनविभक्त्यर्थः। तच्च श्रोतुः मुखपरावृत्तिरूपम्। तदुक्तं हरिणा। 'सिद्धस्याभिमुखीभावमात्रं संबोधनं विदु' रिति। अत्र मात्रपदेन शब्दप्रयोगरूपतदनुकूलव्यापारानिरासः। तस्य च विभक्तिद्योत्यतया प्रकृत्यर्थविशेषणत्वेनान्वयः। तदेतद्ध्वनयन्वक्ष्यति। अभिमुखीभवद्रामाद्युद्देश्यकं प्रवर्तनाविषयो रक्षणमिति बोध इति बोध्यम्। **तत्फलमिति**। प्रयोक्तृसंबन्धिनिरुक्तवाक्यप्रयोगरूपव्यापारफलमित्यर्थः। **प्रवृत्तिनिवृत्ती इति**। प्रयोज्यसंन्धिप्रवृत्तिनिवृत्ती इत्यर्थः। आद्योदाहरणं देवदत्त जलमाहरेत्यादि। द्वितीयोदाहरणं देवदत्त अग्रे व्याघ्रोऽस्तीत्यादि। **तत्त्वासंभवादिति**। तेन रूपेण संबोध्यत्वासंभवादित्यर्थः। **अनुवाद्य एवैषा विभक्तिरिति**। सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुरिति हरिग्रन्थे सिद्धस्येत्युक्त्या चायमर्थः स्फुटं प्रतीयते। **अत एवेति**। अस्या अनुवाद्यविषयत्वादेवेत्यर्थः। उद्देश्यस्य विधेयसाकाङ्क्षत्वादिति भावः। **उद्देश्यतयेति**। स्वोद्देश्यकप्रवर्तनाविषयत्वसंबन्धेनेत्यर्थः। एतन्मूलकमेव संबोधनस्य कर्तृकारकत्वव्यवहारो वृद्धानाम्। संबोध्यस्यैव त्वंपदार्थत्वेन तस्यैव विनियोज्यक्रियाकर्तृत्वात्। अत एव तिङ्समानाधिकरणे प्रथमेति वार्तिकमते प्रथमासिद्धिः। तन्न्यासे प्रातिपदिकार्थेति सूत्रवदस्याप्यकरणादित्यादि मञ्जूषायां विस्तरः। **अत एवेति**। उक्तरीत्या संबोध्यतावच्छेदकरूपेण यत्र संबोध्यस्य सिद्धत्वं,

भव युद्धयस्व राजन् युद्धयस्व इत्यनयोर्व्यवस्थयैव प्रयोगः । राम मां पाहीत्यादौ चाभिमुखीभवद्रामाद्युद्देश्यकप्रवर्तनाविषयो रक्षणमिति बोधः । व्रजानि देवदत्तेत्यादावपि जानीहीत्यादिः शेषो बोद्धव्यः । तत्र व्रजनस्य कर्मत्वाद्देवदत्तस्योद्देश्यत्वादुभयोः समानवाक्यस्थत्वम् । एकतिङ् वाक्यमित्यस्य च श्रूयमाणैकतिङित्यर्थ इति न दोषः । उद्देश्यविधेयभावो वाक्यार्थः । अभिमुखीभवनानुकूलव्यापारश्च सम्बोधनविभक्त्यन्तशब्दप्रयोगरूपः । व्रजानीति प्राप्तकाले

---

तत्रैव संबोधनविभक्तिस्वीकारादेवेत्यर्थः । व्यवस्थयैवेति । कुमारावस्थायामाद्यस्य राजावस्थायां द्वितीयस्येत्येवं व्यवस्थयेत्यर्थः । कुमारावस्थायां संबोध्यतावच्छेदकीभूतराजत्वस्यासिद्ध्या तत्र संबोधनविभक्तेरप्राप्तेरिति भावः । एवं सति संबुद्ध्यन्तस्थले पर्यवसितं बोधप्रकारं दर्शयति । अभिमुखीभवदिति । अनेनास्यैव विभक्त्यर्थत्वमिति स्वसिद्धान्तः सूचितः । लोडर्थमाह । प्रवर्तनेति। रक्षणमिति बोध इति । रामकर्तृकं मत्कर्मकं रक्षणमिति बोध इत्यर्थः । नन्वेवं व्रजानि देवदत्तेत्यादौ व्रजनक्रियायां देवदत्तस्यान्वयासंभवादाख्यातं सविशेषणं वाक्यमिति समर्थसूत्रोक्तवाक्यलक्षणाभावेन समानवाक्य इति प्रकृत्यविहितो निघातो न स्यादत आह । व्रजानीति । प्राप्तकाले लोट् । शेष इति । परमतेनेदम् । वस्तुतस्तु वाक्यैकदेशन्यायेन व्रजानि देवदत्तेत्यनेनैव जानीहीत्येतद्घटितवाक्यार्थबोध इति न वाक्यलक्षणानुपपत्तिरित्यन्यत्र स्पष्टम् । तत्रेति । ज्ञान इत्यर्थः । नन्वेवं तिङन्तद्वयघटितत्वेन पारिभाषिकस्य स्वशास्त्रकार्योपयोग्येकवाक्यत्वस्य तत्राभावात्तदसिद्धिरेवेत्यत आह । एकतिङिति । इदमपि मतान्तररीत्यैव । वाक्यैकदेशन्यायेन तत्प्रतीतिरिति स्वसिद्धान्ते तु न श्रूयमाणत्वनिवेशावश्यकतेति बोध्यम् । ननूद्देश्यत्वस्यापदार्थत्वात्कथं तद्बोधोऽत आह । उद्देश्यविधेयभाव इति । स्वोद्देश्यकप्रवर्तनाविषयत्वमित्यर्थः । ननु कोऽसौ प्रवृत्तिनिवृत्त्यन्यतरफलकः प्रागुक्तो व्यापार इत्यत आह । व्यापारश्चेति ।

लोट्। अत एव गच्छेत्याद्यध्याहारे धिङ् मूर्खेत्यादौ प्रथमा, अनध्याहारे तु द्वितीयैवेति दिक्। इति प्रथमा ॥

कारके। कारकत्वं क्रियाजनकत्वम्। भाष्ये 'करोति–क्रियां

---

अत एवेति। अस्य विधेयभूतक्रियान्वयादेवेत्यर्थः। प्रथमेति। धिग्योगाभावेन द्वितीयाया अप्राप्तेरिति भावः ॥

यत्तु क्रियाजनकत्वं न कारकत्वं, किन्तु क्रियान्वयित्वमेव। अत एव ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ न ब्राह्मणस्य कारकत्वं, तस्य क्रियान्वयित्वाभावात्। अन्यथा सुन्दरं पुत्रं पृच्छतीत्यादौ सुन्दरादिविशिष्टस्य पुत्रस्य क्रियाव्याप्यत्वेन सुन्दरादीनां कर्मकारकत्ववत् ब्राह्मणसम्बन्धिपुत्रस्य विशिष्टस्य क्रियाव्याप्यत्वेन तस्यापि तत्त्वं स्यात्। किञ्च 'मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत्। दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक्' इति स्मृत्या असन्निहितसंप्रदानस्यापि दानदर्शनेन तस्य क्रियानियतपूर्ववृत्तित्वाभावादव्याप्तिः। नच यागस्य पूर्ववृत्तित्वाभावेऽप्यपूर्वद्वारा स्वर्गादिजनकत्ववत्संप्रदानादिज्ञानस्य पूर्ववृत्तित्वेन तद्द्वारा तस्यापि क्रियाजनकत्वं सूपपादमिति वाच्यम्। एवमप्याद्यदोषवारणायानन्यथासिद्धनियतपूर्ववृत्तित्वघटितक्रियाजनकत्वस्यैव तत्त्वस्य वाच्यतया तस्य च क्रियानिष्ठविषयतानिरूपितविषयिताश्रयत्वरूपक्रियान्वयित्वापेक्षया गुरुत्वेन तत्त्वायोगादिति दीक्षितभूषणकृदादयस्तदयुक्तमित्याशयेनाह। क्रियाजनकत्वमिति। करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्त्या कारकशब्दस्य क्रियापरत्वे क्रियायामित्यर्थकस्य तस्योत्तरत्रोपस्थितौ जनकमित्यध्याहारादिदं लब्धम्। संज्ञाशब्दत्वेऽपि महासंज्ञाबलात्तल्लाभः। पक्षद्वयेऽपि क्रियाजनकत्वमखण्डोपाधिरूपमिति न क्रियान्वयित्वापेक्षया गौरवमिति भावः। प्राचीनोक्तार्थपरित्यागे हेतुमाह। भाष्ये इति। एतच्च शक्तिशक्तिमतोरभेद इत्याशयेनोक्तम्। वस्तुतस्तु सिद्धस्य द्रव्यस्य

निर्वर्त्तयति' इतिव्युत्पत्तिप्रदर्शनात्। ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम्' पुत्रेणाऽन्यथासिद्ध्या तत्त्वाभावात्। अत एवैषां क्रियायामेवान्वयः। क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन, क्रियाया जनकाकाङ्क्षया च तत्रैवान्वय-

---

स्वरूपतः क्रियाजनकत्वानुपपत्त्या शक्त्याविष्टस्यैव तत्त्वं वाच्यमिति प्राप्ताप्राप्तविवेकन्यायेन द्रव्यगता क्रियाजनकत्वशक्तिरेव कारकं साधनमिति चोच्यते। तदुक्तमनभिहितसूत्रे भाष्ये 'गुणास्साधनमि'ति। तत्र गुणशब्देन पारतन्त्र्याच्छक्तिरेवोक्ता। किंच द्रव्यस्यैव कारकत्वे तस्यैकरूपत्वेन घटं पश्य, घटेन जलमाहरेत्यादौ कार्यवैचित्र्यानुपपत्तिः। शक्तेरेव तत्त्वे तु सर्वस्यापि सर्वशक्त्याश्रयत्वेन कदाचित्कस्याश्चिद्विवक्षया तत्तद्विचित्रानेककार्योपपत्तिः। अत एव विभक्त्यर्थेनाव्ययेनाव्ययीभावः संगच्छते। द्रव्यस्यैव कारकत्वे तु तस्य शब्देनैवोक्तत्वादुक्तार्थानामिति न्यायेनाव्ययस्य प्रयोग एव नेति कथं तेन समासः स्यादित्यादि मञ्जूषायां विस्तरेण निरूपितमिति बोध्यम्। नन्वेवं पुत्रद्वारा ब्राह्मणस्यापि क्रियाजनकत्वाद्ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य कुतो न कारकत्वम्? प्राचीननये ब्राह्मणस्य पुत्ररूपनामार्थेऽन्वयान्न दोष इत्याशङ्क्य स्वमते तत्र दोषमुद्धरति। ब्राह्मणस्येति। न कारकत्वमिति। तत्त्वे तु पुत्ररूपपृच्छिक्रियाकर्मयुक्त्वात्तस्याकथितं चेति कर्मत्वापत्तिः। तच्च सूत्रप्राप्तापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवर्तत इत्यग्रे वक्ष्यते। अन्यथासिद्ध्येति। जनकत्वस्य कारणतारूपत्वेन तस्याश्चानन्यथासिद्धनियतपूर्ववृत्तितारूपतया कुलालपितुरिव चतुर्थान्यथासिद्ध्येत्यर्थः। तत्त्वाभावात्=क्रियाजनकत्वाभावात्। नन्वत्र मते क्रियातिरिक्तेऽन्वयेऽपि क्रियाजनकत्वाभावस्य वक्तुं शक्यतया क्रियान्वयनियमो दुर्लभोऽत आह। अत

स्यौचित्यात् । सर्वेषां च कारकाणां स्वस्वावान्तरक्रियाद्वारा प्रधान-क्रियानिष्पादकत्वं बोद्धव्यम् । असन्निहितसंप्रदानस्यापि दातृबुद्धि-स्थत्वावश्यकत्वेन स्वज्ञानपूर्वकालकत्वेनैव जनकत्वम् । एवं स्तोकं पचतीत्यादौ फलस्यापि । घटं करोति स्मरति इत्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोद्धव्यम् ॥

कर्तुरीप्सित । ईप्सितशब्दोऽत्र क्रियापरो, नाभिप्रेतपरो रूढः । स्पष्टञ्चेदं वारणार्थानामित्यत्र भाष्यकैयटयोः । कर्तुरिति

---

एवेति । कारकाणां क्रियाजनकत्वादेवेत्यर्थः । औचित्यादिति । परस्परा-काङ्क्षायाः सत्त्वादिति भावः । स्वस्वावान्तरक्रियेति । स्वस्वनिष्ठफलो-त्पत्त्यनुकूलक्रियाद्वारेत्यर्थः । सर्वस्मिन्नेव कारकत्वेनाभिमते फलोत्पत्त्यनुकूला क्रियाऽस्त्येव । परं तु यदा यन्निष्ठक्रियायाः प्राधान्येन धातुवाच्यत्वं विवक्ष्यते, तदा तस्य कर्तृत्वम् । तदभावे तु करणत्वादिकमेव । एतच्च 'वस्तुतस्तदनिर्देश्यं, नहि वस्तु व्यवस्थितम्, स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यत' इति हरिग्रन्थेनापि स्फुटीकृतमिति बोध्यम् । अत्र मते दीक्षिताद्युक्तं दोषमुद्धरति । असन्निहितेति । स्वज्ञानपूर्वकालकत्वेनेति । संप्रदानज्ञानस्य दानक्रिया-पूर्वकालवृत्तित्वेनेत्यर्थः । एवं च ज्ञानद्वारा तस्यापि जनकत्वमिति भावः । फलस्यापीति । ज्ञानद्वारा पूर्वकालवृत्तित्वेन क्रियाजनकत्वमित्यर्थः । अत एव व्यपदेशिवद्भावेन तस्यापि फलाश्रयत्वात्कर्मत्वे तत्समानाधिकरणाद्वितीया-सिद्धिः । नन्वसत्कार्यवादे घटं करोतीत्यादौ घटादेः क्रियापूर्वकालवृत्तित्वाभावेन कारकत्वासंभवात्कर्मत्वानापत्तिरत आह । घटं करोतीति । बौद्ध इति । बुद्धिसत्तासमाविष्टस्यैव घटशब्दवाच्यत्वादिति भावः । सत्कार्यवादे तु सूक्ष्म-रूपेण तस्य पूर्वमपि सत्त्वान्न कश्चिद्दोष इति बोध्यम् ॥

बलीयस्या अपि रूढेस्त्यागे मानमाह । स्पष्टं चेदमिति । आकारे । वारणार्थानामिति सूत्रस्थभाष्यकैयटयोः । कर्तरि षष्ठीति । न चैवं घटो घट

क्तस्य च वर्त्तमाने इति कर्तरि षष्ठी । आप्नोतेः सन्नन्तात् मति-बुद्धीति वर्त्तमाने कर्मणि क्तः । 'मतिः—इच्छा' इति तत्राऽऽकरः । एवञ्च कर्त्राऽऽप्तुमिष्यमाणं कर्मेत्यर्थः । आप्तिश्चात्र संबन्धः । स च कर्तृपदार्थविशेषणीभूतव्यापारद्वारक एव । उपस्थितपरित्यागेना-नुपस्थितकल्पने मानाभावात् । एवञ्च कर्त्रा स्वनिष्ठव्यापारप्रयोज्य-फलेन संबन्धुमिष्यमाणमित्यर्थः । यथा—तण्डुलं पचतीत्यादौ । फलस्यापि व्यपदेशिवद्भावेन फलसंबन्धित्वात्कर्मत्वम् । अत एव

---

इतिवत्प्रकृत्यर्थकर्तुः प्रत्ययार्थकर्त्रा अभेदान्वयो न स्यादिति वाच्यम् । हरिं भजतीत्यादिप्रयोगसमवायिधात्वर्थकर्तुः प्रकृत्यर्थत्वेनाप्नोतिकर्तुः प्रत्ययार्थ-त्वेन तयोर्भेदेनादोषात् । ननु मतिशब्दस्य ज्ञानार्थकतया कथं तेनात्र प्रत्यय इत्यत आह । मतिरिच्छेति । पुनर्बुद्धिग्रहणादिति भावः । आप्लृ व्याप्तावित्युक्तेराप्तिशब्दस्य व्याप्तिपरत्वभ्रमनिरासायाह । संबन्ध इति । तत्र कर्त्रा कर्मणः साक्षात्संबन्धस्यासंभवात्कर्मत्वादीनां क्रियोपाधिकत्वाच्च क्रियाद्वारकः परम्परासंबन्ध एव गृह्यते । प्रधानधात्वर्थव्यापाराश्रयरूप-सूत्रोपात्तकर्तृपदार्थविशेषणतया तस्या उपस्थितत्वेनोपस्थितपरित्यागेनानु-पस्थितकल्पनायां मानाभावादित्याशयेनाह । व्यापारद्वारक एवेति । स च स्वप्रयोज्यफलाश्रयत्वरूप एवेत्याशयेन फलितमाह । एवं चेति । फलेन संबन्धुमिष्यमाणमिति । फलाश्रयत्वेन कर्तुरिच्छाविषयमित्यर्थः । व्यपदे-शिवद्भावेनेति ॥

यत्तु पचतीत्यस्य पाकं करोतीति विवरणदर्शनात्फलस्याप्युत्पत्तिरूप-फलाश्रयत्वात्कर्मत्वसिद्ध्या न व्यपदेशिवद्भावावसर इत्याचार्याः, तन्न । विवरणवाक्ये कृञः प्रयोगेण तत्सिद्धावपि लोके पचतीत्यादावुत्पत्तेर्धात्वर्थ-

त्वाभावात्तद्रूपफलाश्रयताया दुर्वचत्वेन व्यपदेशिवद्भावस्यावश्यकत्वात्। यदि तु तत्तत्फलोत्पत्त्यनुकूलव्यापारस्यैव सर्वत्र धात्वर्थतया फलाश्रयत्वेन तण्डुलादीनामिव तदुत्पत्त्याश्रयत्वेन फलस्यापि कर्मत्वोपपत्तिरित्युच्यते, तदोत्पत्त्यर्थकधातुयोगे फलीभूतोत्पत्तेरुत्पत्त्यन्तराभावेन निरुक्तरीत्या तत्र फले कर्मत्वं दुर्वचमिति बोध्यम्। ननु स्तोकं पचतीत्यत्रासहायत्वेन व्यपदेशिवद्भावेऽपि स्तोकं तण्डुलं पचतीत्यत्र मुख्यधर्मवतः फलाश्रयस्य तण्डुलादेः समभिव्याहारस्य सत्त्वात्ससहाये व्यपदेशिवद्भावाभावात्कर्मत्वं न स्यादिति चेदत्र गुरुचरणाः। कालिकादिसंबन्धेन फलाश्रये कर्मत्ववारणाय फलतावच्छेदकसंबन्धेन फलाश्रयत्वस्य वक्तव्यतया फलस्य कर्मतायाः प्रामाणिकतया तन्निर्वाहकोपायान्तराभावेन तादात्म्यस्यापि फलतावच्छेदकसंबन्धत्वस्वीकारेण स्तोकं तण्डुलं पचतीत्यादावपि फलतावच्छेदकीभूततादात्म्यसंबन्धेन फलाश्रयस्यान्यस्याभावेन व्यपदेशिवद्भावः सुवचः। न चैवं व्यपदेशिवद्भावस्यावश्यकतैव नेतीदमयुक्तमिति वाच्यम्। तस्य क्रियाविशेषणानां कर्मत्वमित्यादिप्रमाणबलात्तादात्म्यस्यापि फलतावच्छेदकसंबन्धत्वं स्वीकार्यमित्येतावन्मात्रतात्पर्यकत्वेनादोषात्। यदि त्वीप्सिततमशब्दात्फलाश्रयत्वेनोद्देश्यत्वं कर्मत्वमित्यर्थलाभेन कालिकादिसंबन्धेन फलाश्रये उद्देश्यत्वाभावेनैव वारणसंभवात्फलतावच्छेदकसंबन्धेनेति न निवेश्यत इत्युच्यते, तदा फलाश्रयत्वेन कर्तुरिच्छाविषयस्यैव कर्मत्वेन फले फलाश्रयत्वप्रकारकज्ञानं मे जायतामितीच्छाविषयत्वस्य फलेऽपि सत्त्वेन कर्मत्वस्य सुवचत्वात्। तादृशेच्छाजन्यस्य फले फलाश्रयत्वप्रकारकज्ञानस्याहार्यत्वाव्द्यपदेशिवद्भावेनेत्युक्तमिति बोध्यम्। यद्वा फले कर्मत्वस्य तत्समानाधिकरणे द्वितीयासंपादनमात्रफलकतया द्व्यादिशब्दवाच्यसमूहरूपसंख्यायाः समूहत्वेन रूपेणाधारताया द्वित्वत्वादिनाऽऽधेयतायाश्च स्वीकारवद्विशेषणवृत्तिस्तोकत्वादिधर्मपुरस्कारेणाश्रयताया विशेष्यवृत्तिविक्लित्तित्वरूपधर्मपुरस्कारेणाधेय-

तत्समानाधिकरणे 'स्तोकं पचति' इत्यादौ कर्मत्वसिद्धिः। क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु न विवक्षितम् । तेन कटं कृतवान् करिष्यतीत्यादिसिद्धिः । कारकं कर्मसंज्ञं स्यादिति । 'कारके' इति प्रथमार्थे

---

तायाश्च सुवचत्वेन फले कर्मत्वं सूपपादम् । ईदृशधर्मभेदप्रयुक्ताश्रयाश्रयिभावप्रतिपादनतात्पर्यकमेवात्र व्यपदेशिवद्भावप्रतिपादनमिति वदन्ति ॥

फलस्य कर्मत्वे फलमाह । अत एवेति । तत्समानाधिकरण इति । तेन सहाभेदान्वयिनीत्यर्थः । कर्मत्वसिद्धिरिति । फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वे तदभिन्नस्यापि तत्त्वात्तत्सिद्धिरिति भावः । एतन्मूलिकैव क्रियाविशेषणानां कर्मत्वमित्यभियुक्तोक्तिरपि । तत्र क्रियाविशेषणानामित्यस्य फलविशेषणानामित्यर्थः । एवं व्यापारस्यापि व्यपदेशिवद्भावेन व्यापाराश्रयत्वात्कर्तृत्वे तत्समानाधिकरणे मन्दं गच्छति, कुटिलं गच्छतीत्यादौ प्रथमासिद्धिः । न च तत्र नपुंसकत्वात्प्रथमाद्वितीययोर्न रूपवैलक्षण्यमिति वाच्यम् । एवमपि 'न शिक्षितस्त्वया तेन मन्दं ते याति वारण' इत्यादौ सपूर्वायाः प्रथमाया विभाषेति विकल्पप्रवृत्तेः फलत्वादित्यन्यत्र विस्तरः । नन्वीप्सिततममित्यत्र वर्तमानेऽर्थे क्तस्य विधानात्कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वेन वर्तमानकालिकेच्छाविषयस्यैव कर्मत्वं स्यान्न तु भूतभविष्यत्कालिकेच्छाविषययोरित्यत आह । वर्तमानत्वं तु न विवक्षितमिति । अत्र तु कृतः कटो भीष्म उदार इत्याद्यनभिहितसूत्रादिस्थभाष्यप्रयोग एव मानमिति बोध्यम् । अविवक्षाफलमाह । तेनेति । कारक इत्येतत्संज्ञाधिकार इति भाष्योक्तप्रथमपक्षे मूलं योजयति । प्रथमार्थे सौत्री सप्तमीति । नन्वत्र पक्षे आकडारीयत्वेन कारकसंज्ञाया अपादानादिसंज्ञाभिः समावेशो न स्यात् । एवं च ग्रामेवास इत्यादावधि-

**सौत्रीसप्तमी। तेन कारकं सत् कर्मसंज्ञमित्यर्थः। संज्ञिनः क्रियाजनकत्वन्तु महासंज्ञयाऽऽक्षिप्तम्। यद्वा सप्तमी यथाश्रुतैव। कारकपदञ्च क्रियापरम्। करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। जनक-**

---

करणत्वप्रयुक्तसप्तम्याः कारकत्वप्रयुक्तथाथादिस्वरस्य च प्रवृत्तिर्न स्यादिति चेदत्र कैयटः। ध्रुवमपाय इति योगं विभज्य तेन कारकसंज्ञा विधीयते। ततोऽपादानमित्यत्र कारकग्रहणमनुवर्तते। ध्रुवमपाय इति च। तेन कारकं सदपादानसंज्ञं स्यादित्यर्थात्समावेशः सिद्ध्यति। नचैवमपि पर्यायतैव कुतो नेति वाच्यम्। उत्तरसूत्रे कारकग्रहणानुवृत्तिमन्तरेणापि योगविभागेन संज्ञाद्वयविधानसामर्थ्यात्पर्यायत्वे सिद्धे उत्तरसूत्रे कारकग्रहणानुवृत्तिसामर्थ्यात्समावेशस्य सुवचत्वात्। एवं संप्रदानादिसंज्ञास्वपि समावेशो व्याख्येय इति। तदेतदाह। **कारकं सत्कर्मसंज्ञमित्यर्थ इति**। नन्वत्र पक्षे क्रियाजनकस्यैव ध्रुवादेरपादानादिसंज्ञेत्यर्थस्य दुर्लभत्वेन तदजनकस्यापि ध्रुवादेः संज्ञापत्तिः। तथा च ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्याप्यकथितं चेति कर्मत्वापत्तिः। तस्य सूत्रप्राप्तापादानत्वाद्यविवक्षायां सर्वथा तदप्राप्तौ च प्रवृत्तेरत आह। **संज्ञिनः क्रियाजनकत्वमिति**। क्रियाजनकत्वविशिष्टध्रुवादेरेव संज्ञित्वमित्यर्थः। **महासंज्ञयाऽऽक्षिप्तमिति**। महत्याः संज्ञायाः करणादन्वर्थत्वं विज्ञायते। करोति क्रियां निर्वर्तयतीति कारकमिति। तेन महासंज्ञोपस्थितक्रियानिर्वर्तकत्वविशिष्टा ध्रुवादय एव संज्ञित्वेन निर्दिष्टा इत्यनुमीयत इति भावः। कारक इत्येतद्विशेषणत्वेनाधिक्रियत इत्याशयके 'यावद्ब्रूयात्क्रियायामिति तावत्कारक' इति भाष्योक्तद्वितीयपक्षे मूलं योजयति। **यद्वेति**। कारकपदस्य क्रियापरत्वे युक्तिमाह। **करोतीत्यादिना**। नन्वत्र पक्षे कारकाद्दत्तश्रुतयोरेवाशिषि कारकोपपदात्कृदित्यादौ कारकपदेन क्रियाजनकमात्रस्यैव ग्रहणं

मित्यध्याहारः । विषयत्वं सप्तम्यर्थः । कारकग्रहणे च स्वरितत्वप्रतिज्ञया तदधिकारोक्तकर्त्रादिषट्कमेव, तेन नटश्रवणमित्यादौ न कृदुत्तरपदप्रकृतिस्वरः । ग्रामेवासः इत्यादौ च तत्स्वरसिद्धिरित्यन्यत्र विस्तरः । कर्तुः किमिति । तदभावेऽपि केनाऽऽप्तुमित्याकाङ्क्षायां कारकाधिकाराद्व्यापारलाभ इति प्रश्नः । माषेष्विति । माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थः । तदाह—कर्मण इति । तमब्ग्रहणं किमिति । अवयवद्वारा समुदायस्य प्रश्नः ।

---

स्यात्तथा च नटश्रवणमित्यादौ नटस्यापि श्रुतिक्रियाजनकत्वेन कारकत्वात्कृदुत्तरपदप्रकृतिकस्वरापत्तिरत आह । कारकग्रहणे चेति । आद्यपक्षे संज्ञाद्वयसमावेशफलमपि सूचयन्नाह । ग्रामे वास इति । अन्यत्र = कैयटोद्योतयोः । इत्यर्थ इति । एवं च कर्तृग्रहणाभावे कारकाधिकाराद्व्यापारप्रयोज्यफलाश्रयं कर्मेत्येतावन्मात्रार्थस्यैव लाभेन निरुक्तार्थके माषेष्वश्वं बध्नातीतिवाक्ये अध्याहृतप्रसञ्जनरूपकर्मनिष्ठव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेन माषाणामपि कर्मत्वापत्तिः । कर्तुरित्युक्तौ तु कर्तृनिष्ठव्यापारप्रयोज्यबन्धनरूपफलाश्रयत्वस्य माषेष्वभावान्न दोष इति भावः । नन्वेवमपि यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्र एवाश्वबन्धनं तदा तादृशार्थके निरुक्तवाक्ये बन्धनरूपकर्तृनिष्ठव्यापारप्रयोज्यभक्षणरूपफलाश्रयत्वेन कर्मत्वापत्तिरिति चेन्न । कर्तृग्रहणसत्त्वे कर्तृनिष्ठव्यापारस्य प्रकृतधातुवाच्यत्वेन तद्व्यापारप्रयोज्यफलस्यापि प्रत्यासत्त्या प्रकृतधातुवाच्यस्यैव ग्रहणात्कर्तृव्यापारवाचकोपात्तधात्वर्थतावच्छेदकफलाश्रयं कर्मेत्यर्थलाभाद्भक्षणस्यातथात्वेनादोषात् । तदेतदनुपदं वक्ष्यति । ननु तमब्ग्रहणाभावेऽपि न मूलोक्तातिप्रसङ्गः । ईप्सितशब्दस्य क्रियाशब्दत्वेन पयसः फलाश्रयत्वेनाविवक्षणात्कर्मत्वाप्राप्तेरित्याशङ्क्य तदाशयं दर्शयति । अवयवद्वारेति ।

कर्तुरुद्देश्यं कर्मत्वेवास्त्विति भावः। पयसौदनमिति। यदा कृतभोजनोऽपि पयोलाभेनौदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम्। तत्क्रियायाः पयउद्देश्यकत्वात्। ईप्सिततमशब्दस्य तु क्रियाशब्दत्वात्पयसस्तदा फलाश्रयत्वेनाविवक्षणान्न दोषः इति भावः। तमस्य फलं तु अग्नेर्माणवकं वारयतीति। तदभावे हि वारणार्थानामिति सूत्रमस्यापवादः स्यात्। एवञ्च माणवकस्य कर्मत्वं न स्यात्। न चाग्नौ तच्चरितार्थम्। तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात्। वारयतेश्च संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारोऽर्थः। एष

---

नन्वेवं पयसः नोद्देश्यत्वमेवात आह। यदेति। तत्क्रियायाः = तत्संबन्धिभुजिक्रियायाः। नन्वेवमनेनापि कथं तद्वारणमत आह। ईप्सिततमशब्दस्येति। क्रियाशब्दत्वादिति। इच्छारूपक्रियाप्रवृत्तिनिमित्तकत्वादित्यर्थः। अविवक्षणादिति। संस्कारकत्वात्करणत्वस्यैव विवक्षणादिति भावः। न ह्यस्य केवले पयस्यादरः, किन्तु तत्संस्कृते ओदने। अत एवास्य न केवलपयःपानेन संतुष्टिरिति बोध्यम्। तमब्ग्रहणमात्रस्य फलं दर्शयति। तमस्य फलं त्विति। अपवादः स्यादिति। अनवकाशत्वादिति भावः। ननु कर्मत्वाप्राप्तियोग्येऽपादानत्वस्य चारितार्थ्यान्नापवादत्वमित्याशङ्कते। न चेति। तस्यापीति। अपिना माणवकसमुच्चयः। तदुपस्थाप्येति। वारयत्युपस्थाप्येत्यर्थः। फलाश्रयत्वादिति। एवं च तत्रापि कर्मत्वप्राप्त्या न सावकाशत्वमपादानत्वस्येति भावः। ननु प्रवृत्तिविघातस्यैव वारणार्थत्वेन संयोगरूपं फलं न वारयतिवाच्यमत आह। वारयतेश्चेति। आदीति। आदिना भक्षणम्। तथा च यवेभ्यो गां वारयतीत्यादौ भक्षणानुकूलव्यापाराभावानुकूलो व्यापारः, अग्नेर्माणवकं वारयतीत्यादौ संयोगानुकूलव्यापाराभावानुकूलव्यापारश्च वारयत्यर्थ इति भावः। ननु कर्मसंज्ञाविधायके ईप्सितशब्दस्या-

एव प्रवृत्तिविघातः । ईप्सितशब्द उभयत्रापि क्रियाशब्द एव । न च संयोगो न तत्कर्तृव्यापारजन्य इति तत्र कर्मत्वाप्राप्तिरिति वाच्यम् । कर्तृव्यापारवाचकधातूपात्तफलाश्रयत्वमित्यर्थस्यैव तेन लाभात् । तमब्ग्रहणे त्वीप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेऽनेन बाधः । ईप्सिततमत्वश्च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनोद्देश्यत्वम् । तच्च नाग्न्यादौ ।

---

भिप्रेतपरत्वेऽग्नेरनीप्सितत्वेन तत्र कर्मसंज्ञाया अप्राप्त्याऽपादानत्वं सावकाशमेवेति नापवादत्वमत आह । ईप्सितशब्द इति । वारणार्थानामिति सूत्रस्थभाष्यप्रामाण्यात्सूत्रद्वयेऽपीप्सितशब्दः क्रियाशब्द एव, नाभिप्रेतपरो रूढ इति भावः । ननु तत्र कर्तृग्रहणात्कर्तृनिष्ठव्यापारजन्यफलाश्रयस्यैव कर्मत्वादत्र संयोगस्यातथात्वेन नाग्नौ कर्मत्वप्राप्तिरित्याशङ्कते । नचेति । तेनेति । कर्तृग्रहणेनेत्यर्थः । तमब्ग्रहणे सति यथा न दोषस्तथाऽह । तमब्ग्रहणे त्विति । ईप्सितमात्र इति । वारणार्थकधातूपस्थाप्यव्यापारजन्यफलाश्रयत्वमेव तत्रेप्सितत्वमिति भावः । ननु कोऽसौ कर्मसंज्ञाविधायके तमब्ग्रहणलभ्यः प्रकर्षोऽत आह । ईप्सिततमत्वं चेति । अयं भावः । तरबादिः प्रवृत्तिनिमित्तगतप्रकर्षे विधीयते । प्रवृत्तिनिमित्तं चात्रेच्छा । तस्यां स्वतः प्रकर्षासंभवेऽपि व्याख्यानाद्विशेषणीभूतसंबन्धगतः स गृह्यते । स च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यधात्वर्थफलसंबन्धरूपः । एवं च सति फलितमर्थं दर्शयति । प्रकृतधात्वर्थेत्यादिना । नाग्न्यादाविति । अग्नेर्वारयत्युपस्थाप्यमाणवकनिष्ठाप्रधानीभूतव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेऽपि न प्रधानीभूतव्यापारप्रयोज्यफलाश्रयत्वमिति भावः । नचात्र संयोगस्य प्रधानीभूतव्यापाराजन्यत्वेऽपि तत्प्रयोज्यत्वमस्त्येवेति भ्रमितव्यम् । प्रयोज्यत्वस्य जन्यजन्यसाधारणत्वेन प्रधानीभूतव्यापारजन्यसंयोगानुकूलव्यापाराभावजन्यत्वस्य संयोगे-

फलव्यापारयोः प्रकृतधात्वर्थत्वन्तु प्रत्यासत्तिलभ्यम्। तेन यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्र एवाश्वबन्धनं तदा माषेष्वश्वं बध्नातीत्यादौ माषाणां न कर्मत्वम्। बन्धनप्रयोज्यभक्षणफलाश्रयत्वेऽपि भक्षणस्य बध्नात्यर्थत्वाभावात्। प्रयोज्यत्वनिवेशाद् गां पयो दोग्धीत्यादौ विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयसः कर्मत्वसिद्धिरिति स्पष्टं भाष्ये। कर्मेत्यनुवृत्ताविति। अधिशीङ्स्थासामिति सूत्रात्। आधारेति। कर्तृकर्मद्वारा क्रियाश्रयो हि सः। तदाह—गेहमित्यादि।

अनुक्ते कर्मणीति। कर्मपदेनैतच्छास्त्रबोधितकर्मसंज्ञकं कर्मत्वशक्तिमद् गृह्यते। सर्वकर्मविहितद्वितीयादीनां कर्मत्वशक्तिमा-

---

ऽसत्त्वात्। ननु वारणार्थानामिति सूत्र इवात्रापीप्सितेतिकर्मणा कर्तुराक्षेपेणैव सिद्धे पुनः कर्तृग्रहणेन निरुक्तप्रकर्षलाभसंभवात्तमब्ग्रहणमनर्थकमेवेति चेन्न। लघुना तमब्ग्रहणेन कर्तुरित्यस्य प्रत्याख्याने भाष्यतात्पर्यात्। फलांशे प्रकृतधात्वर्थत्वस्य व्यापारांश इव प्रत्यासत्त्यैव लाभान्न माषेष्वश्वं बध्नातीत्यादावतिप्रसङ्गः। स्पष्टं चैतत्सर्वं वारणार्थानामिति सूत्रे उद्योते इति बोध्यम्। ननु तमब्ग्रहणेन निरुक्तप्रकर्षलाभेऽपि माषेष्वश्वमित्यत्रातिप्रसङ्ग एव। बन्धनप्रयोज्यभक्षणरूपफलाश्रयत्वात्। तस्य प्रकृतधात्वर्थत्वविवक्षायां मानाभावादित्यत आह। फलव्यापारयोरिति। जन्यत्वं विहाय प्रयोज्यत्वनिवेशे फलं दर्शयति। प्रयोज्यत्वनिवेशादिति। सिद्धिरिति। कर्तुरिति सूत्रेणेत्यर्थः। विभागस्य प्रकृतधात्वर्थप्रधानीभूतगोपनिष्ठव्यापाराजन्यत्वेऽपि तज्जन्यगोनिष्ठव्यापारजन्यत्वादिति भावः। स इति। आधार इत्यर्थः। प्रकृते गेहस्य कर्तृद्वारा क्रियाधारतेति भावः॥

सर्वकर्मेति। अधिशीङित्यादियावत्सूत्रविहितकर्मसंज्ञककर्मत्वशक्तिमदित्यर्थः। द्वितीयादीनामिति। आदिना कर्तृकर्मणोरिति सूत्रविहितषष्ठ्याः,

नर्थः। क्रियाकारकभावः सम्बन्धश्च तदर्थः। 'राज्ञः पुरुष इत्यत्र राज-

---

गत्यर्थकर्मणीति सूत्रविहितचतुर्थ्याश्च संग्रहः। क्रियाकारकभाव इति। क्रियात्वकारकत्वसमूहरूप इत्यर्थः। संबन्धश्चेति। चेन कर्मगतविशेषणत्व-समुच्चयः। एवं च कर्मत्वशक्तिमान्, तद्गतं विशेषणत्वं क्रियाकारकभाव-संबन्धश्च द्वितीयार्थ इति फलितम्। तत्र कर्मत्वादिशक्तिविशिष्टस्य द्वितीयार्थत्वे कर्मणि द्वितीयेति सूत्रं साधकमिति प्रसिद्धमेव। भेदसमानाधिकरणविशेषणत्व-ज्ञान एव संबन्धाकाङ्क्षेति तदपि द्वितीयार्थः। संबन्धस्य तत्त्वे मानं त्वनुपद-मेव दर्शयति। अत्र पञ्चकं प्रातिपदिकार्थ इति सिद्धान्ते पदानां तत्ताद्विषयता-विशिष्टे शक्तिरिति सिद्धान्ते च कर्मणस्तद्गतविशेषणत्वस्य च प्रातिपदिक-वाच्यत्वेन द्वितीया तद्द्योतिका। अत एव शक्तेः प्रकृत्यर्थविशेषणतयैव भान-मुचितम्। कारकस्य विभक्त्यर्थत्वपक्षेऽपि संख्यावत्तस्य तथैवान्वयः। अत एव सत्त्वप्रधानानि नामानीति निरुक्तं संगच्छते। अन्यथा तद्धितश्चेति सूत्रस्थ-भाष्यप्रामाण्याद्विभक्त्यर्थस्यासत्त्वभूतत्वेन तदसंगतिः स्पष्टैव। एवं च कर्म हरीत्यादिप्रकारेण बोधः। नचैवं हरिकर्मकं भजनमित्याद्युल्लेखासंगतिरिति वाच्यम्। कर्मशब्दस्य समासघटकस्य संज्ञाशब्दत्वेन तत्र विशेषणविशेष्यभावे कामचारात्कर्म हरीतिवद्धरिकर्मकेत्याद्युल्लेखस्यापि सुकरत्वात्। संबन्धस्तु सर्वथा वाच्य एव। तस्य प्रकारतयाऽभानात्। द्योत्यत्वे हि तस्य प्रकारताया एव न्याय्यत्वात्। कष्टं श्रित इत्यत्र क्रियाकारकयोः संबन्धस्य द्वितीया वाचिकेति समर्थसूत्रस्थभाष्याच्च। अत एव प्रकारीभूतविभक्त्यर्थसंबन्धेन नामा-र्थधात्वर्थयोरन्वय इति वृद्धाः। प्रकारीभूतो यो विभक्त्यर्थः कर्मत्वादिशक्तिः, तद्घटितेन क्रियात्वकारकत्वसमूहरूपसंबन्धेन तयोरन्वय इति तदर्थः। एतेन संबन्धस्य प्रकारतया भानं नेति स्पष्टमेवाभिहितमित्यन्यत्र विस्तरः। संबन्धस्य द्वितीयावाच्यत्वे मानं दर्शयति। राज्ञः पुरुष इत्यादिना।

पुरुषयोः सम्बन्धस्य षष्ठी वाचिका, कष्टं श्रित इत्यत्र क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका' इति समर्थसूत्रस्थभाष्यात्। एवञ्च हरिं भजतीत्यादौ हरिकर्मकं भजनमिति बोधः। अभिहिते त्विति। अनभिहिताधिकारादिति भावः। पञ्चकं प्रातिपदिकार्थे इति पक्षे कर्मणि द्वितीयेत्यादेः द्व्येकयोरित्यादेश्च नियमत्वम्। एतदभावेऽपि स्वादिसूत्रेणानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इति कर्मादौ संख्यायाञ्च स्वादीनां सिद्धेः। तत्र यदा कर्मणीत्यादेर्द्व्येकयोरित्यादेश्चैकवाक्यतायामेकस्मिन् कर्मणीत्यन्वयेन सूत्रजबोधे कर्माद्यर्थस्य प्राधान्यं तदा नार्थोऽनेन। सूत्रजबोधविषयप्रधानविषयेण उक्तार्थानामिति न्यायेन सिद्धेः। यद्यपि द्विर्बद्धं सुबद्धमिति न्यायेन 'द्वौ ब्राह्मणौ' 'व्यतिलुनीते' इत्यादौ द्योतकवाचकयोर्द्योतकयोश्च समुच्चयो दृष्टस्तथापि प्रकृते लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव वक्तुं शक्यत्वात्। एवञ्च कर्मादीनां

---

हरिकर्मकमिति। कर्मक्रियाभावसंबन्धेन कर्मत्वशक्तिमद्धरिविशिष्टं भजनमिति बोध इति भावः। अनभिहित इत्यस्य प्रत्याख्यानप्रकारं सिद्धान्तमतेनाह। पञ्चकमिति। एतदभावेऽपीति। एतयोः सूत्रयोरभावेऽपीति भावः। तत्रेति। नियमपक्षे इत्यर्थः। एकवाक्यतायामिति। तयोः परस्परमेकवाक्यतायामित्यर्थः। एकस्मिन्कर्मणीति। एकत्वविशिष्टे कर्मणीत्यर्थः। प्राधान्यमिति। द्व्येकयोः, कर्मणीत्यनयोर्विशेषणविशेष्यभावे कामचारात्कर्माद्यर्थस्य प्राधान्यमित्यर्थः। प्रधानविषयेणेति। प्रधानार्थविषयेणेत्यर्थः। ननु तेनापि न्यायेन कथं सिद्धिरिति शङ्कते। यद्यपीति। आद्ये आह। द्योतकवाचकयोरिति। द्वितीये आह। द्योतकयोरिति। एवं च= पञ्चकपक्षे च। एवं प्रत्याख्यानप्रकारमुक्त्वा सूत्रकृदाशयं दर्शयति।

द्योत्यत्वमेव । यदा तु कर्मगते एकत्वे इत्यन्वयेन संख्यायास्तत्त्वं तदा सूत्रमारब्धव्यम् । भाष्ये एषु विभक्त्यर्थत्वव्यवहारो द्योत्यतयैव, न त्वेतावता तच्छक्यत्वमेषां भ्रमितव्यं; नियमत्वानुपपत्तेरिति स्पष्टं बहुष्विति सूत्रे भाष्यादिषु । द्योतकविषयेऽप्युक्तार्थानामिति न्यायो 'अभिपरी' इति सूत्रे भाष्ये दृश्यते । तत्र हि अध्यागच्छतीत्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति न्यायेनाभावमाशङ्क्यापूपौ द्वावित्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम् । तत्र हि द्विशब्दापूपशब्दयोर्वाचकयोः, प्रकृतिप्रत्यययोर्वाचकद्योतकयोर्द्वावित्यत्र तयोर्वाचकानुवादकयोश्च समुच्चयः । अत एव द्विदशा इत्यादौ समासेन सुजर्थस्योक्तत्वान्न सुजिति भाष्ये उक्तम् । तत्र हि समासः सुचेत्युभयमपि द्योतकम् । सुजर्थश्च क्रियाजन्मेति तत्रैव वक्ष्यते । तथा तद्धित-

---

यदा त्विति । तत्त्वमिति । सूत्रजबोधे प्राधान्यमित्यर्थः । आरब्धव्यमिति । अप्रधानकर्मादिविशेषणार्थं सूत्रमारब्धव्यमित्यर्थः । उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय एवेति भावः । ननु यदि पञ्चकं प्रातिपदिकार्थस्तदा 'सुपां कर्मादयोऽप्यर्थाः' इत्यादिना कर्मादिषु भाष्यकृत्कृतो विभक्त्यर्थत्वव्यवहारोऽसङ्गतोऽत आह । भाष्ये इति । नन्वेवं व्यतिलुनीत इत्यादौ द्योतकसमुच्चयस्य दृष्टत्वेनोक्तार्थानामिति न्यायस्य तद्विषयेऽप्रवृत्तेरङ्गीकार्यतया कथं तेनैतत्सूत्रप्रत्याख्यानमत आह । द्योतकविषयेऽपीति । वाचकत्वनिरासायाह । अनधिकार्थयोरिति । वाचकयोरिति । द्वित्ववाचकयोरित्यर्थः । तयोरिति । प्रकृतिप्रत्यययोरित्यर्थः । केवलद्योतकस्थलमाह । अत एवेति । द्योतकविषयेऽपि तत्संचारादेवेत्यर्थः । ननु कोऽसौ सुजर्थोऽत आह । क्रियेति । उक्तार्थे साधकं भाष्यान्तरमप्याह । तथेति । प्रसङ्गादुक्तप्रकारो धातुविषये-

द्विर्वचनयोर्द्योतकयोस्तद्धितेनोक्तत्वाद्वीप्सायां न द्विर्वचनं माषश इत्यादाविति सर्वस्य द्वे इति सूत्रे भाष्ये उक्तम् । एवं च धातोरपि क्रियात्वक्रियाकालकारकसंख्यारूपं पञ्चकमर्थः । अत एव तद्विषयेऽपि द्व्येकयोरित्यादेर्भावकर्मणोरित्यादेश्च नियमत्वं भाष्यसंमतं सङ्गच्छते । अत एव दधि अजर्या अवेत् इत्यादौ प्रातिपदिकधातुभ्यामेव सर्वबोधः । अत एव भावकर्मणोरित्यस्य तद्वृत्ताद्धातोरित्यर्थः 'स्नुक्रमो'रिति सूत्रे भाष्ये दर्शितः । द्योत्यत्वादेवोभयत्रापि प्रत्ययार्थस्य विशेषणत्वमेवेत्यन्यत्र विस्तरः ॥

प्रथमैवेति । सा हि प्रातिपदिकार्थस्य तेनोक्तत्वेऽपि भवत्येवेति भावः । अत एव अभिहिते प्रथमेति वार्त्तिकं सङ्गच्छते ।

---

ऽपीत्याह । एवं चेति । नियमत्वानुपपत्त्या तत्र तथा स्वीकारे चेत्यर्थः । अत्रार्थे मानमाह । अत एवेति । एवं च भाष्यसम्मतनियमत्वानुपपत्त्या धातुविषयेऽपि तथैव स्वीकार्यमिति भावः । उभयत्र पञ्चकस्य प्रकृत्यर्थत्वे साधकान्तरमाह । अत एवेति । सर्वेति । लिङ्गसंख्याकालकारकादिसर्वेत्यर्थः । ननु व्यतिसे इत्यादौ प्रत्ययमात्रादपि सर्वबोधस्य दृष्टतया न तदुक्तार्थसाधकमत आह । अत एवेति । द्योत्यत्वादेवेति । अन्यथा प्रकृत्यर्थप्रत्ययार्थयोरिति न्यायेन तस्य विशेष्यत्वमेव स्यादिति भावः ॥

ननु प्रातिपदिकार्थसूत्रेऽप्यनभिहित इत्यधिकारादभिहिते तु कर्मणि प्रथमैवेति मूलमयुक्तमत आह । सा हीति । प्रातिपदिकार्थस्येति । प्रातिपदिकार्थनिष्ठकर्मत्वादेरित्यर्थः । तेनेति । कृदादिनेत्यर्थः । तत्राधिकृतस्यानभिहित इत्यस्य तदेकवाक्यतापन्नसंख्यावाक्यान्वयित्वस्य प्रागुपदर्शितत्वेन तद्गतसंख्याया अनभिहितत्वादिति भावः । कर्मादीनामभिधानेऽपि प्रथमायाः प्रवृत्तिरित्यत्र मानमाह । अत एवेति । अत्र परिगणनफलं दर्शयति ।

तिङ्कृदित्यादिपरिगणनादेव 'कटं भीष्मं कुरु' इत्यादौ विशेष्या-दुत्पन्नद्वितीयया गतार्थत्वेऽपि विशेषणात् सा । यदा तु प्रक्रिया-दशायां कटोऽपि कर्म भीष्मादयोऽपीत्याश्रयणात् कटत्वविशिष्ट-कटनिष्ठकर्मत्वोक्तावपि भीष्मत्वादिगुणविशिष्टनिष्ठस्य तस्य बोधार्थं ततोऽपि सा । बोधस्तु परस्परं तयोर्विशेष्यविशेषणभावे-नैव । कारकाणां भावनाऽन्वयव्युत्पत्तिः साक्षात्स्वाश्रयद्वारा वाऽन्व-यविषयेति, तदा परिगणनं भाष्ये प्रत्याख्यातम् । तिङ्कृतौ स्वप्रकृ-त्यर्थं प्रति यस्य कर्मता तस्य सर्वस्यापि कर्मतामाहतुरिति कृतः कटः सुन्दर इत्यादौ न क्वापि द्वितीयेति दिक् ॥

शत्य इति । अत्र वदन्ति—कर्मादिपद इवात्रापि न विभक्ति-

---

तिङ्कृदिति । गतार्थत्वेपीति । विशिष्टस्य विशेष्यानतिरिक्तत्वेन विशेष्या-दुत्पन्नद्वितीयया तद्गतकर्मत्वस्योक्तत्वे विशिष्टगतस्यापि तस्योक्तत्वादिति भावः । परिगणनप्रत्याख्यानप्रकारं दर्शयति । यदा त्विति । प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमादाह । कटत्वविशिष्टेति । नन्वेवं सर्वेषां कारकत्वाविशेषाद्विनिगमनाविरहेण भावनायामेव सर्वेषामन्वये कटे भीष्मान्वया-भावेनैतज्जन्यबोधोत्तरं कटो भीष्मो नवेति संशयः स्यादत आह । बोधस्त्विति । विशेष्यविशेषणभावेनेति । एवं च कटेभीष्मान्वयेन न तादृशसंशयावकाश इति भावः । नन्वेवं व्युत्पत्तिविरोधोऽत आह । कारकाणामिति । इतीति । अस्योच्यत इति शेषः । ननु पृथक्सर्वेषां कर्मत्वे कृतः कटः सुन्दर इत्यादौ सुन्दरपदाद्द्वितीयापत्तिः । विशेष्यगतकर्मत्वस्य कृताऽभिधानेऽपि विशेषणगतस्य तस्यानभिधानादत आह । तिङ्कृताविति ॥

अनभिहिताधिकारस्य मूलोक्तं प्रत्युदाहरणमयुक्तमित्याह । अत्र वदन्तीत्यादिना । तस्याप्रत्युदाहरणत्वे हेतुमाह । विभक्तिवाच्यतावच्छे-

वाच्यतावच्छेदकरूपेण कर्मादेर्भानम्। अत औपगवश्चित्रगुरिति युक्तं प्रत्युदाहर्तुम्। तत्र च सम्बन्धस्य येन रूपेण षष्ठ्या भानं, तेनैव तद्धितान्तादिभिस्समुदायशक्त्या। एतदधिकाराभावे च घट इत्यादौ षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रातिपदिकार्थपदेन ग्रहणं स्यात्, तद्भिन्नस्यैव च षष्ठीविधायके शेषपदेन ग्रहणं स्यादित्यत्र-त्यसम्बन्धस्य षष्ठीवाच्यत्वेन दृष्टतया प्राप्तां षष्ठीं वारयितुं सः।

---

दकरूपेणेति। उद्भूतकर्मत्वादिशक्तिमत्त्वेन रूपेणेत्यर्थः। शक्तावुद्भूतत्वं च सर्वत्र प्रतीयमानप्रातिपदिकार्थच्छेदेन प्रतीयमानत्वं, तदेव च द्वितीयादिप्रयोजक-मित्यन्यत्र निरूपितम्। नन्वौपगवादेरपि कथं प्रत्युदाहरणत्वं, तत्रापि विभक्ति-वाच्यतावच्छेदकरूपेण संबन्धस्याभानात्षष्ठ्यप्राप्तेरित्यत आह। तत्र चेति। संबन्धस्येति। अपत्यापत्यवद्भावस्य स्वस्वामिभावस्य चेत्यर्थः। तेनैवेति। यथा चित्राणां गवामयमिति वाक्ये षष्ठ्यर्थस्य तस्य संसर्गत्वेन भानं, तथा समासादिवाच्यस्यापि तस्य तेनैव रूपेण भानात्षष्ठ्यापत्तिरिति भावः। न च समासादिवाच्यसंबन्धस्य संसर्गत्वेन भाने कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तो व्याकुप्येत। प्रकृतिजन्यबोधे प्रकारीभूतधर्मस्यैव भावप्रत्ययार्थत्वादिति वाच्यम्। प्रकृतिजन्यबोधीयमुख्यविशेष्यतानिरूपित-विषयताश्रयस्यैव तत्र प्रकारपदार्थत्वेनादोषात्। प्रकारतानिरूपितत्ववत्सां-सर्गिकविषयतानिरूपितत्वस्यापि विशेष्यतायां स्वीकारेण प्रकारतायामिव सांस-र्गिकविषयतायामपि विशेष्यतानिरूपितत्वस्य सत्त्वात्। नन्वत्र संबन्धस्य प्राति-पदिकार्थत्वेनाशेषत्वात्कथं षष्ठीप्राप्तिः। कारकप्रातिपदिकार्थव्यतिरिक्तस्यैव तत्र शेषपदार्थत्वादत आह। एतदधिकाराभावे चेति। दृष्टानामेवेति। प्रवृत्तिनिमित्ततदाश्रयरूपाणामित्यर्थः। एतत्सत्त्वे त्वनेन तत्र षष्ठ्यां वारितायां तस्यापि प्रातिपदिकार्थपदेन ग्रहणमित्यन्यदेतत्। षष्ठीवाच्यत्वेन दृष्टतयेति।

वस्तुतस्तु कटं भीष्ममिति परिगणनफलमुक्त्वा तत्प्रत्याख्यानाय 'अशेषत्वान्नात्र शेषलक्षणा षष्ठी,अन्यानभिहितकर्मादीनामभावाच्च नान्या इत्याशङ्क्य न केवला प्रकृतिरिति समयः कृतः न चान्यो' त्पद्यमाना एतमभिसंबन्धमुत्सहते वक्तुमिति कृत्वा द्वितीया-इत्युक्तं भाष्ये। तेनौपगवादावपि षष्ठी वारितैवेति तयोरप्यप्रत्यु-दाहरणत्वमेव। तदुक्तम् अनेकमित्यत्र भाष्येऽपि। चित्रगुरित्यत्र षष्ठ्यर्थस्य नियमेन भानात् षष्ठी प्राप्नोतीत्याशङ्क्य 'अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति प्रथमा' इत्युक्तम्। अनेनाशेषत्वरूपं षष्ठ्यप्राप्तिबीजमुक्तम्। अन्तर्भूत इत्यनेन चित्र-ग्वादौ सम्बन्धस्यैव प्रवृत्तिनिमित्तत्वेन प्रातिपदिकार्थपदेन ग्रहण-

---

उपगोरपत्यं चित्रा गावो यस्येति वाक्ये इति भावः। इदं चानभिहिताधिकार-स्यौपगवश्चित्रगुरिति प्रयोजनप्रतिपादनपरानाभिहित इति सूत्रस्थभाष्याशयवर्णन-परम्। अन्ततोऽनयोरपि न प्रत्युदाहरणत्वमिति तत्रैव सूचितमित्याह। वस्तु-तस्त्विति। परिगणनफलमिति। तदभावे कटपदोत्तरद्वितीयया कर्मत्वस्या-भिधानाद्भीष्मपदात्सा न स्यादिति भावः। अत्रेति। भीष्मादावित्यर्थः। नान्या इति। द्वितीयादय इत्यर्थः। नचेति। न हीत्यर्थः। अन्या= प्रथमा। एतमभिसंबन्धमिति। इतरसंबन्धानवच्छिन्नविशेष्यविशेषणभावरूपं यत्सामानाधिकरण्यं तद्रूपं संबन्धमित्यर्थः। तेन=उक्तभाष्येण। षष्ठी वारितैवेति। तद्वदत्रापि संबन्धस्याशेषत्वात्षष्ठी वारितप्रायैवेत्यर्थः। ननूक्त-दिशा तस्य शेषत्वमेवेति कथं तद्वारणमित्याशङ्क्य मानान्तरेण तस्याशेषत्वं द्रढयति। तदुक्तमित्यादिना। अनेन=प्रातिपदिकार्थः संपन्न इत्यनेन। अप्राप्तिबीजमिति। कारकप्रातिपदिकार्थव्यतिरिक्तस्यैव शेषपदार्थत्वादिति भावः। ग्रहणयोग्यतेति। नचानभिहिताधिकारस्यौपगवश्चित्रगुरित्यादि-

योग्यतोक्तेति बोद्धव्यम् ॥

परे तु शत्य इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रयादेर्भानम्। अत एव न तत्रेतरकारकाणामन्वयः। इदश्च कर्तृ-

---

प्रयोजनप्रतिपादनपरभाष्येण षष्ठ्यवाच्यत्वेन दृष्टानामेव प्रवृत्तिनिमित्ततदाश्रयाणां प्रातिपदिकार्थपदेन ग्रहणमित्यर्थलाभादिदमयुक्तमिति वाच्यम्। अत्र संबन्धस्य प्रातिपदिकार्थतायाः कण्ठत उक्तत्वेनैतद्विरोधात्तस्यैकदेश्युक्तित्वमित्याशयात्। ध्वनितं च तस्य तत्त्वं 'वाक्येऽस्य संबन्धस्य षष्ठ्यर्थत्वं दृष्ट्वाऽत्राप्यप्रातिपदिकार्थत्वमित्यभिमानादि'ति तत्रत्योद्योतग्रन्थेनेति बोध्यम्। घट इत्यादौ षष्ठ्यापत्तिस्तु न। समवायस्य समवायिभिः संमूर्छितावभासाद्भेदानवभासेन तस्य मुख्यसंबन्धत्वाभावात्। एवं संयोगोऽपि न षष्ठीवाच्यः। पदार्थयोजनामात्रहेतोरेव तस्य तदर्थत्वात्। संयोगं पश्येत्यादिव्यवहारदर्शनात्तस्य स्वतः पदार्थत्वेन तत्त्वाभावादिति बोध्यम्। इतीति। अस्य वदन्तीति पूर्वेणान्वयः ॥

ननु शत्य इत्यादेरेव कुतो न प्रत्युदाहरणत्वम्। तस्य शतेन क्रीत इत्यतोऽविशिष्टत्वेन द्वितीयाप्रयोजकक्रियान्वयितावच्छेदकोद्भूतकर्मत्वादिशक्तिमत्त्वेन कर्मत्वस्योपस्थितत्वात्। एवं प्राप्तानन्द इत्यादिसमासेऽप्यानन्दकर्तृकप्राप्तिकर्मेति बोधात्तेन रूपेण कर्मत्वस्योपस्थितत्वादित्याशङ्क्य तत्र स्वसिद्धान्तमाह। परे त्विति। साध्यत्वेन न क्रयादेर्भानमिति। तद्धितान्तात्क्रयणक्रियाया उपस्थितावपि न तस्य कारकान्वययोग्यता। धातुजन्योपस्थितिविषयस्यैव तत्त्वात्। साध्यत्वेनोपस्थितक्रियान्वयितावच्छेदकं यत्कर्मत्वादिशक्तिमत्त्वं तदेव च द्वितीयादिप्रयोजकमिति नात्र द्वितीयाप्रसक्तिरिति भावः। अत एवेति। तद्धिताद्युपस्थाप्यक्रियाया उक्तरूपसाध्यत्वेनाभानादेवेत्यर्थः। तत्रेति। तद्धितान्तोपस्थाप्यक्रयणक्रियायामित्यर्थः। इतरकारकाणामिति।

कर्मणोरित्यत्र निरूपयिष्यते। एवं प्राप्तानन्द इत्यादौ यत्कर्मक-प्राप्तिकर्त्ताऽऽनन्द इति विग्रहतो बोधे समासतश्चानन्दकर्तृक-प्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावः कल्प्यः स्याद्, वृत्तिविग्रहयोः समानार्थत्वभङ्गश्च। किं च तथा सति बहु-व्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्यस्य हानिः। किं चैवं प्राप्ता भार्या यं सः प्राप्तभार्य इत्यादौ पुंवत्त्वानापत्तिः। पूर्वोत्तर-पदयोरेकविशेष्यकप्रतीतिजनकत्वरूपवक्ष्यमाणसामानाधिकरण्या-भावात्। तस्मात् कालाः परिमाणिनेत्यादिसूत्रभाष्योक्तस्य वृत्ति-विग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः प्राप्तिकर्त्रानन्द-कर्मेत्येव बोधः। विशेष्ये तन्निरूपकत्वबाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानं खर्गी ध्वस्त इतिवत्। शाब्दबोधस्तु विशिष्टे

---

शत्यो देवदत्तेनेत्येवंरीत्येति भावः। समासार्थकर्मत्वस्य सुतरां क्रियान्वया-भावेन न तत्रापि द्वितीयाप्रसक्तिरित्याशयेन तत्र प्राचीनोक्तं बोधप्रकारं दूषयति। एवमिति। ननु त्रिदशा इत्यादौ शब्दशक्तिस्वभावात्सुजर्थान्तर्भावेण वृत्ति-स्वीकारवदत्र तद्व्यत्यासेन तत्कल्पने न बाधकमत आह। वृत्तिविग्रहयोरिति। इष्टापत्तावाह। किञ्चेति। पुंवत्त्वानापत्तिरिति। अलौकिकप्रक्रियावाक्ये समासशास्त्रप्रवृत्तये एकार्थीभावरूपसामर्थ्यकल्पनायां तत्र तन्मूलके विशेष्य-विशेषणभावव्यत्यासे पुंवत्त्वानापत्तिः। किंच तथा सति सामानाधिकरण्याभावेन समासशास्त्रस्यैवाप्रवृत्त्यापत्तिरित्यपि बोध्यम्। ननु कर्मत्वादेः क्रियानिरूपितत्वा-दानन्दनिरूपितत्वं तत्र बाधितमत आह। विशेष्ये इति। तन्निरूपकत्वस्य= कर्मतानिरूपकत्वस्य। तत्पर्यवसानमिति। सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामत इति न्यायेनेति भावः। नन्वेवं कथं तथा बोधोऽत आह। शाब्दबोधस्त्विति। विशिष्टे=प्राप्तिरूपविशेषणविशिष्टे।

तदारोपेणोपपाद्यः। एवञ्चात्र शब्दात्कर्मादेः क्रियाजनकत्वेन विभक्तिवाच्यतावच्छेदकोद्भूतशक्तिमत्त्वेन च न भानम्, अतो न विभक्तिप्रसक्तिः। अत एव गतिकारकोपपदादिति सूत्रे 'गतिकारकोपपदादिति किमर्थं परमं कारकं परमकारकमिति प्रतीकमुपादाय यथा संप्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति, तथा कारकशब्दोऽपीति। कृदन्ता हि क्रियायोग्यताविशिष्ट द्रव्यवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्ति' इति कैयटेनोक्तम्। अत एव तस्य कर्मत्वस्य न क्रियान्वयनियमः। अन्यथा कारकशक्तेः क्रिया-

---

तदारोपेण = कर्मतानिरूपकत्वारोपेण। एवं चेति। तत्र तथा बोधे चेत्यर्थः। अत्र = प्राप्तानन्द इत्यादौ। तत्र द्वितीये मानमाह। अत एवेति। उक्तद्वितीयरूपेण भानाभावादेवेत्यर्थः। कारकशब्दोऽपीति। एवं च तद्विशेषणमपि परमशब्दः कारकवाची न भवतीति प्रत्युदाहरणमिति भावः। तदुक्तं 'नह्यकारकस्य कारकशब्देनाभिधानं, ततश्च तद्विशेषणस्यापि कारकत्वमस्त्येव। यथा कटं करोति भीष्ममित्यादावित्याशयेन 'गतिकारकादित्युच्यमानेऽप्यत्र प्राप्नोति। एतदपि हि कारक'मित्येकदेशिना शङ्किते 'नैतत्कारकं, कारकविशेषणमेतदि'त्यादिना भगवता समाहितम्। तद्भाष्यस्य कैयटोपदर्शितमाशयमाह। कृदन्ता हीत्यादिना। पाकक्रियाया अकरणदशायामपि पाचक इत्यादिव्यवहारदर्शनादाह। योग्यताविशिष्टेति। न तूद्भूतामिति। एवं च कारकशब्दवाच्यस्यानुद्भूतशक्तिकस्यैतद्विशेषणं न तु कटं भीष्ममित्यादाविवोद्भूतशक्तिकस्येति नेदं कृत्प्रकृत्यर्थकारकमिति भवत्येव प्रत्युदाहरणमिति तदाशयः। अत एवेति। समासादितः उक्तरूपेण कर्मत्वादेरभानादेवेत्यर्थः। तस्य कर्मत्वस्येति। प्राप्तिकर्त्रानन्दकर्मत्वस्येत्यर्थः। तेन तादृशकर्मत्वविशिष्टे क्रियान्तरनिरूपितकर्मत्वशक्तेः प्राप्तानन्दं पश्येत्यादौ विशेषणत्वेन बोधे नियमो-

विशेषणत्वानियमेन कर्मादिप्राधान्यानापत्तिः । एवं कर्मादिपदैरिव पक्वादिपदैरपि न विभक्तिप्रयोजकरूपेण कर्मादीनां भानम् । तिङ्कृत्तद्धितसमासैरभिधाने इत्यस्यायमर्थः । यत्तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिः । अत्रैवानभिहिते इति तात्पर्यग्राहकम् । ध्वनितश्चेदं सुप आत्मन इति सूत्रे भाष्ये । तत्र हि इष्टः पुत्र इष्यते पुत्र इत्यर्थे क्यचमाशङ्क्य 'स्वशब्देनोक्तत्वान्न' इति समाहितम् । इष्टशब्दसामानाधिकरण्यात्पुत्रार्थे कर्मत्वावगतावपि पुत्र इति सुबन्तं न कर्मवाचीति न ततः क्यजिति तद्भावः । स्वं—कर्मत्वं तद्वाचकशब्देन पुत्रगतं कर्मत्वमुक्तं, न तु पुत्रशब्दस्य तत्र वृत्तिरित्यक्षरार्थः । सुप आत्मन इति सूत्रस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थ इति तदाशयः । वस्तुतः कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे 'इह भवन्त' इत्यादिना समा-

---

ऽस्त्येवेति सूचितम् । प्रसङ्गादाह । **एवमिति** । **विभक्तिप्रयोजकरूपेणेति** । उद्भूतकर्मत्वादिशक्तिमत्त्वेन रूपेणेत्यर्थः । नन्वेवं परिगणनाद्यसङ्गतिरत आह । **तिङ्कृदिति** । **अत्रैवेति** । तिङादिभिरभिधाने विभक्तिप्रयोजकोद्भूतकर्मत्वादिशक्तिमत्त्वेन प्रातिपदिकात्कर्मादेर्न भानमित्यत्रैवेत्यर्थः । तिङादिभिरभिधाने प्रातिपदिकात्तत्तच्छक्त्यावेशेन कर्मादेरभानमित्यत्र मानमाह । **ध्वनितं चेदमिति** । तदाशयमाह । **इष्टशब्देति** । **न कर्मवाचीति** । तदर्थकर्मत्वस्य साक्षात्कर्मवाचिना क्तेनाभिधानात्प्रातिपदिकार्थमात्रपर एव पुत्रशब्दो, नतु कर्मत्वविशिष्टवाचीति भावः । एतेन निरुक्तार्थो ध्वनित इति बोध्यम् । तस्य वाच्यार्थमाह । **स्वमिति** । **शब्देनेति** । क्तेनेत्यर्थः । ननु यथाकथंचिदपि पुत्रशब्दार्थे कर्मत्वावगतेः सत्त्वेन कथं क्यचोऽप्रवृत्तिरित्यत आह । **सुप इति** । ननु कर्मत्वस्य विशेषणत्वे तथा वारणेऽप्युपलक्षणत्वे दोष एवेत्याशङ्क्य तत्र

ध्यन्तरमुक्तम्। वाक्ये फलं विशेष्यं, वृत्तौ व्यापार इति समाना र्थत्वाभावात्तत्रार्थे वृत्तिर्नेतीत्याहुः॥

प्राचीनानुसारेणोक्तस्य प्रायेणेत्यस्य फलमाह—क्वचिदिति। परे त्वत्र तुमुनः साधुत्वायेष्यते इत्यध्याहार आवश्यकः। अन्यथा क्रियार्थक्रियोपपदत्वाभावाच्छकादियोगाभावाच्च स दुर्लभः स्यात्। अध्याहारे तु इच्छार्थेषु तुमुनिति सुलभः। विषवृक्षोऽपि संवर्द्ध्य छेत्तुमिष्यते इति यत् तदसांप्रतम्—अन्याय्यमित्यर्थः। एवञ्चाद्ध्या-हृततिङाऽभिधानान्न द्वितीया। तादृशेच्छाया अन्याय्यत्वञ्च तद्वि-षयस्यान्याय्यत्वेन। एवं 'अमुं नारद इत्यबोधि सः' इत्यादौ 'नारद इति' इति श्रीकृष्णीयज्ञानाकारानुकरणम्। नारद इत्ये-तच्छब्दाभिलप्यमानाकारो बोध इत्यर्थ इति प्रथमान्तस्याप्राति-

---

भाष्योक्तं समाध्यन्तरमाह। वाक्ये इति। समानार्थत्वाभावादिति। वृत्तिविग्रहयोस्समानार्थत्वाभावादित्यर्थः॥

प्राचीनानुसारेणेति। तिङ्कृत्तद्धितसमासैरिति न परिगणनं, किन्तू-दाहरणमात्रमिति तदाशयः। परिगणनं कर्तव्यं, तिङ्कृत्तद्धितसमासैः परि-संख्यानमिति भाष्यवार्तिकाभ्यां परिगणनत्वस्य स्पष्टमुक्ततया तस्योदाहरण-मात्रपरत्वमयुक्तमित्याशयेन तत्र स्वसिद्धान्तमाह। परे त्विति। अन्यथा = अनध्याहारे। एतर्हि संप्रतीदानीमधुना सांप्रतं तथेत्यमरकोशेन सांप्रतमित्यस्ये-दानीमर्थकतायाा उक्तत्वेऽपि निपातानामनेकार्थत्वादाह। अन्याय्यमित्यर्थ इति। न द्वितीयेति। एवं च प्रायेणेत्येतदनर्थकमिति भावः। नन्विच्छाया न स्वतोऽन्याय्यत्वमत आह। तादृशेति। तद्विषयस्येति। छेदनस्येत्यर्थः। अन्यदपि प्राचोक्तं प्रायग्रहणफलं दूषयति। एवमिति। अनुकरणमिति। अनुवाद इत्यर्थः। बोध इति। श्रीकृष्णसमवेतं ज्ञानमित्यर्थः। प्रथमा-

पदिकत्वान्न तत्र द्वितीया । अत एव 'अधिहरि' इत्यादौ समासः । तद्वचनसामर्थ्येन ह्यस्य परिगणनत्वकल्पनैव युक्ता । अत एव अभ्र आँ अप इत्यादौ सप्तमी । किं च निपातेनाभिधानेऽपि प्रातिपदिकादुद्भूततत्तच्छक्तिमत्त्वेनैव भानमिति तत्र विभक्तिः सुलभा । शब्दशक्तिस्वभावादस्यैवार्थस्य द्योतकोऽधिर्निपातः । अत एव परिगणनप्रत्याख्यानेऽपि न दोष इत्याहुः ॥

तथायुक्तम् । तत्त्वञ्च समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयो-

---

न्तस्य = श्रीकृष्णीयज्ञानाकाराभिलापकस्य नारद इत्यस्य । अत एवेति । परिगणनादेवेत्यर्थः । समास इति । अन्यथा यद्विभक्त्यर्थवाचकाव्ययेन सुबन्तस्य समासस्तद्विभक्त्यैव यत्सुबन्तं तस्यैव ग्रहणादधिशब्देनाधिकरणत्वस्योक्तत्वाद्धरिशब्दात्सप्तम्यभावे स न स्यादिति भावः । ननु तत्र वचनसामर्थ्याद्विभक्तिरित्युक्तमेवेत्यत आह । तद्वचनेति । युक्तेति । तत्सामर्थ्यान्निपातेनाभिधानेऽपि विभक्तिरित्यर्थकल्पनापेक्षया तिङादिभिरित्यस्य परिगणनत्वकल्पनाद्वारा तत्र विभक्तिसाधनमेव युक्तमिति भावः । एवं कल्पने फलान्तरमप्याह । अत एवेति । सप्तमीति । अन्यथा तत्र समासाभावेन वचनसामर्थ्याद्विभक्तिरिति वक्तुमशक्यतया सा न स्यादिति भावः । सिद्धान्तभूते परिगणनप्रत्याख्यानपक्षेऽधिहरीत्यादिसिद्धिप्रकारं दर्शयति । किञ्चेति । प्रातिपदिकादिति । हर्यादिरूपादित्यर्थः । तत्तच्छक्तीति । अधिकरणत्वादिशक्तीत्यर्थः । तत्र = अधिहरीत्यादौ । अस्यैवार्थस्य = समभिव्याहृतप्रातिपदिकस्योद्भूततत्तच्छक्तिमत्त्वेनैव बोधकत्वमित्यस्यैव । द्योतकः = तात्पर्यग्राहकः ॥

तत्त्वं चेति । तथा युक्तत्वं चेत्यर्थः । अनीप्सितं कर्म द्विविधम् । द्वेष्यमुदासीनं चेति । तत्र द्वेष्यस्य मूलोक्तमुदाहरणं दूषयन्मुख्यं तदुदाहरण-

ज्यतद्धात्वर्थफलाश्रयत्वरूपम्। पराधीनतया विषं भुञ्जानेऽपि भुजिक्रियाफलाश्रयत्वेनोद्देश्यत्वात्पूर्वसूत्रेणैव सिद्धम्। तदुक्तं भाष्ये 'आतश्च विषमनीप्सितं यत्तद्भक्षयति' इति। तस्मात् चोरान् पश्यतीति द्वेष्योदाहरणम्। विषयेन्द्रियसंबन्धाद्दृश्यमाना अपि ते न दर्शनोद्देश्याः, अपि तु अनिष्टदर्शना एवेति स्पष्टं भाष्यकैयटयोः। एवञ्च तत्र पूर्वेणाप्राप्तौ वचनम्। अनीप्सितम्—अनुद्देश्यम्। तच्च द्वेष्यम् उदासीनञ्च। तृणमिति। यथा स्पृश्यमानस्य गङ्गादेः स्पर्शादिजन्यसंयोगादिफलाधारत्वं तथैव तृणादेरपीति भावः। अनीप्सितपदाभावे ईप्सितस्य प्रकर्षहीनस्याप्यनेन संज्ञाप्राप्तौ वारणार्थानामित्यनवकाशं

---

माह। पराधीनतयेत्यादि। आतश्चेति। इतोऽपि हेतोरित्यर्थः। तेषां द्वेष्यत्वमाह। अनिष्टदर्शना एवेति। अप्राप्ताविति। फलाश्रयत्वेन कर्तुरिच्छाविषयत्वाभावादिति भावः। तृणादेरपीति। औदासीन्येनानुद्देश्यस्यापीत्यर्थः। नन्वनीप्सितग्रहणं व्यर्थं, तदभावेऽप्यारम्भसामर्थ्यात्तस्यैव संज्ञासिद्धेरित्यत आह। अनीप्सितेति। प्रकर्षहीनस्यापीति। अपिनाऽनीप्सितसंग्रहः। तदभावे एतत्सूत्रवैयर्थ्यान्यथानुपपत्त्या पूर्वसूत्रापेक्षया किंचिदंशत्यागस्यात्रावश्यकत्वेऽपि विनिगमनाविरहादनीप्सितस्येव प्रकर्षहीनस्याप्यनेन कर्मत्वापत्तिः। एवं चेप्सिततमस्य पूर्वेणेप्सितस्यानेन च कर्मत्वप्राप्तौ वारणार्थानामित्यनवकाशं सद्बाध्यसामान्यचिन्तया द्वयोरपि बाधकं स्यात्। ततश्चाग्नेर्माणवकं वारयतीत्यादौ माणवकशब्दादपि पञ्चम्यापत्तिः। तत्सत्त्वे तु पूर्वसूत्रापेक्षयोद्देश्यत्वांशे वैलक्षण्यस्यात्र सत्त्वेन सामर्थ्याभावात्तदतिरिक्तयावदंशविशिष्टस्यैव तथायुक्तपदेन ग्रहणस्य न्याय्यतया अग्न्यादीनां तदभावान्न दोष इति भावः। एतेनेदं चिन्त्यम्। तथायुक्तमित्यस्य वारणार्थानामित्यनेनापवादत्वाद्तत्वाद्बाधेऽपि कर्तुरित्यनेन परत्वात्कर्मत्वोपपत्तेः। न हि तस्याप्यपवादः। प्रकर्ष-

स्यात् । तथायुक्तमिति किम् । विषेणौदनं भुङ्क्ते इत्यादौ करणत्वमात्रविवक्षायां विषस्य मा भूत् । प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य च मा भूत् । तत्सत्त्वे तु प्रकृतधात्वर्थफलाश्रयत्वरूपतत्त्वाभावान्न दोषः ॥

अपादानादिविशेषैरिति । तत्तद्रूपेणाभासमानमित्यर्थः । अकथितशब्दोऽत्रासंकीर्तितपरो नाप्रधानपर इति भावः । एवञ्च पूर्व-

हीने तदप्राप्तेरित्याचार्योक्तमपास्तम् । करणत्वमात्रेति । विषस्य स्वव्यापारजन्यत्वसंबन्धेन व्यापार एवान्वयविवक्षायामित्यर्थः । मात्रपदेन फलाश्रयत्वव्यवच्छेदः । नन्वनीप्सितमिति पर्युदासेन प्रकृतधात्वर्थव्यापारप्रयोज्यफलाश्रयत्वेन विवक्षितत्वरूपसादृश्यग्रहणान्नात्रातिप्रसङ्ग इत्यत आह । प्रयागादिति । अत्र प्रयागस्य प्रकृतधात्वर्थव्यापारप्रयोज्यविभागरूपफलाश्रयत्वेन विवक्षितत्वात्तस्यापि कर्मत्वापत्तिरिति भावः । तत्सत्त्वे त्विति । तथायुक्तमित्यस्योपादाने प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यतद्धात्वर्थफलाश्रयस्यैवानीप्सितस्यानेन कर्मत्वलाभात्प्रयागस्य तत्त्वाभावान्न कर्मत्वप्रसक्तिरिति भावः । पर्युदासेन तु नेदृशार्थविशेषलाभः । तमब्ग्रहणविरहितादीप्सितशब्दात्प्रकृतधात्वर्थव्यापारप्रयोज्यफलाश्रयत्वमात्रस्यैव लाभेन तेनैव धर्मेण सादृश्यस्य ग्रहणलाभात् ॥

मूलस्य यथाश्रुतार्थपरत्वेऽपादानत्वादीनां यत्र प्रसक्तिपूर्वकमविवक्षा, तत्रैव स्यान्न तु सर्वथा तदप्राप्ताविर्त्याशयेन तदर्थमाह । तत्तद्रूपेणेति । अपादानत्वादिविशेषरूपेणेत्यर्थः । असङ्कीर्तितपर इति । भाष्ये 'केनाकथितम्? अपादानादिभिर्विशेषकथाभिरिति प्रश्नप्रतिवचनाभ्यामत्राकथितशब्दोऽसङ्कीर्तितपरो, नाप्रधानपरो रूढ इति भावः । नहि यथा गच्छतीत्युक्ते केनेति प्रश्ने रथेनेति प्रतिवचनं, तथा गौरित्यादिषु रूढिशब्देषु व्युत्पादनाय क्रियाया उपादानेऽपि प्रश्नप्रतिवचने भवत इति कैयटः । नाप्रधानपर इति ।

**विधिविषयप्रसक्तिपूर्वकं तदविवक्षायां, सर्वथा पूर्वविधेरप्रसक्तौ चैतत्प्रवृत्तिरिति बोद्धयम्। अपादानत्वादिविवक्षायां पञ्चम्याद्येव। केन रूपेण विवक्षेति चेत्—कर्मत्वेनेति गृहाण। कारकत्वव्याप्य-संज्ञानां स्वबोद्धयार्थे कर्मत्वादिशक्तिमत्त्वबोधकत्वात्। बोधोऽपि तथैव। तत्तच्छास्त्राभावे सर्वत्र षष्ठीप्राप्त्या सर्वासां तदपवादत्वेन तदपवादत्वमात्रेण सम्बन्धार्थकत्वं न युक्तम्। अत एव कर्मणि द्वितीयेत्यस्य न वैरूप्यम्। अत एवैतत्सूत्रशेषे भाष्येऽनेनैव सिद्धे आद्यसूत्रद्वयवैयर्थ्यमाशङ्क्येप्सितमात्रस्याप्यनेन संज्ञायां वार-**

---

रूढ इत्यर्थः। तथा सति दुह्यादिव्यतिरिक्तविषये सावकाशमपादानत्वं बाधित्वा गोर्दोग्धि पय इत्यादाववधित्वविवक्षायामपि परत्वादनेन कर्मत्वापत्तिरिति भावः। **एतत्प्रवृत्तिरिति**। उभयत्राप्यपादानत्वादिविशेषरूपेणापादानादेर-भानादिति भावः। **केन रूपेणेति**। अपादानादिभिरविवक्षितस्य केन रूपेण विवक्षेत्यर्थः। कर्मत्वेन विवक्षायां बीजमाह। **व्याप्यसंज्ञानामिति**। कर्तृकर्मादिसंज्ञानामित्यर्थः। **तथैवेति**। कर्मत्वादिशक्तिमत्त्वेनैवेत्यर्थः। अस्य षष्ठ्यपवादत्वेनैतद्विहितकर्मसंज्ञाप्रयोज्यद्वितीयायाः संबन्धमात्रमर्थ इति दीक्षिताद्युक्तिं खण्डयति। **तत्तच्छास्त्रेति**। **अत एवेति**। कर्मत्वादिश-क्तिमत्त्वेन बोधकत्वादेवेत्यर्थः। **न वैरूप्यमिति**। अन्यथैतदेकवाक्यता-पन्नकर्मणि द्वितीयेति सूत्रविहिताद्वितीयायाः संबन्धार्थकत्वमन्यस्याः कर्मत्वा-दिशक्तिमद्बोधकत्वमिति च वैरूप्यं स्यादिति भावः। अत्रार्थे भाष्यसम्मति-मप्याह। **अत एवेति**। **सूत्रद्वयेति**। कर्तुरीप्सितेति तथायुक्तमिति च सूत्रद्वयेत्यर्थः। **वैयर्थ्यमाशङ्क्येति**। नचात्र परिगणनस्य सत्त्वात्पूर्वसूत्रद्वय-विषये सर्वत्र कथमनेन सिद्धिरिति वाच्यम्। परिगणनं च न करिष्यत इत्येव तद्भाष्याशयात्। **ईप्सितमात्रस्यापीति**। अपिना इप्सिततमानीप्सितयोः

णार्थानामिति सूत्रस्यानवकाशत्वे माणवकादपि पञ्चमी स्यादिति ईप्सिततममित्याद्यारब्धव्यमित्युत्तरितम् । एतेन दुहादीनां व्यापारद्वयार्थकत्वे कर्तुरिति कर्मत्वे तत्त्वेनाविवक्षायामप्यनेन कर्मत्वमिति परास्तम् । वदतो व्याघातात् । अत एव कर्तुरित्यनेन सिद्धिमाश्रित्यास्य वैयर्थ्यं भाष्ये नाशङ्कितम् । कारकमिति । क्रियाजनकमित्यर्थः । नन्वेवं नटस्य शृणोतीत्यादावतिप्रसङ्गः । सर्वथा तत्र तदप्राप्तेः । गीतद्वारा च तस्य क्रियाजनकत्वम् । न च तस्य कर्म-

---

संग्रहः । ईप्सिततमानीप्सितयोरिवेप्सितमात्रस्याप्यनेन कर्मसंज्ञायां प्राप्तायां वारणार्थनामिति सूत्रमनवकाशं सदस्या बाधकं स्यात् । तथाच माणवकादपि पञ्चमी स्यात् । ईप्सिततमस्यापीप्सितत्वानपायेन तस्यापादानत्वादिति भावः । इत्याद्यारब्धव्यमिति । आदिना तथायुक्तमित्यस्य संग्रहः । नन्वीप्सिततमे वारणार्थानामित्येतद्बाधनाय कर्तुरित्यस्यावश्यकत्वेऽप्यनीप्सितेऽनेनैव सिद्धे किं तेनेति चेन्न । नटस्य शृणोतीत्यादावतिप्रसङ्गवारणाय परिगणनस्यावश्यकत्वेन परिगणितातिरिक्तविषयेऽनीप्सिते कर्मत्वार्थं तथायुक्तमित्यस्याप्यावश्यकत्वमित्याशयात् । उत्तरितमिति । एतत्सूत्रविषयद्वितीयायाः संबन्धार्थकत्वे कर्मत्वेन बोधाय तयोरावश्यकत्वेन प्रश्नोत्तरयोरसंगत्यापत्तिरिति भावः । दीक्षिताद्युक्तिं खण्डयति । एतेनेति । कर्मत्वे इति । अत्र कर्मत्वमिति पाठः । सप्तम्यन्तपाठेऽनन्वयात् । चिदस्थिमालाकारोऽप्यमुमेवाभिप्रैति । तत्त्वेनेति । कर्मत्वेनेत्यर्थः । एतेनेत्यस्यार्थमाह । वदत इति । कर्मत्वेनाविवक्षायां कर्मत्वमित्यस्य माता मे वन्ध्येति वद्व्याहतत्वादित्यर्थः । अत एवेति । दुहादीनां नियमेन व्यापारद्वयार्थत्वाभावेन यदा गोनिष्ठविभागानुकूलव्यापार एव धात्वर्थस्तदाऽपादानत्वाविवक्षायामन्येनासिद्धकर्मसंज्ञाविधानार्थमस्यावश्यकत्वादेवेत्यर्थः । एवमिति । सर्वथा पूर्वविधेरप्राप्तावप्येतत्सूत्रप्रवृत्त्यङ्गीकार इत्यर्थः । गीतद्वारेति । नटं विना गीतश्रवणायोगात्तस्य

युक्त्वाभावः। तदंशस्यापि परिगणनलभ्यत्वात्। नटस्यापादानत्वविवक्षा तु न कदापि। 'आख्यात' इति सूत्रे उपयोगग्रहणेनानुपयोगे आख्यातुरपादानत्वाविवक्षाया बोधनात्; अतः परिगणनमाह— दुह्याजिति। कर्मयुक्त्वं धात्वर्थव्यापारात्प्राक् तदनन्तरं वा तत्सम्बद्धत्वम्। तत्र ब्रुविशास्यतिरिक्ते धात्वर्थव्यापारात्प्रागेव तत्सम्बद्धत्वं, तद्विषये तु तदनन्तरं तत्संबद्धत्वं बोद्धव्यम्। तत्र सति

---

तद्द्वारा क्रियाजनकत्वमिति भावः। नच कुलालपितुरिवान्यथासिद्ध्या न तस्य जनकत्वमिति भ्रमितव्यम्। द्वारेण द्वारिणोऽन्यथासिद्धेरभावात्। यथा कुलालपितरं विनापि तत्पुत्रेण कुलालेन घटकर्मकक्रियानिर्वृत्तिस्तथात्र नटं विना गीतश्रवणक्रियानिर्वृत्तेरभावात्। अत एवाख्यातोपयोग इति सूत्रे उपयोगग्रहणं चरितार्थम्। अन्यथा अकारकत्वादेवापादानत्वव्यावृत्तौ तद्वैयर्थ्यं स्पष्टमेव। स्पष्टं चेदमाख्यातोपयोग इति सूत्रे भाष्ये। नटाभिसरन्तं शब्दं गृह्णातीत्यर्थात्प्राप्तापादानत्वाविवक्षयैवात्र कर्मत्वप्राप्तिरिति प्राचोक्तं तु न युक्तमित्याह। नटस्येति। न कदापीति। क्रियान्तरमध्याहृत्य तदादायापीत्यर्थः। तत्संबद्धत्वमिति। कर्तुरिति सूत्रविहितकर्मसंबद्धत्वमित्यर्थः। तद्विषये = ब्रुविशासिविषये। तत्र धात्वर्थव्यापारात्प्राक् कर्मसंबन्धस्यासंभवादिति भावः। अत एव प्रकृतसूत्रे भाष्ये 'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ। ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविनेत्युक्तम्। अत्रोपयोगपदेन मुख्यं कर्मोच्यते। दुह्यादीनां कर्मणः पयसो निमित्ततया यत्संबन्धि, तदेवाकीर्तितमत्र कविना पाणिनिना व्यवहृतमित्यर्थः। अत्र निमित्तपदोपादानेन तद्विषये धात्वर्थव्यापारात्प्राक् तत्संबद्धत्वमित्युक्तं भवति। उत्तरार्धे गुणशब्देन साधनमुच्यते। तस्य क्रियानिरूपितशाब्दगुणत्वस्य सत्त्वात्। एवं च ब्रुविशास्योर्गुणेन कर्मणा धर्मादिकेन यत्सचते, संबध्यते,

संभवे प्राक् तत्संबद्धत्वमेव ग्राह्यम् । एतेन स्थाल्यादेरपि तद्व्यापारादनन्तरं पयःसंबद्धत्वेन कर्मत्वं तेषां दुर्वारमित्यपास्तम् । तेन गां पयो दोग्धि स्थाल्यामित्यादौ स्थाल्यादेरधिकरणत्वाविवक्षायामपि नानेन कर्मत्वम् । एवञ्चापादानादीत्यादिशब्देनापादानसंप्रदानाधिकरणान्येव । करणन्तु न गृह्यते । हस्तादेः करणस्य पयआदिकर्मयुक्तत्वाभावात् । यद्यपि—गां दोग्धीत्यादौ गौः पयस्त्यजति, गवा पयस्त्याजयतीत्याद्यर्थप्रतीत्या कर्तुरीप्सिततममित्येव सिद्धम् । प्रधान-

---

तदित्यर्थः । धात्वर्थव्यापारानन्तरमिति शेषः । अत एव तयोः पृथङ्निर्देशः, तत्र निमित्तपदानुपादानं च संगच्छत इति बोध्यम् । स्पष्टं चेदमुद्योते । नन्वैकरूप्याय सर्वत्र तथैव ग्रहणं कुतो नेत्यत आह । तत्रेति । एतेन = सति संभवे प्राक्संबद्धत्वस्यैव ग्रहणेन । तत्फलमाह । तेनेति । नानेन कर्मत्वमिति । धात्वर्थव्यापारानन्तरं कर्मसंबन्धेऽपि ततः पूर्वं तदभावादिति भावः । एवं चेति । दुह्यादिकर्मसंबद्धस्यैवाकथितस्यानेन कर्मत्वविधाने चेत्यर्थः । अस्य दीक्षिताद्युक्तदिशा कर्तुरित्यादिना गतार्थत्वमाशङ्क्यावश्यकतां दर्शयति । यद्यपीत्यादिना । अर्थप्रतीत्येति । तथा च तदनुरोधेन दुहेरन्तःस्थितद्रवद्रव्यविभागानुकूलव्यापारानुकूलव्यापारार्थकताया अवश्यमभ्युपेयतया प्रधानीभूतप्रयोजकव्यापारजन्यफलाश्रयत्वेन गोरप्रधानप्रयोज्यव्यापारजन्यफलाश्रयत्वेन पयसश्च कर्तुरित्यनेनैव कर्मत्वसिद्धिरिति भावः । गोर्विभागाश्रयत्वेन तु न कर्मत्वं, पयोनिष्ठविभागीयसंबन्धस्यैव फलतावच्छेदकत्वात् । तत्त्वेनानुद्देश्यत्वाच्चेति बोध्यम् । नन्वेवमपि गौर्दुह्यते पय इत्यादौ कर्मणि लकारादिव्यवस्थार्थं तदावश्यकमत आह । प्रधानकर्मत्वं चेति । चो भिन्नक्रमः । सिद्धिरित्यस्यानन्तरं द्रष्टव्यः । प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणामिति प्रधाने कर्मणि लादिसिद्ध्या नानुपपत्तिरिति भावः । अप्रधाने दुहादीनामिति तु

कर्मत्वञ्च गवादीनामिति तत्रैव लादिसिद्धिः। प्रधानकर्मत्वञ्च कर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानव्यापारविशेषणफलाश्रयत्वम्। ण्यन्तविषये ईदृशप्राधान्यस्यैव ग्रहात्। प्रकृते च पयोनिष्ठविभागानुकूलो यो गोनिष्ठव्यापारस्तदनुकूलव्यापारस्य शब्दतः प्राधान्यात्। गर्गाः शतं दण्ड्यन्तामित्यत्र गर्गाणामेव तत्त्वम्। उद्देश्यत्वरूपमार्थं प्राधान्यं तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतावृत्तिरिति न वृद्धिसूत्रस्थभाष्यविरोधः। एवमेव शकारमसि चोदित इत्याद्युपपत्तिः। अत एव

---

यदा पयोनिष्ठविभागानुकूलव्यापारादिरेव धात्वर्थस्तदा गवादीनामुक्तप्राधान्याभावेन तदभिप्रायकमिति बोध्यम्। ननु किं तावत्प्रधानकर्मत्वमत आह। प्रधानेति। चस्त्वर्थे। कर्मप्रत्ययसमभिव्याहारे पक्व ओदन इत्यादिसामानाधिकरण्यानुरोधात्फलस्य विशेष्यतया उक्तप्राधान्यासंभवादाह। कर्तृप्रत्ययेति। ईदृशप्राधान्यस्यान्यत्रावश्यकत्वमप्याह। ण्यन्तेति। तत्त्वमिति। प्राधान्यमित्यर्थः। नन्वेवं प्रधानगर्गानुरोधेनाप्रधानशतस्यैवावृत्तिप्रसङ्गात्समुदाये वाक्यपरिसमाप्तिरित्यस्य वृद्धिसूत्रस्थभाष्योक्तो दृष्टान्तोऽसंगतः स्यादत आह। उद्देश्यत्वरूपमिति। एवं चार्थप्राधान्यमादाय तदुपपत्तिरिति भावः। एवमिति। जिज्ञासाविषयार्थज्ञानानुकूलव्यापारानुकूलव्यापारः पृच्छिपर्यायचुदेरर्थ इति निरुक्तप्रधानकर्मत्वस्य युष्मदर्थे सत्त्वेन तत्रैव निष्ठाप्रत्यय इति भावः। एतेन दुह्यादीनां चार्थोपलक्षकतया पर्यायप्रयोगेऽपि कर्मसंज्ञा। अत एव शकारमसि चोदित इति परस्मैपदानामिति सूत्रे भाष्ये पृच्छिपर्यायस्य चुदेर्द्विकर्मकप्रयोगः संगच्छत इति कैयटोक्तमयुक्तमिति सूचितम्। तत्र कर्तुरित्यनेनैव कर्मत्वसिद्ध्याऽर्थोपलक्षकताया अनावश्यकत्वात्। याचेः पृथक् मिक्षिग्रहणवैयर्थ्यापत्तेश्चेति बोध्यम्। अत एवेति। व्यापारद्वयार्थकत्वेनैवं

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

इत्युक्त्वोत्तरार्द्धोपात्तातिरिक्ता द्विकर्मकाः के?, इति प्रश्ने

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

इत्युक्तम् । तत्र न्यादिग्रहणं तव कृषिवन्मम व्यापारद्वयार्थकधातूपलक्षणम् । एवञ्चेदं सूत्रं व्यर्थं, तथापि यदा पयोनिष्ठविभागानुकूल-

---

द्विकर्मकत्वादेवेत्यर्थः । ण्यन्ते कर्तुश्च कर्मण इति । अण्यन्तावस्थायां कर्तुस्सतो ण्यन्ते धातौ कर्मणो वाचका लादय इत्यर्थः । गतिबुद्धीत्यनेन यस्य कर्मसंज्ञा विधीयते, तस्मिन्वाच्ये गत्यर्थादिषु धातुषु लादयो भवन्तीति भावः । यद्यपि प्रधानकर्मणीत्यनेनैवेदं सिद्धं, तथापि 'गुणकर्मणि लादिविधिस्सपरे' इति प्रागुक्तत्वेनात्र दुहादीनामित्यनेन तस्यापि ग्रहणमिति भ्रमवारणाय पुनरिदमुक्तं भगवतेति बोध्यम् । तत्र सपरे इत्यस्य सह परेण योगेनेत्यर्थः । गत्यादिसूत्रसहितेनाकथितमित्यनेन यत्र कर्मत्वं, तत्र गुणकर्मणि लादिविधिरित्यर्थः । प्रश्ने इति । दुहादिपरिगणनादन्यत्र द्विकर्मकत्वाप्राप्त्या तदतिरिक्ता द्विकर्मका अप्रसिद्धा इति प्रधानकर्मणीत्याद्यसंगतमिति तदाशयः । गत्यर्थानामिति । इदमुपलक्षणमुत्तरसूत्रोपात्तधातूनामपि । नन्वेवमपि प्रधानकर्मणि लादिप्रयोजकं द्विकर्मकत्वं दुहादीनां न लब्धमत आह । तत्रेति । नीवह्योरित्यत्रेत्यर्थः । तवेति । दुहादीनां व्यापारद्वयार्थकत्वमनभ्युपगच्छतस्तवापि मते न्यादिग्रहणं कृषेरुपलक्षणमित्यवश्यमभ्युपेयतया मन्मतेऽपि सामान्यतः तद्व्यापारद्वयार्थकधातुमात्रोपलक्षणमिति दुहादीनां कृषेरपि द्विकर्मत्वं सिद्धमिति भावः । पूर्वपक्षमुपसंहरति । एवं चेति । सिद्धान्तमाह । यदेति ।

व्यापारादिरेव धात्वर्थस्तदाऽपादानत्वाद्यविवक्षायामन्येनासिद्धकर्मत्वार्थमिदमावश्यकम् । तदा चाप्रधाने दुहादीनामित्युक्तेरप्रधाने गवादावेव लादयः । अप्रधानकर्मत्वञ्चोक्तप्रधानकर्मभिन्नकर्मत्वम् । तत्रोक्तार्थे गवादीनामस्त्येव, फलानाश्रयत्वात् । गां दोग्धीति। अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादानत्वाविवक्षायामनेन कर्मत्वम् । तद्विवक्षायां पञ्चमी । गोः पयस्यन्वये षष्ठी । द्विकर्मकेषु गवादीनां कर्मत्वाविवक्षया क्रियाऽन्वये षष्ठी न, अनभिधानात् । षष्ठ्यन्तस्य स्वान्वययोग्यनामसमभिव्याहारे तत्रैवान्वयस्योत्सर्गतो व्युत्पत्तेश्च । अत एव तण्डुलानामोदनं पचतीत्यत्र 'द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी' इत्येव कर्तुरिति सूत्रे भाष्ये उक्तमिति दिक् । बलिं याचते इति । यदा परस्वत्वनिवृत्ति—स्वस्वत्वोत्पत्त्युभयानुकूलो व्यापारो याचेरर्थः, स्वत्वे बलेर्निरूपकतया-

---

व्यापारादिरेवेति । निष्क्रियस्यापि गवादेर्दोहनादिषु विनियोगादिति भावः। अपादानत्वेति । गोर्विभागावधित्वेऽपि तत्त्वेनाविवक्षायामित्यर्थः । अत्र पक्षे लादिव्यवस्थामाह । तदा चेति । उक्तप्रधानेति । कर्तृप्रत्ययसमभिव्याहारेत्युक्तेत्यर्थः । तत्र=धात्वर्थे । षष्ठीति । क्रियान्वयित्वाभावेन कर्मत्वादीनामप्राप्तेरिति भावः । ननु गवादीनां क्रियान्वयविवक्षायामपि कर्मत्वाविवक्षायां षष्ठी कुतो नेत्यत आह । द्विकर्मकेष्विति । तद्विषय इत्यर्थः । तत्र हेतुमाह । षष्ठ्यन्तस्येति । शेषषष्ठ्यन्तस्येत्यर्थः । व्युत्पत्तेश्चेति । चो हेतौ । यतस्तादृशी व्युत्पत्तिरतः क्रियान्वये तस्य साधुत्वं नेत्यर्थः । अत्र मानमाह । अत एवेति । द्व्यर्थ इति । विक्लेदनं निर्वर्तनं चार्थ इत्यर्थः । विकारयोगे इति । विकारविशेषेणौदनेन योग इत्यर्थः । तण्डुलसंबन्धिविकारविशेषमोदनं विक्लित्य निर्वर्तयतीति तदर्थः । व्यापार इति । दीयतामित्यभिलापादिरूपो दिदापयि-

ऽन्वयः, तदाऽनेन कर्मत्वम् । पूर्वविषयस्य कस्याप्यभावात् । न चात्रापादानत्वप्रसक्तिः । विभागस्य धात्वर्थत्वाभावात् । 'न हि याचनादेवापायो भवति, याचितो यदि ददाति तदाऽपायेन युज्यते' इति भाष्योक्तेः । 'असंकीर्तितपर्यायाकथितग्रहणे 'गां दोग्धि' 'गोर्दोग्धि इति च, याचिपृच्छिभिक्षियोगे कर्मसञ्ज्ञैवेत्येषा व्यवस्था' इति च सिद्धान्ते कैयटोक्तेश्च । व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वं बोद्धयम् । वसुधायाः स्वामित्वसम्बन्धात् कर्मयुक्त्वम् । अविनीतमिति । याचेः स्वीकारानुकूलव्यापारोऽर्थः । स्वीकारश्च 'इदमवश्यं करिष्यामि' इति शब्दप्रयोगजनको ज्ञानविशेषः । विनयेन च तद्विषयज्ञानवत्त्वं सम्बन्धः । तण्डुलानिति । तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीत्यर्थस्य कर्तुरितिसूत्रस्थभाष्यकैयटसंम-

---

षाव्यञ्जक इत्यर्थः । अत्र विभागस्य धात्वर्थत्वाभावे मानमाह । नहीति । तत्रैव कैयटसम्मतिं दर्शयति । असङ्कीर्तितेति । अत्रापि विभागस्य धात्वर्थत्वेऽपादानत्वाविवक्षायां कर्मत्वेऽपि तद्विवक्षायां गोर्दोग्धीतिवदपादानत्वस्यापि प्रवृत्त्या याचिपृच्छिभिक्षियोगे कर्मसंज्ञैवेति कैयटोक्ता व्यवस्थाऽसंगता स्यादिति भावः । यदेत्युक्तेः फलमाह । व्यापारद्वयेति । स्वामित्वसंबन्धादिति । तन्निष्ठस्वत्वनिरूपितस्वामित्वसंबन्धादित्यर्थः । कर्मयुक्त्वमिति । धात्वर्थव्यापारात्प्राग्बलेरिति भावः । ज्ञानविशेष इति । अत्र फलतावच्छेदकसंबन्धो विषयता । तेन संबन्धेन फलाश्रयस्य विनयस्य कर्तुरित्यनेन कर्मत्वम् । विनयेन चेति । अविनीतस्येति शेषः । तद्विषयकज्ञानवत्त्वमिति । सत्यपि विनयज्ञाने तथाऽननुष्ठितमनुष्ठापयतीत्यर्थाद्धात्वर्थव्यापारात्प्रागपि तत्संबद्धत्वमत्रास्तीति भावः । अत्र तु न संप्रदानत्वप्राप्तिः । याचनमात्रेण

तत्वेन कर्तुरित्येव कर्मत्वसिद्धेरस्यैतदुदाहरणत्वं चिन्त्यम् । एवं स्वसंप्रदानकदानानुकूलव्यापारानुकूलशासनरूपव्यापारार्थदण्ड्या - दियोगेऽपि तेनैव सिद्धम् । एवं व्यापारद्वयार्थत्वेन सति प्रयोगे बहूनां द्विकर्मकत्वं बोद्धव्यम् । व्रजमिति । निर्गमप्रतिबन्धपूर्वक-यत्किंचिदधिकरणकचिरस्थित्यनुकूलव्यापारो रुधेरर्थः । व्रजे गौ-स्तिष्ठति, तत्र तां निर्गमप्रतिबन्धपूर्वकं चिरं स्थापयतीति संप्रत्य-यात् । अधिकरणत्वाविवक्षायामनेन कर्मत्वम् । व्यापारद्वयार्थत्वे कर्तुरिति कर्मत्वम् । पन्थानमिति । जिज्ञासाविषयार्थज्ञानानुकूलः केन पथा गन्तव्यमित्यभिलापादिरूपो व्यापारः पृच्छेरर्थः । ज्ञान-विषयत्वेन पथः कर्मत्वम् । माणवकेन च तज्ज्ञानाश्रयत्वं सम्बन्धः । अपादानत्वं तु नात्र । 'प्रश्नादेवापायो भवति पृष्टोऽसौ यथाचष्टे

---

विनयसंबन्धाभावादिति सर्वथा पूर्वविधेरप्राप्तिरेव । चिन्त्यमिति । अत एवैतन्नोदाहृतं भाष्ये इति बोध्यम् । एवमन्योदाहरणासङ्गतिमप्याह । एवमिति । स्वसंप्रदानकेति । स्वं = राजा, तत्संप्रदानकं यद्दानं तदनुकूलो यो गर्गवृत्ति-र्व्यापारस्तदनुकूलो राजनिष्ठः शासनरूपो व्यापारस्तदर्थकेत्यर्थः । तेनैव = कर्तुरित्यनेनैव । आदिपदग्राह्यमाह । एवमिति । बहूनामिति । भाष्ये नीवह्योरित्यस्य व्यापारद्वयार्थकधातुमात्रोपलक्षकत्वेनान्येषामपि व्यापारद्वयार्थ-कानां द्विकर्मकत्वमुक्तप्रायमिति भावः । अनतिप्रसङ्गायाह । सति प्रयोग इति । एकव्यापारार्थकत्वपक्षे रुधेरर्थमाह । निर्गमप्रतिबन्धेति । अत्र चिरस्थित्यनुकूलव्यापारात्प्रागपि व्रजस्य गोसंबन्धोऽस्त्येवेति कर्मयुक्तम् । व्यापारद्वयार्थकत्व इति । यत्किंचिदधिकरणकचिरस्थित्यनुकूलव्यापारानु-कूलव्यापारार्थकत्व इत्यर्थः । कर्मत्वमिति । व्रजस्य चिरस्थित्याश्रयत्वेनेति भावः । जिज्ञासाविषयेति । जिज्ञासाविषयीभूतो योऽर्थः पथिरूपस्तद्विषयेत्यर्थः । सर्वथा पूर्वविधेरत्राप्रसक्तिं दर्शयति । अपादानत्वमिति । प्रश्नस्य विश्लेषा-

तदाऽपायेन युज्यते' इति भाष्योक्तेः । सम्प्रदानत्वमपि न । कर्मसम्बन्धवत्त्वेनेच्छाविषयत्वाभावात् । व्यापारद्वयार्थत्वे तु कर्तुरिति कर्मत्वम् । वृक्षमिति । विभागपूर्वकाऽऽदाने चिञ् । वृक्षात्फलान्यादत्ते इत्यर्थात् । अपादानत्वाविवक्षायामनेन कर्मत्वम् । धर्मं ब्रूते इत्यादि । ज्ञानानुकूलः शब्दप्रयोगरूपो व्यापारो ब्रूञर्थः । प्रवृत्तिपर्यवसायी स शास्तेः । स च 'धर्मं कुरु' इत्यादिविधिघटितोपदेशरूपः । विषयता च फलतावच्छेदकः सम्बन्धः । वचनादिकर्मणा धर्मेण माणवकस्याभिप्रेयमाणत्वात्तस्य सम्प्रदानत्वम् । तदविवक्षायाञ्चानेन कर्मत्वम् । अत्र कर्तृव्यापारानन्तरं तज्ज्ञानाश्रयत्वरूपो माणवकस्य धर्मेण सम्बन्धः । नयतेः संयोगानुकूलव्यापारानुकूलव्यापारोऽर्थः । स एव स्कन्धग्रहणादिपूर्वो वहेरर्थः । गत्यनुकूलव्यापारविशेषः कृषेः । बलाद्ग्रहणपूर्वकं देशान्तरप्रापणं हरतेः । एषु कर्तुरिति कर्मत्वं बोद्धव्यम् । एवञ्च भाष्यानुक्तानामत्र ग्रहणं प्राचामनुरोधेनेति तत्त्वम् । भाष्योक्ता हि 'दुहियाचिरुधिप्रच्छिभिक्षिचिञ्ब्रुविशासयः' । अर्थनिबन्धनेयमिति । इदमपि कैयटानुरोधेन । वस्तुतस्तु येषामेतदर्थानां द्विकर्मकत्वमिष्टं तेषां व्यापार-

---

जनकत्वेन पृच्छिं प्रति माणवकस्यापादानत्वं न प्रसक्तमिति भावः । नहि प्रश्नादेवेति । प्रश्नमात्रमनङ्गीकृतापायं धात्वर्थ इत्याशयः । ज्ञानानुकूल इति । विषयतया ज्ञानानुकूल इत्यर्थः । तथा च समवायेन ज्ञानाश्रयत्वस्य माणवके सत्त्वेऽपि फलतावच्छेदकसंबन्धेन तदाश्रयत्वस्य तत्राभावान्न पूर्वसूत्रेण तस्य कर्मत्वसिद्धिः । धर्मस्य तु विषयतया ज्ञानाश्रयत्वस्य सत्त्वात्तेन कर्मत्वमिति बोध्यम् । संप्रदानत्वमिति । प्राप्तमिति शेषः । अत्र = ब्रुविशास्योरुभयत्र । एवं चेति । व्यापारद्वयार्थकत्वे कर्तुरित्यनेन कर्मत्वस्य सिद्धत्वे चेत्यर्थः। भाष्या-

द्व्यार्थत्वेन कर्तुरित्येव सिद्धम्। अन्यथा 'आख्यातोपयोगे' इति सूत्रभाष्योक्तपरिगणनभङ्गापत्तिः। किं च भाष्ये भिक्षिग्रहण- वैयर्थ्यापत्तिः। उभयार्थकयाचिग्रहणेनैव सिद्धेरित्यन्ये॥

अकर्मकधातुभिरिति। तेषां स्वकरणकव्यापने वृत्त्या व्याप्ति- रूपफलाश्रयत्वेन कर्तुरिति कर्मत्वम्। मासमास्ते इत्यादेर्मासमास- नेन व्याप्नोतीत्यादिक्रमेणार्थ इति भावः। यत्त्विदमेव कर्मसंज्ञा-

---

नुक्तानामिति। नीवह्यादीनामित्यर्थः। उभयार्थकेति। भिक्ष भिक्षा- यां लाभेऽलाभे चेत्युक्तया तस्य भिन्नार्थत्वभ्रमवारणायेदम्। याचृ याच्ञा- यामित्यत्रापि लाभेऽलाभे चेत्यस्य साम्यात्। अत एव 'याचितो यदि ददाति, तदाऽपायेन युज्यत' इति भाष्यं सङ्गच्छते। भिक्षिग्रहणेन याचिग्रहण- वैयर्थ्यं तु न शङ्कनीयम्। याचेः पूर्वोपात्तत्वेन तेन द्वितीयोपात्तभिक्षिवैयर्थ्य- स्यैव शङ्कितुमुचितत्वात्। एतेनास्य ग्रन्थस्य चिन्त्यत्वं वदन्त औत्तराहा, भिक्षिग्रहणवैयर्थ्यापत्तिरित्यस्य काकुपरतां स्वीकृत्य भिक्षिग्रहणेनैव सिद्धे याचि- ग्रहणवैयर्थ्यप्रतिपादने नागेशतात्पर्यं वर्णयन्तस्तद्गुरुचरणाश्च परास्ताः। अन्ये इति। भाष्यतत्त्वविद इत्यर्थः॥

अकर्मकधातुभिरित्येतत्स्वातन्त्र्येण कर्मसंज्ञाविधायकमिति कैयटाद्युक्तिं निराकरिष्यन् स्वयं तदाशयमाह। तेषामिति। अकर्मकधातूनामित्यर्थः। स्वकरणकव्यापन इति। स्वम्, अकर्मकधात्वर्थत्वेन प्रसिद्धो योऽर्थ आसन- शयनादिरूपस्तत्पूर्वकव्याप्त्यनुकूलव्यापार इत्यर्थः। कर्मत्वमिति। कटे आस्ते इत्यादौ तु नैवं कर्मत्वम्। शब्दप्रयोगस्य नियतत्वादनङ्गीकृतक्रियान्तरे आसनमात्रे तत्र धातोर्वृत्तेरिति कैयटः। अनङ्गीकृतमित्यस्य प्रधानीकृतं न भवतीत्यर्थः। कैयटाद्युक्तिं खण्डयति। यत्त्विति। कर्मसंज्ञाविधायकमिति। नच कालाध्वनोरत्यन्तसंयोग इत्यनेनैव द्वितीयायाः सिद्धतया किमनेनेति

विधायकमिति, तन्न। भाष्ये तादृशवचनानुपलम्भात्। अकथितञ्चेति सूत्रे अकर्मकप्रकृतिकण्यन्तानां कथं द्विकर्मकत्वमिति शङ्कायां कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्च' इति भाष्ये उक्तम्। तच्च न विधायकं, हिशब्दघटितत्वात्। .... .... ....

---

वाच्यम्। तत्र कालशब्देन लोके कालवाचकत्वेन प्रसिद्धानां मासादीनामेव ग्रहणाद्गोदोहनपानादीनां कालवाचित्वेन लोकेऽप्रसिद्धत्वाद्द्वितीयाया अप्राप्त्या भावस्य तावत्कर्मसंज्ञाविधानस्यावश्यकत्वात्। कालाध्वनोरप्यत्यन्तसंयोगे तेन द्वितीयासिद्धावप्यनत्यन्तसंयोगे द्वितीयार्थमत्यन्तसंयोगेऽपि कर्मणि लाद्यर्थे च कर्मत्वस्यावश्यकत्वात्। अत एवास्यते मासः, आसितव्यो मासः आसितो मासः, स्वासो मास इत्यादिसिद्धिः। नचैवमत्यन्तसंयोगेऽप्यनेन कर्मत्वाद्द्वितीयासिद्ध्या किं कालाध्वनोरिति सूत्रेणेति वाच्यम्। मासं गुडधाना इत्यादावक्रियायोगे द्वितीयार्थं तस्यावश्यकत्वात्। एवं चोभयमप्यावश्यकमिति तदाशयः। ननु प्रकृतसूत्रे भाष्ये 'कालभावाध्वगन्तव्या ह्यकर्मणां देशश्चेति वचनोपलम्भादिदमयुक्तमित्याशङ्क्य तदाशयं दर्शयति। अकथितमिति। शङ्कायामिति। अकर्मकेषु गत्यर्थकेषु चाप्रधाने कर्मणि लादयो भवन्तीत्यर्थकं 'ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदल्पमतेर्वचनं स्मरते'ति वचनमुक्त्वा तदन्यकर्मकाणां ण्यर्थकर्मसत्त्वेऽपि द्विकर्मकत्वाभावादिदमयुक्तमिति शङ्कायामित्यर्थः। तस्याविधायकत्वे हेतुमाह। हिशब्दघटितत्वादिति। हिशब्दस्य प्रसिद्धार्थकतायाः स्वभावसिद्धत्वेन तद्घटितेन वाक्येन भूतानुवाद एव क्रियत इति भावः। नच 'कालभावाध्वगन्तव्या अकर्मकाणां धातूनां कर्मसंज्ञका भवन्तीति वक्तव्य'मिति तद्व्याख्यानभाष्येण तस्य विधायकत्वलाभ इति वाच्यम्। तस्य कालादयोऽकर्मकधातूनां यथा कर्मसंज्ञका भवन्ति, तथा धात्वर्थरूपं वक्तव्यमित्यर्थात्तेनापि तदलाभादिति बोध्यम्। ननु हिशब्दस्य वाक्यालङ्कारत्वेनेदं वार्तिकं विधाय-

किं च कालाध्वनोरिति सूत्रे 'कालाध्वानौ कर्मवदिति वक्तव्यम्' इति वार्त्तिकप्रत्याख्याने 'प्राकृतमेवैतत्कर्म, यथा कटं करोति' इत्युक्तम्। अस्य वचनत्वे 'उक्तं वा, प्राकृतं वा' इति वदेत्। तस्मादुक्तरीत्या कालादीनां तद्योगे कर्मतया द्विकर्मकत्वमित्येव तत्तात्पर्यम्। अत एव समां समां विजायत' इति सूत्रे 'समायां समायां विजायते'इति विग्रहकथनपरं भाष्यं तङ्गच्छते। अन्यथा अनेन द्वितीयाया एव तत्र साधुत्वेन तदसङ्गतिः स्पष्टैव। अत एवोक्तभाष्यार्थानुवादिका हरेः कारिका—

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥ इति।

सकर्मकविषयेऽप्यनेन प्रकारेण कालादिकर्मणा सकर्मकत्वम्। तुल्य·

---

कमेव किं न स्यादत आह। किंचेति। प्राकृतमेवेति। स्वार्थिकः प्रज्ञाद्यण्। अत्र प्रकृतशब्देन यथा कटमिति दृष्टान्तात्कर्तुरित्युत्सर्गसूत्रमुच्यते। तेन बोधितमित्यर्थः। वचनत्वे इति। स्वातन्त्र्येण विधायकत्वे इत्यर्थः। इति वदेदिति। प्रकरणान्तरस्थवार्तिकेनैव तद्वार्तिकं प्रत्याख्यायानन्तरं कर्तुरिति सूत्रेण तद्वार्तिकद्वयमपि प्रत्याख्यानं कुर्यादिति भावः। तद्योगे = अकर्मकधातुयोगे। तत्तात्पर्यम् = अकथितं चेति सूत्रस्थभाष्यतात्पर्यम्। अत एवेति। अस्यापूर्ववचनत्वाभावादेवेत्यर्थः। अनेनेति। अधिकरणत्वाविवक्षायां चरितार्थेनानेन तद्विवक्षायामपि परत्वत्कर्मसंज्ञाप्राप्त्येति भावः। अस्यापूर्ववचनत्वाभावे त्वभिधानस्वाभाव्यादनङ्गीकृतक्रियान्तरे जननमात्रे धातोर्वृत्तेरधिकरणत्वविवक्षायां सप्तम्याः साधुत्वोपपत्तिरिति बोध्यम्। भाष्यस्य स्वोक्त एवाशय इत्यत्र हरिसम्मतिं दर्शयति। अत एवेति। वचानारम्भेऽप्येतत्प्रकारस्यावश्यकत्वं दर्शयति। सकर्मकविषयेऽपीति। एवं च सकर्मकाणां कालादि-

न्यायात् । तेन मासमोदनं पचतीति भवति । तत्र कालादिकर्म अप्रधानं, द्रव्यकर्म तु प्रधानम् । कालस्याधारत्वेन द्रव्यद्वारा क्रियासम्बन्धात् । किं च कठिनपाकयस्य महापरिमाणस्य बहुसंख्यस्य च चिरेण पाकोऽन्यस्याचिरेणेति द्रव्यधर्मं पर्यालोच्य क्रियासु कालयोग इति स बहिरङ्गः । अपि च साधनसम्बन्धे जाते क्रियायाः परिच्छेदकत्वात्कालाकाङ्क्षेति स बहिरङ्गः । अकर्मकव्यवहारस्तु धातूनां द्रव्यकर्माभावनिमित्त एव । अत्र बीजं वक्ष्यते । तदुक्तम्—

> अतस्तैः कर्मभिर्युक्तो धातुर्द्रव्यैरकर्मकः ।
> लस्य कर्मणि भावे च निमित्तत्वाय कल्पते ॥ इति ।

---

कर्मणा द्विकर्मकत्वसिद्धयेऽस्य प्रकारस्यावश्यकत्वेन तेनैवाकर्मकेष्वपि कर्मत्वसिद्ध्या नेदं वचनमावश्यकमिति भावः । पचतीति । पाकेन व्याप्नोतीत्यर्थः । अत्र व्याप्तिरूपफलाश्रयत्वेन मासस्य, विक्लित्याश्रयत्वेनौदनस्य च कर्मत्वं बोध्यम् । नन्वेवमत्र पाककरणकव्याप्त्यनुकूलव्यापारस्यैव प्रधानधात्वर्थत्वेन तज्जन्यफलाश्रयस्य मासस्यैव प्रधानकर्मतया तत्रैव लादयः स्युरत आह । तत्रेति । कालादिभिर्ये द्विकर्मकास्तद्विषये इत्यर्थः । क्रियासंबन्धादिति । पचिक्रियासंबन्धादित्यर्थः । ननु तस्यापि व्यापनरूपक्रियया साक्षात्संबन्धोऽस्त्येवेत्यत आह । किंचेति । कठिनपाकयस्येति । द्रव्यस्येत्यर्थः । स इति । काल इत्यर्थः । एवं च द्रव्यकर्मणोऽन्तरङ्गत्वात्तत्रैव लादयः । यथा मासमोदनः पच्यत इतीति भावः । प्रकारान्तरेणापि तस्य बहिरङ्गत्वमाह । अपि चेति । नन्वेवमकर्मकत्वव्यवहारोच्छेदापत्तिरत आह । अकर्मकेति । वक्ष्यत इति । गतिबुद्धीति सूत्र इत्यर्थः । तदुक्तमिति । हरिणेति शेषः । तैः कर्मभिः= कालादिकर्मभिः । द्रव्यैरिति । द्रव्यकर्मभिरित्यर्थः । अयुक्त इति शेषः । धातुरित्यन्वयः । कर्मणि भावे चेति । यथा कर्मणि, तथा भावे च लस्य

**गतिबुद्धिप्र। शब्दः कर्म कारकं येषामित्यर्थो व्याख्यानात्। तेन ह्वाययतिक्रन्दयत्योर्न। अणाविति। णिच्यनुत्पन्ने इत्यर्थः। अत्र णिज् हेतुमण्णिजेव। स णावित्यत्रापि स एव, व्याख्यानात्। अत एव भक्षेर्निषेधश्चरितार्थः। स हि नित्यण्यन्तश्चुरादिरिति बोद्ध्यम्। अन्यानधीनत्वलक्षणाऽर्थप्राधान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन तदनुरोधिकर्मत्वस्यान्तरङ्गादपि कर्तृत्वाद्बलवत्त्वेन कर्तुरि-**

---

निमित्तत्वाय कल्पत इति तदर्थः। कालादिकर्मणा सकर्मकत्वात्कर्मणि लः। द्रव्येणाकर्मकत्वाद्भावे च लकारः। यथा आस्यते मासः, मासमास्यते देवदत्तेनेति भावः॥

व्याख्यानादिति। अत्र शास्त्रे 'कर्तरि कर्मव्यतीहारे, वेः शब्दकर्मण' इत्यादौ लक्ष्यानुसारात्कर्मशब्देन क्वचित्क्रियायाः क्वचित्साधनस्य चेत्येवमुभयथापि व्यवहारदर्शनादत्र लक्ष्यानुरोधात्कर्मशब्देन कारकस्यैव ग्रहणमिति भावः। किं च कर्मशब्दस्य क्रियापरत्वे गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणामित्येव वदेदित्यपि बोध्यम्। ण्यन्तलक्ष्ये तदभावासंभवादाह। णिचीति। अत्र=अणीत्यत्र। स एवेति। हेतुमण्णिजेवेत्यर्थः। सर्वगत्यर्थादिभ्यो हेतुमण्णिच एव संभवेनाणीत्येतत्साहचर्येण च तस्यैव ग्रहणमिति भावः। तत्राद्ये व्याख्यानं दर्शयति। अत एवेति। अन्यथा तस्य नित्यण्यन्तत्वेनाणौ कर्तुरभावात्कर्मत्वाप्राप्त्या निषेधो व्यर्थः स्यादिति भावः। 'परत्वादन्तरङ्गत्वादुपजीव्यतयापि च। प्रयोज्यस्यास्तु कर्तृत्वं गत्यादेर्विधितोचिते'त्येवमस्य सूत्रस्य दीक्षितोक्तं विधित्वमयुक्तमिति सूचयन् हेतुमति चेति सूत्रभाष्यसम्मतं सिद्धान्तमाह। अन्येति। शाब्दप्राधान्येति। शाब्दबोधीयमुख्यविशेष्यतारूपप्राधान्येत्यर्थः। अन्तरङ्गादपीति। अपिना परोपजीव्ययोः संग्रहः। उद्देश्यत्वरूपार्थप्राधान्यस्य प्रयोज्यव्यापारे सत्त्वेऽपि निरुक्तोभय-

त्येव सिद्धे णिजर्थेनाप्यमानस्य चेद् गत्यर्थादीनामेवेति नियमार्थमिदम्। तेन पाचयत्यादियोगे नेति हेतुमति चेति सूत्रे भाष्यकृतः। प्रधानकार्यं सर्वतो बलवदिति आकडारसूत्रे कैयटे स्पष्टम्। तेन गत्यादियोगे प्रयोज्यस्य कर्मत्वशक्तिमत्त्वं, पाचयत्यादियोगे कर्तृत्वशक्तिमत्त्वमेवेति बोद्धव्यम्। गमयति देवदत्तेनेति। यज्ञदत्तकर्मकगमनानुकूलदेवदत्तकर्तृकव्यापारानुकूलो विष्णुमित्रकर्तृको व्यापार इति बोधः। अत्र देवदत्तस्य न कर्मत्वम्। नियन्त्रेति। नियन्तृकर्तृकण्यन्तप्रकृतिभूतस्येत्यर्थः। प्रापणार्थवहेर्गत्यर्थत्वाभावेऽपि ग्रामं प्राप्त इत्यादौ तत्प्राप्तेर्गतिं विनाऽसम्भवादाक्षिप्तगत्याऽपि

---

विधप्राधान्यस्य तत्राभावान्न तदनुरोधेन संज्ञाप्रवृत्तिरिति भावः। न चैवमप्यन्तरङ्गत्वोपजीव्यत्वयोरार्थप्राधान्यस्य च तत्र सत्त्वेन तदनुरोधेनैव संज्ञाप्रवृत्तेर्युक्ततयास्य विधित्वमेव, नतु नियमत्वं, फलाभावादिति वाच्यम्। लोके प्रधानराजकार्यापेक्षया सचिवादीनामन्तरङ्गस्याप्यात्मकार्यस्याकरणदर्शनादन्तरङ्गादपि प्रधानकार्यस्य बलवत्त्वात्। अत्र सूत्रे कर्तृग्रहणस्य धात्वर्थव्यापाराश्रयरूपस्वतन्त्रोपलक्षकतया कर्तृसंज्ञाया उपजीव्यत्वाभावाच्च। नियमस्वरूपं दर्शयति। **णिजर्थेनाप्यमानस्येति।** णिजर्थव्यापारप्रयोज्यफलाश्रयत्वेनेच्छाविषयस्येत्यर्थः। प्रधानकार्यस्य सर्वतो बलवत्त्वे मानमाह। **प्रधानकार्यमिति।** **तेनेति।** अस्य नियमत्वाश्रयणेनेत्यर्थः। केवलवहेर्नियन्तृकर्तृकत्वाभावादाह। **नियन्त्रेति।** **ण्यन्तप्रकृतिभूतस्येति।** ण्यन्तघटकस्येत्यर्थः। नियन्ता च पशुप्रेरकमात्रं, नतु सारथिरेव। अत एव वाहयति बलीवर्दान्यवानिति भाष्योदाहरणसंगतिरिति बोध्यम्। ननु प्राप्त्यनुकूलव्यापारानुकूलव्यापारो वहेरर्थः। प्राप्तिश्च संबन्धमात्रं, नतु संयोग एव। देशान्तरस्थेऽपि 'भूरनेन प्राप्ते'ति व्यवहारात्। धनं प्राप्त इत्यादौ स्वस्वामिभावादेर्भानाच्च। तथाच तस्य गत्यर्थत्वाभावात्कर्मत्वाप्राप्त्या वहेर्निषेधोऽनर्थकोऽत आह। **प्रापणार्थवहेरिति।** तत्प्राप्तेः=

**गत्यर्थत्वमित्यभिमानेन वार्तिकारम्भः। सुखं प्राप्त इत्यादौ न तदाक्षेपः, तत्र कर्तरि क्त आदिकर्माणि बोद्ध्यः। अत एव ग्रामं प्रापयति देवदत्तेनेत्येवेति ध्वनितं न गतीति, न वेति सूत्रे च भाष्ये। नयतेस्तु या प्रापण इत्यादेरिव गत्युपसर्जनं प्रापणं वाच्यमिति तस्य गत्यर्थत्वमेवेति बोद्धव्यम्। अदिखाद्योरिति। प्रत्यवसानार्थत्वात्प्राप्तिः। प्रत्यवसानं भक्षणम्। भक्षयति बलीवर्दानिति। हिंसाङ्गे भक्षणे भक्षेर्वृत्तिः। परकीयसस्यभक्षणे परो हिंसितो भवतीति**

---

ग्रामप्राप्तेः। **अभिमानेनेति**। नान्तरीयकतया प्रतीयमानस्यापि तदर्थत्वाभिमानेनेत्यर्थः। अनेनारुचिः सूचिता। तद्बीजं तु क्वचिन्नान्तरीयकतया तत्प्रतीतावपि न तस्य धात्वर्थत्वम्। अत एव न गतिहिंसार्थेभ्य इति सूत्रे भाष्ये 'हरिवह्योरप्रतिषेध' इति वार्तिकस्थवहिग्रहणस्य 'न वहिर्गत्यर्थ' इत्यादिना प्रत्याख्यानं नवेति सूत्रे भाष्ये हृक्रोरित्यस्योभयत्रविभाषात्वमुक्त्वा 'अप्राप्ते हरति भारं देवदत्तो, हारयति भारं देवदत्तमि'ति प्रापणार्थे उदाहरणदानं च संगच्छते। एवं च वहेः प्रतिषेधो नापूर्वः, किन्तु प्राप्त्यभावानुवादमात्रम्। नियन्तृकर्तृकवहेस्तूपसंख्यानं कार्यमिति बोध्यम्। प्रापयतेरपि शुद्धं प्रापणमेव वहिवदर्थ इति न सोऽपि गत्यर्थ इत्याह। **सुखं प्राप्त इति**। **न तदाक्षेप इति**। तत्प्राप्तेर्गतिं विनापि संभवादिति भावः। नन्वेवं तत्र गत्यर्थाकर्मकेति कर्तरि क्तो न स्यादत आह। **तत्रेति**। **अत एवेति**। प्रापयतेर्गत्यर्थत्वाभावादेवेत्यर्थः। नन्वेवं प्रापणार्थकनयतेरपि गत्यर्थत्वाभावात्कर्मत्वाप्राप्त्या तस्यापि नीवह्योरिति वार्तिके ग्रहणमनर्थकमत आह। **नयतेस्त्विति**। अत्र तुनाऽरुचिः सूचिता। तद्बीजं त्वस्यापि वहेरिव गत्यर्थत्वाभावाद्वार्तिके नीग्रहणमप्यप्राप्त्यनुवाद एवेति। अत एव न शब्दरत्नादिग्रन्थविरोधः। **परकीयसस्येति**। अत्र

तत्स्वामिनोऽत्र हिंसा द्रष्टव्या । जल्पयतीति । पुत्रो धर्मं जल्पति-तद्बोधकवाक्यानि कथयति, देवदत्तो जल्पयति धर्मं पुत्रमित्यर्थः । शब्दाययतीति । शब्दं करोतीत्यर्थे शब्दवैरेत्यादिक्यङन्ताण्णिच् ।

---

सस्यपदेन तद्बीजभूतयवादिरुच्यते । मनोरमायां सस्यमितीति प्रतीकमुपादाय 'क्षेत्रस्थानां यवानां हि सा द्रष्टव्या । तस्यामवस्थायां तेषां चेतनत्वादि'ति व्याख्यानेन सस्यपदस्य यवार्थकत्वलाभात् । भाष्ये प्रत्युदाहरणे यवशब्दस्यैव सत्त्वेनास्य तदर्थकताया एवौचित्याच्च । इदं च प्रकृतसूत्रस्थकैयटोक्तपक्षान्तरानुसारेण । तत्र हि यवानिति भाष्यप्रतीकमुपादाय 'क्षेत्रस्थानां प्ररोहाद्यवस्थायां यवानां भक्षणाद्धिंसा भवती'त्येकं पक्षमुक्त्वा 'परकीययवभक्षणे वा परो हिंसितो भवती'ति पक्षान्तरमुक्तम् । भाष्ये यवशब्दस्य साधारणत्वेनान्यत्र स्थितानां बीजावस्थापन्नानां भर्जितयवानां वा भक्षणे तेषां हिंसा न भवतीति तदाशयः । वस्तुतस्तु प्ररोहावस्थानुकूल्यापन्नं यवादिकमेव भाष्यकारीयप्रत्युदाहरणस्थितयवशब्देन गृह्यते । अत एव मूले प्ररोहानुकूल्यद्योतनार्थं भर्जितयवव्यावृत्तये तत्कार्यसस्यपदोपादानं संगच्छते । तत्र सस्यपदेन तदानुकूल्यं यवानां द्योत्यते । तादृशानां चैतन्यमभ्युपगतमिति तद्भक्षणेऽङ्कुरादिरूपेण प्रवृद्ध्यभावरूपहिंसा तेषामेव भवति । एवं च सस्ये परकीयत्वविशेषणमनुपादेयमेव । सस्यानामपि हिंसाया दर्शितत्वात् । अत एव भाष्ये उदाहरणे विनष्टप्ररोहावस्थाबोधकपिण्डीपदोपादानं, प्रत्युदाहरणे च प्ररोहावस्थानुकूलबीजसाधारणयवपदोपादानं च स्वरसत उपपद्यते । भाष्यस्वरसोऽप्याद्यव्याख्यायामेवेति वदतोद्योतकृताप्ययमर्थः स्फुटीकृत इति बोध्यम् । शब्दायतेः शब्दलक्षणस्य कर्मणोऽन्तर्भावात्, कर्मान्तरायोगाच्चाकर्मकत्वादपि कर्मसंज्ञाप्रसक्त्यात्प्रतिषेधारम्भ

परे तु शब्दक्रियाणामित्यर्थे ह्वाययतिशब्दाययतिक्रन्दयतीनां प्रतिषेध उक्तो भाष्ये, न तु शब्दकर्मकाणामिति पक्षे। एवञ्च तत्रपक्षे भाष्ये शब्दाययतौ प्रतिषेधानुक्त्याऽकर्मकशब्दायतिसत्त्वे न मानम्। शब्दस्य धात्वर्थसंगृहीतत्वेऽपि बहिर्भूतपुत्रादिकर्मणोऽभावे मानाभावाद् ह्वयताविवेति चिन्त्योऽयं निषेध इत्याहुः॥

येषामिति। अयं भावः। गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णाविति सूत्रे नियमस्य सजातीयापेक्षत्वात्सकर्मकाणाञ्चेदेषामेवेति नियमपरम्। एवं सिद्धेऽकर्मकग्रहणं साम-

---

इति कैयटानुसारिमूलं खण्डयति। परे त्विति। ह्वाययताविवेति। ह्वेञ् स्पर्धायां शब्दे चेत्यभियुक्तैः शब्दशब्देन ह्वेञ्धात्वर्थनिर्देशात्तदर्थकशब्दशब्दात्क्यङि ह्वयतेरिवास्त्येव पुत्रादिकर्मयोग इति भावः। चिन्त्य इति। शब्दकर्मेत्यत्र सिद्धान्तभूतेऽर्थ इत्यर्थ इति भावः। प्रकृतसूत्रे भाष्ये 'अकर्मकग्रहणे कालकर्मणामुपसंख्यानं कर्तव्यमिति वार्तिकं 'सिद्धं तु कालकर्मणामकर्मकवद्वचनादिति' वार्तिककृता प्रत्याख्यातम्। तदनु भगवता 'अकर्मकाणामित्युच्यते, न च केचित्कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः, क्वचिद्येऽकर्मका' इति ग्रन्थेनाकर्मकग्रहणसामर्थ्येन तदपि वार्तिकं प्रत्याख्यातम्। तत्र क्वचिद्येऽकर्मका इत्यस्य द्रव्य एव कर्मणि प्रतियोगिनि सत्यकर्मका इत्यर्थं कैयट आह। अकर्मकग्रहणेन सामर्थ्यादत्यन्ताविद्यमानकालाद्यतिरिक्तद्रव्यकर्माण एव गृह्यन्ते, न त्वविवक्षितकर्माणोऽपि। तथा सति पचादीनामपि कर्माविवक्षायामकर्मकत्वनिबन्धनानि कार्याणि भवेयुरिति तदाशयः॥

तदनुरोधेन प्रवृत्तस्य 'येषां देशकालदिभिन्न'मित्यादिमूलस्याशयमाह। अयं भाव इति। इति सूत्रमिति। इत्येव सूत्रं कार्यमिति भावः। सकर्मकाणां चेदिति। सकर्मकधातुप्रकृतिकणिजर्थेनाप्यमानस्य चेदित्यर्थः। एवं

र्थो देशकालादिभिन्नकर्माभाववतोऽकर्मकग्रहणेन ग्रहणार्थम् । तच्च सामान्यापेक्षं ज्ञापकम् । शास्त्रेऽकर्मकपदेन ईदृशानामेव ग्रहणमिति । तेन 'मासमास्यते' इत्यादौ भावे लो भवति । न त्विति ।

---

सिद्धे इति । नियमस्य सकर्मकधातुविषयकत्वेनाकर्मकधातुप्रकृतिकाणिजर्थेनाप्यमानस्य नियमेनाव्यावृत्तौ तस्य कर्तुरित्यनेनैव कर्मत्वसिद्धिरिति भावः । देशकालादिभिन्नकर्माभाववत इति । देशकालाद्यतिरिक्तद्रव्यकर्मप्रतियोगिकात्यन्ताभाववत इत्यर्थः । ग्रहणार्थमिति । न चैवं सकर्मकाणामित्यनेनापि देशकालाद्यतिरिक्तद्रव्यकर्मवतामेव ग्रहणे निरक्ताकर्मकाणां नियम्यकोटावप्रवेशात्पुनरकर्मकग्रहणं व्यर्थमेवेति वाच्यम् । तत्र तादृशसङ्कोचे मानाभावात्सकर्मकत्वेन कालादिकर्मकाणामपि ग्रहणे तद्विषयनियमस्याप्यापत्तौ मासमासयति देवदत्तमित्यसिद्ध्यापत्तेः । अकर्मकपदसत्त्वे तु तेन पुनः कर्मसंज्ञाविधानान्न तत्र दोषः । अकर्मकपदघटककर्मपदेन तु न कालादीनां ग्रहणमेतत्सामर्थ्यादिति बोध्यम् । न चैवं कालादिकर्मणा सर्वेषामपि सकर्मकत्वेन सकर्मकाणां चेदेषामेवेति नियमे सकर्मकाणामित्यस्य व्यावर्त्यालाभ इति वाच्यम् । अविवक्षितकर्मव्यावृत्तये तस्यावश्यकत्वात् । सामान्यापेक्षमिति । असति बाधक इति न्यायेनेति भावः । किं च 'अकर्मकग्रहणे कालकर्मणामुपसंख्यानं, सिद्धं तु कालकर्मणामकर्मकवद्वचनादि'ति पूर्वभाष्यस्य सामान्यविषयकत्वेन कैयटेनापि तद्भाष्यस्य तथा व्याख्यातत्वेन च तत्प्रत्याख्यानपरस्य 'अकर्मकाणामित्युच्यते, न च केचित्कालभावाध्वभिरकर्मका' इत्यादिभाष्यस्यापि सामान्यविषयकत्वमेवोचितम् । किं च कालाध्वनोरिति सूत्रे भाष्ये 'अत्यन्तसंयोगे कालाध्वानौ कर्मवदिति वक्तव्यं, लाद्यर्थम्, आस्यते मासः, शय्यते क्रोशः, वत्करणं किमर्थम् । स्वाश्रयमपि यथा स्यात् । आस्यते मासं, शय्यते क्रोशम् । अकर्मकाणां भावे लो भवतीति भावे लो यथा स्यादि'

तदविवक्षा हि द्वेधा—तदन्वययोग्यधात्वर्थत्यागात्, सत्येव तस्मिन्नर्थे तत्र सम्बन्धित्वेनान्वयविवक्षणाद्वेति भावः। इदं कैयटानुरोधेन। परे त्वविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणम्। क्तादीनामविवक्षितकर्मकेभ्यः कृतपूर्वी कटमित्यादौ भाष्यकृता कैयटेन चाङ्गीकारात्। लुनातेर्निवृत्तप्रेषणाण्णिचि लावयति केदारं देवदत्त इत्यादौ केदारस्य कर्मद्वितीयान्तस्य णेरणावित्यत्र कैयटेन

---

त्युक्त्वा ततोऽकर्मकाणामित्युच्यते, न च केचित्कालभावाध्वभिरित्यादिप्रकृतसूत्रस्थभाष्याक्षरैरेव कर्मवद्वचनं प्रत्याख्यातम्। तच्च भाष्यं लः कर्मणीति सूत्रस्थाकर्मकपदविषयकमिति स्पष्टमेव। एवं चास्य सामान्यापेक्षत्वानङ्गीकारे तदसङ्गतिः स्पष्टैवेति बोध्यम्। एतेन गतिबुद्धीति सूत्रेऽकर्मकपदसामर्थ्यादत्रैव सूत्रेऽकर्मकपदेनाविवक्षितकर्मणां ग्रहणं न भवतीति कल्प्यते; न शास्त्रमात्रे। तेनाविवक्षितकर्मकेभ्यो भावे क्तपरकृतपूर्वीकटमित्यादिभाष्यकैयटाभ्यामधीगर्थेतिसूत्रस्थभाष्येणाकर्मकाधिकारे शुदृश्यादिभ्य आत्मनेपदविधानेन च न विरोधः। लावयति केदारं देवदत्त इति णेरणाविति सूत्रस्थकैयटप्रयोगस्तु चिन्त्य एवेति वाराणसेयोक्तमपास्तम्। तदन्वययोग्येति। कर्मान्वययोग्येत्यर्थः। धात्वर्थेति। व्यापारव्यधिकरणफलरूपधात्वर्थेत्यर्थः। तत्र = तादृशधात्वर्थे। कैयटादिमतं दूषयति। परे त्विति। अविवक्षितकर्मणामपीति। अपिना मूलोक्तार्थस्य समुच्चयः। क्तादीनामिति। भावेक्तादीनामित्यर्थः। अत्राप्येतादृशार्थस्य ग्रहणे कैयटसम्मतिं दर्शयति। लुनातेरिति। द्विधाभवनानुकूलव्यापारो लुनात्यर्थः। तत्र व्यापारांशत्यागे द्विधाभवनमेव तदर्थः। कर्मद्वितीयान्तस्येति। गतिबुद्धीत्यत्राकर्मकपदेनाविवक्षितकर्मणामग्रहणे तु तेन कर्मत्वाप्राप्तौ द्वितीयानुपपत्तिरिति भावः। अनेन प्रकृतसूत्रस्थकैयटानुरोधेनैतत्कैयटस्य चिन्त्यत्ववचनापेक्षयाऽनेकभाष्यानुगृहीतैतत्कैयटानु-

प्रयोगाच्च । न चात्रार्थान्तरे वृत्त्याऽकर्मकत्वं, न त्वविवक्षयेति वाच्यम् । तत्त्वप्रत्यभिज्ञयाऽर्थान्तरत्वाभावात् । तदुदाहरणं तु स्यन्दते इत्याद्यर्थकं नदी वहतीत्याद्याकरे स्पष्टम् । अधीगर्थेति सूत्रे कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते' इत्यत्र भावे लस्य भाष्ये उदाहृतत्वाच्च । यत्तु प्रकृतसूत्रे भाष्ये 'कालकर्मणामुपसंख्यानं कर्त्तव्यम् । न कर्त्तव्यम् । न च केचित्कालभावाध्वभिरकर्मकाः, त एवं विज्ञास्यामः—क्वचिद्येऽकर्मका इति' इत्युक्तम् । क्वचिदित्यस्य कालादेः कर्मसंज्ञाप्रयोजकव्याप्त्यादिरहितेऽर्थे इत्यर्थः । तस्यायं भावः । उक्तरीत्याऽकर्मकपदसामर्थ्यादत्र शास्त्रे-

---

रोधेन प्रकृतसूत्रस्थकैयटस्यैव चिन्त्यत्वकथनं युक्तमिति सूचितम् । केन चिदुक्तं तदाशयं खण्डयति । न चेति । अर्थान्तरेति । द्विधाभवनानुकूलव्यापाररूपार्थाद्विधाभवनरूपोऽर्थो भिन्न इति तदाशयः । तत्त्वप्रत्यभिज्ञयेति । विशेष्यांशत्यागेऽपि विशेषणांशे स एवायमिति प्रत्यभिज्ञयेत्यर्थः । किं च विशेष्यांशत्यागमात्रेणार्थान्तरत्वे 'धातोरर्थान्तरे वृत्ते' रित्यभियुक्तोक्ताकर्मकसंग्रहकारिकायामविवक्षात इत्यस्य पृथगुपादानवैयर्थ्यापत्तिरित्यपि बोध्यम् । तदुदाहरणमिति । अर्थान्तरे वृत्त्याऽकर्मकस्योदाहरणमित्यर्थः । मूलोक्तार्थे भाष्यान्तरविरोधं दर्शयति । अधीगर्थेति । मूलोक्तार्थाश्रयणे तु स्मृधातोर्देशकालाद्यतिरिक्तकर्मणः संभवेनाकर्मकत्वाभावाद्भावे लो न स्यादिति बोध्यम् । ननु प्रकृतसूत्रे भाष्येऽकर्मकग्रहणसामर्थ्येन क्वचिद्येऽकर्मका इत्युक्तम् । तत्र क्वचिदित्यस्य द्रव्ये कर्मणि प्रतियोगिनि सतीत्यर्थं कैयट आह । तथा च देशकालाद्यतिरिक्तद्रव्यकर्मप्रतियोगिकाभाववतामेवाकर्मकपदेन ग्रहणस्य भाष्यकृत्सम्मतत्वेनाविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणं भाष्यविरुद्धमित्याशङ्क्य तद्भाष्याशयं दर्शयति । यत्त्वित्यादिना । इत्यर्थ इति । कैयटोक्तव्याख्यायां हि 'काल-

**ऽकर्मकपदस्यावस्थान्तरे कर्मरहित इत्यर्थ इति। तादृशत्वञ्च सर्वथा द्रव्यकर्माभावात्तदविवक्षणाद्वेत्युभयविधमपि कृतपूर्वीत्यादिभाष्याद्राह्यं, विनिगमनाविरहाच्च। अत एवाकर्मकाधिकारे श्रुदृश्यादिभ्य आत्मनेपदविधानं सङ्गच्छते। अकर्मकशब्दे च धातुरेवान्यपदार्थः। अर्थभेदेन च शब्दभेदः। कर्मत्वेन कालाद्यतिरिक्तकर्मानन्वय्यर्थ-**

---

भावाध्वभि' रिति पूर्वं तृतीयानिर्देशादत्रापि केन चिदित्येव वदेदिति भावः। **अवस्थान्तरे इति।** कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितेऽर्थ इत्यर्थः। तेन मासमासयति देवदत्तमिति सिद्ध्यत्येव। तदानीं तस्य सकर्मकत्वेऽप्यवस्थान्तरेऽकर्मकत्वादिति बोध्यम्। एतेनावस्थान्तरेऽकर्मका इत्यर्थे तण्डुलाद्यन्वयकालेऽपि पच्धातोरकर्मकत्वापत्तिः। ओदनादिकर्माविवक्षास्थले कर्मशून्यस्य तस्योपलम्भादिति वाराणसेयोक्तमपास्तम्। न च केचिदित्यादिपूर्वभाष्यस्वारस्येन क्वचिदित्यस्य कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितावस्थायामित्यर्थस्यैवौचित्येन तादृशावस्थान्तरे पचादेरकर्मकत्वाभावात्। **तादृशत्वं चेति।** अवस्थान्तरे कर्मरहितत्वं चेत्यर्थः। उभयविधग्रहणे हेत्वन्तरमाह। **विनिगमनेति।** अत्रार्थे मानान्तरमाह। **अत एवेति।** उभयविधग्रहणादेवेत्यर्थः। मूलोक्तार्थाश्रयणे तु श्रुदृश्यादीनां देशकालाद्यतिरिक्तकर्मसंबन्धवत्त्वेनाकर्मकत्वाभावात्तेषां तदधिकारे पाठो व्यर्थः स्यादिति भावः। उक्तभाष्यद्वयबलात्तत्रैव तथा, नान्यत्रेति वैषम्ये तु न मानमिति बोध्यम्। नन्वकर्मकशब्दे कर्मसंज्ञाया अर्थसंज्ञात्वेनार्थस्यान्यपदार्थताया औचित्यादर्थस्य तत्त्वेऽन्वयासंभवः। अर्थस्य ण्यन्ताण्यन्तावस्थयोरसंभवात्। धातोरन्यपदार्थत्वे त्वविवक्षितकर्मणामकर्मकत्वासिद्धिः। तेषां क्वचित्कर्मसंबन्धदर्शनेन सारूप्याच्च एवैत इति प्रत्यभिज्ञाविषयत्वेनाकर्मकत्वव्यपदेश्यत्वासंभवादित्यत आह। **अकर्मकशब्दे चेति।** नन्वेवमुक्तदिशाऽविवक्षितकर्मणामकर्मकत्वव्यपदेशो न स्यादत आह। **अर्थभेदेन चेति।** अकर्मकशब्दे धातोरन्यपदार्थत्वखण्डनपरः

कत्वश्च तत्त्वमिति बोद्धव्यम् । न च केचिदिति भाष्येण धातुमात्रस्य कालकर्मकार्थवृत्तित्वमिति दर्शितम् । यद्वा 'यत्कर्म भवति न च भवति तेनाकर्मकाणां, न चैतत्कर्म क्वचिदपि न भवति' इति भाष्योक्तपक्षान्तरेण तत्सामर्थ्याद्व्यभिचारिद्रव्यकर्मरहितेत्यर्थो बोधितः । एवञ्च मासादिप्रयोगेऽपि तदवस्थायामेवाकर्मकत्वं बोद्धव्यम् । एतेनात्र सूत्रे न च केचिदिति प्रतीकमुपादाय 'कालादेरविवक्षया तैरकर्मकत्वसम्भवोऽस्त्येव' इत्याशङ्क्य अत्यन्ताविद्यमानकर्मकाणामेवात्र शास्त्रेऽकर्मकपदेन ग्रहणम्, अन्यथा पचादीनामविवक्षितकर्मत्वे लादयः स्युः' इति कैयटनोक्तं तत्परास्तम् ।

---

प्रकृतसूत्रस्थोद्योतग्रन्थस्तु अर्थभेदाच्छब्दभेदमनङ्गीकुर्वतः कैयटस्यानुरोधेनेति नानयोर्विरोध इति बोध्यम् । वस्तुतः कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिविवक्षासत्त्वेऽपि तदवस्थायामेवाकर्मकत्वमित्याह । यद्वेति । एतत्=कालादिरूपम् । तत्सामर्थ्यादिति । अकर्मकग्रहणसामर्थ्यादित्यर्थः । एतेनेति । यद्वा यत्कर्म भवतीत्यादिभाष्योक्तपक्षान्तरेण व्यभिचारिद्रव्यकर्मरहितानामेवाकर्मकत्वलाभेन तदेकवाक्यतया 'न च केचिदिति' पक्षेऽपि तथैवोचितत्वेनेत्यर्थः । अत्यन्ताविद्यमानेति । कालाद्यतिरिक्तेत्यादिः । परास्तमिति । किं च कालाध्वनोरिति सूत्रे लः कर्मणीति सूत्रस्थाकर्मकपदविषयेऽपीदृशस्यैव भाष्यस्य सत्त्वेन तत्राप्यत्यन्ताविद्यमानकर्मकाणामेव ग्रहणापत्तौ पूर्वोक्तकृतपूर्वीत्यादिभाष्यासङ्गत्यापत्तिः । किञ्चात्यन्ताविद्यमानकर्मकाणामेवात्र ग्रहणमिति पक्षे लुनातेर्निवृत्तप्रेषणाण्णिचि लावयति केदारं देवदत्त इति णेरणाविति सूत्रस्थकैयटप्रयोगे केदारस्य कर्मत्वानापत्तिः । एतेन कालाध्वनोरिति सूत्रस्थभाष्यसमानानुपूर्वीकस्यैतत्सूत्रस्थभाष्यस्य तद्भाष्यवैलक्षण्येन कैयटोक्तं व्याख्यानमनुचितम् । स्पष्टं चेदमुद्योते । नन्वविवक्षितकर्मणामप्यकर्मकत्वेन ग्रहणे

अतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति वदन्ति ॥

हृक्रोरन्य ॥ तत्राभ्यवपूर्वस्य हरतेर्भक्षणार्थत्वाद्विकारार्थकरोतेश्चाकर्मकत्वात्प्राप्ते, अर्थान्तरे चाप्राप्ते उभयत्र विभाषेयम् । अभिवादिदृ । हेतुमण्ण्यन्तस्याभिवादेः दृशिप्रकृतिकण्यन्तस्य चेत्यर्थः । अधिशीङ् । आधार इत्यनुवर्त्तते । तस्यैव कर्मत्वशक्तिमत्ताऽनेन बोध्यते । अभिनिविश । व्याख्यानाद् 'अभिनि' इति द्वन्द्वे तत्पूर्वो विशिति समासः । अभिनिवेश आग्रहः । सन्मार्गविषयकाऽऽग्रहवानित्यर्थः । व्यवस्थितेति । 'परिक्रयणे' इत्यतोऽन्यतरस्यांग्रहणानुवृत्तेरस्य वैकल्पिकत्वम् । अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः । एतच्च 'एष्वर्थेष्वभिनिविष्टानाम्' इति प्रतीके समर्थ-

---

पचादिष्वपि कर्मणोऽविवक्षायामकर्मकत्वनिबन्धनकार्याणि स्युरत आह । अतिप्रसङ्गस्त्विति । प्रयोगानुसारित्वाच्चाविवक्षाया न तत्र तदविवक्षेति नातिप्रसङ्ग इति भावः ॥

तत्रेति । तयोर्मध्य इत्यर्थः । हेतुमण्ण्यन्तस्येति । वद सन्देशवचन इति चौरादिकस्य स्वार्थण्यन्तस्य सत्त्वेऽपि हृक्रोरिति सूत्रविषये तत्सूत्रपठिते तद्वार्तिकस्थदृशिविषये चान्यस्यासंभवाद्धेतुमण्णिच एव ग्रहणीयतयाऽत्रापि तस्यैव ग्रहणमुचितमिति भावः । अत एवाभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तेनेति भाष्योदाहरणसङ्गतिरिति बोध्यम् । व्याख्यानादिति । नेरल्पाच्तरत्वेन पूर्वनिपाते कर्तव्येऽभेः पूर्वनिपातकरणमूलकादित्यर्थः । समास इति । उत्तरपदलोपिसमास इत्यर्थः । नन्वस्य वैकल्पिकत्वेन पापेऽभिनिवेश इत्यस्य सिद्धावपि द्वितीयाया अप्यत्र साधुत्वापत्तिः । व्यवस्थितविभाषया वारणं न युक्तम् । भाष्यासम्मतव्यवस्थितविभाषाणामप्रामाणिकत्वादत आह । अतिप्रसङ्गस्त्विति । एतच्चेति । अस्य वैकल्पिकत्वमित्यर्थः । कैयटोक्तं

सूत्रे कैयटे। परे त्वेतद्भाष्यप्रयोगाद् 'अभिनिविश' इत्यानुपूर्व्या अविकृताया यत्र श्रवणं तत्रैवैतत्सूत्रप्रवृत्तिः, अन्यतरस्यांग्रहणानुवृत्तौ व्यवस्थितविभाषाश्रयणे च न मानमित्याहुः। उपानु। अलुग्विकरणत्वाद् भ्वादेरेव ग्रहणमित्याह—वसतेरिति। भाष्ये 'अश्यर्थस्य न' इत्युक्तम्। मशकार्थो धूम इतिवदशिनिवृत्त्यर्थस्येति तदर्थः, तत्फलितमाह—अभुक्त्यर्थस्य नेति। 'उपोष्य रजनीमेकाम्' इत्यादौ कालाध्वनोरिति द्वितीया। ग्रामे उपवसतीत्यत्र 'ग्रामे वसन् त्रिरात्रमुपवसती'त्यर्थ इतीदं न कार्यमिति भाष्ये स्पष्टम् ॥

---

दूषयति। परे त्विति। न मानमिति। उक्तभाष्यप्रयोगबलेन मण्डूकानुवृत्त्याश्रयणे तदनुवृत्तावतिप्रसङ्गवारणाय भाष्यासम्मतव्यवस्थितविभाषाश्रयणेऽनभिधानाश्रयणे वा गौरवात्तद्बलेन निरुक्तकल्पनैव ज्यायसीति भावः। भ्वादेरेवेति। लुग्विकरणालुग्विकरणयोरिति परिभाषया निवासार्थस्यालुग्विकरणस्यैव ग्रहणमिति भावः। यथाश्रुतमूलस्यापाततः प्रतीयमानं भाष्यविरोधं परिहरति। भाष्ये इति। अश्यर्थस्येति। वसेरिति शेषः। निवृत्त्यर्थ इति। शाकपार्थिवादित्वान्निवृत्तिशब्दस्य लोप इति भावः। केचित्तु नेदमपूर्वं वचनं, किं त्वन्यतरस्यांग्रहणानुवृत्त्या व्यवस्थितविभाषाश्रयणेन च सिद्धम्। अत एव क्वचिदभुक्त्यर्थयोगेऽप्युपोष्य रजनीमेकामित्यादौ द्वितीयेत्याहुः, तदयुक्तमिति सूचयन्नाह। उपोष्येति। आदिना हरिदिनमुपोषित इत्यस्य संग्रहः। अस्य प्रत्याख्यानप्रकारमाह। ग्रामे वसन्निति। एवं च ग्रामस्य वासाधिकरणत्वस्यैव प्रसिद्धत्वेन शीघ्रोपस्थितिकत्वरूपादन्तरङ्गत्वात्प्रतीयमानवसिक्रियापेक्षमधिकरणत्वं तस्य। उपवासस्य तु स्वरूपतः कालेन नित्यसाकाङ्क्षतया तेनैवान्तरङ्गः संबन्धो न ग्रामादिनेति न तन्निमित्तं

उपपदविभक्तिमाह—उभेति। उपपदविभक्तीनां सम्बन्धोऽर्थः। विशिष्यानुक्तेः, षष्ठ्यपवादत्वाच्च। उभसर्वयोस्तसाविति विग्रहः। उभांशे उभयशब्दनिष्ठं प्रकृतित्वमुभशब्दे आरोप्य तत्प्रकृतिकत्वं षष्ठ्यर्थः। उभयशब्दसर्वशब्दप्रकृतिकतसन्तयोग इत्यर्थः। आम्रेडितान्तेष्विति। कृतद्विर्वचनेष्वित्यर्थः। धिक् कृष्णेति। धिगर्थो निन्दा। कृष्णाभक्तसम्बन्धिनी निन्देत्यर्थः। उपर्यादीनां समीपोर्ध्वदेशादिवृत्तित्वमर्थः। अभितः परित इत्यत्र

---

कर्मत्वमस्य, किन्त्वन्तरङ्गप्रतीयमानवसिक्रियापेक्षमधिकरणत्वमेवेति नार्थोऽनेनेति तदाशयः॥

उपपदविभक्तिभूतद्वितीयार्थं निरूपयन् सामान्यतस्तदर्थमाह। संबन्ध इति। नन्वेवमनिर्दिष्टार्था इति न्यायेन स्वार्थे स्युरत आह। षष्ठ्यपवादेति। उभसर्वयोरिति। तत्संबन्धिनोरित्यर्थः। तत्संबन्धित्वं च तत्प्रकृतिकत्वमिति भावः। तसाविति द्विवचननिर्देशेन तस्य द्वित्वाभावेन द्वित्ववत्तदन्तं ग्राह्यमिति सूच्यते। ननु नित्यमिति विभक्तसूत्रेणोभशब्दाद्वृत्तिविषये वृत्तेः पूर्वमेवायच्प्रवृत्तेः कथमुभशब्दप्रकृतिकत्वं तसिलोऽत आह। उभांशे इति। द्विरुक्तपरभागस्याम्रेडितसंज्ञाविधानादाम्रेडितान्तत्वं कृतद्विर्वचनानामेवोपर्यादीनां संभवतीत्याशयेनाह। कृतेति। उभयतः कृष्णमित्यस्य कृष्णसंबन्धिपार्श्वद्वयवर्तिन इति बोधः। समीपोर्ध्वदेशादीति। समीपोर्ध्वदेशसमीपदेशसमीपाधस्तनदेशवृत्तित्वानि क्रमेण द्विरुक्तोपर्यादीनामर्थ इति भावः। अत्र सामीप्यं द्वितीयार्थः। लोकसमीपोर्ध्वभागवृत्तिर्हरिरित्यादिक्रमेण बोधः। न च सामीप्यस्य षष्ठ्यर्थत्वाभावात्कथं तदपवादभूताया अस्यास्तदर्थत्वमिति वाच्यम्। समीप्यं न षष्ठ्यर्थ इत्यस्यान्वयिपदावाच्यसामीप्यं न षष्ठ्यर्थ इत्येवंतात्पर्यकत्वेन तद्वाच्यस्य तत्त्वे बाधकाभावात्। अत एव वृक्षस्य समीपमित्यादौ

'पर्यभिभ्यां चेति तसिल् । तत्राग्रस्योभयत इत्यर्थोऽन्यस्य सर्वत इत्यर्थ इति पर्यभिभ्याञ्चेत्यत्र भाष्ये । अन्तराऽन्तरेण । अन्तरेणेत्यटाबन्तसाहचर्यादन्तरेत्यटाबन्तम्, अन्तरेत्यतृतीयान्तसाहचर्याद‍न्तरेणेत्यतृतीयान्तम् । साहचर्यं सादृश्यम् । 'तद्यथा अस्य गोर्द्वितीयेनार्थ इति गौरेवानीयते नाश्वो न गर्दभः' इति दृष्टान्तपरभाष्येण सदृशानामेव प्रयोगे सहायतेत्यर्थस्य प्रतिपादनात् । तेन 'किमनयोरन्तरेण ज्ञातेन' इति सिद्धम् । अन्तरेण—विशेषेणेत्यर्थः । एवञ्चैतयोरव्यययोरेव ग्रहणम् । यद्वा अन्तराशब्दस्य प्रथमैकवचनान्तस्यानभिधानाद् 'अन्तरा' इत्यानुपूर्वीकमव्ययमेव प्रयोगेषु दृश्यते इति तत्साहचर्यादन्तरेणेत्यप्यव्ययमेव—तदुक्तं भाष्ये 'अन्तराशब्दोऽयमदृष्टापचारो निपात एवेति", इति बोद्धव्यम्

---

तत्र संबन्धे षष्ठीति बोध्यम् । इत्यर्थ इति । समीपपार्श्वद्वयदेशसमीपसर्वदेशावच्छेदेनेत्यनयोरर्थः । सामीप्यं द्वितीयार्थः । कृष्णसमीपपार्श्वद्वयदेशावच्छेदेन, तत्समीपसर्वदेशावच्छेदेन च गोपा इत्यर्थः । रामलक्ष्मणावित्यत्रेव परस्परसाहचर्यमत्र नियामकमित्याशयेनाह । अन्तरेणेत्यटाबन्तेति । ननु तयोरिवानयोर्न सहचरणं प्रसिद्धमत आह । साहचर्यमिति । सहचरितासहचरितयोरिति परिभाषायामीदृशमेव साहचर्यं विवक्षितमिति भावः । शास्त्रे ईदृशस्यैव साहचर्यस्य ग्रहणे मानमाह । तद्यथेति । द्वितीयेनेति । सहायेनेत्यर्थः । तेनेति । सदृशस्यैव ग्रहणेनेत्यर्थः । अन्तरेणेति । तृतीयान्तमेतत् । तद्भिन्नयत्माह । इत्यर्थ इति । एवं चेति । परस्परसाहचर्येणाटाबन्तातृतीयान्तयोरेव ग्रहणे चेत्यर्थः । विनापि परस्परसाहचर्यं भाष्यानुरोधेनाह । यद्वेति । अदृष्टापचार इति । अदृष्टव्यभिचार इत्यर्थः । नन्वन्तरायां पुरि वसतीत्यादावनिपातस्यापि तस्य प्रयोगदर्शनेन कथमयमदृष्टापचार इति चेन्न ।

**अवधित्वरूपः सम्बन्धो मध्यत्वान्वयी मद्ध्यार्थान्तराशब्दयोगे द्वितीयार्थः। तस्यैव सम्बन्धत्वेन बोधे षष्ठी। हर्यादिपदात्तु न द्वितीया, उपपदविभक्तेरिति न्यायेन तत्र प्रथमाया एव प्राप्तेः। युक्तग्रहणन्तु स्पष्टार्थम्॥**

---

अन्यत्र टाबन्तस्य प्रयोगेऽप्येतद्भाष्यबलेन प्रथमैकवचनान्तस्य तस्यानभिधानमित्याशयात्। वस्तुतस्तु युक्तग्रहणात्संबन्धिनि नित्यसाकाङ्क्षयोरेवैतयोर्ग्रहणम्। न च टाबन्तान्तराशब्दस्तथा। अनावृतदेशत्वेन परिधानीयत्वेनैव च तेन बोधादिति भाष्याशय इत्युद्योते स्पष्टम्। **द्वितीयार्थ इति।** एवं चान्तरा त्वां मां च हरिरित्यादौ त्वन्मदवधिकमध्यवृत्तिर्हरिरिति बोधः। अन्तरा हरिं न सुखमित्यत्राभाववांस्तदर्थः। हरिशब्दस्तद्भक्तिलाक्षणिकः। द्वितीयार्थः प्रतियोगित्वम्। एवं च हरिभक्तिप्रतियोगिकाभाववद्वृत्तिः सुखसत्ताभाव इति बोधः। एवमन्तरेणेति शब्दोऽप्युभयार्थकः। तद्योगेऽपि द्वितीयेत्यन्यत्र निरूपितम्। ननु तव मम चान्तरा कमण्डलुरित्यत्र त्वन्मत्संबन्धिमध्ये कमण्डलुरित्यर्थे कुतो न द्वितीयेत्यत आह। **तस्यैवेति।** द्वितीयार्थावधित्वादिरूपसंबन्धस्यैवेत्यर्थः। **संबन्धत्वेनेति।** सामान्यरूपेणेत्यर्थः। न केवलमत्रैवेदृशी रीतिः। किं तु यासामुपपदविभक्तीनां तत्तद्विशेषसंबन्धे विधानं कृतं, तासां विशेषरूपेणाविवक्षायां संबन्धत्वेन विवक्षायां षष्ठ्येव। अत एव चतुर्थी तदर्थेति सूत्रे भाष्ये गुरोरिदं गुर्वर्थमित्यत्र तादर्थ्यस्य संबन्धत्वेन विवक्षायां षष्ठ्युक्तेति बोध्यम्। नन्वनुयोगितया हरिशब्दार्थस्याप्यन्तराशब्दार्थेन योगात्ततोऽपि द्वितीया कुतो नेत्यत आह। **हर्यादीति। न्यायेनेति।** हरिशब्दार्थस्याध्याहृतास्तिक्रियाकर्तृत्वात्तेन न्यायेन द्वितीयां बाधित्वा प्रथमेति भावः। यत्तु कर्मप्रवचनीययुक्त इत्यत्रैव युक्तग्रहणात्प्रतियोगिवाचकादेव द्वितीया, नानुयोगिवाचकादिति कैश्चिदुक्तमयुक्तमिति ध्वनयन्नाह। **युक्तग्रहणमिति।** न्यायेनैव तद्दोषवारणसंभवे सामर्थ्याश्रयणं विफलमिति भावः। **स्पष्टार्थमिति।**

अधिकृत्येति । 'विभाषा कृञि' इत्यन्तमिति बोद्धव्यम् । महा-संज्ञाकरणन्त्वन्वर्थत्वाय । कर्म--क्रियां प्रोक्तवन्तः कर्मप्रवचनीयाः । बाहुलकात् कर्तरि भूते अनीयः । तेन सम्प्रति क्रियां न द्योत-यन्ति किन्तु क्रियानिरूपितं सम्बन्धविशेषं द्योतयन्ति । क्वचि-त्सम्बन्धविशेषाद्योतकेऽपि वचनसामर्थ्यात्संज्ञा, यथा—'अधिपरी अनर्थकौ' 'सुः पूजायाम्' इति च । निपातसञ्ज्ञासमावेशस्त्वस्या अप्युक्तः । लक्षणे इति । तत्सम्बन्धे लक्ष्यलक्षणभावरूपेऽनुना

---

नित्यसाकाङ्क्षितार्थबोधकयोस्तयोरुपस्थितिशैघ्र्येण ग्रहणे सिद्धे तद्ग्रहणस्य स्पष्ट-तया बोधनार्थमित्यर्थः । यत्तु त्वां मां चान्तरा विद्यमानस्य हरेर्धनमित्यादौ कारकविभक्तेरप्राप्त्या हर्यादिपदाद्द्वितीयापत्तिस्तदवस्थैवेति चिन्त्योऽयं शेखरः । तस्मात्संबन्धिप्रतियोगिवाचकादेव द्वितीयेत्यर्थस्वीकारेणैव हर्यादिपदाद्द्वितीया-पत्तिर्वारणीयेत्यौत्तराहाः, तन्न । तत्र परत्वाद्द्वितीयां बाधित्वा षष्ठीप्रवृत्त्या दोषाभावेन तादृशनियमस्यानावश्यकत्वात् । न चात्र षष्ठ्यपवादत्वं द्वितीयाया इति भ्रमितव्यम् । यत्संबन्धबोधिका द्वितीया, तत्र संबन्धेऽपवादत्वेन षष्ठ्य-प्राप्तावपि प्रकृतेऽन्यत्र स्वस्वामिभावादिसंबन्धे तदपवादत्वस्य दुर्वचत्वात् ॥

तेनेति । भूते प्रत्ययाङ्गीकारेणेत्यर्थः । द्योतयन्तीति । इत्यर्थो लभ्यत इति भावः । इति चेति । चेन अतिरतिक्रमणे चेत्यस्य संग्रहः । अस्या अपीति । अपिना गत्यादिः । सूत्रे लक्षणशब्दः भावप्रधानो निर्देशः । एवं च लक्षणत्व इत्यर्थः । तस्य च निरूपकांशे नित्यसाका-ङ्क्षतया लक्षणत्वनिरूपके लक्ष्यत्वे इत्यर्थो लभ्यते । तथा च लक्ष्यलक्षण-भावे द्योत्ये इत्यर्थः फलतीत्याशयेनाह । तत्संबन्धे इति । लक्षणत्व-निरूपकसंबन्ध इत्यर्थः । प्रत्यासत्तेराह । अनुनेति । नन्वनोः क्रियायोगा-

द्योत्ये इत्यर्थः। अपवाद इति। तद्द्योत्यसम्बन्धस्य क्रियान्वयात्तयोः प्राप्तिः। तेन प्रकृते गतिर्गताविति निघातो न। द्वितीयार्थो लक्ष्य लक्षणभावः सम्बन्धो, हेतुश्च अनुना द्योत्यते। लक्षणत्वञ्च ज्ञान-जनकज्ञानविषयत्वम्। जपज्ञानेन हि कालविशेषविशिष्टा वृष्टिर्ज्ञा-प्यते। जपाभिन्नहेतुज्ञानजन्यज्ञानविषयो वर्षणामिति बोध इत्याह—हेतुभूतेति। पराऽपीति। कर्मप्रवचनीयसंज्ञावकाशो हेतुत्वाविव-क्षायां, हेतुतृतीयावकाशो धनेन कुलमिति, प्रकृते च हेतुत्वविव-क्षायां परत्वात्तृतीयाप्राप्तिरिति भावः। पुनःसंज्ञेति। लक्षणेत्थंभूते त्येव सिद्धे पुनःसंज्ञाकरणबोधितपुनर्द्वितीयाविधानसामर्थ्यादित्यर्थः। एतेन संज्ञया विजातीयत्वाद्विभक्तिबाधः कर्तुमशक्य इति परा-स्तम्। स्पष्टश्चेदं भाष्ये। तृतीयार्थे। तृतीयाशब्देन तन्निमित्तशब्दः

---

भावात्कथं तयोः प्राप्तिरत आह। तद्द्योत्येति। तयोरिति। गत्युपसर्ग-संज्ञयोरित्यर्थः। तेन = अस्य गत्युपसर्गसंज्ञापत्रादत्वेन। द्वितीयार्थ इति। अस्योभयत्रापि संबन्धः। कर्मप्रवचनीय इत्यन्वर्थसंज्ञाबलेन क्रियानिरूपित-संबन्धविशेषद्योतकताया लाभादाह। लक्ष्येति। पुनः संज्ञाकरणबोधितपुन-र्द्वितीयाविधानसामर्थ्यादस्या हेतुतृतीयाबाधकताया लाभेन तदर्थकत्वस्यापि न्याय्यत्वादाह। हेतुश्चेति। द्वितीयार्थो हेतुरपीत्यर्थः। हेतुत्वं न लक्षणत्व-मित्याह। लक्षणत्वं चेति। वृष्टेः पूर्वं ज्ञातत्वादाह। कालविशेषेति। वृष्टेः पूर्वं ज्ञातत्वेऽपि कालविशेषवैशिष्ट्येन तस्या अज्ञानमिति भावः। ज्ञाप्यत इति। जपज्ञानेन जपकालज्ञानद्वारा तदुत्तरकालवैशिष्ट्येन वृष्टिर्ज्ञाप्यत इति भावः। अत एव कदा वृष्ट इति प्रश्ने इदमुत्तरं संगच्छते। जपाभिन्नहेतुलक्षणकं वर्षणमिति बोधः। फलितमाह। जपाभिन्नेति। एतेनेति। पुनर्द्वितीयाविधान-सामर्थ्येन द्वितीयायास्तद्बाधकत्वाङ्गीकारेणेत्यर्थः। कर्तृकरणादिरूपे तृतीयार्थे कारकविभक्तेरन्तरङ्गत्वात्प्रवृत्तेरस्यास्संज्ञायाः फलाभावादाह। तन्निमित्तेति।

सहयुक्त इत्यत्रोपात्तोऽनन्तरत्वात् सहशब्दो लक्ष्यते। तदर्थे साहित्ये द्योत्ये इत्यर्थः। साहित्यरूपः सम्बन्धोऽनुद्योत्यो द्वितीयार्थ-स्तदाह—नद्येति। क्त इति। कर्तरीति भावः। उपोऽधिके च। चाद्धीने। सप्तमीति। यस्मादधिकमित्यनेनेति भावः। उपखार्यां द्रोण इति यथा। खार्यपेक्षयाऽधिकत्ववान् द्रोण इत्यर्थः। तेनोभय-मस्तीति फलति। इत्थंभूतः—कश्चित्प्रकारं प्राप्तः, स आख्यायतेऽने-

---

साहित्यरूपस्संबन्ध इति। स च प्रकृतेऽनुयोगित्वलक्षणः। एवं च नद्यनुयोगिकसंबन्धप्रतियोगित्ववती सेनेति बोधः। नचैवं बोधे नद्याः कर्म-प्रवचनीयद्योत्यसंबन्धप्रतियोगित्वाभावाद्द्वितीया न स्यादिति वाच्यम्। तद्द्यो-त्यानुयोगित्वे स्वनिष्ठाधारतानिरूपिताधेयतासंबन्धेन नद्या अन्वयात्तद्द्योत्य-संबन्धप्रतियोगित्वाक्षतेः। चाद्धीन इति। हीने, उपोधिके चेति सूत्रयोर्हीनाधिक-शब्दौ भावप्रधाननिर्देशेन हीनत्वाधिकत्वपरौ। हीनत्वं चापकर्षः। अधिकत्वं चोत्कर्षः। एवं चोपहरिं सुरा इत्यत्र स्वावधिकापकर्षरूपः संबन्ध उपद्योत्यो द्वितीयार्थः। हरिप्रतियोगिकापकर्षवन्त इति बोधः। उपपरार्थे हरेर्गुणा इत्यत्र स्वावधिकोत्कर्षरूपः संबन्ध उपद्योत्यः सप्तम्यर्थः। परार्धप्रतियोगिकोत्कर्षवन्तो हरिसंबन्धिगुणा इति बोधः। खार्यपेक्षया द्रोणस्य न्यूनपरिमाणत्वेन तदपेक्षया आधिक्यासंभवाद्वाक्यतात्पर्यमाह। तेनोभयमिति। खारी द्रोणश्चेत्यर्थः। इत्थंभूत इति। प्रथमान्तादिदमस्थमुः। अत्रेदमा पराम्रष्टव्यस्य सन्निहितस्य कस्य चिदभावात्प्रकारविशेषमात्रवृत्तिरित्थंशब्दः। प्राप्त्यर्थाद्भवतेराधृषाद्वेति णिजभावपक्षे गत्यर्थेति कर्तरि क्तः। अव्ययस्यापीत्थंशब्दस्य वृत्तिविषये सत्त्वधर्मो-पादानात्कर्मद्वितीयान्तस्य तस्य भूतशब्देन श्रितादिषु गम्यादीनामिति समासः। एवं चेत्थंभूतशब्दस्य प्रकारविशेषं प्राप्त इत्यर्थः। आख्यानं च निरूपण-

नेति इत्थंभूताख्यानं—प्रकारविशेषनिरूपकम्। भागशब्देनार्श-आद्यजन्तेन तत्स्वामी उच्यते। वीप्सायां द्विर्वचनविशिष्टवृक्षशब्द-बोद्ध्यत्वादाह—विषयभूतेष्विति। वृक्षं प्रतीति। वृक्षप्रकाशेन विद्युद्विद्योतदेशज्ञानाद् वृक्षो लक्षणम्। वृक्षं वृक्षमिति। वृक्षस्य व्यापकतासम्बन्धेनान्वयो यद्यपि द्विर्वचनबलादेव, तथापि प्रत्यादि-

---

मित्याह। निरूपकमिति। भागपदार्थः स्वत्ववान्। तद्वाचकादर्श आद्यचि तादृशपदार्थस्वामिलाभ इत्याह। तत्स्वामीति। विषयभूतेष्विति। वीप्साद्योतकस्यान्यस्य सत्त्वेन प्रत्यादीनां तद्द्योतकत्वाभावाद्द्योत्येष्वित्यनुक्त्वा एवमुक्तमिति भावः। प्रत्यादीनां तद्विषयत्वं च तद्घटितसंबन्धनिर्णायकत्वमिति बोध्यम्। वृक्षं प्रति विद्योतते विद्युदित्यत्र वृक्षप्रकाशेन विद्युद्विद्योतनज्ञानाद्वृक्षो लक्षणं, विद्युद्विद्योतनं लक्ष्यम्। लक्ष्यलक्षणभावो द्वितीयार्थः। प्रत्यादयस्त-द्द्योतकाः। वृक्षलक्षणकं विद्युद्विद्योतनमिति बोधः। भक्तो विष्णुं प्रतीत्यत्र भक्तत्वादिप्रकारविशेषरूपः संबन्धः प्रत्यादिद्योत्यो द्वितीयार्थः। भक्तपदार्थे विशेषणस्यापि तस्य संबन्धघटकत्वम्। भक्तिश्चाराध्यत्वप्रकारकज्ञानम्। प्रकृ-त्यर्थस्य विषयतया विभक्त्यर्थेऽन्वयः। एवं च हरिविषयकाराध्यत्वप्रकारकज्ञान-वानिति बोधः। लक्ष्मीर्हरिं प्रतीत्यत्र स्वामित्वनिरूपितस्वत्वं द्वितीयार्थः। प्रत्यादयस्तद्द्योतकाः। तस्य च लक्ष्मीपदार्थेऽन्वयः। एवं च हरिस्वामिका लक्ष्मीरिति बोधः। वृक्षं वृक्षं प्रति सिञ्चतीत्यत्र व्याप्यव्यापकभावो द्विर्वच-द्योत्यो द्वितीयार्थः। प्रकृत्यर्थस्याधेयत्वसंबन्धेनान्वयः। वृक्षव्यापकं सेचन-मिति बोधः। वीप्साविषये प्रत्यादीनां कर्मप्रवचनीयत्वमुपपादयति। वृक्षस्ये-ति। व्याप्यत्वविशिष्टस्येत्यादिः। व्यापकतासंबन्धेनेति। स्वनिष्ठव्याप्यता-निरूपितव्यापकतासंबन्धेनेत्यर्थः। द्विर्वचनबलादेवेति। नित्यवीप्सयोरि-

सत्त्वे सोऽपि तन्निर्णायक इति सम्बन्धपरिच्छेदकत्वं बोद्धव्यम् । वृक्षादीनां सेचने कर्मत्वेऽपि तत्त्वेनाविवक्षायामनेन द्वितीया । किं च यद्यत्र कर्मणि द्वितीया स्यात्तदा प्रतिना सामर्थ्याभावात्प्रतिवृक्षमिति समासानापत्तिः । किं च प्रत्यादेः क्रियाविशेषकत्वेऽन्वर्थतया कर्मप्रवचनीयसंज्ञाया एवानापत्तिः । अत एव भाष्ये 'किमर्थं पुनरिदमुच्यते?, न चोपसर्गसंज्ञाबाधनार्थं, क्रियायोगाभावात्'

---

त्यस्य समभिव्याहृतगुणक्रियानिरूपितव्याप्यत्वप्रकारकेच्छाविषयीभूतो योऽर्थस्तद्वाचकस्य पदस्य द्वे भवत इत्यर्थात्कृतद्विर्वचनस्य वीप्साविषयत्वं, तस्य व्याप्यव्यापकभावसंबन्धेन समभिव्याहृतगुणक्रियाभ्यामन्वयश्च द्विर्वचनबलाल्लभ्यत इति भावः । **सोऽपीति** । प्रत्यादिरपीत्यर्थः । **तन्निर्णायक इति** । तेन संबन्धेनान्वयद्योतक इत्यर्थः । व्यतिलुनीत इत्यादौ द्योतकसमुच्चयस्य दृष्टत्वात् । एवं च लक्षणादिसाहचर्यं कर्मप्रवचनीयत्वं च तेषां युक्तमिति भावः । समासस्तु नात्र, अर्थमर्थं प्रतीति सरूपसूत्रादिस्थभाष्यप्रयोगेण यदा द्विर्वचनं, तदा तेषां वीप्सावृत्तित्वाभावलाभात् । अत्र वृक्षादीनां सेचनक्रियां प्रति कर्मत्वादुपपदविभक्तेरिति न्यायेन कर्मण्येव द्वितीया । कर्मप्रवचनीयसंज्ञाफलं त्वत्रानुपसर्गत्वात्षत्वाभाव इति दीक्षिताद्युक्तिं कटाक्षयन् सिद्धान्तमाह । **वृक्षादीनामिति** । तन्नयेऽतिप्रसङ्गमपि दर्शयति । **किंचेति** । दोषान्तरं तत्राह । **किंचेति** । **क्रियाविशेषकत्वे** = क्रियाविशेषद्योतकत्वे । **अनापत्तिरिति** । अन्वर्थसंज्ञाबलेन संप्रति क्रियाविशेषाद्द्योतकानां तन्निरूपितसंबन्धविशेषद्योतकानामेव तत्त्वलाभादिति भावः । अत्रार्थे भाष्यसम्मतिमाह । **अत एवेति** । क्रियाविशेषद्योतकत्वाभावादेवेत्यर्थः । **इदमिति** । लक्षणेत्थमिति सूत्रमित्यर्थः । अत्र कर्मप्रवचनीयसंज्ञाया एव द्वितीयाप्रयोज-

इत्युक्त्वा द्वितीयार्थमिति सिद्धान्तितम्। अत एव प्रत्यर्थं शब्दनिवेश इत्यादावर्थस्य निवेशनक्रियानिरूपिताधिकरणत्वेऽपि अर्थमर्थं प्रतीति विग्रहो भाष्ये दर्शितः। वृत्तिविषये प्रतिरेव वीप्साया अपि द्योतक इत्यन्यदित्यास्ताम्। फलान्तरमप्याह—अत्रेति। यदत्रेति। यद्भवतु मम भागः स्यादित्यर्थः। कुतोऽधीति। कुत इत्यपादाने पञ्चमी। द्वितीया तु न, कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वरूपस्य कर्मप्रवचनीययुक्तत्वस्याभावात्। गतिसंज्ञाबाधादिति। धात्वर्थमात्रद्योतकत्वेन क्रियायोगाद्गतित्वं प्राप्तं, विशेषद्योतकत्वाभावात्त्वनर्थकत्वव्यवहारोऽपीति भावः। सुसिक्तमिति। सेकगतपूज्यत्वद्योतकः सुः। क्रियापूज्यत्वकृते तत्तत्क्रियाकर्तुः पूज्यत्वे गम्ये एवैषा संज्ञा। अत एव 'सुषिक्तं किं तवेत्यत्र न। अतिक्रमणम्—उचितादधिकानुष्ठानम्। चात् पूजायामित्यनुकृष्यते। अतिदेवानिति। देवेभ्योऽधिको देवपूज्य इति वाऽर्थः। द्वितीये

---

कत्वे मानान्तरमाह। अत एवेति। दर्शित इति। तस्याधिकरणत्वेऽपि तदविवक्षायामनेन द्वितीयेति तदाशयः। वृत्तिविषये द्विर्वचनाभावादाह। प्रतिरेवेति। अत एव न तत्र द्विर्वचनम्। वीप्साया अपीति। अपिना व्यापकतासंबन्धेनान्वयस्य समुच्चयः। यच्छब्दो बुद्धिस्थत्वेन भागवाचीत्याशयेनाह। यद्भवत्विति। मत्संबन्धियद्भागकर्तृका एतदधिकरणिका सत्ता प्रेरणाविषया, तत्संबन्धिप्रेरणाविषयं दानमिति बोधः। अभावादिति। अत्र तद्द्योत्यसंबन्धस्यैवाभावेन तत्प्रतियोगित्वस्य दुर्वचत्वादिति भावः। नन्वानयोरनर्थकत्वेन क्रियाविशेषद्योतकत्वाभावात्कथं गतिसंज्ञाप्राप्तिरत आह - धात्वर्थेति। आङसहितेत्यादिः। नन्वेवं कथमनर्थकत्वमत आह। विशेषेति। आङ्द्योत्यार्थापेक्षया विशेषेत्यर्थः॥

कुगतीति समासस्याभावस्तु अनभिधानात् । आद्ये तु प्राप्तिरेव न, 'स्वती पूजायामेव' इत्युक्तेः ॥

अपिः पदार्थ । पदस्य—अप्रयुज्यमानपदान्तरस्य अर्थः—पदार्थः । सर्पिषोऽपीति । अत्र बिन्दुरित्यादेः पदस्यार्थोऽपिद्योत्यः । तदुक्तं वृत्तिकृता—'मात्रा बिन्दुः स्तोकमित्यस्यार्थेऽपिर्वर्तते' इति । सम्भावनायां लिङिति । उपसंवादाशङ्कयोश्चेति सूत्रभाष्ये पठितेन, उपसंवादाशङ्कयोर्लिङित्यनेन । तच्च लोकसाधारणमित्यपि तत्रैव भाष्ये स्पष्टम् । तत्राऽशङ्का—उत्प्रेक्षा । सम्भावनाऽप्युत्कटकोटिका शङ्केवेति भावः । कर्मप्रवचनीयत्वात्तद्द्योत्यसम्बन्धमाह—तस्या एवेति । सम्भावनाया एवेत्यर्थः । कर्तृदौर्लभ्यमिति षष्ठीतत्पुरुषः । कर्तृपदं प्रकृताभिप्रायम् । सर्पिषोऽपि पिबेदित्यादौ कर्मदौर्लभ्येत्यादि बोद्धव्यम् । तत्र बिन्दोस्तद्दौर्लभ्यप्रयुक्तदौर्लभ्यसम्बन्धस्य द्योतकोऽपिः । सम्बध्यत इति । स्यात्पदवाच्यक्रियायामपिद्योत्यबिन्दोः कर्तृतया, द्योत्योक्तसम्बन्धेन चान्वयादिति भावः । तदाह—अपिशब्दबलेनेत्यादि । एवञ्च सर्पिरवयवबिन्दुदौ-

---

अपिद्योत्य इति । तद्वाचकपदाध्याहारोऽपिद्योत्य इत्यर्थः । अपिर्वर्तत इति । तद्द्योतकोऽपिरित्यर्थः । इत्यनेनेति । एतेन संभावनेऽलमित्यत्र संभावन इति योगविभागेनात्र लिङिति केनचिदुक्तं, यथान्यासे संभवनायां लिङोऽप्राप्तिरित्याशयेन प्रार्थनायामत्र लिङिति हरदत्तोक्तं चापास्तमिति सूचितम् । ननु तत्सूत्रस्य छान्दसत्त्वेनास्यापि तत्त्वादयुक्तमिदमित्यत आह । तच्चेति । ननु ततोऽपि कथं संभावनायां लिङ्लाभ इत्यत आह । तत्रेति । प्रकृताभिप्रायमिति । एवं च कर्तृपदं कारकपरं, सर्पिषोऽपि स्यादित्यत्र

लभ्यप्रयुक्तदौर्लभ्यवती तत्कर्तृका सम्भावनाविषया सत्तेति बोधः। विशिष्टसत्तायाः सम्भावनाविषयत्वबोधे दौर्लभ्यस्यापि संभावनाविषयत्वमनुभवसिद्धम्। नन्वेवं कर्मप्रवचनीयद्योत्येऽर्थे सर्पिषोऽन्वयेन तस्य कर्मप्रवचनीययुक्तत्वाद्द्वितीया स्यादत आह—द्वितीयात्विति। न त्वपिनेति। बिन्दुना योगेऽप्यपिद्योत्यसम्बन्धेनानन्वय इत्यर्थः। कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वमेव तद्युक्तत्वम्, प्रकृते चापिद्योत्यस्योक्तसम्बन्धस्य बिन्दुः प्रतियोगी, न सर्पिरिति भावः। यदा स्पष्टप्रतिपत्तयेऽपिद्योत्यस्यापि बिन्दोः प्रयोगस्तदापि द्वितीयां बाधित्वोपपदविभक्तेरिति प्रथमैव, तत्र कारकविभक्तित्वं क्रियाजनकत्वार्थकविभक्तित्वमिति दिक्। संज्ञाफलमाह—अनुपसर्गत्वादिति। अपि स्तुयादित्ति पूर्ववल्लिङ्। क्रियाविषयं शक्यत्वादिना सम्भावनमपिद्योत्यम्। प्रकृतेऽवाङ्मनसगोचरं विष्णुमपि स्तुयादिति शक्त्युत्कर्षाविष्करणम्। अत्युक्तिरसम्भाव्यार्थसम्भा-

---

धातोरकर्मकत्वात्कर्तृपदमेवोपात्तमिति भावः। विशिष्टसत्ताया इति। दौर्लभ्यविशिष्टसत्ताया इत्यर्थः। संभावनाविषयत्वमिति। उत्कटकोटिकशङ्काविषयत्वमित्यर्थः। एवं च बिन्दुदौर्लभ्ये औत्कट्यं लभ्यत इति भावः। संबन्धेनान्वय इति। युक्तग्रहणात्कर्मप्रवचनीयद्योत्यसंबन्धप्रतियोगिवाचकादेव द्वितीया, सर्पिष इत्यस्य तु न तत्त्वम्। बिन्दोस्तत्त्वेऽपि न प्रयोग इति भावः। वस्तुतस्तस्य प्रयोगेऽपि न द्वितीयेत्याह। यदेति। ननु प्रथमायाः कारकाधिकारबहिर्भूतत्वात्कथं तत्त्वमत आह। तत्रेति। पूर्ववदिति। संभावनायामित्यर्थः। क्रियाविषयमिति। स्तुतिक्रियाविषयमित्यर्थः। विष्णुकर्मिका एतत्कर्तृका शक्यत्वेन संभाव्यमाना स्तुतिरिति बोधः। ननूत्कटकोटिकशङ्काया एव संभावनापदार्थत्वेन प्रसिद्धतया तस्य परममूलोक्तार्थोऽयुक्त इत्यत

वनम् । सम्भावनपदस्येदृशार्थकत्वे व्याख्यानमेव शरणम् । विष्णुविषयायाः शक्यत्वसम्भावने चान्यविषया निश्चयेन शक्या कर्तुमिति फलति । शक्त्युत्कर्षमित्यौचित्योत्कर्षादेरप्युपलक्षणम् । 'अपि वेदान्तपारगं हन्यात्' इत्यादौ हननक्रियायां सम्भावनाविषयौचित्योत्कर्षद्योतनात् । संभावितौचित्यस्य चानुष्ठानमयुक्तमिति अस्य स्वार्थे तात्पर्याभावो धर्मशास्त्रोक्तः सङ्गच्छते । कामचारः— इच्छया प्रवृत्तिः । स्तुहि, मा वा; यथेष्टं कुर्विति यावत् । प्रैषानिसर्गेति लिङ् । अपि स्तुयाद् वृषलमिति । उपसंवादेति सूत्रपठितवार्तिकेन परेणान्तरङ्गेण च गर्हायां लडपीति बाधित्वा सम्भावने लिङ् । क्रियागतं गर्ह्यत्वमपिद्योत्यं वृषलपदसमभिव्याहारात् स्तुतेर्गर्ह्यत्वं फलति । तदेव धिगित्यादिनाऽनूद्यते । अपि सिञ्चेत्यादि । अपिद्वयेन मिलितेन समुच्चयद्योतनात्प्रत्येकं संज्ञायामुभयत्रापि षत्वाभावः । कालाध्वनो । अत्यन्तसंयोगो—निरन्तरं संबन्धः । स च गुणक्रियाद्रव्यैरभावेन च । तेन मासं भोजनाभाव इत्यादेः

---

आह । संभावनपदस्येति । उपलक्षणत्वे हेतुमाह । अपिवेदान्तेति । अत्र क्रियागतमौचित्यं संभावनाविषयत्वेन द्योत्यम् । वेदान्तपारगकर्मकमेककर्तृकमुचितं हननं संभावनाविषय इति बोधः । संभावनाविषयक्रियायामौचित्योत्कर्षबोधे औचित्ये संभावितत्वं व्यञ्जनया प्रतीयत इति भावः । संभावितेति । अस्यात एवेत्यादिः । उपलक्षणत्वाङ्गीकारादेवेत्यर्थः । ननु गर्हायां लडपीत्यस्य सर्वलकारापवादतया कथमत्र लिङित्यत आह । वार्तिकेनेति । तस्य सूत्रबाधेऽपि वार्तिकाबाधादिति भावः । तत्कर्तुरिति । वृषलस्तुतिकर्तुरित्यर्थः । नन्वपिशब्देनैव निन्दाप्रतीतौ धिक्शब्दप्रयोगो व्यर्थोऽत आह । अनूद्यत इति । निरन्तरसंबन्ध इति । व्याप्तिरूप इत्यर्थः । स च केनेत्याकाङ्क्षायामाह । स चेति । तेनेति । अभावेनात्यन्तसंयोगेऽपि द्वितीयाङ्गीकारेणेत्यर्थः ।

**संग्रहः। गुणादिभिः कालाध्वनोरत्यन्तसंयोगे प्रत्यासत्त्या कालाध्ववृत्तिभ्यां द्वितीयेत्यर्थः। मासमधीत इति। बुद्धिस्थयावदवयवसम्बन्धरूपा व्याप्तिर्द्वितीयाऽर्थः। एकादश्यां रात्रौ जागृयादित्यादावधिकरणत्वविवक्षणान्न द्वितीया॥**

**॥ इति द्वितीया ॥**

---

ननु कालाध्वनोः गुणक्रियादिभिरत्यन्तसंयोगे द्वितीयेत्युक्त्या गुणाद्यन्यतमे कालाध्वानिष्ठव्याप्यतानिरूपितव्यापकताविवक्षायां द्वितीयेत्यर्थलाभेऽपि द्वितीयाप्रकृतेरलाभ इत्यत आह। **प्रत्यासत्त्येति**। व्याख्यानात्स्वरूपस्य गुणादिभिरत्यन्तसंयोगस्यासंभवाच्चात्र न स्वरूपग्रहणमित्याह। **वृत्तीति**। नन्वेकमासव्यापकाध्ययनस्थलेऽपि मासान्तरेऽध्ययनाभावसत्त्वेन मासव्यापकताऽध्ययने न स्यादत आह। **बुद्धिस्थेति**। चैत्रादिकर्तृकाध्ययने मासत्वावच्छिन्नव्यापकताया असंभवाद्बुद्धिस्थतत्तन्मासव्यापकत्वस्यैव ग्राह्यतया मासान्तरेऽध्ययनाभावेऽपि न प्रयोगानुपपत्तिरिति भावः। **अवयवेति**। दिनरूपेत्यर्थः। मासपदेन चावयवानतिरेकेण त्रिंशद्दिनसमूह उच्यते। एवं च बुद्धिस्थो यस्त्रिंशद्दिनसमूहस्तत्संबन्धियावदवयवीति योजना। **व्याप्तिरिति**। व्यापकत्वमित्यर्थः। तत्त्वं च त्रिंशत्त्ववन्निष्ठप्रतियोगिव्यधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। प्रतियोगिव्यधिकरणेत्युक्तेर्दिनावान्तरदण्डादावध्ययनाभावेऽपि न दोषः। एकादिनानध्ययने च न तथा प्रयोगः। अत्र दिनपदेन चावयवातिरेकेण सूर्योदयावधिसूर्योदयान्तरपर्यन्तक्षणसमूह उच्यते। एतेनैकैकक्षणव्यक्तेरपि मासत्वाधिकरणतया तत्र प्रतियोगिव्यधिकरणाध्ययनाभावसत्त्वेन बाध इति शङ्का निरस्ता। अन्यत्र द्वितीयातिप्रसङ्गं निराचष्टे। **एकादश्यामिति**। **न द्वितीयेति**। उपपदविभक्तेरिति न्यायेनेत्यर्थः॥

॥ इति द्वितीया ॥

**स्वतन्त्रः कर्ता । कारकाधिकारात् क्रियाजनने स्वतन्त्र इत्यर्थ· स्तदाह—क्रियायामिति । स्वातन्त्र्यञ्च कर्तृप्रत्ययसमभिव्याहारे प्रधानीभूतधात्वर्थाश्रयत्वम् । पक्वस्तण्डुलो देवदत्तेनेत्यत्र फलस्य प्राधान्येऽपि देवदत्तस्य कर्तृत्वसिद्धये 'कर्तृप्रत्ययसमभिव्याहारे'**

---

स्वतन्त्रशब्दस्य साकाङ्क्षत्वादाह । कारकेति । प्रधानीभूतेति । प्राधान्यं च तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वरूपम् । स्वतन्त्रः कर्तेति सूत्रस्वरसात् । अत्र कर्तृप्रत्ययसमभिव्याहार इत्यनुक्तौ कर्मप्रत्ययसमभिव्याहारे पक्वस्तण्डुलो देवदत्तेनेत्यादौ सुप आत्मन इति सूत्रस्थभाष्यप्रामाण्येन फलस्यैव प्राधान्यात्फलनिष्ठविशेष्यतानिरूपितप्रकारतापन्नव्यापारस्य निरुक्तप्राधान्याभावात्तदाश्रयस्य देवदत्तादेः कर्तृत्वानुपपत्तिः । अत उक्तं कर्तृप्रत्ययसमभिव्याहार इति । तत्सत्त्वे तु तृजादिसमभिव्याहारे देवदत्तादेर्निरुक्तप्रधानीभूतधात्वर्थाश्रयत्वस्य सत्त्वेन तदादायात्रापि कर्तृत्वोपपत्तिरिति भावः । अत्र धात्वर्थाश्रयत्वं व्यापारतावच्छेदकसंबन्धेन ग्राह्यम् । अतः कालिकादिसंबन्धेन तदाश्रये नातिव्याप्तिरिति बोध्यम् । ननु कर्तृलक्षणे कर्तुः प्रवेशेनात्माश्रयापत्तिः। न च कर्मप्रत्ययासमभिव्याहारे धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वं प्राधान्यम् । तदुपहितव्यापाराश्रयत्वं कर्तृत्वमिति विवक्षणान्न दोष इति वाच्यम् । एवमपि कर्तृलक्षणे कर्मणः कर्मलक्षणे कर्तुश्च प्रवेशेनान्योन्याश्रयस्य तदवस्थत्वादिति चेदत्र गुरुचरणाः । कर्तृप्रत्ययेत्यनेन कर्तृवाचकतृजादिप्रत्यय एव ग्रन्थकृता विवक्षित इति नात्माश्रयशङ्का । अत एवैतत्फलतया पक्वस्तण्डुल इत्यादौ फलस्य प्राधान्येऽपि देवदत्तादेः कर्तृत्वसिद्धिरिति कृदन्तस्थलप्रदर्शनं मञ्जूषायामत्र च स्वरसतः संगच्छते । अन्यथा पच्यत इत्याख्यातस्थलमपि प्रदर्शयेदिति वदन्ति । एतेनैतद्दोषवारणाय कर्तृप्रत्ययसमभिव्याहार इत्यस्य कर्मप्रत्ययासमभिव्याहार इत्यर्थं वदन्त आचार्याः परास्ताः ।

**इति। णिचस्तु वाचकत्वमेव, अतस्तत्र ण्यन्तधातु, तत्प्रकृतिधात्वेतदुभयवाच्यव्यापारयोस्स्वस्वार्थं प्रति प्राधान्याद् 'देवदत्तेन यज्ञदत्तः पाचयतीत्यादौ प्रयोज्यव्यापाराश्रयस्यापि कर्तृत्वसिद्धिः। द्योतकत्वे तु नैतत् सिद्ध्येत्। कारके इति सूत्रभाष्यात्स्वक्रियाकारकप्रवर्तकत्वं स्वातन्त्र्यमिति लभ्यते, प्रकृतसूत्रभाष्याच्चेति मञ्जूषायां निरूपितम् ॥**

---

णिजन्ते प्रयोज्यस्य कर्तृत्वोपपत्तये आह। णिचस्त्विति। वाचकत्वमेवेति। अन्यथा द्योत्यार्थस्य विशेषणत्वाद्गमितो ग्रामं देवदत्तो यज्ञदत्तेनेत्यादौ प्राधान्येन गत्यर्थत्वात्कर्तरि क्तस्यापत्तिरित्यादि स्पष्टं भाष्ये। प्राचां तत्र द्योतकत्वपक्षोऽयुक्त एवेत्याह। **द्योतकत्वे त्विति।** वस्तुतः स्वतन्त्रशब्देनोक्तार्थस्य शब्दमर्यादया कथमप्यलाभात्तस्य तत्रापरिभाषणाच्च दीक्षिताद्युक्तं तादृशं स्वातन्त्र्यलक्षणमयुक्तमिति सूचयन् भाष्यसम्मतं तल्लक्षणमाह। **कारके इति।** तत्र हि भाष्ये 'प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा किं पुनः प्रधानं? कर्ता। कथं ज्ञायते, कर्ता प्रधानमिति। यत्सर्वेषु कारकेषु सन्निहितेषु कर्ता प्रवर्तयिता भवती'त्युक्तम्। एतेन स्वक्रियाकारकप्रवर्तकत्वरूपं स्वातन्त्र्यमिति लभ्यत इति भावः। एतच्च प्रयोजकसन्निधानेऽपि प्रयोज्यस्यास्त्येव। तत्सत्त्वेऽपि स्वक्रियाकारकप्रवर्तकत्वरूपस्य तस्याक्षतत्वात्। अत एव प्रेरणापि सफला। अन्यथा सा निरर्थिकैव स्यात्। अत एव तदसमर्थं प्रति न सेति बोध्यम्। **भाष्याच्चेति।** तत्र हि वार्तिककृता कर्तृसन्निधाने करणादीनामिव प्रयोजकसन्निधाने प्रयोज्यस्य स्वातन्त्र्याभावात्कर्तृत्वं न सिद्ध्यतीत्याशयेन तस्य कर्तृत्वमुपसंख्याय, नवा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीति स्यादिति समाहितम्। तस्यायमाशयः। यद्यस्वतन्त्रस्य प्रयोज्यस्य कर्तृत्वमुपसंख्यायते, तदाऽकुर्वत्यपि प्रयोज्ये प्रयोजकः कारयतीति व्यपदिश्येत।

प्रकृष्टेति । यद्व्यापाराव्यवधानेन क्रियानिष्पत्तिस्तत्प्रकृष्टम् ।

---

अतस्तद्वारणाय कर्तृत्वोपसंख्यानवार्तिकेऽपि स्वतन्त्रपदमनुवर्त्य तत्सामर्थ्याद्गौणार्थकत्वमाश्रित्य कुर्वतः स्वतन्त्रत्वात्तस्यैव कर्तृसंज्ञा, नाकुर्वत इति वाच्यम् । एवं चेत्प्रयोजकसन्निधानेऽपि प्रयोज्यस्य स्वक्रियाकारकप्रवर्तकत्वरूपस्वातन्त्र्यस्य सत्त्वेन सूत्रेणैव सिद्धावुपसंख्यानं नारम्भणीयम् । सूत्रे च गौणमुख्यसाधारणः स्वतन्त्रपदार्थ आश्रीयते । प्रयोज्यस्य प्रेरकत्वप्रेर्यत्वयोः सत्त्वेन गौणं स्वातन्त्र्यम् । प्रयोजकस्य तु तन्मुख्यमिति । एवं चास्मादपि स्वक्रियाकारकप्रवर्तकत्वरूपं स्वातन्त्र्यं लभ्यत इति भावः । **मञ्जूषायां निरूपितमिति** । तत्र हि कारक इति सूत्रस्थभाष्यात्तद्धात्वर्थकारकचक्रप्रयोक्तृत्वरूपं स्वातन्त्र्यं लभ्यत इत्युक्त्वा, एवं स्वेच्छाधीनप्रवृत्तिनिवृत्तिकत्वरूपमपि स्वातन्त्र्यं स्वतन्त्रः कर्तेति सूत्रस्थभाष्याल्लभ्यत इत्युक्तम् । तत्रापिना पूर्वोक्तस्य समुच्चयः । एवं चोभयविधमपि स्वातन्त्र्यं स्वतन्त्रः कर्तेति सूत्रस्थभाष्याल्लभ्यत इति तदाशयः । तत्राद्यस्य लाभप्रकार उक्तः । द्वितीयमपि 'यदि प्रेषितोऽसौ न करोति, स्वतन्त्रोऽसौ भवती'ति तत्सूत्रशेषे भाष्येऽभिहितम् । सत्यामपि प्रेरणायां स्वार्थादर्शनादिच्छायामसत्यामप्रवृत्तिदर्शनेनासौ प्रयोज्यः स्वतन्त्रः । यद्यसौ परतन्त्रः स्यात्तदा सर्वदा कुर्यादेव, कदाचिन्न करोत्यपीति तदाशयः । तेन च द्वितीयमुक्तमिति बोध्यम् । परं त्वाद्यं प्रयोज्ये गौणं, द्वितीयं तु मुख्यमिति स्पष्टमुद्योते । एतच्चाचेतने आरोपेणोपपादनीयम् । एतेनैतत्प्रतीकमुपादाय चिदस्थिमालाकाराणां शेषपूरणेन व्याख्यानं नावश्यकमिति बोध्यम् ॥

कारकपर्यायसाधकशब्दादुत्पन्नेन तमपा प्रकृत्यर्थापेक्षः प्रकर्षो लभ्यते । तत्र करणात्करणान्तरे प्रकर्षस्याभावेन कारकान्तरापेक्षयैव प्रकर्षो वाच्यः । स च कीदृश इत्याशङ्क्य तत्स्वरूपं दर्शयति । **यद्व्यापारेति** । शब्दाधिक्य-

तमब्ग्रहणं किमिति। कारकाधिकारात्करणल्युडन्तकरणेतिमहासंज्ञया च साधकत्वे लब्धे साधकग्रहणमेव साधकतमार्थं भविष्यतीति प्रश्नः। गङ्गायामिति। अधिकरणमित्यधिकरणल्युडन्तमहासंज्ञयैव सिद्धे आधारग्रहणसामर्थ्यात्सर्वावयवव्याप्त्या य आधारः सोऽधिकरणमित्यर्थः स्यात्। एवञ्चेदं सूत्रं 'तिलेषु तैलम्' इत्यादावेव प्रवर्तेत। न हि गङ्गा तीरं वा सर्वावयवैर्व्याप्ते। तीरधर्मस्य घोषाधारत्वस्यात्यन्तसामीप्यात्प्रवाहे आरोपोऽत्र बोद्धव्यः। यदा तु व्यवहितो गङ्गातो घोषः तदा गङ्गाशब्दस्य तत्तीरे लक्षणा। तमब्ग्रहणेन 'शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयते' इति ज्ञाप्यते इति गौणाधारस्याप्यधिकरणसंज्ञा सिद्ध्यति। एवञ्च गङ्गायां गाव

---

लब्धस्य प्रकर्षस्याश्रयणेऽन्यत्रातिप्रसङ्गमाह। अधिकरणमिति। सिद्ध इति। आधारस्य तत्संज्ञालाभे इत्यर्थः। इत्यर्थः स्यादिति। तत्सामर्थ्येन प्रकर्षलाभादिति भावः। इत्यादावेव प्रवर्तेतेति। न तु गङ्गायां गावः, गङ्गायां घोष इत्यादावपीति भावः। आदिना दध्नि सर्पिरित्यस्य संग्रहः। गङ्गादिना घोषस्यात्यन्तसामीप्ये गङ्गापदस्य लक्षणाभावादाह। नहि गङ्गेति। व्यवहितसामीप्ये तस्य लक्षणया तीरबोधकत्वादाह। तीरं वेति। नन्वाद्ये गङ्गापदस्य लक्षणाया अभावे गङ्गापदशक्यप्रवाहस्य कथं घोषाधारत्वमत आह। तीरधर्मस्येति। अत्रेति। अत्यन्तसामीप्यात्प्रयुक्ते गङ्गायां घोष इति वाक्ये इत्यर्थः। अयमारोप 'स्सहचरणस्थानतादर्थ्ये'त्यादिसूत्रेण गौतमोक्तस्स्वरितेनाधिकार इति सूत्रस्थभाष्यसम्मतश्चेति मञ्जूषायां निरूपितम्। तीरे लक्षणेति। शक्यतावच्छेदकारोपरूपा लक्षणेत्यर्थः। अव्यवहितसामीप्यस्यैवौपश्लेषिकाधिकरणतानियामकत्वस्य संहितायामिति सूत्रस्थभाष्याल्लाभेन लक्षणामन्तरा तत्र सप्तम्या अनुपपत्तेरिति भावः। सति तु तमब्ग्रहणे यथात्र न दोषस्तदाह। तमब्ग्रहणेनेति। गङ्गायां गाव इति। अत्र गङ्गादिना

इत्यप्युदाहरणम् । सर्वावयवव्याप्त्यभावेन मुख्याधारत्वाभावात् । गौणमप्याधारत्वादि सप्तम्यादिशक्यमेवेति बोद्धव्यम् । इदं प्रकृतसूत्रे भाष्ये स्पष्टम् । यदि तु महासंज्ञया तदाक्षेपकरणासमर्थं प्रति आधारादिपदं चरितार्थं, साधकशब्दस्य यद्व्यापारानन्तरमव्यवधानेन फलोत्पादस्तत्र शक्तिः, आधारशब्दस्य चाध्रियते यस्मिन्निति व्युत्पत्त्या कर्तृकर्मणोर्धारणक्रियां प्रति सर्वावयवव्याप्त्या य आधारस्तत्र शक्तिरित्युच्यते, तदोक्तप्रयोगादिसाधनाय कारकप्रकरणे उद्देश्यवाचकपदे स्वरितत्वप्रतिज्ञया गौणाधारादेर्ग्रहणं वाच्यम् । स्वरितेनाधिकं कार्यमित्यर्थात् । तमपा तु प्रकृते तदभावो बोद्ध्यते । एवञ्च व्यवधानेन फलोत्पादके करणत्वोपचारेण तृतीयान्तप्रयोगस्यासाधुत्वबोधनं तमप्फलम् । एतत्तमब्वशादेवा-

---

गवामत्यन्तसामीप्ये तीरधर्मस्यैकदेशावच्छेदेनाधारत्वस्य प्रवाहे अरोपाद्गौणाधारत्वम् । शुद्धप्रवाहपरत्वेऽपि तस्य गवादिभिस्सर्वावयवव्याप्त्यभावाद्गौणाधारत्वमेव । व्यवहितसामीप्ये गङ्गापदस्य लक्षणया तीरबोधकत्वेऽपि तस्य गवादिभिस्सर्वावयवव्याप्त्यभावाद्गौणमेवाऽधारत्वमिति भावः । तदाह । सर्वावयवेति । इदमिति । उक्तपक्षरूपमित्यर्थः । स्वरितेनाधिकार इति सूत्रभाष्योक्तं पक्षान्तरमाह । यदि त्विति । आधारादीति । आदिना साधकशब्दसंग्रहः । चरितार्थमिति । संज्ञिलाभायेति भावः । एतेन निरुक्तार्थज्ञापनं न तमब्ग्रहणफलमिति सूचितम् । नन्वेवं प्रकृतसूत्रे प्रकर्षलाभ एव तत्फलं भविष्यतीत्यत आह । साधकशब्दस्येति । संसिध्यर्थकसाधधातुनिष्पन्नत्वादिति भावः । एवमाधारशब्दोऽपि योगरूढ इत्याह । कर्तृकर्मणोरिति । उक्तप्रयोगेति । गङ्गायां गावः, गङ्गायां घोष इति प्रयोगेत्यर्थः । प्रकृते = उद्देश्यवाचके साधकपदे । तदभावः = स्वरितत्वाभावः । अत्रापि पक्षे तमब्ग्रहणं किमित्यादिमूलं संगतमेवेत्याह । एतदिति ॥

न्यत्र स्वरितत्वमिति ज्ञायत इति दिक् । स्पष्टश्चेदं स्वरितेनेति सूत्रे

सर्वविभक्त्यपवाद इति। तत्र प्रकृत्या चारुरित्यत्र क्रियायोगाभावेन कर्तृत्वकरणत्वयोरप्राप्तावनेन षष्ठीं बाधित्वा तृतीया। प्रकृतिसंबन्धिचारुत्ववानिति बोधात्। प्रकृतिर्यावदाश्रयवर्ती धर्मविशेषः। प्रायेण याज्ञिक इत्यत्र प्रायशब्दो बह्वर्थः। बहुश्चाचारादिः। ज्ञाप्यज्ञापकभावसंबन्धस्तृतीयार्थः। बह्वाचारज्ञाप्ययाज्ञिकत्ववानिति बोधः। अत्र षष्ठीं बाधित्वा तृतीया। यद्वा प्रायशब्दः संभावनार्थः। संभावनाविषययाज्ञिकत्ववानिति बोधः। प्रायेणात्र याज्ञिका इत्यादौ तु बहवो याज्ञिका इति बोधः। गोत्रेण गार्ग्य इत्यत्र गोत्राभिन्नगर्गापत्यमिति बोधे तृतीया प्रथमाबाधिका। गोत्रसंबन्धिगार्ग्यत्ववानिति बोधे षष्ठीबाधिका। आद्ये गोत्रशब्दोऽपत्यं पौत्रेति पारिभाषिकपरः। अन्त्ये प्रवराध्यायप्रसिद्धमूलपुरुषपरः। आद्येऽभेदस्तृतीयार्थः। अन्त्ये सामान्यविशेषभावः संबन्धस्तदर्थः। समेनैतीत्यत्र समदेशाधिकरणकं यानमिति बोधः। आधाराधेयभावः संबन्धो विभक्त्यर्थः। अत्र तृतीया सप्तमीबाधिका। समशब्दस्य मार्गार्थकत्वे द्वितीयापवादताऽत्र बोध्या। द्विद्रोणेन धान्यं क्रीणातीत्यत्र द्रोणद्वयपरिच्छिन्नधान्यकर्मकः क्रय इति बोधः। परिच्छेद्यपरिच्छेदकभावसंबन्धो विभक्त्यर्थः। अत्र षष्ठीं बाधित्वा तृतीया। परिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणाभिन्नं धान्यमिति बोधे तु द्वितीयापवादत्वमत्र बोध्यम्। सुखेन यातीत्यत्र सुखजनकं यानमिति बोधः। जन्यजनकभावसंबन्धस्तदर्थः। अत्र तृतीया षष्ठीबाधिका। एवमवच्छेद्यत्वादीनां संबन्धत्वेन विवक्षायां पटत्वेन जन्यत्वं प्रकारत्वमभाव इत्यादि प्रकृत्यादित्वात्साध्वित्यन्यत्र स्पष्टम्। अत्र सर्वत्र कथं चित्करणत्वहेतुत्वान्यतरारोपेण तृतीयायाः सिद्धत्वाद्वार्तिकं नारम्भणीयमिति स्पष्टं भाष्ये। चानुकृष्टमित्यस्यात्रोपयोगाभावेन चशब्दमन्तरापि करणशब्दानुवृत्त्या परिक्रयणे संप्रदानमित्युत्तरसूत्रस्थान्यतरस्यांग्रहणापकर्षेण

भाष्ये । रामेणेति । कर्तृतृतीयायाः कर्तृत्वादिशक्तिमान्, कर्तृ-क्रियाभावसम्बन्धश्चार्थः । करणतृतीयायाः करणत्वशक्तिमान्, क्रियाकरणभावः सम्बन्धश्चार्थः । तच्छक्तिमत्त्वञ्च व्यापारवत्त्वेव । रामकर्तृकबाणकरणकप्राणवियोगाश्रयो वालीति बोधः ॥

प्रकृत्यादिभ्य इति । इदं यथायोगं सर्वविभक्त्यपवादः । दिवः कर्म च । चेन संज्ञयोः समावेशः । तेन दिवः साधकतमस्य शक्तिद्वययोगो बोद्ध्यते । तेनाक्षैर्देवयते इत्यत्र तृतीया परत्वात्, कर्मत्वाच्च कर्मत्वप्रयुक्तपरस्मैपदाभावः । अत्र विप्रतिषेधशास्त्र-बलात्तृतीयैव शक्तिद्वयबोधिका । यदाऽक्षाणां फलाश्रयत्वसमा-नाधिकरणकर्मत्वविवक्षा तदा 'अक्षान्दीव्यतीत्यादि साधु ।

---

वा संज्ञयोः पर्यायतालाभे सूत्रे चशब्दः समावेशार्थ इत्याह । चेनेति । अत्र संज्ञाद्वयसमावेशस्य तत्कार्ययोर्द्वितीयातृतीययोः पर्यायेण प्रवृत्तिः फलमिति दीक्षिताद्युक्तिं कटाक्षयन् सिद्धान्तभूतं तत्फलमाह । तेनेति । परत्वादिति । देवना अक्षा इत्यत्र ल्युट्संपादकतया करणसंज्ञायाः दीव्यन्ते अक्षा इत्यत्र कर्मणि लकारसंपादकत्वेन कर्मसंज्ञायाश्च कृतार्थत्वादिति भावः । एतेनाक्षै-रक्षान्वा दीव्यतीति मूलमयुक्तमिति सूचितम् । तत्रापि परत्वात्तृतीयाया एव न्याय्यत्वात् । परस्मैपदाभाव इति । धातोः कर्मत्वशक्तिमदर्थान्वय्यर्थ-कत्वेन सकर्मकत्वादणावकर्मकादिति परस्मैपदस्याप्रवृत्तिरिति भावः । नन्वेवं कथमत्र कर्मत्वशक्तिबोधोऽत आह । अत्रेति । विप्रतिषेधशास्त्रबलादिति । कार्यकालपक्षे विप्रतिषेधशास्त्रबलेन कर्तृकरणयोरित्यत्रैवास्योपस्थितावेतदेक-वाक्यतापन्नतत्सूत्रघटककरणपदेन कर्मत्वसमानाधिकरणकरणत्वशक्तेर्ग्रहणादिति भावः । नन्वेवमक्षान्दीव्यतीति प्रयोगस्य का गतिरत आह । यदेति । एतेन साधकतमत्वसमानाधिकरणकर्मत्वशक्तिबोधेऽक्षान्दीव्यतीति प्रयोगे दृढतरमाना-

अक्षाणां देविता' इत्यादौ तृतीयातः परत्वात्कृद्योगलक्षणा षष्ठी। 'मनसादेवः' इत्यादौ हेतुतृतीयान्तेन पचाद्यजन्तदेवशब्दस्य समासः। न च शक्तिद्वयस्वीकारेऽत्र कर्मणि लकारे करणत्वशक्तेरनुक्तत्वेन तृतीयापत्तिरिति वाच्यम्। 'अपादानमुत्तराणीत्यस्योदाहरणे 'गां दोग्धीत्यादौ' तत्र कर्माणि लकारे पञ्चम्यापत्तिवारणायैकद्रव्यगतानेकशक्तिमद्द्रव्ये एकस्या अभिहितत्वे परस्या अपि तद्वत् प्रकाशेनाक्षतेः। एकैव शक्तिः संज्ञाद्वयोपयोगिनीति तु

---

भावात्तदसाध्वीति सूचितम्। **षष्ठीति**। एवं चात्र सैव शक्तिद्वयबोधिकेति भावः। नन्वेवं कथं मनसा देव इत्यादिहरदत्तादिप्रयोगः, तत्रापि षष्ठयौचित्यादत आह। **मनसेति**। **हेतुतृतीयान्तेनेति**। एवं च मनसः साधकतमत्वाविवक्षणादनेन कर्मत्वकरणत्वयोरप्राप्त्या न षष्ठीति भावः। अस्य संज्ञात्वे मनसः संज्ञायामित्यलुक्। असंज्ञात्वे तु तत्पुरुषे कृतीत्यत्र बहुलग्रहणादलुगिति बोध्यम्। **शक्तिद्वयस्वीकारे इति**। दिवस्साधकतमस्य शक्तिद्वयस्वीकार इत्यर्थः। **तृतीयापत्तिरिति**। दीव्यन्तेऽक्षा इत्यादाविति भावः। इदमुपलक्षणं, देवना अक्षा इत्यत्र ल्युटा करणत्वस्याभिधानेऽपि कर्मत्वस्यानभिधानात्षष्ठ्यापत्तेरपि। न चाक्षैर्देवयत इत्यत्र तृतीययेव लडादिनापि शक्तिद्वयाभिधानान्न तृतीयाद्यापत्तिरिति वाच्यम्। तत्र विप्रतिषेधशास्त्रबलेन करणे विहिततृतीयायाः कर्मत्वशक्तिमद्बोधकत्वमपीति स्वीकारेऽपि कर्मबोधकलकारस्य करणेऽपि शक्तिस्वीकारे मानाभावात्। **तत्र कर्मणीति**। वस्तुतोऽपादानत्वशक्तिमति कर्मणीत्यर्थः। **आपत्तिवारणायैवेति**। एवं सति संज्ञयोः स्वत इव कार्यद्वारकस्यापि विरोधस्याभावेन परत्वाविषयतया समावेशापत्त्याऽपादानमुत्तराणीत्यादिभाष्यासंगत्यापत्तिरेवेति तेन तथा कल्पनमावश्यकमिति भावः। **तद्वत्प्रकाशेनेति**। अभिहितवत्प्रकाशेनेत्यर्थः। उक्ता-

चिन्त्यम् । कर्मादिपदानां कर्मत्वादितत्तच्छक्तिरूपेण बोधकतया तयोर्भेदस्यैवौचित्यादिति मञ्जूषायां विस्तरः । फलप्राप्तिरिति । तस्याश्च सत्यां प्रयोजनाभावादेव न क्रियाप्रवृत्तिरिति फलप्राप्तिशब्देन तत्पूर्वकस्त्याग उच्यते । त्यागस्य च फलप्राप्तिर्व्यङ्ग्ये-

---

तिप्रसङ्गवारणाय दीक्षिताद्युक्तं खण्डयति । एकैव शक्तिरिति । दिव्धात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः । संज्ञाद्वयेति । कर्मकरणसंज्ञेत्यर्थः । तथा चात्र कर्मत्वकरणत्वयोर्दिव्धात्वर्थसाधकतमत्वरूपतया कर्मणि करणे वा प्रत्यये उभयमप्युक्तमेवेति न प्रागुक्तातिप्रसङ्ग इति तदाशयः । उच्यत इति । एवं च फलप्राप्तिपूर्वके त्यागे द्योत्ये तृतीयेति सूत्रार्थः । ननु सामान्यतोऽर्थबोधकपदोत्तरतृतीयाया वाच्ये इत्यर्थस्यान्यत्र क्लृप्ततयाऽत्र वाच्ये इति विहाय द्योत्ये इति कथमुच्यत इत्यत आह । त्यागस्य चेति । अनेन फलप्राप्तेः व्यङ्ग्यमर्यादया लाभेन न तद्वाचकत्वं तृतीयायाः, अतो द्योतकत्वमेव युक्तमिति भावः । न च विशेषणीभूतफलप्राप्तेर्व्यङ्ग्यमर्यादया लाभेन तत्र शक्त्यसिद्धावपि विशेष्यांशे त्यागे कुतो न शक्तिरिति वाच्यम् । त्यागस्यापि क्तप्रत्ययार्थातीतत्वव्यङ्ग्यताया मञ्जूषायां प्रदर्शितत्वेन तस्याप्यर्थस्य त्यागस्य चेति चशब्देन क्रोडीकारेणोभयोरंशयोरन्यलभ्यत्वेन तत्र शक्तिकल्पनाया अनावश्यकत्वात् । न च विशिष्टस्य सूत्रतस्तृतीयाद्योत्यत्वलाभे फलप्राप्तिपूर्वकत्वमात्रस्य मञ्जूषायां तृतीयाद्योत्यत्वोक्तिर्विरुध्येतेति वाच्यम् । त्यागद्योतकस्यातीतत्वबोधकक्तप्रत्ययस्य सत्त्वेऽपि फलप्राप्तेरसाधारण्येन द्योतकत्वं तृतीयाया एवेति बोधयितुं तथोक्तेः । एवं चोभयद्योतकत्वं तृतीयायाः, त्यागद्योतकत्वं क्तप्रत्ययस्येति फलितम् । उभयोरप्यंशयोर्वाचकाभावेन बोधे न मानम् । अतो मासमधीत इत्यादाविवात्रापि बोधः, न वैलक्षण्यम् । प्रयोगयोर्विशेषस्तु व्यङ्ग्यार्थमादायैवेति बोध्यम् । अह्नाऽनुवाकोऽधीत इत्यत्र निरन्तराभिव्याप्तिरूपः संबन्धस्तृतीयार्थः ।

त्यन्यत्र विस्तरः । नाप्तात इति । अनेन फलाप्राप्तिरेव स्फुटमुच्यते ॥

सहयुक्ते ॥ पृथग्विनानानाभिरितिवत् 'सहेने'त्येव सिद्धे युक्तग्रहणं शब्दविशेषानादरेणार्थयोगे भवत्वित्यर्थमित्याह–सहार्थेनेति । अत एव क्वचित् शब्दयोगं विनापि भवति । तदाह—विनापीति । न्यायसिद्धेऽर्थे लिङ्गमप्याह—वृद्ध इति । सहार्थः साहित्यं, तच्च स्वसमभिव्याहृतक्रियादिसमानकालिकतत्क्रियादिमत्त्वं, क्वचि-

---

प्रकृतसूत्रे कालाध्वनोरित्यस्यानुवृत्तेः क्तप्रत्ययार्थातीतत्वव्यङ्ग्ये क्रियात्यागे फलप्राप्तिपूर्वकत्वं तृतीयाद्योत्यम् । एवं चानुवाकविषयकमहस्संबन्ध्यतीतमध्ययनमिति बोधः । तेन फलप्राप्तिपूर्वकस्तत्त्यागो व्यज्यत इति बोध्यम् । अन्यत्र = मञ्जूषायाम् । 'त्यागस्तृतीयार्थः, अह्नाऽनुवाकोऽधीत इत्यत्राहर्व्यापकत्यागप्रतियोग्यतीताध्ययनकर्मानुवाक' इति मिश्रोक्तं तु न युक्तम् । त्यागस्य क्तप्रत्ययार्थातीतत्वव्यङ्ग्यतया तत्र तृतीयायाः शक्तिकल्पनाया अनावश्यकत्वात् । किं च तस्य विभक्त्यर्थत्वे तस्य प्रकृत्यर्थान्वयाभावेन प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमभङ्गापत्तेः । न च प्रत्ययार्थसंबन्धे प्रकृत्यर्थस्यान्वयेन तन्नियमोपपत्तिरिति वाच्यम् । प्रकृत्यर्थानन्वितप्रत्ययार्थस्य क्वाप्यदृष्टचरत्वेन प्रकृत्यर्थान्वितस्वार्थस्यैव बोधकत्वमिति नियमाकारेण तद्भङ्गस्य दुर्वारत्वात् ॥

ननु सहयुक्त इत्यस्य सहार्थेन युक्त इत्यर्थः कथमत आह । पृथगिति । अत एवेति । युक्तग्रहणादर्थयोगेऽप्येतत्प्रवृत्तेरेवेत्यर्थः । नन्वेवमुत्तरग्रन्थासङ्गतिरत आह । न्यायेति । स्वसमभिव्याहृतेति । सहार्थसमभिव्याहृता या क्रिया तत्समानकालिकतत्क्रियादिमत्त्वमित्यर्थः। आदिना गुणद्रव्ययोः संग्रहः। एतत्सूत्रविषये तृतीयार्थश्च क्रियासमभिव्याहारे सहार्थबलात्प्रतीयमानतत्तत्क्रियाकर्तृत्वादिकमेव । द्रव्यगुणयोः समभिव्याहारे तु सहार्थबलात्प्रतीय-

त्समानदेशक्रियावत्त्वम् । अत एव माषवापोत्तरं तत्रैव क्षेत्रे तिलवापे तिलैः सह माषान्वपतीति भवति । यद्यपि पुत्रेण सहागत इत्यादौ आगमनक्रियाकर्तृत्वादेव पुत्रात्तृतीया सिद्धा, तथापि पुत्रेण सह स्थूलः' इत्यादि अस्य मुख्यमुदाहरणमिति भाष्ये स्पष्टम् । अङ्गेन—अवयवेन । इदं सन्निधानलब्धम् । अङ्गिनः—अवयविनः ।

---

मानतत्तत्पदार्थसंबन्ध एव । एवं च पुत्रेण सहागतः, पुत्रेण सह पितुर्गौः, पुत्रेण सह स्थूल इत्यादौ पुत्रकर्तृकागमनसमानकालिकागमनवान्, पुत्रस्वामिकत्वसमानकालिकपितृस्वामित्ववती, पुत्रवृत्तिस्थौल्यसमानकालिकस्थौल्यवानित्यादि क्रमेण बोधः । तिलैः सह माषान्वपतीत्यत्र समानदेशक्रियावत्त्वरूपं साहित्यं सहार्थः । अत्र क्रियावत्त्वं च क्रियाजन्यफलाश्रयत्वरूपम् । तृतीयार्थश्च सहार्थबलात्प्रतीयमानक्रियाकर्मत्वम् । एवं च तिलकर्मकवपनसमानदेशं माषकर्मकं वपनमिति बोधः । अत्राप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभावः । पुत्रेण सहागत इत्यादावागमनादिभिः पितुः शाब्दः । पुत्रस्य सहार्थबलात्प्रतीयमानैस्तैस्संबन्धादार्थ इति तस्याप्राधान्यम् । इतरसंबन्धं विना प्रतीयमानत्वं चार्थस्य शाब्दत्वम् । तत्रोक्तसाहित्यवाचिसहशब्दप्रयोगे शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः । विद्यमानतावाचिसहशब्दप्रयोगे तु गुणाद्यन्वयित्वरूपविशेष्याभावकृतो विशिष्टाभावः । यथा 'सहैव पुत्रैर्दशभिर्भारं वहति गर्दभी' त्यादौ । अत्र दशसंख्याकानां पुत्राणां विद्यमानत्वेऽपीत्यर्थान्न तस्य गुणाद्यन्वयित्वमित्यन्यत्र विस्तरः । **तृतीया सिद्धेति** । न च क्तेन कर्तुरभिधानान्न ततस्तृतीयेति वाच्यम् । इतरसमभिव्याहारं विनापि प्रतीयमानस्वप्रकृत्यर्थक्रियाकर्तुरेव तेनाभिधानात् । स्वान्वयिगुणद्वारा सहयोगस्य पितापुत्रयोरविशिष्टत्वेऽपि न पितुस्तृतीया, प्रधानत्वात् । अप्रधानग्रहणप्रत्याख्यानेऽपि न ततः सा, उपपदविभक्तेरिति न्यायादिति स्पष्टं भाष्ये । **सन्निधानलब्धमिति** । सूत्रेऽङ्गशब्दोऽर्श आद्यजन्तः । येनेति

**सूत्रे अङ्गशब्दोऽर्शआद्यजन्तो व्याख्यानादिति भावः। अक्ष्णा काण इति। यद्यप्यक्ष्ण्येव काणं, तथाप्यवयवधर्मस्य समुदाये आरोपाच्छरीरे तदवच्छिन्ने च व्यवहारो निरूढ इति ध्येयम्। यद्यपि काणशब्दोऽक्षिगतविकारवाचक एव, तथापि 'द्वौ विप्रावि'तिवदक्ष्णेति प्रयोगस्य साधुत्वम्। ईदृशरीत्येदृशानां साधुत्वे चेदमेव मानम्। षष्ठ्यपवादोऽयमित्याह—अक्षिसम्बन्धीति। अङ्गविकारः किमिति। अङ्गग्रहणप्रयोजनप्रश्नः। अक्षि काणमिति। प्रथमां बाधित्वाऽत्रैव स्यात्। लेशतोऽपि दर्शनसामर्थ्यहीनत्वं काणत्वम्॥**

---

सर्वनाम्ना सन्निधानाद्विशेषणभूतोऽवयवः परामृश्यत इति भावः। स चावयवोऽर्थाद्विकृत एव। अविकृतेनावयवेनावयविनो विकारासंभवादित्याशयेन मूले आह। **विकृतेनेति।** व्याख्यानादिति। अङ्गशब्दोऽयं समुदायशब्द इति भाष्यमूलकादित्यर्थः। नन्वस्याक्षि काणमिति प्रसिद्धलोकव्यवहारेण काणत्वस्याक्षिधर्मत्वलाभादक्ष्णा काण इति व्यवहारोऽनुपपन्न इत्यत आह। **यद्यपीति। समुदाये**=अवयविनि। **तदवच्छिन्ने इति।** तादृशशरीरोपाधिके चैत्रादिपदवाच्ये जीवे इत्यर्थः। **अक्षिगतविकारवाचक इति।** तथा च पुनरक्षिपदप्रयोगो निरर्थक इति भावः। **इति वदिति।** संभेदेनान्यतरवैयर्थ्यमिति न्यायेनेति भावः। अक्ष्णा काण इत्यत्र चक्षुर्नाशवान् सचक्षुष्कः काणपदार्थः। अक्षिपदार्थो गोलकम्। विकारप्रयुक्तत्वरूपसंबन्धस्तृतीयार्थः। एवं च गोलकविकारप्रयुक्तचक्षुर्नाशवान् सचक्षुष्क इति बोधः। पादेन खञ्ज इत्यादौ पादविकारप्रयुक्तसंस्थानवैधुर्यवच्चरणवानित्यादिरीत्या बोध इत्यन्यत्र निरूपितम्। **प्रथमामिति।** येन गुणेन काणत्वादिनाऽवयवस्य विकारो लक्ष्यते, ततस्तृतीयेति सूत्रार्थादिति भावः। तदभिधायकसूत्रस्थभाष्यस्वारस्यलब्धं काणपदार्थमाह। **लेशतोऽपीति।** एवं च निरुक्तस्थले गोलकविकारप्रयुक्तदर्शनसामर्थ्याभाववानिति बोधः॥

इत्थंशब्दः प्रकारमात्रपरः। प्राप्त्यर्थाद् भुवः कर्तरि क्तः। कर्मविभक्त्यन्तेत्थंशब्देन भूतशब्दस्य समासः। लक्षणशब्दः करणसाधनः। तस्य कर्मषष्ठ्यन्तेनेत्थंभूतशब्देन समास इत्याह—कंचिदित्यादि। जटाभिरिति। यद्यपि ताभिस्तापसो ज्ञात इत्यर्थे ज्ञानक्रियायां करणत्वादिदं सिद्धं, तथापि करणत्वाविवक्षायां लक्ष्यलक्षणभावमात्रविवक्षायां तृतीयार्थमिदम्। इत्थंभूतस्य यत्र लक्षणवाचकात्पृथगुपस्थितिरेव तत्रैवानेन तृतीया। तेन 'कमण्डलुपाणिं छात्रमद्राक्षीदि'त्यादौ कमण्डलुपदान्न तृतीया। न चोत्पन्नायास्तृतीयायाः 'सुपो धातु' इति लुगिति वाच्यम्। कृते समासे तस्या उत्पत्त्या समासरूपप्रातिपदिकानवयवत्वादिति कैयटे स्पष्टम्।

प्रकारमात्रेति। यद्यपि सन्निकृष्टवाचिन इदंशब्दात्प्रकारार्थे थमुप्रत्ययस्तथाप्यत्र सन्निकृष्टस्य कस्य चिदभावात्तत्परित्यागेन प्रकारमात्रपर इति भावः। करणत्वाविवक्षायामिति। यदा प्रमाता प्रमितिदशायामेवात्मनः प्रमितिविशेषं प्रतिपादयितुं वाक्यं प्रयुङ्क्ते, तदा ज्ञानक्रियाया अप्रतिभानात्करणत्वासंभवात्तदविवक्षेति भावः। कैयटाद्यनुरोधेनात्र विशेषमाह। इत्थंभूतस्येति। लक्षणवाचकात्पृथगुपस्थितिरेवेति। लक्षणवाचकपदाप्रयोज्या यत्रेत्थंभूतस्योपस्थितिरित्यर्थः। तत्रैवेति। अन्यत्रैकार्थीभावबलेनेतरविशेषणस्यैव कमण्डलोरुपस्थित्या तस्य लक्षणत्वेन छात्रेऽन्वयासंभवादिति भावः। ईदृशविशेषस्वीकारे फलमाह। तेनेति। कमण्डलुशब्दादिति। समासेऽवयवशक्तिज्ञानसहकृतसमुदायशक्त्या विशिष्टार्थोपस्थित्या इत्थंभूतस्य पृथगुपस्थितेरभावादिति भावः। इत्थंभूतलक्षणे तत्स्थे प्रतिषेध इति वार्तिकस्वारस्येनावयवात्तृतीयापत्तेरेव प्रतीयमानत्वादिदमेव न्याय्यमिति कैयटाशयः। कृते समास इति। पूर्वं लक्षणत्वाविवक्षया प्रथमान्तेन समासे जाते पश्चात्तद्विवक्षायामत्र तृतीयापादनं कृतपूर्वीकटमितिवदिति बोध्यम्। प्रातिपदिकानवयवत्वादिति। तन्म-

कमण्डलुः पाणौ यस्येति बहुव्रीहिः। परे तु—कमण्डलुपाणिशब्दादत्र तृतीयापत्तिः, कमण्डलुयुक्तपाणिरूपस्य कमण्डलुपाणित्वस्य लक्षणत्वेन तस्यैव तद्वाचकत्वात्। तदुक्तम् 'अनुर्लक्षणे' इति सूत्रे भाष्ये 'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव लक्षणं भवति' इति। तदेवेत्यस्य कमण्डलुपाणित्वमेवेत्यर्थः। कमण्डलोर्लक्षणत्वे हि स एवेति वदेत्। किं च तन्मध्यपतितन्यायेन तद्विशिष्टस्य प्रातिपदिकत्वेन तस्य तदनवयवत्वोक्तेरनौचित्येन लुको दुर्वारत्वम्। अत एव नरंमन्य इत्यादौ इजन्तस्योत्तरपदपरत्वाय पूर्वं सुपो लुकि उत्पन्नस्यामः 'सुपो धात्वि'ति लुक् आम्विधिसामर्थ्येन वारित 'इच एकाचोऽम्' इति सूत्रे भाष्ये इत्याहुः। संज्ञोऽन्यतर। दैवादिकस्य जनेर्न ग्रहणं तस्याकर्मकत्वात्, तदाह—जानातेरिति। कर्मत्वशक्तिरेवात्र तृतीयार्थः॥

---

ध्यपतितन्यायेनाकज्वत्तद्ग्रहणेन ग्रहणेऽपि कष्गुमादिवच्छास्त्रेणावयवत्वाबोधनादवयवत्वे मानाभावादिति भावः। बहुव्रीहिरिति। अत्रावयवात्तृतीयोत्पत्तौ पाण्यधिकरणककमण्डलुज्ञाप्यश्छात्र इत्यर्थः स्यादिति भावः। कैयट इत्यनेन सूचितामरुचिं प्रकटयन् सिद्धान्तमाह। परे त्विति। तस्यैवेति। विशिष्टस्यैवेत्यर्थः। तद्वाचकत्वादिति। लक्षणवाचकत्वादित्यर्थः। विशिष्टस्यैव लक्षणवाचकत्वे मानमाह। तदुक्तमिति। लुको दुर्वारत्वमिति। समासत्वप्रयुक्तप्रातिपदिकसंज्ञोत्तरं तद्घटकवर्णानामिव तन्मध्यपतितन्यायेन सुब्विशिष्टे प्रातिपदिकत्वातिदेशे सुपस्तदवयवत्वं नेत्यर्थस्य वक्तुमशक्यत्वादिति भावः। प्रातिपदिकसंज्ञोत्तरं जातस्यापि तन्मध्यपतितन्यायेन तदवयवत्वे मानमाह। अत एवेति। अन्यथा तस्यापि शास्त्रेणावयवत्वाबोधनादवयवत्वे मानाभावाल्लुकोऽप्राप्त्या सामर्थ्येन तद्वारणमसंगतं स्यादिति भावः। अत्र मते कमण्ड-

लुयुक्तार्थककमण्डलुशब्दस्य पाणिशब्देन समानाधिकरणो बहुव्रीहिः। समुदायादनेन तृतीयोत्पत्तौ कमण्डलुयुक्तपाणिज्ञाप्यस्तदवयवी छात्र इत्यर्थः स्यादित्याशयः। यत्तु सर्वमिदं चिन्त्यमेव। तथा हि। कमण्डलुशब्दस्य लक्षणवाचकत्वेन ततस्तृतीयापत्तिर्दुरुद्धरैव। स एवेति वदेदिति यदुक्तं तदप्ययुक्तम्। उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभागिति सिद्धान्तेन तदेव लक्षणमित्यस्योपपन्नत्वात्। यदपि तन्मध्यपतितन्यायेनेत्यादि तदपि चिन्त्यम्। तथा हि तद्विशिष्टत्वं तन्मध्यपतितत्वम्। वैशिष्ट्यं च स्वघटकावधिकपूर्वत्व स्वघटकावधिकोत्तरत्व स्वपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसंबन्धेनेत्यवश्यं स्वीकार्यम्। अन्यथा ज एव जकः, जकं रातीत्येवं निष्पन्नस्य जकराशब्दस्य जराशब्देन ग्रहणं स्यात्। एवं चात्र तृतीयायाः कमण्डलुपाणिपदपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वाभावेन निरुक्ततन्मध्यपतितत्वाभावेन लुकोऽप्राप्त्या लुको दुर्वारत्वोक्तेरसङ्गतिः स्पष्टैव। नचैवं नरंमन्य इत्यत्रामोऽपि निरुक्ततन्मध्यपतितत्वाभावेन लुकोऽप्राप्तेर्विधानसामर्थ्येन तद्वारणपरमिच एकाचोऽमिति सूत्रस्थं भाष्यमसङ्गतं स्यादिति वाच्यम्। स च स्वाद्यम्वदित्यतिदेशेन तस्यापि प्रातिपदिकावयवत्वस्य लाभेन लुकः प्राप्त्या विधानसामर्थ्येन लुको वारणस्य भाष्योक्तस्य सङ्गतेः सुवचत्वादित्योत्तराहास्तन्न। यत्र पृथङ्निर्दिष्टयोरुद्देश्यविधेययोः सर्वनाम्ना ऐक्यं प्रतिपाद्यते, यथा 'शैत्यं हि यत्सा प्रकृतिर्जलस्ये'त्यादौ, तत्र सर्वनाम्नः पर्यायेण तत्तल्लिङ्गभाक्त्वेऽपि प्रकृते तच्छब्दस्यैवोद्देश्यवाचकत्वेन पृथङ्निर्दिष्टयोरैक्यस्य तेनाबोधनात्तादृशनियमाविषयतया कमण्डलोर्लक्षणत्वे ग्रन्थकृदुक्तस्यानुर्लक्षण इति सूत्रभाष्यविरोधस्य दुष्परिहरत्वात्। तन्मध्यपतितत्वपरिष्कारे तृतीयदले पर्याप्तिनिवेशे फलाभावादिच एकाचोऽमिति सूत्रस्थभाष्यासङ्गतेश्च स्वघटकावधिकोत्तरत्वस्वघटकावधिकपूर्वत्वस्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वैतात्त्रितयसंबन्धेन तद्विशिष्टत्वमेव तन्म-

हेतौ। हेतुरिह कारणं न शास्त्रीयः। तस्य कर्तृसंज्ञाया अपि सत्त्वेन कर्तृतृतीययैव सिद्धेः। ननु लौकिकहेतुरपि करणमित्यत आह—द्रव्यादीति। आदिना गुणक्रिये। साधारणमिति। तज्जनकेऽपि वर्तत इत्यर्थः। करणं तु क्रियाजनकमेवेति भावः। वैषम्यान्तरमाह—निर्व्यापारेति। करणन्तु व्यापारवदेवेति भावः। एवञ्च करणत्वशक्तेर्भिन्नैव हेतुत्वशक्तिरत्र तृतीयार्थ इति तात्पर्यम्। स्फुटप्रतिपत्तये करणे वैलक्षण्यमाह—करणत्वं त्विति। हेतुहेतुमद्भाव एव तृतीयार्थः। दण्डे व्यापारसत्त्वेऽपि क्रियाजनकत्वाभावान्न करणत्वम्। पुण्ये क्रियाजनकत्वेऽपि निर्व्यापारत्वान्न तत्त्वम्। फलमपीहेति। इह—एतत्सूत्रोदाहरणे। क्वचित्फलमपि हेतुत्वेन विवक्ष्यत

---

ध्यपतितत्वमित्यवश्यमङ्गीकार्यतया कमण्डलुशब्दाज्जायमाने सुप्यवयवद्वारा स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्य सत्त्वात्तन्मध्यपतितन्यायेन तस्य लुको दुर्वारत्वाच्च। नच पर्याप्तिनिवेशेऽपि स च स्वाद्यम्वदित्यतिदेशेन तस्यापि प्रातिपदिकावयवत्वस्य लाभेन लुकः प्राप्त्या विधानसामर्थ्याल्लुग्वारणपरं भाष्यं नासङ्गतमिति वाच्यम्। प्रातिपदिकानवयवस्यापि स्वाद्यमः सत्त्वेन प्रातिपदिकावयवत्वस्य स्वाद्यमसाधारणधर्मत्वाभावात्तेनातिदेशेनेच एकाचोऽमिति सूत्रविहितेऽमि प्रातिपदिकावयवत्वस्य दुर्लभतया पर्याप्तिनिवेशे तद्भाष्यविरोधस्य दुष्परिहरत्वादित्यवधेयम्॥

तस्येति। शास्त्रीयहेतोरित्यर्थः। करणमिति। व्यापारवदसाधारणकारणं करणमिति प्रसिद्धेरिति भावः। एवं च लौकिकग्रहणेऽपि करणतृतीययैव सिद्धेरिदं व्यर्थं स्यादित्याशयः। अत आहेति। अतो हेतुत्वकरणत्वयोर्भेदमाहेत्यर्थः। वैषम्यान्तरमिति। हेतुत्वकरणत्वयोः प्रकारान्तरेणापि भेदमित्यर्थः। हेतुत्वशक्तिरिति। सा चाखण्डोपाधिः। दण्डाभिन्नहेतुजन्यो घट इति

इत्यर्थः । तस्यापि स्वज्ञानद्वारा जनकत्वात् । एतच्च प्रत्यय इत्यादि-सूत्रेषु कैयटे स्पष्टम् । नन्वलं श्रमेणेत्यादौ क्रियावाचकपदाभावात्क्रियाया अप्रतीत्या कथं करणत्वमत आह—गम्यमानाऽपीति । श्रमेणेत्यादिपदजबोधविषयापीत्यर्थः । न तूच्चार्यमाणतद्वाचकपदज-बोधविषयैवेति भावः । अलंशब्दो निषेधार्थस्तदाह—साध्यं नास्तीति । ननु साध्यमित्यर्थज्ञानेऽपि तस्य श्रमेणेति नामार्थत्वेन न क्रियात्वमत आह—इहेति । स्ववाच्यक्रियां प्रति स्वस्य करणत्व-मित्यर्थः । स्पष्टं चेदं इग्यण इति सूत्रे 'प्रविश' 'पिण्डीम्' इति 'वाक्यार्थे वाक्यैकदेशप्रयोगः' इत्यादिना भाष्ये इति मञ्जूषायां विस्तरः । अशिष्टेति । अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहारः क्रिया तद्बोधकपदप्रयोगे प्रत्यासत्त्या यत्सम्बन्धेन व्यवहारस्य संकीर्णाचारत्वं तद्वाचकाच्चतुर्थ्यर्थे तृतीयेत्यर्थः । दास्येति । दासीसम्प्रदानकं रतिफलकं दानमिति बोधः ॥

इति तृतीया ॥

---

हेतुदण्डीयो घट इति वा बोधः । तद्वाचकेति । क्रियावाचकेत्यर्थः । सिद्धान्तेऽध्याहाराभावादाह । ज्ञानेऽपीति । नामार्थत्वेनेति । प्रविश, पिण्डीमित्यादि-वच्छ्रमेणेति पदस्यैव श्रमकरणकसाधनक्रियाविषये शक्तिग्रहात्ततस्तद्बोधे तस्य नामार्थत्वमित्यर्थः । अत्र नामपदं सुबन्तपरम् । स्ववाच्यक्रियां प्रतीति । स्वप्रकृतिकसुबन्तवाच्यसाधनक्रियां प्रतीत्यर्थः । स्वस्येति । स्ववाच्यस्य श्रमस्ये-त्यर्थः । ननु स्ववाच्यक्रियायामेव स्वस्य करणत्वं विरुद्धमत आह । स्पष्टं चेदमिति । अशिष्टोऽविहितो व्यवहार इत्यर्थे दास्यै संयच्छते वास इत्यत्रापि स्यादत आह । अशिष्टानामिति । अत्राशिष्टशब्दो न शिष्टभिन्नपरः । किन्तु प्रति-षिद्धकर्तृषु रूढ इत्याशयेनाह । सङ्कीर्णाचाराणामित्यादि । प्रतिषिद्धक्रिया-कर्तृसंबन्धिनी उपस्थितत्वात्तद्विशेषणीभूता प्रतिषिद्धा क्रियेत्यर्थः । रतिफलकं दानमिति । संयच्छतेर्भोगफलकदानार्थकत्वादिति भावः ॥

॥ इति तृतीया ॥

---

**दानस्येति । दाधात्वर्थस्येत्यर्थः । इदमुपलक्षणं क्रियामात्रस्य । कर्मणेति । सम्बन्धुमिति शेषः । अभिप्रैति—इच्छति । कर्मणा सम्बन्धश्च स्वत्वादिरूपः । सम्प्रदानत्वशक्तिमान् सम्प्रदानचतुर्थ्यर्थः । स एवोद्देश्य इत्युच्यते । क्रियाकारकभावः सम्बन्धश्च तदर्थः । विप्रसम्प्रदानकं दानमिति बोधः । कर्मणेति किम् । तद-**

सम्यक् प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थसंज्ञाबललब्धमर्थमाह । **मूले दानस्येति** । दानशब्दस्यार्थान्तरभ्रमवारणायाह । **दाधात्वर्थस्येति** । स च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्त्यनुकूलो व्यापारः । अत एव रजकस्य वस्त्रं ददाति भ्रतः पृष्ठं ददातीत्यादौ न संप्रदानत्वम् । तत्राधीनीकरणरूपेऽर्थे ददातेर्भाक्तत्वात् । एतेन दापदेन दो देङ्, दा दाण्, इत्यादेर्ग्रहणं बोध्यमिति वाराणसेयोक्तमपास्तम् । अन्वर्थसंज्ञाबलेन द्यतेर्दयतेश्चात्राग्रहणलाभात् । नन्वेवं बालकाय कथां कथयति, शिष्याय फक्किकां व्याचष्ट इत्यादौ संप्रदानत्वं न स्यादत आह । **इदमिति** । मूले दानप॰मित्यर्थः । **क्रियामात्रस्येति** । धात्वर्थमात्रस्येत्यर्थः । एवं च यत्किंचित्क्रियानिरूपितकर्मणा अभिप्रेयमाणस्य संप्रदानत्वान्न प्रागुक्तातिप्रसङ्ग इति भावः। इदं च रजकस्य वस्त्रं ददातीति प्रयोगसाधनाय संप्रदानशब्दस्यान्वर्थत्वमङ्गीकुर्वतां केषांचिन्मतेन । वस्तुतस्तु स्वत्वनिवृत्तेरभावेऽपि न शूद्राय मतिं दद्यात्, खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्यप्रयोगदर्शनेन तस्यान्वर्थत्वाभावलाभादुपलक्षणत्वमन्तरापि निरुक्तार्थसिद्धिः । रजकस्य वस्त्रं ददातीति तु शेषत्वविवक्षया साध्विति बोध्यम् । मिश्रास्तूपलक्षणत्वाङ्गीकारस्य क्रियाग्रहणं कर्तव्यं, श्राद्धाय निगर्हते, युद्धाय सन्नह्यते, पत्ये शेते, इति भाष्यमुपष्टम्भकतया प्रादर्शयन् । तदयुक्तम् । तद्वार्तिकस्याकर्मकधातुविषयकत्वेनोत्थितेः । **कर्मणेति** तृतीयोपपत्तये आह । **इति शेष इति** । **स्वत्वादीति** । आदिना स्वामित्वपरिग्रहः । **स एवोद्देश्य इति** । अत एवोद्देश्यत्वं चतुर्थ्यर्थ इत्यभियुक्तोक्तिसङ्गतिः । **इति बोध इति** ।

भावे हि कर्मणोऽप्युद्देश्यतयाऽन्तरङ्गत्वात्तस्यैव संज्ञा स्यात् । कर्मसंज्ञया तु पर्यायो भविष्यति । यंसग्रहणं किम् । तदभावे क्रियाकर्मणा योऽभिप्रैति ब्राह्मणादिस्तस्यैव स्यात् । कर्तृसंज्ञा त्वकर्मकविषये सावकाशा । न च कर्तुः कर्तृत्वाभावे कथं गोः कर्मत्वम् । कर्मसंज्ञायां कर्तृग्रहणस्य स्वतन्त्रोपलक्षणत्वात् । अत एव सार्थाद्धीयते इत्यत्र कर्तुरपादानत्वेऽपि कर्मणि लकारः सिद्धः । ननु कर्मणेत्युक्तावकर्मकक्रियोद्देश्यस्य सम्प्रदानत्वं न स्यादत आह—

---

संप्रदानक्रियाभावसंबन्धेन विप्राभिन्नसंप्रदानविशिष्टं दानमिति, संप्रदानविप्रीयं दानमिति वा बोध इति बोध्यम् । कर्मणेति किमिति । तदभावेऽपि विप्राय गां ददातीत्यादौ दानक्रियया गवादेर्गवादिना विप्रादीनां चाभिप्रेयमाणत्वेऽपि गवादेः परत्वात्कर्मसंज्ञेति पारिशेष्याद्विप्रादेरेव संप्रदानत्वं भविष्यतीति प्रश्नाशयः । उद्देश्यतयेति । दाधात्वर्थक्रियाजन्यफलाश्रयत्वेन कर्तुरुद्देश्यतयेत्यर्थः । अन्तरङ्गत्वादिति । दानक्रियाभिप्रेतगवा उपाध्यायोऽभिप्रेत इति तस्य क्रियासंबन्धो बहिरङ्गः । गोस्तु सोऽन्तरङ्ग इति तस्यैव संज्ञा स्यादिति भावः । नन्वेवं कर्मसंज्ञा निरवकाशा स्यादत आह । कर्मेति । पर्याय इति । वचनसामर्थ्यादिति भावः । न चैवं गत्यर्थकर्मणीत्यस्यारम्भोऽनर्थक इति वाच्यम् । सिद्धान्ते तस्य प्रत्याख्यातत्वात् । तस्यैव स्यादिति । तिङ्पदश्रुत्योपस्थापितपदार्थसंबन्धेनैव निराकाङ्क्षत्वेऽनुपस्थिताध्याहारे मानाभावादिति भावः । ततश्चोपाध्यायाय शिष्येण गौर्दीयत इत्यर्थे शिष्यायोपाध्यायस्य गौर्दीयत इति प्रयोगापत्तिरिति बोध्यम् । नन्वेवं कर्तृसंज्ञा निरवकाशा स्यादत आह । कर्तृसंज्ञा त्विति । कथं गोः कर्मत्वमिति । कर्तृव्यापारप्रयोज्यफलाश्रयत्वेनेच्छाविषयस्यैव कर्मत्वादिति भावः । उपलक्षणत्वे फलमाह । सार्थादिति । सार्थेन त्यज्यत इत्यर्थकोऽयं प्रयोगः । नन्वकर्मकक्रियोद्देश्यस्य

**क्रियये**ति। कर्मरहितक्रिययेत्यर्थः। सकर्मकेषु कर्मसंज्ञा अस्या बाधिकेत्याशयेनाह—पत्ये शेते इति। न च दानादीनान्तदर्थत्वात्ता-दर्थ्यचतुर्थ्यैव सिद्धे किमनया संज्ञयेति वाच्यम्। दाशगोघ्नौ सम्प्र-दाने इत्यर्थत्वात्, तत्सम्प्रदानकं दानमिति बोधार्थं तदावश्यक-

---

संप्रदानत्वसिद्धये कृतस्यास्य वचनस्य साधारणत्वेन सकर्मकस्थलेऽनेन कर्मणः संप्रदानत्वापत्तिरत आह। **कर्मरहितेति**। नन्वस्य विशेषपरत्वेन व्याख्याने किं बीजमत आह। **सकर्मकेष्विति**। भाष्ये तु पत्ये शेते इत्यादौ शयनादि-क्रियाया अपि संदर्शनप्रार्थनाध्यवसायजन्यारम्भक्रियानिरूपितं कर्मत्वमस्त्येव। पिण्डीमित्यादौ गम्यमानक्रियापेक्षस्यापि कारकत्वस्य दर्शनात्। एवं च सूत्रेणैव सिद्धे इदं नारम्भणीयमिति स्थितम्। पत्ये शेते इत्यादौ दर्शनपूर्वका-रम्भकर्म पतिसंप्रदानकं पत्नीकर्तृकं शयनमित्यादिप्रकारेण बोध इति तदाशयः। नन्वेवं कटं करोतीत्यादौ कटस्यापि संप्रदानत्वापत्तिः। वचनबलाच्च कर्मसं-प्रदानत्वयोः पर्यायापत्तिरिति चेदत्रोच्यते। यदा संदर्शनादयो धात्वर्थाद्भेदेन विवक्ष्यन्ते, तदा संप्रदानसंज्ञा। अन्यथा तु कर्मसंज्ञैव। यथा कटं करोतीति। अत्र हि कटकर्मकक्रियेत्येव बोधः, न तु तस्याः क्रियाया विद्यमानमपि दर्शनादिपूर्वकारम्भकर्मत्वं तत्तद्रूपेण बोधविषयः। सा च भेदाभेदविवक्षा प्रयो-गानुसारेण नियतविषयैवाश्रीयत इति न प्रयोगसाङ्कर्यम्। तथा हि। पत्ये शेते इत्यादौ भेदविवक्षैव। कटं करोतीत्यादावभेदविवक्षैव। गत्यर्थकर्मणि तु भेदाभेदौ द्वावपि विवक्ष्येते इति रूपद्वयसिद्धिः। तथा च गत्यर्थकर्मणीति सूत्रमपि नारम्भणीयमितीति बोध्यम्। **तदर्थत्वादिति**। संप्रदानत्वेनाभि-प्रेतो यो विप्रादिस्तत्पुण्यादिप्रयोजकत्वेन तदर्थत्वादित्यर्थः। **अनया संज्ञ-येति**। कर्मणा यमिति सूत्रविहितसंज्ञयेत्यर्थः। **इत्यर्थत्वादिति**। संप्रदाने कारकेऽनेन सूत्रेण दाशगोघ्नशब्दयोर्निपातनादिति भावः। **ननु** संप्रदान-

त्वाच्च । अत एव तादर्थ्यचतुर्थ्यां दानकर्मणो गवादेः सम्प्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावेन चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिरिति हेलाराजः । तादर्थ्यचतुर्थ्यैव सिद्धे चतुर्थी सम्प्रदान इति सूत्रं रुच्यर्थानामित्यादिविषये चतुर्थ्यर्थमिति भाष्ये स्पष्टम् । पशुनेति । कर्म तृतीयाऽर्थः । सम्प्रदानं द्वितीयाऽर्थः । एतच्च दानार्थकयजधातुविषयम् । पूजार्थत्वे तु पशोः करणत्वं न्यायसिद्धम् । इदं छान्दसमिति कैयटः ॥

अन्यकर्तृक इति । अभिलष्यतिकर्त्रपेक्षयाऽन्यदभिलष्यतिकर्म, तत्कर्तृक इत्यर्थः । यत्किंचिद्विषयकप्रीत्यनुकूलव्यापाराश्रयो

---

शब्दस्य पुष्प्यादिकामनया संप्रदीयते यस्मै तत्संप्रदानमिति योगार्थस्वीकारेण न तत्सूत्रानुपपत्तिरत आह । तत्संप्रदानकमिति । विप्रसंप्रदानकमित्यर्थः । बोधार्थमिति । अन्यथा कर्मणो गवादेर्विप्रार्थत्वेन यूपाय दार्विंतिवद्विप्रार्था या गौस्तत्कर्मकं दानमिति बोधः स्यान्न त्वभीष्टं विप्रसंप्रदानकं गोकर्मकं दानमिति बोध इति भावः । अत्रार्थे वृद्धसम्मतिं दर्शयति । अत एवेति । तथा बोधस्येष्टत्वादेवेत्यर्थः । तादर्थ्येति । चतुर्थी संप्रदान इत्यत्र संप्रदानग्रहणमकृत्वा विप्राय गां ददातीत्यादौ तादर्थ्ये चतुर्थीसाधने इत्यर्थः । अन्वयानापत्तिरिति । तयोः परस्परमाकाङ्क्षाविरहादिति भावः । चतुर्थी संप्रदान इत्यत्र संप्रदानग्रहणस्य भाष्योक्तं फलं दर्शयति । तादर्थ्यचतुर्थ्यैवेति । यूपाय दार्वित्याद्यर्थं तादर्थ्ये उपसंख्यानस्यावश्यकत्वेनात्रापि तयैव सिद्धे इत्यर्थः ॥

अन्यत्वस्य साकाङ्क्षत्वादाह । अभिलष्यतीति । ननु कोऽसावभिलष्यते रोचतेश्च कर्ताऽत आह । यत्किञ्चिदिति । प्रीत्यनुकूलव्यापार इति । विषयतासंबन्धेन प्रीत्यनुकूलो विषयतया प्रीतिव्यधिकरणो यो

ऽभिलष्यतिकर्ता। हरिर्भक्तिमभिलष्यतीति प्रत्ययात्। यत्किञ्चिन्निष्ठप्रीत्यनुकूलः प्रीतिव्यधिकरणो यो व्यापारस्तदाश्रयो रोचतेः कर्ता, इति अभिलषते रुच्यर्थत्वाभावान्न तद्योगे संप्रदानत्वमिति भावः। तदाह—हरिनिष्ठेति। षष्ठीति। न च प्रीयमाणपदाभावे सूत्रस्य क्रियाजनकत्वमात्रविवक्षायां संज्ञान्तराप्राप्तिविषये चारितार्थ्येन परत्वादधिकरणसंज्ञया बाधसिद्धेः कथमेतदिति वाच्यम्। देवदत्तं रोचते इत्यस्याप्यापत्तेरित्याशयात्। तत्सत्त्वे त्वस्य कर्मसंज्ञापवादत्वान्न दोषः॥

---

व्यापारस्तदाश्रय इत्यर्थः। यत्किञ्चिन्निष्ठेति। यत्किञ्चित्समवेतेत्यर्थः। प्रीतिव्यधिकरण इति। समवायेन प्रीतिव्यधिकरण इत्यर्थः। रुच्यर्थत्वाभावादिति। उभयोरपि प्रीत्यनुकूलव्यापाररूपधात्वर्थस्यैक्येऽपि रोचतौ फलतावच्छेदकसंबन्धः समवायः, अभिलषतौ च फलतावच्छेदकसंबन्धो विषयतेत्यनयोर्भेदस्य स्पष्टतया नाभिलषतियोगे संप्रदानत्वमिति भावः। वस्तुतस्तु विषयतया प्रीत्यनुकूलः प्रीतिसमानाधिकरणो व्यापारो रोचतेरर्थः। अभिलषतेस्तु विषयतया प्रीत्यनुकूलः प्रीतिव्यधिकरणो व्यापारोऽर्थ इति तस्य रुच्यर्थत्वाभावान्न तद्योगे संप्रदानत्वम्। प्रागुक्तदिशा समवायेन प्रीत्यनुकूलप्रीतिव्यधिकरणव्यापारस्य रुच्यर्थत्वे तु हरिं प्रीणयतीत्यादावपि संप्रदानत्वापत्तिः। तादृशप्रतीत्यनुरोधेन समवायेन प्रीत्यनुकूलप्रीतिव्यधिकरणव्यापारस्यैव प्रीञ्धात्वर्थताया वक्तव्यत्वेन तस्यापि रुच्यर्थत्वात्। सूत्रे प्रीयमाण इति कर्मणि शानचा निर्देशात्प्रीधातुयोगेऽस्याप्रवृत्तिकल्पने तु गौरवम्। स्पष्टं चैतत्सर्वं मञ्जूषायामिति बोध्यम्। कारकाधिकारादाह। क्रियाजनकत्वेति। मात्रपदेन कारकत्वव्याप्यकर्मत्वादिनिरासः। अप्राप्तिविषये इति। षष्ठीविषये इत्यर्थः। इत्यस्याप्यापत्तेरिति। विनिगमनाविरहादधिकरणसं-

गोपी स्मरादिति । श्लाघादेः स्तुत्यादिना बोधनमर्थः । स्मरादिति हेतौ पञ्चमी । स्तुत्याऽऽत्मानुरागं कृष्णं बोधयतीत्यर्थः । स्तुतिश्च कृष्णस्यैव । एवं ह्नुत्या स्वानुरागं कृष्णं बोधयतीत्यर्थः । ह्नुतिः सपत्न्यादिभ्यः कृष्णस्यैव । एवं स्थित्या शपथेन च

---

ज्ञाववत्कर्मसंज्ञापि परत्वादस्य बाधिका स्यात्तथा चेष्टस्थलेऽपि संप्रदानत्वानापत्तिरिति भावः । कर्मसंज्ञापवादत्वादिति । प्रीयमाण इत्युक्त्या समवायेन प्रीत्याश्रयस्य संप्रदानसंज्ञालाभाद्रोचतेश्च समवायेन प्रीत्यनुकूलव्यापारार्थकत्वात्फलतावच्छेदकसंबन्धेन प्रीत्याश्रयत्वस्य हरौ सत्त्वेन तत्र कर्मत्वस्य नाप्राप्ततया तदपवादत्वमिति भावः । रोचतौ फलतावच्छेदकसंबन्धो विषयतेति नागेशमते तु देवदत्ताय रोचते मोदकः पथीत्यत्राधारस्य तत्त्वेनाविवक्षया क्रियाजनकत्वमात्रविवक्षायां षष्ठ्या इष्टत्वेन तत्र तां बाधित्वाऽनेन संप्रदानत्वापत्तिः प्रीयमाणपदाभावे दोष इति बोध्यम् ॥

केवलस्तुत्यादिरेव श्लाघादेरर्थ इति प्राचोक्तमयुक्तमित्याशयेनाह । श्लाघादेरिति । सूत्रे ज्ञीप्स्यमान इत्यत्र ज्ञापनवचनाज्ज्ञपेस्सन्नन्तात्कर्मणि शानच् । तेनेच्छाकर्मणः संप्रदानत्वं लभ्यते । इषिकर्मत्वं चेच्छाविषयस्य स्वप्रकृत्यर्थस्य तदर्थकर्मणश्च । अत एव आत्मा निदिध्यासितव्यो विजिज्ञासितव्यः, ग्रामो जिगमिषितव्य इत्यादौ सन्नन्तात्प्रकृत्यर्थकर्मणि कृत्यप्रत्यय उपपद्यते । एवं चेच्छाविषयोर्ण्यर्थप्रकृत्यर्थयोः कर्मणो विनिगमनाविरहादनेन संप्रदानत्वं विधीयते । प्रधानभूतण्यर्थकर्मण एव संप्रदानत्वे तु ज्ञाप्यमान इत्येव वदेत् । तत्र प्रधानभूतण्यर्थकर्मणः संप्रदानत्वे पर्यवसितमर्थमाह । आत्मानुरागमिति । कृष्ण आत्मानुरागं बुध्यते, गोपी कृष्णमात्मानुरागं बोधयतीत्यर्थे कृष्णस्य ण्यर्थकर्मत्वात्संप्रदानत्वमिति भावः । प्रकृत्यर्थकर्मणः

कृष्णं स्वानुरागं बोधयतीत्यर्थः। यद्वा स्तुत्या ह्नुत्या च कृष्णं स्वसखीजनं बोधयति, स्थित्या शपथेन च कृष्णं तं बोधयतीत्यर्थः। ज्ञीप्स्यमानपदे ण्यर्थकर्मणः प्रकृत्यर्थकर्मणश्च ग्रहणादित्यन्यत्र विस्तरः। स्तुत्यादिमात्रार्थत्वे कृष्णं श्लाघते कृष्णं ह्नुते इत्येव। ज्ञीप्स्यमान इति ज्ञापनवचनाज्ज्ञपेः सन्नन्तात्कर्मणि शानच्। धारेरु। धृङ् अवस्थाने इति ण्यन्तस्य ग्रहणं व्याख्यानात्। भक्तायेति। ध्रियमाणं स्वरूपेणावतिष्ठमानं मोक्षं हरिः प्रयुङ्क्ते इत्यर्थः। प्रेरणाया भक्तासत्त्वेऽभावात्तस्यापि प्रेरणाजनकत्वेन कारकत्वं बोद्धव्यम्। अवश्यदेयत्वेन मोक्षेऽपि ऋणत्वं बोद्धव्यम्। प्रकर्षविव-

---

संप्रदानत्वे पर्यवसितमर्थमाह। यद्वेति। सखीजनं बोधयतीति। सखीजनः कृष्णं बुध्यते, गोपी स्तुत्या सखीजनं कृष्णं बोधयतीत्यर्थात्कृष्णस्य प्रकृत्यर्थकर्मत्वादनेन संप्रदानत्वमिति भावः। तदेतदाह। ज्ञीप्स्यमानपद इति। मात्रार्थत्वे इति। मात्रपदेन बोधनव्यवच्छेदः। ण्यन्तस्य धृञो ग्रहणमिति भ्रमवारणायाह। धृङिति। व्याख्यानादिति। लक्ष्यानुरोधरूपादित्यर्थः। यदि धारणार्थकस्य धृञो ग्रहणमित्युच्यते, तदा तस्य सकर्मकत्वेन ण्यन्तावस्थायां मोक्षस्य कर्मत्वं न स्यात्। तथा च भक्ताय धारयति मोक्षं हरिरिति प्रयोगानुपपत्तिः। धृञो ग्रहणे तु तस्याकर्मकतयाऽण्यन्तावस्थायां कर्तुर्मोक्षस्य ण्यन्तावस्थायां कर्मत्वेन तदुपपत्तिरिति भावः। स्वरूपेणावतिष्ठमानमिति। स्वभावादप्रच्यवमानमित्यर्थः। भक्तस्य कारकत्वमुपपादयति। प्रेरणाया इति। तस्यापि = भक्तस्यापि। ननु ऋणं नाम सजातीयद्रव्यान्तरदानमङ्गीकृत्य परदत्तपरकीयद्रव्यादानं, तज्जन्योऽधमर्णनिष्ठः परिशोधननाश्योऽदृष्टविशेषो वा। उभयथापि नेह प्राप्तिः। मोक्षस्योक्तरूपर्णत्वाभावेन भक्तस्य तत्स्वामित्वरूपोत्तमर्णत्वाभावादित्यत आह। अवश्यदेयत्वेनेति। धृङ् अवस्थान इति

**क्षायामित्विति** । फलाश्रयत्वेन विवक्षायामित्यर्थः । **परत्वादिति** । **इदं सूत्रं** विषयतया क्रियाजनकत्वमात्रविवक्षायां चरितार्थमिति भावः । **पुष्पसम्प्रदानिकेच्छेति** चतुर्थीसमभिव्याहारे बोधः । **कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति** चेत्यत्र **क्रियासम्बन्धित्वमात्रविवक्षया षष्ठी** । **अन्ये तु भोगायेत्यध्याहृत्य, कान्तायेति विभक्तिविपरिणामेन वा व्याख्येयमित्याहुः** । **स्पृहधातुरिच्छा-**

---

धातोर्हेतुमण्णाववस्थित्यनुकूलव्यापारानुकूलव्यापारो धारेरर्थः । तदर्थावस्थित्याश्रयसंबन्धिनोऽनेन संप्रदानत्वविधानाच्छेषषष्ठ्यपवादोऽयम् । हरिकर्तृको भक्तसंप्रदानको मोक्षकर्मकावस्थित्यनुकूलव्यापारानुकूलो व्यापार इति बोधः । **फलाश्रयत्वेन विवक्षायामिति** । फलावच्छिन्नेच्छावाचिनः स्पृहधातोर्ग्रहणे विषयतारूपधात्वर्थफलाश्रयत्वेन पुष्पाणां कर्मत्वमिति भावः । अत एव स्पृहणीयं पुष्पं, स्पृहणीयशोभमित्यादौ कर्मण्यनीयरुपपद्यते । नन्वेवमिदं सूत्रं निरवकाशं स्यादित्याशङ्क्य तत्सार्थक्यं दर्शयति । **इदं सूत्रमिति** । मात्रपदेन धात्वर्थफलाश्रयत्वव्यवच्छेदः । इच्छामात्रवाचिनः स्पृहधातोर्ग्रहणे पुष्पाणां धात्वर्थव्यापारजन्यविषयतारूपफलाश्रयत्वेऽपि तादृशफलस्य धात्वर्थत्वाभावात्कर्मत्वाप्राप्त्या तत्र चतुर्थ्यर्थमिदं सूत्रं चरितार्थमिति भावः । स्वसिद्धान्तरीत्या बोधमाह । **पुष्पेति** । ननूक्तरीत्या स्पृहधातुयोगे कर्मत्वसंप्रदानत्वयोरेव साधुतालाभात्तद्योगे षष्ठीप्रयोगोऽनुपपन्न इत्यत आह । **कुमार्य इति** । **संबन्धित्वमात्रेति** । मात्रपदेन जनकत्वव्यवच्छेदः । **अध्याहृत्येति** । एवं च कान्तस्य स्पृहधात्वर्थव्यापारजन्यफलाश्रयत्वाभावान्न तस्य संप्रदानत्वमिति भावः । तद्विवक्षायामप्याह । **विपरिणामेनेति** । **आहुरिति** । अध्याहारे विभक्तिविपरिणामे वा गौरवमत्रारुचिः । अर्थभेदेन कर्मसंज्ञासंप्रदानसंज्ञयोर्विषयविभागं स्पष्टयितुमाह । **स्पृहधातुरिति** । मात्रपदेन फलव्यवच्छेदः ।

मात्रवाची फलावच्छिन्नेच्छावाची च। आद्ये सम्प्रदानत्वम्, अन्त्ये कर्मत्वम्। ईप्सिततत्वं धात्वर्थजन्यफलाश्रयत्वं, न तु फलस्य धात्वर्थत्वपर्यन्तमाग्रहः। कर्मसंज्ञायान्तु यथा तल्लाभस्तथोक्तम्। भार्यामीर्ष्यतीति। नात्र भार्यां प्रति कोपः, किं तु परैर्दृश्यमानां तां न सहते इत्येव। एवञ्चात्र न कोपजन्येर्ष्या, किन्त्वन्यपुरुषदर्शनजन्येति

---

फलावच्छिन्नेति। फलं चात्र विषयतारूपम्। विषयतानिरूपकेच्छायास्तदर्थत्वादिति बोध्यम्। इच्छामात्रवाचित्वे संप्रदानत्वप्रवृत्तौ कर्मत्वाप्रवृत्तौ च हेतुमाह। ईप्सिततत्वमिति। उक्तमिति। तत्र तमब्ग्रहणेन फले प्रकृतधात्वर्थत्वरूपप्रकर्षलाभ इत्युक्तमित्यर्थः। शेषषष्ठ्यपवादेयं संप्रदानविभक्तिः। क्रोधादयो ज्ञानादिवत्सविषयाः, यं प्रति कोप इत्यस्य यद्विषयकः कोप इत्यर्थः। तत्र वधाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषरूपः क्रोधः क्रुधेरर्थः। दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषो द्रुहेरर्थः। हरये क्रुध्यति द्रुह्यतीत्यनयोर्हरिं हन्तुमिच्छति, हरेरपकर्तुमिच्छतीत्यर्थः। अनयोः सविषयकत्वेन सविषयकधातुस्थले विषयताया एव फलत्वेन तदाश्रययोर्हननापकारयोर्धात्वर्थोपसंगृहीतत्वेनैतावकर्मकौ। नच हननादिनिष्ठविषयताया इव हरिनिष्ठविषयताया अपि प्रकृतधात्वर्थव्यापारप्रयोज्यत्वेन तादृशफलाश्रयस्य हरेः सत्त्वात्कथमनयोरकर्मकतेति वाच्यम्। हरिनिष्ठविषयतारूपफलस्य धात्वर्थव्यापारजन्यत्वेऽपि तस्य धात्वर्थत्वाभावेन तदाश्रयस्य हरेः कर्मसंज्ञाया अप्राप्तेः। एतेनानयोर्धात्वर्थोपसंगृहीतकर्मकत्वेनाकर्मकत्वप्रतिपादनपरमञ्जूषाग्रन्थस्य, क्रोधजन्यफलस्य धात्ववाच्यत्वेनाकर्मकत्वप्रतिपादनपरशब्दरत्नग्रन्थस्य च न विरोध इति बोध्यम्। विषयतयैतद्धात्वर्थमूलभूतकोपसंबन्धिनो हरेरनेन संप्रदानत्वम्। हरिसंप्रदानकः क्रोधो द्रोह इति च बोधः। अत्र शेषषष्ठ्यपवादता संप्रदानविभक्तेः। उत्कर्षविरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेष ईर्ष्या। शौचाचारादिविषये

भावः । हरेः क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् क्रियया यमित्यनेन न सिद्धिः । न ह्यकुपितः क्रुद्ध्यतीति भाष्येण प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावेन न तद्योगे इदम् । 'कुप्यति कस्मैचित्' इत्याद्यसाध्वेव । उपसृष्टयोरित्यस्यार्थमाह—सोपसर्गयोरिति । वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्धः । पूर्वसूत्रापवादोऽयम् । यदीय इति । यदीयशुभाशुभसम्बन्धीत्यर्थः । राधीक्ष्योः प्रश्नविषयार्थपर्यालोचनमर्थः । कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ । अत एव श्यन् । राधोऽकर्मकादेवेत्युक्तेः । कृष्णसम्प्रदानकं शुभाशुभपर्यालोचनमर्थः । प्रत्याङ्भ्याम् । श्रा-

---

दम्भादिकृतत्वरूपदोषारोपानुकूलश्चित्तवृत्तिविशेषोऽसूया । यं प्रति कोप इति विशेषणादेते चित्तवृत्तिविशेषरूपकोपमूलका एवात्र गृह्यन्ते । अन्त्यद्वये कर्मसंज्ञापवादता संप्रदानविभक्तेः । तद्धात्वर्थमूलभूतकोपविषयत्वे सति तद्धात्वर्थफलाश्रयस्यैतद्विषये संप्रदानसंज्ञाविधानादिति बोध्यम् । ननु क्रियया यमित्यनेनैव सिद्धे इदं व्यर्थमत आह । हरेरिति । तस्य क्रोधादिजनककोपविषयत्वमेव। न तु क्रोधादिविषयकेच्छाविषयत्वमिति भावः । ननु कुप क्रोध इत्युक्त्या तस्याऽपि क्रोधार्थत्वेनान्येषां तन्मूलकत्वेऽपि क्रोधस्य कथं तन्मूलकत्वमित्याशङ्क्य न ह्यकुपित इत्यादिभाष्यमूलकं तयोर्भेदं दर्शयति । नहीति । प्ररूढकोप इति। विकृतवाक्कायादिव्यापारजनकः कोप इत्यर्थः। तदर्थत्वाभावेन= क्रोधार्थत्वाभावेन। एते क्रोधादयश्चेतनविषया एव। द्विषिस्त्वचेतनविषयोऽपि। औषधं द्वेष्टीति प्रयोगात् । अनभिनन्दनं हि तदर्थः। अत एव चित्तदोषार्थानामित्येव नोक्तम् ।तेन योऽस्मान्द्वेष्टीत्यादौ नैषेति बोध्यम् । प्रश्नविषयार्थेति । प्रश्नविषयीभूतशुभाशुभरूपार्थेत्यर्थः । प्रश्नविषयस्येति । प्रश्नविषयीभूतशुभाशुभस्येत्यर्थः । अत एव = अकर्मकत्वादेव । अत्र षष्ठ्यपवादत्वमस्य । श्रा-

ख्यानात्प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति—गां प्रतिशृणोतीति। अनयोः प्रवर्तनापूर्वकाभ्युपगमोऽर्थः। तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम्। अनुप्रति। अनुप्रतीति भिन्नं पदं लुप्तपञ्चम्यन्तम्। गृण इति श्नान्तानुकरणात् षष्ठी। शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः। पूर्वव्यापारस्येति। शंसनस्येत्यर्थः। प्रोत्साहयतीति। ओथामेत्यादिशब्दैरिति शेषः। शतायेति। करणस्यैव सम्प्रदानत्वेन भानमत्र। शतव्यापारश्च दानरूप एवेति बोद्धव्यम्। तादर्थ्ये। तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः। यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी—गुरोरिदं गुर्वर्थमिति अत्र भाष्ये स्पष्टम्। क्लृपीति सप्तमी। अर्थ-

---

ख्यानादिति। द्विवचननिर्देशमूलकादित्यर्थः। तत्र = तथासति। विप्रस्य= स्वार्थप्रवर्तनाश्रयस्य। विप्रसंप्रदानको गोकर्मकोऽर्थाद्विप्रनिष्ठप्रवर्तनाजन्यो देवदत्तनिष्ठाभ्युपगम इति बोधः। अनयोरर्थ इति। तथा च धात्वर्थशंसनाश्रयस्यानेन संप्रदानत्वम्। होतृसंप्रदानकोऽर्थाद्धोतृनिष्ठशंसनविषयहर्षानुकूल ओथामो दैवेत्यादिशब्दप्रयोगरूपो व्यापार इति बोधः। अत्र कर्मसंज्ञापवादत्वमस्य। संप्रदानत्वेन भानमिति। संप्रदानसंज्ञापक्षे तत्त्वेन भानमित्यर्थः। करणस्य व्यापारनियतत्वादाह। शतव्यापारश्चेति। तादर्थ्यमिति। तस्मै कार्यायेदं तदर्थं कारणं, तस्य भावस्तादर्थ्यम्। ष्यञा उपकारकत्वरूपः संबन्धोऽभिधीयते। कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तात्। तदाह। उपकार्योपकारकेति। उपकारकत्वमत्र न साक्षादेव, किन्तु परम्परयापि। अत एव ब्राह्मणाय दधीत्यादिसिद्धिः। विप्रकर्तृकभोजनोपकारके विप्रोपकारकत्वारोपाद्विप्रोपकार्योपकारकं दधीति बोधः। एवं मुक्तये हरिं भजतीत्यत्र मुक्तिरूपोपकार्योपकारकं हरिकर्मकं भजनमिति बोधः।

ग्रहणञ्चात्र। सम्पत्तिः—उत्पत्तिः । क्लृप्त्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थीत्यर्थः । हितयोगे च । चात्सुखयोगेऽपि ॥

क्रियार्थोप । क्रिया अर्थः फलं यस्य तत् क्रियार्थम् । तेन स्ववाचकं लक्ष्यते । क्रियाफलकार्थवाचकमुपपदं यस्येत्यर्थः । सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव । स्थानिशब्दश्च अप्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः । क्रियार्थक्रियोपपदत्वञ्च तुमुनादेरेवेत्याह—क्रियार्था क्रियेति । फलेभ्यो यातीत्यादौ फलकर्मकाऽऽहरणफलकं

---

उत्पत्तिरिति । अभूतप्रादुर्भाव इत्यर्थः । उत्पद्यमानेऽर्थे वर्तमानादिति । विकृतिवाचकादित्यर्थः । विकारस्य च प्रकृतिरूपारोपादनयोः सामानाधिकरण्यं, भक्तिरूपज्ञानकर्तृकोत्पत्तिरिति बोधः । भक्तिरत्र निदिध्यासनरूपा, न तु प्रसिद्धा । तस्याः साक्षान्मुक्तिजनकज्ञानासाधकत्वात् । प्रकृतिवाचकसमानाधिकरणत्वात्प्राप्तप्रथमाया अपवादोऽयम् । कल्पेरुत्पत्त्यर्थकत्वे इदम् । यद्वा कल्पत इत्यादेः परिणमत इत्यर्थः । परिणामश्च रूपान्तरप्राप्तिः । तदेकदेशे रूपान्तरे ज्ञानादेर्विकारस्याभेदेनान्वयाद्द्वितीयायां प्राप्तायामनेन चतुर्थी । प्रकृतिविकृत्योर्भेदविवक्षायां द्वितीयाबाधनेन चरितार्थेयं चतुर्थी तयोरभेदविवक्षायां परत्वात्प्रथमया बाध्यते । एवं च तदा भक्तिर्ज्ञानं कल्पत इत्येव भवतीति बोध्यम् । सुखयोगेऽपीति । यथा तस्मै हितमिति निर्देशाद्धितशब्दयोगे चतुर्थी, तथा चतुर्थी तदर्थार्थेति सूत्रेण चतुर्थ्यन्तस्य सुखशब्देन सह समासविधानाज्ज्ञापकात्सुखयोगेऽपि भवतीति भावः ॥

क्रियाफलार्थवाचकमिति । क्रिया फलं यस्यार्थस्य तद्वाचकमित्यर्थः । तुमुनादेरेवेति । आदिना ण्वुल् । तुमुण्ण्वुलावित्यादिना क्रियार्थक्रियोपपदत्वे तयोर्विधानादिति भावः । तुमुन्नन्तार्थक्रियाकर्मात्र चतुर्थीवाच्यमित्याशयेनाह । फलकर्मकाहरणेति । नन्वाहरणक्रियायाः पदादनुपस्थितत्वेन कथं तस्य

यानमिति बोधः। यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले प्रविश पिण्डीमित्यादौ तस्यैव पदस्य संपूर्णवाक्यार्थशक्तता तथाऽस्य समुदायस्याहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलात्। स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोद्धयम्। अयमेवार्थाद्ध्याहारः। नमस्कुर्मो नृसिंहायेति। नमःस्वस्तीत्यनेन तु न सिद्धिः, उपपदविभक्तेरिति न्यायेन द्वितीयापत्तेः। पिण्डीमित्यादावप्रयुज्यमानभक्षणक्रियाकर्मणि चतुर्थीवारणाय क्रियार्थोपपदस्येति। तुमर्थात। तुम् शब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः। इति सूत्रेणेति। भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः। यागायेति। यागफलकं यानमित्यर्थः॥

उपपदविभक्तेरिति। वाचनिकमेवेदं भाष्ये पठितमिति केचित्। क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्किंचित् क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति अन्तराऽन्तरेणेति सूत्रे कैयटः। अत्राहुः—एवं सति 'नम-

---

शाब्दबोधविषयतेत्यत आह। यथेति। अयमेवेति। प्रविश पिण्डीमित्यादिवद्वाक्यार्थे वाक्यैकदेशस्य प्रयोग एवेत्यर्थः। अत्राप्रयुज्यमानपदार्थस्याप्यनेनैव बोधनादिति भावः। इत्यर्थ इति। अत्र प्रातिपदिकार्थे प्रथमायाश्चतुर्थी बाधिका। घञयं तुमुना समानार्थः। भाववचनाश्चेत्यनेन तदर्थे तद्विधानात्॥

केचिदिति। भाष्यतत्त्वविद इत्यर्थः। अस्य कैयटोक्तं न्यायसिद्धत्वमनूद्य खण्डयति। क्रियाकारकयोरित्यादिना। अन्तरङ्ग इति। तयोः परस्परमुत्थिताकाङ्क्षायाः सत्त्वादिति भावः। यत्किञ्चित्क्रियेति। क्रियाद्वारक इत्यर्थः। एवं सतीति। अस्यान्तरङ्गन्यायमूलकत्व इत्यर्थः।

स्यति देवान्' इत्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य भाष्योक्तस्यासङ्गतिः। एतेन प्रधानत्वात् क्रियायास्तत्सम्बन्धनिमित्तकत्वेन बलवत्त्वमित्यपि परास्तम्। कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम्। अन्याभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि। अभिहिते प्रथमेति वार्तिकस्वारस्यात्। अतः प्रथमापि कारकविभक्तिरिति बोद्धव्यम्। द्वावित्यादौ द्वित्वादेरिव 'देवदत्तः

---

नमः पदार्थे इति। स्वावधिकोत्कृष्टत्वबोधनरूपे नमः पदार्थे इत्यर्थः। असङ्गतिरिति। धात्वर्थोपपदार्थाभ्यां क्रियाकारकभावसंबन्धेनैवान्वयेनान्तरङ्गबहिरङ्गभावस्य वक्तुमशक्यतया तन्मूलकत्वेन कैयटाभिमतस्यास्य न्यायस्याप्रवृत्त्या तेन चतुर्थीवारणस्य भाष्योक्तस्यासङ्गतिरिति भावः। किं च क्रियाजन्यफलाश्रयत्वनिमित्तकद्वितीयापेक्षया विशेषणीभूतनमःपदार्थसंबन्धनिबन्धनायाश्चतुर्थ्या एवान्तरङ्गत्वेन वचनमन्तरेण तन्निवर्तनायोगाद्वाचनिकत्वमस्याः परिभाषाया आवश्यकमिति बोध्यम्। अत्र नमः पदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येवेति बोध्यम्। एतेन = उक्तभाष्यविरोधेन। तृतीयादिभिरेव कर्त्रादीनामुद्भूतत्वेन भानादाह। अनुद्भूतकर्त्रादीति। प्रथमापीति। अत एव सह युक्तेऽप्रधान इति सूत्रस्थं भाष्यं संगच्छते। तत्र हि प्रकृतपरिभाषया तृतीयातः प्रथमायाः प्राबल्यमास्थायाप्रधानग्रहणं प्रत्याख्यातम्। यदि क्रियान्वय्यर्थकविभक्तित्वमेव कारकविभक्तित्वं, तदा प्रथमाप्रतिपाद्यस्य प्रातिपदिकार्थस्य तिङर्थान्वयित्वेऽपि क्रियान्वयाभावात्कारकविभक्तित्वाभावेन तदसङ्गतिरेव स्यादिति बोध्यम्। नन्वभिहितकर्तृत्वादेः प्रथमार्थत्वे देवदत्तः पचतीत्यादौ कर्तृत्वादेर्बोधाप्रवृत्तिरित्यत आह। द्वावित्यादाविति। ननु स्वनिष्ठापकृष्टत्वबोधानुकूलव्यापारस्य नमःपदार्थत्वे देवोद्देशेन यत्र नमस्कारः

पचति' इत्यादौ उभाभ्यामेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिः। नमस्करोति देवानिति। उत्कृष्टनिष्ठो यः स्वनिष्ठापकृष्टत्वबोधः तदनुकूलव्यापाररूपनमस्कारफलस्य तादृशबोधस्याश्रयतया देवानां कर्मत्वम्। स्वशब्देन प्रयोक्ता। नमःशब्दस्य साक्षात्प्रभृतिषु ऊर्यादिषु वा पाठेन गतित्वात्सत्वम्। एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तम्। नमस्यति देवानित्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात्, सह-

---

कृतः, तत्र तादृशव्यापारजन्यबोधरूपफलस्य तटस्थे द्रष्टर्यपि सत्त्वेन तस्यापि कर्मत्वं स्यादित्यत आह। उत्कृष्टनिष्ठ इति। उत्कृष्टसमवेत इत्यर्थः। वस्तुतः स्वनिष्ठापकृष्टत्वबोधानुकूलव्यापार एव नमः पदार्थः। स्वविषयापकर्षावधित्वसमानाधिकरणसमवायरूपेण फलतावच्छेदकसंबन्धेन फलाश्रयस्यैव कर्मत्वान्न तटस्थस्य कर्मत्वप्रसक्तिः। तत्र प्रयोक्तृनिष्ठापकृष्टत्वज्ञानबोधरूपफलस्य समवायेन सत्त्वेऽपि तस्य स्वविषयापकर्षावधित्वसामानाधिकरण्याभावात्। स्वविषयेत्यत्र स्वशब्देनापकृष्टत्वज्ञानबोधरूपं फलं ग्राह्यम्। तद्विषयो य अपकर्ष इत्यर्थः। ईदृशफलतावच्छेदकसंबन्धेनैव फलाश्रयत्वं ग्राह्यमित्यत्रैव तात्पर्यग्राहकमत्रोत्कृष्टनिष्ठ इति, विशिष्टस्य वाच्यत्वे गौरवात्। स्पष्टं चेदं मञ्जूषायामित्यवधेयम्। यदा तु नमश्शब्दस्य वाचकत्वं, तदा चतुर्थ्येव। तेन नमस्कुर्मो नृसिंहायेति सिद्धम्। अत्र सूत्रे उभयोरपि नमश्शब्दयोर्ग्रहणमिति बोध्यम्। नमस्कारफलस्येति। अत्रायं नमश्शब्दो निपातो द्योतकः। निरुक्तनमस्काररूपो व्यापारः कृधातोरेवार्थ इति भावः। साक्षात्प्रभृतिषु च्व्यर्थवचनं कर्तव्यमिति वार्तिकस्य सत्त्वेनात्र च्व्यर्थाप्रतीत्या कथं तेन गतित्वमत आह। ऊर्यादिष्विति। कैयटोक्तं खण्डयति। एकस्या एवेति। यथा मासे दीयत इत्यत्राधिकरणसप्तम्या भावलक्षणसप्तम्यपेक्षया बलवत्त्वमनेन न्यायेनोक्तं कैयटे-

युक्त इत्यादिसूत्रस्थभाष्यविरोधाच्च । अलमितीति । अलमित्यनेन पर्याप्त्यर्थानां ग्रहणं व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह—तस्मैप्रेति । षष्ठ्या अपि साधुत्वे बीजं—स एषामिति । आशीर्विवक्षायामिति । आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः कुशलं मङ्गलं वा । स्वस्तियोगे चतुर्थ्या अवकाशः—स्वस्ति जाल्मायास्तीति तत्त्वकथनम् । कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिन्नाः कुशलार्थाः । स्वस्तिशब्दोऽनव्ययमपि ।

प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु मे नित्यं सुखश्चानुत्तमं तथा ॥

इति भविष्योत्तरे प्रयोगात् ॥

मन्यकर्मणि । तिरस्कार इति । अनादरो न आदराभावमात्रम्, अपि तु नञोऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति

---

नेति भावः । भाष्यविरोधाच्चेति । अनेन न्यायेनाप्रधानग्रहणप्रत्याख्यानपरभाष्यविरोधादित्यर्थः । व्याख्यानादिति । अलमिति पर्याप्त्यर्थग्रहणमिति वार्तिकरूपादित्यर्थः । आशीर्विषयत्वविवक्षायामिति । स्वस्त्यर्थस्येत्यर्थः । मूले परामपीत्युक्त्या परत्वस्य प्राबल्यप्रयोजकं विप्रतिषेधमनयोर्दर्शयति । स्वस्तियोग इत्यादिना । अनव्ययस्यापि स्वस्तिशब्दस्य सत्त्वे मानमाह । प्रयोगादिति । सूत्रे पूर्वोत्तरसाहचर्यादव्ययस्यैव स्वस्तिशब्दस्य ग्रहणादनव्ययेनानेन योगे नास्य प्रवृत्तिरिति बोध्यम् ॥

न त्वां तृणाय मन्ये इत्यत्र व्यवस्थितविभाषया युष्मदश्चतुर्थीवारणं वृत्तिकृदुक्तमयुक्तं, भाष्यानुक्तव्यवस्थितविभाषाणामप्रामाणिकत्वादिति सूचयं-

**भावः। तत्रानादर इति मन्यकर्मविशेषणं तद्द्योतकं यत्कर्मेत्यर्थः। तेन युष्मच्छब्दाच्चतुर्थी न। तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते न त्वपकृष्टसादृश्यरूपः। तत्प्रतीतिश्च नञ्समभिव्याहारे एव। तृणतुल्यमपि न मन्ये इत्यर्थः। 'तृणाय मत्वा रघुनन्दनोऽपी'त्यादौ नञोऽध्याहारः, तदाह—न त्वां तृणमिति। कर्मोऽत्र चतुर्थ्यर्थः। श्यनेति। न तु यका, व्याख्यानादिति भावः। श्यंस्तूपलक्षणम्। तेन लिडादावपि भवति। तद् ध्वनयन्नाह—तानादिकयोगे नेति। नौकाकेति। भाष्ये येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्तीति येष्विति बहुवचनेन वृत्त्युदा-**

स्तत्र तद्वारणोपायं दर्शयति। तत्रेति। व्याख्यानादिति। मन्यकर्मणि प्रकृष्य कुत्सितग्रहणं कर्तव्यमिति वार्तिकरूपादित्यर्थः। यद्वाचिनश्चतुर्थी ततोऽपि यदि कुत्सा प्रतिपिपादयिषिता न तु साम्यमात्रं, तदा चतुर्थीति तदर्थः। तदेतदाह। **अपकृष्टेति**। तत्प्रतीतिश्चेति। ईदृशकुत्साप्रकर्षप्रतीतिरित्यर्थः। नन्वेवं तृणाय मत्वा रघुनन्दनोऽपीत्यादौ चतुर्थ्याः साधुत्वं न स्यादत आह। **अध्याहार इति**। व्याख्यानादिति। अनभिहिताधिकारस्वारस्यमूलकादित्यर्थः। **उपलक्षणमिति**। दैवादिकस्य मन धातोरित्यर्थः। उपलक्षणत्वे फलमाह। **लिडादावपीति**। दैवादिकमनधातुप्रकृतिकलिडादावपीत्यर्थः। अत एवमूले तानादिकयोगेनेत्येवोक्तम्, न तु लिडादौ तानादिकयोगे चेत्युक्तमिति बोध्यम्। ननु न त्वा शुने मन्ये इत्यत्र चतुर्थीसाधनाय कृते मन्यकर्मण्यनादरे विभाषेति योगविभागे न त्वा काकं मन्ये न त्वा शुकं मन्ये इत्यत्रापि चतुर्थी प्राप्नोतीत्याशङ्क्य 'यदेतदप्राणिष्विति एतदनावादिष्विति वक्ष्यामी'ति भाष्ये उक्तम्। तेन च शुककाकरूपप्राणिकर्मण्येवास्याप्रवृत्तिसूचनाद्वार्तिके शृगालेत्याधिकमित्यत आह। **बहुवचनेनेति**। तेन च शुककाकातिरिक्तप्राणिन्यपि निषेधो ध्वनित इति भावः। ननु तदतिरिक्ताः

हरणबलेन चेष्टैवानिष्टनिर्णय इति भावः । गत्यर्थकर्म । कर्मात्रापि चतुर्थ्यर्थः । गत्यर्थेति किम् । ओदनं पचति । कर्मणीति किम् । अश्वेन गच्छति । चेष्टायां किमिति । धात्वर्थस्य क्रियारूपत्वात् प्रश्नः । शारीरक्रियाया एव ग्रहणमित्युत्तरम् । पन्थानमिति । अध्व-शब्दोऽर्थपरो व्याख्यानादिति भावः । अधिष्ठित इति । शब्दप्रयोग-समकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । अध्वपदेन गन्तृ-व्याप्तोऽर्थ उच्यते, तेन गन्तृयुक्तस्त्रियां 'स्त्रियं गच्छती'त्यादौ न । स्पष्टश्चेदं भाष्ये । उत्पथादिति । उत्पथं सन्त्यज्येत्यर्थः । इष्यत इति । न त्वाक्रान्त इत्यर्थः । उत्पथेनेति । गन्तुमशक्त इति शेषः ॥

॥ इति चतुर्थी ॥

---

प्राणी शृगाल एवेत्यत्र किं मानमत आह । वृत्तीति । एष्वेवेति । शुककाक-शृगालरूपप्राणिकर्मस्वेवेत्यर्थः । शारीरेति । परिस्पन्दरूपाया इत्यर्थः । व्याख्यानादिति । अध्वन्यर्थग्रहणमिति वार्तिकरूपादित्यर्थः । ननु स्त्रियं गच्छतीत्यादावनध्वनीति प्रतिषेधाप्राप्त्या कुतो न चतुर्थीत्यत आह । अध्व-पदेनेति । गन्तृव्याप्त इति । गन्त्रा संप्राप्त इत्यर्थः । गन्तृयुक्तस्त्रिया-मिति । गन्त्रा संप्रतिपन्नायां स्त्रियामित्यर्थः । सूत्रेऽनध्वनीत्यपहाय तत्स्थाने-ऽसंप्राप्त इति निवेशनीयमिति, सत्त्वे वा तत्राध्वपदं लक्षणया गन्तृसंप्राप्त इत्यर्थकं वेति भावः । एवं चासंप्राप्तं यद्वस्तु गमनेन संप्रेप्स्यते, तस्मिन्कर्मणी त्यक्षरार्थः । स्त्री तु संप्राप्तेति न ततश्चतुर्थी । एवमजां नयतीत्यत्राप्यजायाः संप्रापणाच्चतुर्थ्यभावः । यद्वात्र गतेः प्रतीतावपि नासौ नयतेरर्थः, तस्य प्राप-णार्थत्वात् । स्पष्टं चेदं न गतीतिसूत्रे उद्योते इति बोध्यम् । भाष्य इति । तत्र हि स्त्रियं गच्छत्यजां नयतीत्यादावतिप्रसङ्गमाशङ्क्य 'सिद्धं त्वसंप्राप्तवचनात् । असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इति वक्तव्य' मित्युक्तम् । उत्पथादिति ल्यब्लोपे पञ्चमीत्याशयेनाह । संत्यज्येत्यर्थ इति ॥

॥ इति चतुर्थी ॥

ध्रुवमपायेऽपा। ध्रुवं स्थिरम्। अपायो विभागजनको व्यापारः, तदनाश्रयमिति यावत्। विभागश्च न वास्तवसंबन्धपूर्वको वास्तव एव, किं तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिकल्पितोऽपि। माथुराः पाटलिपुत्रकेभ्य आढ्यतराइत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात्। कर्तृवारणाय ध्रुवमिति। अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात्। अपायविषये यत् कारकं तद्रूपक्रियाजनकं तदपादानमित्यर्थसम्भवात्। कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था। हरिरप्याह—

अपाये यदुदासीनश्चलं वा यदि वाऽचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥ इति।

---

ध्रुवशब्दस्य ध्रु स्थैर्ये इत्यस्मात्कुटादेः पचाद्यचि निष्पन्नत्वादाह। स्थिरमिति। अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति सूचयन्नाह। विभागजनको व्यापार इति। अधोदेशसंयोगानुकूलव्यापाररूपं पातमात्रं तु नापायः। वृक्षमजहत्यपि पर्णे शाखास्थे भूमिं स्पृशति सति वृक्षात्पर्णं पततीति प्रयोगापत्तेः। गतिं विना त्ववधिना नापाय इति कथ्यत इति हर्युक्तेश्च। अवश्यन्वययोग्यविभागं विनेति तदर्थः। ननु किं तावद्ध्रुवत्वमित्यत आह। तदनाश्रयमिति। उक्तव्यापारानाश्रयत्वरूपमेव तदिति भावः। अत्र प्रकृतधातूपात्तविभागे कं चिद्विशेषमाह। विभागश्चेति। अत्र मानमाह। माथुरा इति। ननु कर्तृसंज्ञा परत्वादस्या बाधिका भविष्यतीत्यत आह। अन्यथेति। ध्रुवपदासत्त्व इत्यर्थः। सूत्रस्य निरुक्तार्थे हरिसम्मतिं दर्शयति। हरिरपीति। चलं धावतोऽश्वात्पततीत्यादौ। अचलं वृक्षात्पर्णं पततीत्यादौ। अतदावेशादिति। प्रकृतधातूपात्तविभागजनकव्यापारानाश्रयत्वादित्यर्थः। धावतोऽश्वादित्यादावश्वस्य धावनक्रियाश्रयत्वेऽपि प्रकृतधातूपात्तव्यापारानाः-

स्पष्टश्चेदं कैयटादौ । भाष्यानुसारिणस्तु एवं हि 'त्रस्तादश्वात्पतितः'—'धावतः पतितः' इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य 'अध्रौव्यस्याविवक्षितत्वमत्र, यतः सतोऽप्यविवक्षा

श्रयत्वाद्ध्रुवत्वमित्याशयः । कैयटादावित्यादिना सूचितामरुचिं प्रकटयन् स्वसिद्धान्तमाह । भाष्यानुसारिणस्त्विति । एवं हीति । कैयटोक्तध्रुवत्वस्यैवाङ्गीकारे इत्यर्थः । इत्याशङ्क्येति । ध्रुवमचलमेकरूपं चेति परिस्पन्दे ध्रुवता नास्तीति तदाशयः । नच त्रासस्यान्तःकरणवृत्तिरूपतया कथं तावताऽश्वस्य ध्रुवत्वहानिरिति वाच्यम् । धातूनामनेकार्थत्वात्त्रासपूर्वके परिस्पन्दे त्रसिर्वर्तत इत्याशयात् । अध्रौव्यस्याविवक्षितत्वमिति । त्रासहेतुकं यदश्वस्याध्रौव्यं तत्प्रथममविवक्षितमित्यर्थः । अयं भावः । कारकस्य पूर्वं क्रियया संबन्धः । स च श्रुतिप्रापितः । पश्चाद्विशेषणेन वाक्यीयः संबन्धः । ततश्चाश्वात्पतित इति संबन्धे नास्त्यश्वस्याध्रुवत्वं, पश्चात्त्रस्तत्वेन संबन्धे सत्यप्यध्रौव्येऽन्तरङ्गा संज्ञा न निवर्तते । विशेषणस्यासत्यप्यपादानत्वे न केवला प्रकृतिरिति न्यायेन विभक्त्युत्पत्तिः । सा च विशेष्यानुरोधेन प्रवर्तते, न त्वनियमेन । विशेषणानामभिन्नविशेष्यसमानशक्तिकत्वनियमादिति । यद्वाऽऽशुगमनाश्रयत्वमश्वशब्देन योगतो बुध्यते । अश्वत्वं च रूढ्या, एवं चाश्वात्पतित इति प्रयोगे यद्यश्वस्याशुगामित्वाविवक्षयाऽश्वत्वमात्रविवक्षया ध्रुवत्वमभिमतं तर्हि त्रस्तादिति विशेषणयोगेऽपि न क्षतिरिति भावः । तदेतदुक्तं भाष्ये, 'अध्रौव्यस्याविवक्षितत्वात् । नात्राध्रौव्यं विवक्षितम् । किं तर्हि, ध्रौव्यम् । इह तावदश्वात्त्रस्तात्पतित इति । यत्तदश्वेऽश्वत्वमाशुगामित्वं, तद्ध्रुवं, तच्च विवक्षितमि'ति । अश्वनिष्ठाश्वत्वाशुगामित्वयोर्मध्ये तदश्वत्वमेव ध्रुवताप्रयोजकं, तदेव च विवक्षितमिति तदर्थः । ननु यत्र क्रिया न प्रवृत्तिनिमित्तं, किन्तु व्युत्पत्तिमात्रनिमित्तं, तत्रैतद्युज्यते वक्तुम् । यत्र तु क्रियैव प्रवृत्तिनिमित्तं, यथा धावतः पतित इत्यादौ, तत्र कथं नाध्रौव्यमत आह । सतो-

भवति' इति समाहितं भाष्ये, तदसङ्गतं स्यात्। त्वदुक्तध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतोऽप्यविवक्षेत्यस्यासङ्गतेः। सिद्धान्तेऽपि तदुक्तध्रुवपदार्थकथनमेवोचितमिति तदसङ्गतिश्च। लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च। अतदावेशादित्यस्य हरिकारिकायां तदावेशाविवक्षणादित्यर्थः। तस्मादपाये गतिविशेषे सति यद् ध्रुवमवधिभावोपगमाश्रयत्वे सति तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः। त्रासादेरवधित्वोपयोगित्वाश्रयणेन शङ्का, वृक्षात्पर्णमित्यादौ तस्यासत्त्वान्न तदुपयोगित्वं तस्य, प्रकृते विद्यमान-

ऽप्यविवक्षेति। यथा समुद्रः कुण्डिकेत्यादौ पानीयबाहुल्यात्कुण्डिकायामसदपि समुद्रत्वं, समुद्रस्य वा सुतरत्वात्कुण्डिकात्वं विवक्षितं, तथा सतोऽपि सरणक्रियारूपस्य प्रवृत्तिनिमित्तस्यात्राविवक्षितत्वं, किन्तु तदुपलक्षितं द्रव्यमात्रमपादानत्वेन विवक्षितमिति भावः। असङ्गतेरिति। सतोऽप्यविवक्षेति भष्याक्षराणामसामञ्जस्यादित्यर्थः। त्वदुक्तध्रुवपदार्थेति। विभागजनकव्यापारानाश्रयत्वे सति विभागाश्रयत्वरूपेत्यर्थः। लोकसिद्धातिरिक्तेति। ध्रुवमस्य शीलमित्यादौ लोकप्रसिद्धो योऽर्थो निश्चलत्वैकत्वरूपस्तदतिरिक्तार्थे इत्यर्थः। ननु निरुक्तहरिग्रन्थेन दीक्षिताद्युक्तमेव ध्रुवत्वं लभ्यत इति तत्परित्यागे तद्विरोधोऽत आह। हरिकारिकायामिति। एवं प्राचीननये भाष्यासाङ्गत्यं प्रदर्श्य सिद्धान्तरीत्या सूत्रार्थं वर्णयति। तस्मादिति। अपायशब्देन तज्जनको गतिविशेषो विवक्षित इत्याशयेनाह। गतिविशेष इति। विभागजन्यसंयोगानुकूलव्यापार इत्यर्थः। स्वरीत्या शङ्कासमाधानभाष्यस्य सङ्गतिं दर्शयति। त्रासादेरिति। आदिना धावनपरिग्रहः। उपयोगित्वाश्रयणेनेति। त्रासधावनयोः पतनहेतुत्वेन पतनक्रियावधित्वोपयोगित्वं तयोरित्याशयः। तस्येति। त्रासादेरित्यर्थः। कर्तृवारणाय सूत्रे ध्रुवग्रहणमिति प्राचोक्तमयुक्तं,

स्यापि तस्याविवक्षितत्वान्न तदुपयोगित्वं तस्येत्युत्तरम् । ध्रुवमपाये इति तु वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्तापादानत्ववारणाय । एवञ्चापाये इति कारके इत्यस्य क्रिया-

---

ग्रामादागच्छतीत्यादौ ग्रामे चरितार्थामपादानसंज्ञां बाधित्वा परत्वात्कर्तृसंज्ञायाः सिद्धेः । न च तदभावेऽपायात्मकक्रियाजनकमपादानमित्यर्थे कर्तरि सूत्रप्राप्तेरेव वाच्यतया कर्तृसंज्ञाया इयमपवादः स्यादिति वाच्यम् । तदभावेऽपाये यत्साधनमित्येव शब्दमर्यादया लाभेन त्वदुक्तार्थस्य शब्दतोऽलाभात् । अत एव भाष्ये ध्रुवग्रहणाभावे ग्रामादागच्छति शकटेनेत्यत्र करणेऽतिप्रसङ्गमाशङ्क्य परत्वात्करणसंज्ञा बाधिका भविष्यतीत्युक्तम् । त्वदुक्तार्थे तु करणस्य प्राप्तेरेवाभावेन तदसङ्गतिः स्पष्टैवेत्याशङ्क्य भाष्यरीत्या ध्रुवमपाय इत्यस्य फलं दर्शयति । ध्रुवमपाये इति त्विति । ननु वृक्षस्य पर्णेऽन्वयेन क्रियाजनकत्वाभावात्कारकत्वाभावेनैवात्रापादानत्वस्याप्राप्तिरत आह । वस्तुत इति । पर्णसंबन्धेऽपि वास्तवपातजनकत्वस्य विद्यमानत्वेन कारकत्वमस्तीति भावः । न च विभागजन्यसंयोगानुकूलव्यापारस्यैवापायपदार्थत्वेन प्रकृते संयोगानुकूलव्यापारस्यैव धात्वर्थतया अपायाभावादेवात्रापादानत्वव्यावृत्तौ ध्रुवग्रहणमनर्थकमिति वाच्यम् । संयोगानुकूलव्यापाररूपपातमात्रस्यैव लोकेऽपायत्वेन प्रसिद्धतया ध्रुवग्रहणाभावे तादृशविशिष्टापायस्यालाभात् । एवं चेति । अत्रापादानत्ववारणायैव सूत्रे तदुक्तौ चेत्यर्थः । अपाय इतीति । ध्रुवपदसमभिव्याहृतमपायग्रहणमित्यर्थः । तेन विभागजन्यसंयोगानुकूलव्यापाररूपगतिविशेषस्यैवापायपदार्थत्वलाभेन विभागस्यावधिसाकाङ्क्षतया विभागावधित्वेन विवक्षितस्यैवापादानत्वमित्यर्थो लभ्यत इति भावः । नन्ववधिरपायेऽपादानमित्येव सूत्रमस्तु, अवधिपदसमभिव्याहृतेनापि तादृशार्थविशेषलाभसंभवात् ।

जनकत्वेन विवक्षिते इत्यर्थे तात्पर्यग्राहकं बोद्धयम्। ध्रुवग्रहणन्तु कारकान्तराणामिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभाावबोधनायेत्याहुः। अपादानत्वशक्तिश्च प्रकृत धात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोद्धयम्। एवञ्च वृक्षात्पततीत्यादौ तदपादानकविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। 'वृक्षाद् भूमिं पतती'त्यादौ वृक्षापादानकविभागपूर्वकसंयोगानुकूलो व्यापार इति बोधः। परस्परस्मान्मेषावपसरत इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं, परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वम्। मेषपदोपात्ते

---

न च लाघवाभावः। त्रस्तादश्वात्पतति, धावतः पततीत्यादौ सतोऽध्रौव्यस्याविवक्षाऽकरणप्रयुक्तज्ञानलाघवस्य सत्त्वादित्यत आह। ध्रुवग्रहणं त्विति। कारकान्तराणामिवेति। व्यतिरेकदृष्टान्तः। यथा करणादीनां करणत्वाद्युपगमातिरिक्तोऽपि स्वव्यापारोऽस्ति, तथास्यावधिभावोपगमातिरिक्तो व्यापारो नास्तीत्यर्थबोधनाय ध्रुवग्रहणमिति भावः। एवं च सौकर्यविवक्षायामसिश्छिनत्ति, स्थाली पचतीत्यादिवदश्वः पततीति न प्रयोग इति बोध्यम्। वृक्षात्पर्णं पततीत्यत्र विभागजन्यसंयोगानुकूलः संयोगसमानाधिकरणो व्यापारः पतेरर्थ इत्याशयेनाह। संयोगः पर्णवृत्तिरितीति। क्वचिदभियुक्तप्रयोगबलात्फलव्यधिकरणो निरुक्तो व्यापारः पतेरर्थ इत्याशयेनाह। वृक्षाद् भूमिमितीति। ननु परस्परस्मान्मेषावपसरत इत्यत्र मेषपदोपात्तयोरेव परस्परपदार्थत्वेन तयोरवधिभावोपगमातिरिक्तावधित्वोपयोगिव्यापारानाश्रयत्वाभावात्कथमपादानत्वमत आह। परस्परेति। मेषपदोपात्तयोरेवेति। एवकाराभ्यां पदान्तरोपात्तयोस्तयोर्व्यवच्छेदः। वाचकशब्दरूपोपाधिकृतभेदमादाय वाच्ययोर्भेदात्कर्तृत्वापादानत्वयोरुपपत्तिरिति भावः। तदेतद्वक्ष्यति। आत्मानमित्यादिना। नन्वेवमपि विपरीतमपि किं न स्यादत आह। मेषपदोपात्ते

तदविवक्षणात् । प्रयोगानुसारित्वाद्विवक्षायाः। विभागपूर्वकं पृष्ठतो गमनमपसरणम्। आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिकृतभेदवत् शब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात् । शब्दालिङ्गितार्थभानस्यैव सत्त्वाच्चेत्यन्यत्र विस्तरः। यत्त्वपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिं प्रति इतरस्यापादानत्वमविरुद्धमिति, तन्न । वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवापायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे भाष्ये उक्तं 'न वै तिङन्तान्येकशे-

---

इति । तत्र बीजमाह । प्रयोगेति। एकस्यैव विभागस्योभयानुयोगिकत्वोभयप्रतियोगिकत्वेऽपि प्रयोगानुसारात्कस्यचिदेव प्रतियोगित्वेन विवक्षेति नातिप्रसङ्ग इति भावः। अत एव चैत्रमैत्रावन्योन्यमाश्लिष्यत इत्यादौ तयोः कर्मत्वसिद्धिः । अन्यथा परत्वात्कर्तृत्वमेव स्यादिति बोध्यम् । एतेनात्र मते स्वस्मान्मेषोऽपसरतीत्यनिष्टं प्राप्नोतीति हर्युक्तमपास्तम् । प्रयोगानुसारित्वाद्विवक्षायाः स्वपदवाच्ये तादृशप्रतियोगितायाः कदाप्यविवक्षणात् । नन्वपसरणं विभाग एवेति कथमुभयविधविवक्षासंभवोऽत आह । विभागपूर्वकमिति । आत्मानमिति । वैषम्ये दृष्टान्तः । अन्तः करणादीति । तत्र शब्दकृतभेदाभावात्तदुपादानं भाष्ये । चैत्र आत्मानं हन्तीत्यादौ तु शब्दभेदादेव तदुपपत्तिरिति बोध्यम् । सिद्धान्ते वास्तविक एवानयोरर्थयोर्भेद इत्याशयेनाह । शब्दालिङ्गितेति । अन्यत्र = उद्योतादौ । कैयटाद्युक्तिं खण्डयति । यत्त्विति । अत्र भाष्यसम्मतिं दर्शयति । अत एवेति । धातुना निवृत्तभेदस्यैवोपादानादेवेत्यर्थः। नन्वपादानत्वशक्तिः प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति प्रागुक्तमयुक्तम् । तथासति धनुषा विध्यतीत्यादौ विभागस्य धात्वर्थत्वाभावेनापादानत्वाप्राप्त्याऽत्र परत्वात्करणसंज्ञाया अपादानसंज्ञाबाधकत्वप्रतिपादनपर-

**षारम्भं प्रयोजयन्ति क्रियाया एकत्वात्' इति। धनुषा विद्ध्यतीत्यत्र निःसरच्छरजन्यवेधार्थत्वाद्व्यधेरपादानत्वकरणत्वोभयप्राप्तौ परत्वात् करणत्वं बोद्ध्यम्। ग्रामादायातीति। आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलो व्यापारोऽर्थः। वृक्षन्त्यजतीत्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयाऽपादानत्वस्य बाधः। स्पन्देस्तु न विभागोऽर्थ इति वृक्षे स्पन्दत इत्येव। चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वम्। सार्थाद्धीयत इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि 'अपादाने चाहीयरुहोः'**

---

साधकतममिति सूत्रस्थभाष्यविरोधापत्तेरित्यत आह। धनुषेति। वेधार्थत्वादिति। तादृशवेधरूपार्थस्य विवक्षितत्वादित्यर्थः। धात्वर्थे प्रकृतत्वं न शब्दोपात्तत्वं, किंतु विवक्षितत्वमात्रम्। धनुषः शरनिस्सरणं प्रत्यवधिभावोपगमेनैव व्यथने करणत्वाभ्युपगमेनोभयोरपि निस्सरणव्यथनयोर्निमित्तनिमित्तिभावेन स्थित्या युगपदुभयविवक्षायामपादानत्वकरणत्वयोः प्राप्त्या न विप्रतिषेधविचारपरभाष्यासङ्गतिरिति भावः। निस्सरणं तु न व्यथेरर्थः, तस्य तादृशार्थकताया अप्रसिद्धत्वात्। किन्तु निस्सरच्छरजन्यमेव व्यथनमत्र विवक्षितमिति बोध्यम्। त्यजेर्विभागानुकूलव्यापारार्थत्वात्तद्योगेऽप्यपादानत्वं स्यादत आह। **वृक्षमिति**। स्पन्देर्विभागानुकूलव्यापारार्थत्वे वृक्षात्स्पन्दत इति स्यादत आह। **स्पन्देस्त्विति**। स्पन्दस्य सत्यपि यत्किञ्चिद्विभागानुकूलत्वे न स धात्वर्थ इति भावः। स्पन्दिचलत्योश्चलनार्थकत्वेऽपि तत्र चलतेर्विशेषमाह। **चलतेस्त्विति**। ननु सार्थाद्धीयत इत्यादौ सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपादानसूत्राणीति तस्य कर्तृत्वापत्तिः। तदनाश्रयत्वे चैत्रस्यैव तदाश्रयताया वक्तव्यत्वेन तस्य कर्तृत्वापत्तौ तत्र कर्मणि लाद्यनापत्तिः। सार्थस्य कर्मत्वापत्तौ सार्थो हीयते चैत्रेणेत्यापत्तिश्चेत्यत आह। **सार्थादिति**। **ज्ञापकादिति**। **अहीयरुहो**-

इति ज्ञापकात्कर्मप्रत्ययान्तह्रीधातुप्रयोगेऽपादानत्वम् । कर्मसंज्ञायाश्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि लकारः । सार्थेन त्यज्यते देवदत्त इत्यर्थः । धावत इति । क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशात्, धावनस्याविवक्षणाद्वा ध्रुवत्वं बोद्धव्यम्। जुगुप्सेत्यादि । जुगुप्सादीनां बुद्धिविषयकत्वेन विवक्षा तदपादानम् । तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां संबन्धित्वेन च विवक्षायां पापस्य जुगुप्सत इति षष्ठी भवत्येव सत्यभिधाने । एवमुत्तरसूत्रेष्वपि बोद्धव्यम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धत्वेदं वार्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये ॥

---

रिति पर्युदासाज्ज्ञापकादित्यर्थः । कर्मप्रत्ययान्तेति । अत एव चैत्रः सार्थं जहातीत्यादौ न । ह्रीति । जहातीत्यर्थः । ननु सार्थस्य कर्तृत्वाभावे कर्तृव्यापारप्रयोज्यफलाश्रयत्वरूपकर्मत्वस्य चैत्रेऽभावात्कथं कर्मणि लकार इत्यत आह । कर्मसंज्ञायामिति । अश्वस्य प्राचीनरीत्याऽपादानत्वमुपपादयति । प्रकृतधात्विति । स्वसिद्धान्तरीत्याह । धावनस्येति । अनतिप्रसङ्गायाह । सत्यभिधान इति । तत्रानिष्टसाधनताज्ञानरूपा निन्दा जुगुप्सतेरर्थः । विषयता पञ्चम्यर्थः । अधर्मविषयकमनिष्टज्ञानमिति बोधः । प्रागभावसाधारणकृत्यभावानुकूलो व्यापारो विरमतेरर्थः । तथा च धर्माद्विरमतीत्यत्र धर्मविषयककृत्यभावानुकूलो व्यापार इति बोधः । इष्टसाधने वस्तुनि समानदेशत्वसमानकालत्वोभयसंबन्धेनाधिकारविशिष्टानिष्टसाधनत्वज्ञानं प्रमाद्यतेरर्थः । विषयत्वं पञ्चम्यर्थः । भाष्योक्तं वार्तिकप्रत्याख्यानप्रकारमाह । एषामिति । निवृत्तिलक्षणयेति । बौद्धविश्लेषजनकजुगुप्सादिपूर्वकनिवृत्तौ तेषां लक्षणेति भावः । सूत्रेणैव सिद्धत्वेति । साधकतममिति सूत्रे तमब्ग्रहणेन गौणार्थमादायापि संज्ञाप्रवृत्तेर्ज्ञाप-

भयं भीस्त्राणन्त्रास्तदाह । भयार्थानामिति । हेतुतृतीयापवादोऽयम् । अरण्ये इति । भयाद्यर्थानां योगे कारकमपादानमित्यर्थेऽविशेषात्सर्वसंज्ञापवादः स्यादिति भावः । पराजे । असोढो ग्लानिविषयः । एवञ्च पराजेरकर्मकत्वे उदाहरणत्वं—तदाह ग्लायनाद्ध्रुवमपाय इत्यत्रापायपदे स्वरितत्वप्रतिज्ञया वा बुद्धिपरिकल्पितापायमाश्रित्य सूत्रेणैवापादानसंज्ञासिद्ध्या इदं वार्तिकमुत्तरसूत्राणि च नारम्भणीयानीति भावः ॥

अर्थान्तरभ्रमवारणायाह । भयमिति । सूत्रे हेतुपदोपादानादाह । हेतुतृतीयेति । अनिष्टज्ञानं भयम् , अनिष्टपरिहारस्त्राणम् । सूत्रे भयहेतुरित्यस्य भयैकदेशानिष्टहेतुरित्यर्थादनिष्टहेतोरनेनापादानत्वम् । चोरापादानकमनिष्टज्ञानं, तदपादानकमनिष्टपरिहार इति बोधः । एतत्सूत्रप्रत्याख्यानपरभाष्यात्तु भयपूर्विका, त्राण पूर्विका च निवृत्तिर्निवर्तना च क्रमेणानयोरर्थः । बुद्धिप्राप्तचोरापादानिका प्रत्यासत्त्या तद्भयपूर्विका निवृत्तिस्तदपादानिका अनिष्टपरिहारफलिका निवर्तनेति च बोध इति लभ्यते । चोरात्त्रायत इत्यस्यानर्थपरिहाराय निवर्तयतीत्यर्थः । चोरमध्यगतस्यापि त्राणे चोरसंपर्कफलस्य वधबन्धनापहरणादेर्निवर्तनात्तेभ्यो निवर्तयतीत्युच्यत इति बोध्यम् । असोढ इत्यत्र कर्मणि प्रत्ययादाह । ग्लानिविषय इति । एवं चेति । सूत्रे ग्लानिविषयार्थकासोढ इति पदग्रहणे चेत्यर्थः । पराजिः क्वचिदभिभवे वर्तते । यथा शत्रून्पराजयत इति । क्वचिन्न्यूनीभाववृत्तिः । अत्र चासोढ इति पदग्रहणादन्त्यस्यैव ग्रहणं, स चाकर्मक इति तस्यैवोदाहरणत्वमन्यस्य प्रत्युदाहरणत्वमिति भावः । उदाहरणे कृत्यसाध्यत्वधीसमानाधिकरणस्तद्विषयकोत्साहाभावो धातोरर्थः । अध्ययनापादानको देवदत्तकर्तृकोत्साहाभाव इति बोधः । भाष्यमते तु तत्पूर्विका निवृत्तिरिति । अत्र कालो न विवक्षितः, तेनाध्ययनात्पराजेष्यत इत्यपि भवतीति बोध्यम् ।

तीत्यर्थ इति । अभिभवतीति । तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः । प्रवृत्तिविघात इति । भक्षणसंयोगादिजनकव्यापारा-भावानुकूलो व्यापार इत्यर्थः । ईप्सित इति । वारणार्थधात्वर्थफला-श्रय इत्यर्थः । उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफला-श्रयत्वाद्यवानामपादानत्वम् । ईप्सित इत्यनेन प्रधानाप्रधानान्यतर-व्यापाराश्रयमात्रस्याक्षेपः, कर्मलक्षणे तु तमब्ग्रहणात् प्रकृतधा-त्वर्थप्रधानभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः । अन्तर्धौ । अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थितिरूपस्तद्धटकं यत्कर्तृकदर्शनाभावमिच्छति तद-पादानमित्यर्थस्तत्फलितमाह—व्यवधाने सतीति । येनेत्यत्र कर्तृ-कर्मणोरिति षष्ठी न, सौत्रत्वात् । आत्मन इति प्रत्यासत्तिलभ्यम् ।

---

भक्षणसंयोगादीति । भक्षणं च संयोगश्च तदादीत्यर्थः । धात्वर्थफलेति । भक्षणसंयोगादिरूपफलेत्यर्थः । व्यापारजन्येति । अभावप्रतियोगिव्यापार-जन्येत्यर्थः । नन्वीप्सित इति कर्मणा कर्तुराक्षेपात्संयोगादेः प्रधानकर्तृव्यापार-प्रयोज्यत्वाभावेन कथं तदाश्रयस्य यवादेरपादानत्वमत आह । ईप्सित इत्यनेनेति । अस्य यत इत्यादिः । आश्रयमात्रस्येति । कर्तुरित्यर्थः । त-थाचाप्रधानगोरूपकर्तृनिष्ठव्यापारप्रयोज्यभक्षणसंयोगादिरूपफलाश्रयत्वाद्यवादेः कर्मत्वमिति भावः । नन्वेवं कर्मसंज्ञा तस्य कुतो नेत्यत आह । कर्मलक्षणे त्विति । तमब्ग्रहणेन तत्र यथा तादृशार्थलाभस्तत्प्रागभिहितम् । तद्धटक-मिति । अन्तर्धिघटकमित्यर्थः । एतेन सूत्रेऽन्तर्धाविति वृक्षे शाखेतिवत्सप्तमी, न तु सति सप्तमीति सूचितम् । सौत्रत्वादिति । उभयप्राप्तावित्यत्र प्राप्ति-पदेनोभयोः प्रयोग एव नियम इति वक्ष्यमाणत्वात्कर्मण आत्मन इत्यस्यात्र प्रयोगाभावेन तादृशनियमस्याप्राप्तेरिति भावः । तद्धनयन्नाह । प्रत्यासत्तीति ।

मातुर्निलीयत इत्यादावाक्षेपलभ्येच्छा बोद्धव्या। चोरानिति। चोरकर्मकदर्शनेच्छाऽभाव इति शाब्दोऽर्थः। स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः। इच्छामात्रस्याक्षेपलभ्यत्वे इव विशिष्टस्याक्षेपलभ्यत्वेऽपि स्यादिति भावः। प्रकृते नान्तर्द्धिरिति न दोषः। येनेत्यस्याभावे हि स्वकर्मकदर्शनाभावं य इच्छतीत्यर्थे कर्तुरेव स्यादतस्तत्। इच्छतिग्रहणं किमिति। अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति भावः। सत्यपीति। अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः। अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः। नियमेति। उपयोगशब्दस्य तत्रैव रूढेः। नियमो ब्रह्मचर्यादिः। नटस्येति।

---

ननूदाहरणे व्यवहितदेशस्थितेर्धातुना प्रतिपादनेऽपीच्छायाः कथं लाभ इत्यत आह। आक्षेपेति। तां विना देशविशेषस्थितिरूपयत्नासंभवादिति भावः। ननु धात्वर्थदर्शनकर्तुरनेनापादानसंज्ञाविधानात्कथं चोराणां तत्प्राप्तिरत आह। स चेति। इच्छाभाव इत्यर्थः। नन्वेवमपि तेषां दर्शनकर्तृत्वस्याशाब्दत्वादप्राप्तिरेवेत्यत आह। इच्छेति। विशिष्टस्येति। चोरकर्तृकस्वकर्मकदर्शनाभावविशिष्टेच्छाया इत्यर्थः। अन्तर्धावित्यस्य सत्त्वे न दोष इत्याह। प्रकृत इति। प्रयोजनादिवाचकस्योपयोगशब्दस्यात्रार्थे लक्षणाभ्रमनिरासायाह। उपयोगेति। उपाध्यायादधीत इत्यत्रोच्चारणोत्तरकालिको नियमपूर्वको ग्रन्थस्वीकारानुकूलो व्यापारो धात्वर्थः। उच्चारणाश्रयस्यानेनापादानसंज्ञा। उपाध्यायान्निस्सरन्तं ग्रन्थमधीत इत्यर्थादत्रापि ध्रुवमपाय इत्यनेनैवापादानत्वसिद्धिः। नटस्य श्रृणोतीत्यादावतिप्रसङ्गस्त्वनभिधानाद्वारणीय इति भाष्यमतम्। यत्तु ध्रुवग्रहणानुवृत्त्यैव प्रकृतिपरिग्रहे सिद्धे सूत्रे प्रकृतिग्रहणं कारणमात्रपरिग्रहार्थम्। तेन च पुत्रात्प्रमोदो जायत इत्यादिसिद्धम्। अत एव वृत्तौ कारणमित्येवोक्तं,

नटजन्यं श्रवणमिति बोधात् कारकत्वम् । नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम् । जनिक । प्रकृतिरुपादानकारणं, ब्रह्म च मायाशबलञ्जगदुपादानकारणम् । वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्धव्यम् । विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम् । तत्र हि 'गुणेऽस्त्रियामिति प्राथिकम्, बाहुलकं प्रकृतेस्तनुदृष्टेरि'ति वार्त्तिकप्रयोगात् । भुवः । प्रभवनं प्रथमप्रकाशः प्रग्रहणात् । तदधिकरणमपादानमित्यर्थः । 'प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने' इति विश्वः । प्रकाशत इत्यस्य योगे तु न, प्रथमप्रकाशार्थत्वाभावात् । तदाह—तत्र प्रकाशते इत्यर्थ इति ।

---

न पुनरुपादानकारणमिति कैश्चिदुक्तमयुक्तमिति सूचयन्नाह । उपादानेति । प्रकृतिशब्दस्य तत्रैव प्रसिद्धेः, प्रत्याख्यानपरभाष्यसंमतत्वाच्चेति भावः । एवं सति मूलासंगतिं परिहरति । वृत्ताविति । पुत्रात्प्रमोदो जायत इत्यादौ तूपादानत्वारोपेणापादानत्वं बोध्यम् । ब्रह्मापादानिका प्रजाकर्तृकोत्पत्तिरिति बोधः । प्रत्याख्यातृभाष्यनये तु ब्रह्मणो निस्सरमाणा जायन्त इत्यर्थः । निस्सरणं च लोकप्रसिद्ध्याश्रयं यद्यस्माज्जायते तत्ततो निस्सरतीति लोकव्यवहारात् । स च व्यवहार उपादानकारणविषय एवेति बोध्यम् । ननु ब्रह्मशब्दार्थस्य गुणत्वाभावात्कथं विभाषेत्यनेन सिद्धिरत आह । तत्र हीति । प्रभवशब्दोऽधिकरणाबन्त इत्याशयेनाह । तदधिकरणमिति । जन्महेताविति । जन्मभूमावित्यर्थः । तथैव च पाठान्तरम् । प्रकाशार्थत्वाभावादिति । प्रपूर्वकभूधातुप्रकृतिकाबन्तस्यैव कोशात्तदर्थकत्वलाभादिति भावः । हिमवदपादानको गङ्गाकर्तृकः प्रथमप्रकाश इति बोधः । भाष्यनये तु हिमवतो निस्सरमाणा प्रकाशत इत्यर्थ इति बोध्यम् । ल्यब्लोपविधायकशास्त्रानुपलम्भादि-

ल्यब्लोप इति । ल्यबन्तशब्दाज्ञाने इत्यर्थः । कर्मणीति । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । प्रासादादिति । फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया । आजघ्ने विषमविलोचनस्य वक्ष इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी । वक्ष इत्यस्य प्राप्येति शेषः । गम्यमानाऽपीति । विशिष्य तद्वाचकपदानुपात्ताऽपीत्यर्थः । कस्मात् त्वमित्यादौ फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया ॥

अन्येत्यर्थेति । तदर्थश्च भेदवान् । अत एव घटात् भिन्न इत्यादिसिद्धिः । परे तु ध्रुवमिति सूत्रे अपायशब्देन भेदस्यापि ग्रहणम् ।

---

दमनुपपन्नमत आह । ल्यबन्तशब्दाज्ञान इति । इत्यत्रेवेति । यथा तत्र वाक्यैकदेशप्रयोगः, तस्यैव च वृत्त्या संपूर्णवाक्यार्थबोधकता, तथाऽत्रापीति भावः । पञ्चम्यर्थो ल्यबन्तक्रियाकर्म, आसनात्प्रेक्षत इत्यादावुपविश्येत्यर्थः । अधिकरणं पञ्चम्यर्थः । भाष्यमते तु प्रासादादितो निस्सरता चक्षुषा तद्वृत्त्या वा प्रेक्षत इत्यर्थः । प्रासादादिस्थपुरुषान्निष्क्रमणमेव प्रासादावधिकत्वेनोपचर्यत इत्यत्रापि पूर्वेण सिद्धमिति बोध्यम् । नन्वाजघ्ने इत्यत्र यथाश्रुतान्वयेऽकर्मकतायाः स्वाङ्गकर्मकत्वस्य वाऽभावात्कथमात्मनेपदमत आह । कर्मण इति । एवं चाकर्मकत्वात्तदुपपत्तिरिति भावः । नन्वेवं वक्ष इत्यस्यासंबद्धत्वापत्तिरत आह । इति शेष इति । एतेनात्र शब्दज्ञानसत्त्वान्नानेन पञ्चमीति सूचितम् । वाक्यैकदेशन्यायेन क्रियायाः शाब्दत्वेन यथाश्रुतासङ्गतेराह । विशिष्येति । इत्यत्रेवेति । वाक्यैकदेशन्यायेनेति भावः ॥

अन्यशब्देनार्थग्रहणे फलमाह । अत एवेति । नन्वेवं घटः पटो नेत्यादौ कुतो न पञ्चमीत्यत आह । नञर्थश्चेति । एवं मूलकृद्रीत्याऽन्यशब्दस्यार्थपरत्वेन व्याख्याने फलं प्रदर्श्य वस्तुतोऽर्थपरत्वं न युक्तमित्याह । परेत्विति । नन्वेवं कथमुक्तप्रयोगोपपत्तिरत आह । भेदस्यापीति । अपिना

पञ्चमी विभक्ते इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात्। भिदिर् विदारण इत्यत्र भेदज्ञानविषयत्वमपि विदारणम्। एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात्। अत एव घटात् भेद इति सिद्धं, तद्योगेऽप्यपादानत्वात्। तस्यैव सम्बन्धत्वेन विवक्षायाङ्घटीयो भेद इत्यपि। अन्यशब्दार्थस्याक्रियात्वात् तद्योगे एतद्विधानम्। अत एव घटः पटो नेत्यादौ न पञ्चमी। नञो भेदवदर्थकत्वेऽपि अक्रियात्वात्। घटादेक इत्याद्यसाध्वेव। अत एवेतरग्रहणञ्चरितार्थम्। अत एव भाष्येऽर्थग्रहणं नोक्तमित्याहुः। आराद् दूरसमीपयोः। एतद्योगे दूरान्तिकार्थैरिति प्राप्तम्। नन्वयं

तत्सूत्रोक्तार्थसंग्रहः। तत्रापायशब्देन भेदस्यापि ग्रहणे हेतुमाह। पञ्चमीति। विभागार्थकेति। अपायसमानार्थकेत्यर्थः। ननु तस्य न धात्वर्थत्वमत आह। भेदज्ञानविषयत्वमपीति। अपिना द्विधाभवनानुकूलव्यापाररूपविदारणसंग्रहः। तथा बोधे=भेदज्ञानविषयतया बोधे। बुद्धिविदारणस्येति। बौद्धविदारणस्येत्यर्थः। अत एवेति। अपायपदेन भेदस्यापि ग्रहणादेवेत्यर्थः। अन्यथाऽर्थग्रहणेऽपि घटः पटो नेत्यत्रेवात्रापि पञ्चमी न स्यादिति भावः। तद्योगेऽपीति। भेदपदेन योगेऽपि ध्रुवमित्यनेनेति भावः। नन्वेवं घटस्य भेदः, घटीयो भेद इत्यादिप्रयोगोपपत्तिः कथमत आह। तस्यैवेति। भेदस्यैवेत्यर्थः। नन्वेवमत्र सूत्रेऽन्यग्रहणमनर्थकमत आह। अन्येति। अत एवेत्यस्यार्थमाह। नञ इति। अपीति। अनेन भेदार्थकत्वसंग्रहः। मूलकृन्मते तु नञो भेदार्थकत्वे पञ्चमीवारणेऽपि भेदवदर्थकेन तेन योगे सा दुर्वारा। अस्मन्मते तूभयथापि न दोष इति भावः। अक्रियात्वादिति। धातुवाच्यस्यैव तत्त्वादिति भावः। नन्वेवं त्वन्मतेऽन्यार्थकैकशब्देन योगे पञ्चम्यनापत्तिरत आह। घटादेक इति। मूलोक्तार्थे सूत्रकारासम्मतिं दर्शयति। अत एवेति। ननु तत्प्रपञ्चार्थमेवेति न विरोधोऽत आह। अत एवेति। अयमिति। पूर्वो

देशवाची न दिक्शब्दः, अत आह—दिशि दृष्ट इति। शब्द-ग्रहणादिति भावः। ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते, न ऐन्द्रीककुबादयो व्याख्यानात्। अवयववाचीति। तद्वाचिपूर्वादियोगेऽवयविवाचकान्नेत्यर्थः। ज्ञापकस्य सजातीयापेक्षत्वात्। अत एवास्मादयं पूर्वो भागः कायस्येति सिद्धम्। अवयवे पूर्वत्वम् अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोध्यम्। अञ्चूत्तरपद-स्येति। दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं, तेन सध्र्यङ् इत्याद्यर्थं तन्नेति भावः। बाधितुमिति। परत्वात्प्राप्त-मित्यादिः। यदि तु षष्ठ्यतसर्थेत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्यय एव प्रवृत्तिस्तदेदं माऽस्त्विति तत्त्वमिति भाष्ये स्पष्टम्। दक्षिणा ग्रामादिति। दक्षिणस्यां दिशीत्यर्थे 'दक्षिणादाच्' 'आहि च दूरे'

---

ग्राम इत्यत्र पूर्वशब्द इत्यर्थः। शब्दग्रहणादिति। तेन ह्युत्तरपदलोपिसमा-सलाभाद्यदा कदापि दिशि दृष्टेन संप्रति देशकालवृत्तिनापि योगे भवतीति भावः। नन्वेवमैन्द्र्यादिशब्दयोगेऽपि स्यादत आह। रूढ्येति। रूढ्येत्यस्य फलमाह। ऐन्द्रीति। दिग्विशेषेत्यस्य फलमाह। ककुबिति। व्याख्याना-दिति। लक्ष्यदर्शनमूलकादित्यर्थः। अत एवेति। ज्ञापकसाजात्यादवयवि-वाचकादेव पञ्चम्यप्रवृत्तिकल्पनादेवेत्यर्थः। अन्यथाऽस्मादित्यत्रापि न स्यादिति भावः। नन्ववयवेषु पौर्वापर्यव्यवहारस्य दुर्घटत्वेनायं प्रयोगोऽनुपपन्न इत्यत आह। अवयव इति। नन्वदिग्वाचिसध्र्यङादियोगे पञ्चम्यर्थमञ्चूत्तरपद-ग्रहणस्यावश्यकतया मूलमसङ्गतमत आह। दिक्शब्देति। भाष्ये स्पष्टमिति। षष्ठ्यतसर्थप्रत्ययेनेति सूत्र इत्यर्थः। यद्यप्युभयोरेकफलत्वेनान्यतरस्याकर्तव्यता तत्रोक्ता, तथापि लाघवादस्यैवाकर्तव्यत्वं तदभिमतमित्याशयेनैवमुक्तमिति बोध्यम्। कार्तिक्याः प्रभृतीति भाष्यप्रयोगात्तच्छब्दयोग एव पञ्चमीति

इत्याजाही । षष्ठ्यतसर्थेत्यस्यापवादः । प्रभृतियोग इति । प्रभृत्यर्थयोग इत्यर्थः । अपादाने पञ्चमीति सूत्रे 'यतश्चाध्वकालनिर्माणं ततः पञ्चमी, कार्तिक्या आग्रहायणी मासे' इति वार्तिकप्रत्याख्यानाय 'इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासे' इति भाष्येण 'प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी'—इत्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी' इति वचनसत्त्वस्य भगवता बोधितत्त्वात् । अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः । एवञ्च तदर्थकारभ्यशब्दयोगेऽपि पञ्चमी । यथा 'अवीचिमारभ्यमेरुपृष्ठपर्यन्तं भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्यन्तग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः' इति पातञ्जलभाष्यप्रयोगे । प्रभृतीत्यस्य चावधिमादायेत्यर्थः । आरभ्येत्यस्यैतदर्थकतापि । अवधौ पञ्चम्यन्तस्याभेदेनान्वयः । तद्विशेषणत्वेऽपि न द्वितीया । प्रभृत्यर्थयोगे पञ्चमीति

---

भ्रमवारणायाह । प्रभृत्यर्थेति । अत्र मानमाह । अपादाने इति । भाष्येणेति । तत्र न प्रयुज्यत इत्युक्त्या प्रभृत्यर्थयोगे पञ्चमीत्यर्थः सूचित इति भावः । अन्यथा=प्रभृतिशब्दयोग एव पञ्चम्यङ्गीकारे । प्रभृत्यर्थयोगेऽपि पञ्चमीस्वीकारे फलमाह । एवं चेति । निरुक्तभाष्यप्रयोगयोरुभयोरपि प्रभृत्यर्थकारभ्येति पदयोगस्याविशिष्टत्वेऽपि क्वचित्पञ्चमीप्रवृत्तौ क्वचिदप्रवृत्तौ च बीजं दर्शयति । प्रभृतीत्यस्य चेति । एवं चावधिमादायेत्येवंरूपप्रभृत्यर्थयोग एव पञ्चमी, नान्यत्रेति भावः । एतदर्थकतापीति । अपिना केवलादानसंग्रहः । एवं सत्यन्वयप्रकारमाह । अवधाविति । आरभ्यपदवाच्यावधावित्यर्थः । नन्वेवमवधिपदादिव तत्राभेदान्वयिनि मेरुपृष्ठशब्दादपि कुतो न द्वितीयेत्यत आह । तद्विशेषणत्वेऽपीति । अवीचिमारभ्येत्यत्र तदप्रवृत्तौ बीजमाह ।

भाष्यकृद्बोधितवचनात् । आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्ये-त्यादौ द्वितीया। वस्तुतोऽवधित्वं तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमानक्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा। कार्तिकीतो विभक्ते अत एव कार्तिक्यवधिके आग्रहायणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः। भवात्प्रभृति

---

आरभ्येत्यस्येति । अवीचिर्नरकविशेषः, एवं चात्र केवलादानमात्रार्थकतया न तद्योगे पञ्चमीति भावः। आदाविति । तेनाद्यक्षणमारभ्य प्रातः कालमारभ्येत्यादिसंग्रहः। यदा त्वारभ्येत्यस्य प्रथमक्रियारूपमारम्भं कृत्वेत्यर्थस्तदा तद्योगे सप्तम्यपि । यथा 'आरभ्य तस्यां दशमीं तु यावत्प्रपूजयेदि'ति । एवं भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटाद्याशयमुपवर्ण्य वस्तुतस्सूत्रादेवात्रापादानत्वमिति तद्भाष्याशयः। 'इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते गवीधुमतो निसृत्य साङ्काश्यं चत्वारि योजनानी'ति तद्वार्तिकैकदेशाध्वग्रहणप्रत्याख्यानपरपूर्वभाष्यस्य तादृशाशयकताया एव कैयटादिभिरप्यवश्यमाश्रयणीयतया कालग्रहणप्रत्याख्यानपरस्यापि तदुत्तरभाष्यस्य तादृशाशयकताया एवौचित्यादित्याशयेनाह। वस्तुत इति । एतेन परे त्वेवं बोधे न मानं, नाप्यनुभवः । भाष्येऽपि प्रयोज्यं सन्न प्रयुज्यत इत्युक्तम् । अतो वचनमारम्भणीयमेवेत्याहुरिति वाराणसेयोक्तमपास्तम् । प्रयोज्यं सन्न प्रयुज्यत इति भाष्योक्त्या प्रभृतियोगे पञ्चमीति वचनान्तरकल्पने पूर्वभाष्येण निसृत्येति पदयोगेऽपि पञ्चमीति वचनान्तरकल्पनाया आवश्यकत्वात् । तैस्तादृशवचनान्तरानभ्युपगमादिति बोध्यम् । समभिव्याहृतपदार्थेति । मासपदार्थेत्यर्थः । गम्यमानक्रियेति । विभजनक्रियेत्यर्थः । अत एवेति । विभक्त इत्यस्याध्याहारादेवेत्यर्थः । विभागस्यावधिसापेक्षत्वेनोपस्थितत्वात्कार्तिक्या एवावधित्वेनान्वय इति भावः । आदाय गते इति । ततोऽग्रिमे दिने आग्रहायणी भवतीत्यर्थः । कार्तिक्या आदाने

आरभ्य वेत्यत्र भवकालाद्विभक्ते अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्य-मित्यलं विस्तरेण । ज्ञापकादिति । पञ्चम्यन्तेन समासविधानाज्ज्ञा-पकादित्यर्थः । अयं भावः । परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव । तद्योगे पञ्चम्यपाङ्परिभिरिति वचनात्, लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धः समासः, तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तर-पदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समासः इति व्यर्थं तत् बहिःशा-ब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञाप-नार्थमिति । इदम् अपपरिबहिरिति सूत्रे भाष्ये स्पष्टम् । पञ्चमीति । सापीत्यर्थः । तेन करस्य करभो बहिरिति सिद्धम् ॥

प्रतिनिधि । यस्मादिति पञ्चम्यर्थः सम्बन्धः । अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ कर्मक्रि— भावल्युडन्तौ । प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्र-

---

मार्गशीर्षशुक्लचतुर्दश्यन्तस्यैव त्रिंशद्दिनात्मकमासत्वादिति भावः । ननु पञ्च-म्यन्तेन समासविधानस्यापादियोगे चारितार्थ्यात्कथं तेनोक्तार्थलाभ इत्यत आह । अयं भाव इति । परस्परसाहचर्यादिति । लक्षणाद्यर्थाद्योतका-पेत्यनेन साहचर्यात्परीत्यस्य तादृशस्यैव ग्रहणम् । तादृशस्य परेर्वर्जनार्थकत्वा-त्तत्साहचर्यादपेत्यस्यापि तस्यैव ग्रहणमिति भावः । तत्र = समासविधायके । सिद्धस्समास इति । सूत्रे पञ्चम्या इत्यस्याभावेऽपि तृतीयान्तस्य सुपेत्यस्या-नुवृत्त्यैवेष्टसिद्धिरित्याशयः । तदिति । पञ्चम्येति पदग्रहणमित्यर्थः । सापीति । अपिना यथाप्राप्तषष्ठीसमुच्चयः । तद्योगे पञ्चम्या एवेष्टत्वेऽन्यारादिति सूत्रे एव बहिर्ग्रहणं कुर्यादिति भावः ॥

वर्णनीययुक्तात्पञ्चमीत्यर्थः। प्रतिनिधिः सदृशः, प्रतिदानम् दत्त-तुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम्। कर्तृवर्जितमिति। कर्तृसंज्ञा-रहितमित्यर्थः। ऋणत्वं वस्तुसन्निमित्तं न तु तृतीयावाच्यकोटिनि-विष्टम्। हेतुभूतमिति। तेन करणत्वविवक्षायां तृतीयैवेति भावः। 'विभाषा गुणे। योगविभागादिति। बाहुलकं प्रकृतेस्तनुदृष्टेरित्युक्त-वार्तिकप्रयोगाद् 'गुणेऽस्त्रियामिति प्रायिकमित्यन्ये। धूमादिति। धूमपदं स्वज्ञानेऽग्निमत्पदं स्वज्ञानाविषये लाक्षणिकं बोद्धव्यम्।

---

सदृश इति। एवं च प्रद्युम्नः कृष्णात्प्रतीत्यत्र कृष्णसदृशः प्रद्युम्न इति बोधः। तिलेभ्यः प्रतियच्छतीत्यत्र ग्रहणपूर्वकं प्रत्यर्पणं प्रतिसमभिव्याहृत-यच्छतेरर्थः। तिलग्रहणपूर्वकं माषप्रतिदानमिति बोधः। वाच्यकोटिप्रविष्ट-मिति। तथाच हेतुहेतुमद्भावोऽत्र पञ्चम्यर्थः। शतहेतुकबन्धनकर्मेति बोधः। तेनेति। हेतावित्यस्यानुवृत्त्या हेतुवाचकादेव पञ्चमीविधानेनेत्यर्थः। योग-विभागस्य भाष्यानुक्तत्वादाह। बाहुलकमिति। अन्ये = सिद्धान्तिनः। तनुदृष्टेरित्यस्य गुणत्वं तु संज्ञाक्रियाजातिभिन्नत्वाद्बोध्यम्। स्वतस्तयोर्जन्य-जनकभावासंभवादाह। धूमपदमिति। धूमज्ञानहेतुकज्ञानविषयो वह्निमानिति बोधः। मूले समुच्चयार्थमिति। निपातानामनेकार्थत्वादन्यतरस्यांग्रहणं समुच्चयबोधनद्वारा विभक्त्यन्तरप्रापणार्थं सव्यवहितामपि पञ्चमीं प्रापयिष्यतीति तदाशयः। न चापादाने पञ्चमीत्यतः पञ्चमीग्रहणानुवृत्त्यैवोभयोस्सिद्धौ तदर्थमिति वाच्यम्। मध्ये एनपा द्वितीया, षष्ठ्यतसर्थेति सूत्रयोस्तस्यानतु-वृत्त्याश्च तत्संबन्धस्य वक्तुमशक्यत्वात्। यद्यपि संबन्धानुवृत्तौ मण्डूकानुवृत्तौ वानुवृत्तिसामर्थ्यादेव पञ्चम्यामपि सिद्धायामिदं चिन्त्यप्रयोजनम्। षष्ठी तु भाष्यकृता नेष्यते, तथापि तद्विना तयोर्दुर्ज्ञेयत्वात्तद्बोधनायैव तद्ग्रहणमिति

समुच्चयार्थमिति । स्पष्टश्चेदं भाष्ये । एतेनान्यतरस्य आमङ्गीकार इत्यर्थकं पदद्वयमेतदित्यपास्तम् । विकल्पविषयेऽप्यर्थासङ्गतेश्च । परे तु द्वितीयासमुच्चयो न फलम् । विना वातं विना वर्षमित्यादौ ऋतेशब्दयोग इव ततोऽन्यत्रापि दृश्यते इत्यनेन द्वितीयासिद्धेः । अत एव भाष्ये द्वितीयासमुच्चयो नोक्तः । पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणतो ग्रामस्य' इति प्रकृतसूत्रस्थभाष्येण एनपा द्वितीयेति सूत्रं षष्ठ्यतसर्थेत्यतः प्रागिति च सूचितम् । अन्यथा सौत्रक्रमत्यागे, न्यायविपरीतपूर्वनिपातकरणे च बीजानापत्तिः । अत एव करणे चेति सूत्रे द्वितीया समुच्चयो नेत्याहुः । करणे च । करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम् । चकारः तृतीयान्यतरस्यामित्यनुकर्षणार्थः ।

---

स्पष्टमुद्योते । एतेन = भाष्यविरोधेन । दोषान्तरमाह । विकल्पेति । हृक्रोरन्यतरस्यामित्यादौ विधेयद्वयाभावेनार्थासङ्गतिरिति भावः । पञ्चमीद्वितीये अननुवर्तेते इति मूलं दूषयन्सिद्धान्तमाह । परे त्विति । विना वातमिति । केनेमौ पातितौ द्रुमाविति शेषः । द्वितीयायाः समुच्चयकथनं दूषयित्वाऽनुवृत्तिकथनमपि दूषयति । पञ्चम्या इति । एवं च मध्ये विच्छिन्नत्वात्तस्या अननुवृत्तिरिति भावः । अन्यथा=तस्य तदुत्तरत्वे । सौत्रक्रमेति । षष्ठ्यतसर्थप्रत्ययेन, एनपा द्वितीयेति सूत्रसंबन्धिक्रमेत्यर्थः । ननु स्वौजसमौडिति सूत्रस्थक्रमानुरोधेन तद्भाष्यप्रवृत्तिरिति न तेन तदुक्तार्थलाभ इत्यत आह । न्यायविपरीतेति । अल्पाच्तरत्वेन षष्ठीशब्दस्य पूर्वनिपातस्य न्याय्यत्वादिति भावः । ननु त्वयापि लक्षणहेत्वोः क्रियाया इति निर्देशात्पूर्वनिपातशास्त्रस्यानित्यत्वादप्रवृत्तेर्वक्तव्यतया न तदप्युक्तार्थसाधकमत आह । अत एवेति । कथं चिदप्यत्र द्वितीयापदस्यासंबन्धादेवेत्यर्थः । ननु प्रत्ययविधौ पञ्चम्यौ-

षष्ठी गापोष्टगिनिवत्। अद्रव्येति। द्रव्यभिन्नवचनेभ्य इत्यर्थः। द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं, लिङ्गनिरूपितविशेष्यं वा। स्तोकशब्दो यद्धर्मावेशाद्द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः। स च धर्मोऽल्पादिशब्दप्रवृत्तिनिमित्तमेव। शुक्लादिवच्चैते धर्मवचना अपि। करणत्वञ्च परम्परया। ईदृशार्थएव च साधुत्वं सूत्रबलादिति स्पष्टमलुगुत्तरपद इत्यत्र कैयटे। करणे किम्। स्तोकम्पचति। असत्त्वरूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्त्ववचनत्वमिति दिक्। दूरान्तिका। अत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्यामित्यतः समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः सिद्धौ चकारो व्यवहिततृतीयासमुच्चयार्थो व्याख्यानादित्याह—चादित्यादि। प्रातिपदिकार्थमात्रे इति। व्याख्यानादिति भावः॥

॥ इति पञ्चमी ॥

---

चित्यमत आह। षष्ठीति। नन्वद्रव्यवचनेभ्य इत्यस्य द्रव्यवचनभिन्नेभ्य इत्यर्थे स्तोकादिशब्दानां शुक्लादिशब्दवद्गुणे गुणिनि च शक्ततया द्रव्यवचनभिन्नत्वाभावादुदाहरणासङ्गतिरत आह। द्रव्यभिन्नेति। धर्मवचना अपीति। अपिना धर्मिवचनसंग्रहः। ननु धर्मपरत्वे कथं करणत्वोपपत्तिरत आह। परंपरयेति। द्रव्यद्वारेति भावः। ईदृशेति। परम्परया करणत्व एवेत्यर्थः। सूत्रबलादिति। असत्त्ववचनेभ्य स्तोकादिभ्योऽनेन पञ्चमीविधानसामर्थ्यादित्यर्थः। धर्मिपरत्वे तु सत्त्ववचनतया प्रत्युदाहरणत्वं बोध्यम्। ननु व्यवहितसमुच्चयः प्राङ्निरस्तोऽत आह। व्याख्यानादिति। चकारवैयर्थ्यलक्ष्यानुपपत्तिमूलकादित्यर्थः। व्याख्यानादिति। दूरान्तिकार्थैरित्यस्यानन्तरं तेभ्यो द्वितीया चेत्येव सिद्धे गुरुनिर्देशरूपादित्यर्थः। तेन हि पूर्वसूत्रविहितविभक्त्यपेक्षया अस्या वैलक्षण्यं बोध्यत इति भावः॥

॥ इति पञ्चमी ॥

षष्ठी शेषे । शेष उक्तादन्यः । स च तत्तद्रूपेण स्वत्वादिः संबन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम् । तत्रापि तन्मूलके संबन्धे

---

स चेति । उक्तादन्य इत्यर्थः । तत्तद्रूपेणेति । स्वत्वस्वामित्वादिसमूहरूपेणेत्यर्थः । संबन्धत्वेन रूपेण चेति । संबन्धसामान्यरूपेण चेत्यर्थः । अस्य स्वत्वादिरित्यनेनान्वयः । सामान्यरूपेण विशेषरूपेण वा स्वस्वामिभावादेः संबन्धस्य द्वितीयादिभिरनुक्तत्वात्तेन रूपेण तस्य शेषत्वमिति भावः । एवं च विशेषरूपेण सामान्यरूपेण च स्वस्वामिभावादेः संबन्धस्य षष्ठ्यर्थत्वमिति फलितम् । अत एवानेकसंबन्धसत्त्वेऽपि स्वत्वादिसंबन्धविशेषतात्पर्येण चैत्रस्य नेदं वास इति प्रयोग उपपद्यते । सामान्यरूपेणापि वाच्यत्वाङ्गीकारादेव राज्ञः पुत्रमित्रकलत्राणीत्यादौ सामान्यरूपेण वस्तुगत्या तत्तत्संबन्धविशेषाणां भानमुपपद्यते । कर्तृक्रियाभावादेः संबन्धस्य तृतीयादिभिरुक्तत्वान्नैव शेषत्वमिति सूचयन्नाह । कारकविभक्तीनामिति । कर्मादीनामपि संबन्धत्वेन विवक्षायां षष्ठ्येवेति दीक्षितोक्तिं कटाक्षयन्नत्र विषये कैयटाद्यभिमतं सिद्धान्तमाह । तत्रापीति । कारकविभक्तिविषयेऽपीत्यर्थः । अपिना राज्ञः पुरुष इत्यादेः संग्रहः । अयं भावः । मातुः स्मरतीत्यादौ श्रूयमाणक्रियाकर्मत्वादिकं विद्यमानमप्यविवक्षित्वा तन्मूलके विशेष्यविशेषणभावरूपे संबन्धे विवक्षिते षष्ठी । एवं राज्ञः पुरुष इत्यत्र सिद्धस्वभावानां द्रव्याणां क्रियां विना परस्परं संबन्धासंभवात्संबन्धलक्षणकार्यानुपपत्त्याऽनुमीयमानस्वत्वादिहेतुभूतदानक्रियाकर्तृत्वसंप्रदानत्वमूलके स्वस्वामिभावे विवक्षिते षष्ठी। तथा वृक्षस्य शाखेत्यादावधिकरणक्रियाभावमूलकेऽवयवावयविभावरूपे संबन्धे विवक्षिते षष्ठी । अत एव हरिणा 'संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयत' इत्यनेन सर्वत्र संबन्धस्य क्रियाकारकपूर्वकत्वमेवोक्तम् । तत्र

**विवक्षिते षष्ठी।** तदाह—**कारकेति । स्वस्वामिभावादिरिति ।** स्वत्व-स्वामित्वसमूहः संबन्ध इत्यन्यत्र विस्तरः । **एवं सर्वत्र बोद्धयम् । षष्ठ्यर्थस्य संसर्गविधयैव भानम् ।** कारकविभक्तिभ्योऽपि क्रिया-कारकभावस्य संसर्गविधया भानमित्युक्तम् । **संबन्धमात्रविवक्षा-यामिति ।** संबन्धत्वेन भाने इत्यर्थः । **यद्वा क्रियाकारकभावमूलक संबन्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा**

---

क्रियाकारकसंबन्धः कारणं, शेषसंबन्धस्तु फलभूत इति विवेक इति । **समूह इति ।** नतु केवलस्वत्वं स्वामित्वं वा संबन्धः । तस्यैकमात्रवृत्तितया संबन्ध-त्वायोगात् । संबन्धिभ्यां भिन्नस्योभयनिष्ठस्यैव संबन्धत्वात् । न च तस्याप्ये-कत्राश्रयतयाऽपरत्र निरूपकतया च सत्त्वान्न संबन्धत्वानुपपत्तिरिति वाच्यम् । निरूपकत्वस्य वृत्त्यनियामकत्वात् । **सर्वत्र** = अवयवावयविभावादौ । **संसर्ग-विधयैवेति ।** एवकारेण प्रकारत्वव्यवच्छेदः । प्रकारतया भाने तत्प्रतियोगिक-संबन्धान्तरस्य भानावश्यकत्वेन गौरवात् । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति न्यायशरीरे प्रधानपदं प्रकारतान्यविषयतावत्परमिति न तद्विरोध इति भावः । अत एव प्रकृतसूत्रे भाष्ये राज्ञः पुरुष इत्यत्र राजा विशेषणं पुरुषो विशेष्य इत्युक्तम् । अन्यथा संबन्धमपि विशेष्यतया विशेषणतया वा ब्रूयादिति बोध्यम् । ऐकरूप्यायाह । **कारकेति ।** दीक्षितादिमतेनाह । **संबन्ध-त्वेनेति ।** संबन्धसामान्यरूपेणेत्यर्थः । क्रियाकारकभावस्य तत्तद्रूपेण द्वितीया-दिभिरुक्तत्वेऽपि संबन्धसामान्यरूपेणानुक्तत्वात्तेन रूपेण तस्य शेषत्वमिति तदाशयः । 'संबन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः । श्रुतायामश्रुतायां च क्रियायामभिधीयत' इति हरिग्रन्थानुगृहीतं सिद्धान्तभूतं कैयटाशयं दर्श-यति । **यद्वेति ।** एवव्यवच्छेद्यमाह । **न त्विति ।** कर्मक्रियाभावादिरूपसंबन्धस्य वस्तुतः सत्त्वेऽपि तमविवक्षित्वा तन्मूलकविशेष्यविशेषणभावादिरूपसंबन्धस्यैव

**विवक्षा 'क्तस्य च वर्तमाने' इति सूत्रे छात्रस्य हसितमित्यादौ भाष्ये स्पष्टा। संयोगसंबन्धावच्छिन्नाधारस्य न तथा विवक्षा। अत एव घटवद् भूतलमिति प्रयोगसाधकं मतुप्सूत्रे अस्मिन्निति चरि-**

---

विवक्षायामित्याशयः। न केवलमत्रैव तथा, किंतु राज्ञः पुरुष इत्यादावपि क्रिया-कारकभावमूलकसंबन्धस्यैव विवक्षायां षष्ठीति सूचयितुमाह। **कर्तुरपीति। तथा विवक्षेति।** संबन्धत्वेनान्वयविवक्षा, क्रियाकारकभावमूलकसंबन्धेनान्वय-विवक्षा नेत्यर्थः। **भाष्ये स्पष्टेति।** तत्र हि 'कथं पुनस्सतो नामाविवक्षा स्यात्, यथा छात्रो हसति, नटो भुङ्क्ते, मयूरो नृत्यति, सतोऽप्यविवक्षा भवति। तद्यथा, अलोमिका, एडका, अनुदरा कन्ये'त्युक्तम्। तेन हि सदपि छात्रस्य हसनकर्तृत्वमविवक्षित्वाऽन्वयो विवक्ष्यत इति स्पष्टं लभ्यते। राज्ञः पुरुष इत्यादौ सिद्धस्वभावानां द्रव्याणां क्रियामन्तरेण परस्परं संबन्धाभावात्संबन्ध-लक्षणकार्यानुपपत्त्या का चन क्रियाऽनुमेया। सा च राजा पुरुषाय ददाती-त्यर्थसंप्रत्ययात्तयोर्दानादिना स्वीकरणातिरिक्तसंबन्धहेत्वभावाच्च दानादि-रूपैव। एवंचानुमीयमानदानादिक्रियाकर्तृत्वस्य राज्ञि सत्त्वेऽपि तदविवक्षित्वा तन्मूलकस्वस्वामिभावस्यैव विवक्षायां तत्रापि षष्ठीति भावः। एतेन मूले कर्मादीनामित्युक्त्या कर्तुस्तथा विवक्षा नेति भ्रमवारणायाह। कर्तुरितीत्यादि-भिश्रोक्तमवतरणमपास्तम्। आदिपदेनैव तन्निरासात्। नन्वेवमाधारस्य संबन्ध-त्वेन विवक्षायामाधाराधेयभावमूलकसंयोगस्यैव वा विवक्षायां पर्वतस्य वृक्षा इति प्रयोगापत्तिरत आह। **संयोगेति।** अनेन संबन्धान्तरावच्छिन्नाधारस्य तथा विवक्षेति सूचितम्। अत एव समवायसंबन्धावच्छिन्नाधारस्य संबन्धत्वेन विवक्षायां तन्मूलकावयवावयविभावस्यैव विवक्षायां वा वृक्षस्य शाखेति प्रयोगोपपत्तिः। इदं च संयोगस्य संबन्धत्वं, तस्याधाराधेयभावमूलकत्वं चाभ्यु-पेत्य। वस्तुतस्तु संयोगस्य न संबन्धत्वं, नाप्याधाराधेयभावमूलकत्वं चेत्य-न्यत्र निरूपितम्। अत्र मानमाह। **अत एवेति। चरितार्थमिति।** अन्यथा-

तार्थमिति तत्रैव भाष्ये स्पष्टम् । लोहितोष्णीषा इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोद्ध्यः । एधो दकस्येति । एधः कर्तृ कर्ता वा । दकस्योदकस्येत्यर्थः । एधशब्दोऽदन्तः पुल्लिङ्गः कारक इति सूत्रे भाष्ये प्रयुक्तः—एधाः पच्यन्ते इति । सान्तः क्लीबोऽपि । हेतौ द्योत्ये इति । हेताविति वर्तते । हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः । तेनान्नं हेतुं पश्येत्यादौ न । षष्ठीति । हेतुवाचकादित्यर्थः । निमित्तेत्यादि । निमित्तादिप्रयोगे तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः। किन्निमित्तमिति । प्रथमान्तं द्वितीयान्तञ्च। प्रायग्रहणादिति । एवञ्च षष्ठी हेतुप्रयोगे, सर्वनाम्नस्तृतीया चेति सूत्रे व्यर्थे इति बोद्ध्यम्। षष्ठ्यत। दिक् शब्दात्पञ्चम्यां प्राप्तायामिदम्। ततः पश्चादित्यत्र तु सार्वविभक्तिकः षष्ठ्यन्तात्तसिः । षष्ठ्यपीति । स्पष्टश्चेदं वृत्तौ। भाष्ये तु न दृश्यते। विपरीतं षष्ठ्यतसर्थेति सूत्रात्पूर्व

---

ऽधारस्य शेषत्वेन विवक्षया तन्मूलकसंयोगस्यैव विवक्षया वा घटोऽस्यास्तीत्यर्थे घटवानिति मतुप्सिद्धौ तद्वैयर्थ्यं स्पष्टमेव । नन्वेवं तत्र दृश्यमानषष्ठ्यर्थबहुव्रीहेः का गतिरत आह। लोहितेति। एधः कर्तृ कर्ता वेत्युभयथा व्याख्याने बीजं दर्शयन् द्वितीये मानमाह। एधशब्द इति। हेतौ द्योत्ये इत्यर्थलाभप्रकारमाह। हेताविति। अस्य यथाश्रुतार्थेऽतिप्रङ्गादाह। हेत्विति। एवं चात्र हेतुहेतुमद्भावः षष्ठ्यर्थः। हेतुशब्दोऽत्रैव तात्पर्यग्राहकः। अन्नहेतुको वास इति बोधः। हेतावित्यस्य लक्षणया ईदृशार्थस्वीकारे फलमाह। तेनेति। अत्रान्नस्य कर्मक्रियाभावेनैवान्वयो न तूक्तसंबन्धेनेति न षष्ठीति भावः। प्रत्यासत्तिलभ्यमर्थमाह। हेतुवाचकादिति। अत्रापि प्रत्यासत्तेरुभयसंग्रहायाह। तेभ्य इति। न्यूनतां परिहर्तुमाह। प्रथमान्तमिति। नन्वस्य पञ्चम्यपवादत्वे भाष्यप्रयोगासङ्गतिरत आह। तत इति। अप्रतिषिद्धमनुमतमिति न्यायादिदं भाष्यानुमतमेवेति शङ्कानिरासायाह। विपरीत

एनपेत्यस्य पाठ इति लभ्यते इति पृथग्विनानानेति सूत्रे उक्तम् । दूरान्तिकार्थैः । यदपेक्षं दूरत्वादिकन्ततः षष्ठीत्यर्थः । पञ्चमी चेति । तस्या एव समुच्चयो, न द्वितीयातृतीययोरपीति भावः । ज्ञोऽविदर्थे । अत्र सूत्रेऽविदर्थस्येति छेदो व्याख्यानात् । सर्पिषो ज्ञानमिति । जानातेः प्रवृत्तिरर्थः । सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः । अधीग । अधीगर्थः स्मृतिः । कर्मणि किम् । मातुर्गुणस्मरणम् । करणे शेषेऽनेन षष्ठ्यभावे समासो भवत्येव । अत एवात्र सूत्रे भाष्ये शेष

---

मिति । अनतिप्रसङ्गाय प्रत्यासत्तिलभ्यमर्थमाह । यदपेक्षमिति । तस्या एवेति । अन्यथा पृथग्विनानानाभिरित्यतोऽन्यतरस्यांग्रहणेऽनुवर्तमाने पुनरत्र तद्ग्रहणमनर्थकं स्यादिति भावः । न चात्र कृतेऽपि तस्मिन्कुतस्तयोर्न समुच्चय इति वाच्यम् । पृथग्विनानानाभिरित्यत्रान्यतरस्यांग्रहणेन पञ्चमीसमुच्चयस्योक्तत्वेनेहाप्येकप्रघट्टकत्वेन तस्या एव समुच्चयस्यौचित्यात् । व्याख्यानादिति । असन्देहाय विदर्थस्य ज्ञः करण इत्येव सूत्रयितव्ये सन्देहजनकयथाश्रुतन्यासकरणरूपादित्यर्थः । प्रवृत्तिरर्थ इति । लक्षणयेति भावः । मातुर्गुणस्मरणमिति । गुणेन मातुः स्मरणमित्यर्थः । कर्मणीत्यनेन कारकान्तरव्यावृत्तौ फलमाह । करण इति । करणभूते गुण इत्यर्थः । भवत्येवेति । अन्यथानेन षष्ठ्यां समासो न स्यादिति भावः । तत्र हेतुर्वक्ष्यमाणः समासनिषेधादिति । एतेन शेष इत्यनेनैव सिद्धे समासाभावार्थमेवैतत्प्रकरणमिति सूचितम् । न च शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासस्य दुर्वारत्वेनेदं व्यर्थमिति वाच्यम् । आदिकर्मणि कर्तरि क्तप्रत्ययान्तस्मृतादिभिः समासवारणायास्य प्रकरणस्यावश्यकत्वात् । नहि तत्र कृद्योगलक्षणा षष्ठी, न लोकेति निषेधादिति बोध्यम् । ननु कर्तृकर्मणोरिति सूत्रविहितषष्ठ्या इव कर्मत्वादिना बोधार्थमेवैतत्कुतो न स्यादित्यत आह । अत एवेति । एतेनास्य समासाभावार्थत्वमेव सूचितमिति

इति वर्तत इत्युक्तम्। प्रतिपदविधाना षष्ठी न समस्यत इति एतैः षष्ठीसमासनिषेधात्। एधो दकस्येति। एध इति पृथक्पदं, दकशब्द उदकवाची। रुजार्थानाम्। रोगार्थानां धातूनामित्यर्थो व्याख्यानात्। धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद्वचन इति कर्तरि ल्युट्। भावशब्देन सिद्धरूपोऽर्थ उच्यते, ल्युट्प्रकृत्यर्थोऽविवक्षितस्तदाह। भावकर्तृकाणामिति, रोगकर्तृकमिति च। रोगोऽत्र क्षयादिः। भावकर्तृकाणां किम्। श्लेष्मणश्चौररुजा। श्लेष्मात्र न भावः। सर्पिषो नाथनमिति। सर्पिर्मे भूयादित्याशासनमित्यर्थः। जासिनि। जसु मोक्षणे इति दैवादिकस्य न ग्रहणम्। जासीति निर्दे-

---

भावः। व्याख्यानादिति। रुजाशब्दस्य व्याधौ रूढत्वेऽपि भाववचनानामित्यस्य नदी कूलानि रुजतीति भाष्ये प्रत्युदाहरणाद्धातुमात्रमेवात्र निर्दिष्टमकार उच्चारणार्थ इति भावः। भावकर्तृकाणामित्यर्थलाभप्रकारमाह। धातोरित्यादिना। साध्यरूपस्यासत्त्वभूतस्य भवत्यर्थातिरिक्ते कर्तृत्वासंभवादाह। सिद्धरूप इति। घञादिवाच्य इत्यर्थः। भावस्य वचनकर्तृत्वासंभवादाह। प्रकृत्यर्थ इति। यत्तु धातूनामनेकार्थत्वाद्वचिः करोत्यर्थे, ल्युट्च कर्तरि, तथा च वचनशब्दः कर्तृशब्दसमशील इत्याचार्यास्तन्न। प्रकृतेः क्रियासामान्यार्थकत्वे तदर्थस्याविवक्षितप्रायत्वात्। तत्प्रकृतवचने मयडित्यादौ प्रकृत्यर्थाविवक्षाया दृष्टत्वात्कैयटाद्यभिमतत्वाच्च। रुजाशब्दनिर्देशे तु श्लेष्मा पुरुषं रुजतीति प्रत्युदाहार्यमिति कैयटोक्तेरसाङ्गत्यं सूचयन् कृदन्तं प्रत्युदाहरति। चौररुजेति। यद्यपि भाष्ये नदी कूलं रुजतीति तिङन्तं प्रत्युदाहृतं, तथापि तद्वार्तिकरीत्या। तन्मते शेषग्रहणानुवृत्तेरभावेनास्य प्रकरणस्य समासवारणार्थत्वाभावेन तिङन्तस्यापि प्रत्युदाहर्तुं शक्यत्वादिति बोध्यम्। निर्देशादिति। तेन जसु ताडने, जसु हिंसायामिति चौरादिकस्यैव ग्रहणलाभादिति भावः।

शाद्, हिंसायामित्युक्तेश्च। निप्रोपसृष्टो हनो निप्रहणः। शब्द-परत्वेऽपि सौत्रत्वाद्धन्तेरिति णत्वम्। चुरादिरिति। घटादेस्तु न ग्रहणं, दीर्घनिर्देशात्। 'क्राथनम्' इति घटादेः क्रथेः। क्राथेति सूत्रे निपातनाद् वृद्धिरिति वृत्तिः। परे तु एतत्सूत्रप्रामाण्यान्नटसाहच-र्याच्चायमपि चुरादिर्बोध्यस्तस्याकृतिगणत्वात्। निपातनस्य शेष-षष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथनमित्यस्या-नापत्तिः। सामान्येन निपातने चिण्णमुल्विषये कथं कथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः। समर्थयोरिति। समपर्यायसंशब्देन

---

ननु दैवादिकस्य ग्रहणेऽपि हेतुमण्णिचा तदुपपत्तिरत आह। हिंसायामिति। नन्वर्थवद्ग्रहणपरिभाषया हिंसार्थकहन्तेरेव हन्तेरित्यनेन णत्वविधानात्कथमत्र णत्वमत आह। सौत्रत्वादिति। घटादेरिति। नट नृत्तावित्यस्येत्यर्थः। तद्ग्रहणे तु तस्य मित्त्वेन दीर्घनिर्देशानुपपत्तिः। चुरादेस्तु नान्ये मितोऽहेता-विति निषेधान्न मित्त्वमिति भावः। ननु घटादेर्मित्त्वाद्ध्रस्वे रूपासिद्धिरत आह। निपातनादिति। तेन हि ह्रस्वोत्तरं पुनर्वृद्धिर्बोध्यत इति भावः। वृत्तिरित्यनेन सूचितामरुचिं प्रकटयन् सिद्धान्तमाह। परे त्विति। सूत्रप्रामाण्यादिति। सूत्रे क्राथेति निर्देशादित्यर्थः। ननु वृत्तिकारोक्तदिशापि तदुपपत्तिरत आह। साहचर्यादिति। निर्देशाच्छास्त्रबाधकल्पनापेक्षया सहचरितपरिभाषानुग्रहा-च्चुरादित्वकल्पनमेव युक्तमिति भावः। न केवलं कल्पनागौरवमेव तत्र, किं तु लक्ष्यासिद्धिरपीत्याह। निपातनस्येति। ननु तस्य सामान्यतो णिचसं-नियोगशिष्टत्वाङ्गीकारे कर्मषष्ठ्यामपि निरुक्तप्रयोगोपपत्तिरत आह। सामा-न्येनेति। कथंकथमित्यादेरिति। आदिनाऽक्रथीत्यस्य संग्रहः। अनापत्ति-रिति। ननु निपातनात्परत्वाद्दीर्घविकल्पे कथंकथमित्यादेः सिद्धिः। नच दीर्घविकल्पेऽपि तदभावपक्षे निपातनाद्वृद्धेर्दुर्निवारतयोक्तरूपासिद्धिरिति वाच्यम्।

**समासः, शकन्ध्वादित्वात् पररूपं वा । ब्राह्मणपणनमिति । आय-प्रत्ययो वैकल्पिकत्वान्न कृतः । उदाहरणे स्तुतावेवेति नियमादपि न ॥**

**दिवस्त । कर्मणि षष्ठी स्यादिति । शेष इति त्वत्र न सम्बध्यते व्याख्यानात् । अत एव 'द्वितीया ब्राह्मणे' इति सूत्रं**

---

सकृद्गतिन्यायेन पुनर्निपातनस्याप्रवृत्तेः । न चान्तरङ्गत्वान्निपातिताया वृद्धेरेव पूर्वं प्रवृत्तेर्न्याय्यतया तदसिद्धिर्दुर्वारैवेति वाच्यम् । तथा सति मित्त्वस्य वैयर्थ्यापत्त्या तत्सामर्थ्येनान्तरङ्गन्यायबाधकल्पनेनादोषादिति चेन्न । निपातनेनापूर्ववृद्धिविधायकवचनकल्पनायां मित्त्वसामर्थ्येनान्तरङ्गन्यायबाधकल्पनायां चातिगौरवात् । अस्मन्मते त्वाकृतिगणे क्राथेस्सत्त्वं निपातनेनानुमीयत इति न किंचित्कल्प्यमिति न किंचिद्गौरवम् । एवं च घटादिस्थस्य क्रथयतीत्यपि सिध्यतीत्यपरमनुकूलमिति बोध्यं । एतेन कर्मषष्ठ्यां चौरस्य क्राथनमिति वृद्धिदर्शनात्सामान्येनैव निपातनमेतत् । चिण्णमुल्विषये वृद्धिनिपातनापेक्षया परत्वाद्दीर्घविकल्पे क्रथंक्रथमित्यस्य सिद्धिर्निष्प्रत्यूहैव । क्राथयतीति भवतीति कौमुद्यामेवोक्तम् । मित्त्वफलं तु कौमुद्युक्तं क्रथक्रथमितीत्येवेति वाराणसेयोक्तमपास्तम् । समशब्दपर्यायसंशब्दस्याप्रसिद्धत्वादाह । **शकन्ध्वेति । नियमादपीति ।** व्यवहारार्थ एवोदाहरणादिति भावः ॥

दीक्षितादिमतेनाह । **शेष इतीति । व्याख्यानादिति ।** विभाषोपसर्गे, द्वितीया ब्राह्मणे, इत्युत्तरसूत्रद्वयारम्भसामर्थ्यरूपादित्यर्थः । अयं भावः । अत्र शेष इत्यस्य संबन्धे विभाषोपसर्गे इत्युत्तरसूत्रे तस्य संबन्धोऽस्ति न वा? नाद्यः, दिवस्तदर्थस्येत्यनेनैव समासाभावस्य सिद्धत्वेन सूत्रवैयर्थ्यापत्तेः । न च पक्षे षष्ठी शेष इत्यस्य प्रवृत्त्या पक्षे षष्ठीसमासः फलमिति वाच्यम् । नोपसर्ग इति न्यासेन दिव इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणस्यैवमपि व्यर्थत्वात् । नान्त्यः । वेदेऽपि विभाषोपसर्गे

'ग्रामस्य तदहः सभायान्दीव्येयुः' इत्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थ-मिति भाष्ये उक्तम् । तद् ध्वनयन्निङन्तमुदाहरति । शतस्य दीव्य-

इति सूत्रेण सोपसर्गे कर्मणि द्वितीयायाः सिद्धत्वेन छन्दस्यापाद्यरूपाभावेन च निरुपसर्गेऽपि कर्मत्वविवक्षायां दिव इत्यस्याप्रवृत्त्या कर्मणि द्वितीयेत्यनेनैव द्वितीयायाः सिद्धतया च द्वितीया ब्राह्मणे इत्यस्य वैयर्थ्यापत्तेः । नच तत्र शेषग्रहणानुवृत्त्या कर्मत्वाविवक्षायां द्वितीयार्थं तदिति वाच्यम् । मध्ये विच्छि-न्नत्वेनानुवृत्तेरयुक्तत्वात् । नच कर्मणि द्वितीयायाः सिद्धत्वेन द्वितीया ब्राह्मण इति पुनर्विधानसामर्थ्यात्समासाभावः स्यादिति वाच्यम् । कृदन्ते लक्ष्याभावा-त्तदप्रवृत्तेः । अत एव भाष्ये तिङन्तमेवोदाहृतं, न तु कृदन्तमितीति प्राञ्चः । वस्तुतस्तु व्यवहृपणादिवां समर्थानामित्येकयोग एव कर्तव्ये पृथग्योगकरणरूपा-ख्यानादत्र शेषग्रहणासंबन्धः । प्राचोक्तं तु न युक्तम् । नोपसर्ग इत्यत्र विभाषोपसर्ग इत्यतः पदलाघवाभावात्तिङन्ते रूपद्वयार्थं विभाषाग्रहणस्या-वश्यकत्वाच्च विभाषापदवैयर्थ्यस्य वक्तुमशक्यत्वात् । स्पष्टं चेदमुद्योते । नच शेषत्वविवक्षाविवक्षाभ्यां तिङन्ते रूपद्वयस्य साधितत्वादिदमनावश्यकमिति वाच्यम् । शेषत्वविवक्षायामेव रूपद्वयसिद्धये तस्यावश्यकत्वात् । विभाषोपसर्ग इत्यत्र शेषग्रहणसंबन्धपक्ष एव विभाषाग्रहणवैयर्थ्यस्य तैरुक्ततया तत्पक्षे तद्वैयर्थ्यस्य वक्तुमशक्यत्वात् । अत एवेति । अत्र शेषपदासंबन्धादेवेत्यर्थः । कैयटोक्तमाह । नित्यमिति । ग्रामित्यत्र कर्मणि द्वितीयेत्यनेन प्राप्तां द्वितीयां बाधित्वानेन नित्यं षष्ठीप्राप्तौ तद्वारणाय द्वितीया ब्राह्मण इति सूत्रमिति तदाशयः । यद्यत्र शेषपदसंबन्धः स्यात्तदा शेषत्वेन विवक्षायामेवानेन षष्ठी-विधानाच्छुद्धे कर्माणि कर्मणि द्वितीयेत्यनेनैव सिद्धे तद्व्यर्थं स्यात् । शेषपदासं-बन्धे तु शुद्धे एवानेन षष्ठीति तत्प्राप्त्या तद्वारणाय द्वितीया ब्राह्मण इति सूत्रं सार्थकम् । द्वितीया ब्राह्मण इत्यत्र तु न शेषपदसंबन्धः, मध्ये विच्छिन्न-त्वादिति बोध्यम् । तद्ध्वनयन्निति । अत्र शेषग्रहणासंबन्धं ध्वनयन्नित्यर्थः ।

तीति। यद्यपि पूर्वसूत्रे दिवं पठित्वा तदर्थस्येति त्यक्तुं शक्यते तथापि योगविभाग उत्तरार्थः, शेष इत्यस्यासम्बन्धार्थश्च। विभाषोप। अत्रापि शेष इति न सम्बद्ध्यते, तदर्थस्येति च वर्तते। तदाह। पूर्वयोगेति। अत एवेयं प्राप्तविभाषेति नवेति सूत्रे भाष्ये स्पष्टम्। कृत्वोऽर्थप्रयो। शेषे किमिति। दिवस्तदर्थस्येत्यादिना विच्छेदादधिकरणकारक एव षष्ठीविधानं युक्तमिति प्रश्नः। द्विरह्नीति। वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम्। अधीगर्थेति सूत्रे कर्मादीनामविवक्षा शेष इति भाष्ये बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च। वस्तुतस्तु 'कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनम्' इति वार्तिकप्रत्याख्यानाय शेषे इति वर्तते इति

---

यदि तत्संबन्धेनेदमपि समासनिवृत्तिमात्रफलकमेव स्यात्तदाऽन्यत्रेवात्रापि समासप्राप्तियोग्यं कृदन्तमेवोदाहरेदिति भावः। ननु संख्याव्ययादेरितिवदेकदेशे स्वरितत्वप्रतिज्ञानात्तन्मात्रसंबन्धसिद्धेर्योगविभागो व्यर्थ इत्यरुचेराह। शेष इति। अत एवेति। अत्रापि शेषपदासंबन्धादेवेत्यर्थः। ननु वृत्त्याद्युक्तिर्मण्डूकानुवृत्तौ न दृढं मानमत आह। अधीगर्थेति। बहुवचनेनेति। कर्मादीनामित्यादिपदेन ज्ञोऽविदर्थस्य करण इत्यत्र करणस्य कृत्वोर्थप्रयोग इत्यत्राधिकरणस्य च ग्रहणे बहुवचनमुपपन्नं भवति, नान्यथा। अतोऽत्रापि शेषपदसंबन्ध इति भावः। दीक्षिताद्युक्तेरसाङ्गत्यप्रदर्शनायोक्तभाष्याशयं प्रदर्शयन् सिद्धान्तमाह। वस्तुतस्त्विति। कर्मादिष्वकर्मकवद्वचनमिति वार्तिकमर्थतो दर्शयति। कर्माश्रयेति। कर्मव्यतिरिक्तादिपदग्राह्यस्याभावाद्विष्णुरादिः पृथासूनोर्भीष्मादिश्च सुयोधनः। ते जयन्ति रणे शत्रून् येषां विष्णुः समाश्रय इति वदत्रादिशब्दस्याश्रयवाचित्वेन कर्माश्रया द्वितीयापवादषष्ठीविधिनिमित्तत्वेनोपात्ताः सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्त इति कैयटः। सूत्रोपात्तेति। अधीगर्थेत्यादिप्रेष्यब्रूपर्यन्तसूत्रोपात्तेत्यर्थः। अकर्मकवद्वचनमिति। तेन

भाष्यकृतोक्ते परेण 'शेषश्च क' इति पृष्टे, शेषे षष्ठीति सूत्रोक्तं 'कर्मादीनामविवक्षा शेष' इति सिद्धान्तिना स्मारितम् । नैतावता कृत्वोर्थेत्यत्र तत्सम्बन्धो लभ्यते । किं चैतद्भाष्यबलात् दिव इति सूत्रेऽपि शेषपदसम्बन्ध आवश्यकः । अन्यथा वार्तिकरीत्या शतस्य

---

मातुः स्मर्यत इत्यादौ भावे लकृत्यक्तखलर्था भवन्ति । अन्यथा कर्मणि लादिषु विधीयमानेषु कर्मणोऽभिहितत्वात्षष्ठ्यप्राप्त्या प्रथमैव स्यान्माता स्मर्यत इति, नतु षष्ठी । सूत्रं तु मातुः स्मरणमित्यादौ कृतार्थम् । अकर्मकवद्वचने तु वत्करणेन स्वाश्रयकार्यानिवृत्त्या रूपद्वयसिद्धिरित्याशयः । स्मारितमिति । षष्ठी शेष इत्यनेन हि कर्मादीनां षण्णामपि कारकाणामविवक्षायां षष्ठीविधानात्तत्र कश्शेष इति प्रश्ने कर्मादीनामविवक्षा शेष इति बहुवचनमुपात्तम् । तथात्रापि शेषपदजिज्ञासायां प्रसङ्गात्तत्सूत्रोक्तवाक्यमेव स्मारितमिति तत्रादिपदस्य सार्थकत्वेन स्मृतवाक्यस्थादिपदस्य पृथगत्र सार्थक्योपपादनानपेक्षणेन तद्बलेनात्रार्थान्तरकल्पनस्यानौचित्यात् । किंच वार्तिके कर्मादिष्वित्यनेनाधीगर्थेत्यादिप्रेष्यब्रूपर्यन्तानामेव ग्रहणस्य कैयटेनोक्तत्वात्तन्मध्ये करणाधिकरणयोरभावाच्छेषग्रहणानुवृत्त्या तत्प्रत्याख्यानेऽपि तयोर्ग्रहणमयुक्तमित्याशयः । दिवस्तदर्थस्येति सूत्रे प्राचीनरीत्या शेषपदासंबन्धमभिधाय सिंहावलोकनन्यायेन वस्तुतस्तत्र शेषपदसंबन्ध एव भाष्यवार्तिकाद्यभिमत इत्याह । किंचेति । एतद्भाष्येति । शेषग्रहणानुवृत्त्या वार्तिकप्रत्याख्यानपरभाष्येत्यर्थः । वार्तिकरीत्येति । तन्मतेऽकर्मकवद्वचनाद्भावे लकारेणेष्टसिद्धिः । शेषपदानुवृत्त्या तत्प्रत्याख्याने तु दिव इत्यत्र तदसंबन्धेऽकर्मकत्वाभावाद्भावे लाकाराप्राप्त्या कर्मणि लकारे कर्मणोऽभिहितत्वात्षष्ठ्यप्राप्तौ शतं दीव्यत इत्येव स्यान्न तु षष्ठी । सूत्रं तु शतस्य देवनमित्यादौ कृतार्थं, तत्र तत्संबन्धे त्वविवक्षितकर्मकत्वेनाकर्मकत्वादिष्टसिद्धिः । एवं चारम्भप्रत्याख्यानयोः फलाभेदाय तत्रापि तत्संबन्ध

दीव्यते इति भावे इष्टस्य प्रयोगस्यासिद्धिः। अत एव वार्तिकव्याख्यायाम् 'अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते' इति कैयटः। एवञ्च शेष इत्यनुवृत्त्या वार्तिकप्रत्याख्यानवदेतत्सूत्र-

---

आवश्यक इत्याशयः। यत्तु दिव इत्यत्र शेष इत्यस्यासंबन्धेन शुद्धे कर्मणि षष्ठ्यामपि कर्मणः शेषत्वेन विवक्षायां शतस्य दीव्यत इत्यस्योपपत्तेर्नोक्तविरोध इति चिन्त्यमेतदिति वाराणसेयाः। तन्न। अत्र शेषग्रहणासंबन्धे एतद्विषये कर्मणश्शेषत्वविवक्षायाः कर्तुमशक्यत्वात्। अन्यथाऽधीगर्थादिष्वकर्मकवद्वचनाभावेऽपि कर्मणः शेषत्वेन विवक्षाविवक्षाभ्यां मातुः स्मर्यते, माता स्मर्यत इति रूपद्वयस्य सिद्धतया तदर्थं कर्मादिष्वकर्मकवद्वचनमिति वार्तिकारम्भस्य शेषग्रहणानुवृत्त्या तत्प्रत्याख्यानपरभाष्यस्य चासांगत्यापत्तिरिति बोध्यम्। दिव इति सूत्रे शेषग्रहणसंबन्धे कृत्वोर्थ इति सूत्रे तदसंबन्धे च भाष्यतात्पर्यमित्यत्र कैयटसम्मतिमपि दर्शयति। अत एवेति। अत्र पर्यन्तशब्देनाग्रे तदसंबन्धो मध्ये तत्संबन्धश्च स्पष्टं लभ्यत इति भावः। एतेन कैयटविरोधस्याकिञ्चित्करत्वाद्दिव इत्यत्र शेषपदसंबन्धे न मानमिति वाराणसेयोक्तमपास्तम्। तस्याधीगर्थेति सूत्रस्थभाष्यानुगृहीतत्वेन तद्विरोधस्य भाष्यविरोधरूपत्वेन तस्याकिञ्चित्करत्वोक्तेरयुक्तत्वात्। नन्वेवं व्यवहृपणोदिवां समानार्थानामित्येकयोग एव कर्तव्ये पृथग्योगकरणं तदर्थस्येति पदं, विभाषोपसर्गे द्वितीया ब्राह्मणे इति सूत्रद्वयं च व्यर्थमत आह। सूत्रद्वयेति। इदमुपलक्षणं, योगविभागस्यापि। नच सोपसृष्टे समासविकल्पार्थं विभाषोपसर्ग इत्यावश्यकमिति वाच्यम्। दिवः कर्मणः कर्मत्वेन विवक्षायां कारकषष्ठ्या समासस्य, शेषत्वेन विवक्षायां दिव इत्यनेन षष्ठ्यां समासाभावस्य च सिद्ध्या तस्यानावश्यकत्वमित्याशयात्। एवं दिवस्तदर्थस्येत्यस्य शेषत्वविवक्षायां प्रवृत्त्या कर्मत्वेन विवक्षायां कर्मणि द्वितीयेत्यनेन द्वितीयासिद्धौ द्वितीया ब्राह्मणे इत्यस्य वैयर्थ्येन प्रत्याख्यानं

द्वयप्रत्याख्यान एव भाष्यतात्पर्यम् । द्वितीया ब्राह्मण इति सूत्रस्थभाष्यं तु वार्तिकरीत्येत्याहुः । किंच 'यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति स्मराम्यहं मातरम्' इति भाष्ये उक्तम् । त्वद्रीत्या तु यदा कर्मादि विवक्षितं भवतीति वदेत् । एवञ्च ज्ञोऽविदर्थस्येत्यत्रापि तदसम्बन्ध एव । एवञ्च तद्योगे न कदापि तृतीया । शतं दीव्यतीत्यादि च सिद्ध्यति । अधीगर्थेत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु ॥

कर्तृकर्मणोः । अत्र शेष इति न संबद्ध्यते, सूत्रवैयर्थ्यापत्तेः । कृद्योगा षष्ठी समस्यत इति वार्तिकेन तत्र समासस्येष्टत्वात् । कृतिरिति भावे क्तिन् । कृष्णः कर्ता । जगत इति । कर्मेदम् ।

---

बोध्यम् । नन्वेवं द्वितीया ब्राह्मणे इति सूत्रविषये दिव इत्यस्याप्राप्त्या तेन नित्यं षष्ठीप्राप्तौ तद्बाधनार्थं पुनर्द्वितीयाविधानमित्याशयकं द्वितीया ब्राह्मण इति सूत्रस्थं भाष्यं विरुध्येतेत्यत आह । वार्तिकरीत्येति । तन्मतेऽत्र प्रकरणे शेषपदासंबन्धादिति भावः । कृत्वोर्थ इत्यत्र च शेषपदासंबन्धे मानान्तरमाह । किंचेति । त्वद्रीत्येति । अकर्मकवद्भावाविषयेष्वपि शेषग्रहणसंबन्धमभ्युपगच्छतस्तव मत इत्यर्थः । न कदापीति । तद्विहितषष्ठ्याः तृतीयाबाधकत्वादिति भावः । शतमिति । दिव इत्यत्र शेषपदासंबन्धे तु कर्मत्वशक्तिमत्त्वेन विवक्षायां द्वितीयां बाधित्वा तेन षष्ठ्यां तदसिद्धिः । तत्संबन्धे तु शेषत्वेन विवक्षायां शतस्य दीव्यतीति, कर्मत्वेन विवक्षायां शतं दीव्यतीति रूपद्वयसिद्धिरिति भावः । ननु ज्ञोऽविदर्थस्येत्यत्र शेषपदासंबन्धेऽधीगर्थेत्यत्र कथं तत्संबन्धः, मध्ये विच्छिन्नत्वादत आह । मण्डूकानुवृत्तिरिति ॥

नन्वधीगर्थेत्यादिवत्समासाभावार्थं सूत्रं सार्थकमत आह । कृद्योगेति ।

कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते। तेन स्तोकं पाक इत्यादौ न क्रियाविशेषणात् षष्ठी। किञ्च क्रियाविशेषणेन स्तोकम्पाचक इत्यादौ न समानाधिकरणसमासो, नापि सुप्सुपेत्यादिः। सुबन्तार्थविशेष्येणान्वयेनासामर्थ्यात्। द्वितीयाश्रितेत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः। द्वितीयाप्रकरणोक्तपरेतुमतरीत्या वा सामर्थ्यम्। अत एव पूजनात्पूजितमिति सूत्रे

---

वक्ष्यमाणातिप्रसङ्गवारणाय विशेषमाह। कर्तृसाहचर्यादिति। ननु मन्दं गच्छति, कुटिलं गच्छतीत्यादौ मान्द्यकौटिल्ययोर्धात्वर्थव्यापार एवाभेदेनान्वयः। व्यापारस्यापि व्यपदेशिवद्भावेन व्यापाराश्रयत्वात्कर्तृत्वम्। अतस्तत्समानाधिकरणयोरपि कर्तृत्वात्प्रथमैवेति प्रागुपदर्शितत्वेन कर्तुरपि क्वचिद्धात्वर्थेऽभेदान्वयदर्शनादिदमयुक्तमिति चेन्न। तथापि तस्य न लोकेति निषेधेन प्रकृतसूत्राविषयतया प्रकृतसूत्रविषये कर्तुर्भेदेनान्वयिन एव संभवात्तत्साहचर्येण निरुक्तार्थकल्पनाया युक्तत्वात्। निषेधाविषये स्तोकः पाक इत्यादावपि घञर्थव्यापारस्य बहिर्भूतक्रियानिरूपितकर्तृत्वात्तस्य च तिङादिभिरभिधानात्तत्समानाधिकरणस्तोकादिनिष्ठस्यापि तस्याभिहितत्वान्न तस्यापि प्रकृतसूत्रविषयता। एवं कुटिलं गन्तेत्यादावपि तृचा गमनक्रियाकर्तृत्वस्याभिधानान्न तस्यापि प्रकृतसूत्रविषयतेति बोध्यम्। भेदेन = इतरसंबन्धावच्छिन्नविशेषणविशेष्यभावेन। स्तोकं पाक इति। फलस्यापि व्यपदेशिवद्भावेन फलाश्रयतया कर्मत्वात्तत्राभेदेनान्वयिनः स्तोकपदार्थस्य कर्मत्वेऽपि तस्य धात्वर्थे भेदेनान्वयाभावान्न षष्ठीति भावः। प्रसङ्गादीदृशे विषये विशेषमाह। किंचेति। आदिरिति। आदिना मयूरव्यंसकेत्यस्य संग्रहः। तत्र हेतुमाह। सुबन्तेति। नन्वेवं कृष्णश्रित इत्यादावपि स न स्यादत आह। द्वितीयेति। वस्तुतस्तत्र स्वारसिकमेव तदित्याह। परे तु मतरीत्येति।

दारुणं यथा भवति तथाऽध्यापक इत्यर्थकस्य दारुणाध्यापक इत्यस्य सिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये। अन्यथा समासेन सिद्धे तद्व्यर्थं स्यात्। एतदेव भाष्यं ततः षष्ठ्यभावेपि मानम्। अन्यथा षष्ठीसमासस्य तृजकाभ्यां कर्तरीत्यादिनिषेधैरुक्तसामर्थ्येपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोद्ध्यम्। न च भिन्नपदत्वेऽपि तथा प्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम्। तथा सति वाक्ये मलोपश्च वक्तव्य इति वदेत्। अत एव कैयटेन क्रियाविशेषणं दारुणादयस्तत्र वैयधिकरण्यात् समासाभावात्

---

यथा प्राप्तिकर्त्रानन्दकर्मेति विग्रहवाक्ये विशेष्ये कर्तरि कर्मत्वनिरूपकत्वाभावेऽपि तद्विशेषणप्राप्तिवृत्तिकर्मत्वनिरूपकत्वं कर्तर्यारोप्यते, तथा कृष्णश्रित इत्यत्र श्रयणवृत्तिकर्मतानिरूपकत्वं श्रयणकर्तर्यारोप्य सामर्थ्यमुपपादनीयमिति भावः। क्रियाविशेषणेन समासाभावे ततः षष्ठ्यभावे च मानमाह। अत एवेति। उक्तसामर्थ्येऽपीति। अवयवद्वारकसामर्थ्येऽपीत्यर्थः। ननु समासस्य पाक्षिकत्वेन तदभावे दारुणाध्यापक इत्यस्य सिद्ध्यर्थं तदास्त्वित्याशयेन शङ्कते। नचेति। इति वदेदिति। अनुदात्तत्वस्योभयविषयकत्वं मलोपवचनस्य वाक्यमात्रविषयकत्वं च यद्यभिमतं स्यात्तदा मलोपस्य सर्वथा तत्सन्नियोगशिष्टत्वाभावेन ततो भेदप्रतिपत्तये 'वाक्ये मलोपश्च वक्तव्य' इत्येव वदेत्। तथाऽनुक्त्या चास्य सर्वथा स्वरसन्नियोगशिष्टत्वमवगम्यते। यद्यत्र समासः स्यात्तदा तत्रापि स्वरस्य प्रवृत्तेर्वाच्यतया तत्सन्नियोगेन मलोपवचनमनर्थकं स्यादतस्तत्र समासाभाव एव भाष्याभिप्रेत इति भाव.। अत्र समासाभावे वृद्धसम्मतिमपि दर्शयति। अत एवेति। विशेषणमिति। जातावेकवचनम्। वैयधिकरण्यादिति। दारुणं यदध्यापनं तत्करोति बोधेन द्रव्यवाचिना सामानाधिकरण्याभावादित्यर्थः। ननु वैयधिकरण्येऽप्यवयवद्वारकसा-

मलोपो विधीयत इत्युक्तम्। सुप्सुपेत्यादिसमासो न सार्वत्रिक इति तदाशय इत्यलम्। कृति किमिति। कर्तृकर्मभ्यां क्रिया सन्निधाप्यते। तद्वाची तु धातुरेव। कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन धातुभिरेव तदुपस्थितेः। शत्योऽश्वः, आढ्यिक इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकाणामन्वयः, एतद्भाष्यप्रामाण्यात्। अत एव हिरुगादियोगे न कर्मादिसंज्ञा। एतेन देवदत्तेन शत्योऽश्व इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम्। अधिका खारी द्रोणेनेत्यत्र हेतौ तृतीया। क्रियायोगाभावात् कर्तुः कर्तृत्वाभावे जनकत्वरूपहेतुत्वसत्त्वात्। धातोश्च द्वये प्रत्ययास्तिङः कृतश्च। तत्र तिङ्योगे नलोकेति निषेधात् कृद्योगे एव भविष्यतीति किं तेन। नलोकेति सूत्रे कृदव्ययस्यैव ग्रहणं तु अव्यया-

---

मर्थ्यमादाय सुप्सुपेति, मयूरव्यंसकेति वा समासोऽस्त्वित्यत आह। सुप्सुपेति। तद्वाचीति। कर्तृकर्मान्वययोग्यक्रियावाचीत्यर्थः। कारकाणामिति। तथा च देवदत्तकर्तृकशतकरणकक्रयणकर्मेत्यर्थतात्पर्येण देवदत्तेन शत्योऽश्व इति प्रयोगो नेति भावः। एतद्भाष्येति। कृतपूर्वी कटं, भुक्तपूर्वी ओदन इति विलक्षणतद्धितान्तस्थल एव कृतीत्यस्य प्रयोजनप्रतिपादनपरभाष्यप्रामाण्यादित्यर्थः। अत एवेति। धातुनैवोक्तरूपसाध्यत्वेन क्रियाया उपस्थितेरेवेत्यर्थः। एतेन = तद्धिताद्युपस्थाप्यक्रियायां कारकान्वयाभावेन। नन्वेवमधिकमिति सूत्रेणाध्यारूढशब्दात्कन्युत्तरपदलोपेन निष्पन्नाधिकशब्देन योगे तृतीयायाः साधुत्वं न स्यादत आह। अधिकेति। क्रियेति। उक्तरूपसाध्यत्वेनोपस्थितक्रियेत्यर्थः। ननु कृतो ये कर्तृकर्मणी तत्र षष्ठीत्येवंव्यवस्थार्थं कृद्ग्रहणमस्त्वत आह। धातोश्चेति। भाष्यप्रयोगाद्द्वये इत्यस्य साधुत्वं, द्वितये इति पाठ इति चिदस्थिमालाकारः। ननु कृतीत्यस्योत्तरसूत्रेऽनुवृत्त्या कृदव्ययस्यैव ग्रहणलाभाय तदावश्यकमत आह। न लोकेति। ननूभयप्राप्तावित्यत्र तदनुवृत्त्या

र्थस्य ये कर्तृकर्मणी इति व्याख्यानेन सिद्धम् । उभयप्राप्तावित्यत्र बहुव्रीहिस्तु एकाचो द्वे इत्यादाविवान्यपदार्थस्याशाब्दत्वेऽपि व्याख्यानाद्भविष्यति । न च भेदिका देवदत्तस्य काष्ठानामित्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरं तदिति वाच्यम् । तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नं सिद्धेरिति प्रश्नः । तद्धित इति । तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रि-

---

तद्विशेष्यकबहुव्रीहिर्णकस्यैव कृतो ये कर्तृकर्मणी तयोः प्राप्तावित्यर्थलाभाय तदावश्यकम् । अन्यथा लाघवात्तत्पुरुषे भिन्नक्रियाकर्तृकर्मणोः प्राप्तावपि नियमे ओदनस्य पाकः, ब्राह्मणानां प्रादुर्भाव इति न स्यादत आह । उभयेति । व्याख्यानादिति । ओदनस्य पाकः, ब्राह्मणानां प्रादुर्भाव इति प्रकृतसूत्रस्थभाष्यप्रयोगे उभयत्र षष्ठीदर्शनमूलकादित्यर्थः । भाष्ये कृतीत्यस्यैकदेशिनोक्तं प्रयोजनान्तरमाशङ्क्य खण्डयति । नचेति । भेदिकेत्यत्र भिदेर्ण्यन्तात्पर्यायादिषु ण्वुच् । तत्र प्रयोजकः कर्ता ण्यर्थस्य प्राधान्यात्प्रधानम् । प्रयोज्यकर्ता तु प्रकृत्यर्थस्याप्राधान्यादप्रधानम् । तत्र प्रधानाप्रधानसन्निधौ प्रधानादेव षष्ठी स्यान्नाप्रधानात् । कृद्ग्रहणे तु करोतीति कृदिति व्युत्पत्त्या तस्य कर्तृपरत्वेन कर्तरि पुनः षष्ठीविधानाद्गुणभूतेऽपि कर्तरि षष्ठीसिद्धिरित्याशयः । गुणभूते = प्रयोज्ये । तृतीयावदिति । यथा देवदत्तेन यज्ञदत्तेन पाच्यते तण्डुल इत्यादावनुक्तयोर्भिन्नपदवाच्ययोर्गुणप्रधानकर्त्रोस्तृतीया विरोधाभावाद्भवति, तथा प्रकृते षष्ठ्यपि विनैव यत्नं भविष्यतीति न तदर्थं कृद्ग्रहणमिति भावः । यथाश्रुतेऽर्थे तण्डुलानां पाचकतर इत्यादौ षष्ठ्यनापत्तेराह । तद्धितान्तशक्तिग्रहेति । तद्धितान्तपर्याप्तशक्तिग्रहेत्यर्थः । मात्रपदेन कृदन्तव्यवच्छेदः । तेन तण्डुलानां पाचकतर इत्यादौ तद्धितान्तपर्याप्तशक्तिग्रहेण कृत्प्रकृत्यर्थक्रियाया उपस्थितावपि न तन्मात्रेणोपस्थितिः । पाचक इत्यादेः पृथक्प्रयोगसत्त्वेन

याया: कर्त्तरि कर्मणि च मा भूदित्यर्थः। उदाहरणे सकर्मक-प्रकृतिकभावक्तान्तस्येदृशवृत्तिमात्रविषयताया भाष्यसम्मतत्वेन तस्य केवलस्य क्वाप्यप्रयोगेण तद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात्। कृद्ग्रहणात्कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयाक्रियाकर्तृकर्मणोर्ग्रहणम्, न चात्र तथा। तण्डुलानां पाचकतर इत्यादौ च पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भव-

---

कृदन्तेऽपि शक्तिग्रहस्यावश्यकतया तेनापि तत्र तदुपस्थितेः। कृतपूर्वी कटमित्यत्र तु कृधातु क्तप्रत्यय पूर्वशब्देनिप्रत्ययशक्तिज्ञानसहकृततद्धितान्तशक्त्यैव परस्परविशिष्टानां बोधो, नतु कृदन्तशक्तिज्ञानमपि तत्र सहकारि। अन्यत्र क्वापि कृञः क्तस्य भावार्थकत्वाभावेन तदन्तमात्रस्य पृथक् शक्तिग्रहे मानाभावात्। एवं च नात्र षष्ठी। चतुर्णामेकार्थीभावे द्वयोरपि सोऽस्त्येवेति नात्र कृतोऽसाधुत्वमिति भावः। तदेतदाह। उदाहरण इति। अभावस्येत्यादिः। प्रत्युदाहरण इत्यर्थः। न चात्र न लोकेति निषेधेन षष्ठ्यप्राप्त्या नेदं कृद्ग्रहणप्रयोजनमिति वाच्यम्। लादिसाहचर्येण निष्ठान्तपदशक्तिज्ञानसहकारेणोपस्थितक्रियान्वयिनोरेव तेन निषेधेन प्रकृते तदप्रवृत्तेः। एतेन कृतपूर्वी कटमित्येतत्कर्तव्यपूर्वी कटमित्यस्योपलक्षणं, तथा च तत्र निष्ठाया अभावान्न न लोकेत्यस्य प्राप्तिरिति वाराणसेयोक्तं, न लोकेति निषेधेनैव सिद्धे कृतीति व्यर्थमिति कौस्तुभपदमञ्जर्याद्युक्तं चापास्तम्। भाष्येति। तच्चाग्रे मूल एव स्फुटीभविष्यति। कृद्ग्रहणसत्त्वे यथात्र न दोषस्तदाह। कृद्ग्रहणादिति। तत्सामर्थ्यादित्यर्थः। अत्र = कृतपूर्वीत्यत्र। तत्र कृदन्ते शक्तिग्रहाभावादिति भावः। पूर्वं मात्रपदनिवेशेऽत्र तदनिवेशे च फलं दर्शयति। तण्डुलानामिति। तच्छक्तिग्रहस्यापीति। अपिना तद्धितान्तशक्तिग्रहसंग्रहः। अत्र तद्धितान्तेन

त्येव षष्ठी। अत एव तद्धिते माभूदित्येवोक्तं, न तु तद्धिताभिधेयेऽपीति। भाष्येपि तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत्कृतो ये कर्तृकर्मणी तत्रैव यथा स्यादित्येवोक्तम्। कृतपूर्वीति। अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षयाऽकर्मकत्वाद्भावे क्ते पूर्वादिनिरिति तद्धितः। तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव। तत्रोक्तरीत्या षष्ठ्यभावेऽनभिहितत्वाद् द्वितीया। एवं रीत्या साधुत्वेऽत्रत्यभाष्यमेव मानम्। वृत्तेः पूर्वं कर्मान्वयाभावाच्च सापेक्षत्वाद् वृत्तिर्न स्यादिति न शङ्क्यम्। एवमधीती व्याकरणे इत्यादावपि बोद्ध्यम्। तदुक्तं भाष्ये—यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिरिति। न तदा प्रत्ययः—न तदा भावे प्रत्ययः। धातोः सकर्मकत्वात्। यदा प्रत्ययः—भावे इति शेषः। तदा वृत्तिरेव। सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह। सामान्येनेति। कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टो योऽर्थः तदर्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः। इयमेव कर्मणोऽविवक्षा नाम। अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तम्।

---

क्रियोपस्थितौ कृदन्तशक्तिज्ञानस्यापेक्षणान्मात्रार्थाभावेन नास्य प्रत्युदाहरणत्वमिति भावः। अत एवेति। तद्धितविशेष एव वारणस्येष्टत्वादेवेत्यर्थः। भाष्यसम्मतमपीदमेवेत्याह। भाष्येऽपीति। कृतपूर्वी कटमिति वाक्यस्य साधुत्वमुपपादयति। अत्रेति। यदुक्तं भाष्यमेव मानमिति तदेव दर्शयति। तदुक्तमित्यादिना। कृद्ग्रहणस्य कृतपूर्वी कटमिति प्रयोजनमुक्त्वा तत्र कृतः पूर्वं कटोऽनेनेति विवक्षायां कृत इत्यस्य विशेष्यतया कटसापेक्षत्वादिनिप्रत्ययो न प्राप्नोतीत्याशङ्क्य 'नेदमुभयं युगपद्भवति। वाक्यं च समासश्च। यदा वाक्यं तदा न प्रत्यय' इत्याद्युक्तमिति बोध्यम्। सर्वं वाक्यं सावधारणमिति न्यायेनाह। वृत्तिरेवेति। अनेन = अवधारणार्थकेन तदा-

प्रयोगानुरोधिनी हि विवक्षेति तद्भावः। न चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, नपुंसके भावे इत्यनेन सकर्मकेभ्योऽपि सिद्धेरिति वाच्यम्। तस्याप्यकर्मकेभ्य एवेष्टेः। अत्र चेदमेव भाष्यं मानम्।

दद्वैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्।
लिम्पैरिव तनोर्वातैश्चेतयन् स्याज्ज्वलो न कः॥

---

वृत्तिरिति भाष्येण। नन्वेवंरीत्या घटं क्रियते, घटं कृतमित्याद्यपि स्यादत आह। प्रयोगानुरोधिनी हीति। इदमेवेति। अस्य सकर्मकेभ्योऽपीष्टत्वेऽनेनैव कृतपूर्वीत्यादेः साधुत्वोपपत्तौ तत्साधुत्वाय भाष्यकृतो निरुक्तप्रयासो विफल एव स्यात्। किं च यदा वाक्यं न तदा प्रत्यय इति भाष्येण वाक्ये यथाकथंचिदपि सकर्मकधातुभ्यो भावे क्तस्य साधुत्वं नेति बोध्यत इति भावः। अस्यापि सकर्मकेभ्योऽनुत्पत्तिस्तु तयोरेवेति सूत्रे लः कर्मणीत्यतो भावे चाकर्मकेभ्य इत्यनुवर्त्य कृत्यादयो भावकर्मणोरेव, भावे च ये कृत्यादयः प्राप्तास्तेऽकर्मकेभ्य एवेति वाक्यभेदेन व्याख्यानात्सिद्धा। तत्रानुवादेऽविशेषात्सर्वस्यापि क्तस्य ग्रहणादिति बोध्यम्। एतेन कृतपूर्वीत्यत्र निष्ठेति न क्तः, किन्तु नपुंसके भावे क्त इति क्तः। एवं च न लोकेति षष्ठीनिषेधस्य बाधकेन 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यान'मिति वार्तिकेन षष्ठीप्राप्तौ कृद्ग्रहणान्नेति केषां चिदौत्तराहाणामुक्तिः परास्ता। तस्यापि सकर्मकेभ्योऽनिष्टत्वात्। तद्वार्तिकप्राप्तस्यात्रत्यकृद्ग्रहणेन वारयितुमशक्यत्वाच्च। तदर्हमिति निर्देशादनित्यमिदम्। अत एव धायैरामोदमुत्तममिति भट्टिप्रयोग उपपद्यत इति प्राचोक्तं कटाक्षयंस्तदुपपत्तिं दर्शयति॥

दद्वैरित्यादिना। नन्विदं व्याख्यानं जयमङ्गलाविरुद्धमत आह। एत-

इति भट्टिपद्यम् । मादृग्भ्यो दुःखं दद्भिरुत्तममामोदं पुष्पादीनां गृहीत्वा मादृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृक् विरहाग्निव्याप्तश्चेतयन् ज्वलः ज्वलन्निव न स्यादिति तदर्थः । दाधातोः पोषणार्थाद्दाञश्च ददातिदधात्योरिति शणौ, लिम्पेः शः, ज्वलेर्णं इति जयमङ्गलाश्लोकव्याख्याप्येतज्जातीयैव तत्रेति दिक् । तत्र धायैरामोदमुत्तममित्यत्र गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीया बोद्धव्या ॥

उभयोः प्राप्तिर्यस्मिन्निति । तेनैकनिमित्तत्वलाभादोदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति भावः । प्राप्तिपदेन चोभयोः प्रयोग

---

ज्जातीयैवेति । अध्याहृत्येति । एवञ्च कृद्योगाभावान्नात्र षष्ठीप्रसक्तिरिति भावः । आमोदं धारयद्भिरिति व्याख्यायानित्यत्वेन षष्ठीवारणन्तु न युक्तम् । भाष्यानुक्तत्वेनास्यानित्यत्वे मानाभावात् । तदर्हमित्यत्र कर्मोपपदादण्प्रत्ययेनोपपदसमासेन द्वितीयासमर्थादित्यर्थलाभः । तदर्थमेव च तत्र तच्छब्दोपादानं सार्थकम् अन्यथा 'तत्रेव' तस्य, अर्हमिति सूत्रत्रयमेव लघुभूतं कृतं स्यादिति बोध्यम् ॥

तेन = बहुव्रीहिणा । प्राप्तिग्रहणात् प्राप्तिमात्रेऽयं नियम इति कर्तृकर्मणोरप्रयोगेऽप्यस्य प्रवृत्तिः । अत एव अन्तर्धौ येनादर्शनमित्यादौ कर्तरि तृतीयासिद्धिः । अत्र ह्यात्मन इत्यस्य गम्यमानत्वादस्त्युभयोः प्राप्तिरिति हरदत्तोक्तमयुक्तमिति सूचयन्नाह । प्रयोग एवेति । प्रयुज्यमानादेव प्राप्तेरिति भावः । स्पष्टं चेदमात्ममान इति सूत्रे भाष्ये । अत एवाथ शब्दानुशासनमिति भाष्यप्रयोग उपपद्यते । अन्यथा तत्राप्याचार्यरूपकर्तुर्गम्यमानत्वादनेन

एवायं निषेध इति ध्वनितम्। स्त्रीप्रत्यययोरिति। स्त्रियां क्तिनित्यधिकारविहितयोरित्यर्थः। नायं नियम इति। तेनोभयत्रापि षष्ठी भवत्येवेति भावः। भेदिकेति। धात्वर्थनिर्देशे ण्वुल्, सन्नन्ताद्भिदेः 'अ प्रत्ययात्' इत्यकारप्रत्ययः। शेषे इति। नियमस्यायं विकल्पः। 'इत्येके' इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्तये आह। केचिदिति। अकाकारभिन्ने कृन्मात्रे इत्यर्थः। अनुशासनमिति। अनुशिष्यन्तेऽसाधुभ्यो विविच्य बोद्ध्यन्ते येनेति करणे ल्युट्। मत इत्यादौ मतिबुद्धीति वर्तमाने क्तः। इदमेषामिति। कर्तरि षष्ठी। सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरपि षष्ठी, इदमेषां भुक्तमोदनस्य। उभयप्राप्ताविति तु मध्येऽपवादन्यायेन कर्तृकर्मणोरित्यस्यैव नियम इति बोध्यम्। न लोका। लादेशा इति। लकारसम्बन्धिन इत्यर्थः, तेन ददिर्गा इति सिद्धम्। केवललस्य क्वापि प्रयोगाभावादेवं

---

षष्ठ्यां कर्मणि चेति निषेधेन समासो न स्यात्। अन्तर्धावित्यत्र तु सौत्रत्वादेव तृतीयेति बोध्यम्। नियमस्यायं विकल्प इति। नियमशास्त्राणां निषेधे तात्पर्यात्तेन कर्तरि षष्ठ्यप्राप्तादनेन विकल्प इति भावः। पूर्वस्यैकीयमतत्वेनाग्रिमस्य सिद्धान्तत्वात्तत्र केचिदित्ययुक्तमत आह। इत्येतल्लब्धमिति। तेनान्यस्य सिद्धान्तयुक्तित्वं सूचितमिति भावः। भाष्येऽस्य वार्तिकस्य शोभना खलु पाणिनिना सूत्रस्य कृतिरिति स्त्रीप्रत्यय एवोदाहरणदानात्तन्मात्रविषयकमेवेदमित्येकीयमतम्। न चोदाहरणमादरणीयमित्यकाकारभिन्नकृन्मात्रविषयकमेवेदमिति सिद्धान्तभूतं केचिन्मतमिति बोध्यम्। अत्रविशेषमाह। सकर्मकेभ्य इति। क्तोऽधिकरणे चेत्यनेनेति भावः। ननूक्तनियमादिदमयुक्तमत आह। उभयेति। सिद्धमिति। अन्यथा किकिनोर्लादेशत्वाभावेन निषेधो न स्यात्। तयोर्लिङ्-

व्याख्यातम् । कुर्वन्निति । तृन्प्रत्याहारघटकस्तु नायम् । तृशब्दस्य तद्धटकत्वेऽपि शतुस्तद्धटकत्वाभावात् । लिडादेशकस्वादियोगे लिट्सदृशकिकिनोर्योगे च निषेधार्थं तस्यावश्यकत्वान्न । उ इति । उकारेण व्याख्यानात्तदन्तविधिः, व्यपदेशिवद्भावेनोकारस्यापि । सनाशंसेति, अलंकृञिति च उइष्णुचौ । घातुक इति । लषपतपदेत्युकञ्, वृद्धिस्तत्वम् । कमेरिति । उकान्तस्येति शेषः । इदञ्च भाषायामेव । भाषायामिति भाष्योक्तेः । निष्ठेति । एतदपवादतया भाष्ये वार्तिकं पठ्यते—नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानं छात्रस्य हसितमिति । इदञ्च प्रतिपदोक्तत्वात् नपुंसके भावे क्त इति सूत्रविहितक्तान्तयोग एव । अत एव भ्रान्तं देशमित्यादौ गत्यर्थाकर्मकेत्यनेन क्ते नानेन षष्ठी । नपुंसके भावे क्तस्तु नात्र । तस्याप्यकर्मकेभ्य एवेष्टेः । अविवक्षितकर्मतयाऽकर्मकत्वेन

---

द्भावविधानेन लसम्बन्धित्वसत्त्वादेवं व्याख्याने निषेधसिद्धिरिति भावः । ननु यथाश्रुतत्यागे किं बीजमत आह । केवलेति । आदेशरहितेत्यर्थः । तथा च लक्षणया लपदं लसम्बन्धिपरमिति लसम्बन्धिप्रकृतिप्रतिपाद्यक्रियानिरूपितकर्तृकर्मणोः षष्ठी नेति फलितमिति भावः । ननु ल ग्रहणं व्यर्थम्, तृन् प्रत्याहारघटकतया निषेधसिद्धेरत आह । तृन्निति । एकदेशद्वारा तस्यापि तद्धटकत्वमित्युक्तावप्याह । लिडादेशेति । व्याख्यानादिति । उकारोऽप्यत्रनिर्दिश्यत इति भाष्ये कारप्रत्ययकरणरूपादित्यर्थः । तेन वर्णग्रहणमिति ध्वन्यते । वर्णग्रहणे च सर्वत्र तदन्तविधिरिति तेन शब्दरूपंविशेष्यमादाय तदन्तविधिः । तच्च साहचर्यात्प्रत्यय एव गृह्यत इति भावः । एतदिति । षष्ठी निषेधापवादतयेत्यर्थः । क्तान्तेति । कालौदासीनक्तान्तेत्यर्थः । तत्फलमाह । अत एवेति । नानेन षष्ठीति । किन्तु भ्रमण-

क्तस्तु कृतपूर्वीत्यादिवृत्तिविषय एवेत्युक्तम्। एवञ्च इहाहेः सूत्रमित्यादौ परत्वेन क्तोऽधिकरणे चेत्यनेन भावे क्ते शेषत्वविवक्षयैव षष्ठीसाधनस्यावश्यकत्वेन इदं शेषत्वविवक्षया भाष्ये प्रत्याख्यातम्। वार्तिकेन चानेन कारकषष्ठीनिषेधविषये शेषत्वविवक्षा नेति ज्ञाप्यते। शेषत्वविवक्षया भाष्योक्ततत्प्रत्याख्याने तु अनभिधानात् क्तातिरिक्तविषये न सा। पूरणगुणेति सूत्रे भाष्ये ध्वनितमिदम्। तत्र हि 'सति किमुदाहरणं, ब्राह्मणस्य कुर्वन्, नैतदस्ति कारकषष्ठीनिषेधात्, शेषषष्ठ्या तु ब्राह्मणस्य कटमित्यर्थेनासामर्थ्यात्' इत्याद्यर्थकमुक्तमिति परे। अधीयन्निति। इङ्धार्योः शत्रकृच्छ्रिणि' इति शता। द्विषन्निति। 'द्विषोऽमित्रे' इति शता। शेषे षष्ठी त्विति। इदञ्चिन्त्यमित्युक्तं परैः॥

---

क्रियाकर्तृवाचकात्तृतीयैवेति भावः। एवञ्चेति। वार्त्तिकसत्त्वेऽपि प्रतिपदोक्तपरिभाषयोक्तविषयं एव तत्प्रवृत्तावित्यर्थः। परत्वेनेति। नपुंसके भावेक्त इत्यत इत्यर्थः। प्रत्याख्यातमिति। छात्रस्य हसितमित्यादावपि शेषत्वविवक्षयैव षष्ठीसिद्धेरिति भावः। अत्र शेषषष्ठ्या सिद्धावपि कर्तृत्वप्रकारकबोधे षष्ठ्यर्थमिति वार्तिकाशयः। भाष्यकृता तु तादृश एवार्थे साधुत्वमङ्गीकृत्येदं वार्तिकं प्रत्याख्यातमिति बोध्यम्। 'सर्वोयं कारकषष्ठ्याः प्रतिषेधः। शेषषष्ठी तु स्यादेवे'ति मूलस्यासाङ्गत्यं ध्वनयन् सिद्धान्तमाह। वार्तिकेन चेति। ननु तस्य भाष्ये प्रत्याख्यातत्वात्तदभावे कथं तल्लाभ इत्यत आह। अनभिधानादिति। न सा = न शेषषष्ठी। उक्तार्थे मानमाह। पूरणेति। असामर्थ्यादिति। शेषषष्ठ्यन्तस्य नामार्थान्वये सम्भवति क्रियान्वयो नेत्यसामर्थ्यात्समासाप्राप्त्या तद्योगे निषेधो नावश्यक इत्याशयः। यदि निषेधविषयेपि शेषत्वविवक्षा स्यात्तदा कर्मणश्शेषत्वविवक्षायां षष्ठी सुलभेति तत्र तद्ग्रहणप्रत्याख्यानमसङ्गतं स्यादिति बोध्यम्। इत्युक्तमिति। अनुपदमेवेत्यर्थः॥

अकेनो । अत्र यथासंख्यं नेष्यते । अकस्याधमर्ण्येऽसम्भवादाह । भविष्यत्यकस्येति । वर्षशतस्य पूरक इत्यादौ, एतत्कर्मकयाजनकर्तार इत्यर्थके 'अङ्ग यजतां लप्स्यन्तेऽस्य याजका' इत्यादौ च षष्ठी भवत्येव । कर्तृमात्रार्थके ण्वुल्तृचाविति ण्वुलि पदान्तरसम्बन्धेन भविष्यत्त्वप्रतीतावपि अकस्य तत्राप्रवृत्तेः । तुमुन्ण्वुलाविति ण्वुल् तु भविष्यतीत्यधिकृत्य विधानाद्भविष्यदर्थक एवेति भावः । व्रजङ्गमीति । गमेरिनिरित्यौणादिक इनिः । स च भविष्यति । भविष्यति गम्यादय इत्युक्तेः । गामीति पाठे बाहुलकाद् वृद्धिः । शतन्दायीति । आवश्यकाधमर्ण्ययोरिति णिनिः । आवश्यके णिनावप्ययं निषेधः । सूत्रे आधमर्ण्यपदेन तत्सूत्रोक्तार्थोपलक्षणात् । अत एव अंशं हारी इति निर्देशः सङ्गच्छते । तत्र हि आवश्यके णिनिः । न च तत्र भविष्यदर्थकत्वेन सिद्धिः, भूतवर्त्तमानयोरावश्यकत्वबोधनस्य वैफल्येन भविष्यत एव ततो बोधादिति वाच्यम् । वस्तुतो भविष्यतो बोधेऽपि तत्त्वेनाबोधात् । णिनेस्तदर्थकत्वाभावाच्च । अत एवावश्यंकारी कटस्येति वृत्त्युदाहृतं सङ्गच्छते ।

---

नेष्यत इति । स्वरितत्वादित्यादाविवास्वरितत्वादिति भावः । नन्वेवमुभयत्राप्युभयसम्बन्धः कुतो नेत्यत आह । असम्भवादिति । मात्रार्थकेति । मात्रपदेन भविष्यत्वव्यवच्छेदः । बाहुलकादिति । उणादयो बहुलमित्यत्र बहुलग्रहणादित्यर्थः । तत्सूत्रेति । आधमर्ण्यपदघटितसूत्रेत्यर्थः । उपलक्षणत्वे फलमाह । अत एवेति । तत्र प्राचोक्तामन्यथासिद्धिं खण्डयति । नचेति । आवश्यके णिनिः प्रायेण भविष्यत्येवेत्याह । भूतेति । तत्त्वेनेति । भविष्यत्वेनेत्यर्थः । अत एव = णिनेर्भविष्यदर्थकत्वाभावादेव । वृत्त्युदाहृतमिति । भविष्यदाधमर्ण्ययोरित्यस्य वृत्तिकृता प्रत्युदाहृतमिति भावः । अत्रैतन्निषेधाप्र-

**तत्र हि नानेन णिनिः, अवश्यंपदोपादानात्। किं तु सुप्यजाताविल्येवेति नव्याः। कृत्यानाम्। कर्तृकर्मणोरिति नित्ये प्राप्ते विभाषा। कर्मनिवृत्यर्थं कर्तृग्रहणम्। अनुवर्त्तत इति। निषधोऽयं कर्त्तरि**

---

वृत्तये नव्योक्तमाह। तत्र हीति। अनेन = आवश्यकेत्यनेन। तत्र हेतुमाह। **अवश्यंपदेति**। तेन ह्यवश्यंभावविशिष्टे कर्तरि वाच्ये णिनिः, अवश्यंपदोपादाने तु तं बाधित्वा सुप्यजातावित्यनेनैव णिनिरिति तदाशयः। यत्तु 'परे तूपलक्षणत्वे न मानम्। अंशं हारीति तु सौत्रः प्रयोगः। एवञ्च भविष्यद्विषये इत्येवार्थः। तुमुन्ण्वुलावित्यस्य भविष्यदर्थकधातोरेव ण्वुल्विधायकत्वान्न भविष्यत्वं प्रत्ययार्थः। एवञ्च ण्वुल्तृचावित्यतो नास्ति विशेषः। सामान्यकाले विधानेऽपि सामान्यस्य विशेषानतिरेकाद्भविष्यदर्थकतायास्सुलभत्वात्। वृत्त्युदाहृतन्तु चिन्त्यमेवेत्याहुरिति वाराणसेयाः, तन्न। उक्तसौत्रप्रयोगस्यैव तत्र मानत्वेनामानत्वोक्तेरयुक्तत्वात्। सौत्रत्वात्तत्र षष्ठ्यप्रवृत्तिकल्पनापेक्षया तन्निर्देशेनात्रोपलक्षणत्वकथनस्यैव न्याय्यत्वात्। पञ्चकं धात्वर्थ इति सिद्धान्ते सर्वत्र तत्तत्प्रत्ययानां कालविशेषद्योकताया एव वक्तव्यत्वेन लडादिवत्तुमुन्ण्वुलाविति सूत्रविहितण्वुलोऽपि कालविशेषद्योतकतायास्सत्त्वात् ण्वुल्तृचावित्यतस्तस्याविशेषकथनस्यात्यन्तमयुक्तत्वात्। सामान्यकाले विधानेपि सामान्यस्य विशेषानतिरिक्ततया भविष्यदर्थप्रतिपत्तिस्सुलभेति तदुक्तिरप्ययुक्ता। तथा सति कालविशेषे प्रत्ययविधानस्य वैयर्थ्यापत्तेः। सामान्यस्य विशेषानतिरिक्तत्वेपि भविष्यदर्थस्यैव प्रतिपत्तिरित्यत्र विनिगमकाभावादिति बोध्यम्। ननु भावकर्मणोः कृत्यानां विधानात्तत्रकृत्यैः कर्मणोभिधानादेव न षष्ठीति किं कर्तृग्रहणेनेत्यत आह। **कर्मेति**। गेयो माणवकस्साम्नामित्यत्र भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्मेति तन्निवृत्तये कर्तृग्रहणमिति भावः। **निषेधोऽयमिति**। अत्रोभयप्राप्तौ, नेत्यनयोरनुवृत्त्या उभयप्राप्तौ कृत्ये कर्तृकर्मणो-

कर्मणि च । कर्तरि चेति त्वनुभयप्राप्तिविषयमिति वृत्तिकैयटादयः । व्रजमित्यत्र गुणकर्मणि वेष्यत इति विकल्पस्तु न, कृत्यातिरिक्ते चरितार्थस्य तस्य दोग्धव्या गावः पयः कृष्णेनेत्यादौ गुणकर्मण उक्तत्वात् प्रधाने चरितार्थेनानेन परत्वाद्बाधात् । तुल्यार्थैर्योग इति । तुल्यत्वार्थैरित्यर्थः । अत एवातुलोपमाभ्यामिति चरितार्थम् । अत एव पर्युदासादनव्यययोग एवेदं, तेन इवशब्दयोगे न । चतुर्थी चाशिषि । आशीर्विषयक्रियान्वय्यर्थकात् प्रातिपदिकात्तद्वारके आयुष्यादियोगे चतुर्थीषष्ठ्यावित्यर्थः । अत एवैतदर्थकचतुर्थ्यन्तेन सुखहितादिभिर्न समासः । उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात् । अत एव हि तेन चतुर्थीसमासविधानं तद्योगे चतुर्थीज्ञापकमित्याकरोक्तं सङ्गच्छते । यत्तु वृत्तावुद्देश्यविधेयभावेनानन्वयादाशीर्विषये च तथाऽन्वयान्न समास इति । तन्न । वृत्ता-

द्वयोरप्यविशेषात् षष्ठी प्रतिषिध्यत इति भावः । एवं सत्युत्तरसूत्रस्य विषयमाह । **अनुभयेति** । प्राचीनोक्तं खण्डयति । **व्रजमिति** । **उक्तत्वादिति** । अप्रधाने दुहादीनामित्यप्रधाने कर्मणि कृत्यप्रत्ययविधानादिति भावः । **अत एव** । तुल्यशब्दस्य तुल्यत्वार्थकत्वादेव । **चरितार्थमिति** । अन्यथा तयोस्सादृश्यार्थकत्वेन प्रकृतसूत्राविषयतया पर्युदासो विफल एव स्यादिति भावः । नन्वेवमिवेन योगेऽपि स्यादत आह । **पर्युदासादिति** । आशिषश्चतुर्थ्यर्थत्वभ्रमनिरासायाह । **आशीरिति** । **तद्वारकेति** । क्रियाद्वारके इत्यर्थः । **अत एवेति** । क्रियाद्वारकसम्बन्धस्वीकारादेवेत्यर्थः । **असामर्थ्यादिति** । देवदत्ताय सुखं भूयादित्यादौ सुखस्य कर्तृतया देवदत्तस्य सम्बन्धित्वेन चाशीर्विषयभवनक्रियायामन्वयादनयोः परस्परमसामर्थ्यमिति भावः । **अत एव**=एतद्विहित चतुर्थ्यन्तस्य समासाभावादेव । हरदत्ताद्युक्तं खण्डयति । **यत्त्विति** । **अनन्वयादिति** । तथान्वये पृथगुपस्थितेस्तन्त्रत्वादिति भावः । ननु सुखशब्दान्त-

वपि प्राप्तत्वादिपर्यालोचनेन लोहितोष्णीषा इत्यादौ तथान्वयदर्शनात्। भाष्ये तथान्वये वृत्तेरसाधुताया अनुक्तेश्चेति समासवादे मञ्जूषायां विस्तरः। व्याख्यानादिति। सूत्रेऽर्थशब्दः पृथङ्निमित्तमिति भावः। भाष्ये तु नैतद्दृश्यते॥

॥ इति षष्ठी॥

---

आधारो। कारके इत्यधिकारात्क्रियाजनके एतत्प्रवृत्त्योपस्थितत्वादाधारः क्रियाया एव। तत्रेप्सिततम-स्वतन्त्रपदाभ्यां साक्षात्क्रियाधारयोः कर्मकर्तृसंज्ञाभ्यां बाधात्परम्परया तदाश्रयस्य ग्रहणम्। परम्परा च कर्तृकर्मद्वारिकैव व्याख्यानादित्याह। कर्तृकर्मद्वारेति। यद्यपि कालस्य साक्षात्क्रियापरिच्छेदकत्वं, तथापि तदधि-

---

द्वन्द्वं कृत्वा, अर्थशब्देन बहुव्रीहिसमासे कृते 'द्वन्द्वान्त' इति न्यायेनैवार्थग्रहणे लब्धे व्याख्यानादित्ययुक्तमत आह। अर्थशब्द इति। मूलं दूषयति। भाष्येत्विति॥

॥ इति षष्ठी॥

---

लोके द्रव्यगुणक्रियाविषयमधिकरणम्। शास्त्रे तु न तथेत्याह। कारके इति। एतेन द्रव्यगुणयोर्व्यवच्छेदः। ननु प्रकरणात् क्रियया सर्वकारकाणामुपस्थित्या परम्परा कर्तृकर्मद्वारिकैवेत्यत्र किं मानमत आह। व्याख्यानादिति। 'कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्। उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतमि'त्यनुभवमूलकहर्युक्तेरिति भावः। असम्भवमाशङ्क्य निराचष्टे। यद्यपीत्यादिना। तदधिकरणमिति। क्रियाधिकरणमित्यर्थः। साक्षात्क्रियाधारस्य सम्भवेऽप्यत्र परम्परया तदाधारस्यैव ग्रहणमनुभवबला-

करणं कर्तृकर्मद्वारैव । तथैवानुभवात् । साक्षात्तदाधारत्वेऽपि स्वरितत्वप्रतिज्ञानात्परम्पराधारस्य ग्रहणम् । किञ्च साक्षात्तदाधारत्वे कर्तृत्वमेव तस्य स्यात् । कालः पचति भूतानीतिवत् । एवञ्च क्रियान्वयोऽप्यस्य कर्त्राद्यन्वयद्वारैव । यस्य यद्द्वारा कारकत्वन्तस्य तद्द्वारैव क्रियान्वय इति व्युत्पत्तेः । अत एवाक्षशौण्ड इत्यादौ समासः । अत्र आसक्त्यादिक्रियान्तर्भावेण बोधाननुभवात् क्रियाद्वारा सामर्थ्यमिति कैयटाद्युक्तं न युक्तम् । मूले वृक्षः कपिसंयोगीत्यादावस्तिक्रियामध्याहृत्य तस्याः स्वकर्तृकपिसंयोगिवृक्षद्वारा मूलवृत्तित्वादाधारत्वम् । विशिष्टवृक्षस्य मूलवृत्तित्वबोधेऽन्यत्रावयवे तद्विशिष्टवृक्षाभावप्रतीतेः कपिसंयोगे तदवच्छेद्यत्वं फलतीति दिक् ॥

---

दिति भावः । ननु सम्भवति साक्षात्क्रियाधारे कथं परम्परया तदाधारस्य ग्रहणमत आह । साक्षादिति । स्वरितत्वेति । उद्देश्यवाचकपदे इत्यर्थः । न केवलमनुभवः । किन्तु असम्भवोऽपीत्याह । किञ्चेति । अक्षशौण्ड इत्यादौ सामर्थ्यमुपपादयति । एवञ्चेति । परम्पराधारग्रहणे चेत्यर्थः । द्वारैवेति । एवेन साक्षात्क्रियान्वयव्यवच्छेदः । कारकाणां भावनान्वयव्युत्पत्तिरपीदृशे विषये एतच्छास्त्रबलादीदृशपरम्पराविषयापीति बोध्यम् । अत एवेति । उक्तव्युत्पत्त्या कर्त्राद्यन्वयद्वारा क्रियान्वयादेवेत्यर्थः । अननुभवादिति । अक्षविषयप्रावीण्यवानित्येव ततः प्रतीतेरिति भावः । नन्वेवं यत्र क्रियावाचकपदं न श्रूयते तत्र कथं सप्तमीत्यत आह । मूले इति । तस्याः = क्रियायाः । क्वचिदवच्छेद्यताविशेषोऽप्यधिकरणसप्तम्यर्थ इति नैयायिकोक्तमयुक्तमिति ध्वनयन्नाह । विशिष्टेति । कपिसंयोगविशिष्टेत्यर्थः । तदवच्छेद्यत्वमिति । मूलावच्छेद्यत्वमित्यर्थः । कपिसंयोगादौ मूलाद्यवच्छेद्यत्वावगाहिनी मानसी प्रतीतिर्भवतीति न तस्य सप्तम्यर्थत्वमिति भावः । नचैवमपि शिरसि मे वेद-

चकारादिति। प्रातिपदिकार्थे इति शेषः। त्रिधेति। तत्र सकलावयवव्याप्तौ व्यापकाधारत्वम्। यथा तिलेषु तैलम्। इदमेव मुख्यमधिकरणमिति स्वरितेनेत्यत्र साधकतममित्यत्र च भाष्ये स्पष्टम्। उप समीपे श्लेषः सम्बन्धस्तत्कृतमौपश्लेषिकम, अत एव इको यण

---

ना पादे मे सुखमित्यादावाधारतानियामकस्य संयोगसमवायादिरूपसम्बन्धस्याभावात्कथं सप्तमीति वाच्यम्। अवच्छेदकतासम्बन्धस्याप्याधारतानियामकत्वाङ्गीकारेणादोषात्। अत एव वीणायां शब्दः, कर्णे शब्दः इत्यादिसिद्धिः। ग्रामं प्रविशतीत्यादौ ग्रामस्य संयोगरूपकर्मद्वारा क्रियाधारत्वेऽपि नाधिकरणत्वम्। परया कर्मसंज्ञया बाधात्। तस्य कर्मद्वारा क्रियाश्रयत्वविवक्षायाः संयोगरूपफलाश्रयत्वं विनाऽसम्भवादिति बोध्यम्॥

सूत्रे चकारबलाद्वाक्यभेदेन विधीयमाना सप्तम्युपस्थितत्वाद्व्याख्यानाच्च दूरान्तिकार्थेभ्य एवेत्याशयेनाह। मूले चकारादिति। भाष्यन्तरङ्गत्वात्प्रातिपदिकार्थमात्र एव। अन्यथा दूरान्तिकार्थेभ्योऽधिकरणे सप्तम्यास्सिद्धतया चकारवैयर्थ्यापत्तेरित्याशयेनाह। इति शेष इति। व्याप्ताविति। आधारस्याधेयेन सह सकलावयवावच्छेदेन व्याप्तावित्यर्थः। व्यापकाधारत्वमिति। अत्र व्याप्यव्यापकभावस्संयोगसमवायोभयघटितः। भाष्ये स्पष्टमिति। तत्र ह्याचार्यः किमधिकरणं न्याय्यं मन्यते, यत्र कृत्स्न आधारात्मा व्याप्त इत्युक्तम्। तेन चास्यैव मुख्यत्वमितरयोर्गौणत्वमिति स्पष्टं लभ्यते। अस्य मुख्यत्वे मानन्तु प्रकृत्यर्थतावच्छेदकविशिष्टे विभक्त्यर्थान्वयौचित्यमेव। कटे आस्ते इत्यादौ कटैकदेशे कटत्वस्याभवादेकदेशगताधारत्वस्य कटे आरोपेण बोध इति गौण एव स आधार इति तदाशयः। संहितायामिति सूत्रेऽधिकरणस्य भाष्यकृत्कृतस्त्रेधाविभागोऽपि गौणमुख्यसाधारण्येनैवेति बोध्यम्। औपश्लेषिकपदस्य वक्ष्यमाणभाष्यसंमतमर्थं दर्शयति। उपेति। अत एवेति। अस्येदृशार्थकत्वादेवेत्यर्थः। तत्र = इकोयणचीति सूत्रे।

चीत्यादावौपश्लेषिके आधारे सप्तम्युक्ता संहितायामिति सूत्रे भाष्ये । तत्राजादिसामीप्यमेवेगादीनाम् । यन्मासेतिक्रान्ते दीयते तस्य मास औपश्लेषिकमधिकरणमित्युक्तं 'तत्र च दीयते' इति सूत्रे भाष्ये । तदस्मिन्नधिकमिति सूत्रे च भाष्ये स्पष्टमिदम् । कटे आस्ते इति तु नौपश्लेषिकोदाहरणं युक्तम् । उक्तभाष्यविरोधात् । यद्वा, एकदेशावच्छेदेन श्लेषेऽपि श्लेषस्य समीपमुपश्लेषं तत्कृत-

---

सामीप्यमेवेति । एवेन कटादिवत् किञ्चिदवयवावच्छेदेनाप्याधारस्याधेयेन व्याप्त्यभाव उक्तः । वर्णानां सांख्यादिमते द्रव्यत्वात् संयोगवत्पूर्वपरयोर्वर्णयोर्द्वाधारस्याप्युपश्लेषनिरूपितस्य स्वीकार इति तदाशयः । अत्रैवार्थे भाष्यान्तरमपि मानमाह । तत्र चेति । तदस्मिन्निति च । तत्र द्वितीये एकादशाधिका अस्मिन् शते इत्यत्र शतस्याधिकरणत्वाभावात् । कथं सप्तमीत्याशङ्क्यौपश्लेषिकमिदमधिकरणमेकादशकार्षापणा उपश्लिष्टा अस्मिन् शते इत्युक्तम् । शतसमीपे हि ते भवन्ति, न तु तदन्तर्भूताः । तस्मिन् हि सति वृक्षे शाखेतिवत् स्यादधिकरणत्वमिति तद्भावः । भाष्यविरोधादिति । उक्तभाष्यत्रयविरोधादित्यर्थः । तेन सामीप्यसम्बन्धकृतस्यैवाधारस्यौपश्लेषिकाधिकरणत्वलाभादिति भावः । नन्वेवं सति हरिकैयटादिग्रन्थासङ्गतिरित्याशङ्क्य तस्यापि तदुदाहरणत्वं समर्थयति । यद्वेति । श्लेषेपीति । अपिना यथा कथञ्चिदपि श्लेषरहितस्यैकोयणचीत्यादेस्संग्रहः । श्लेषस्य समीपमिति । मुख्यस्याधारीयसर्वावयवव्याप्तिरूपस्य श्लेषस्य यत्समीपमाधारीययत्किञ्चिदवयवव्याप्तिरूपं तत्कृतमित्यर्थः । एवञ्च संहितायामिति सूत्रभाष्यस्थौपश्लेषिकपदस्य तन्त्रेणार्थद्वयपरतया न पूर्वोक्तभाष्यविरोधो, नापि कटे आस्त इत्यादेरौपश्लेषिकाधिकरणोदाहरणत्वपरहरिकैयटादिग्रन्थासंगतिरिति भावः । अत एव मञ्जूषायामुक्तभाष्यानुरोधादौपश्लेषिकपदस्योप समीपे श्लेषस्तत्कृत-

मिति व्युत्पत्त्यौपश्लेषिकत्वमित्याभिप्रायेण तदुदाहरणम्। तदेतत् सर्वं गौणमधिकरणं, गङ्गायाङ्गाव इत्यादिकश्चेति स्वरितेनेत्यादौ भाष्ये स्पष्टम्। गौणोऽप्याधारादिः सप्तम्यादिशक्य एवेति बोध्यम्। एतदतिरिक्तं सर्वं वैषयिकम्। अधिकरणत्वशक्तिमाँश्चाधिकरणविभक्त्यर्थः। इन्विषयस्येति। इनो विषयस्येन्प्रकृतेः क्तान्तस्य कर्मणीत्यर्थः। तेन कृतपूर्वी कटमित्यत्र न। उदाहरणे न कर्मणि क्तः, अभिहितत्वेन सप्तम्यनापत्तेः। किन्तु भावे। इष्टादिभ्यश्चेति। तत्र

---

मित्यर्थमुक्त्वा ततो यत्किञ्चिदवयवावच्छेदेनाधारस्याधेयेन व्याप्तिरप्युपश्लेषः। यथा कटे आस्ते इतीत्युक्तम्। संहितायामिति सूत्रे उद्योते च किञ्चेत्यादिनाऽयमर्थ उक्तः। अत औपश्लेषिकपदस्य तंत्रेणार्थद्वयपरत्वं ग्रन्थकृदभिमतमिति स्पष्टं लभ्यत इति बोध्यम्। एतत्सर्वमिति। तिलादिभिन्नमुक्तं वक्ष्यमाणञ्चेत्यर्थः। इत्यादिकश्चेति। आदिना कूपे गर्गकुलमित्यादिसंग्रहः। गङ्गैकदेशे तरन्तीषु गोषु तथा प्रयोगे गङ्गापदस्य प्रवाहपरत्वेपि तस्याधेयेन सह सर्वावयवव्याप्त्यभावाद्गौणमेवाधारत्वम्। तत्समीपदेशपरत्वेपि गङ्गासर्वावयवानामिव तत्समीपदेशसर्वावयवानामपि आधेयेन सर्वावयवव्याप्त्यभावात्तत्वमेवेति बोध्यम्। गौणोपीति। आधारपदे स्वरितत्वप्रतिज्ञयेति भावः। एतदिति। औपश्लेषिकाभिव्यापकभिन्नं–मोक्षे इच्छास्ति, खे शकुनय इत्यादि सर्वमित्यर्थः। शक्तिमांश्चेति। चेनाधिकरणक्रियाभावरूपसम्बन्धपरिग्रहः। प्राचोक्तबहुव्रीहौ फलाभावाद्द्वारवाचाह। इनोविषयस्येति। तेन = उक्तार्थकत्वेन। यदि तस्येन्नन्तघटकक्तान्तस्येर्थः स्यात्तदात्रापि स्यादिति भावः। सकर्मकत्वेऽप्यत्र कृतपूर्वीत्यादिवद्भावे क्त इत्याह। उदाहरण इति। अनभिहितत्वेनेति। सप्तम्यधिकरणे चेत्यत्रास्य पाठादत्रापि तत्सम्बन्ध इति भावः। यदुक्तं मूले कर्तरीति तल्लाभोपायमाह। तत्र हीति। अत्र व्याकरणकर्मकाध्ययनकर्तेति

हि आद्धमनेनेत्यतोऽनेनेति वर्तते। अत्र कर्मशब्देन कालादिव्यतिरिक्तमेव गृह्यते व्याख्यानात्, तेन मासमधीती व्याकरणे इत्यत्र नेति कैयटः। साध्वसाधु। शेषषष्ठ्यपवादोऽयम्। साधुनिपुणाभ्यामित्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम्। तेन तत्त्वकथनेऽपि भवति। सूत्रेऽर्चाग्रहणन्तु निपुणार्थम्। निमित्तादिति। निमित्तवाचकात् सप्तमी भवति, तस्य निमित्तस्य प्रत्यासत्त्या स्वान्वयिक्रियाकर्मणा योगे इत्यर्थः। निमित्तञ्चात्र क्रियाफलम्। एवञ्च फलं सप्तम्यर्थः। चर्मणीति। चर्मणः फलत्वञ्च हननस्य तल्लाभेच्छाधी-

---

बोधः। ननु सकर्मकाणां कालादिकर्मणा द्विकर्मकतायाः प्रागुक्तत्वाद्द्वितीयावत्सप्तम्यपि कालकर्मवाचकात्कुतो नेत्यत आह। अत्रेति। व्याख्यानादिति। बहिरङ्गत्वमूलकादित्यर्थः। तच्चोपपादितं प्राक्। कैयट इति। अत्रारुचिबीजन्तु मासमधीते इत्यत्र द्वितीयावदत्र सप्तम्या अप्रवृत्तौ मानाभावः। अन्तरङ्गबहिरङ्गभावस्तु तयोः कर्मणोः प्राधान्याप्राधान्यबीजभूतो लादिव्यवस्थामात्रफलक एव। न तु विभक्तिप्रयोजकत्वं तस्य। तथा सति कालकर्मवाचकाद्द्वितीयाया अप्यनापत्तेरिति बोध्यम्। अर्चाग्रहणन्त्विति। नचैवमपि तत्र साधुग्रहणं व्यर्थम्। अर्चायामप्यनेन सिद्धेरिति वाच्यम्। प्रत्यादियोगे निषेधार्थं तस्यावश्यकत्वात्। नचैवमप्यनेन तत्र सप्तमी दुर्वारेति वाच्यम्। तत्र साधुग्रहणसामर्थ्येनाऽस्यापि प्रतियोगेऽप्रवृत्तेः। स्वान्वयीति। निमित्तान्वयीत्यर्थः। ननु हननस्य प्राणवियोगः फलम्, न तु चर्मादिरित्यत आह। चर्मण इति। एवञ्च फलेच्छायाः उपायेच्छाप्रयोजकत्वस्य प्रसिद्धत्वाद्धननरूपोपायेच्छाविषयचर्मलाभस्यैव मुख्यफलत्वम्। चर्मणस्तु लाभकर्मत्वादुपचरितं तदिति तदाशयः। अत्र फलमात्रं सप्तम्यर्थः। न तु कर्मसम्बन्धो-

नत्वात्। कर्मसंबन्धश्च स्वरूपसन्नेव निमित्तम्। द्वीपिचर्मणोरण्ड-कोशमृगयोश्च समवाय इतरयोः संयोगः। मुक्ताफलाय करिणं रघुवीरेत्यादौ क्रियार्थोपपदस्येति चतुर्थी। घ्नन्तीति शेषः। मुक्ताफलान्याहर्तुमित्यर्थः॥

यस्य च भा। भावः क्रिया। ततः—ज्ञापकक्रियाश्रयवाचकात्। तेन गोपदुह्यमानपदयोरुभयोरपि सप्तमी सिद्धा। क्रियाश्रयः कर्त्ता कर्म च। तत्र ब्राह्मणेष्वधीयानेषु गत इति कर्तर्युदाहरणम्। कर्मण्याह। गोष्विति। तत्र काचित् क्रिया स्वाधारकालेनान्यां क्रियां परिच्छिनत्ति, यथा प्रकृते, काचित्तु स्वाधारकालाव्यवहितपूर्वकालेन यथा गोषु धोक्ष्यमाणास्वित्यादौ, काचित्स्वाधारकालानन्तरकालेन यथा गोषु दुग्धास्वित्यादौ। ज्ञापकत्वं सप्तम्यर्थस्तस्य च भाव-

---

ऽपीत्याह। **स्वरूपसन्नेवेति**। न तु तस्य शाब्दबोधविषयत्वमिति भावः। हेतुतृतीयाबाधनार्थमिदम्। यद्यपि भाष्ये 'निमित्तात्कर्मसंयोगे' इत्येव पठितम्। तथापि 'चर्मणि द्वीपिन'मित्याद्युदाहरणात्संयोगशब्दस्सम्बन्धपरः। स च संयोगसमवायरूप एवेत्याशयेनाह। **द्वीपीति**। ननु 'मुक्ताफलाय करिण'मित्यस्य कथं साधुता। तत्रापि संयोगस्य सत्त्वादनेन सप्तम्या उचितत्वादत आह। **मुक्तेति**॥

सूत्रे भावपदार्थविशेषणतया यस्येत्यस्योपादानाल्लक्षकक्रियासम्बन्धिवाचकाद्गवादिशब्दाल्लक्षकक्रियावाचकाद्दुह्यमानादिपदाद्वा सप्तमी स्यान्न तूभयस्मादपीत्यत आह। **ज्ञापकक्रियाश्रयवाचकादिति**। अत्र क्रियाशब्दो धात्वर्थमात्रपर इत्याशयेनाह। **कर्ता कर्म चेति**। तत्र कर्तुः प्रधानीभूतधात्वर्थाश्रयत्वात्तस्य प्रथममुपादानम्। एतेन कर्तृपदस्य प्रथममुपादानं कर्मसंज्ञाविधायकशास्त्रे तस्य प्रथमोपादानाभिप्रायेणेति मिश्रोक्तं नादरणीयम्। **ज्ञापकत्वमिति**।

लक्षणमित्युक्तेः क्रियायामेवान्वयः । लक्ष्यलक्षणभावः शब्दबोध्य एवैतच्छास्त्रप्रवृत्तौ निमित्तं, न तु तस्य भूयोदर्शनादिरूपमानान्तरेण ग्रहणापेक्षेति बोद्धव्यम् । अन्यथोदिते आदित्ये तमो नष्टमित्यादावेव स्यान्न तु प्रकृते कदाचिद्धि गोषु दुह्यमानास्वसौ गतः ।

---

ज्ञाप्यज्ञापकभावस्सम्बन्ध इत्यर्थः । शब्दबोध्य एवेति । तत्त्वेन विवक्षित एवेत्यर्थः । एव व्यावर्त्यमाह । न त्विति । अत्र लक्षणशब्दो नानुमापकत्वेनाभिमतलिङ्गपर्यायः । किन्तु क्रियाशब्दः । लक्ष्यतेऽनेनेति, लक्षणमिति । एवञ्च यन्निर्ज्ञातकालं हवनादिकमनिर्ज्ञातकालस्य गमनादेस्सकृदपि कालपरिच्छेदनिमित्तं तत्तस्य लक्षणं भवतीति भावः । अधीयानब्राह्मणवृत्तिज्ञापकतानिरूपितज्ञाप्यतावद्गमनाश्रयः, दुह्यमानगोवृत्तिज्ञापकतानिरूपितज्ञाप्यतावद्गमनाश्रय इत्यादिरूपेण बोधः । अत्राधीयानानां ब्राह्मणानां दुह्यमानानां गवां च शब्दतः प्रतीयमानं लक्षकत्वं तत्र बाधात्तद्विशेषणीभूताध्ययनदोहनादिरूपक्रियाधारकाले विश्राम्यति, शिखीध्वस्त इति वदितिबोध्यम् । एतेन समानकालिकत्वादिकमेव सप्तम्यर्थः । तत्र दुह्याद्युपस्थित दोहनादेर्निरूपकत्वेनान्वयः । एवञ्चोक्तस्थलेषु गोदोहनसमानकालिकं गमनम्, गोदोहनोत्तरकालिकं गमनमित्येव बोधः । ज्ञाप्यज्ञापकभावस्तत्रार्थ इति मतान्तरवासनया वदन्त औत्तराहाः परास्ताः । कृदर्थविशेषणतया गृहीतशक्तिकस्य दोहनस्यान्यत्र विशेषणतयाऽन्वयायोगात् । अत एव राज्ञः पुरुषोऽश्वश्चेतिवद्राजपुरुषोऽश्वश्चेति न प्रयोगः । प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्प्रकृत्यर्थानन्वितार्थस्य सप्तम्या बोधनासम्भवाच्चेति बोध्यम् । यत्तु 'वस्तुतस्तु क्रिययोर्ज्ञाप्यज्ञापकभावस्सूत्रप्रवृत्त्या पदस्य साधुतायामुपयुज्यते । सप्तम्यास्तु ज्ञापकत्वेनाभिप्रेता क्रियैवार्थः । तस्याश्च समानकालिकत्वं ज्ञाप्यक्रियायां सम्बन्धः वर्तमानकालिककृत्समभिव्याहारे । एवञ्च दुह्यमानगो-

**इदञ्च यत्र मानान्तरेण ज्ञातस्वरूपस्यार्थस्य कालविशेषादिज्ञापनार्थं शब्दप्रयोगस्तत्रैव प्रवर्तते भाष्यस्वरसात्। राहूपरागे स्नायादित्यत्र राहूपरागपदेन तदाश्रयकाल उच्यते इति अधिकरणसप्तम्येव। विवाहे नान्दीमुखङ्कुर्यादित्यत्र विवाहपदेन तत्प्राक्काल**

---

वृत्तिदोहनसमानकालिकगमनकर्तेति शाब्दबोधः। एवं भविष्यदर्थककृत्समभिव्यावाहारे प्राक्कालिकत्वं भूतार्थकृत्समभिव्याहारे उत्तरकालिकत्वं ज्ञाप्यक्रियायां सम्बन्ध इति मिश्रा वदन्ति। तन्न। तथा बोधाननुभवात्। सूत्रस्वरसविरोधाच्च। प्राचोक्त्यसङ्गत्यायात्र विशेषमाह। इदं चेति। **मानान्तरेणेति।** आप्तोपदेशादिनेत्यर्थः। नन्वेवं राहूपरागे स्नायादित्यादौ ज्ञापकक्रियाश्रयवाचकपदाभावात् स्नानादेर्मानान्तरासिद्धत्वेन राहूपरागस्य निर्ज्ञातकालत्वाभावाच्च कथं सप्तमीत्यत आह। **राहूपराग इति।** राहूपरागस्य स्नानक्रियाधारत्वासम्भवादाह। **काल उच्यत इति।** राहोरुपरागो यस्मिन्निति बहुव्रीहिणेति भावः। **अधिकरण सप्तम्येवेति।** नचैवं राहूपरागस्य स्नाननिमित्तत्वं न सिध्येदिति वाच्यम्। अवच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकत्वाद्राहूपरागकालावच्छेदेन स्नानविधाने तस्य निमित्ततायाः फलितत्वात्। यत्तु राहूपरागपदं तत्काललक्षकम्। सतीत्यध्याहाराद्यस्य च भावेनेति सप्तमी। राहूपरागादेर्निमित्तत्वन्तु सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपदिश्यत इति न्यायेन फलतीत्याहुः। तन्न। प्रवर्तनारूपविधिविषयत्वं क्रियाया एव, न द्रव्यादेरिति दध्ना जुहोतीत्यादौ दध्नः कथं विधेयत्वमित्याशङ्क्यानेन न्यायेन तस्य विधेयतायाः मीमांसकैरुक्तत्वेन द्रव्यस्याज्ञातज्ञाप्यत्वरूपं विधेयत्वं स्वक्रियोपरागेण प्रवर्तनाविषयत्वं च दर्शितमिति प्रकृते तन्न्यायविषयाभावात्। स्नानादीनामेतैरेव विधानेन मानान्तरेणाप्राप्तेरेतत्सूत्राविषयत्वाच्च। राहूपरागस्य

उच्यते । गवान्दोहे आगत इत्यत्राप्यधिकरणसप्तम्येवेत्यन्यत्र विस्तरः। अर्हाणाम् । कर्तृत्वार्हाणाम् । तद्वैपरीत्ये—अर्हाणामकर्तृत्वे अनर्हाणां च कर्तृत्वे इत्यर्थः । वाक्यचतुष्टयमेतत् । कर्तृसमर्पकादकर्तृसमर्पकाच्च सप्तमीत्यर्थः । सप्तम्यां तदन्वयिक्रियावाचकाद्धातोरप्रथमासामानाधिकरण्याच्छतृशानचावेव । लक्ष्यलक्षणभावाविवक्षार्थमिदम् । सत्स्विति । सन्तो हि तरणक्रियाकर्तृत्वार्हाः । तरणक्रियाकर्तृसत्संबन्धि असत्कर्तृकमासनमिति बोधः । स्वक्रियाधिकरणकालवृत्तित्वं सम्बन्धः । असत्स्विति । तरणक्रियाकर्तृत्वानर्हाणान्तदकर्तृत्वमत्र । यद्यपि स्थितिक्रियाकर्तृत्वार्हत्वेनेदं सिद्धं, तथाप्यसतां तरणक्रियानर्हत्वादिकमपि बोधविषय इति भावः । सत्स्विति । तरणक्रियाकर्तृत्वार्हाणान्तदकर्तृत्वमत्र । असत्स्विति । तरणकर्तृत्वानर्हाणान्तत्कर्तृत्वमत्र । षष्ठी चा । अनादर इति विषयसप्तमी, यस्य च भावेनेत्याद्यनुवर्तते । अनादरे गम्यमाने सति यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी षष्ठी चेत्यर्थः । फलितमाह, अनादराधिक्य इति । लक्ष्यलक्षणभावः षष्ठ्यर्थः । अनादर-

प्रसिद्धकालत्वाभावाच्चेति बोध्यम् । उच्यत इति । लक्षणयेति भावः । ननु गवां दोहे आगत इत्यत्र दोहशब्दस्य ज्ञापकक्रियाश्रयवाचकत्वाभावात्तत्सप्तमी न स्यात् । गोशब्दाच्च सा स्यादत आह । गवां दोह इति । अत्रापि दोहशब्देन लक्षणया तदाश्रयकाल उच्यत इति भावः । एतेनात्र सतीत्यध्याहृत्य दोहकर्तृकसत्ताया लक्षणत्वेनाक्षतिरिति वदन्तः परास्ताः । कर्तृत्वेति । तच्च योग्यतया ग्राह्यम् । एकेन वाक्येन विवक्षितार्थालाभादाह । वाक्येति । पूर्वसूत्रेणागतार्थत्वायाह । लक्ष्येति । अस्य शेषषष्ठ्यपवादत्वादत्र सप्तम्यास्सम्बन्धार्थकत्वमित्याशयेनाह । कर्तृसम्बन्धीति । सतामसत्कर्तृकासनक्रियासम्बन्धमाह । स्वक्रियेति । षष्ठ्यर्थ इति । अत्र षष्ठीपदं सप्तम्या अप्युप-

विशिष्टं प्रव्रजनन्धात्वर्थः । तत्र षष्ठी तात्पर्यग्राहिका, अनादरश्च प्रत्यासत्त्या पुत्रादिविषयक एवेति भावः ॥

स्वामीश्वरा। शब्दपरत्वाद् विरूपाणामपीति नैकशेषः। पर्यायान्तरसङ्ग्रहापत्त्या स्वाम्यर्थ इति नोक्तम् । दीयते इति व्युत्पत्त्या दीयमानांशरूपं दायमादत्ते इति सोपसर्गादप्यादन्तादत एव निपातनात्कः। गवादिकं च दीयमानेऽन्वेति। नित्यसाकाङ्क्षत्वाद् वृत्तिः। दायादशब्दः स्वामिपर्याय इत्यन्ये। षष्ठ्यामेवेति। शेषे षष्ठी इत्यनेनेति भावः। तात्पर्ये इति। आसेवापदस्य तत्र रूढेरिति भावः। तात्पर्यञ्च तदेकव्यापारता। आयुक्तयोगेऽधिकरणत्वविवक्षायां सप्तमीप्राप्तौ, सम्बन्धविवक्षायामत्र कुशलयोगे च षष्ठीप्राप्तौ वचनम् ॥

यतश्च। जातिगुणक्रियासंज्ञाभिरिति। विशिष्टस्येत्यध्याहारः।

---

लक्षणम् । विशिष्टमिति। वैशिष्ट्यं च स्वसामानाधिकरण्यस्वोत्तरकालिकत्वाभ्याम् । पुत्रेषणादित्यागस्य प्रव्रजनहेतुत्वात् । एवञ्च रोदनकर्तृ पुत्रादिज्ञाप्यमनादरविशिष्टं प्रव्रजनमिति बोधः ॥

ननु स्वाम्यर्थेति वाच्ये ईश्वराधिपत्योर्ग्रहणं व्यर्थमत आह। पर्यायेति। प्रभ्वादेरित्यर्थः । समुदायविशेषणत्वेऽर्थासङ्गतेराह । गवादिकं चेति । नन्वेवं साकांक्षत्वाद्वृत्तिर्नस्यादत आह। नित्येति। एकदेशान्वयक्लेशनिरासाय मतान्तरमाह। दायादेति। अत्रेत्यादिः। आसेवापदस्य योगतो मूलोक्तार्थालाभादाह। रूढेरिति। अधिकरणत्वेति। वैषयिकाधारत्वे इत्यर्थः। अत्रेति। आयुक्तयोगे इत्यर्थः। वचनमिति। उभयथापि षष्ठ्यर्थे सप्तम्यर्थे च वचनमित्यर्थः ॥

जात्यादीनामेव पृथक्करणे करणत्वमिति भ्रमनिरासायाह। विशिष्टस्येति।

तद्विशिष्टस्य यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणं तद्वाचकात् षष्ठीत्यर्थः । यत इति किम् । यस्य जात्यादिविशिष्टस्य स्वेतरव्यावृत्तधर्मवत्त्वबोधनन्तत एव मा भूत् । षष्ठ्यपवादत्ववत् प्रथमापवादत्वस्यापि सम्भवात् । स्वघटितसमुदायावधिक—स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च सम्बन्धो विभ-

---

एवञ्च सति सूत्रार्थं दर्शयति । तद्विशिष्टस्येति । जात्यादिविशिष्टस्येत्यर्थः । स्वघटितसमुदायादिति । नृसमुदायादित्यर्थः । स्वेतरसमुदायघटकेति । स्वेतरो यस्समुदायघटकः क्षत्रियादिस्तद्व्यावृत्तो यो धर्मः श्रेष्ठत्वादिस्तत्करणकमित्यर्थः । अत्र स्वशब्देनैकदेशस्य जात्यादिविशिष्टस्य ब्राह्मणादेर्ग्रहणम् । पृथक्करणमिति । तच्च व्यावृत्तधर्मप्रकारकज्ञानविषयीकरणम् । अस्ति च नृणां द्विजश्श्रेष्ठ इत्यादौ विप्रत्वादिविशिष्टस्य विप्रघटितनरसमुदायघटकविप्रेतरक्षत्रियादिव्यावृत्तश्रेष्ठत्ववत्तया प्रतीतिरिति नृशब्दात् षष्ठीसप्तम्याविति बोध्यम् । ननु ब्राह्मणपदात् परत्वात्प्रथमा स्यादत आह । षष्ठ्यपवादत्ववदिति । यत्तु यतस्समुदायादेकदेशस्य जात्यादिविशिष्टस्य स्वघटितसमुदायघटकेभ्यो व्यावृत्तधर्मेण पृथक्करणं ततः षष्ठीसप्तम्याविति सूत्रार्थोऽभिर्धारकधर्मनिर्धारणावध्यो व्यावृत्तत्वाख्यस्सम्बन्धो निर्धारणविभक्तेरर्थः । नरादिपदं च सामान्यरूपेण विप्रतदितरनरादिघटितसमुदायोपस्थापकम् । एवञ्च तादृशसमुदायव्यावृत्तश्रेष्ठत्ववान् ब्राह्मण इत्यादि क्रमेण बोध इति प्राचोक्तं वक्ष्यमाणसूत्रस्वारस्यविरोधादयुक्तमिति सूचयंस्तदर्थमाह । स्वघटितेति । अत्र मते यतः स्वसजातीयघटितसमुदायादेकदेशस्य जात्यादिभिः पृथक्करणरूपं निर्धारणं ततष्षष्ठीसप्तम्याविति सूत्रार्थः । विषयत्वरूप इति । विषयविषयिभावरूप इत्यर्थः । अस्य षष्ठ्यपवादत्वेन प्राप्तषष्ठ्यर्थत्यागे मानाभावादाह । अवयवेति । अत्र

क्त्यर्थः । नृसमुदायावधिकद्विजेतरनरव्यावृत्तधर्मकरणकपृथक्करण-रूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोधः । संसर्गघटककरणं च श्रेष्ठत्वादिरूपमेव प्रत्यासत्तेः। अत एव 'न निर्धारणे' इति सूत्रबोधितं निर्धारणस्य विभक्त्यर्थत्वं सङ्गच्छते । उद्भूतावयवभेदविवक्षया नृणामिति बहुवचनम् । तिरोहितावय-वभेदविवक्षया निर्धारणविषये एकवचनन्त्वसाध्विति कारके इति सूत्रे भाष्ये स्पष्टम् । तत्र हि निर्धारणे कारकेष्विति ब्रूयादित्युक्तम् । मिदचोऽन्त्यादित्यादौ तु सौत्रो निर्देश इति तदाशयः । द्वन्द्वः सामासिकस्य चेत्यत्र समाससमूहमद्धये इत्यर्थः । समूहेऽर्थेऽचित्तेति ठक् । पञ्चमी वि । यतश्च निर्धारणमित्यनुवर्त्तते । विभागोऽत्र भेदः। तत्र निर्धारणे सर्वत्र यथाकथंचिद्भेदस्य सत्त्वेन विभक्तग्रहणसाम-र्थ्याद्यत्र भेद एव न तु केनाप्युपात्तरूपेणाभेदस्तत्रैव प्रवृत्ति-

---

पक्षे निर्धार्यमाणनिर्धारणावध्योः परस्परमुक्तविभक्त्यर्थसम्बन्धेनान्वयः । एवञ्च सति बोधप्रकारं दर्शयति । नृसमुदायेति । प्राचोक्तार्थत्यागे बीजमाह । अत एवेति । निरुक्तस्य विभक्त्यर्थत्वादेवेत्यर्थः । समुदायबोधकनृशब्दाद्बहु-वचनोपपत्तये आह ।उद्भूतेति। तदाशय इति ।कारक इति सूत्रस्थभाष्याशय इत्यर्थः । ननु निर्धारणविषये सर्वथा एकवचनस्यासाधुत्वे गीतावाक्ये एक-वचनान्तप्रयोगस्य का गतिरत आह । द्वन्द्व इति । एवञ्च मध्यशब्दयोगे इयं षष्ठी न त्वनेनेति न दोष इति भावः । सामर्थ्यादिति । निर्धारणे सर्वत्र यथाकथंचिद्भेदस्य सत्त्वेन पूर्वसूत्रे पञ्चमीग्रहणेनैव सिद्धे विभक्तग्रहणसामर्थ्या-दवधारणमाश्रीयत इति भावः । माथुराः पाटलिपुत्रकेभ्य इत्यादिप्रकृतसूत्रो-दाहरणविषयेऽपि निर्धार्यमाणनिर्धारणावध्योः प्राणित्वेनाऽभेदसत्त्वादवधारणा-सङ्गतेराह । उपात्तरूपेणेति । शब्दोपात्तरूपेणेत्यर्थः । पूर्वसूत्रविषये तु शब्दो-

रित्याह, भेद एवेति । अत्र पञ्चम्यर्थौ निर्धारणविषयत्वरूप एव । पाटलिपुत्रकावधिकनिर्धारणविषया माथुरा आढ्यतरा इति बोधः । एवञ्च त्रितयोपादान एव निर्धारणप्रतीतिरिति पुरुषोत्तम इत्यादौ सम्बन्धसामान्ये षष्ठी उत्तमनिरूपितेति समाससिद्धिरिति तरप्सूत्रे कैयटः ॥

साधुनि । निपूर्वात् 'पुण कर्मणि शुभे' इत्यत इगुपधलक्षणः कः । अर्चतेश्च भौवादिकाद् 'गुरोश्च हल' इत्यप्रत्ययः । अर्चा । चौरादिकात्तु ण्यासश्रन्थेति युच् स्यात् । षष्ठ्यपवादोऽयम् । अप्रत्यादिभिरिति । लक्षणेत्थमितिसूत्रोपात्ताः प्रत्यादयः । नक्षत्रे

---

पात्तरूपेण नृत्वादिना तयोरभेदोऽपीति बोध्यम् । विषयत्वरूप एवेति । निर्धारणावधिव्यावृत्तधर्मकरणकनिर्धारणविषयविषयिभावरूप एवेत्यर्थः । एवेनावयवावयविभावव्यवच्छेदः । एवञ्चेति । अत्रापि तथा बोधे इत्यर्थः । त्रितयेति । निर्धार्यमाणनिर्धारणावध्योर्निर्धारणप्रयोजकधर्मवाचकस्य चेत्यर्थः। समाससिद्धिरिति । अन्यथा न निर्धारण इति निषेधात्सा न स्यादिति भावः । कैयट इति । अनेनारुचिस्सूचिता । तद्बीजन्तूत्तमः पुरुषस्त्वन्य इति वाक्यादुत्तमशब्दार्थस्य विशेषणतालाभात्कर्मधारयो राजदन्तादित्वात्परनिपात इति । भाष्यकारस्तु माथुरपाटलिपुत्रकयोराढ्यत्वेन साम्यं यो ज्ञातवान् स एवैतत्प्रयुङ्क्ते । बुद्धिकृतभेदरूपविश्लेषसत्त्वेन विभक्ता इत्यध्याहारेणापादान एव पञ्चमीत्येतत्सूत्रं प्रत्याचख्यौ । विभक्तं भेदः । पाटलिपुत्रकावधिकभेदवन्तो माथुरा इति बोधः । भेदप्रयोजकं चाढ्यतरत्वमेवोपस्थितत्वात् । गवां कृष्णा बहुक्षीरेत्यादौ तु सम्पन्नक्षीरत्वेन साम्ये ज्ञातेऽपि गोत्ववत्ताबुद्ध्यनिवृत्तेर्न विश्लेषप्रतीतिरिति न तत्रापादाने पञ्चम्या सिद्धिरिति बोध्यम् । स्पष्टं चेदं मञ्जूषायाम् ॥

च। लुप्शब्देन लुप्सञ्ज्ञया लुप्प्रत्ययार्थो लक्ष्यत इति बोध्यम्। अधिकरणे किम्। अद्य पुष्यः। असत्यां तदनुवृत्तावन्तरङ्गत्वात्प्रातिपदिकार्थे एव स्यात्। मूलेनेति। 'नक्षत्रेण युक्तः काल' इत्यणो 'लुबविशेषे' इति लुप्। नक्षत्रे किम्। पञ्चालेषु तिष्ठन्ति। जनपदे लुबिति लुप्। सप्तमीपञ्चम्यौ। कालाध्वनोरित्यतस्तदनुवर्त्तते। तच्च पञ्चम्या विपरिणम्यते। मध्यस्यावधिद्वयसापेक्षतया द्विवचनान्तेन समासः। बोधस्तु शक्तित्वेन शक्तिद्वयस्य, न तु द्वित्वेनेति बोद्धव्यम्। ननु कर्तृरूपस्य कारकस्यैकत्वाद्भेदनिबन्धनमध्यव्यपदेशासम्भवोऽत आह। शक्तिद्वयमध्ये याविति। कर्तृत्वादिशक्तिरेव कारकम्। सा च क्रियाभेदेन भिन्नेति भावः। यद्यप्यवध्यवधिमतोस्साजात्यनियमान्न कालाध्वानौ कारकमध्ये सम्भवतस्तथापि शक्तिशब्देन तदाधारकालादिग्रहणान्न दोषः। षष्ठ्यपवादोऽयम्। स्वानन्तरकालवृत्तित्वादिकं विभक्त्यर्थः। शक्तिद्वयमध्य-

---

लुप्शब्दस्याभावबोधकतया नक्षत्रवाचकस्य तत्रावृत्तिरत आह। लुप्शब्देनेति। प्रत्ययार्थः = कालरूपः। अत्राधाराधेयभावसम्बन्धो विभक्त्यर्थः। मूलनक्षत्रयुक्तकालाधारकं देवीकर्मकमावाहनमित्यादिक्रमेण बोधः। अधिकरणे इत्यस्यात्र मण्डूकानुवृत्तिः किमर्थेति शङ्कते। अधिकरणे किमिति। तदननुवृत्तौ सर्वविभक्त्यपवादत्वं स्यादिति केषांचिदुक्तिरयुक्तेति ध्वनयन्नाह। अन्तरङ्गत्वादिति। एतेन मूलं प्रतीक्षते इत्यादौ कर्मादिव्यवच्छेदः। तदिति। कालाध्वनोरित्येतत्पदमित्यर्थः। अत्र पञ्चम्यन्तस्यैव तस्यान्वययोग्यत्वादाह। तच्चेति। बोधस्त्विति। कारकमध्ये इत्यत्र बोध इत्यर्थः। न तु द्वित्वेनेति। वृत्तौ संख्यासामान्याभावादिति भावः। एकत्वादिति। शक्तिरूपतः कारकत्वात्तस्य चैकत्वादित्यर्थः। क्रियाभेदेनेति। कालभेदेन क्रियाभेद इति भावः। कालवृत्तित्वादिकमिति। आदिना स्वानन्तरदेश-

वर्तित्वन्तु वस्तुसन्निमित्तम् । अधिकशब्देनेति । कर्तरिक्तप्रत्यया-न्ताध्यारूढशब्दार्थकाधिकशब्दयोगे लोकशब्दात् षष्ठ्यां प्राप्तायां ज्ञापकादिमे इष्येते इत्यर्थः । तदस्मिन्नधिकमिति सूत्रे भाष्ये तु उपश्लिष्टपदाध्याहारेणोपश्लेषिकेऽधिकरणे सप्तमीत्युक्तम् । कर्मणि क्तप्रत्ययान्ताध्यारूढशब्दार्थकाधिकयोगे तु अधिको लोको हरि-णेति प्रथमैव । उपपरार्द्धे इति । 'उपोधिके चेति' कर्मप्रवचनी-

यत्वसङ्ग्रहः । अत्र भुक्त्वेत्यादावेतद्दिवसाधिकरणकभोजनोत्तरकालिकमेत-द्दिवसानन्तरद्व्यहानन्तरकालिकभोजनाश्रय इति बोधः । द्व्यहे एतद्दिवसानन्तर-त्वन्तु समभिव्याहारबललब्धम् । इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येदित्यत्र-तद्देशाधिकरणकस्थित्याश्रयकर्तृकमेतद्देशानन्तरक्रोशानन्तरस्थितलक्ष्यकर्मकं व्य-धनमिति बोधः । वस्तुसदिति । न तु तस्य शाब्दबोधविषयत्वमिति भावः । यथा कर्तरि क्तप्रत्ययान्ताध्यारूढशब्दयोगे अध्यारूढो द्रोणः खारीमिति द्वितीया भवति, तथा तादृशाध्यारूढशब्दादधिकमितिसूत्रेण निपातनात्कन्युत्तरपदलोपे च सति निष्पन्नाधिकशब्दयोगेऽपि द्वितीयायां प्राप्तायां ज्ञापकात्पञ्चमीसप्तम्या-विति प्राचोक्तं कटाक्षयन्नाह । षष्ठ्यामिति । शेषषष्ठ्यामित्यर्थः । निरूपि-तत्वं सम्बन्धः । द्वितीयायास्तु नात्र प्राप्तिः । कारकान्वययोग्यतावच्छेदक-रूपसाध्यत्वेन तद्धितान्तात् क्रियाया अनुपस्थितेः । ज्ञापकादिति । उक्तसूत्र-द्वयनिर्देशरूपादित्यर्थः । अधिकरणसप्तमीत्वत्र क्रियायोगाभावान्न भवतीत्या-शयः । वस्तुतोऽत्र ज्ञापनं विनैव सप्तमीति तदंशे मूलमसङ्गतमिति ध्वनयन्नाह । तदस्मिन्निति । पूर्वत्रेष्यत इत्युक्त्वाऽन्यत्र तयोरनिष्टं दर्शयति । कर्मणीति । सूत्रे तन्त्रेणोभयोरप्यधिकशब्दयोर्निपातनम् । भाष्यप्रामाण्याच्च कर्त्रर्थकाधिक-शब्दयोग एव ज्ञापकात्पञ्चमीसप्तम्यावित्याशयः । प्रथमैवेति । प्रातिपदिकार्थ-मात्रे प्रथमैवेत्यर्थः । हरिणेत्यत्र तृतीया तु प्रकृत्यादित्वाद्धेताविव्यनेन वेति बोध्यम् । उक्तरीत्या द्वितीयाया इव कर्तृतृतीयाया अप्यधिकशब्दयोगेऽप्राप्तेः ।

यत्वम् । ननु मामुद्दिश्य विनियोऽग्यत इत्यर्थादत्र कर्मणि द्वितीयैवेति किङ्कर्मप्रवचनीयत्वेनेत्यत आह । अगतित्वादिति । तिङि चेति । उदात्तवति तिङन्ते गतिर्निहन्यते इत्यर्थः । अत्र 'तिङ्ङतिङ इति' निघातस्य निपातैर्यद्यदीत्यादिना निषेधात् करिष्यतीति तिङन्तेस्योदात्तवत्त्वमिति सर्वेष्टसिद्धिः ॥

॥ इति सप्तमी ॥

॥ विभक्त्यर्थः समाप्तः ॥

---

स्पष्टं चेदमधिकमितिसूत्रे उद्योते । नन्वत्र तिङन्तस्य तिङतिङ इति निघातात्कथमुदात्तत्वमत आह । अत्रेति । उदात्तत्वमिति । विकरणस्वरेणेति भावः । इति शिवम् ॥ ॥ इति सप्तमी ॥

इति श्रीमद्गुरुचरणकमलसेवासंजातशेमुषीवैशद्येन, श्रीमद्विजयनगरमहाराज संस्कृतकलाशालाव्याकरणप्रधानोपाध्यायेन, व्याकरणशिरोमण्युपाधिधारिणा, व्याकरणस्थापकेन, पेर्युपनामक वेङ्कटेश्वर शास्त्रिणा विरचिते गुरुप्रसादशेषनामके लघुशब्देन्दुशेखर व्याख्याने कारकप्रकरणम् ।

॥ समाप्तम् ॥

॥ श्रीः ॥

---

गुरुप्रसादसरिणिं नेमिवृत्त्यानुवर्तिनी ।
गुरुप्रसादशेषाख्या चिरं व्याख्या विजृम्भताम् ॥

शिरसा प्रणिपत्येयमर्पिता गुरवे मुदा ।
ब्रह्मविष्ण्वीशरूपस्य तस्यास्तु परितुष्टये ॥

जीयाच्चिरं श्रीविजयरामदन्तीद्रचन्द्रमाः ।
आशंसन्ते प्रजा यस्य नवाभ्युदयमीशितुः ॥

नेत्रर्तुवसुभूवर्षे शकेऽस्मिन् शालिवाहने ।
गुरोः कटाक्षात्कीतेयं पूर्णतां च प्रकाशताम् ॥

॥ इति शिवम् ॥



## II. TELUGU and SANSKRIT

### (a) CATALOGUES

**No. 11. A descriptive catalogue of the Telugu Manuscripts in the Tanjore Palace Library**—Edited by P. P. S. Sastri, M.A., Government Oriental Manuscripts Library, Madras. (Rs. 1-8-0)

### (b) CRITICISM

**No. 8. Kavithwathathwa Vicharamu** (3rd edition)-by Dr. C. Ramalinga Reddy, M.A., (Cantab) Hon. D. Litt. (Andhra), M.L.C., Vice-Chancellor, Andhra University, Waltair. (Rs. 1—8—0)

**Kona Budhareddy's Ranganatharamayanam**—Edited by Veturi Prabhakara Sastri. (in the press)

**Guruprasada and Guruprasada Sesha**—Edited by Mahamahopadhyaya Kalaprapurna Tata Subbaraya Sastri, and Peri Venkateswara Sastri. (in the press).

### (c) GRAMMAR

**No. 6. Chitraprabha**—A commentary on Haridikshita's Laghusabdaratna—by B. Hari Sastri-Edited with notes by Mahamahopadhyaya Tata Subbaraya Sastri, Maharajah's Sanskrit College, Vizianagaram. (Rs. 3—0—0.)

**No. 7. Sangameswarakrodam on Jagadisa's Siddhantalakshanam**—by G. Sangameswara Sastri. (Re. 0—12—0)

**No. 15. Vaiyakarana Parijatamu**—by V. Ch. Seetharamaswami Sastri, Pandit, University College of Arts, Waltair. (Rs. 3—0—0)

### (d) LITERATURE

**No. 2. The University Lectures on Vemana**—by R. Anantakrishna Sarma, Lecturer, Maharajah's College, Mysore (Re. 0-12-0)

**No. 10. History of Sanskrit Literature—Part I.** Vedic Period (in Telugu) by M. Suryanarayana Sastri, Pandit, University College of Arts, Waltair (Rs. 2—4—0)

**No. 13. History of Sanskrit Literature—Part II** Laukic Period (in Telugu) by the same author (Rs. 2—4—0)

**No. 18. History of Telugu Language**—by Dr. C. Narayana Rao, M. A., Ph. D., L. T. Lecturer, C. D. College, Anantapur (in two volumes) Each volume (Rs. 6—0—0)

**No. 21. Vyasa Manjari or Collected Essays in Telugu**—by Dr. C. R. Reddy M. A. (Cantab), M. L. C., Hon. D. Litt. (Andhra), Vice-Chancellor, Andhra University, Waltair (Rs. 1—8—0)

### (e) PHILOSOPHY

**No. 9. Andhra Mimamsa Nyaya Muktavali—(in Telugu)**—A treatise on Purva Mimamsa Darsana—by K. Gopalakrishnamma, M.A., L.T., Lecturer in Oriental Languages, Government Arts College, Rajahmundry (Rs. 1—8—0)

### (f) SCIENCE

**No. 14. Viswarupamu**—(dealing with the Physical Universe) written in popular Telugu-by K. Kondayya, M. Sc., Chemistry Department, Benares Hindu University, Benares (Rs. 2—0—0)

**No. 20. Telugu Equivalents of Technical Terms in Physics**—by A. Balankeswara Rao, B. Sc., (Hons.), Department of Physics, J. V. D. College of Science and Technology, Waltair (Re. 0—12—0) (Inclusive of postage).

**Text book on Zoology and Physiology** (in Telugu)—by R. V. Seshaiya, M.A., Annamalai University, Annamalainagar. (in the press)

**Text book on Trigonometry**—(in Telugu) by K. Rangachari, M.A., B.L., M. R. College, Vizianagaram. (in the press)

NOTE :—Copies of the above publications can be had either from the Registrar or from any leading book-sellers.

# ANDHRA UNIVERSITY PUBLICATIONS

## I. ENGLISH

### (a) ECONOMICS and POLITICS

**No. 1. The beginnings of Local Taxation in the Madras Presidency.**—A study in Indian Financial Policy, 1862-71 by Prof. M. Venkatarangaiya, M.A., Head of the Department of History, Economics and Politics, Andhra University, Waltair. (Rs. 2—4—0)

**No. 4. The World Economic Depression—A plea for co-operation**—by Sir J. C. Coyajee, B. A., LL. B., Formerly Professor, Department of History, Economics and Politics, Andhra University, Waltair. (Re. 0—12—0)

**No. 5. India and the League of Nations**—by Sir J. C. Coyajee. (Rs. 2—4—0)

**No. 12. Federalism in Government**—by Prof. M. Venkatarangaiya, M.A. (Rs. 2—0—0)

**No. 17. Indian Politics since the Mutiny**—by Sir. C. Y. Chintamani, Editor, 'Leader', Allahabad. (Rs. 2—0—0)

*N. B.*—Copies of English edition can be had from Messrs. George Allen & Unwin Ltd., 40, Museum Street, London, W.C. I. (Price 7sh. 6d. nett).

### (b) HISTORY

**No. 3. Buddhist Remains in Andhra and the History of Andhra between 225 and 610 a. d.**—by Dr. K. R. Subrahmanian, M.A., PH.D., Lecturer in History, Maharajah's College, Vizianagram. (Rs. 2—0—0)

**No. 19. Modern Chinese History (Political, Economic and Social)**—by Prof. Tan Yun Shan (Chief Organiser, Sino-Indian Cultural Society, Nanking) (Re. 0—8—0)

**Advanced History of India**—by the Late Prof. P. T. Srinivasa Aiyangar. (in the press)

### (c) PHILOSOPHY

**No. 16. Man**—by Dr. Rabindranath Tagore. (Re. 1—0—0)

**No. 24. The Vivaranaprameyasangraha** (English Translation)—Edited by Prof. Saileswar Sen, M. A., D. Litt., et., D. Phil and S. S. Suryanarayana Sastri, M. A., B. Sc., Bar-at-Law (Rs. 6—8—0)

**No. 25. Vivarana Prameya Sangraha** (Sanskrit text)—Edited by Prof. Saileswar Sen, M.A., D. Litt., et., D. Phil. and S. S. Suryanarayana Sastri, M.A., B. Sc., Bar-at-Law (in the press) (Rs. 7—8—0)

### (d) SCIENCE

**No. 22. An Outline of the Mineral Resources of Andhra Desa**—by Dr. C. Mahadevan, M.A., D.Sc., Madras. (Re. 0—8—0)

**No. 23. Scattering of Light and the Raman Effect**—by Prof. S. Bhagavantham, M.Sc., J. V. D. College of Science and Techonology, Waltair (Rs. 15—0—0 nett)

**Intermediate Experimental Physics**—by Prof. V. Appa Rao, M. A., L. T., (in the press) (Rs. 3—0—0)

Continued on 3rd cover.